॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥



श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् ४ जिज्ञासाधिकरणम्

प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



॥ श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ॥

श्रीमज्जयतीर्थयतिकृता

# श्रीमन्न्यायसुधा

परिमळाद्युपेता

संपुटम् – ४

## जिज्ञासाधिकरणम्

(प्राभाकराख्यातिनिरासविषयतः कार्यतावादविषयपर्यन्तम्)

पुटसंख्या १४८५ तः १९८२


प्रकाशनम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**श्रीमन्न्यायसुधा**
परिमळाद्युपेता

**संपुटम् – ४**

प्रथमं मुद्रणम् - ई.सन् २००३

**Śrīman-Nyāyasudhā**
Parimaḷādyupetā

**Volume - 4**

First Edition -2003 A.D.

स्वभानु संवत्सर, शके १९२५, ज्येष्ठ कृष्ण त्रयोदशी, शुक्रवासरः
**श्रीविजयीन्द्रतीर्थश्रीपादानाम् आराधनामहोत्सवः**

*Published by :*

**Śrī Gurusārvabhauma Saṁskṛt Vidyāpīṭham**
**Śrī Rāghavendra Swāmy Mutt**
Mantrālayam - 518 345
India.

* *मुद्रकः* *

वरखेडकरोपाह्वप्रद्युम्नरसिंहयोः ।
पौत्रो धनंजयो न्यायसुधां मुद्रापयत्यसौ ॥

**सुधा मुद्रणम्**
शंकरपुरम्, बेंगळूर - ५६० ००४
दूरवाणी– ६६७ ६९४२

**SUDHA MUDRANA**
Shankarpuram, Bangalore - 560 004
Phone : 667 6942



# समर्पणपत्रिका

श्रीमत्परमहंसपरिव्राजकाचार्यत्वाद्यमन्दबिरुदवृन्दविभूषित-
सर्वतन्त्रस्वतन्त्र-श्रीमद्वैष्णवसिद्धान्तस्थापनाचार्य-
षड्दर्शनाचार्यवर्य-नास्तिकदर्शननिराकरणधुरन्धर-
आस्तिकदर्शनमहाचार्य-

**श्रीमन्मध्वाचार्यसमलंकृत-**

श्रीमद्द्वैतसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
परमपूज्यानां कामधेनुकल्पवृक्षसदृशानां

**श्रीश्रीमद्राघवेन्द्रतीर्थगुरुसार्वभौमानां**

हृत्कमलनिवासि-

**श्रीरामकृष्णवेदव्यासाभिन्न-**

**श्रीमूलरघुपतिपादकमलयोः**

समर्पितोऽयं ग्रन्थः ॥

सुजयीन्द्रकृपापूर्णसुशमीन्द्रयतीश्वरैः ।
श्रीमन्न्यायसुधाग्रन्थ अर्पितोऽयं मुदा हरेः ॥





॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्धंसनामकपरमात्मसमारब्धपरम्परागत-श्रीमत्परमहंसेत्यादिबिरुदभूषित-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मूलमहासंस्थानाधीश्वर-
**श्रीमद्राघवेन्द्रगुरुसार्वभौम-**
वेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वर-
**श्रीमत्सुयमीन्द्रतीर्थश्रीपादकरकमलसञ्जात-**
**श्रीमत्सुजयीन्द्रतीर्थश्रीपादवरकुमारक-**
**श्री श्रीमत्सुशमीन्द्रतीर्थश्रीपादानाम्**

# अनुग्रहवचनम्

अस्मत्प्रियशिष्यान् तथैव अस्मन्मठीयान् नैकान् आस्थानविद्वज्जनान् वयं अस्मद्गुरुवराणां श्रीमत्सुजयीन्द्रतीर्थश्रीमच्चरणानामाज्ञामनुरुद्ध्य परिमलादि-बहुटिप्पणीभिर्युक्तां श्रीमन्न्यायसुधां संशोध्य प्रकाशयितुमादिष्टवन्तः स्मः ।

अस्मदादेशमनुरुध्य ग्रन्थमिमं संशोध्य मुद्रणप्रतिमपि संशोधितवद्भ्यः प्रधानसंपादकेभ्यः वैकुण्ठवासिभ्यः श्री साणूरु भीमभट्टेभ्यः तथा ग्रन्थमिमं प्रकाशितवद्भ्यः श्रीगुरुसार्वभौमसंस्कृत-विद्यापीठीयेभ्यः एवं ग्रन्थसंशोधने तथा मुद्रणप्रतिसंशोधने सहायमाचरितवद्भ्यः अस्मद्विद्यापीठा-ध्यापकेभ्यः, तथाऽन्येभ्यो विद्वद्भ्यः, एवमल्पकाले सुष्ठु मुद्रणं कृतवद्भ्यः 'सुधा मुद्रण'नेतृभ्यः श्री धनंजयाचार्येभ्यः तथा सर्वेभ्यः एतद्ग्रन्थाध्ययन-अध्यापनादिकर्तृभ्यः अस्मदुपास्यः श्री श्रीमद्राघवेन्द्र-तीर्थगुर्वन्तर्गत-श्रीभारतीरमण-मुख्यप्राणान्तर्गतः श्रीसीतापतिः श्रीमूलरामचन्द्रदेवः इतोऽप्यतिशयिता-युरारोग्यैश्वर्यादीनि, ज्ञानभक्तिवैराग्यादीनि च दत्वा अनुगृह्णातु इत्याशास्महे ।

*इति नारायणस्मृतिः ।*

मन्त्रालयक्षेत्रम्,
स्वभानु संवत्सर
ज्येष्ठ कृष्ण त्रयोदशी



श्रीराघवेन्द्रस्वामिमठाधीशानां श्री श्री सुशमीन्द्रतीर्थश्रीपादानां वरकुमारकाणां

## श्री श्री सुविद्येन्द्रतीर्थश्रीपादानां

परमानुग्रहपूर्वक मार्गदर्शने संपादितोऽयं ग्रन्थः ।

***

श्री श्रीपादानां आज्ञानुसारेण ग्रन्थस्यास्य संशोधनादिकार्यं
तत्कालीन श्रीगुरुसार्वभौमसंस्कृतविद्यापीठाध्यक्षैः
**श्री राजा एस्. गिरिआचार्यैः** तथा तत्पुत्रैः **श्री राजा एस्. पवमानाचार्यैः**
कृतमिति विशेषरूपेण स्मर्यते ।

***

# संपादकविद्वन्मंडली

**प्रधानसंपादकाः**

## श्री आचार्य साणूरु भीमभट्टाः

आस्थानविद्वांसः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः

**संपादकाः**

विद्वान् श्री कु. सुशीलेन्द्राचार्याः, *प्रांशुपालाः श्री गु.सं.वि., मन्त्रालयः*

विद्वान् श्री कडपा राघवेन्द्राचार्याः

विद्वान् श्री पुराणिक सुब्रह्मण्याचार्याः

विद्वान् श्री एन्. वादिराजाचार्याः

विद्वान् श्री वरखेडकर भीमसेनाचार्याः

विद्वान् श्री डॉ. पुरोहित नरसिंहाचार्याः

**निर्वाहकाः**

## श्रीपादपुत्राः राजा एस्. राजगोपालाचार्याः

श्री श्री सुशमीन्द्रतीर्थश्रीपादानां आप्तकार्यदर्शिनः, श्रीराघवेन्द्रस्वामिमठः, मन्त्रालयः



# श्रीमन्न्यायसुधा

## परिमळाद्युपेता

## संपुटम् – ४

# विषयानुक्रमणिका





* * * * *





प्राभाकराख्याति-निरासः—

**३५० सु०— अत्रोच्यते । यत्तावदन्यथाख्यातिलक्षणं निराकृतम् 'अन्याकारोल्लेखी'त्यन्तेन तदिष्टमेवास्माकम् । अन्यदन्यात्मना विषयीकुर्वज्ज्ञानमन्यथाख्यातिरित्यङ्गीकारात् । यथोक्तम् 'असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरित्यन्यथाप्रतीतेरेव भ्रान्तित्वादि'ति ॥ नन्वन्यस्यान्यात्मता सती उतासती । असतीति ब्रूमः । असतो न प्रतीतिरिति चेन्न । तस्या उपपादयिष्यमाणत्वात् । एवं सति रजतस्यापि कुतः सत्त्वमङ्गीकरणीयमिति चेन्न । को हि ब्रूते रजतं सदिति । वक्ष्यामो ह्यभिनवान्यथाख्यातिस्वरूपमुपरिष्टात् ॥**

**बिन्दुः**— नैयायिकमतभ्रान्त्या पृच्छति **एवं सति रजतस्यापीति** । न तन्मतवन्मन्मतेऽन्यथाख्यातिः, मया भ्रान्तिप्रतिपन्नस्य रजतस्यान्यत्र सत्त्वनियमानङ्गीकारात् किन्तु सदेव शुक्त्यादिकमसदात्मना भासत इत्यन्यथाख्यातेरङ्गीकारादित्याशयेनाह **वक्ष्याम इति** ।

**परि०— इत्यन्तेनेति** । अन्याकारोल्लेखिज्ञानमन्यालम्बनमन्यथाख्यातिरिति तु विरुद्धमित्यन्तेनेत्यर्थः । **यथोक्तमिति** । विष्णुतत्त्वनिर्णये । **उपपादयिष्यमाणत्वादिति** । 'असद्विलक्षणज्ञप्त्यै' इत्यादिव्याख्यावसर इति भावः । तादात्म्यतत्संसर्गमात्रमसदिति प्राचीनतार्किकरीतिं मत्वा शङ्कते **एवं सतीति** । **उपरिष्टादिति** । तत्रारोप्यमाणं रजतं सदेवेति केचिदातिष्ठन्त इत्यादिना तार्किकमतानुवादपूर्वं तन्निरासप्रस्ताव इत्यर्थः ।

**वं०प०— उपपादयिष्यमाणत्वात्** । 'असद्विलक्षणज्ञप्त्यै इत्यत्रेति' शेषः । **एवं सतीति** । असतोऽपि प्रतीत्यङ्गीकार इत्यर्थः । **कुतः सत्त्वमिति** । अन्यत्र विद्यमानमेवान्यत्रारोप्यत इत्येवंरूपान्यथाख्यातिरङ्गीकृतेति भ्रान्त्येयं शङ्केति ज्ञातव्यम् । **वक्ष्याम इति** । शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तमेवात्यन्तासद्रजतात्मनावगाहमानं ज्ञानं जनयतीत्यङ्गीकारादित्यत्रेत्यर्थः ।

**आनन्दः**— अख्यातिपक्षं दूषयितुं सिद्धान्तयति **अत्रोच्यत इति** । नन्वेतादृगन्यथाख्यातिस्वरूपं सिद्धान्तविरुद्धमित्यतः सिद्धान्तग्रन्थमत्रार्थे संवादयति **यथोक्तमिति** । **उपपादयिष्यमाणत्वादिति** । असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हीत्यनेनेति शेषः । शङ्कते **एवं सतीति** । असत्या अन्यात्मताया भानाङ्गीकार इत्यर्थः । तथाच भासमानं रजतमप्यसदेवास्त्विति भावः । तर्ह्यसत्तृप्यातिवादापात इत्यत आह **वक्ष्याम इति** ।

**कं०रा०— वक्ष्याम इति** । शुक्तिकाशकलमत्यन्तासद्रजतात्मनावगाहमानं ज्ञानमन्यथाख्यातिर्न तु देशान्तरीयरजतात्मनावगाहमानमित्यभिनवान्यथाख्यातिस्वरूपमुत्तरत्र वक्ष्याम इत्यर्थः ।





**श्रीनिधि०— यथोक्तमिति** । विष्णुतत्त्वनिर्णय इत्यर्थः । **उपपादयिष्यमाणत्वादिति** । असतोऽप्रतीतौ आश्रयासिद्ध्यादिदूषणकथनेनेति भावः । **अभिनवान्यथाख्यातिस्वरूपमिति** । नूतनान्यथाख्यातिस्वरूपमित्यर्थः ।

**वा०चं०—** अन्यथाविज्ञानमेव भ्रान्तिरिति वदता भाष्यकारेणाभिप्रेतमन्यथाख्यातिलक्षणान्तरनिराकरणं पूर्वपक्षव्याजेनास्माभिर्दर्शितमित्याशयेनाह **यत्तावदिति** । **इत्यन्तेनेति** । अन्तशब्दो मर्यादावचनः । एतत्पर्यन्तेनेत्यर्थः । अत एवान्याकारोल्लेखीत्यस्मदभिमतान्यथाख्यातेरिति वक्ष्यति । अत्र पूर्वपक्षानुवादानुसारेणान्याकारोल्लेख्यन्यालम्बनं ज्ञानमन्यथाख्यातिरित्यङ्गीकारादिति वक्तव्येऽन्यदित्यादिवचनमेतत्पक्षाभिप्रेतार्थस्यान्यथाविज्ञानं भ्रान्तिरिति भाष्यारूढताप्रदर्शनाय । तथा चान्यथेत्येतत्सामर्थ्यलभ्यमन्यद्विषयीकुर्वदिति संयोज्य भाष्यं व्याख्यातं भवति । नन्वत्रान्यशब्दाभ्यां वस्तुमात्रविवक्षायां वस्तुनो वस्त्वन्तरात्मनाऽवभासरूपान्यथाख्यातिलक्षणनिरासस्य पूर्वोक्तस्वाभीष्टत्वविरोधः । वस्त्ववस्तूभयग्रहणे च न सिद्धान्तीयं ज्ञापकमन्यथाविज्ञानमिति भाष्यस्य वस्तुमात्रविषयकत्वेनापि व्याख्यातुं शक्यत्वादित्यत एतद्व्याख्यानरूपतत्त्वनिर्णयस्थभाष्यकारीयवाक्यानुसारेणैतद्भाष्यं व्याख्येयमित्याशयेन तत्स्थं वाक्यमुदाहरति **यथोक्तमिति** । अत्र स्वमते पराभिमतान्यथाख्यातिवैलक्षण्यं दर्शयितुं सदसतोरसत्सत्त्वप्रतीतिरन्यथाख्यातिरित्युक्तं लक्षणं त्वन्यदित्याद्यस्मदुक्तरीत्यैवेति भाष्ये सदसतोरसत्सत्त्वप्रतीत्योरन्यतरस्थलेऽन्यतरसत्त्वनियमे लक्षणेऽन्यतरवैयर्थ्यमनियमे च प्रत्येकलक्षणत्वे परस्पराव्याप्तिर्मिलितस्य लक्षणत्वे चैकैकमात्रवत्यव्याप्तिरित्यादिचोद्यानवकाश इत्यप्यन्यदित्याद्युक्त्या सूचितमिति द्रष्टव्यम् । वस्तुनो वस्त्वन्तरात्मना अवभास इति पक्षे पूर्वपक्ष्युद्भावितं न्यायसाम्यात् अत्रापि प्रसक्तं विकल्पदूषणम्' असद्विलक्षणज्ञप्त्यै' इत्याद्युत्तरभाष्येण निरस्तमित्याशयेन तद्विकल्पमाशङ्कते **नन्विति** । अत्र यत्परेणोक्तं दूषणमुपपत्तौ वा किं रजतस्यापि वस्तुत्वग्रहणेनेति तस्य वस्तुत्वगर्भलक्षणप्रणेतृनैयायिकं प्रति संभवेऽपि नास्मान्प्रति प्रसक्तिरित्याशयेन समाधातुं तच्छङ्कते **एवमिति** । ननु रजतस्य देशान्तरेऽपि सत्त्वानभ्युपगमेऽसत्ख्यातिपक्षापत्त्याऽन्यथाख्यातिपरित्याग इत्यत आह **वक्ष्याम इति** । विगीतप्रत्यये भासमानस्य सर्वस्य नासत्त्वमभ्युपगम्यते येनासत्ख्यातिरपि तु सदेव शुक्तिकाशकलमत्यन्तासद्रजतात्मना भासत इति तार्किकोक्तविलक्षणान्यथाख्यातिस्वरूपं वक्ष्याम इति भावः ।

**वा०र०—** अन्यथाविज्ञानमेव भ्रान्तिरित्यादिरूपेण भाष्यकारीयभ्रान्तिबाधस्वरूपावधारणाभ्यां मतान्तरनिरास इत्युक्तेरेतदख्यातिमतस्य निरासोऽवधारणद्वयेनेति प्रतीतिः स्यान्न च सा युक्तेत्यतोऽत्रैकमेवावधारणं निरासमूलमिति सूचयन् पूर्वपक्ष्युक्तदूषणाङ्गीकारः कथमित्यतस्तदभिप्रायं चाह **अन्यथाविज्ञानमेवेति** । मूलस्थलक्षणमित्यस्य लक्षणान्तरमित्यनुवादेनानेकलक्षणसङ्ग्रहः । स्वाभिमतान्येति पूरणं च सूचितम् । **एतत्पर्यन्तेनेत्यर्थ इति** । एतदवधिनेत्यर्थः । पर्यन्तपदस्य आब्रह्मस्तम्बपर्यन्तमित्यादाववधित्वाभावेऽपि प्रयोगात् । अत एव मर्यादावचन इत्युक्तम् । **अत एवान्यथाकारोल्लेखीत्यस्मदभिमतेति** । अन्याकारोल्लेखीति मूलपाठे तु तथैव पाठेन भवितव्यम् । परन्तु अन्यथाकारोल्लेखीत्यन्तेनेति स्पष्टमत्राभिधानेनान्यत्र च अन्येत्येवाभिधानेऽपि अर्थे विवादाभावेन पाठद्वयमपि अदृष्टमित्याशयेन तथोक्तिर्न दुष्यति । अत एवान्याकारोल्लेखीति वक्ष्यतीति ज्ञेयम् ।





**सामर्थ्यलब्धमिति** । अन्यदित्यस्यापूरणे सर्वस्यापि तदन्यापेक्षया अन्यथात्वेन विशिष्योक्तिरनुपपन्ना स्यात् । तथाचान्यस्यान्यथाज्ञानमिति लाभायान्यदन्यथाज्ञानमिति अनुव्याख्यानमन्यदन्यथा विषयीकुर्वज्ज्ञानमित्येतदर्थतया योजनीयम् । तत्र च विषयीकुर्वदिति बहिरानेयमिति भावः । **पूर्वोक्तेति** । तदिष्टमेवास्माकमित्यनेनोक्तेत्यर्थः । **अत्रेति** । तत्त्वनिर्णय इत्यर्थः । लक्षणं तु अनुगतमिति शेषः । **रीत्यैवेति** । इतिशब्दस्येत्यत इत्यर्थः । इत्यादिचोद्यानवकाश इत्यनेन संबन्धः । भाष्य इत्यस्यान्यदित्याद्युक्तेत्युत्तरेण संबन्धः । अन्यथेत्येतत्सामर्थ्यलब्धत्वेनान्यदित्यस्यापि भाष्ये सत्त्वाभिप्रायात् । भाष्यस्य तत्त्वनिर्णयग्रन्थोपपादनत्वाच्च । भाष्ये पदाभावपाठे तु इत्याद्युक्त्या टीकास्थया सूचितमिति योज्यम् । तत्त्वनिर्णयवाक्यं स्वोक्तार्थे उदाहरता तदभिप्रायस्य स्वोक्तरीत्योह्यत्वसूचनात् । केचित्तु तत्त्वनिर्णयस्थभाष्यकारीयेति प्रागुक्तभाष्ये विषये इत्यपि तत्त्वनिर्णयस्थमपि वाक्यं भाष्यकारोक्तत्वेन भाष्यतया व्यवहृतम् । तत्त्वनिर्णय इति तु फलतीत्याहुः । **निरस्तमित्याशयेनेति** । उपपादयिष्यमाणत्वादित्यस्येदं व्याख्यानम् । आशयत्वं तु अत्र पक्षे पूर्वोक्तदोषोद्धारांशे । अन्यथोपपादयिष्यमाणत्वादित्येतद्व्याख्यानाय प्रवृत्तौ असद्विलक्षणज्ञप्त्या इत्यनेनेति शेष इत्येव वाच्यतया आशयत्वोक्तिर्मन्दा स्यात् । **एवं वक्ष्याम इति** । भाव इत्युत्तरत्रापि भावत्वोक्तिरर्थत्वार्थिकेति ज्ञेयम् ।

**स०व्र०— अन्याकारोल्लेखीत्यन्तेनेति** । शुक्तेरसद्रजतात्मताभासेऽपि रजतस्यासत्त्वेनावस्तुत्वाद्वस्तुनो वस्त्वन्तरावभास इति लक्षणस्यानभिमतत्वादन्याकारोल्लेखीत्यन्तेनेति युक्तम् । तेन द्वितीयलक्षणाभ्युपगमादन्याकारोल्लेखीत्यन्तेनेति न युक्तमिति शङ्काऽनवकाश इति ध्येयम् । **उपपादयिष्यमाणत्वादिति** । असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हीत्यनेनेति शेषः । **वक्ष्यामो हीति** । यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसदित्यादिनेति शेषः ।

**विठ्ठ०— नन्वन्यदन्यात्मनाविषयीकुर्वदज्ञानम्** इत्यत्रान्यशब्दद्वयेन वस्तुमात्रविवक्षायाम् अन्यस्यान्यात्मनाऽवभासोऽन्यथाख्यातिरिति द्वितीयलक्षणमेव स्वाभ्युपगतत्वेन पर्यवसितमिति तन्निरसनस्यानिष्टत्वात् इष्टमेवेत्युक्तिविरोध इति चेन्न अन्यशब्दाभ्यां क्रमेण वस्त्ववस्तूभयग्रहणेन द्वितीयस्यानभ्युपगतत्वात् । न चात्र ज्ञापकाभावः अन्यथाविज्ञानमिति मूलश्लोकस्यैव ज्ञापकत्वात् । कथञ्चिदस्य सावकाशत्वेऽपि विष्णुतत्त्वनिर्णये सदसतो सत् सत्त्वप्रतीतेरेव भ्रान्तित्वोक्तेरित्याशयेनाह **यथोक्तमिति** । नन्वेतदपि वस्तुनो वस्त्वन्तरात्मता सती उतासतीति विकल्प्य दूषितमित्यतस्तदनूद्य स्वाभिप्रेतपक्षमुक्त्वा तत्रोक्तदोषं परिहरति **नन्विति** । उपपादयिष्यमाणत्वात् । 'असद्विलक्षणज्ञप्त्यै ज्ञातव्यमसदेव हि' इत्यत्रेति शेषः । **एवं सतीति** । असत एव प्रतीत्यङ्गीकारे इत्यर्थः । **को हि ब्रूते इति** । कथमुच्यते प्रतीतं रजतं देशान्तरे सदिति अन्यथाख्यातिवादिभिरभिमतत्वादिति चेत् सत्यम् विशेषपरिज्ञानशून्यास्तार्किका एवं वदन्ति तदनुपपन्नं दूष्यमाणत्वात् । वस्तुतस्तु शुक्तिकासन्निकृष्टमिन्द्रियं दोषवशात् शुक्तिकामेवात्यन्तासद्रजतात्मना गृह्णातीति अभिनवान्यथाख्यातिस्वरूपमुपरिष्टाद्वक्ष्याम इत्याह **वक्ष्याम इति** ।





**चषकः— यथोक्तमिति** । विष्णुतत्त्वविनिर्णय इति पूरणीयम् । **उपपादयिष्यमाणत्वादिति** । असद्विलक्षणज्ञप्त्या इत्यादिनेत्युपस्कर्तव्यम् । चिरन्तननैयायिकैकदेशिमते तादात्म्यमात्रं तत्संसर्गमात्रं वा असत् शिष्टं तु सर्वं सदेवेतिवत्प्रकृतमतेऽपि तथेति विपर्यस्यन् शङ्कते **एवमिति** ।

**गूढ०—** अख्यातिपक्षं दूषयितुं सिद्धान्तयति **अत्रोच्यत इति** । नन्वेतादृगन्यथाख्यातिस्वरूपं सिद्धान्तविरुद्धमित्यतः सिद्धान्तग्रन्थमत्रार्थे संवादयति **यथोक्तमिति** । **उपपादयिष्यमाणत्वादिति** । 'असद्विलक्षण-ज्ञप्त्यै ज्ञातव्यमसदेव ही'त्यनेनेति शेषः । शङ्कते **एवं सतीति** । असत्या अन्यात्मतायाः भानाङ्गीकार इत्यर्थः । तथाच भासमानं रजतमप्यसदेवास्त्विति भावः । तर्ह्यसत्ख्यातिवादापात इत्यत आह **वक्ष्यामेति** ।

**प्रदीपः—** तत्र तावदन्यथाख्यातिपक्षेऽभिहितानि दूषणान्युद्धर्तुमाह **यत्तावदित्यादिना** । एवं सतीत्यन्यत्र सतोऽन्यत्र प्रतीतिरुक्तेति मत्वोक्तं **को हीति** । अत्यन्तासत एव प्रतीत्यभ्युपगमादित्यर्थः ।

**३५१ सु०— अत्र केनचित्प्रलपितं 'खण्डो गौः, शुक्लः पट, इत्यादयः सर्व एव सविकल्पकप्रत्यया विभ्रमाः प्रसज्येरन् । सामानाधिकरण्यप्रत्ययस्य तादात्म्यालंबनत्वात् । तस्य चात्राभावादि'ति । तदतीव मन्दम् ॥ तथाहि । सामानाधिकरण्यप्रत्ययो हि कयोस्तादात्म्यमवलम्बते । किं गुणक्रियाजात्यादेः द्रव्येणोत, गुणादीनामेव परस्परमथ, गुणाश्रयस्य क्रियाश्रयेणेत्यादि ।**

**बिन्दुः— अत्र केनचिदिति** । इदमुक्तं भवति । इदं रजतमिति प्रत्ययो नान्यथाख्यातिः । तथात्वे प्रमाणाभावात् । न च वाच्यं तादात्म्यविषयत्वादन्यथाख्यातित्वमिति । असिद्धेः । न च सामानाधिकरण्यावगाहित्वात्तादात्म्यविषयत्वम् । अप्रयोजकत्वात् । अन्यथा शुक्लः पटः खण्डो गौः चलति घट इत्यादेरपि तथात्वेन भ्रान्तित्वप्रसङ्गादिति । यद्वा इदं रजतमिति ज्ञानं अन्यस्यान्यतादात्म्यं विषयीकरोतीत्येतावन्मात्रेण यदि विभ्रमः स्यात्तर्हि शुक्लः पटः खण्डो गौः इत्यादीनि अन्यस्य अन्यतादात्म्यावगाहीनि तथाविधानीति विभ्रमरूपाणि प्रसज्येरन् । तस्मात् अन्यथाख्यातिरन्यदेव किञ्चिद्वक्तव्यम् । अन्यथा अन्यथाख्यातिलक्षणस्य तत्रातिव्याप्तिरिति ।

**परि०— अत्रेति** । अविद्यमानतादात्म्यविषयकत्वेन ज्ञानस्य भ्रमत्वमित्युक्तार्थविषये केनचिद् दूषणमलग्नकमेवोक्तमित्यर्थः । **इत्यादीति** । क्रियाश्रयस्य जात्याश्रयेण जात्याश्रयस्य क्रियाश्रयेण गुणाश्रयेण वा क्रियाश्रयस्येत्यर्थः ।





**गु०दी०— खण्डो गौः शुक्लः पट** इत्यत्र खण्डो गौर्मुण्डो गौरित्यादिव्यवहारे खण्डनं नाम पुच्छप्रध्वंसः, मुण्डनं नाम शृङ्गप्रध्वंसः। अनयोश्च प्रध्वंसयोः गवि पुच्छखण्डनं शृङ्गखण्डनमिति वा गवि पुच्छं नास्ति शृङ्गं नास्तीत्येव वा प्रतीतिसद्भावेन प्रतीत्यनुसारिव्यवहारसंभवेऽपि, ईदृशव्यवहारस्य क्वाप्यभावेन शङ्काया एव निर्मूलत्वात्। सत्त्वे वा स्वस्वानुभवविरुद्धव्यवहारस्य गौण्या लक्षणया वा प्रवृत्तेः स्वेनैव वक्तव्यत्वेन पुनः शङ्कानुत्थानात्। अनुभवस्तु न कस्यापि। अतः उक्तलक्षणस्यातिव्याप्तिशङ्का दूरोत्सारितैव। यावद्द्रव्यभाविशुक्लरूपेण पटस्याभेदसद्भावात् न तत्राप्यतिव्याप्तिशङ्का। शुक्लः पट इति व्यवहारस्य चाभेदव्यवहारत्वस्यैव संभवान्न समाधानेऽप्यायासः। तथाऽपि परकीयन्यायेनैव परस्योत्तरं दातुं प्रकारान्तरेण समाधानमिति द्रष्टव्यम्।

**यादु०—** अविद्यमानतादात्म्यावगाहिज्ञानस्य भ्रमत्वे कस्यचिद्दूषणमनूद्य दूषयति **अत्र केनचिदिति**। **सामानाधिकरण्यप्रत्यय इति**। शुक्लः पटश्चलतीत्यादिप्रत्यय इत्यर्थः।

**वं०प०— तस्येति**। तादात्म्यस्येत्यर्थः। तथाचाविद्यामानतादात्म्यावगाहिज्ञानस्य भ्रमत्वे खण्डो गौरित्यादिसविकल्पकप्रत्ययेष्वतिव्याप्तिरित्यर्थः।

**आनन्दः—** अत्रैव कस्यचिन्मतं दूषयितुमनुवदति **अत्र केनचिदिति**। तादात्म्यविषयत्वादिति भावः। कथमेषां तादात्म्यविषयमित्यत आह **सामानाधिकरण्यप्रत्ययस्येति**। तथापि भ्रमत्वं कुत इत्यत आह **तस्य चेति**। तथाच असत्सत्तातादात्म्यविषयत्वेन भ्रमत्वमित्यर्थः।

**श्रीनिधि०— केनचिदिति**। विवरणकारेणेत्यर्थः। एवमन्यदन्यात्मना अवगाहमानस्य हि ज्ञानस्य अन्यथाख्यातित्वे। **क्रियाश्रयेणेत्यादीति**। जात्याश्रयस्य क्रियाश्रयेणेत्यादीत्यर्थः। अत्र खण्डो गौः शुक्लः पटः इत्यादिप्रत्यये खण्डनक्रियायाः गोत्वस्य च सामानाधिकरण्यं प्रतीयते। तथा पटत्वस्य शुक्लगुणस्य च सामानाधिकरण्यं चलति पट इत्यत्रापि चलनस्य पटस्यापि सामानाधिकरण्य एतत्सामानाधिकरण्यप्रतीतिः न तादात्म्यमवलम्बते। तथा सति दण्डी देवदत्त इत्यत्रापि दण्डदेवदत्तत्वसामानाधिकरण्यप्रतीतौ तयोस्तादात्म्यापत्तेरिति स्फुटम्। तथापि उक्तप्रत्ययेषु खण्डत्वगोत्वपटत्वशौक्ल्यचलनत्वपटत्वादीनां सामानाधिकरण्यं प्रतीयत इति भ्रान्त्या शङ्कितम्। उक्तानां च सामानाधिकरण्यप्रतीतिर्दण्डीकुण्डलीदेवदत्तइत्यादाविव यदाश्रयस्य तादात्म्यमवलम्बत एवेति। अत एवातीव मन्दमित्युक्तम्। पिण्ड एवेति सप्तमी।

**वा०चं०—** अनिर्वचनीयख्यातिसमर्थनायान्यथाख्यातिलक्षणानि निराकुर्वता विवरणकारेणोक्तमेतल्लक्षणदूषणं निराकर्तुमनुवदति **अत्रेति**। **केनचिदिति**। निरसनीयत्वेन प्रसक्ताख्यातिवादिविलक्षणेनेत्यर्थः। अख्यातिवाद्युक्तदूषणस्य नैयायिकं प्रति संभवेऽपि मां प्रत्यसंभव इत्येव। त्वदुक्तस्य तु तं प्रत्यप्यसंभवः वक्ष्यमाणरीत्या तेनापि तादात्म्यभानानभ्युपगमादित्याशयेनातीवेत्युक्तम्। यद्वा धर्माणामाश्रयेण परस्परं च भेदस्य धर्माश्रयाभेदस्य सामानाधिकरण्यप्रतीतिविषयतया स्फुटस्याज्ञानेनेदं दूषणाभिधानं परस्येत्याशयेनातीवेत्युक्त मिति

बोध्यम् । ननु सामानाधिकरण्यप्रत्ययस्य तादात्म्यानालम्बनत्वे तवान्यथाख्यातिरिव न सिद्ध्येदिति कथं मन्दमित्यत आह **तथा हीति** । सामानाधिकरण्यप्रत्ययस्य तादात्म्यालम्बनत्वेऽपि शुक्लः पटश्चलतीत्यादिप्रत्ययानां यत्तादात्म्यालम्बनता न तेषामन्यत्वं येषां चान्यत्वं न तेषां तादात्म्यालम्बनतेत्यन्यथाख्यातिवैलक्षण्यान्नातिव्याप्तिरिति वक्तुं गुणक्रियाजातीनां तदाश्रयाणां चैषु प्रत्ययेषु भानात्तादात्म्यावभासेनातिव्याप्तिं वदता च गुणादीनां स्वाश्रयैर्वा गुणादीनां परस्परं वा तदाश्रयाणां परस्परं वा तादात्म्यभानमाश्रित्यातिव्याप्तेर्वक्तव्यतया तदभिप्रायं ज्ञातुं पृच्छति **सामानाधिकरण्येति** ।

**वा०र०— विवरणकारेणेति** । अथ तथा रूपावभासनमिति पञ्चपादिकावाक्यव्याख्यावसरे न केवलमिदं रजतमिति प्रत्ययानामेवासत्संसर्गविषयत्वं किन्तु खण्डो गौरित्यादीनामपि तथात्वमापद्यत इति प्रतिपादनाय प्रवृत्तैवं खण्डो गौरित्यादिसंसर्गप्रत्ययाः सर्व एव विभ्रमाः प्रसज्येरन्निति विवरणवाक्यव्याख्याकरणावसरेण च खण्डो गौरित्यादिप्रत्ययानां न तादात्म्यमालम्बनम् । किन्तु समवायः स च सन्निति न विभ्रमत्वप्रसङ्ग इति शङ्क्यम् । समवायस्येह प्रत्ययहेतुत्वात्तादात्म्यप्रथासंभवादित्यर्थ इति तत्त्वदीपने प्रतिपादनादुक्ताशेषार्थस्य विवरणोक्तत्वमिति ज्ञेयम् । तथा गुणादीनामित्युत्तरग्रन्थानुसारेणाह **यद्वेति** । परस्परं च भेदस्येत्यस्य स्फुटस्येत्युत्तरेण संबन्धः । धर्माश्रयाभेदस्य चेति पाठः । **वक्तुमिति** । एवं च यत्र भेदो न तदित्यादिनेति शेषः । कयोस्तादात्म्यमिति विकल्पप्रसक्तिमाह **गुणक्रियेति** ।

**स०व्र०— सामानाधिकरण्यप्रत्ययो हीति** । शुक्लः पट इत्यत्र शौक्ल्यं तदाश्रयः पटत्वं तदाश्रयश्चेति चतुष्टयं प्रतीयते । तत्र सामानाधिकरण्यविषयीभूतः किं शौक्ल्यरूपगुणस्य पटरूपद्रव्येणाभेदः उत शौक्ल्यरूपगुणस्य पटत्वजात्या अथ शौक्ल्याश्रयस्य पटत्वाश्रयेण । एवं चलति पट इत्यत्रापि द्रष्टव्यम् ।

**वि०ठ०— अत्रान्यदन्यात्मना विषयीकुर्वज्ज्ञानं अन्यथाख्यातिरित्युक्ते अविद्यमानतादात्म्यावगाहिज्ञानं भ्रम इत्युक्तं स्यात् तच्च विवरणकारेण दूषितमित्यतो विवरणोक्तमनूद्यापाकरोति **अत्र केनचिदित्यादिना** । एवमित्यस्यैवं सतीत्यर्थः । **खण्ड** इत्यस्य सकल इत्यर्थमाहुः । **तस्य चात्राभावादिति** । शुक्लः पट इत्यादौ तादात्म्यस्याभावादित्यर्थः । तथाच खण्डो गौरित्यादिसामानाधिकरण्यप्रत्ययेष्वविद्यमानतादात्म्यावगाहित्वरूपलक्षणसद्भावात् अतिव्याप्तमिदं लक्षणमित्याशयः । सर्वत्र निर्विशेषाभेदानङ्गीकारात् यत्र तादात्म्यं नास्ति न तत्र तादात्म्यावलम्बनत्वं प्रत्ययस्य यत्र च तादात्म्यावलम्बनत्वं न तत्र तादात्म्यस्याविद्यमानता तथाच शुक्लः पट इत्यादिसामानाधिकरण्यप्रत्ययेषु अलक्ष्येषु लक्षणाभावान्नातिव्याप्तिरित्याशयेन परिहरति **तदतीव मन्दमिति** । शुक्लः पट इत्यत्र शौक्ल्यलक्षणो गुणः पटाख्यं द्रव्यं पटत्वजातिश्चेति । तथा चलति पट इत्यत्र चलनक्रिया द्रव्यं जातिः खण्डो गौरित्यत्र खण्डत्वं धर्मविशिष्टं द्रव्यं गोत्वजातिश्चेति प्रतीयते तत्र सामानाधिकरण्यप्रत्ययः किंनिष्ठतादात्म्यावगाहीति विकल्प्य तद्दूषणेनाविद्यमानतादात्म्यावगाहित्वं नोक्तसविकल्पयथार्थप्रत्ययेष्वस्तीत्युपपादयति **सामानाधिकरण्यप्रत्ययो हीति** ।

**चषकः**— अलीकतादात्म्यावगाहिज्ञानस्य विपर्यासरूपत्वे वाद्यन्तरोक्तदूषणप्रत्याचिख्यासयानुवदति **अत्र केनचिदिति**।

**गूढ०**— अत्रैव कस्यचिन्मतं दूषयितुमनुवदति **अत्र केनचिदिति**। तादात्म्यविषयत्वादिति भावः। कथमेषां तादात्म्यविषयत्वमित्यत आह **सामानाधिकरण्यप्रत्ययस्येति**। तथापि भ्रमत्वं कुत इत्यत आह **तस्य चेति**। तथाचासत्सत्तातादात्म्यविषयत्वेन भ्रमत्वमिति भावः।

**प्रदीपः**— **अत्रेति**। भिन्ने भिन्नाभिन्ने वात्यन्ताभिन्नप्रत्ययो भ्रान्तिरित्यर्थः। सामानाधिकरण्यस्य तादात्म्यालम्बनत्वं विकल्प्य दूषयति **तथा हीति**।

**३५२ सु०— नाद्यः। असंमतेः। न हि 'शुक्लः पट' इत्यस्य 'शौक्ल्यं पट' इत्यर्थोऽभिमतो लौकिकानाम्। न च 'चलति पट' इत्यस्य 'चलनं पट' इत्यर्थोऽभिमतः। नापि 'खण्डो गौरि'त्येतत् 'खण्डत्वं गोत्वं च पिण्ड एवे'त्यनेन समानार्थम्। तथात्वे 'दण्डी देवदत्त' इत्यस्यापि दण्डदेवदत्ततादात्म्यविषयतापत्तेः। 'दण्डी'ति शाब्दव्यवहारे भेदार्थप्रत्ययप्रयोगाद् ज्ञानमपि तादृशं कल्प्यत इति चेत्सममत्रापि। 'शुक्लगुणोऽस्यास्ती'त्यस्मिन्नर्थे 'अर्श-आदिभ्योऽच्' इत्यकारप्रत्ययविधानात्। 'चलती'त्यादौ तु स्फुट एव प्रकृतिप्रत्यययोरर्थभेदः। न हि 'गौरि'ति गोत्वमुच्यते तथात्वे त्वप्रत्ययवैयर्थ्यात्। अत एव 'शुक्लः पट' इत्युक्त्वा 'शौक्ल्यं पटस्ये'ति व्याकर्तारो भवन्ति।**

**बिन्दुः**— **भेदार्थप्रत्ययप्रयोगादिति**। दण्डोऽस्यास्तीति दण्डीत्यत्र तदस्यास्त्यस्मिन्नित्यधिकारे अत इनि ठनाविति विहितस्य इनिप्रत्ययस्याधाराधेयभावादिसंबन्धार्थत्वेऽपि तादृशसंबन्धस्य भेदव्याप्तत्वेन आक्षेपादिना शाब्दबोधे वा तदुत्तरकालीनमानसबोधे वा भेदस्यापि भानाद्भेदार्थत्वमित्यर्थः। वस्तुतस्तु परमते घटेन जलमाहरेत्यादौ जलाहरणयोग्यतावच्छेदकस्य छिद्रेतरत्वादेरपि शाब्दबोधविषयत्वाच्छब्दार्थत्वम्, एवं भेदस्यापि संबन्धार्थकास्त्यर्थीयप्रत्ययार्थत्वमिति शङ्कितुः प्राभाकरस्याशयः। **अर्श आदिभ्योऽजिति**। गुणवचनेभ्यो मतुपो लुगिष्ट इति वार्त्तिकस्य महाभाष्यकारेण प्रत्याख्यातत्वादिति भावः।

**परि०**— निर्विशेषाभेदाभिप्रायेणाह **असंमतेरिति**। **भेदार्थप्रत्ययेति**। दण्डोऽस्यास्तीति दण्डी। 'तदस्यास्त्यस्मिन्नि'त्यर्थे 'अत इनिठनावि'तीनिप्रत्ययस्य भेदार्थबोधकस्य प्रयोगादित्यर्थः।





**तादृशमिति**। ज्ञानव्यवहारयोरेकविषयकत्वेनैव जन्यजनकभावापन्नत्वादिति भावः। **अकारप्रत्ययेति**। व्यञ्जनस्य स्वरार्थत्वेनेत्संज्ञकत्वादकार इत्येवोक्तम्। तथाच यस्येतिप्रातिपदिकाकारलोपे शुक्ल इत्येव शुक्लवानित्यर्थे रूपमिति भावः। यद्यपि पञ्चमस्य द्वितीयपादे 'तदस्यास्त्यस्मिन्निति मतुबि'तिसूत्रे 'गुणवचनेभ्यो मतुपो लुग्वक्तव्यः'। शुक्लः पट इति वार्तिकान्निर्वाहो वृत्तौ दर्शितः। तथापि तत्प्रकरणे 'अर्श आदिभ्य' इतिसूत्रे वर्णादिति वृत्तौ उक्तपदस्य मञ्जर्यां वर्णवाचिनः शुक्लादिशब्दादपि अच्प्रत्ययो भवति। शुक्लोऽस्यास्तीति शुक्लः पट इत्युक्त्वा गुणवचनेभ्यो मतुपो लुग्वक्तव्य इत्येव सिद्धमेतदित्याशङ्क्य ये आद्युदात्ता वर्णवाचिनः शब्दाः तद्वत्यन्तोदात्तसिद्ध्यर्थमच्प्रत्ययविधानमित्युक्तत्वादर्शआदिभ्योऽजित्यनेनैव निर्वाहो दर्शितः। नापि खण्डो गौरित्युक्तमुपपादयति **न हि गौरिति**।

**यादु०**— गुणादीनां द्रव्येण तादात्म्येऽनुभवविरोधं क्रमेणाह **न हि शुक्ल इत्यादिना**। अतिप्रसङ्गं चाह **तथात्व इति**। **स्फुट एवेति**। प्रतीयत इति शेषः।

**वं०प०**— **चलति** चलनवान्। जातेर्द्रव्येण तादात्म्यावलम्बनत्वे उदाहरणद्वयम्। **खण्डो गौरिति**। खण्डत्वजातिः खण्डरूपा व्यक्तिश्चैकैवेत्यर्थः। एवं गौरित्यत्रापि गोत्वं जातिः गोरूपा व्यक्तिश्चैकैवेत्यर्थः। **खण्डत्वं गोत्वं च पिण्ड एवेति**। खण्डत्वं पिण्ड एव खण्डरूपा व्यक्तिरेव गोत्वं च पिण्ड एव गोरूपा व्यक्तिरेवेति योज्यम्। सामानाधिकरण्यप्रत्ययस्य गुणादेर्धर्मस्य धर्मिणा तादात्म्यावलम्बनत्वेऽनुभवविरोधमुक्त्वाऽतिप्रसङ्गं चाह **तथात्व इति**। **इत्यस्यापीति**। सामानाधिकरण्यप्रत्ययस्यापि। **ज्ञानमपि तादृशमिति**। दण्डदेवदत्तभेदविषयकमेव ज्ञानं तत्रास्ति न तु दण्डदेवदत्ततादात्म्यविषयकमतो नातिप्रसङ्गः। शुक्लः पट इत्यादौ तु भेदार्थप्रत्ययप्रयोगाभावादत्र ज्ञानं तादात्म्यविषयकमेवेति तत्रातिव्याप्तिः स्यादेवेति भावः। प्रत्ययो मत्वर्थीय इन्प्रत्ययः। तादृशं भेदावगाहि। तथाच न तादात्म्यविषयकत्वमिति भावः। **इत्यत्रार्थ** इत्यस्मिन्मतुबर्थे। **अकारप्रत्ययेति**। भेदार्थकेत्यर्थः। ननु गौरित्यत्र कथमर्थभेदः। भेदार्थकप्रत्ययाभावादित्यत आह **न हि गौरितीति**। तथात्वे गोगोत्वयोस्तादात्म्ये। **त्वप्रत्ययेति**। गोर्भावो गोत्वमिति भेदार्थकत्वप्रत्ययेत्यर्थः। **अत एवेति**। शुक्लः पट इत्यत्र भेदार्थकमत्वर्थीयाकारप्रत्ययसद्भावादेवेत्यर्थः।

**आनन्दः**— असंमतेरित्युक्तमेव विशदयति **न हीति**। ननु शुक्लः पट इत्यस्य शौक्ल्यं पट इति चलति पट इत्यस्य चलनं पट इति, खण्डो गौरित्यस्य खण्डत्वं मुण्डत्वं चैकमेवेत्यर्थोऽङ्गीक्रियते इत्यत आह **तथात्व इति**। शङ्कते **दण्डीतीति**। **भेदार्थप्रत्ययप्रयोगात्** भेदार्थे इनिप्रत्ययप्रयोगात्। साम्येन समाधत्ते **सममिति**। तत्र तावच्छुक्लः पट इत्यत्र भेदार्थप्रत्ययप्रयोगमुपपादयति **शुक्ल इति**। चलति पट इत्यत्र द्रव्यक्रिययोर्भेदमुपपादयति **चलतीत्यादाविति**। प्रकृत्यर्थश्चलनं तिप्रत्ययार्थः कर्तृत्वमित्यर्थः। तयोर्भेद इत्यर्थः। खण्डो गौः खण्डत्वं मुण्डत्वं चैकमेवेत्यत्र तयोर्भिन्नार्थत्वमुपपादयति **न हीति**। **तथात्व इति**। गौरित्यनेन गोत्वं यद्युच्यते तदेवेत्यर्थः। **अत एवेति**। एकार्थत्वाभावादेवेत्यर्थः।





**श्रीनिधि०— दण्डी देवदत्त इत्यस्यापीति** । तत्र संसर्गविषयतेति परस्यापि संमतमिति भावः । **भेदार्थप्रत्ययेति** । इत् प्रत्ययस्य मत्वर्थे विधानान्मतुपश्च तदस्यास्त्यस्मिन्निति भेद एव विधानादिति भावः । ज्ञानव्यवहारयोस्समानविषयतानियमादिति भावः । **सममिति** । संसर्गस्यात्रापि संभवादिति भावः । अयं गौ इत्यादि जातिसविकल्पके इदंत्वगोत्वयोस्सामानाधिकरण्यप्रतीतिः इदंगोत्वयोस्सामानाधिकरण्यमवलम्बते इत्युक्तं दूषयति **न हि गौरितीति** । गौरिति ज्ञानं गोत्वविशेष्यकं नेत्यर्थः ।

**वा०चं०**— तवासंमतिरप्रयोजिकेत्यतोऽनुभवविरुद्धेऽर्थे संमतिर्न युक्तेत्याशयेनानुभवविरोधमाह **न हीति** । अनुभवमतिक्रामन्तं प्रति बाधकमाह **तथात्व इति** । वैषम्यं शङ्कते **दण्डीतीति** । प्रत्ययस्य भेदाविनाभूतसंबन्धार्थकतया भेदार्थत्वोक्तिः । **शुक्लगुण इति** । गुणवचनेभ्यो मतुपो लुग्वक्तव्य इति तदस्यास्त्यस्मिन्नित्यत्रत्येन वार्तिकेन शुक्ल इत्यस्योपपत्तावप्यन्तोदात्तत्वार्थमर्शआदिभ्योऽजित्यत्र अर्श आदिगणे वर्णादिति पाठात्तदभिप्रायेणैवमुक्तमिति द्रष्टव्यम् । (गुणवचनेभ्य इति । गुणे तद्वति च प्रसिद्धाः शुक्लादय एव गृह्यन्ते न तु रूपादयोऽपि । शुक्लगुणोऽस्यास्तीति शुक्लः पटः । कृष्णः । तदस्यास्त्यस्मिन्निति मतुप् । गावोऽस्यास्मिन्वा सन्ति गोमान् । अस्तीति पुरुषवचने अविवक्षिते । कालस्तु विवक्षित एव । धने गते भाविनि वा धनवानयमिति प्रतीत्यभावात् । इतिशब्दो विषयविशेषलाभार्थः । तथा च वार्तिकम् । 'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय' इति । अस्ति विवक्षायां ये मतुबादयो विधीयन्ते ते भूमादिविषयेषु भवन्तीत्यर्थः । भूमादिग्रहणं प्रायेण भूमादयोऽपि प्रतीयन्त इत्येवं परम् । भूमा बहुत्वम् । यस्य यावदुचितं तावदेव । निन्दायां ककुदावर्तिनी व न्या । प्रशंसायां रूपवान् । नित्ययोगे क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । संसर्गे दण्डी । संसर्गः संयोगः । तेन संयुक्तदण्ड एवोच्यते न तु गृहावस्थितदण्डोऽपि ।) शुक्ल इत्यादौ चलतीत्यादाविव भेदार्थप्रत्ययस्यास्फुटत्वादभेद देव व्यवहारोपपत्तेर्न भेदज्ञानकल्पकं किञ्चिदित्यतोऽभियुक्तव्याख्यानं तद्व्यवहारस्य संबन्धविषयकत्वे दर्शयति **अत एवेति** ।

**वा०र०**— मतुपो भेदे विधानाभावादाह **प्रत्ययस्येति** । शुक्लगणोऽस्यास्तीत्यर्थेऽर्श आदिभ्य इत्यकारप्रत्ययविधानादिति मूले अर्शआद्यजन्तत्वेन शुक्ल इत्येतदुपपादितम् । तत्कथम् । तदस्यास्त्यस्मिन्नितिसूत्रीयगुणवचनेभ्यो लुगिष्यत इति वार्तिके च शुक्लशब्दात्तदस्येत्यनेन प्राप्तमतुपो लुकि सति शुक्ल इत्यस्य साधुत्वसंभवे सत्यर्श आद्यजन्तत्वस्यानाश्रयणीयत्वादित्याशङ्कामर्श आदिभ्योऽजिति सूत्रप्रवृत्तिविषयत्वं शुक्ल इत्यादेरपि संभवतीत्येतत्प्रतिपादकगुणवचनेभ्यो मतुपो लुग्वक्तव्य इत्येतत्सिद्धमित्यादिमञ्जर्यनुसारेण परिहरति **गुणवचनेभ्य इति** । गुणमुक्त्वा संप्रति गुणिनि वर्तन्ते ते गुणवचनाः गुणे तद्वति च प्रसिद्धाश्च शुक्लादयः शब्दा एवेति त एव गुणवचनत्वेन विवक्षिताः । अतो न सर्वदा गुणमात्रवाचिरूपादिशब्दानां गुणवचनत्वेन प्राप्तिरिति न तच्छब्देभ्यो मतुपो लुकः प्राप्तिः । अत्र वार्तिकपुस्तकेषु गुणवचनेभ्य इत्यस्यानन्तरं क्वचिल्लुगिष्यत इति पाठः क्वचिच्च मतुपो लुग्वक्त व्य इति पाठः । तत्र द्वितीयस्य कशिकायामुदाहृतस्य टीकायामुदाहरणम् । सिद्धान्तकौमुद्यां तु लुगिष्ट इति व्यवहारः । शेष्यामपि क्वचित् ल्यबित्यपि प्रक्रियायां पाठ इत्यादिकमुक्तम् । न च शुक्लादीनामभेदोपचारेणैव शुक्लः पट





इत्यादिप्रयोगसंभवान्न मतुप् लुग्वाच्य इति वाच्यम् । तथापि मतुप्प्रत्ययप्राप्तौ तच्छ्रवणप्रसङ्ग इत्यतस्तन्निवृत्तये तल्लुगाश्रयणसार्थक्यात् । वार्तिकेनेत्यनन्तरं मतुपो लोपे सतीति पूरणीयम् । अन्तोदात्तत्वार्थमित्यत्र शुक्ल इत्यस्येति वर्तते । अजन्तत्वे चित इति सूत्रेण देवादिशब्देष्विवान्तोदात्तत्वसंभव इति भावः । भवेदजाश्रयणं यदि तत्सूत्रे शुक्लशब्दो गृहीतः स्यादित्यत उक्तं **वर्णादिति पाठादिति** । अर्शस् । उरस् । तुन्देत्यादिगणान्ते वर्णादिति पाठादित्यर्थः । वर्णवाचिनः शुक्लादिशब्दादच्प्रत्ययो भवतीति तदर्थः । एवं चार्श आद्यजाश्रयणं न शुक्लः पट इत्येतत्प्रयोगमात्रोपपत्त्यर्थमपि तु चित इत्यन्तोदात्तत्वार्थम् । न च मतुपि तल्लुकि च सत्यन्तोदात्तता प्राप्यत इत्यतोऽवश्यमजाश्रयणीयः । अन्यथा वर्णादिति पाठवैयर्थ्यमिति भावः । एवमुक्तम् । शुक्ल इत्यत्रार्श आदिभ्योऽजित्यनेनाकारप्रत्यय इत्युक्तमित्यर्थः । अनेन शुक्लः पट इत्यादौ मतुपि लोपे च शुक्ल इत्यस्य निर्वाहेऽपि शुक्लशब्दो वस्तुगत्यान्तोदात्तो भवति तन्निर्वाहार्थमजाश्रयणमावश्यकमिति भावेन मूले अर्शआद्यजाश्रयणं कृतमित्युक्तं भवति । अत्र प्रसङ्गतः किञ्चिदुच्यते । रसादिभ्यश्चेति सूत्रेण रसरूपस्पर्शगन्धशब्दस्नेहगुणादेकाच इति वृत्त्युदाहृतवक्तव्यानुसारेण रसरूपादिशब्देभ्यो मतुपं विना प्रत्ययान्तराभाव इति विहिते तर्हि रूपिणी भार्या रसिको नट इत्यादिप्रयोगायोग इति न वाच्यम् । इति करणस्य विवक्षार्थत्वेन तदनुवृत्तेर्यत्र मतुबन्तादेव लोकस्य विवक्षा भवति तत्रैवानेनान्यप्रत्ययनिवृत्तिः क्रियते । न सर्वत्रेति लाभाद्रूपिणीत्यादौ प्रत्ययान्तरेऽपि बाधकाभावात् । अथवा गुणादिति रूपादिविशेषणाद्रसनेन्द्रियादिग्राह्याणां रूपादीनामेव प्राप्तेस्तच्छब्देभ्य एव मतुब्नियमः । रूपिणी कन्येत्यत्र दर्शनीयतार्थः । रसिको नट इत्यत्र रतिहासादयो भावाः प्रतीयन्ते । नातस्तत्र प्रसङ्गः । भाष्यकारेण तूर्वशीवैरूपिण्यप्सरसां स्पर्शिको वायुरिति दर्शनाद्यथाभिधानं प्रत्ययान्तरमपि भवतीत्यादिरूपेण सूत्रं प्रत्याख्यातम् । तेन रूपी घट इत्यादिप्रयोगास्तत्रतत्रत्या अप्युपपन्नाः । एवमत इनि ठनावितिसूत्रीय एकाक्षरात्कृतो जातेः सप्तम्यां च नतौ स्म ताविति वार्तिकानुसारेण दण्डीत्यादौ जातिस्थले निषेधो नायाति । तस्य प्रायिकत्वादित्यादि प्रक्रियाशेष्यादौ ज्ञेयमिति । इत्यादाविवेति व्यतिरेकदृष्टान्तः ।

**विट्ठ०**— गुणादीनां द्रव्येण तादात्म्यावगाहीप्रत्यय इत्युक्ते अनुभवविरोधं क्रमेणाह **न हि शुक्लः पट इत्यादिना । खण्डत्वं गोत्वं चेति** । यद्यप्यत्र नापि खण्डो गौरित्येतद्गोत्वं पिण्ड एवेत्यर्थैक्यमभिमतमित्येव वक्तव्यं पूर्ववत् तथापि अत्र गोशब्दस्य जातिपरत्वेन घटपटवदत्र पिण्डवाचकपदाभावात् तदभिधानाय प्रवृत्तपदखण्डस्यापि खण्डत्वरूपधर्मविशिष्टार्थवाचकत्वेन गोशब्दतुल्यत्वात् खण्डत्वं गोत्वमिति खण्डत्वग्रहणमिति बोध्यम् । अनुभवमतिक्रामन्तं प्रति बाधकमाह **तथात्व इति** । वैषम्यमाशङ्कते **दण्डीति** । तदस्यास्त्यस्मिन् मतुबिति भेदबोधके इनिप्रत्ययप्रयोगादित्यर्थः । **चलतीत्यादाविति** । इत्यादिक्रियावाचकपदप्रयोगे प्रकृत्यर्थक्रियां प्रति कर्तृत्वस्यैव प्रत्ययार्थत्वादिति भावः । शुक्लः पटः चलति पटः इत्यत्र गुणकर्मणोर्द्रव्येण भेदप्रतीतिमुपपादयति **न हि गौरिति गोत्वमुच्यत इति** । किन्तु गोत्वजातिविशिष्टपिण्ड एवोच्यत इति शेषः । एवञ्च जातेः द्रव्येण भेद एव सिध्यतीति भावः । गौरित्यत्र जातिबोध एव किं न स्यादित्यत आह **तथात्व इति** । गोशब्दमात्रस्यैव जातिबोधकत्वे इत्यर्थः ।





**गूढ०**— असंमतेरित्युक्तमेव विशदयति **न हीति**। ननु शुक्लः पट इत्यस्य शौक्ल्यं पट इति चलति पट इत्यस्य चलनं पट इति, खण्डो गौरित्यस्य खण्डत्वं मुण्डत्वं चैकमेवेत्यर्थोऽङ्गीक्रियत इत्यत आह **तथात्व इति**। शङ्कते **दण्डीतीति**। **भेदार्थप्रत्ययप्रयोगात्** भेदार्थे इनिप्रत्ययप्रयोगात्। साम्येन समाधत्ते **सममिति**। तत्र तावच्छुक्लः पट इत्यत्र भेदार्थप्रत्ययप्रयोगमुपपादयति **शुक्ल इति**। चलति पट इत्यत्र द्रव्यक्रिययोर्भेदमुपपादयति **चलतीत्यादाविति**। प्रकृत्यर्थश्चलनं तिप्रत्ययार्थः कर्तृत्वमित्यर्थः। तयोर्भेद इत्यर्थः। खण्डो गौः खण्डत्वं मुण्डत्वं चैकमेवेत्यत्र तयोर्भिन्नार्थत्वमुपपादयति **न हीति**। **तथात्व इति**। गौरित्यनेन गोत्वं यद्युच्यते तदेत्यर्थः। **अत एवेति**। एकार्थत्वाभावादेवेत्यर्थः।

**प्रदीपः**— गुणादीनां द्रव्येण तादात्म्येऽनुभवविरोधमतिप्रसङ्गं चाह **न हीति**। वैषम्यान्नातिप्रसङ्ग इति शङ्कते **दण्डीति**। तदस्यास्मिन्निति विवक्षायामत इनिठनाविति प्रत्ययविधानात् षष्ठ्यर्थसंबन्धस्य भेदगर्भत्वाद्भेद-विषयमेव दण्डीति ज्ञानमित्यर्थः। **सममत्रापीति**। गुणवचनानां मतुपो लुक् वक्तव्य इति द्रष्टव्यम्। चलतीति प्रत्ययेन कर्तृसंस्थानाभिधानात् प्रकृत्या चलनाभिधानादित्यर्थः। **न हीति**। खण्डशब्दो गुणवचनो गुणमुक्त्वा गुणिनि वर्तमानत्वाद्गोशब्दस्तु व्यक्तिवचन एवेत्यर्थः। गुणादीनां द्रव्येण भेदोऽनुभवसिद्ध इत्याह **अत एवेति**। धर्मधर्मिणोः भेदादेवेत्यर्थः। षष्ठ्यर्थस्य भेदसापेक्षत्वादन्यथा शौक्ल्यं पट इति स्यादित्यर्थः।

**३९३ सु०— अत एव न द्वितीयः। न हि 'शुक्लः पटश्चलती'त्यस्य 'शौक्ल्यं पटत्वं चलनं चैकमि'त्यर्थश्चेतसि चकास्ति प्रतिपत्तृणाम्। तथा सति 'दण्डी कुण्डली देवदत्त' इत्यस्यापि ज्ञानस्य दण्डकुण्डलदेवदत्तत्वतादात्म्यविषयतापातात्॥**

**परि०**— **चकास्तीति**। चकासृ दीप्तौ भातीत्यर्थः।

**आनन्दः**— अत एवेत्यस्यार्थमाह **न हि शुक्ल इति**। नन्वेवं सति को दोष इत्यत आह **तथा सतीति**।

**विट्ठ०**— अस्तु तर्हि चलति पटः खण्डो गौरित्यत्र कर्मजात्योः द्रव्येण प्रतीतिः शुक्लः पट इत्यत्र तु गुणे शुक्लादयः पुंसीति न्यायेनात्र गुणमात्रवाचकत्वोपपत्तेः। शुक्लः पट इति सामानाधिकरण्येनाभेदप्रत्यय एवोचितः मत्वर्थकाकारप्रत्ययकल्पनमन्याय्यमित्यतो लोकव्यवहारसिद्धतद्व्याख्यानेनैवमेवार्थकल्पनमुचितमित्याह **अत एवेति**।

**गूढ०**— अत एवेत्यस्यार्थमाह **न हि शुक्ल इति**। नन्वेवं सति को दोष इत्यत आह **तथा सतीति**।

**प्रदीपः**— **अत एवेति**। अनुभवविरोधातिप्रसङ्गाभ्यामेवेत्यर्थः। एतदेवोपपादयति **न हीति**।





**३५४ सु०— तृतीयस्तु स्यादेव । समानमेकमधिकरणं येषां ते हि समानाधिकरणास्तेषां भावः सामानाधिकरणयम् । तथा च गुणादीनामाश्रयेण परस्परं च भेदः आश्रयाणां चाभेदः स्फुट एव ॥ न हि स्वयमेव स्वस्याधिकरणम् । नापि समानमधिकरणं येषामिति परस्पराभेदे युज्यते । न चाश्रयभेदे तस्य समानताऽस्ति । न च गुणाद्याश्रयस्य भेदे प्रमाणमस्ति । विशिष्टयोर्भेदेऽपि न तत् गुणाद्याश्रयः । किन्तु गुणाद्याश्रयाश्रितं वस्त्वन्तरं तत् ॥ एवञ्च यत्र भेदो न तदभेदेन प्रतिभासते, यच्चाभेदेन प्रतिभासते न तत्र भेद इति क्वातिव्याप्तिः ।**

**बिन्दुः—** गुणादीनामाश्रयेण भेदमुपपादयति **न हि स्वयमेवेति** । परस्परभेदमुपपादयति **नापीति** । आश्रयाणामभेदं व्यनक्ति **न चाश्रयेति** । **विशिष्टयोर्भेदेऽपीति** । दण्डीत्याद्येकत्वोल्लेखिव्यवहारप्रयोजकाबाधितैकत्वप्रत्ययस्य दण्डदेवदत्तसंबन्धविषयत्वानुपपत्तेरतिरिक्तपदार्थसिद्धिरिति भावः । न च तस्य समुदायविषयत्वमिति वाच्यम् । समुदायस्य त्रितयानतिरेके उक्ताविशेषतादवस्थ्यात् । अतिरेके तु सिद्धं नः समीहितं तस्यैव विशिष्टशब्दवाच्यत्वात् । न च प्रत्येकगतैकत्वविषयतामात्रेणैकत्वप्रत्ययोपपत्तौ अतिरिक्तविशिष्टकल्पने मानाभाव इति वाच्यम् । तथात्वे पटोऽयमित्यादिप्रत्ययानामपि तथात्वापातेन कुत्रापि कार्यद्रव्यमतिरिक्तं न सिध्येदिति जितं परमाणुपुञ्जवादिभिर्बाह्यैः । ननु च पटादौ तन्त्वाद्युपादानादिवदत्र कारणासंभवान्न विशिष्टरूपकार्योत्पत्तिः तन्नित्यत्वे च सर्वदोपलभ्येतेति चेत् न । द्विविधं हि विशिष्टं नित्यमनित्यं च । तत्राद्यं नित्यमात्रवृत्ति । यथेश्वरः सर्वज्ञ इत्यादि । तस्य च श्रुत्यादिभिः सर्वदोपलब्धिरिष्टैव । द्वितीयमपि नित्यानित्योभयवृत्तितदुभयमपि जन्यमेव यथा दण्डी देवदत्तः । घटसंयुक्त आकाश इत्यादि । यत्र यत् दण्ड्यादिकमनित्यं तत्र विशेषणीभूतस्य दण्डशुक्लादेरेवोपादानत्वं न तु विशेष्यस्यापि तेषु मूर्तानां सामानाधिकरण्यासंभवदोषोऽप्यपास्तः । विशेष्यसन्निधानं तु निमित्तमेव । विशेषणविशेष्यसंबन्धश्चासमवायिकारणमिति न काऽप्यनुपपत्तिः । एकस्यैवात्मनो ज्ञानोपादानत्ववदेकस्यैव दीर्घतन्तोश्च पटोपादानत्ववदेकस्यापि विशेषणस्योपादानत्वमुपपद्यत एव । अथवा विशेषणविशेष्ययोर्दण्डदेवदत्तयोस्तन्तुस्थानाभिषिक्तयोः पटस्थानाभिषिक्तशुक्लप्रत्ययगोचरविशिष्टं प्रत्युपादानता । अयुतसिद्धयोर्मूर्तयोः सामानाधिकरण्यविरोधाभाव इति त्वदीयकुलधर्मस्यापि संरक्षणात् । न च कुड्यादावपि च विजातीययोः कथमारम्भकत्वम् । दृष्टान्तस्य पक्षतुल्यत्वात् । मृदिष्टकापाषाणादीनां पार्थिवत्वेन वैजात्यस्यैवासिद्धेः । मृत्वादिरूपेण वैजात्ये च कौशेयकार्पासोर्णामयतन्तुभिः पटारम्भो न स्यात् । न च कुड्यादौ कर्दमाद्यर्धजलापेक्षणात्तस्य च पृथिवीविजातीयत्वादनारम्भकतया कार्यानभ्युपगम इति सांप्रतम् । मृत्संयवनार्थं जलापेक्षिणो





घटस्याप्यसिद्धिप्रसङ्गात् । शरीरादौ पञ्चभूतारब्धतायाः श्रुतिस्मृतीतिहासपुराणप्रसिद्धत्वाच्च । न चैवं सति इदानीं देवदत्त इति प्रतीतिबलात्कालोपाधिरूपक्षणारब्धान्यनन्तानि विशिष्टान्यापद्येरन्, तेषां च क्षणरूपोपादाननाशप्रयुक्तो विनाशोऽप्यङ्गीकरणीय इति क्षणारब्धविशिष्टानामनन्तानां क्षणिकत्व-स्वीकारापत्त्या बाह्यमतप्रवेशः स्यादिति वाच्यम् । तवापि निर्विकल्पकप्रत्यक्षप्रामाण्यवादिनश्चार्वाक-मतप्रवेशापत्तेः । ननु मया प्रमाणान्तराणामपि बहूनां स्वीकारात्तावन्मात्रेण कथं तन्मतप्रवेशापादनमिति चेत् । संचारयदृगं चलमितोऽपि कियन्तमपि क्षणारब्धविशिष्टानां तथात्वेऽपि विशेषणविशेष्याणां बहूनां दण्डीत्यादिविशिष्टानां चानन्तपदार्थानां स्थायिताया मयापि स्वीकृतत्वात् । अन्यथा क्षणरूपाणां कालोपाधीनां शब्दबुद्धिकर्मणां च क्षणिकतायास्त्वयापि स्वीकृतत्वेन तद्दोषानिस्तारात् । न च गुणकर्मादीनामद्रव्यत्वेन कथमुपादानत्वमिति वाच्यम् । एकं रूपमित्याद्यबाधितप्रतीतेस्तेषामपि संख्यारम्भकत्वेन बाधकाभावात् । अपेक्षाबुद्धिविषयत्वमात्रेण तु चतुर्विंशतिगुणाः पञ्च कर्माणीति व्यपदेशोपपत्तिस्वीकारे द्रव्येष्वपि तथात्वापातेन संख्यास्वरूपोच्छेदप्रसङ्गात् । न च तत्र बाधकाभावा-त्संख्यारम्भकत्वम्, अत्र तु गुणत्वादिकमेव बाधकमिति प्रतीतिरपेक्षाबुद्धिविषयतया व्याख्यायत इति वाच्यम् । अन्योन्याश्रयात् । गुणत्वमारम्भकत्वसमानाधिकरणं ...............त्रादिवदित्यनुमानेनापि तत्सिद्धे संख्योच्छेदरूपविपक्षबाधकतर्कस्योपन्यस्तहेतुत्वेनोपाध्यप्रयोजकत्वातिप्रसङ्गाभाससाम्यादि-कलङ्कलेशगन्धशङ्कापीति । कार्यस्यासमवायिकारणजन्यतानियमस्यास्माभिरनङ्गीकृतत्वेन तदभावे-ऽप्यनुपपत्त्यभावः । अत्यन्तपीडायां तु विशेषणविशेष्यसंबन्ध एव तथास्त्वित्युक्तम् । नन्वेवं सति विशिष्टस्य कुत्रान्तर्भावः । द्रव्यगुणानारब्धत्वेन द्रव्यादिष्वनन्तर्भावात् । तथाच कथं तस्य वस्तुत्वमिति चेत् । गुणादिष्वनन्तर्भावाद् द्रव्यस्यापि कथं वस्तुत्वम् । यदि च प्रमाणबलेन सिद्धस्य पदार्थस्य क्लृप्तान्तर्भावासंभवेऽपि पार्थक्येनाङ्गीकार्यता तदेतत्प्रकृतेऽपि तुल्यम् । विशिष्टस्याप्यष्टमपदार्थ-त्वोपपत्तेः । न च यथाकथञ्चित्क्लृप्तेष्वेवावान्तरवैजात्यादिकल्पनयाऽन्तर्भावसंभवे पृथक्पदार्थकल्पना अन्याय्येति वाच्यम् । तावतापि विशिष्टसिद्ध्यविरोधात् । क्लृप्तेष्वेव गजादिषु प्रक्षेपमात्रं कल्पयित्वा मूषकादिषु वा वृद्धिमात्रं कल्पयित्वा वराहादिपदार्थानामपि पार्थक्यापलापापाताच्च । तस्माद्द्रव्यादितुल्य-योगक्षेमं विशिष्टं पदार्थान्तरमिति सिद्धम् । एवं च भगवत्पादैस्तत्त्वविवेके भेदाभेदनिरूपणप्रसङ्गे कार्यकारणयोश्चेत्युक्त्वा विशिष्टशुद्धयोरिति यत्पृथक् प्रतिपादनमकारि तत् ब्राह्मणपरिव्राजकन्यायेनेति न कोऽपि विरोधः । प्रत्युत तदनङ्गीकारिणामेव सकलकार्यविलोपापत्त्या परमाणुपुञ्जवादिकुक्षिप्रवेशो दुरुद्धर इत्यलं दुर्बलहिंसयेति दिक् ।





**परि०**— आश्रयेण भेदः, परस्परं च भेदः, आश्रयाणामभेदः, इत्येतत्क्रमेणोपपादयति **न हीति** । आश्रयाणामिति बहुवचनमाधेयानां बहुत्वात्तदभिप्रायेणौपचारिकमिति भावः । **विशिष्टयो-रिति** । गुणविशिष्टक्रियाविशिष्टयोरित्यादेरित्यर्थः । विशिष्टं पदार्थान्तरमिति भावेनाह **वस्त्वन्तरमिति** । **क्वातिव्याप्तिरिति** । मदुक्तान्यथाख्यातिलक्षणस्येति योज्यम् ।

**यादु०**— गुणादीनामाश्रयेण भेदमुपपादयति **न हि स्वयमेवेति** । तेषां परस्परं भेदमुपपादयति **नापि समानमिति** । येषामित्युक्तबहुत्वस्य भेदव्याप्तत्वादिति भावः । आश्रयाभेदमुपपादयति **न चाश्रयभेद इति** । **समानता** एकता । **तद्गुणाद्याश्रय इति** । आत्माश्रयत्वप्रसङ्गादिति भावः ।

**वं०प०**— **तस्य** आश्रयस्य । **समानताऽस्तीति** । एकताऽस्तीत्यर्थः । तथा च गुणाश्रयस्य क्रियाश्रयेणाभेदस्तु स्यादेवेत्यर्थः । गुणाश्रयस्य क्रियाश्रयेण भेदे प्रमाणाभावादेव तयोरभेदोऽङ्गीकार्य इत्याह **न चेति** । ननु गुणविशिष्टक्रियाविशिष्टयोर्भेदः प्रत्यक्षसिद्ध इति चेत्तत्राह **विशिष्टयोरिति** । अस्माभिर्गुणाश्रयेणाभेदः कथ्यते न तु गुणविशिष्टक्रियाविशिष्टयोः । तयोस्तु भेद एव । न च वाच्यं गुणविशिष्टस्यैव गुणाश्रयत्वात् क्रियाविशिष्टस्यैव क्रियाश्रयत्वात् गुणाश्रयक्रियाश्रययोरभेदे विशिष्टयोरेवाभेदः प्राप्त इति । आत्माश्रयत्वप्रसङ्गेन गुणविशिष्टस्य गुणाश्रयत्वाभावात् । क्रियाविशिष्टस्य च क्रियाश्रयत्वाभावात् । तथाच विशिष्टयोर्भेदेऽपि न तद्विशिष्टं गुणाद्याश्रयः किं नाम गुणाद्याश्रयाश्रितं वस्त्वन्तरम् । तेन भिन्नाभिन्नं पदार्थान्तरमेवेति यावत् । एवं च विशिष्टयोर्भेदेऽपि गुणाद्याश्रययोरभेद एवेत्याशयः । एवं सत्यविद्यमानतादात्म्यावगाहिज्ञानस्य भ्रमत्वे न कुत्राप्यतिव्याप्तिरित्याह **एवं चेति** । **यत्र भेद इति** । गुणादीनामाश्रयेण परस्परं चेत्यर्थः । **न तदभेदेनेति** । तादात्म्यवत्वेनेत्यर्थः । तथाच तत्र तादात्म्यावगाहित्वं नास्तीति नोक्तलक्षणस्यातिव्याप्तिरिति भावः ।

**आनन्दः**— तृतीयपक्षसंभवमुपपादयति **समानमिति** । तत्र समानमधिकरणं येषामित्यनेन गुणादीनामाश्रयेण गुणादीनां परस्परं भेदः गुणाश्रयस्य कर्माश्रयभेदश्चोक्तः । तत्र न हि स्वयमेवेत्यनेन गुणादीना-माश्रयेण भेदोपपादनम् । अन्यथा आत्माश्रयः स्यादिति भावः । गुणादीनां परस्परं भेदोपपादनं **नापीति** । अन्यथा येषामित्ययुक्तं स्यादिति भावः । गुणाश्रयस्य क्रियाश्रयेणाभेदोपपादनम् । **न चाश्रयभेदेऽपीति** । ननु गुणविशिष्ट-क्रियाविशिष्टयोर्भेदात्कथमाश्रयभेदाभाव इत्यत आह **विशिष्टयोरिति** । **गुणाद्याश्रयाश्रितं** गुणाद्याश्रयं आश्रितम् । तथाच विशेष्याश्रितं विशिष्टं भिन्नमेवेत्यर्थः । फलितमाह **एवं चेति** ।

**कं०रा०**— गुणादीनामाश्रयेण भेदः स्फुट इत्येतदुपपादयति **न हि स्वयमिति** । गुणादीनां परस्परं भेदः स्फुट इत्यंशमुपपादयति **नापीति** । आश्रयाणां चाभेदः स्फुट इत्यस्योपपादनं **न चेति** ।

**श्रीनिधि०**— अर्शाद्यकारप्रत्ययान्तत्वादेव गुणाश्रयस्य क्रियाद्याश्रयेणाभेदः गुणादीनां भेदः गुणादीनां गुण्यादिनाऽभेदोऽपि सामानाधिकरण्यशब्दपर्यालोचनयैवेत्याह **समानाधिकरणास्तेषामित्यादिना** । गुणादीना-





माश्रयेण भेदे उपपत्तिमाह **न हि स्वयमेवेति** । तथा चाधिकरणपदान्यथानुपपत्त्यैवाश्रयिणा भेद इति भावः । **नापि समानमिति** । तथा च येषामिति बहुवचनान्यथानुपत्त्या परस्परभेद इति भावः । **न चाश्रयाभेद इति** । तथा च समानपदान्यथानुपपत्त्याश्रयभेद इति भावः । ननु समानाधिकरणमित्यस्य सदृशाधिकरणमित्यत आह **न चेति** । प्रमितान्यथानुपपत्त्या खलु मुख्यार्थत्याग इति भावः । ननु भवद्भिर्गुणक्रियादिविशिष्टस्य भेदाङ्गीकारात् कथं गुणाद्याश्रयत्वस्याभेद उच्यत आह **विशिष्टयोरिति** । गुणविशिष्टक्रियाविशिष्टयोरित्यर्थः । **वस्त्वन्तरमिति** । किन्तु तद्विशिष्टं वस्त्वन्तरमिति योजना । यत्राभेद इति गुणादीनां परस्परं अधिकरणेन च भेदः तत्र नाभेदप्रतीतिः यत्राभेदः गुणाश्रयस्य क्रियाश्रयस्य च तत्र भेदो नेत्यर्थः ।

**वा०चं०**— स्यादेवेत्येवशब्देन आश्रयाभेदभानस्य अनुभवसिद्धतां दर्शयति । ननु गुणादीनामाश्रयेण परस्परं भेद आश्रयाणां चाभेद इति कुतोऽर्धजरतीयमित्यतोऽनुभववशादिति समाधाने उक्तरीत्या सिद्धेऽपि सामानाधिकरण्यशब्दार्थविचारे क्रियमाणे प्रतीतेः सामानाधिकरण्यविषयकत्वं वदतोक्तप्रकारेण भेदादिविषयत्व-स्यावश्यं स्वीकर्तव्यतया तदनङ्गीकारे तादृशप्रत्ययानुपपत्तिरिति बाधकमभिप्रेत्य सामानाधिकरण्यशब्दार्थमाह **समानमिति** । नन्वेवं शब्दार्थेऽपि कथमुक्तार्थस्य स्फुटतेत्यतो बाधकोक्तिमुखेन तेन तेनांशेन तत्तदर्थसिद्धिं दर्शयति **न हीत्यादिना** । नन्वेवमाश्रयतादात्म्यभानाङ्गीकारे तत्तादात्म्यस्यासत्त्वात्सामानाधिकरण्यप्रत्ययस्य भ्रमत्वं स्यादेवेत्यतस्तद्भेदग्राहकप्रमाणस्य बाधकस्याभावान्न तादात्म्यप्रतीतेर्भ्रमत्वमित्याशयेनाह **न च गुणाद्याश्रयस्येति** । ननु गुणक्रियाविशिष्टयोर्भेदप्रतीतिरिव बाधिकेत्यत आह **विशिष्टयोरिति** । सिद्धान्तेऽपि यत्राभेदप्रतीतिस्तत्रैव विशिष्टयोरभेदोऽन्यत्र तु भेद एवेति भावः । यदर्थमयं यत्नस्तदाह **एवं चेति** ।

**वा०र०**— **उक्तरीत्येति** । पक्षद्वयदूषणे प्रतिपन्नानुभवोक्तेरिति भावः ।

**स०व्र०**— ननु गुणादेर्द्रव्येणाभेदेऽपि तदधिकरणत्वसंभवेन कथमधिकरणत्वोक्त्या भेदसिद्धिस्तत्राह **न हि स्वयमेवेति** । गुणादीनां परस्परभेदमुपपादयति **नापीति** । अन्यथा येषामित्यनुपपन्नमिति भावः । गुणाश्रयस्य क्रियाश्रयेणाभेदः आश्रयस्य समानत्वोक्त्या कथं लभ्यत इति तत्राह **न चाश्रयभेद इति** ।

**विठ्ठ०**— **तृतीयस्त्विति** । शुक्लः पटश्चलति पट इत्यत्र विशेष्यस्यैकत्वादेकविशेष्यसामानाधिकरण्येन प्रवृत्तस्य शुक्लः पटः चलति पटः इति प्रत्ययस्य गुणाश्रयक्रियाश्रययोः तादात्म्यावलम्बितत्वमिति तृतीयः पक्षोऽङ्गीक्रियत एव तत्र सामानाधिकरण्यपदार्थपर्यालोचने प्रकृतातिव्याप्तिपरिहारोपयोगिनो गुणादीनां परस्परमाश्रयेण च भेदस्य आश्रयाणां च अभेदस्य च लाभादित्याह **तृतीयस्त्विति** । आश्रयिणामाश्रयेण भेदः परस्परं च भेदः आश्रयाणां च अभेद इत्येतत् क्रमेणोपपादयति **न हि स्वयमेवेत्यादिना** । नन्वाश्रयतादात्म्यभावानङ्गीकारे तादात्म्यस्यासत्त्वात् सामानाधिकरण्यप्रत्ययस्य भ्रमत्वं स्यात् इत्यतो भेदग्राहकस्य बाधकप्रमाणस्यात्राभावान्न तादात्म्यप्रतीतेर्भ्रमत्वमित्याशयेनाह **न च गुणाद्याश्रयस्येति** । गुणक्रियाविशिष्टयोर्भेदप्रतीतिरिव बाधकेत्यत आह **विशिष्टयोरिति** । गुणादिविशिष्टे गुणादिकमाश्रितमित्युक्तेंऽशे आत्माश्रयप्रसङ्गादिति भावः । यदि गुणाद्याश्रयं





न विशिष्टं किं तर्हि विशिष्टं नामेति पृच्छति **किन्त्विति** । गुणाद्याश्रयं यद्विशेष्यं तदाश्रितं विशिष्टं नाम वस्त्वन्तरमेवेत्युत्तरमाह **गुणादीति** । वक्तव्यमुक्त्वातिव्याप्तिपरिहारप्रकारमाह **एवं चेति** ।

**गूढ०**— तृतीयपक्षसंभवमुपपादयति **समानमिति** । तत्र समानमधिकरणं येषामित्यनेन गुणादीनामाश्रयेण गुणादीनां परस्परं भेदः । गुणाश्रयस्य कर्माश्रयभेदश्चोक्तः । तत्र न हि स्वयमेवेत्यनेन गुणादीनामाश्रयेण भेदोपपादनम् । अन्यथा आत्माश्रयः स्यादिति भावः । गुणादीनां परस्परं भेदोपपादनं **नापीति** । अन्यथा येषामित्ययुक्तं स्यादिति भावः । गुणाश्रयस्य क्रियाश्रयेणाभेदोपपादनम् । **न चाश्रयभेदेऽपीति** । ननु विशिष्टक्रियाविशिष्टयोर्भेदात् कथमाश्रयभेदाभाव इत्यत आह **विशिष्टयोरिति** । **गुणाद्याश्रयाश्रितं** गुणाद्याश्रयं आश्रितम् । तथाच विशेष्याश्रितं विशिष्टं भिन्नमेवेत्यर्थः । फलितमाह **एवं चेति** ।

**प्रदीपः**— **तृतीयस्त्विति** । एवं चाश्रयमात्रस्यैकत्वं स्यान्नाश्रयाश्रयिणां नापि धर्माणां मिथ इति तादात्म्यालम्बनत्वं सामानाधिकरण्यस्यायुक्तमित्यर्थः । तदेव स्पष्टयति **न हीति** । ननु गुणाश्रयस्य क्रियाश्रयत्वं क्रियाश्रयस्य गुणाश्रयत्वमित्याश्रयभेदोऽनुभूयत इति नेत्याह **विशिष्टयोरिति** । विशिष्टाकारेण भेदेऽपि विशेषणविशेष्ययोर्भेदेऽपि वा तद्विशेषणीभूतं गुणादिक्रियादीनां नाश्रयो गुणक्रियाद्याश्रये आश्रयं वस्त्वन्तरमवर्जनीयसन्निधीत्यर्थः । नैतावताश्रयभेद इति भावः । सामानाधिकरण्यस्य भेदालम्बनत्वे शुक्लः पट इत्यादिषु धर्मधर्मिणोः भेदाभावात्सामानाधिकरण्यप्रतिभासो भ्रमः स्यादित्यर्थः ।

**३५५ सु०— ननु गुणादीनामाश्रयेण परस्परं चाभेदो भगवतो मुनेः सिद्धान्तः । क्वचिद्भेदाभेदौ च । सामानाधिकरण्यप्रतीतिस्तु भेदनिष्ठैव व्याख्याता । तथा च पुनः 'शुक्लः पट' इत्यादिप्रत्यया विभ्रमाः प्रसक्ताः । मैवम् । सविशेषत्वाङ्गीकारात् । विशदं चैतद्विशेषनिरूपणे व्युत्पादयिष्यामः ।**

**बिन्दुः**— **भगवतो मुनेः सिद्धान्त इति** । तथा चोक्तं तत्त्वविवेके— 'गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः । रूपमेतद्द्विधं तच्च यावद्वस्तु च खण्डितम् । खण्डिते भेद ऐक्यं च यावद्वस्तु न भेदवत् । खण्डितं रूपमेवात्र विकारोऽपि विकारिणः । कार्यकारणयोश्चैव तथैव गुणतद्वतोः । क्रियाक्रियावतोस्तद्वत्तथा जातिविशेषयोः । विशिष्टशुद्धयोश्चैव तथैवांशांशिनोरपी'ति । अत्रायं विषयविवेकः । यावद्वस्तु भावि गुणादयो गुण्यादिभिः । सविशेषात्यन्ताभेदवन्तः । तथैव परस्परमपि सविशेषात्यन्ताभेदशालिन एव । यथा जलनिष्ठरूपरसजलत्वादयो जलेन परस्परं च शुक्लं जलं मधुरं जलमिति सामानाधिकरण्यावगाह्यबाधिताभेदप्रतीतेः । परस्परं धर्माणां तु तदत्यन्ताभिन्नधर्मिस्वरूपा-





त्यन्ताभिन्नत्वात् । यो यदभिन्नाभिन्नः स तदभिन्नः यथा घटो घटाभिन्न इति व्याप्तेरभेदसिद्धिः । भिन्नेन्द्रियग्राह्यत्वं तु रूपरसादीनां विशेषबलादुपपन्नं सन्न भेदमापादयति । अन्यथा धर्मधर्मिणोरपि रसजलयोः रासनचाक्षुषप्रत्यक्षविषयत्वेन भेदः स्यात् । जलस्य रूपं जलस्य रस इत्यादिसंबन्धप्रतीतिस्तु घटो भिन्नो घटस्य स्वरूपं आनन्दं ब्रह्मणः अभिन्नं ब्रह्मसमवायसंबद्धः अहेः कुण्डलं राहोः शिर इत्यादिवद्विशेषबलादुपपद्यते । तदभिप्रायेणैव शुक्लो गुणोऽस्यास्तीत्यत्रार्थे अर्श आदिभ्योऽजित्यकार-प्रत्ययविधानादित्यादेः पूर्वोक्तग्रन्थस्य प्रवृत्तत्वात् न विरोधः । गुणे शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वतीत्याद्यभिधानाच्छुक्लादिशब्दानां गुणगुणिरूपोभयवाचकत्वात् लक्षणया धर्मिपरत्वाभावाद्युक्त-मेवानुशासनम् । अनयैव युक्त्या ईश्वरगुणानां जीवगुणानां च परस्परमभेदसिद्धिः । तथाचेश्वरगुण-विषयकभेदज्ञानिनो निन्दार्थवादश्च युज्यते । 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति । एवं धर्मान्पृथक् पश्यंस्तानेवानुविधावती'ति । तदेतदाह गुणादीनामाश्रयेण परस्परं चाभेद इति सिद्धान्त इति । न चैतदीश्वरमात्रविषयम् । क्वचिद्भेदाभेदावित्युत्तरग्रन्थे क्वचिदित्यस्यात्राप्यनुषङ्गेण तथाविधार्थोपपत्तेरिति वाच्यम् । सर्वत्रापि तदभिन्नाभिन्नत्वरूपन्यायस्य साम्येन सङ्कोचे प्रमाणाभावात् । उदाहृतार्थवादस्य ईश्वरगुणानां परस्पराभेदबोधकत्वेन जलादिगुणानां परस्परं न भेद इत्यस्मिन्नर्थे उदासीनत्वात् । विशिष्योक्तिस्तु तज्ज्ञानस्यात्यन्तानर्थहेतुताबोधनार्थम् । अन्यथा 'आनन्दो ब्रह्मेति व्यजानादि'ति श्रुतावीश्वरगुणानामाश्रयेणाभेदस्य विशिष्योक्त्याऽन्यत्राश्रयाभेदोऽपि न स्यादिति तार्किकप्रक्रिया-पर्यवसानापातेन भगवतो मुनेः सिद्धान्त्युक्तिविरोधात् । ईश्वरगुणानामाश्रयेण परस्परं चाभेदस्वीकारेण तार्किकसिद्धान्ताद्वैषम्याभिप्रायात्तथाविधोक्तिरिति चेत् । ननु शुक्लः पट इत्याद्युपक्रम्य मध्ये ननु गुणादीनामाश्रयेण परस्परं चाभेद इत्याद्याशङ्कायाः मैवं सविशेषत्वाङ्गीकारादित्यादिसिद्धान्ताभिधान-त्वासङ्गतत्वापत्तेः । नन्वेतादृशी कल्पना किं बलादाश्रीयते यद्धर्माणां परस्पराभेद इति । न तावदत्र प्रत्यक्षं प्रमाणम् । रूपं रस इत्यनुभवाभावात् । नाप्यागमः । तदनुपलम्भात् । यथोदकमिति श्रुतार्थापत्ते-रीश्वरमात्रविषयत्वोपपत्तेः । यत्तु तस्यास्तात्पर्यवर्णनं तस्य सर्वत्र गुणानां परस्पराभेदसिध्युत्तर-कालीनत्वात् । नाप्यनुमानम् । तत्प्रतिबद्धलिङ्गाभावात् । न च जलरूपं तद्रसादत्यन्ताभिन्नं रसात्यन्ताभिन्नेन जलेन सहात्यन्ताभिन्नत्वात्तद्रसवदित्यनुमानात्तत्सिद्धिरिति वाच्यम् । अप्रयोजकत्वात् तन्निरूपिताधाराधेयभावस्योपाधित्वाच्च । न च यद्रसात्यन्ताभिन्नं तद्रसनिरूपिताधाराधेयभाववदिति व्याप्तेः रसे एव व्यभिचारेण साध्याव्यापकत्वान्नायमुपाधिरिति वाच्यम् । सविशेषत्वरूपपक्षधर्माव-च्छिन्नसाध्यव्यापकत्वात् । यत्र रसेन सह सविशेषात्यन्ताभेदः तत्र तन्निरूपिताधारत्वं यथा जल इति

दृष्टान्तसंभवात्। व्यभिचाराभावाच्च रसस्य रस इत्यादिप्रतीत्यभावेन तत्र निर्विशेषात्यन्ताभेदस्वीकारात्। न हि घटस्य घटेनापि सह सविशेषाभेद इति सिद्धान्तः। घटस्य स्वरूपमिति प्रतीतौ भासमानस्वरूपस्य घटसंस्थानविशेषरूपाकृतिविशेषस्यैव सविशेषात्यन्ताभेदस्वीकारात् । अन्यथा घटस्य घट इति प्रतीत्यापत्तेः। अस्तु वा शुद्धसाध्यव्यापकत्वं तथापि न क्षतिः। ननूक्तं खलु रसे व्यभिचार इति। तन्निरूपिताधाराधेयभावस्य तत्रापि सत्त्वात्। तथा रूपरसौ द्वौ आधाराधेयभावसंबन्धौ स्वाश्रयरूप-जलनिरूपितः। स्वाधेयरूपरसत्वनिरूपितः उभयथापि निरूपकतासंबन्धेन रसत्वरसजलेषु विद्यमानत्वेन त्रयाणामपि दृष्टान्तत्वसंभवात्। पक्षीभूते रूपे रसनिरूपिताधाराधेयभावाभावेन साधनाव्यापकत्वाच्च। किञ्च विमतं रूपं रसाद्भिन्नं तत्समानाधिकरणत्वात् धूमसमानाधिकरणाग्निवत्। तद्ग्राहकेन्द्रियाग्राह्यत्वात् घटग्राहकेन्द्रियाग्राह्यवायुवदिति सामान्यव्याप्तेः सत्प्रतिपक्षता च। किञ्च तदभिन्नाभित्वादित्यत्र हेतौ तदभिन्नत्वादिति विशेष्यमात्रस्यैव व्यभिचाराभावेन व्यर्थविशेषणत्वम्। न च तावन्मात्रस्य साध्या-वैशिष्ट्यापत्त्या परस्यासिद्धत्वेनासिद्धिवारकत्वात्सार्थकत्वमिति वाच्यम्। असिद्धिवारकत्वेनैव तस्य व्यर्थताया उक्तत्वात् । हेतौ तदेव विशेषणं सार्थकं यद्व्यभिचारवारकं अप्रसिद्धिवारकं नेति नियमात्। किञ्चैवं सति सर्वसाङ्कर्यप्रसङ्गः। तन्तुपटादौ सिद्धान्ते भेदाभेदयोरङ्गीकृतत्वेन तन्तूनामपि तदभिन्नाभिन्नत्वेन परस्परं भेदाभेदापातात्। अपि च दण्डी देवदत्त इति विशिष्टस्थले भेदाभेदयोः स्वीकारेण देवदत्तो दण्डाभिन्नः । तदभिन्नविशिष्टाभिन्नत्वाद्दण्डवदित्यनुमानेन दण्डदेवदत्तयोरप्य-भेदापत्तिः। किं बहुना सिद्धान्ते समुदायस्य सेनावनादेः समुदायिप्रतियोगिकभेदाभेदस्वीकारेण विश्वं त्रैलोक्यमित्येकबुध्युपारूढस्य स्थावरजङ्गमचेतनाचेतनसमुदायस्य समुदायिभ्यो भेदाभेदसद्भावेन जलमनलाभिन्नं जीवः ईश्वराभिन्नः तदभिन्नसमुदायाभिन्नत्वादिति साधयितुं शक्यत्वेन सर्वाद्वैत-वादापत्तिरिति महत्पाण्डित्यमद्वैतोन्मूलनप्रवृत्तन्यायसुधाया एतादृशतात्पर्यं वर्णयतां उक्तविधाभास-साम्यादेर्वज्रलेपत्वादिति। अत्रोच्यते। यत्तावदुक्तं रूपं रस इत्यनुभवाभावेन न प्रत्यक्षं प्रमाणमिति तन्न। तथात्वे रूपं जलं रसो जलमित्यनुभवाभावेन धर्मधर्मिणोरप्यभेदो न सिध्येत् । यदि च तादृश-प्रतीत्यभावेऽपि यच्छुक्लं तज्जलं यन्मधुरं तज्जलमिति प्रतीतिबलादाश्रीयत इति तर्हि योऽयं शुक्लः पदार्थः स मधुर इति प्रतीतेरत्राप्यक्षतत्वेन तथैवास्थीयताम् । न च तत्र शुक्लगुणाश्रयस्यैव मधुरगुणाश्रयेण जलादिनाऽभेदो बोध्यत इति वाच्यम्। यच्छुक्लं तज्जलमित्यत्रापि गुणाश्रयस्यैव जलाभेदः प्रतीयत इति सुवचत्वात्। यत्तु तथाविधागमानुपलम्भेन तदभाव इत्युक्तं तदितरत्रापि तुल्यम्। न हि जलस्य रूपं रसो वा धर्मिणा सहात्यन्ताभिन्न इति त्वदीयशाखायां पठितमस्ति। एतेन श्रुतार्थापत्तेः सङ्कोचवर्णनमप्यपास्तम्।

विशिष्योक्तिस्त्वनर्थाधिक्यकथनार्थेत्युक्तत्वाच्च । एतेनैव शुक्लं जलमिति पदार्थतावच्छेदकसामानाधिकरण्यबोधकसर्वजनसिद्धव्यवहारान्यथानुपपत्त्या शुक्लत्वजलत्वरूपपदार्थतावच्छेदकयोरधिकरणीभूतशुक्लगुणजलयोरभेदोऽभ्युपेयत इति निरस्तम् । यच्छुक्लं तन्मधुरमित्यत्रापि तथात्वात् । यदप्यनुमानेऽप्रयोजकत्वमुक्तम् । तदप्यसत् । निरुपाधिकसहचारभङ्गस्य विपक्षबाधकस्य सत्त्वात् । न हि सर्वत्र कार्यकारणभावभङ्ग एव धूमादाविव विपक्षबाधकः । मा हि भूत्क्रतुबाह्यहिंसाऽधर्मसाधनं निषिद्धत्वात् पलाण्डुभक्षणवत् । जलं रूपवद्रसवत्वात्पृथिवीवदित्यत्राप्यप्रयोजकताया वक्तुं शक्यत्वेन भङ्गः कार्यकारणरूपानुमानमुद्रायाः । रसस्यापि स्वप्रतियोगिकभेदापातेनात्यन्ताभेदाभावापत्तेश्च । अत एव उक्तोपाधिरपि निरस्तः । उक्तं च— 'अनुकूलेन तर्केण सनाथे सति साधने । साध्यव्यापकताभङ्गात् पक्षे नोपाधिसंभव' इति । अन्यथा उदाहृतरूपसाध्यकरसानुमानादावपि निःस्नेहत्वादिरूपोपाधीनां सुवचत्वादनुमानमात्रोच्छेदः स्यात् । तदुक्तम् । उपाधिप्रतिरोधौ हि क्व नामातीव दुर्वचाविति । एतेन प्रतिपक्षानुमानद्वयमपि निरस्तम् । आद्यस्य रस एव व्यभिचारात् । तद्भिन्नत्वे सतीति विशेषणे व्यर्थविशेष्यत्वात् । तत्परित्यागे साध्यावैशिष्ट्याच्च । द्वितीये त्वसिद्धिः । रूपस्य रसग्राहकमनोग्राह्यत्वात् । बाह्यत्वेन विशेषणस्यासिद्धिवारकत्वेन त्वदुक्तरीत्यैव वैयर्थ्यात् । फलग्राहकबाह्येन्द्रियरूपत्वच्चक्षुरग्राह्ये तद्रसे धर्म्यभिन्ने व्यभिचाराच्च । यदप्युक्तं अभिन्नत्वविशेषणस्यासिद्धिवारकत्वेन वैयर्थ्यमिति । तत्तुच्छम् । तथाहि । प्रधानानुरोधेन हि अङ्गमुपादेयमिति सर्वतान्त्रिकसिद्धम् । प्रकृते च फलरूपत्वादनुमितिः प्रधानम् । तच्च यावता विंना न निर्वहति तदवश्यमभ्युपेयम् । तदङ्गं च यथा व्याप्तिरेवं पक्षधर्मतापि । एवं च यथा व्यभिचारवारकविशेषणस्य व्याप्तिरूपाङ्गसंपादकत्वेन साफल्यमेवमसिद्धिवारकस्यापि पक्षधर्मताङ्गरूपसंपादकत्वेन साफल्यस्यौचित्येन केवलं कुलधर्मसंरक्षणार्थमेव शवमुष्टिन्यायेन निर्मूलकल्पनया पदार्थव्यवस्थामातिष्ठमानानां दुस्तर्कवादिनां मतमालम्ब्य सिद्धान्तविप्लवसमानौचित्यादसंभवाच्च । यदपि चाभाससाम्यादिना साङ्कर्याद्यापादनं तदपि स्वसिद्धान्तव्युत्पादपरिपाकाभावनिबन्धनमकाण्डताण्डवितम् । तथाहि । तन्तुपटादिस्थले किं प्रत्येकतन्तुं पक्षीकृत्य अयं तन्तुः तत् तन्त्वभिन्नः तदभिन्नपटेनाभिन्नत्वात्तत्तन्तुवदिति साध्यते आहोस्वित्तत्समुदायं वा । आद्येऽपि किं हेतौ उभयत्र अभेदशब्देनात्यन्ताभेद एवोच्यते उताभेदमात्रम् । नाद्यः । असिद्धेः । एकैकतन्तुना सह पटस्यात्यन्ताभिन्नत्वाभावेन विशेषणविशेष्योभयाभावप्रयुक्तविशिष्टाभावस्य पक्षे सत्त्वात् । खण्डिते भेद ऐक्यं चेति तत्त्वविवेके एकैकतन्तुना पटस्य भेदाभेदयोरभ्युपगतत्वात् । न द्वितीयः । अप्रयोजकत्वात् । अस्मदुक्तहेतौ दोषानुपन्यासाच्च । आभाससाम्यभीरुणा च रूपरसादेः सामानाधिकरण्यमपि त्याज्यं स्यात् । शक्यते तत्राप्येवं वक्तुं रूपं रससमवायवत् । रससमानाधिकरणत्वात् रसवत् । संबन्धस्य द्विष्ठत्वेन रसेऽपि

सत्त्वात्। किञ्चानेनाभाससाम्येन विशिष्टहेतावत्यन्तपदं परित्यज्य लाघवेन तदभिन्नत्वमात्रं हेतुरस्तु तथाच मया सर्वसाङ्कर्यरूपातिप्रसङ्ग आपादनीय इति चोद्यते उत तावन्मात्रस्य हेतोर्व्यभिचार इत्युच्यते। आद्ये विशिष्टमात्रोच्छेदः। तत्रापि सामान्यवत्त्वे सतीति विशेषणं मास्तु लाघवाद्बाह्येन्द्रियग्राह्यत्वादिति विशेष्यमात्रमेव स्वीकार्यम्। तथाच सामान्यादौ व्यभिचार इति सुवचत्वात्। द्वितीये तु त्वदुक्त-दोषापातादेव अत्यन्तपदद्वयोपादानमित्युत्तरम्। तस्मात्प्रत्येकतन्तुना भेदाभेदौ संस्थानविशेषापन्नै सर्वैरत्यन्ताभेद इति। ननु तर्हि समुदाय एव पट इत्यागतम्। सत्यम्। अत एव तस्य पटाभेदमाचक्ष्महे। अन्यथा तदुक्तिरेव बाधिता स्यात्। कथं तर्हि परमाणुपुञ्जमतादुन्मज्जनं, तन्तुसमुदायस्य पटत्ववादिनामिति चेत्। श्रुणु। अस्त्यत्र महान् दर्शनभेदः। बाह्यैर्हि समुदायसमुदायिनोरत्यन्ताभेदमङ्गीकृत्य समुदायिरूप-प्रत्येकपरमाण्वात्मक एव समुदायो घट इत्यङ्गीकारात्। सिद्धान्ते तु प्रत्येकसमुदायातिरिक्तस्य समुदायस्य पटत्वेनाङ्गीकारात्। तत्र न तन्तुसमूहः पट इत्यपर्यायशब्दान्तरनियामकस्य विशेष्यस्याप्यङ्गीकाराच्च। वक्ष्यति चैतद्भगवान्मूलकार एव उभयव्यपदेशादहिकुण्डलवदिति सूत्रानुव्याख्यानावसरे। अन्यत्रापि 'भेदहीने त्वपर्यायशब्दान्तरनियामकः। विशेषो नाम कथितः सोऽस्ति वस्तुष्वशेषत' इति, प्रपञ्चयिष्यते चैतत्तत्रैव टीकाकारैरिति सपल्लवं तत्रैवोपपादयिष्यामः। आरम्भकत्वं तु यद्यपि प्रत्येकं तन्तूनामेव तुरीवेमादिवत्। समुदायस्य पटानतिरेकेण पौर्वापर्याभावेनारम्भकत्वासंभवात्। तथापि तावत्तन्तु-समुदायस्यैव। आतानविशेषात्मकसंस्थानरूपावस्थानापन्नस्य अवस्थाविशेषवतः पूर्वभावित्वसंभवेन प्रत्येकतन्तुषु तावत्कारणताकल्पने गौरवात्। अवस्थाविशेषस्य पटत्वेन सविशेषाभेदसंभवात्। उपादा-नोपादेययोर्युक्तौ भेदाभेदाविति। न चैवं तुरीवेमादावपि प्रत्येककारणता न स्यात्। उक्तविधगौरवस्य तत्रापि सुवचत्वादिति वाच्यम्। अतिरिक्तसमुदायवादे इष्टापत्तेः। अन्यथा गौरवस्याभावेन शङ्काया एवानुत्थानात्। समुदायत्वस्य दण्डत्वतुल्ययोगक्षेमत्वेन कारणतावच्छेदकत्वात्। अन्यथा दण्डा-वयवानामेव तत्तदवयवत्वावच्छेदेन कारणत्वोपपत्तौ दण्डत्वावच्छिन्ना कारणतापि दत्तजलाञ्जलिः स्यात्। अस्तु वा तत्र दण्डत्वतुरीत्वादिनैव कारणता। तथापि तन्त्वादिस्थले तन्तुत्वं न कारणताव-च्छेदकं कारणतावच्छेदकावच्छिन्नयत्किञ्चित्कारणसत्त्वे कार्योत्पत्तेरावश्यकत्वादेकमात्रतन्तुकपालादि-सद्भावेऽपि पटघटाद्युत्पत्त्यापत्तेः। न च तत्र तन्तुसंयोगरूपासमवायिकारणविलम्बात्कार्यविलम्ब इति वाच्यम्। तन्तुसंयोगं प्रत्यपि तन्तुत्वेनैतन्मते कार्यकारणत्वात् तद्विलम्बो न स्यात्। संयोगविशेषत्वापन्न-तन्त्वतिरिक्तपटाभावेनासमवायिकारणस्यैवाप्रामाणिकत्वाच्च। दण्डत्वावच्छिन्नयत्किञ्चित्संभवेन दण्डा-न्तरविलम्बेन कार्यविलम्बादृष्टेरिति वैषम्यादगत्या तन्तुसमूहत्वेनैव कारणतायाः सर्वैरभ्युपगमादिति दिक्।





एतेन नैयायिकमतसङ्करोऽप्यपास्त इति । नापि समुदायं पक्षीकृत्य तदभेदसाधनेन साङ्कर्यापादनमिति द्वितीयः पक्षः । सिद्धसाधनात् । तथाहि अयं तन्तुसमुदायः इति तं पक्षत्वेन निर्दिश्य तत्र तत्समुदाय-प्रविष्टतन्त्वभेदः साध्यते । आहोस्वित्तद्बहिर्गततत्स्थतन्त्वभेदः अथवा तन्तुसमुदायाभेद इति । आद्ये पटस्य प्रत्येकतन्त्वत्यन्ताभिन्नत्वाभावेन विशेषणासिद्धिः । अत एव न द्वितीयोऽपि । तृतीये सिद्ध-साधनात् । दृष्टान्तस्य साध्यवैकल्यं चेति । तन्तुसमुदायात्पटस्याभेदेऽपि सर्वसाङ्कर्यासंभवात् । अत एव सर्वाद्वैतापादानमप्यपहस्तितं बोध्यम् । उक्तविकल्पानां दूषणानां तत्रापि समत्वादिति यत्किञ्चिदेतत् । अत एव सर्वाद्वैतापादनमप्यपहस्तितं बोध्यम् । उक्तविकल्पानां दूषणानां च तत्रापि समत्वादिति यत्किञ्चिदेतत् । तस्मात्सुष्ठूक्तं धर्माणां च परस्पराभेदः । विशेषबलेन च धर्मधर्मिवत्सर्वविरोधपरिहार इति । तदत्यन्ताभिन्नात्यन्ताभिन्नत्वस्यैवाभेदसाधकानुमानस्य निष्कलङ्कत्वात् । सम्मतं चैतट्टीका-काराणामपि । अन्यथा तत्त्वविवेकटीकायां संयोगस्य द्विष्ठत्वं घटत्वादिजातेश्चानुगतत्वं नैयायिकाभिमतं कथं प्रत्यक्षेऽपि । तत्र हि गुणगुणिनोः जातिव्यक्त्योश्चाभेदे क्वचिद्भेदाभेदे च स्थिते टीकाकारैरवादि अनेन कार्यकारणानां समवायो नास्ति इत्युक्तं भवति । तथा गुणादीनामनेकाश्रितत्वं जातेर्नित्यत्वं च निरस्तं भवति । अन्यथा सर्वाभेदप्रसञ्जनं व्युत्पादयिष्यत यदि नाम तदत्यन्ताभिन्नात्यन्ताभिन्नत्वहेतो-र्निष्फलत्वादयो हि संयोगो द्विष्ठः जातिरनुगता एकैका एव पिण्डपीतादिरूपगुणव्यक्तयः । ............ तास्तार्किकप्राभाकरादयः । तान्प्रति यदि द्रव्यत्वं संयोगो रूपं वा घटाश्रितत्वादौ च स्यात् तर्हि घटान्तरस्या............दिरपि तद्घटाभिन्नजात्याद्यभिन्नत्वेन तद्घ.................. दतितर्कबलेन तथाहि .......चापादनम् । प्राभाकरमते भाट्टमते च जातिव्यक्त्या .................. तार्किकं ................नुपदमेव साधितत्वादिति अस्मिन्नापादने च संयोग .............. भाव्ये वे ........... द्रष्टव्यम् । तत्रैवोक्तबाधकस्य संभवात् अनित्यसंयोगादेस्तु द्वि .................. तथाप्येकत्रसिद्धः शास्त्रार्थः सर्वत्राप्यतिदिश्यत इति न्यायादग .................. त्वेन परस्परप्रतियोगसंयोगद्वय-सिद्धावन्यत्रापि तदैक्ये प्रमाणा............... तत्सर्वं तत्रत्यटीकाया धर्माणां च परस्परमभेद इति अत्रत्यसुधायाः अस्मत्कृतव्याख्यान एव सुघटमिति सहृदयैराकलनीयम् । अत एवोपाधि ......... वं सिद्ध इति मूलव्याख्यानावसरे टीकाकारैराकाशांशानां यावद्व ........... वे प्रतिपद्याभिप्रेत्यांतर-विशेषपरतया व्याख्यातम् । औपाधिक ............ तमित्यभिप्रेतं प्रति परीत्या भेदमभ्युपगम्य तस्यौपाधिकत्वमात्रखण्डनं ...........सिद्धान्त इत्युक्त्वा द्वितीयव्याख्यानेऽन्तरशब्दो भेदपरतया व्याख्यातः । अत एव आंकाशादीनामभेदादन्तरपदं विशेषपरतया व्याख्यातं





घटाकाशमठाकाशभेदाद्वितीयव्याख्यानेऽन्तरपदभेदपरतया व्याख्यातमिति टीकार्थे मन्दारमञ्जर्यां यथाश्रुताक्षराणि दृष्ट्वाऽयमेव सिद्धान्त इत्यास्थितास्तेषामुपाधिखण्डनटीकायां यत्र यदा त्वित्युक्तिः सिद्धान्तः अभ्युपगमश्चेति पक्षद्वये उक्तिवैषम्यं च किमभिप्रेत्येति पर्यनुयोगे किमुत्तरमिति न विद्मः। मन्दारमञ्जरी तु उभयविधोऽपि सिद्धान्त इत्यस्मिन्नंशे उदासीना, तस्याः पूर्वोक्त एवार्थे तात्पर्यात्। अन्यथाऽनुपदमेवोत्तरत्र मन्दारमञ्जरी विरुध्येत तत्र हि नन्वत्यन्ताभावेऽप्यंशभेदेन विरोधपरिहारोऽस्तु। हस्तपादावच्छेदकभेदेन पुस्तकसंयोगतदत्यन्ताभावयोर्दर्शनादित्याशङ्क्य तत्रांशभेदवत् गगनेंऽशभेदा-भावादिति स्पष्टं समाहितमिति। किञ्चैवं सति तन्तुपटवत् गगनेऽप्यंशांशिनोर्भेदाभेदावेव प्रसज्येयातामिति महत्सङ्कटमापद्येत। ननु तन्तुपटादिस्थले प्रत्येकतन्तोः पटेन भेदाभेदौ गगने तु प्रत्येकांशेनात्यन्ताभेद इति महद्वैषम्यमिति चेत्। तदेतत्सैद्धान्तिकव्युत्पत्त्यभावविजृम्भितम्। उक्तविधवैषम्यमेव न स्यादि-त्यापाद्यमानत्वात्। यदि चांशानां परस्परं भेदस्तर्हि अंशिनात्यन्ताभेदस्यैवासंभवात्। पटाभेदेन प्रतीयमानानां प्रत्येकतन्तूनां परस्परं भेदवत्तया प्रतीयमानत्वात्पटेन सह भेदाभेदाविति सिद्धान्तनिष्कर्षः। तथाच महाकाशाभिन्नानामाकाशांशानां परस्परभेदं वदतां महाकाशेनापि भेदाभेदापातः कथं न स्यात्। यतष्टीकाकारैरेव गीतातात्पर्यटीकायां 'एकत्वेन तु यज्ज्ञानं बहुत्वेनैव तत्पुनः। पटाद्यं ज्ञायते यस्मात् भेदाभेदौ कुतो न तदि'ति मूलं व्याचक्षाणैः स्फुटतरमयमर्थो व्युत्पादितः। तथाच तत्रत्यटीका। तन्तूनां पटस्वरूपेणैकत्वस्य परस्परभेदस्य चानुभवादेकैकतन्तोः पटेन सह भेदाभेदावनुभूयेते। एकैकतन्तोः पटेनात्यन्ताभेदेऽन्योन्यभेदानुभवायोगादिति भाव इति। एतद्ग्रन्थपर्यालोचनयाऽपि तदत्यन्ताभिन्ना-त्यन्ताभिन्नत्वमेव तदभेदे प्रयोजकमित्यवगम्यत इति पूर्वोक्तं सर्वं दृढीकृतं भवतीति ध्येयमित्यास्तां तावत्। विष्णुतत्त्वनिर्णये तृतीयपरिच्छेदे च 'गुणक्रियादयो विष्णोः स्वरूपं नान्यदिष्यते। अतो मिथोऽपि भेदो न तेषां कश्चित् कदाचने'ति मूलं व्याचक्षाणैष्टीकाकारैः अत एकेन परमात्मनात्यन्ताभिन्नत्वादिति व्याख्यातत्वेन तदत्यन्ताभिन्नात्यन्ताभिन्नत्वमेव तदत्यन्ताभेदे प्रयोजकमिति स्पष्टमेव प्रदर्शितम्। प्रकृतमनुसरामः।

**क्वचिद्भेदाभेदाविति**। अयावद्द्रव्यभाविगुणगुण्यादावित्यर्थः। अयमाशयः। तन्तुपटादौ तावत्पूर्वोक्तरीत्या भेदाभेदाविति स्थितं प्रमाणं चात्रानुभवोऽधुनैव व्युदपादि। उपपत्तिश्चात्र सङ्क्षेपतो निरूप्यते। तन्त्वादिः पटाद्भिन्नः तस्मिन्न सत्यपि कदाचित्सत्त्वात्। यदेवं तदेवं यथा घटे सत्यपि कदाचिदसत् पटस्तस्माद्भिन्नः। न चात्र विशेषबलादेव साध्योपपत्तौ भेदाभ्युपगमो व्यर्थ इति वाच्यम्।





घटपटादौ तथाविधत्वं प्रति भेदस्यैव प्रयोजकतया क्लृप्तत्वेन तत्परित्यज्याक्लृप्तकल्पनायामतिप्रसङ्गापत्तेः। ननु घटपटादावपि तत्र विशेष एव प्रयोजकोऽस्तु। तथाच सर्वत्रैकरूप्येणैव सर्वनिर्वाहोपपत्तौ जगतीतले भेदवार्त्तैव मास्त्विति चेत् मैवम्। धर्मिग्राहकमानेन विशेषस्य भेदहीन एव सिद्धतया घटः पटो नेत्यबाधितप्रत्यक्षानुभवेन घटपटादौ भेदस्यैव सिद्धतया तत्र विशेषकल्पनानवसरात्। उक्तं च भगवत्पादैर्गीतातात्पर्ये। 'अभावो यत्र भेदस्य प्रमाणावसितो भवेत्। विशेषनामा तत्रैव विशेषव्यवहारवान्' इति। न हि सोमे सत्यपि तं परित्यज्य पूतीका आद्रियन्ते। तेषां तदभाव एव शिष्टत्वात्। यदि सोमं न विन्देत पूतीकानभिषुणुयादिति श्रुतेः। अन्यथा सिंहो देवदत्त इत्यत्र क्रौर्यादिरूपामुख्यप्रवृत्तिनिमित्तेन शब्दप्रयोगोपपत्तेर्मुख्यसिंहेऽपि तदैकरूप्यसिद्धये तदेव प्रवृत्तिनिमित्तं स्यान्न तु सिंहत्वं वा पुच्छसटादिमत्वं वेत्यप्यापद्येत। तर्हि दण्डी चैत्र इत्यादौ दण्डसंबद्धत्वस्यापि भेदहेतुकत्वदर्शनात्पटस्य शौक्ल्य-मित्यादावपि तद्धेतुकत्वमेव स्यात्तथा चात्यन्ताभेदः क्वापि न स्यादिति चेत् न। आनन्दं ब्रह्मणः समवायः संबन्धः पटो भिन्नः राहोः शिर इत्यादौ संबन्धव्यवहारस्य विनापि भेददर्शनेन। व्यतिरेकव्यभिचारा-दहेतुत्वात्। ननु घटपटादौ तस्मिन् सत्यप्यसत्त्वात्यन्तभेद एव प्रयोजक इति तन्तुपटादावपि स एव स्यादिति चेत् न। अभेदासहिष्णुभेदत्वरूपात्यन्तभेदत्वापेक्षया भेदत्वस्यैव लाघवेन तत्र प्रयोजकत्वात्। आतानवितानात्मकास्तन्तव एव पट इत्यबाधितप्रत्ययादभेदस्यापि सिद्धेर्भेदाभेदयोः सिद्धिः। घटत्वपृथिवीत्वादिवत्प्रमाणबलेन सहोपलम्भाच्च कथमेकत्र विरुद्धद्वयमभ्युपेयमिति शङ्काया एवानु-त्थानाच्च। एवं चूतफलश्यामत्वादेरपि भेदाभेदादिकमुपपादनीयम्। तस्मात् घटपटादौ शुद्धभेदः। अयावद्द्रव्यभाविगुणगुण्यादौ भेदाभेदौ। यावद्द्रव्यभाविगुणगुण्यादौ सविशेषाभेदः। हस्तकरादौ निर्विशेषाभेदः। क्रिया अपि नित्याः नित्यगताः नित्या अनित्याश्च वक्ष्यन्ते। तासामपि यथायथं भेदाभेदादिकमुक्तन्यायेन। मासेन शूद्रो भवति ब्राह्मणः क्षीरविक्रयादित्यादिना जातेरपि खण्डितत्वस्मृतेरयावद्द्रव्यभाविन्यभेदाभेदौ यावद्द्रव्यभाविन्या त्वभेद एव। नन्वेतानि कर्मनिन्दावचनानि वर्णत्रयकर्महानिप्रतिपादनार्थानि वेति भाट्टैरुक्तमिति चेत्। न। शूद्रादिशब्दस्य बाधकं विना जातिरूप-स्वार्थपरित्यागेनान्यपरत्वायोगात्। किञ्च कर्मनिन्दापरत्वे तस्मात् ब्राह्मणाय नावगुरेतेत्यवगोरणादि-निषेधशेषभूतानां योऽवगुरेत्तं शतेन यातयेदिति शतयातनादिवाक्यानामपि कर्मनिन्दापरत्वेन फलपरत्वा-भावप्रसङ्गेनावगोरणन्यायभङ्गप्रसङ्गात्। वर्णत्रयकर्महानिप्रतिपादनार्थत्वे च वसन्ते ब्राह्मणोऽग्नीनादधीते-त्यादावपि ब्राह्मणशब्दस्य क्षत्रियवैश्यकर्मरहितपरत्वस्य वक्तुं शक्यत्वेन शूद्रस्यापि अग्निविद्यासद्भावेन वैदिककर्माधिकारापत्त्याऽपशूद्राधिकरणभङ्गप्रसङ्गाच्च। विश्वामित्रत्रिशंक्वादीनां वरशापादिना क्षत्रियत्वा-





द्यपायेन ब्राह्मणत्वादिप्राप्तिस्मरणाच्च । न च तान्यपि ब्राह्मणकर्मयोग्यत्वप्रतिपादकानीति युक्तं ब्राह्मणत्वजातेरभावे ब्राह्मणोद्देशेन विहितकर्मयोग्यताया एवासंभवादित्यलम् । तस्मादुक्तविधो भगवतो मुनेः सिद्धान्तः सूपपन्न इति स्थितमिति सङ्क्षेपः । भाट्टास्तु यावद्वस्तुनि खण्डिते च सर्वत्र भेदाभेदावेव नत्वत्यन्ताभेदो नाम कश्चित्तन्नास्तीति वदन्ति । तेषां सर्वसाङ्कर्यापत्तिर्दुरुद्धरेति द्रष्टव्यम् । तदुद्धारसामर्थ्याभावादिष्टापत्त्या समादधानेन भट्टकुमारिलेन तर्कचरणे वनवादे जल्पितं 'इहानैकान्तिकं वस्तु सर्वमित्येव निश्चितम् । अत्यन्तभिन्नतास्माभिर्नैव कस्यचिदिष्यत' इति तत्र च जलानलादीना-मत्यन्तभेदं प्रतिपन्ना अर्भका अपि प्रतिविधातारः । तत्प्रतीतेरमरपामरसाधारणत्वात् । किञ्चैवंविध-धर्ममीमांसाव्याख्यानार्थं प्रवृत्तस्य मीमांसकं मन्यस्य भवतः पित्रादेश्चण्डालाद्यभेदः मात्रादेश्च भार्यादिभिरभेदः, तत्कृतयागे सोमादिद्रव्यस्य मदिराद्यभेदः, त्वदीययागस्य च ब्रह्महत्याद्यभेदः, त्वदुक्त-न्यायेनैव सिद्ध इति पित्रादिवन्दनभागेऽपि सोमयागानुष्ठानादिभिरनर्थः स्यात् स्याच्च चण्डालवन्दन-मातृगमनमदिरापानब्रह्महत्यादिभिरभ्युदय इति धर्मविप्लावकत्वमेव स्फुटतरमापन्नम् । न हि मायिमतवत्तस्य पारमार्थिकव्यावहारिकत्वादिनापि व्यवस्थया आपाततः प्रतारणमपि सङ्गच्छते । भेदाभेदयोः सर्वत्र तुल्ययोगक्षेमतया सर्वत्राप्यविशेषापातादित्यलं क्षुद्रबुद्धिभिः कण्ठकोलाहलेनेति । ननु सिद्धान्ते द्वित्वत्रित्वादिसंख्यानामेकमात्रवृत्तित्वाभावेनानुगतत्वस्यावश्यकतया तदादाय पुनः सर्वसाङ्कर्यानिस्तारः। यद्यपि घटपटादावयावद्द्रव्यभाविषु द्वित्वं नात्यन्ताभिन्नं किन्तु भिन्नाभिन्नं घटे सत्यपि घटसत्ताकाले पटस्य नाशेन तन्नाशात् तथात्वे लक्ष्मीनारायणयोर्जीवब्रह्मणोराकाशादिजडेषु जडेश्वरादिषु च वर्तमानानां द्वित्वादिसंख्यानां यावद्द्रव्यभावित्वेनात्यन्ताभिन्नतया सर्वेषामपि तदत्यन्ताभिन्नद्वित्वाद्यभिन्नतया अत्यन्ताभेदापत्तेरन्यथा तत्रैवोक्तहेतोर्व्यभिचारः संख्याभिन्नत्वेन हेतुविशेषणे च जात्यादिभिन्नत्वेनापि विशेष्यतामित्यनुगतजातिसिद्धिः, अविशेषणे तु जितं सर्वसाङ्कर्यवादिना मायिना सङ्करेण । न च सर्वेषां द्वित्वादीनां नैयायिकादिमत इवापेक्षाबुद्धिजन्यत्वेनानित्यत्वादयावद्वस्तुभावित्वमिति वाच्यम् । अपेक्षा-बुद्धिर्हि द्वित्वज्ञप्तौ कारणं न तु तदुत्पत्तौ । मानाभावादिति चेत् । न । द्वित्वादेः सर्वत्र धर्मिणा भेदाभेदयोरेव वक्ष्यमाणत्वात् । समुदायमृते इत्यनुव्याख्यानस्थसमुदायशब्दस्य व्यासज्यवृत्तिधर्मोपलक्षणत्वेन व्याख्यातत्वात् । अस्तु वा त्वदुक्तरीत्यभ्युपगमः तथापि न क्षतिः । ननूक्तं सर्वसाङ्कर्यापत्तिरेव बाधकमस्तीति चेत् । अत्र ब्रूमः । द्वित्वादीनामीश्वरादिपदार्थैः सहाभेदं वदन् प्रष्टव्यः किं तेषा-मनाद्यनन्तत्वाविशेषात् यावद्वस्तुभावितामात्रेणाभेदः आहोस्विदनाद्यनन्तकालमाश्रयाश्रयिभावेन, यद्वा सर्वव्यक्तिसंबद्धत्वरूपानुगतत्वेन । अथवा अभेदे प्रमाणसद्भावेन । आद्ये स्यादेव दूषणं यः कालिकीं





समव्याप्तिमादाय तादृशव्याप्तिमतामभेदं साधयेत्तस्य। को नाम स्वस्थात्मैवमाचक्षीत। अनाद्यनन्तकालं जीवेश्वरभावाविच्छेदवादिभिरस्माभिरत्यन्तभेदस्यैव तत्राभ्युपगतत्वात्। अत एव न द्वितीयोऽपि। ईश्वरस्य सर्वदा सर्वाधारतायाः श्रुतिस्मृतिसिद्धायाः स्वीकृतत्वेऽपि धर्मधर्मिणोरत्यन्तभेदाङ्गीकारात्। नापि तृतीयः। नित्यविभूनामीश्वराकाशादीनां सर्वव्यक्तिसंसृष्टत्वरूपानुगतत्वमभ्युपगच्छद्भिरप्यस्माभिर्यावद्द्रव्यस्त्वनुगतधर्मवतामप्यत्यन्तभेदस्य स्वीकृतत्वादप्रयोजकत्वेन पक्षत्रयमप्यनुपपन्नम्। चतुर्थस्तु स्यादपि कथञ्चित् यदि आनन्दो ब्रह्म शुक्लं जलं आतानवितानात्मकतन्तुसमूहः पट इत्यादिवत्। द्वावीश्वरौ त्रयः शतं सहस्रं वेति सामानाधिकरण्यावगाहिप्रमाणं स्यात्। प्रकृते एकमेवाद्वितीयमित्यादिश्रुतिषु तद्गतद्वित्वादेरेवकारेण व्यवच्छिन्नत्वात्। सजातीयद्वितीयराहित्यस्य त्वद्वितीयमित्यनेनैवोक्तत्वात्। स्वगतभेदशून्यतायाश्च नेह नानेत्यनेन प्रतिपादितत्वात् द्वित्वादिव्यवच्छेद एव तत्तात्पर्यम्। प्रसक्तिस्तु स्वगतभेदादितुल्ययोगक्षेमेति। नन्वीश्वरस्य स्वरूपेणैकत्वेऽपि अन्यसहितस्य द्वित्वमस्त्येव यथा घटस्य पटविशिष्टस्येति चेत्। भ्रान्तोऽसि। सहस्रेणापि साहित्ये एकस्य द्वित्वासंभवात्। न ह्यनन्ततारामण्डलपरीतोऽपि चन्द्रो द्वौ चन्द्राविति व्यपदेशं लभते। अत एव घटदृष्टान्तोऽप्ययुक्तः। नन्वेकस्मिन् द्वित्वस्य वर्तमानत्वेऽपि पर्याप्तत्वं नास्ति द्वित्वस्य व्यासज्यवृत्तित्वात्। उभयोस्तु पर्याप्त्यधिकरणत्वात्प्रतीयते, एकमात्रस्य चातथात्वान्न तत्र द्वाविति धीरिति चेत्। न। प्रतीतिं विना पदार्थसत्तायां मानाभावात्। अन्यथा गजेऽप्यश्वत्वं ह्रदेऽपि वह्निरस्त्येव पर्याप्तत्वाभावान्न प्रतीयत इत्यस्यापि सुवचत्वेनातिप्रसङ्गः स्यात्। एतेनैतदपि निरस्तं यद्वल्गन्ति नवीनतार्किकाः। एकस्मिन् द्वित्वप्रतीतिः किं अयं द्वित्वाश्रय इति वा अयं द्वाविति वा उभयथापीत्युपपत्तिः। तर्हि तथाशब्दोल्लेखोऽपि स्यादिति चेत्। प्रथमकल्पे तु जायत एवेतीष्टापत्तेः। द्वितीये तु तादृशशब्दाभिलापस्य व्याकरणमर्यादयाऽसाधुत्वादव्यवहार इति। तदेतद्बालव्यामोहनमात्रम्। उक्तातिप्रसङ्गानुद्धारात्। अत्रापि हि गजेऽश्वत्वप्रतीतिरप्यस्त्येव गजोऽश्व इति व्यवहारस्त्वयोग्यत्वात्तच्छब्दघटितवाक्यस्य न भवतीत्यपि वक्तुं शक्यत्वात् इदं द्वौ इति व्यवहारस्य व्याकरणदुष्टत्वेऽपि इदं द्वयमिति व्यवहारे बाधकाभावेनैकस्मिंस्तथाविधव्यवहारापाताच्च। किञ्च मात्रतव्यवदादिशब्दाः(?) एकैकस्मिन्ननेकत्वसंख्यायाः संभवे त्वेकब्राह्मणभोजनेनापि सहस्रं भोजयेदिति। ज्योतिष्टोमे वैकमात्रगोप्रदानेनापि तस्य द्वादशशतं दक्षिणेति च शास्त्रार्थोऽनुष्ठितः स्यात्। किञ्च एकैकस्य पर्याप्त्यनधिकरणत्वे कुत्र द्वित्वस्य पर्याप्तिः स्यात्। समुदाये इति चेत्। किं समुदायोऽपि समुदाय्यात्मा अतिरिक्तो वा। नाद्यः। उक्तदोषानिस्तारात्। न द्वितीयः। अपसिद्धान्तात्। तावता व्यतिरिक्तविशिष्टपदार्थवृत्तित्वेनानुगतत्वभङ्गेनास्मदिष्टसिद्धेश्च। तस्मादेकस्मिन् द्वावित्यप्रतीत्या नैकस्य





**परि०— भगवतो मुनेरिति** । सूत्रकर्तुः भाष्यकर्तुराचार्यस्य चेत्यर्थः । तथैव तत्त्वविवेकादावुक्तेः । उभयव्यपदेशादौ वक्ष्यमाणत्वाच्चेति भावः । **व्युत्पादयिष्याम इति** । जन्माधिकरणे 'अभिन्नेऽपि विशेषोऽयं बलादापतति ह्यतः' इत्यादिव्याख्यावसरे कार्यकारणयोश्चैवेत्यादिसमवायनिरासकग्रन्थव्याख्यावसरे चेति भावः ।

**वं०प०— गुणादीनामिति** । यावद्द्रव्यभाविनां धर्माणां ज्ञानानन्दादीनामाश्रयेण जीवचैतन्येनाभेदः परस्परं चाभेदो भगवतो मुनेरानन्दतीर्थस्य सिद्धान्त इत्यर्थः । **क्वचिदिति** । अयावद्द्रव्यभाविनि घटतद्रूपादावित्यर्थः । **व्याख्यातेति** । समानमेकमधिकरणं येषां ते इत्यादिनेत्यर्थः । **तथाच पुनरिति** । सामानाधिकरण्यप्रतीतेरत्यन्तभेदविषयकतयैव व्याख्यातत्वेनात्यन्ताभेदस्थले भेदाभेदस्थले च सर्वत्र सामानाधिकरण्यप्रत्ययस्य भेदावगाहित्वस्यैव प्राप्त्या भगवदुक्ताभेदस्य प्रत्यक्षसिद्धस्यायुक्ततया शुक्लः पट इत्यादिप्रत्ययानामविद्यमानतादात्म्यावगाहित्वप्राप्त्या पुनरतिव्याप्तिः स्यादेवेत्यर्थः । **सविशेषत्वाङ्गीकारादिति** । तथा चात्यन्ताभेदस्थले सामानाधिकरण्यप्रतीतिरभेदनिष्ठैव । भेदनिष्ठतया व्याख्यानं तु सविशेषाभेदाङ्गीकारेणोपपन्नं विशेषस्य भेदकार्यकारित्वाङ्गीकारात् । यत्र तु भेदाभेदौ तत्र तु न कोऽपि दोषः । तथाच सामानाधिकरण्यप्रतीतेस्तादात्म्यस्यावगाहित्वेऽपि तस्य तादात्म्यस्याविद्यमानत्वाभावान्नातिव्याप्तिरिति भावः ।

**आनन्दः— सिद्धान्ते विरोधं शङ्कते ननु चेति** । सामानाधिकरण्यस्य भेदालम्बत्वे शुक्लः पट इत्यादिषु भेदाभावाद्धर्मधर्मिणोः सामानाधिकरण्यस्य प्रतिभासो भ्रमः स्यादित्यर्थः । **सविशेषत्वेति** । तथाच विशेषस्य भेदकार्यकारित्वाद्भेदशब्देन विशेष एव ग्राह्य इति भावः । नन्वन्यकार्यं कथमन्येनेत्यत आह **विशदं चैतदिति** ।

**कं०रा०— सविशेषत्वेति** । तथा चाभेदस्थले प्राग्व्याहृतस्य भेदशब्दस्य भेदप्रतिनिधिविशेषपरत्वान्न कश्चिद्दोष इति भावः ।

**श्रीनिधि०— ननु गुणादीनामिति** । यावद्द्रव्यभाविनां गुणादीनामित्यर्थः । **क्वचिदिति** । खण्डितस्थले । **सविशेषत्वाङ्गीकारादिति** । भेदाभावेऽपि भेदप्रतिनिधिविशेषस्य अङ्गीकृतत्वादित्यर्थः । अयमङ्गीकारवाद इति ज्ञेयम् । अन्यथोत्तरत्र गुणगुण्यादीनां शुक्लः पट इत्यादिसमानाधिकरणप्रत्ययबलेनाभेदसमर्थनविरोधापत्तेरिति ।

**वा०चं०—** तर्हि सिद्धान्तानुसारेण पुनर्विभ्रमत्वमित्याशङ्कते **नन्विति** । सिद्धान्त इत्यभ्युच्चययुक्तित्वं व्यावर्तयति **भगवत इति** । वस्तुतः प्रामाणिकत्वमेव न तु तथाऽभ्युपगममात्रमिति ध्वनयति । **क्वचिदिति** । अयावद्द्रव्यभाविगुणादिस्थले । भवदुक्तरीतिमनुरुद्ध्यैवैतद्बाधकप्रवृत्तिरित्याशयेनाह **व्याख्यातेति** । गुणादीनामाश्रयेण परस्परं सविशेषाभेदाङ्गीकारान्नानुपपत्तिरित्याह **सविशेषत्वेति** । नन्वेवमपि भेदनिष्ठसामानाधिकरण्यप्रतीतेरनुपपत्तिरेवेत्यतस्तत्प्रतीतेः सविशेषविषयत्वाङ्गीकाराददोष इत्याह **सविशेषत्वेति** । ननु कुतो गुणादीनां





सविशेषाभेदः कुतश्चास्याः प्रतीतेस्तद्विषयकत्वं कथं च भेदनिष्ठप्रतीतेः सविशेषाभेदविषयत्वेन निर्वाहः, अन्यथा दण्डीत्यादि प्रत्ययानामपि सविशेषाभेदविषयकतया निर्वाहोपपत्त्या सामानाधिकरण्यप्रतीतेर्भेदनिष्ठता कुत्रापि न स्यात्, सविशेषाभेदविषयत्वे चास्याः प्रतीतेरभेदाभिभवेन भेदव्यवहारजनकत्ववद्विशेषाभिभवेनाभेदव्यवहारजनकत्वं च स्यात् इत्यादिबाधकादुक्तमनुपपन्नम् इत्यतो गुणादीनां दण्डादिवद्भेदेनानुपलम्भेन गुण्यादीनां परस्परं च सविशेषाभेदस्य विशेषस्य भेदकार्यनिर्वाहकतायाश्चाभेदभेदकार्यप्रतीत्यन्यथानुपपत्त्या जन्माधिकरणादावेतत्प्रतीतेः सविशेषाभेदविषयकत्वव्यवहारविशेषजनकत्वादेश्च सविशेषमवसीयत इति वाक्यव्याख्यानावसरे समयपादे समर्थयिष्यमाणत्वान्नानुपपत्तिरित्याशयेनाह **विशदं चेति** । एवं च पूर्वं भेदशब्दप्रयोगो विशेषाभिप्रायेण, दण्डीत्यादिबाधकोक्तिस्तद्वद्गुणादीनां निर्विशेषाभेदाभावाभिप्रायेण, आश्रयाभेदोक्तिर्निर्विशेषाभेदाभिप्रायेण । तथा च 'यत्र विशेषो न तन्निर्विशेषाभेदेन भासते यच्च निर्विशेषाभेदेन भासते न तत्र विशेष इति नियमः' एवं चेत्यादिना अभिमत इति द्रष्टव्यम् । केचित्तु तार्किकमतेन पूर्वं समाधानमिति वदन्ति । तत्र विशिष्टयोरित्यादिग्रन्थास्वारस्यं बोध्यम् । अनेनात्र केनचिदित्युक्तदूषणपरिहारप्रकारस्य मूलारूढतोक्तेति द्रष्टव्यम् ।

**वा०र०— क्वचिदितीति** । आश्रयणेत्यादि वर्तते । समयपादादौ वक्ष्यमाण यद्येनात्यन्ताभिन्नमिति व्याप्त्युपपादकदृष्टान्तोऽयम् । **भेदनिष्ठैवेति** मूलम् । भेदमात्रनिष्ठेत्यर्थः । तेनात्यन्ताभेदभेदसहिताभेदयोरुभयोरपीयं विरोधिनीति सिध्यति । टीकायां भेदनिष्ठेति वचनमपि भेदमात्रनिष्ठेति व्याख्यातव्यम् । शङ्कान्तरनिरासकतयापि सविशेषत्वेति वाक्यं योजयति **नन्वेवमपीत्यादिना** । **जन्माधिकरणादाविति** । समर्थयिष्यमाणत्वादिति संबन्धः । सोऽस्ति वस्तुष्वशेषत इत्यनुभाष्यव्याख्यावसर इति शेषः । आदिपदेनादृश्यत्वनयादिपरिग्रहः । **दण्डीत्यादि-बाधकेति** । तथात्वे दण्डी देवदत्त इत्युक्तेत्यर्थः । इदं स्पष्टनीयमस्ति । ............ । **विशिष्टयोरित्यादि-ग्रन्थेति** । तन्मते विशिष्टस्य पदार्थान्तरत्वाभावेन वस्त्वन्तरमित्युक्तायोग इति भावः ।

**स०व्र०— व्युत्पादयिष्याम इति** । जन्माधिकरण इति शेषः ।

**विट्ठ०— तथा च पुनरिति** । शुक्लः पट इत्यादौ यावद्वस्तुभाविस्थलेऽत्यन्ताभेदस्य खण्डितत्वे भेदाभेदयोश्च प्रतीतत्वेन तत्र सामानाधिकरण्यप्रतीतेः भेदनिष्ठत्वेऽन्यदन्यात्मना विषयीकुर्वज्ज्ञानं अन्यथा-ख्यातिरित्युक्तत्वात् भ्रमत्वं प्रसज्यते इति भावः । अत्र सामानाधिकरण्यप्रतीतेः भेदनिष्ठत्वं नाम भेदप्रतिनिधि-विशेषनिष्ठत्वं अन्त्यभेदेऽपि विशेषस्य प्रमितत्वेन न भ्रमत्वमिति परिहरति **मैवमिति** ।

**गूढ०— सिद्धान्तविरोधं शङ्कते ननु चेति** । सामानाधिकरण्यस्य भेदालम्बनत्वे शुक्लः पट इत्यादिषु भेदाभावाद्धर्मधर्मिणोः सामानाधिकरण्यस्य प्रतिभासो भ्रमः स्यादित्यर्थः । **सविशेषत्वेति** । तथाच विशेषस्य भेदकार्यकारित्वात् भेदशब्देन विशेष एव ग्राह्य इति भावः । नन्वन्यकार्यं कथमन्येनेत्यत आह **विशदं चैतदिति** ।

**प्रदीपः— मैवमिति** । भेदप्रतिनिधिर्विशेषोऽपि भेदव्यपदेशभागीत्यर्थः ।

**३५६ सु०— यत्पुनः 'अन्याकारोल्लेखी'त्यादिना अस्मदभिमतान्यथाख्यातेरनुभवविरोधं प्रतिज्ञाय तदुपपादनाय 'यत्सन्निकृष्टकरणेने'त्यन्तेनालंबनलक्षणनिराकरणं कृतं तदनुमतमेव अस्माकम्। 'यद्विज्ञानं यत्सन्निकृष्टकरणेन जन्यते स तस्य विषय' इत्यङ्गीकारात्॥**

**श्रीनिधि०**— ज्ञानकारणीभूतसन्निकर्षवता येन सन्निकृष्टं करणं यज्ज्ञानमुत्पादयति **स तस्य विषय** इत्युक्तं भवति।

**वा०चं०**— **इत्यन्तेनेति**। अत्रापि पूर्ववदेव व्याख्यानम्। **तदनुमतमेवेति**। एतत्पर्यन्तं विषयत्वलक्षण-निराकरणं पूर्वपक्षमुखेनास्माभिरेव कृतमिति ध्वनयति।

**स०व्र०**— **यत्सन्निकृष्टकरणेनेत्यन्तेनेति**। एतत्पर्यन्तेनेत्यर्थः।

**विठ्ठ०**— **अन्याकारोल्लेखि** अन्यावलम्बनं ज्ञानं अन्यथाख्यातिरिति विरुद्धमिति अस्मदभिमता-न्यथाख्यातेः अनुभवविरोधं प्रतिज्ञाय अनुभवविरोधोपपादनाय ''तथाहि न तावत्सद्भावमात्रेणालम्बनत्वं'' इत्युपक्रम्य ''यत्सन्निकृष्टकरणेने''त्यन्तेनालम्बनलक्षणं निराकृतं अस्मदभिमतमेवेत्यर्थः।

**प्रदीपः**— **यद्विज्ञानमित्यादि**। योऽर्थो यत्सन्निकृष्टेन करणेनावगम्यते। स तस्य विषयो मुख्यहेतुर्योगोऽत्र संमतः।

**३५७ सु०— नन्वत्रापि दोषोऽभिहित इति चेन्न। सन्निकर्षस्यापि कारणतया विवक्षित-त्वेन तस्यासंबद्धत्वात्। न हि चक्षुरादेराकाशादिसन्निकर्षो रूपादिज्ञानकारणम्, नापि वाक्यस्याकाशादिसन्निकर्षो वाक्यार्थज्ञाने हेतुः, न च लिङ्गज्ञानस्यात्मना सन्निकर्षो लिङ्गि-ज्ञाननिमित्तम्। किं नामावर्जनीयसन्निधयस्ते सन्निकर्षाः। लिङ्गस्य साध्यधर्मिसन्निकर्षो लिङ्गिज्ञानकारणमिति चेन्न। लिङ्गज्ञानस्य करणतयाऽभ्युपगमात्।**

**बिन्दुः**— **लिङ्गस्य साध्यधर्मिसन्निकर्ष इति**। पर्वतसंयोगादिरूपपक्षप्रतियोगिकसन्निकर्षः लिङ्गे विद्यमानः लिङ्गिज्ञानकारणमित्यर्थः। तथाच वह्निज्ञानरूपानुमितेः पक्षोऽपि विषयः स्यात्। यद्यप्यत्र वह्निमानित्याद्याकारिकायामनुमितौ पक्षोऽपि विषयो भवत्येव, तथापि समाने विषयेऽनुमितिसामग्रीतो लौकिकप्रत्यक्षसामग्र्या एव बलीयस्त्वात्। अन्यथा संशयोत्तरप्रत्यक्षोच्छेदापत्तेः। तत्रापि पुरुषत्व-व्याप्यकरादिमानित्याद्याकारकपरामर्शरूपानुमितिसामग्र्याः सत्त्वात्। तस्मात्प्रकृते धर्म्यंशे प्रत्यक्षमेव। जातिसाङ्कर्यस्योपाधिसाङ्कर्यवददोषात्। प्रत्यभिज्ञादौ लौकिकत्वालौकिकत्वयोः दीर्घशष्कुलीभक्षणादौ





युगपच्चाक्षुषत्वाद्यनेकजात्याक्रान्तानां रूपरसगन्धस्पर्शशब्दविषयकज्ञानानामनुभवसिद्धत्वेन तत्राप्यनेकजातीनां समावेशाङ्गीकारादिति चोद्याभिप्रायः । यदि च तत्र युगपदनेकज्ञानोत्पत्तावपि तावज्जात्यवच्छिन्नमेकज्ञानं नास्तीत्याग्रहस्तर्ह्यत्रापि पक्षसाध्यविषयकं ज्ञानद्वयमेवास्त्विति हृदयम् । **सन्निकर्षस्याप्यसाधारणकारणताया इति** । एवं च करणे प्रागुक्तासाधारणविवक्षा स्वरूपकथनार्थेति ध्येयम् । ननु लिङ्गज्ञानस्य लिङ्गिसन्निकृष्टत्वं नाम तद्व्याप्यविषयत्वं वाक् (?)। ज्ञानस्य च अन्विताभिधानदर्शने संसर्गधर्मकपदार्थबोधकपदसमुदायरूपवाक्यविषयत्वं वाक्यार्थसंसृष्टत्वमिति विषयत्वघटितत्वेनात्माश्रयापत्तिः । किञ्च शून्यतुच्छादिपदानामर्थस्यैवाभावेन शून्यं नास्ति तुच्छं नास्ति नृशृङ्गं नास्तीति तद्बोधकस्य शब्दरूपकरणस्यार्थसंसर्गासंभवात्तज्जन्यज्ञानस्यासद्विषयकत्वं न स्यात् । अपि च समूहालम्बनस्थले असाधारणकारणीभूतघटेन्द्रियसन्निकर्षाज्जायमानस्य पटोऽपि विषयः स्यादित्यत आह **एवमन्येऽपि क्षुद्रोपद्रवाः परिहरणीया इति** । तदयं परिहारप्रकारः । लिङ्गज्ञानस्य वह्निव्याप्यधूमवानयमित्याकारकपरामर्शस्य वह्निरूपलिङ्गिसन्निकृष्टत्वं नाम वह्निनिरूपितव्याप्तिमल्लिङ्गसंयुक्तचक्षुर्जन्यत्वमिति परम्परासंबन्धोऽननुगत एव विशिष्य बोद्धव्यः । अनुमितानुमानस्थलेऽपि परामर्शस्य अनुमितित्वेनोक्तरूपं सन्निकृष्टत्वं दुर्वचं यद्यपि, तथापि तद्व्याप्तलिङ्गव्याप्तलिङ्गसन्निकृष्टेन्द्रियजन्यपरामर्शरूपेन्द्रियजन्यज्ञानत्वं तादृशानुमितिरूपपरामर्शेऽस्त्येव । उत्तरोत्तरं लिङ्गस्यानुमेयत्वे चैवमेव प्रनाडीपरम्परासंबन्धमेकैकमधिकं वर्द्धयित्वोहनीया, अन्ततः शब्दे वा प्रत्यक्षे वा पर्यवसानमिति तत्रैव परम्पराविश्रान्तिरिति नानवस्थेति ध्येयम् । एवं वाक्यज्ञानस्यापि तादृशवाक्यसंसृष्टश्रोत्रजन्यत्वादिः सन्निकर्ष ऊहनीयः । तुच्छं नास्तीति वाक्येऽप्यत्यन्ताभावस्य प्रामाणिकत्वेन तेन सह पदस्य शक्त्याख्यसंबन्धस्य विद्यमानतया तस्य चान्विताभिधायिनः उक्तविधश्रोत्रसन्निकर्षस्य सत्त्वात् इदं रजतमिति प्रत्यक्षज्ञानस्य शुक्तिविषयत्ववत् तुच्छं नास्तीति ज्ञानस्याप्यत्यन्ताभावविषयत्वमेव न त्वसद्विषयत्वमिति न क्षतिः । तुच्छमस्तीति वाक्यात्तु व्याघातादेव न बोधः । त्रैकालिकनिषेधप्रतियोगित्वमेव हि तुच्छत्वम् । तथाच तादृशपदार्थोपस्थितौ अस्तीत्यनेन कथं न व्याघातः । तदनुपस्थितौ तु सुतरां न शाब्दबोध इति दिक् । 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति ही'ति दर्शने तु अस्त्यादिपदानामन्विताभिधायिनां स्वार्थसत्तादिना शक्त्याख्यसंबन्धरूपसत्त्वात् शशादिपदानां च स्वस्वार्थे शक्तत्वेन शशविषाणादिरूपविशिष्टार्थस्य च वाक्यार्थमर्यादया बोधकत्वान्न काप्यनुपपत्तिरिति बोध्यम् । समूहालम्बने त्विष्टापादनमेव परस्परविषयत्वाभावे समूहालम्बनत्वस्यैव हान्यापत्तेरित्यादि बोध्यम् ।

**परि०— असंबद्धत्वादिति** । कारणीभूतसंबन्धहीनत्वादित्यर्थः । आकाशादिविषयतैवं चापद्येतेत्यादिप्रागुक्तदोषं निराह **नापि वाक्यस्येति** । **साध्यधर्मीति** । साध्यं प्रति यो धर्मी पर्वतादिः तत्सन्निकर्ष इत्यर्थः । तथाच तस्यानुमितिविषयत्वं स्यादिति भावः । तदुक्तं न्यायामृते । पक्षसन्निकृष्ट-लिङ्गजानुमितिं प्रति पक्षोऽपि विषयः स्यादित्यादि । ननु नेदमनिष्टं साध्यधर्मिणोऽप्यनुमितिविषयत्वात् । यद्वक्ष्यति भक्तिपादे साध्यसिद्धेरदोषत्वोक्तिप्रस्तावेऽनुमितिविषयः पक्ष इति । मैवम् । तत्सन्निकृष्ट-करणजन्यज्ञानं प्रति स विषय इत्येवंरूपविवक्षितविषयत्वस्य साध्य एव सत्त्वेन साध्यधर्मिण्यभावात् । सन्निकर्षस्य लिङ्गे व्याप्तिरूपत्वेन अभिमतत्वात् । न हि वक्ष्यमाणदिशा यद्व्याप्तलिङ्गविषयकज्ञानजन्यं ज्ञानं यत् तत्प्रति स विषय इत्युक्तिदशायां साध्यधर्मिणो विषयत्वशङ्कावकाशोऽस्ति । न चैवं पर्वतादेरनुमितावभानं शङ्क्यम् । भानस्य विषयत्वाप्रयुक्तत्वात् । तथात्वे शुक्तिरूप्यादाविदं रूप्यमिति ज्ञाने रजतस्याभानापत्तेः । 'रजतं दृष्टमिति भ्रममात्रत्वादि'त्यादिमिथ्यात्वानुमानखण्डनटीकादौ शुक्ति-रजतस्योक्तविवक्षया विषयत्वाभावकथनात् । अत्राप्यग्रे शुक्तेरेव विषयत्वेन रजते विषयत्वाभावस्य स्पष्टत्वात् । न चातिप्रसङ्गः । रूप्यावभासादौ दोषस्यैवानुमितिविषयधर्मित्वादेर्नियामकत्वात् । अनुमिति-विषयः पक्ष इत्युक्तिस्तु पर्वतादेरनुमितौ स्फुरणमात्रेण शुक्तिरूप्यस्य विषयत्वव्यवहार इव वाऽस्तु वेत्यादिवक्ष्यमाणलक्षणानुरोधेन वोपपत्तेः । केचित्तु साध्यधर्म्येव विषयः स्यादिति तात्पर्यं वर्णयन्ति । अन्ये तु लिङ्गज्ञानांश एव धर्मी विषयः स्यादित्यभिप्रायमाहुः ॥ **लिङ्गज्ञानस्येति** । अतीतादि-स्थलेऽप्यनुमितिदर्शनादिति भावः । विस्तृतमेतत्तर्कताण्डवे तृतीयपरिच्छेदे ।

**गु०दी०— लिङ्गस्य साध्यधर्मिसन्निकर्ष** इत्यत्र साध्यधर्मी पक्षः । यद्यपि पक्षस्यापि विषयत्वमस्ति तथाऽपि असाधारणविषयस्य लिलक्षयिषितत्वादतिव्याप्तिशङ्का । पर्वतस्तु नासाधारणविषयः स्थलान्तरे धूमात् वह्न्यनुमाने पर्वतोल्लेखनियमाभावादिति द्रष्टव्यम् ।

**यादु०—** लिङ्गकरणतापक्षमालम्ब्य शङ्कते **लिङ्गस्येति** । तथा च लिङ्गिज्ञानमपि पक्षविषयकं स्यादिति भावः ।

**वं०प०—** साध्यधर्मी पक्षः । **लिङ्गिज्ञानकारणमिति** । तथाच पक्षसन्निकृष्टेन लिङ्गेन लिङ्गिज्ञानं जायत इति लिङ्गिज्ञानं पक्षविषयकं स्यादित्यर्थः ।

**आनन्दः— तस्यासंबद्धत्वादिति** । अतिव्याप्त्यादिदूषणस्यासंबद्धत्वादित्यर्थः । तत्राकाशा-त्मनोरतिव्याप्ती क्रमेणोद्धरति **न हि चक्षुरादेरित्यादिना** । ननु तथापि पर्वतादिरूपसाध्याधर्मिसन्निकृष्टकारणेन लिङ्गेन लिङ्गिज्ञानजननात्तत्सन्निकृष्टस्य च लिङ्गिज्ञानकरणत्वात्पर्वतादेरपि विषयत्वं स्यादित्यतिव्याप्तिरिति शङ्कते





**लिङ्गस्येति**। न च पर्वतस्यापि लिङ्गिज्ञानविषयत्वमस्त्येवेत्यतिव्याप्तिरिति वाच्यम्। असाधारण्येन विषयत्वस्यैवात्र विषयशब्दार्थत्वात्। अत एव वह्निविषयिणी अनुमितिरिति वदन्ति।

**कं०रा०— लिङ्गस्येति**। साध्यधर्मिपदेन समुचितदेशो विवक्षितः। तथा चोर्ध्वदेशो वृष्टिमानधोदेशे नदीपूरात्। उपरिदेशः सूर्योदयवान् पद्मे विकासादित्यादौ नदीपूरविकासादिलक्षणलिङ्गस्याधोदेशपद्मादिलक्षण-समुचितदेशसन्निकर्षविशिष्टस्योर्ध्वदेशादौ वृष्टिसूर्योदयाद्यनुमितिजनकत्वात्तादृशानुमितिं प्रत्यधोदेशपद्मादिलक्षण-समुचितदेशोऽपि विषयः स्यादित्यर्थः। समुचितदेशसन्निकृष्टेन लिङ्गेनोक्तानुमितिर्जायते। तदेवं यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते स तस्य विषय इति लक्षणसत्त्वादुक्तानुमितिं प्रति समुचितदेशस्य विषयत्वापादनं सङ्गच्छते। न चैतदस्ति। लिङ्गस्य क्वचिदतीतानागतत्वेनानुमितिकारणत्वस्यैवाभावाल्लिङ्गज्ञानस्यैव तत्करणत्वादित्याशयेन परिहरति **नेति**। अथवा। लिङ्गस्य साध्यधर्मिसन्निकर्षोऽलिङ्गिज्ञानकरणमिति पदच्छेदः। तथा चानुमितिकरणस्य लिङ्गस्य साध्यधर्मिसन्निकर्षो लिङ्गिज्ञानशब्दितानुमितिकारणं न भवति। उपरिदेशः सूर्योदयवान्पद्मे विकासादित्यादौ लिङ्गस्य साध्यधर्मिसन्निकर्षाभावात्। अतस्तत्रोपरिदेशादिरूपसाध्यधर्मिणोऽनुमितिविषयत्वं न स्यादिति शङ्काभिप्रायः। परिहाराभिप्रायस्तु लिङ्गज्ञानस्यैव करणत्वात्तस्य च साध्यधर्मिणा साकं तन्निष्ठसाध्यव्याप्त-लिङ्गसंबन्धरूपसन्निकर्षस्य सत्त्वात्साध्यधर्मिणोऽनुमितिविषयत्वं संभवतीति। यद्यपि लिङ्गस्य करणत्वेऽप्येवं समाधानं वक्तुं शक्यम्। तथाऽपि वस्तुस्थितिर्वक्तव्येत्यभिप्रायेणैवमुक्तम्। लिङ्गस्येत्यादिग्रन्थस्य प्रकारान्तरेण व्याख्यातत्वेन साध्यधर्मिणोऽनुमितिविषयत्वापादनपरतया प्रतीयमानो ग्रन्थोऽनुपपन्नः। साध्यधर्मिणोऽनुमिति-विषयत्वस्य सत्त्वेन तदापादनस्येष्टापादनत्वादिति चोद्यमनवकाशमिति ध्येयम्। न च वाच्यं लिङ्गज्ञानस्य करणत्वेऽप्युपरिदेशः सूर्योदयवान्पद्मे विकासादित्यादौ समुचितदेशरूपपद्मादिवृत्तिविकासादिरूपलिङ्गज्ञानस्य समुचितदेशेन सह तद्वृत्तिलिङ्गविषयकत्वरूपसन्निकर्षस्य सत्त्वात्तस्य चानुमितिं प्रति कारणत्वात्समुचितदेशस्य पद्मादेरनुमितिविषयत्वं स्यादिति। यत्सन्निकृष्टकरणेनेत्यत्र सन्निकर्षत्वेन कारणताया विवक्षितत्वात्। असन्निकृष्ट-ज्ञापनेऽतिप्रसङ्गेन ज्ञाप्यज्ञापकयोरेव सन्निकर्षस्य गवेषणीयतया समुचितदेशतद्वृत्तिलिङ्गज्ञानयोश्च ज्ञाप्यज्ञापक-भावाभावेन समुचितदेशवृत्तिलिङ्गविषयकत्वस्य सन्निकर्षत्वेनाकारणत्वादिति।

**श्रीनिधि०—** संविद्विरोधं प्रतिज्ञायेति अन्यविषयकज्ञानस्यैकस्यान्यविषयकत्वं विरुद्धमित्यनुभवविरोधं **कारणतया विवक्षितत्वेनेति**।

**वा०चं०— दोष**ः अतिव्याप्त्यव्याप्तिलक्षणः। तत्रातिव्याप्तिं तावदुद्धरति **सन्निकर्षस्येति**। सन्निकर्ष-कारणताविवक्षामात्रेण प्रत्यक्षवाक्यानुमानस्थलेषूक्तसन्निकर्षाणामन्यथासिद्ध्योक्तातिव्याप्तेरुद्धार इत्याह **न हि इत्यादिना**। यद्यपि लिङ्गज्ञानस्थलेऽतिव्याप्त्युद्धारो लिङ्गिज्ञानकारणताभ्युपगमानन्तरं युक्तः। अन्यथा लिङ्गस्ये-त्युत्तरग्रन्थास्वारस्यापत्तेः। तथाऽप्यवर्जनीयसन्निधित्वरूपैकसमाधानसंभवेन लाघवमनुसृत्यात्राभिहित इति द्रष्टव्यम्। एवं कारणत्वान्तर्गतानन्यथासिद्धत्वांशव्यावर्त्यं प्रदर्श्य लिङ्गपक्षसन्निकर्षस्यानन्यथासिद्धत्वात्तमादाय पक्षस्य





लिङ्गिज्ञानविषयत्वापत्त्याऽतिव्याप्तिरेवेत्यतोऽतीतादिस्थले लिङ्गस्यातीतत्वेन तस्याकारणतया तत्सन्निकर्षस्यापि करणसन्निकर्षत्वाभावान्नातिव्याप्तिरिति परिहर्तुं ज्ञानस्य करणत्वोक्तिनिवर्त्यमाशङ्कते **लिङ्गस्येति** । यद्यप्यत्र पक्षस्याप्यनुमितिविषयत्वमिष्टमेवेति शङ्का निर्दलेव भाति तथाऽपि प्रत्यक्षादिप्रमाणान्तरसिद्धस्यैव पक्षत्वनियमान्न तस्यानुमित्यसाधारणविषयत्वमित्याशयात् । यत्तु तादृशलिङ्गधर्मितारूपसन्निकर्षाश्रयत्वेन पक्षस्यैव विषयत्वं स्यान्न तु लिङ्गिन इति तत्राव्याप्तिरित्येतत्तात्पर्यमिति । तन्न । अतिव्याप्तिप्रायपाठविरोधात् । लिङ्गज्ञानकरणताभ्युपगमेऽपि लिङ्गस्येव तज्ज्ञानस्यापि लिङ्गिना सन्निकर्षानुपपादनेन लिङ्गिन्यव्याप्तेः परिहारवाक्येनाप्यपरिहाराच्च । न च ततोऽप्यग्रिमग्रन्थेन तत्परिहार इति वाच्यम् । तथा सति तेनैवोपपत्तावेतच्छङ्कासमाधानयोरुभयोरपि वैयर्थ्यमेवेत्यास्तां तावत् । अतीतादिस्थले लिङ्गाद्यभावेऽप्यनुमित्यादिदर्शनेन लिङ्गज्ञानादेरेव करणत्वस्यावश्याभ्युपगमनीयतया लिङ्गस्य करणत्वाभावान्नातिव्याप्तिरिति पक्षस्यासाधारण्यविषयत्वाभावाभ्युपगमेनैव समाधत्ते **लिङ्गज्ञानस्येति** ।

**वा०र०**— **इति परिहर्तुम्** इत्यनेनाभ्युपगतत्वादित्यस्यार्थ उक्तः । उत्तरत्रापीति स्थल इत्यनेनोक्तार्थस्याधिकप्रतिपादनायोपन्यासेन वाक्यारूढताप्रतिपादनान्न पौनरुक्त्यमिति ज्ञेयम् । ननु तथापि पक्षसन्निकृष्टलिङ्गजानुमिति प्रतिपक्ष इति न्यायामृतव्याख्यारूपकण्टकोद्धारानुसारेणाशङ्क्य निराकरोति **यद्यप्यत्र पक्षस्यापीत्यादिना**। यद्यप्याद्ये इष्टापत्तिः । तथापि तादृशलिङ्गधर्मिभावरूपकरणसन्निकर्षेत्यादितरङ्गिणीकृदुक्तं समाधानप्रकारमनूद्य निराकरोति **यत्तु तादृशेत्यादिना** । लिङ्गज्ञानकरणत्वेऽपि तज्जन्यज्ञाने पक्षस्यापि विषयतासत्त्वात्तदभावः स्यादित्यत उक्तं **पक्षस्यासाधारणविषयत्वाभावेति** ।

**स०व्र०**— लिङ्गकरणतापक्षमालम्ब्य शङ्कते **लिङ्गस्य साध्यधर्मीति** । तथाच लिङ्गिज्ञानमपि पक्षविषयकं स्यादिति भावः । न चानुमितेः पक्षविषयत्वादिष्टापत्तिः । पर्वतो वह्निमानिति ह्यनुमितिः । न तु वह्निमानित्येव तथाऽननुभवात्सिद्धार्थतापत्तेश्चेति चेन्न । लिङ्गिविषयकत्वांशे पक्षविषयकत्वं स्यादित्यापादनात् । एके तु असाधारणविषयत्वस्य लक्ष्यत्वात् । व्याप्यस्य च व्यापकमेवासाधारणविषय इति कथमतिव्याप्त्यभिधानासङ्गतिः । अत एव पक्षतावच्छेदकतत्संबन्धादीनां विषयत्वात्तत्र चोक्तलक्षणाभावादव्याप्तिरिति निरस्तम् । न हीदं विषयत्वसामान्यलक्षणम् । किन्त्वसाधारणं जन्यज्ञानविषयत्वलक्षणमिति न कश्चिद्दोष इत्याहुः । अन्ये तु लिङ्गस्य पक्षेणैव संबन्धात्साध्येनासंबन्धात्पक्षस्यैव विषयत्वं न वन्ह्यादेरिति शङ्काऽर्थः । परिहारार्थस्तु लिङ्गज्ञानस्यैव करणत्वात्तस्य च पक्षेणासंबन्धान्न तस्य विषयत्वम् । तद्व्याप्तलिङ्गविषयेण लिङ्गज्ञानेनेत्यादिवक्ष्यमाणप्रकारेण लिङ्गज्ञानस्य साध्येन संबन्धोपपत्तेस्तस्य विषयत्वोपपत्तिरित्याहुः ।

**स०ना०**— यत्सन्निकृष्टकरणेनेत्यस्य सिद्धान्त्यभिप्रेतार्थमजानन् शङ्कते **नन्वत्रापीति** । भावानवबोधनिबन्धनत्वेनालग्नकत्वात् दूषणस्य नास्मद्रीत्या परिहारो वाच्यः । येनापि यत्संबन्धेनेन्द्रियेण यज्ज्ञानं जन्यते स तस्य विषय इति । संबन्धस्यैव विषयताप्रयोजकत्वमुच्यते तन्मतेऽपि न परोक्ताः दोषा संबद्धा भवन्तीत्याशयेनाह





**सन्निकर्षस्यापीति** । यत्सन्निकृष्टेनेति वदता परेण सन्निकर्षस्य कारणतया विवक्षितत्वात् । तन्मतेऽपि परोक्तं दूषणमलग्नमिति भावः । मा भूत्पूर्वोक्तो दोषः परमते सन्दिग्धत्वस्यानुमितिविषयत्वं तु प्रसज्यत इत्याह **लिङ्गस्य साध्यधर्मीति** । अनुमितौ सन्दिग्धधर्मिसन्निकर्षस्य हेतुत्वात् पर्वते पर्वतत्ववत् सन्दिग्धत्वमपि विषयः स्यादिति भावः ।

**विठ०**— ननु यत्सन्निकृष्टकरणेनेत्युक्तलक्षणेऽपि रूपादिज्ञानस्य आकाशसन्निकृष्टचक्षुरादिना जातत्वेन आकाशादिविषयतापातात् तत्रासन्निकृष्टकरणजन्या प्रत्यभिज्ञा तत्राविषया स्यात् वाक्यार्थेनासन्निकृष्टवाक्येन जायमानं ज्ञानं न वाक्यार्थविषयं स्यात् आकाशादिविषयतैवं चापद्येत लिङ्गज्ञानाच्च आत्मसन्निकृष्टात् जायमानं लिङ्गिज्ञानं आत्मविषयमापद्येतेत्यतिव्याप्ति-अव्याप्तिरूपदोषोऽभिहितस्तत्कथमिदं लक्षणं अङ्गीक्रियते इति शङ्कते **नन्वत्रापीति** । तत्राकाशादावतिव्याप्तिं क्रमेणोद्धरति **सन्निकर्षस्यापीति** । इन्द्रियार्थयोः लिङ्गलिङ्गिनोः वाक्यतदर्थयोश्च सन्निकर्षस्यापि इन्द्रियलिङ्गादिज्ञानकारणतया विवक्षितत्वेन तस्य चाकाशादेः कारणतया संबन्धरहितत्वादित्यर्थः । चक्षुराकाशादिसंबन्धस्यावर्जनीयसन्निधित्वेन कारणत्वाभावादिति भावः । तस्य असंबद्धत्वादित्यस्य तस्य प्रागुक्तातिव्याप्तिदोषस्य असंबद्धत्वादयुक्तत्वादित्यर्थः । चक्षुराकाशादिसंबन्धादीनां कारणताभावमुपपादयति **न हीत्यादिना** । लिङ्गस्य करणतापक्षावलम्बेन शङ्कते **लिङ्गस्येति** । तथाच साध्यधर्मीयः पक्षः तत्सन्निकृष्टेन लिङ्गेन जायमानस्य लिङ्गिज्ञानस्य पक्षविषयकत्वं स्यात् तथा चातिव्याप्तिः लक्षणस्येति शङ्काशयः । लिङ्गज्ञानस्यैवानुमितिजनकत्वं न तु लिङ्गमात्रस्य तथात्वे अज्ञातलिङ्गात् अनुमित्युत्पत्तिप्रसङ्गात् तथाच लिङ्गज्ञानस्य साध्यधर्मिसन्निकर्षाभावात् नोक्तातिव्याप्तिरित्याशयेन परिहरति **नेति** । यद्यपि अनुमितेः पक्षविषयत्वमिष्टमेव अग्निमान्पर्वत इत्येवमेवानुमित्युदयात् तथापि लिङ्गविषयकत्वांशस्यापि पक्षविषयकत्वापात इति परेणापादनात् तन्निरसनं युक्तमेव । अंशभेदविवक्षा चावश्यकी अन्यथा सुरभिचन्दनमित्यादिप्रत्ययेषु विशेषणांशस्य विशेष्यांशे यस्सन्निकर्षः तज्जन्यत्वाभावेनाव्यास्यापत्तेरिति ध्येयम् ।

**गूढ०**— **तस्यासंबद्धत्वादिति** । अतिव्याप्त्यादिदूषणस्यासंबद्धत्वादित्यर्थः । तत्राकाशात्मनोरतिव्याप्ति-मुद्धरति **न हि चक्षुरादेरित्यादिना** । ननु तथापि पर्वतादिरूपसाध्यधर्मिसन्निकृष्टकारणेन लिङ्गेन लिङ्गिज्ञान-जननात्तत्सन्निकर्षस्य च लिङ्गिज्ञानाकरणत्वात् पर्वतादेरपि विषयत्वं स्यादित्यतिव्याप्तिरिति शङ्कते **लिङ्गस्येति** । न च पर्वतस्यापि लिङ्गिज्ञानविषयत्वमस्त्येवेत्यतिव्याप्तिरिति वाच्यम् । असाधारण्येन विषयत्वस्यैवात्र विषय-शब्दार्थत्वात् । अत एव वह्निविषयिणी अनुमितिरिति वदन्ति ।

**प्रदीपः**— ननु संयोगादिसन्निकर्षाभावात् कथमसन्निकृष्टज्ञापनाभावः इत्यत आह **न हीति** । असन्निकृष्टज्ञापनेऽतिप्रसङ्गात् संयोगाद्यतिरिक्तः कोऽपि संबन्धः कार्यानुपपत्त्या आश्रयणीय इत्यर्थः । रजत-ज्ञानस्य शुक्त्यालम्बनत्वमनुभवविरुद्धमित्युक्तं तद्विघटयति **न चेति** ।





**३५८ सु०— अनेनैव वाक्यस्य श्रोतृश्रोत्रसन्निकर्षाश्रयणेन दूषणं परास्तम् । वाक्यज्ञानस्यैव करणत्वाङ्गीकारात् । तथाऽपि प्रत्यभिज्ञायां तत्तांशेन चक्षुरादेर्लिङ्गिना च लिङ्गज्ञानस्य वाक्यार्थेन वाक्यज्ञानस्य सन्निकर्षाभावादविषयतापत्तिरिति चेन्न । असन्निकृष्टज्ञापनेऽतिप्रसङ्गात् । तदनुभवजनितसंस्कारसहकृतेनेन्द्रियेण प्रत्यभिज्ञा जायते, तद्व्याप्तलिङ्गविषयेण च लिङ्गज्ञानेन लिङ्गिज्ञानमुत्पद्यते, संसर्गधर्मकपदार्थवाचि-पदसमुदायरूपवाक्यविषयज्ञानेन वाक्यार्थज्ञानं जन्यते; अतो नातिप्रसङ्ग इति चेत् तर्हि अभ्युपगतः सन्निकर्षः । न हि संयोगादिरेव सन्निकर्षः किं नाम प्रत्यासत्तिमात्रम् ।**

**परि०— श्रोत्रेति** । श्रोत्रसन्निकृष्टवाक्यजन्यवाक्यार्थज्ञानं प्रति श्रोत्रं विषयः स्यादिति दूषणमित्यर्थः । अतिव्याप्तिं निरस्याव्याप्तिं चाशङ्क्य निराह **तथापीत्यादिना** । परमुखेनैव तदनुभवेत्यादिना समाधिं वाचयितुं सन्निकर्षाभाववादिनं प्रति अनिष्टं तावदाह **असन्निकृष्टेति**।

**गु०दी०— अनेनैव** इत्यत्र श्रोत्रसन्निकृष्टवाक्यरूपकरणजन्ये पदार्थज्ञाने श्रोत्रस्यापि विषयत्वशङ्का पर्वतस्य विषयत्वनिराकरणन्यायेनैव परास्तेति भावः ।

**यादु०—** न चानुमितेः पक्षविषयकत्वादत्रेष्टापत्तिः । लिङ्गिविषयकत्वांशे पक्षविषयकत्वं स्यादित्या-पादनात् । अंशभेदविवक्षायाश्चावश्यकत्वात् । अन्यथा सुरभिचन्दनमित्यादिप्रत्ययानां विशेषणांशे विशेष्ये यः सन्निकर्षस्तज्जन्यत्वाभावेनाव्याप्त्यापत्तेः । केचित्तु । तादृशलिङ्गधर्मिभावरूपकरणसन्निकर्षाश्रयत्वेन पक्षस्यैव विषयत्वं स्यात् न लिङ्गिनः । तथा च तत्राव्याप्तिरिति अत्र तात्पर्यमाहुः । **सन्निकर्षाभावादिति** । संयोग-समवाययोरेव सन्निकर्षत्वादिति भावः ।

**वं०प०— श्रोत्रेति** । श्रोत्रसन्निकृष्टवाक्यजन्यवाक्यार्थज्ञानं प्रति श्रोत्रं विषयः स्यादिति दूषणं वाक्यस्य कारणत्वभावेन परिहार्यमित्यर्थः । **संसर्गेत्यादि** । संसर्गधर्मका ये पदार्थास्तद्वाची यः पदसमुदायस्तद्रूपं यद्वाक्यं तद्विषयकज्ञानेनेत्यर्थः ।

**आनन्दः—** नन्वेवमपि श्रोत्रादिसन्निकृष्टेन वाक्येन वाक्यार्थज्ञानजननात्सन्निकृष्टस्य शब्दज्ञानकरणत्वात् श्रोत्रस्यापि वाक्यार्थज्ञानविषयत्वं स्यादित्यतिव्याप्तिरित्यत आह **अनेनैवेति** । अतिदेशार्थमाह **वाक्येति** । तत्रांशादावतिव्याप्तिः शङ्कते **तथापीति** । अतिप्रसङ्गपरिहर्तुं सन्निकर्षान् शङ्कते **प्रत्त्यासत्तिमात्रमिति** । इदमन्येन संबद्धमिति व्यवहारकारणीभूतं संबन्धमात्रं सन्निकर्ष इत्यर्थः ।





**कं०रा०**— वस्तुतस्तु नियतविषयकजन्यज्ञानविषयस्यैव लक्ष्यत्वात् अनुमितिं प्रत्यनियतविषये पक्षे व्याप्तिचोदनेयम्। अत एव न्यायामृते इदं च नियतविषयकजन्यज्ञानविषयलक्षणमित्युक्तमिति ध्येयम्। **अभ्युपगत इति**। इन्द्रियस्य तत्तया तदनुभवजनितसंस्कारसहकृतत्वलक्षणो लिङ्गज्ञानस्य लिङ्गिना तद्व्याप्तलिङ्गविषयकत्वलक्षणो वाक्यज्ञानस्य वाक्यार्थेन संसर्गधर्मकपदार्थवाचिपदसमुदायविषयकत्वलक्षणश्च सन्निकर्ष एवं वदता त्वयाऽभ्युपगत इत्यर्थः। यद्यपि लिङ्गज्ञानस्य लिङ्गिव्याप्तलिङ्गविषयकत्वं वाक्यज्ञानस्य संसर्गधर्मकपदार्थवाचिपदसमुदायविषयकत्वं च सन्निकर्ष इत्यत्र विषयत्वस्य तद्रूपेण प्रवेशो आत्माश्रयापत्तिः। तथाऽपि लिङ्गज्ञानस्य लिङ्गिव्याप्तसंबन्धः सन्निकर्षो वाक्यज्ञानस्य वाक्यार्थपरवाक्यसंबन्धः सन्निकर्ष इति विषयत्वस्य संबन्धत्वेन रूपेण प्रवेशो तात्पर्यमवगन्तव्यम्।

**श्रीनिधि०— प्रत्यासत्तिमात्रमिति**। सन्निकर्ष इति संबध्यते।

**वा०चं०**— श्रोत्रसन्निकृष्टवाक्यजन्यवाक्यार्थज्ञाने श्रोत्रस्य विषयत्वापत्तिरिति वाक्यस्य करणत्वाभावेन परिहार्येत्याह **अनेनैवेति**। परिहारसाम्येऽप्यस्य पृथक्करणं पक्षस्य स्वसाध्यधर्मित्वाल्लिङ्गस्य तत्सन्निकर्षापेक्षा वाक्यस्य स्वग्राहकेन्द्रियत्वाच्छ्रोत्रसन्निकर्षापेक्षेति विशेषं द्योतयितुमिति ध्येयम्। यद्यपि श्रोत्रवाक्यसन्निकर्षस्य वाक्यज्ञानजनकतयाऽन्यथासिद्धत्वेन न वाक्यार्थज्ञानजनकत्वमित्यपि समाधातुमुचितम्। तथाऽपि ज्ञानकरणत्वस्य स्वसिद्धान्ततया तत्र प्राप्तानुपपत्तिपरिहारार्थकोपक्षेपाय च ज्ञानकारणत्वोक्त्या वाक्यस्य कारणत्वाभावेनैव समाधानसंभवे सन्निकर्षे विवक्षितकारणत्वाश्रयणेन न किमपि प्रयोजनमित्याशयात्। अयमाशयो लिङ्गज्ञानविषयेऽपि द्रष्टव्यः। एवमतिव्याप्तिं निरस्य पूर्वपक्षोद्भाविता तत्तांशेऽव्याप्तिमिदानीमुपक्षिप्तलिङ्गज्ञानवाक्यज्ञानविषये च तां सन्निकर्षोपपादनेन परिहर्तुं तच्छङ्कामुत्थापयति **तथाऽपीति**। परमुखेनैव सन्निकर्षविशेषं तत्रापि द्रढयितुमसन्निकृष्टज्ञापनेऽतिप्रसङ्गात्सन्निकर्षेऽवश्याभ्युपगमनीये किं तद्विशेषचिन्तया तावतैवाव्याप्तिपरिहारादिति तावत्समाधत्ते **असन्निकृष्टेति**। ननु नियामकसद्भावान्नासन्निकृष्टज्ञापनेऽप्यतिप्रसङ्ग इत्याशङ्कते **तदनुभवेति**। ननु संयोगादेरनङ्गीकारान्न सन्निकर्षाभ्युपगम इत्यतोऽतिप्रसङ्गभञ्जकं नियामकं प्रत्यासत्तिपदाभिधेयं सन्निकर्ष इत्युच्यते। संयोगादेरपि सन्निकर्षत्वेन विवक्षायामेतदेव निमित्तमिति तादृशनियामकाभ्युपगमे कथं सन्निकर्षानभ्युपगम इत्याह **न हीति**।

**वा०र०**— **पूर्वपक्षोद्भाविता** पूर्वपक्षे उत्प्रेक्षितामिति सप्तमीसमासः। इतःपरं ननु तथापि चाक्षुषज्ञानत्वावच्छिन्न इत्यादिना कण्टकोद्धारे तरङ्गिण्यां च प्रवर्तितशङ्कानुसारेण शङ्काकरणम्। तरङ्गिणीकृतपरिहारानुवादेन तद्दूषणम्। कण्टकोद्धारोक्तरीत्या स्वोत्प्रेक्षितप्रकारेण च स्वसंमतपरिहाराभिधानमिति विवेको बोध्यः।

**स०व्र०**— वाक्यज्ञानस्य कारणत्वाभ्युपगमात्तस्य च श्रोत्रेणासन्निकर्षान्न तत्रातिव्याप्तिरित्याह **अनेनैवेति**।





**स०ना०**— एतेनानुमितौ साध्यधर्मिणो विषयत्वेन नानिष्टापादनमिति परास्तम् । नेदमपि दूषणं परमतेऽस्तीत्याह **लिङ्गज्ञानस्यैवेति** । लिङ्गस्य करणत्वाभावात् । लिङ्गसाध्यधर्मिसंबन्धो न विषयताप्रयोजक इति भावः । यद्यपि करणसन्निकर्षस्य ज्ञानविषयप्रयोजकत्ववादिमते धूमज्ञानस्य साध्यधर्मिसन्निकर्षोऽस्ति न वा । आद्ये किमनेन लिङ्गकरणतापरित्यागेन ज्ञानकरणतास्वीकारे प्रागुक्तदोषानिस्तारात् । नेति पक्षे पर्वते पर्वतत्वा-दीनामपि विषयत्वं न स्यादिति दोषोऽस्ति । तथापि । लिङ्गसन्निकर्षमादायाभिहितो प्रसङ्गः परिहृतो भवतीति ज्ञानकारणतापक्षोऽभिहितः । अस्मन्मते तु नायं दोषः । तथाहि लिङ्गं ज्ञानं वास्य ज्ञानं च लिङ्गिनि वाक्यार्थे चानुप्रमाणं तत एव लिङ्गज्ञानं लिङ्गिज्ञानविषयकवाक्यज्ञानं च वाक्यार्थविषयकम् । अनुप्रमाणस्य स्वजन्यज्ञानविषयविषयकत्वनियमात् । ततश्च लिङ्गिज्ञानविषयत्वादनुमितौ पर्वतपर्वतत्वे भासेते । सन्दिग्धत्वं तु तदविषयत्वान्न भासत इति । अयं तु दोषः परमतेऽस्तीत्याह **तथापीति** । परमते समाधिमाह **असन्निकृष्ट इति** । सन्निकर्षाभावेऽपि नातिप्रसङ्ग इत्याशङ्कते **तदनुभवेति** । परमतेनैव समाधानमाह **तर्ह्यभ्युपगत इति** ।

**विठ०**— एवमतिव्याप्तिं निरस्य तत्तांशे व्याप्तिमिदानीं उपक्षिप्तलिङ्गवाक्यज्ञानविषये च तत्तां सन्निकर्षोपपादनेन परिहर्तुं तच्छङ्कामुत्थापयति **तथापीति** । परमुखेनैव सन्निकर्षसद्भावं वाचयितुं तदनङ्गीकारे अतिप्रसङ्गमाह **असन्निकृष्टेति** । परोऽतिप्रसङ्गपरिहारमाशङ्कते **तदनुभवेति** । अतीतादिपदार्थानुभवजनितसंस्कार एव तत्तांशसन्निकर्षरूपः लिङ्गिनाव्याप्तलिङ्गविषयज्ञानस्यापि लिङ्गलिङ्गिनोः व्याप्यव्यापकभावः लिङ्गतज्ज्ञानयोः विषयविषयिभाव इति परम्परासन्निकर्षः वाचकतया वाक्यार्थैः सन्निकृष्टेन वाक्येन तज्ज्ञानस्य तद्विषयत्व-रूपपरम्परासन्निकर्षसद्भावान्नातिप्रसङ्ग इति परस्याशयः सममेतदस्मन्मतेऽपीत्याह **तर्हीति** । तथापि संयोग-संयुक्तसमवायादिप्रधानसन्निकर्षाभावादव्याप्तिरिति चेन्न यत्किञ्चित्प्रत्यासत्तिमात्रस्यैव सन्निकर्षत्वोपपत्तेः अन्यथा सन्निकृष्टज्ञानेऽतिप्रसङ्गादिति उक्तदोषापातादित्याशयेनाह **न हि संयोगादिरेवेति** ।

**चषकः**— ज्ञायमानलिङ्गमनुमितिकरणमिति मतमाश्रित्यातिव्याप्तिमाशङ्कते **लिङ्गेति** । अत्र साध्य-पदोपादानं दृष्टान्ततयोपयुज्यते । अत्र व्याचक्षाणाः यद्यपि पक्षस्यानुमितिविषयत्वमिष्टमेवेतिशङ्का निर्दलैव भाति तथापि प्रत्यक्षादिप्रमाणान्तरसिद्धस्यैव पक्षत्वनियमात् न तस्यानुमित्यसाधारणविषयत्वमित्याशयादिति व्याचक्षते । अनयैव भङ्ग्या शङ्कमानाः इमामेव समाहितिं लिङ्गिविषयकत्वांशे पक्षविषयकत्वं स्यादित्यापादनात् । अंशभेदविवक्षायाश्चावश्यकत्वात् । अन्यथा सुरभिचन्दनमित्यादौ विशेषणांशे विशेष्ये यः सन्निकर्षः तज्जन्यत्वा-भावेनाव्याप्त्यापत्तेरिति विन्यासभेदेन विवृण्वते । यद्यपि सन्निकर्षस्योभयाश्रिततया करणीभूतलिङ्गेऽप्यतिव्याप्तिशङ्का सुवचा लिङ्गोपहितलैङ्गिकभानस्याकरे प्रत्याख्यातत्वात् । तथापि सिद्धान्ते तुल्यदिशेन्द्रियादावतिप्रसङ्गवारणाय करणप्रतियोगिकत्वघटितधर्मावच्छिन्नसन्निकर्षवृत्त्याधेयतानिरूपकत्वपर्यन्तस्यावश्यं विवक्षणीयतया तत्रापि तस्याः दुर्वचत्वात् । **सन्निकर्षाभावात्** संयोगादिषट्कान्यतमाभावात् । **तदनुभवेत्यादि** । तत्तया स्वगोचरानुभवजनित-संस्कार एवालौकिकी प्रत्यासत्तिरिन्द्रियस्य स्वनिरूपितव्याप्त्यवच्छिन्नहेतुवृत्तिप्रकारताकत्वमेव साध्येन लिङ्गज्ञानस्य स्वनिरूपितप्रतियोग्यनुयोगिभावापन्नपदार्थबोधकपदघटितकूटविषयकत्वं संसर्गेण वाक्यज्ञानस्य प्रत्यासत्तेरित्यर्थः ।





**गूढ०**— नन्वेवमपि श्रोत्रादिसन्निकृष्टे वाक्येन वाक्यार्थज्ञानजननात्तत्सन्निकृष्टस्य शाब्दज्ञानकारणत्वात् श्रोत्रस्यापि वाक्यार्थज्ञानविषयत्वं स्यादित्यतिव्याप्तिरित्यत आह **अनेनैवेति** । अतिदेशार्थमाह **वाक्येति** । तत्रांशादावतिव्याप्तिः शङ्कते **तथापीति** । अतिप्रसङ्गं परिहर्तुं सन्निकर्षान् शङ्कते **प्रत्यासत्तिमात्रमिति** । इदमनेन संबद्धमिति व्यवहारकारणीभूतं संबन्धमात्रं सन्निकर्ष इत्यर्थः ।

**३५९ सु०— तथाऽपि रूपप्रतीतेरात्मा विषयः प्रसज्येत । तत्र मनसः करणत्वात् । आत्ममनःसन्निकर्षस्यापि रूपज्ञानं प्रति कारणत्वादिति चेन्न । असाधारणकारणस्य विवक्षितत्वात् । मनसश्च साधारणत्वात् ॥ तर्हि मनःसन्निकृष्टेन चक्षुषा जायमानं रूपज्ञानं मनोविषयमापन्नमिति चेन्न । सन्निकर्षस्याप्यसाधारणकारणतया विवक्षितत्वात् । चक्षुर्मनः-सन्निकर्षो हि द्रव्यादिज्ञानसाधारणः ॥ एवमन्येऽपि क्षुद्रोपद्रवाः परिहरणीयाः ।**

**परि०**— पुनरपि स्थलान्तरेऽतिव्याप्तिमाशङ्क्य निराह **तथापि रूपेत्यादिना** । नन्वथापि तद्व्याप्तलिङ्गविषयेण च लिङ्गज्ञानेनेत्यत्र वक्ष्यमाणवाक्यविषयज्ञानेन चेत्यत्र च विषयत्वनिर्वचनशरीरे विषयत्वप्रवेशेनात्माश्रयः । नित्यज्ञानविषये चात्मतद्धर्मादौ योगिप्रत्यक्षविषयेऽतीतानागतादौ सुरभि-चन्दनमित्याद्युपनीतचाक्षुषप्रत्यक्षविषये सौरभ्यादौ चाव्याप्तिः । यत्त्वतत्त्वजात्योरभावेनाननुगमश्चेत्यत आह **एवमन्येऽपीति** । लिङ्गज्ञानवाक्यज्ञानयोर्लिङ्गवाक्याभ्यां संबन्धस्य विषयत्वरूपतया विषयेणे-त्युक्तावपि न विषयत्वेनानुप्रवेशः । किन्तु तद्व्याप्तलिङ्गसंबन्धिना वाक्यार्थपरवाक्यसंबन्धिनेत्येवं-रूपेणोभयसंमतसंबन्धित्वेनैव । अतो नात्माश्रयः । नापि नित्यज्ञानविषयादावव्याप्तिः । अस्य नियतविषयजन्यज्ञानविषयत्वमात्रलक्षणत्वेनान्यस्यालक्ष्यत्वात् । योगिप्रत्यक्षविषये च योगजधर्मस्यैव प्रत्यासत्तिरूपत्वात् । यत्त्वादेरजातित्वेऽपि कस्य को विषय इति प्रश्नेऽस्यायं विषय इत्यननुगतस्यैव वाच्यत्वादिति ।

**यादु०**— **चक्षुर्मनःसन्निकर्षो हीति** । नन्वेवं चक्षुषोऽपि द्रव्यादिज्ञानसाधारण्यात्कथमसाधारण्यम् । उच्यते । अत्र करणे सन्निकर्षे च नैकविधमसाधारण्यं विवक्षितम् । किं त्वनेकविधमेव । तथा हि । प्रत्यक्षरूपकरणे चक्षुरादौ चाक्षुषत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । अनुमानागमयोश्चानुमितित्वशाब्दत्वावच्छिन्न-कार्यतानिरूपितकारणताश्रयत्वमसाधारण्यम् । सन्निकर्षस्य चैकस्य भिन्नविषयकानेकज्ञानजनकत्वाभावरूप-मसाधारण्यं विवक्षितम् । इदं चेन्द्रियसन्निकर्षादावस्ति । एकेन रूपेन्द्रियसन्निकर्षेणैकस्य रूपज्ञानस्यैव जननात् । घटादिज्ञानस्य घटादिसन्निकर्षजन्यत्वेन रूपेन्द्रियसन्निकर्षेणाजननात् । चक्षुर्मनःसन्निकर्षे च नास्ति । तेनैकेनैव रूपद्रव्याद्यनेकज्ञानजननात् । अत एवोक्तम् । चक्षुर्मनःसन्निकर्षो हि द्रव्यादिज्ञानसाधारण इति । आत्ममनःसन्निकर्षे

चेदमसाधारण्यमस्ति । वीचीतरङ्गन्यायेन शब्दोत्पत्तिमङ्गीकुर्वतां तार्किकाणां मते विभुकार्यविशेषगुणभेदस्य समवायिकारणभेदाधीनत्वदर्शनेन प्रतिज्ञानमात्मनः संयोगानां भिन्नत्वात्सिद्धान्तेऽपि तथा । तत्तद्विषयसंबद्ध-मनोंशानामेवात्माधिष्ठितानां तत्तद्विषयकवृत्तिरूपेण परिणामाङ्गीकारात् । चक्षुषि प्रविष्टं तु मनोंशिरूपमेवात-स्तत्संयोगस्य साधारण्योक्तिरुपपन्नेति ज्ञातव्यम् । न चैवं मनसः साधारणकारणत्वोक्तिविरोधः । सन्निकर्ष-गतासाधारण्यस्य सत्त्वेऽपि करणे विवक्षितस्य जन्यज्ञानत्वव्याप्यजात्यवच्छिन्नकार्यतानिरूपितकारणताश्रयत्व-रूपासाधारण्यस्याभावेन तदुक्तिसंभवात् । एवं च सन्निकर्षेऽसाधारण्यविवक्षयैवात्मनो विषयत्वपरिहारसंभवे पुनः करणेऽसाधारण्यं न विवक्षणीयं व्यर्थत्वादिति दूषणमलग्नकं वेदितव्यम् । उक्तरीत्या आत्ममनःसन्निकर्षस्याप्य-साधारण्यत्वेनोक्तदोषपरिहाराय करणेऽप्युक्तासाधारण्यस्यावश्याश्रयणीयत्वात् । मनसश्च जन्यात्मविशेषगुणत्वा-वच्छेदेन जनकतया साधारण्यात् । तथा चायं लक्षणवाक्यार्थः । ज्ञानासाधारणकारणनिरूपितसन्निकर्षानुयोगित्वं विषयत्वमिति । अत्र ज्ञानासाधारणकारणेति सन्निकर्षविशेषणमवधेयम् । नन्वथाऽप्यनुमितौ व्यापकतावच्छेदादेः कथं विषयत्वम् । तस्य लिङ्गज्ञानेन व्याप्तिद्वारकोक्तसंबन्धाभावात् । एवं शाब्दे बोधेऽन्वयप्रतियोगितावच्छेदादेर्विषयत्वं न संभवति । तत्राप्युक्तकरणसंबन्धाभावात् । किं चाव्याप्तिपरिहाराय लिङ्गज्ञानस्य लिङ्गिना वाक्यज्ञानस्य च वाक्यार्थेन यः संबन्धो निरूपितः स न युक्तः । अन्योन्याश्रयात् । विषयत्वज्ञाने तद्घटितोक्तसंबन्धमादायाव्याप्तिपरिहारस्तस्मिंश्च सति निर्व्यूढेन लक्षणेन विषयत्वज्ञानमिति परस्परसापेक्षत्वात् । किं चेश्वरज्ञानस्याजन्यत्वेन तद्विषयाव्याप्तिरतः कथमेतदित्यत आह **एवमन्येऽपीति** । अयमभिप्रायः । यत्तावदुक्तमनुमितौ व्यापकतावच्छेदादेः कथं विषयत्व-मिति । तत्र ब्रूमः । व्यापकतावच्छेदकावच्छिन्नलिङ्गिव्याप्तलिङ्गविषयकत्वं लिङ्गज्ञानस्य लिङ्गिसंबन्धः । तेन व्यापकतावच्छेदकादीनामप्युक्तक्रमेण लिङ्गज्ञानेन संबन्धोऽस्त्येवेति का कथन्ता । एवं शाब्दे बोधेऽन्वय-प्रतियोगितावच्छेदकादेर्विषयत्वोपपादनायान्वयप्रतियोगितावच्छेदकावच्छिन्नत्वं सन्निकर्षप्रविष्टपदार्थे विशेषणं देयम् । यदप्युक्तमन्योन्याश्रयत्वमिति तत्र यद्यप्युक्तरीत्या लिङ्गज्ञानादेर्लिङ्गिना विषयत्वमेव संबन्धस्तथाऽपि स इदानीमुभयसंमतेन संबन्धत्वेनैव ज्ञेयो न तु विषयत्वेनेति नोक्तदोषः । तथा च तद्व्याप्तलिङ्गसंबन्धो लिङ्गज्ञाने तत्परवाक्यसंबन्धश्च वाक्यज्ञाने सन्निकर्ष इत्येव व्यवहर्तव्यमिति ज्ञेयम् । ईश्वरज्ञानविषयाव्याप्तिस्तु जन्यज्ञान-विषयत्वस्यैव लक्ष्यत्वान्न संभवतीति सर्वेऽपि क्षुद्रोपद्रवाः परिहर्तव्या इति ।

**आनन्दः**— आत्मन्यतिव्याप्तिं शङ्कते **तथापीति** । मनस्यतिव्याप्तिं शङ्कते **तर्हीति** । ननु कारणसाधा-रणत्वविवक्षा व्यर्था । सन्निकर्षासाधारणविवक्षैवात्मनः सन्निकर्षमादायातिप्रसङ्गाभावात् । तस्य साधारणत्वात् । किं चक्षुर्मनःसन्निकर्षस्य द्रव्यादिज्ञानसाधारणसत्त्वेनासाधारणत्वाभावान्नातिव्याप्तिरिति यदि तदा विषयेन्द्रिय-सन्निकर्षस्यापि द्रव्यादिज्ञानसाधारणत्वेनासाधारणत्वाभावाद्रूपादेरपि विषयत्वं न स्यात् । यदि तद्विषये-न्द्रियसन्निकर्षः साधारणकारणं तत्तद्विषयेन्द्रियसन्निकर्षत्वेनासाधारणकारणमिति नातिव्याप्तिरिति । तर्हि चक्षुर्मनःसन्निकर्षस्य द्रव्यादिज्ञानसाधारणत्वेऽपि तत्तच्चक्षुर्मनःसन्निकर्षस्यासाधारणकारणत्वान्मनस्यतिव्याप्ति-स्तदवस्थैवेत्यत आह **एवमन्येपीति** । रूपादिसन्निकृष्टचक्षुषः यच्छब्देन विवक्षितत्वात् तत्सन्निकृष्टेन मनसा





जन्यरूपादिज्ञाने चक्षुषो विषयत्वं स्यादिति करणेऽप्यसाधारणत्वस्यावश्यकत्वात् । तत्र सन्निकर्षस्य असाधारणत्वान्मनसश्च साधारणत्वात् किञ्चेत्यपि न यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि कार्यकारणभाव इति हि न्यायः । न तु यत्सामान्ययोः कार्यकारणभावोऽसति बाधके तद्विशेषयोरपि कार्यकारणभाव इति न्यायः । येन चक्षुर्मनःसन्निकर्षस्य साधारणत्वात् तत्तचक्षुर्मनःसन्निकर्षस्यासाधारणकारणत्वम् । विषयेन्द्रियसन्निकर्षस्य साधारणकारणत्वम् । तत्तद्विषयेन्द्रियसन्निकर्षस्यासाधारणकारणत्वमिति वक्तव्यं स्यात् ।

**कं०रा०**— नन्वतीतानागतविषयस्य योगिज्ञानस्यातीतानागतासन्निकृष्टयोगीन्द्रियजन्यस्यातीतानागतविषयत्वं स्मर्यमाणार्थासन्निकृष्टमनोजन्यस्य स्मरणस्य स्मर्यमाणार्थविषयत्वं च न स्यादित्यत आह **एवमिति** । योगीन्द्रियस्यातीतानागतपदार्थैः सह तत्तत्पदार्थोपदर्शकयोगजादृष्टसहकृतत्वलक्षणो मनसः स्मर्यमाणार्थेन सह तत्संबन्ध्यनुभवजनितसंस्कारसाचिव्यलक्षणश्च सन्निकर्षोऽस्तीत्येवंप्रकारेणैतादृशक्षुद्रोपद्रवाः परिहर्तव्या इत्यर्थः ।

**श्रीनिधि०— असाधारणकारणस्येति** । तथा च सन्निकृष्टं करणं यज्ज्ञानमुत्पादयतीत्यत्र सन्निकृष्टमसाधारणं करणमिति संबध्यते । **सन्निकर्षस्याप्यसाधारणकारणतयेति** । तथा च ज्ञानासाधारणकारणीभूतसन्निकर्षाश्रयेण येन सन्निकृष्टमसाधारणं करणं यज्ज्ञानमुत्पादयति स तस्य विषय इति निष्कर्षः । **एवमन्येपीति** । अनुमिति शाब्दस्थले प्रसज्यमाना अतिप्रसङ्गा इत्यर्थः ।

**वा०चं०**— करणे सन्निकर्षे चासाधारण्यं विवक्षितं तद्व्यावर्त्यं शङ्कते **तथाऽपीत्यादिना** । ननु तथाऽपि चाक्षुषज्ञानावच्छिन्ने चक्षुर्मनस्संयोगस्यासाधारणत्वाच्चाक्षुषज्ञाने मनसो विषयत्वं स्यादेव । वायुसंयोगादिजन्ये वायुस्पर्शज्ञाने वायूपनीतावयवगन्धादिज्ञाने च वायुतदवयवादेर्विषयत्वं स्यात् । कूटलिङ्गज्ञानतात्पर्यभ्रमजन्यलिङ्गिज्ञानवाक्यार्थज्ञानयोस्तद्व्याप्तविषयकत्वाद्यसंभवेन लिङ्ग्यादिविषयकत्वानापत्तिश्च । सन्निकर्षासाधारण्यविवक्षयैव रूपप्रतीतेरात्मविषयकत्वाभावसिद्धौ करणासाधारणत्वविवक्षाया वैयर्थ्यं चेत्यादिदोषान्नेदं लक्षणं युक्तमित्यत आह **एवमिति** । अत्र केचित्तत्तदिन्द्रियमनस्संयोगानां तत्तज्ज्ञानकरणत्वकल्पनस्यानेककारणतदवच्छेदकल्पनया गौरवकरत्वेन चाक्षुषज्ञानत्वावच्छिन्ने चक्षुर्मनस्संयोगस्याकारणत्वान्नाद्यदोषप्रसङ्ग इति परिहारमाहुः । तन्न । तथा सति गौरवादेव रूपचक्षुस्सन्निकर्षादेरसाधारणकारणस्याकल्पनीयतया सन्निकर्षासाधारण्यविवक्षायां रूपप्रतीते रूपविषयकत्वाभावप्रसङ्गात् । न च यत्किञ्चिद्दण्डेन यत्किञ्चिद्घटवद्यत्किञ्चिदर्थेन्द्रियसन्निकर्षेऽप्यन्यविषयकज्ञानापत्त्या प्रागभावस्येव तत्तदिन्द्रियसन्निकर्षस्य तत्तज्ज्ञानहेतुताया अवश्याङ्गीकार्यत्वेऽप्यर्थसन्निकृष्टेन्द्रिये मनस्सन्निकर्षस्य हेतुत्वाभ्युपगमेऽतिप्रसङ्गाभावेनात्र विशिष्य हेतुहेतुमद्भावस्य न कल्पना अन्यथा दण्डादावपि विशिष्य तत्कल्पनापत्तेरिति वाच्यम् । अर्थसन्निकृष्टेन्द्रियान्तरे मनस्सन्निकर्षे स्वार्थसन्निकृष्टचक्षुषि मनस्सन्निकर्षाभावेऽपि तेन स्वार्थज्ञानापत्तिरूपातिप्रसङ्गस्यात्रापि सत्त्वात् । तस्माद्योग्यसन्निकर्षस्यैव विवक्षितत्वान्नाद्यो दोष इत्येव परिहारो युक्तः । अत एव न द्वितीयोऽपि । ज्ञानकरणस्थले तद्व्याप्ततया





तल्लिङ्गकविषयत्वस्य संसर्गधर्मकपदार्थपरतया ज्ञातपदसमुदायविषयकत्वस्य ज्ञानघटितसन्निकर्षस्य कल्पनान्न तृतीयदोषप्रसङ्गः। केचित्तु प्रत्यक्षज्ञानेऽसता रजतादिना सन्निकर्षाभावेऽप्यतीतादिना तत्सद्भाववत्कूटलिङ्गादिस्थलेऽप्यसता सन्निकर्षोऽगत्या स्वीकर्तव्य एवेति न तृतीयदोषप्रसङ्ग इत्याहुः। सन्निकर्षासाधारण्यविवक्षयोक्तानुपपत्तिपरिहारेऽपि चक्षुर्मनःसन्निकर्षासाधारणकारणताया अधुनैवोपपादितत्वाच्चक्षुःसन्निकृष्टमनोजन्यरूपज्ञाने चक्षुषोऽविषयत्वाय करणासाधारण्यस्यापि विवक्षणीयत्वात्। न च सन्निकर्षयोग्यताविवक्षणेनैवैतद्दोषपरिहारादसाधारण्यं न क्वापि विवक्षणीयमिति वाच्यम्। एतद्बलेनैव तद्विवक्षाया लाभादित्याशयात्। तस्मान्न चतुर्थोऽपि दोषः। तद्व्याप्तलिङ्गविषयकत्वादेः सन्निकर्षत्वेनैव लक्षणशरीरप्रवेशान्नात्माश्रयोऽपीति । ज्ञानासाधारणकारणनिष्ठासाधारणकारणसन्निकर्षप्रतियोगित्वं विषयत्वमिति निरवद्यं लक्षणमिति भावः।

**स०व्र०— रूपज्ञानमिति** । पटादेश्चक्षुर्विषयत्वेऽपि रूपस्यैवासाधारणविषयत्वात्तस्यैव ग्रहणम्। **सन्निकर्षस्यापीति** । नन्वेवं करणासाधारणत्वविवक्षा व्यर्था । सन्निकर्षासाधारणत्वविक्षयैवात्ममनःसन्निकर्षमादायातिप्रसङ्गाभावात्। तस्य साधारणत्वादिति चेन्न । रूपादिसन्निकृष्टचक्षुषो यच्छब्देन विवक्षितत्वात् तत्सन्निकृष्टमनसा जन्यरूपादिज्ञाने चक्षुषोऽपि विषयत्वं स्यादिति करणेऽप्यसाधारणत्वस्यावश्यकत्वात्। तत्र च सन्निकर्षस्यासाधारण्यात्। मनसश्च साधारणत्वात्। ननु तथापि मनःसन्निकृष्टचक्षुर्जन्यचाक्षुषज्ञाने मनसो विषयत्वं स्यात्। तत्र मनश्चक्षुःसन्निकर्षस्यासाधारणत्वात्। चक्षुर्लक्षणकरणस्याप्यसाधारणत्वात्। रूपादिज्ञाने असाधारणत्वाभावेऽपि चाक्षुषज्ञाने चक्षुर्मनःसन्निकर्षस्यासाधारण्यादिति चेन्न। करणभिन्नयत्सन्निकृष्टासाधारणकरणेनेति विवक्षितत्वात्। मनश्च न करणभिन्नमिति न तत्रातिव्याप्तिः। न चैवं सन्निकर्षासाधारणत्वं व्यर्थं चक्षुर्मनःसन्निकर्षस्य करणभिन्नसन्निकर्षत्वाभावादेवातिप्रसङ्गाभावादिति वाच्यम् । तत्सन्निकर्षस्य हेतुत्वे मानाभावात्। अवर्जनीयसन्निधित्वाच्चास्येति भावः। तदेतदाह **एवमन्येऽपीति**। केचित्तु **चक्षुर्मनःसन्निकर्षो हीति**। चक्षुर्मनःसन्निकर्षस्य इन्द्रियमनःसन्निकर्षत्वेन जन्यसाक्षात्कारत्वावच्छेदेनैव हेतुत्वात्साधारण्यमिति भावः। न च चाक्षुषत्वावच्छिन्नं प्रति हेतुत्वे असाधारण्यमपि किं न स्यादिति वाच्यम्। तथात्वे श्रवणाद्यवच्छेदेन श्रोत्रादिमनःसंयोगत्वेनापि हेतुत्वस्य कल्प्यत्वेऽनेककारणताकल्पनागौरवप्रसङ्गात्। न चैवं चक्षुरर्थसन्निकर्षस्यापि जन्यसाक्षात्कारत्वावच्छेदेन घटादिसाक्षात्कारे इन्द्रियार्थसन्निकर्षत्वेनैव हेतुत्वेनासाधारण्याभावादव्याप्तिः । चाक्षुषत्वाद्यवच्छेदेन चक्षुरादीनामर्थसन्निकृष्टचक्षुष्ट्वादिनैव कारणत्वं वाच्यम्। अन्यथाऽतिप्रसङ्गात्। तथाच विनिगमनाविरहाच्चक्षुराद्यर्थसन्निकर्षाणामपि चाक्षुषत्वाद्यवच्छेदेनैव चक्षुरर्थसन्निकर्षत्वादिना हेतुत्वं वाच्यमिति प्रतिभाति। तदिदमाह **एवमन्येऽपीति**। यद्वा लिङ्गज्ञानस्य लिङ्गिना वाक्यज्ञानस्य च वाक्यार्थेन संबन्धानिरूपणादव्याप्तिः। न च तद्व्याप्तलिङ्गविषयत्वं लिङ्गज्ञाने संसर्गधर्मकपदार्थवाचिपदसमुदायरूपवाक्यविषयत्वमेव च वाक्यज्ञाने संबन्ध इत्युक्तमिति वाच्यम्। अन्योन्याश्रयत्वादित्यत आह **एवमन्येऽपीति**। यद्यप्युक्तरीत्या लिङ्गज्ञानादेर्लिङ्गादिना विषयत्वमेव संबन्धस्तथापि स इदानीमुभयसंमतेन संबन्धत्वेनैव ज्ञेयो न तु विषयत्वेनातो नोक्तदोषः।





**स०ना०**— परमते दोषमाह **तथापीति**। परमतेनोत्तरमाह **असाधारणेति**। परमते दूषणमाह **तर्हीति**। परमते दूषणं परिहरति **सन्निकर्षस्यापीति**। नेदं पृथग्विशेषणं यत्सन्निकृष्टेनासाधारणेति सन्निकृष्टासाधारण्यविवक्षयैव तदन्तर्गतसन्निकर्षासाधारण्यविवक्षेति बोध्यम्। एतेन सन्निकर्षासाधारण्यविवक्षयैव पूर्णत्वात् करणासाधारण्यविवक्षा व्यर्थेति परास्तम्। **एवमन्येऽपीति**। परमत इति शेषः।

**विठ्ठ०**— यथाकथञ्चित् प्रत्यासत्तिमात्रस्य विषयताघटसन्निकर्षत्वाङ्गीकारे अतिप्रसङ्गं शङ्कते **तथापीति**। यत्किञ्चित्प्रत्यासत्तिमात्रस्यापि प्रतीतिं प्रति असाधारणता अस्ति चेदस्तु विषयतानिरूपकसन्निकर्षत्वं तदभावेन सन्निकर्षत्वं तथाचात्मसन्निकृष्टस्य मनसो ज्ञानमात्रं प्रति कारणत्वेन रूपज्ञानासाधारणकारणत्वाभावान्नातिव्याप्तिरिति परिहरति **नेति**। तथापि मनःसन्निकृष्टस्य चक्षुषो रूपज्ञानासाधारणकारणत्वात् रूपज्ञानस्यापि मनोविषयकत्वं स्यादित्याशङ्क्य चक्षुर्मात्रसाधारणकारणं न विवक्षितं किन्तु तत्सन्निकर्षोऽपि प्रकृते चक्षुरूपसन्निकर्ष एव रूपज्ञानासाधारणं कारणं न तु चक्षुर्मनःसन्निकर्षः तस्य द्रव्यादिज्ञानसाधारणत्वात् अतो न रूपज्ञानस्य मनोविषयकत्वप्राप्तिरित्याशयेन परिहरति **तर्हीति**। ननु तथापि चाक्षुषज्ञानत्वावच्छिन्ने चक्षुर्मनःसन्निकर्षस्य असाधारणकारणत्वात् चाक्षुषज्ञाने मनसो विषयत्वं स्यात् तथा कूटलिङ्गज्ञानजन्यानुमितेः स्वसाध्यविषयकत्वं न स्यात् तत्र लिङ्गाभिमते साध्यनिरूपितव्याप्त्यभावेन तद्वारकोक्तसन्निकर्षाभावात् एवं शाब्दभ्रमेऽपि संसर्गसत्त्वेन सन्निकर्षासंभवात्। न तद्वाक्यार्थस्य वाक्यजन्यज्ञानविषयत्वं किञ्च ईश्वरज्ञानस्याजन्यत्वेन न तत्र तद्विषयत्वं विश्वस्येत्यादिदोषसद्भावान्नेदं लक्षणं युक्तमित्यत आह **एवमन्येऽपीति**। यदत्रोक्तं चाक्षुषज्ञानत्वावच्छिन्ने चक्षुर्मनःसन्निकर्षस्यासाधारणत्वान्मनसोऽपि विषयत्वं स्यादिति न तद्युक्तं घटपटादिचाक्षुषज्ञानविशेषे योग्यमनःसन्निकृष्टचक्षुष एव अर्थसन्निकर्षद्वारा कारणत्वेन चक्षुर्मनःसन्निकर्षमात्रस्य असाधारणकारणत्वाभावात्। यच्चोक्तं कूटलिङ्गज्ञानजन्यानुमितेः स्वसाध्यविषयत्वं न संभवतीति तच्च न संभवति पक्षे अपक्षधर्मे कूटलिङ्गे तत्साध्यनिरूपितव्याप्तेरसत्त्वेऽपि वस्तुतो लिङ्गज्ञाने साध्यव्याप्तलिङ्गविषयत्वरूपोक्तसन्निकर्षोऽस्त्येव। अतः साध्यव्याप्तसाधनज्ञानबलात् असदपि साध्यं अतीतादाविवानुमितिविषयो भवतीति। न चैवं सति प्रात्यक्षिक-विभ्रमेऽप्यसदेव रजतादिकं विषयः स्यादिति वाच्यम्। लिङ्गविभ्रमे सर्वत्र ज्ञातलिङ्गस्यैव कारणत्वे नातीतादा-विवासत्त्वेऽपि ज्ञानप्राप्तसन्निकर्षः संभवति। प्रात्यक्षिकविभ्रमे तु विषयसंयोगस्यैव कारणताया वक्तव्यत्वात् असता सह सन्निकर्षायोगात् रजताविषयकत्वमिति। यदप्युक्तं शाब्दभ्रमेऽप्युक्तसन्निकर्षासंभवान्न विषयत्वमिति तदपि न संसर्गधर्मिकपदार्थवाचितया ज्ञातपदसमुदायात्मकवाक्यविषयत्वरूपस्य ज्ञानघटितस्य सन्निकर्षस्य विवक्षितत्वेनासतोऽपि तत्संभवात् जन्यज्ञानविषयत्वस्यैव लक्ष्यतावच्छेदकत्वान्नान्तिमक्षुद्रोपद्रव इति भावः। तथाच ज्ञानसाधारणकारणनिरूपिततदसाधारणकारणत्वावच्छिन्नप्रत्यासत्तिघटकत्वं विषयत्वमिति लक्षणं परेण यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते स तद्विषय इति लक्षणं दूषयित्वा तस्माद्यज्ज्ञानं यत्प्रतिभासं तदेव तस्यावलम्बनमिति उक्त्वा इदं रजतमिति रजतावभासे शुक्तिकालम्बनमित्यनुभवविरोधेऽपि अस्मदीयलक्षणे तदभावादिति भावः।





**चषकः**— करणे सन्निकर्षे चासाधारण्यनिवेशनिवर्तनीयामाशङ्कां प्रदर्श्य तन्निवेशस्य तच्छङ्का-निरसनौपयिकतामुपपादयति **तथापीत्यादिना साधारण इत्यन्तेन । असाधारणकारणस्य विवक्षितत्वादिति ।** ज्ञानत्वव्याप्यजात्यवच्छिन्नजन्यतानिरूपितजनकताश्रयत्वरूपासाधारणकारणत्वस्य करणे विवक्षिततया मनसश्च जन्यज्ञानत्वावच्छिन्नं प्रत्येव जनकतया तस्य च जातिरूपत्वाभावान्न क्षतिरिति भावः । **चक्षुषेति ।** ज्ञानत्वव्याप्यचाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकताशालित्वाच्चक्षुषोऽसाधारण्यमिति भावः । **सन्निकर्ष-स्यापीति ।** तत्तद्व्यक्तित्वावच्छिन्नज्ञानवृत्तिजन्यतानिरूपितजनकतारूपासाधारणकारणतया विवक्षितत्वादित्यर्थः । **चक्षुर्मनःसन्निकर्षो हीति ।** तत्तदर्थेन्द्रियसंयोगादीनां तत्तज्ज्ञानवृत्तितत्तद्व्यक्तित्वावच्छिन्नजन्यतानिरूपित-जनकतावच्चक्षुर्मनःसन्निकर्षस्य तादृशजनकतानङ्गीकारेण चाक्षुषत्वावच्छिन्नजन्यतानिरूपितजनकताया एवोरी-कृतेर्नासाधारण्यमिति भावः । प्रागभावस्य तत्तद्व्यक्तित्वावच्छिन्नं प्रतीवात्ममनःसन्निकर्षस्य तत्तदवच्छिन्न-प्रत्यये हेतुत्वोपगमावश्यम्भावात्तस्यासाधारण्यं सङ्गच्छत इति हृदयम् । विवृतं चैतद्विवृण्वानैः । इत्थं च करणसन्निकर्षासाधारण्ययोर्नानारूपत्वात् सन्निकर्षासाधारण्यविवक्षयैवात्मन्यतिप्रसङ्गवारणात्करणे तद्विवक्षणा-नर्थक्यशङ्कानवकाशः । अथैवमपि साध्यतावच्छेदकस्यानुमितौ अन्वयितावच्छेदकस्य शाब्दबोधे व्याप्तिभ्रम-जन्यानुमितौ साध्यस्य योग्यताभ्रमजन्यान्वयबोधे संसर्गस्य विषयत्वं दुरुपपादमित्यत आह **एवमिति ।** स्वावच्छिन्ननिरूपितव्याप्त्यवच्छिन्नहेतुवृत्तिप्रकारताकत्वस्य लिङ्गज्ञाने साध्यतावच्छेदकनिरूपितप्रत्यासत्तेः स्वावच्छिन्नैकतरव्यक्त्यनुयोगिकतादृशापरव्यक्तिप्रतियोगिकसंसर्गतात्पर्यकवाक्यविषयकत्वस्य वाक्यज्ञानेऽन्वयि-तावच्छेदकप्रत्यासत्तेः व्याप्तिघटकपदार्थानां सशृङ्खलविषयतानिवेशात्कूटलिङ्गस्थले तद्दिशैव योग्यताभ्रमस्थलेऽपि प्रत्यासत्तेः सूपपादतया न क्षतिरित्याशयः ।

**गूढ०**— आत्मन्यतिव्याप्तिं शङ्कते **तथापीति ।** मनस्यतिव्याप्तिं शङ्कते **तर्हीति ।** ननु कारणसाधारणत्व-विवक्षा व्यर्था । सन्निकर्षासाधारणविवक्षैवात्मनः सन्निकर्षमादायातिप्रसङ्गाभावात् । तस्य साधारणत्वात् । किञ्च चक्षुर्मनःसन्निकर्षस्य द्रव्यादिज्ञानसाधारणत्वेनासाधारणत्वाभावात् । नातिव्याप्तिरिति यदि तदा विषयेन्द्रियसन्निकर्ष-स्यापि द्रव्यादिज्ञानसाधारणत्वेनासाधारणत्वाभावाद्रूपादेरपि विषयत्वं न स्यात् । यदि च तद्विषयेन्द्रियसन्निकर्षः साधारणकारणं तत्तद्विषयेन्द्रियसन्निकर्षत्वेनासाधारणकारणत्वमिति नातिव्याप्तिरिति । तर्हि चक्षुर्मनःसन्निकर्षस्य द्रव्यादिज्ञानसाधारणत्वेऽपि तत्तच्चक्षुर्मनःसंन्निकर्षस्यासाधारणकारणत्वान्मनस्यतिव्याप्तिस्तदवस्थैवेत्यत आह **एवमन्येऽपीति ।** रूपादिसन्निकृष्टचक्षुषः यच्छब्देन विवक्षितत्वात् । तत्सन्निकृष्टेन मनसा जन्यरूपादिज्ञाने मनसो (चक्षुषो) विषयत्वं स्यादिति करणेऽप्यसाधारणत्वस्यावश्यकत्वात् । तत्र सन्निकर्षस्यासाधारणत्वात् । मनसश्च साधारणत्वात् । किञ्चेत्यपि न यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि कार्यकारणभाव इति हि न्यायः । न तु यत्सामान्ययोः कार्यकारणभावोऽसति बाधके तद्विशेषयोरपि कार्यकारणभाव इति न्यायः । येन चक्षुर्मनःसन्निकर्षस्य साधारणकारणत्वम् । तत्तच्चक्षुर्मनःसन्निकर्षस्यासाधारणकारणत्वम् । विषयेन्द्रियसन्निकर्षस्य साधारणकारणत्वम् । तत्तद्विषयेन्द्रियसन्निकर्षस्यासाधारणकारणत्वमिति वक्तव्यं स्यात् ।





**३६० सु०— तदेवं जन्यज्ञाने विषयत्वस्यान्यथाव्यवस्थिततत्वात् 'यज्ज्ञानं यत्प्रतिभासम्' इत्यन्यथापरिभाषणमनुपपन्नम् । न चैवं सत्यनुभवविरोधः, रजतावभासस्य शुक्तिकासन्निकृष्टकरणजन्यत्वेन तद्विषयत्वोपपत्तेः । न चातिप्रसङ्गः, दोषजन्यत्वतदभावादिना व्यवस्थोपपत्तेः । अन्यथा रजतज्ञानादरजते प्रवृत्तावपि कथं नातिप्रसङ्गः ॥**

**यत्पुना रजतावभासस्येत्याद्याशङ्क्य समाधानमभिहितं तज्ज्ञानैकत्वसमर्थनेन निराकरिष्यामः ।**

**बिन्दुः**— न्यायमते तु **यज्ज्ञानं यत्प्रतिभासमिति** । नन्वत्र यत् घटोऽयमित्यादिविज्ञानमिति लक्ष्यस्वरूपप्रतिपादकांशे सामानाधिकरण्यनिर्देशेन दोषाभावेऽपि लक्षणप्रतिपादकांशे यस्य प्रतिभास इति षष्ठ्यर्थानिरुक्तेः कथमेतदिति चेत् । उच्यते । पूर्वपक्षे परेणैव विषयत्वनिर्वचनानि खण्डयित्वा इदं निर्वचनं स्वयं सिद्धान्तितम् । तत्र यानि परेण खण्डितानि तेषु मध्ये यत्सन्निकृष्टेत्यादेः स्वयं परिष्कारं कृत्वा स्थापितम् । अत्र तु परेण य एव षष्ठ्यर्थः स्वीकरिष्यते स एवास्माभिरनुमंस्यत इति भावेन तस्यैवाभ्युपगमः कृतः । वस्तुतस्तु नेदानीं वयं विषयत्वनिर्वचनार्थमुद्यताः किन्तु रजतत्वप्रकारकज्ञानस्य शुक्तिविषयत्वं कथमिति प्रश्नस्योत्तरदानार्थम् अत एव पूर्वनिर्वचने यत्तदाद्युपबन्धः कृतः विषयत्वं त्वेकं नास्त्येव अनुगतधर्मवादिभिरपि केवलान्वय्येव तद्वाच्यं तच्च वस्तुत्वमेव पर्यवस्यति पुत्रत्वपितृत्वादिवत्केवलान्वय्यपि ससंबन्धिकमित्येतावान् परं विशेषः । तत्र च घटे यथा द्रव्यत्वपृथिवीत्वघटत्वाभिधेयत्ववस्तुत्वादयः तथा तथा व्यवह्रियमाणत्वात् एवं विषयत्वेन व्यवह्रियमाणत्वाद्विषयत्वमपि सर्वत्रेत्यविवादम् । तत्र घटोऽयमिति ज्ञानं पटविषयं कुतो न भवतीति पृच्छन्तं प्रति घटविषयत्वेनानुभूयमानत्वात् इत्येवोत्तरम् । यथा पृथुबुध्नोदराकार एव घटः तन्तुसमवेतः कुतो न घट इति प्रश्ने लोके घटत्वेनानुभवाद्व्यवहाराच्च ।

**परि०— तद्विषयत्वोपपत्तेरिति** । शुक्तिकाविषयत्वोपपत्तेरित्यर्थः । अन्यविषयज्ञानस्यान्यावभासत्वे दोषमाशङ्क्य निराह **न चेति** । दोषजन्यत्वतदभावादिनेत्यादिपदेन प्रागुक्तानुमितिविषयधर्मित्वतदभावादिग्रहः । **यत्पुनरिति** । ननु रजतावभासस्य रजतविषयत्वे तेन रजतेन भवितव्यमित्याशङ्क्य कथं न भवितव्यमित्यादिना रजतज्ञानस्य स्मृतित्वमुपेत्य तद्विषयस्य सत्त्वमुक्तम् । तत्त्वनुपदमेव 'एवं सति रजतस्यापि ज्ञानविषयता प्रसज्यत' इत्यादिना ग्रन्थेन निराकरिष्याम इत्यर्थः ।

**यादु०—** रजतज्ञानस्य शुक्त्यालम्बनत्वमनुभवविरुद्धमित्युक्तं तद्विघटयति **न चेति । एवं सतीति ।** यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयमित्यङ्गीकार इत्यर्थः । अंन्यावभासस्यान्यालम्बनत्वे प्रागुक्तप्रसङ्गं विघटयति **न चातिप्रसङ्ग इति ।**

**वं०प०— तदेवं जन्यज्ञान इति ।** यत्सन्निकृष्टेनेति विषयलक्षणं दूषयित्वा खलु यज्ज्ञानं यत्प्रतिभासं तदेव तस्यालम्बनमित्यन्यथाविषयलक्षणपरिभाषणं कृतं तदनुपपन्नम् । यत्सन्निकृष्टेनेत्यादिकस्यैव विषयलक्षणस्य तत्र त्वदुक्तदोषपरिहारेण व्यवस्थितत्वादित्यर्थः । ईश्वरज्ञानविषयाव्याप्तिपरिहाराय जन्यज्ञान इत्युक्तम् । तत्र रजतज्ञाने शुक्तिरवभासते न वेत्यादिना रजतज्ञानस्यं शुक्तिविषयकत्वमनुभवविरुद्धमित्युक्तम् । तन्निराकरोति **न चैवं सतीति ।** किञ्च रजतमवभासते शुक्तिकालम्बनं चेदतिप्रसङ्गः कथं परिहरणीय इत्येवमन्यावभासस्यान्यावलम्बनत्वे कथितमतिप्रसङ्गदोषमाशङ्क्य परिहरति **न चातिप्रसङ्ग इति । दोषेति ।** अन्यावभासस्यान्यविषयत्वं दोषवशा-देवोपपन्नं न तथा सर्वत्रेति नातिप्रसङ्ग इत्यर्थः । **यत्पुना रजतावभासस्येत्यादि ।**

**आनन्दः—** नन्विदं विषयत्वमात्रलक्षणं विषयविशेषलक्षणं वा । नाद्यः । ईश्वरज्ञानविषयाव्याप्तेः । तस्य नित्यत्वेन विषयसन्निकृष्टकरणाजन्यत्वात् । नान्त्यः । सामान्यलक्षणकथनं विना विशेषलक्षणे जिज्ञासानुदयेन तदभिधानस्यार्थान्तरत्वादित्याह **तदेवमिति** । न चैवमर्थान्तरताऽपरिहारः सामान्यलक्षणस्य सूचितत्वात् । तथाहि । ज्ञानकरणसन्निकर्षसमानाधिकरणज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्म एव विषयत्वम् । तच्च नित्य-परोक्षज्ञानसाधारणमिति नार्थान्तरं ज्ञानकारणसन्निकर्षसमानाधिकरणः ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यो धर्मः सविषयत्वमित्यर्थः । अत्र धर्मो विषयत्वमित्युक्ते घटत्वस्यापि विषयत्वप्रसङ्गः । व्याप्यो धर्म इत्युक्तेऽप्यनिवृत्तिः । साक्षाद्व्याप्यो धर्म इत्युक्तेऽपि तथा । तस्यापि पृथिवीत्वव्याप्यत्वात् ज्ञानावच्छेदकत्वधर्मत्वमित्युक्ते तु घटत्वे नातिप्रसङ्गः । घटत्वस्य ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मत्वाभावात् । साक्षाद्व्याप्यत्वं हि तत् व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वं घटत्वं तु तद्व्याप्यपृथिवीत्वव्याप्यमिति । ज्ञानावच्छेदकसाक्षाद्व्याप्यधर्मो विषयत्वमित्युक्ते समवायस्यापि रूपज्ञानविषयत्वं स्यात् । तस्यापि तज्ज्ञानावच्छेदकव्याप्यधर्मत्वादतो ज्ञानकरणसन्निकर्ष-समानाधिकरण इत्युक्तम् । अत्र प्रष्टव्यम् । किं समवायस्य विषयत्वमात्रमापाद्यते रूपज्ञानविषयत्वं वा । नाद्यः । इष्टत्वात् । न द्वितीयः । रूपज्ञानकरणसन्निकर्षसमानाधिकरणज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मवत्वाभावा-न्नातिप्रसङ्ग इति दिक् । प्रपञ्चितं चैतन्न्यायामृतप्रकाशिकायाम् । परोक्तं संविद्विरोधं परिहरति **न चैवमिति । न चातिप्रसङ्ग इति** । यदि शुक्तिसन्निकृष्टेन्द्रियेण रजतज्ञानं जन्यते तर्हि पटसन्निकृष्टेन्द्रियेण घटज्ञानमपि जन्येतेत्यतिप्रसङ्गो नेत्यर्थः । **अन्यथेति** । दोषजन्यत्वादिना व्यवस्थानङ्गीकार इत्यर्थः । पटज्ञानाद्घटेऽपि प्रवृत्तिः स्यादित्यर्थः ।

**कं०रा०— न चेति** । एवं सति यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते स तस्य विषय इति विषयत्वे व्यवस्थिते सति रजतज्ञानस्य शुक्तिविषयत्वाङ्गीकारेऽनुभवविरोधो न चास्तीत्यर्थः ।





**श्रीनिधि०**— यत् विज्ञानं यत्प्रतिभासमित्यादिना उक्तः संविद्विरोधो नेत्याह **न चैवं सतीति** । यत्सन्निकृष्टकरणेनेत्याद्यन्यथोक्तेरिति भावः । **अतिप्रसङ्ग इति** । अन्यसन्निकृष्टकरणेनान्यज्ज्ञानोत्पत्ताविति भावः । **समाधानमभिहितमिति** । रजतस्य देशान्तरसत्त्वेनेति शेषः ।

**वा०चं०**— नन्वीश्वरज्ञानादिविषयेऽव्याप्तिस्तथाऽपि स्यादेवेत्याशङ्क्य परिहरन्नुपसंहरति **तदेवमिति** । रजतज्ञानस्य शुक्त्यवभासित्वेऽनुभवविरोधस्त्वदुद्भावितो रजतज्ञाने शुक्तेरेतादृशालम्बनत्वे न प्रसरतीत्याह **न चैवमिति** । नन्वत्रानुभवविरोधाभावेऽप्यन्यावभासस्यान्येन्द्रियसन्निकर्षजन्यत्वेऽतिप्रसङ्गः । किञ्चेत्युक्तरीत्या स्यादेवेत्याशङ्क्य निषेधति **न चेति** । ननु दोषजन्यत्वादिना व्यवस्थां प्रकल्प्यातिप्रसङ्गः परिहर्तव्यो न तु शुक्तेरनालम्बनत्वकल्पनेनेत्यत्र न नियामकमिति चेत् । रजतज्ञानस्य रजतालम्बनत्वे रजतसत्त्वापत्तेरेव नियामकत्वादत्र परोक्तं समाधानं निराकर्तुमनुवदति **यत्पुनरिति** । या चेयं प्रक्रियेत्यादिना रजतज्ञानस्य स्मृतित्वाभावस्य प्रतिपादयिष्यमाणत्वेन रजतमितिज्ञानस्य पुरःसत्त्वविषयकत्वे वक्तव्ये नास्त्यत्र रजतमितिप्रत्ययविरोधेन रजतसत्त्वस्यानुपपन्नत्वाद्रजतावलम्बनत्वे तत्सत्त्वापत्तिरनिष्टैवेत्याह **तदिति** ।

**वा०र०**— **पुरःसत्त्वेति** । पुरःसत्त्वं यस्येति चासौ विषयस्तद्विषयकत्व इति योज्यम् ।

**स०व्र०**— तथा च तद्व्याप्तलिङ्गसंबन्धो लिङ्गज्ञाने तत्परवाक्यसंबन्धश्च वाक्यज्ञाने सन्निकर्ष इत्येव व्यवहर्तव्यमिति परिहरणीयमित्युक्तं भवति इति व्याचक्षते **निराकरिष्याम इति** । या चेयं प्रक्रियेत्यादिनेति शेषः ।

**स०ना०**— स्वमतेनाह **तदेवं जन्यज्ञान इति** । जन्यं प्रादुर्भूतं उत्पन्नं च । फलीभूतज्ञान इति यावत् । **अन्यथा परिभाषणमिति** । ज्ञानस्य तत्प्रतिभासत्वमेव तद्विषयत्वमिति । तद्विषयत्वज्ञापनाय तत्प्रतिभासत्वकथनमयुक्तमिति इदमन्यथापरिभाषणं न त्वतिप्रसञ्जकत्वात् अन्यथा परिभाषणमिति बोध्यम् । स्वमते रजतावभासस्य शुक्तिविषयकत्वे अनुभवविरोधमाशङ्क्य निषेधति **न चैवं सतीति** । रजतावभासस्य शुक्तिविषयकत्वे सतीत्यर्थः । कुतो नेत्यत आह **रजतावभासस्येति** । शुक्तिकाविषयककरणजन्यत्वेन तद्विषयकत्वस्य रजतज्ञानं शुक्तिविषयकं तद्विषयकरणजन्यत्वात् इत्युपपत्तिसिद्धत्वादित्यर्थः । स्यादयमनुभवविरोधः यदि रजतावभासे शुक्तित्वेन शुक्तिः भासते इति ब्रूमः । न चैवं किन्नाम शुक्तिकायास्तद्विषयत्वस्य प्रमाणसिद्धत्वात् । इदंत्वेनावभासत इति । एतेन रजतज्ञानस्य शुक्तिविषयत्वं नाम शुक्तिसन्निकर्षजन्यत्वमेव न शुक्त्यवभासत्वमिति प्राप्तमिति अपसिद्धान्त इति परास्तम् । **न चातिप्रसङ्ग इति** । प्रमाप्रमयोः स्वकरणविषयकत्वसाम्येन किञ्चिज्ज्ञानं प्रमा किञ्चिज्ज्ञानमप्रमेति व्यवस्था न स्यादित्यर्थः ।

**विठ्ठ०**— इदं रजतमिति रजतावभासरूपं ज्ञानं शुक्तिविषयत्वं इत्यपि विरुद्धमित्यत आह **रजतावभासस्येति** । रजतज्ञाने शुक्तिकास्फुरणोक्तौ खलु अनुभवविरोधः स्यात् न चैवमुच्यते रजतमेवावभासते परन्तु





तच्छुक्तिकासन्निकृष्टकरणजन्यमिति शुक्तिविषयमिति वदामः । तर्हि अन्यसन्निकृष्टकरणेन अन्यावभासकज्ञानोत्पत्त्यङ्गीकारे उक्तोऽतिप्रसङ्ग इत्यत आह **न चेति** । ननु दोषजन्यत्वादिना व्यवस्था कुतोऽङ्गीकार्या इत्यतः तदनङ्गीकारे बाधकमाह **अन्यथेति** । पूर्वं रजतावभासस्य रजतविषयत्वे तेन रजतेन भवितव्यमित्याशङ्क्य तत्परिहाराय कथं न भवितव्यमिति रजतसद्भावमङ्गीकृत्य 'न ही'ति परिहारमुक्त्वा तर्हि प्रतीत्योर्विरोध इत्याशङ्क्य ग्रहणस्मरणात्मकत्वेन न विरोध इत्याद्यभिहितं दूषयति **यत्पुना रजतावभासस्येति** ।

**चषकः**— लक्ष्यशरीरे ईश्वरज्ञानव्यावर्तकविशेषणनिवेशेन तत्राव्याप्तिराहित्यं ध्वनयन्निगमयति **तदेवमिति** ।

**गूढ०**— नन्विदं विषयत्वमात्रलक्षणं विषयविशेषलक्षणं वा । नाद्यः । ईश्वरज्ञानविषयाव्याप्तेः । तस्य नित्यत्वेन विषयसन्निकृष्टकरणाजन्यत्वात् । नान्त्यः । सामान्यलक्षणकथनं विना विशेषलक्षणे जिज्ञासानुदयेन तदभिधानस्यार्थान्तरत्वादित्यत आह **तदेवमिति** । न चैवमर्थान्तरत्वापरिहारः । सामान्यलक्षणस्य सूचितत्वात् । तथाहि । ज्ञानकरणसन्निकर्षसमानाधिकरणज्ञानावच्छेदकसाक्षाद्व्याप्यधर्म एव विषयत्वम् । एतच्च नित्यपरोक्षज्ञानसाधारणमिति नार्थान्तरम् । ज्ञानकारणसन्निकर्षेण समानाधिकरणः ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यो धर्मः सविषयत्वमित्यर्थः । अत्र धर्मो विषयत्वमित्युक्ते घटत्वस्यापि विषयत्वप्रसङ्गः । व्याप्यो धर्म इत्युक्तेऽप्यनिवृत्तिः साक्षाद्व्याप्यो धर्म इत्युक्तेऽपि तथा । तस्यापि पृथिवीत्वव्याप्यत्वात् । ज्ञानावच्छेदकधर्मत्वमित्युक्ते घटत्वेनातिप्रसङ्गः । घटत्वस्य ज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मत्वाभावात् । साक्षाद्व्याप्यत्वं हि तद्व्याप्याव्याप्यत्वे सति तद्व्याप्यत्वं घटत्वं तु तद्व्याप्यपृथिवीत्वव्याप्यमिति । ज्ञानावच्छेदकसाक्षाद्व्याप्यधर्मो विषयत्वमित्युक्ते समवायस्यापि रूपज्ञानविषयत्वं स्यात् । तस्यापि तज्ज्ञानावच्छेदकव्याप्यधर्मत्वादतो ज्ञानकरणसन्निकर्षसमानाधिकरण इत्युक्तम् । अत्र प्रष्टव्यं किं समवायस्य विषयत्वमात्रमापाद्यते रूपज्ञानविषयत्वं वा । नाद्यः । इष्टत्वात् । न द्वितीयः । रूपज्ञानकरणसन्निकर्षसमानाधिकरणज्ञानावच्छेदकत्वसाक्षाद्व्याप्यधर्मवत्वाभावान्नातिप्रसङ्ग इति दिक् । प्रपञ्चितं चैतत् न्यायामृतप्रकाशिकायाम् । परोक्तं सविद्विरोधं परिहरति **न चैवमिति** । **न चातिप्रसङ्ग इति** । यदि शुक्तिसन्निकृष्टेन्द्रियेण रजतज्ञानं जन्यते तर्हि पटसन्निकृष्टेन्द्रियेण घटज्ञानमपि जन्येतेत्यतिप्रसङ्गेनेत्यर्थः । **अन्यथेति** । दोषजन्यत्वादिना व्यवस्थानङ्गीकार इत्यर्थः । पटज्ञानात् घटेऽपि प्रवृत्तिः स्यादित्यर्थः ।

**प्रदीपः**— अन्यस्यान्यालम्बनत्वेऽतिप्रसङ्गमुक्तं विघटयति **न चेति** । अन्यज्ञानस्यान्यविषयत्वाभावे अन्यव्यवहारस्याप्यन्यविषयत्वं न स्यादित्याह **अन्यथेति** ।





**३६१ सु०— अस्तु वा 'यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयमि'त्येव व्यवस्था । तथाऽपि नानुभवविरोधः ॥ तत्किं रजतावभासस्य शुक्तित्वविषयतायामनुभवविरोधं ब्रूषे उतेदंत्वाकारस्य ॥ आद्ये संप्रतिपत्तिः । न हि वयमस्मिन्प्रत्यये शुक्तित्वमवभासत इति ब्रूमो येन विरोधः स्यात्, शुक्तित्वप्रतिभासस्य रजतावभासविरोधित्वाभ्युपगमात् ॥ द्वितीये तु न कश्चिद्विरोधः । विरोधे वा समीचीनरजते 'इदं रजतमि'ति प्रतीतिर्न स्यात् । इदमाकारस्य रजतप्रतिभासविषयतामनभ्युपगच्छत एव प्रतीतिविरोधं वक्ष्यामः । एवं सति रजतस्यापि ज्ञानविषयता प्रसज्यत इति चेत्; सत्यम्, इष्टमेवैतत् । न चैवमख्यातिपक्षपातः, ज्ञानैक्याभ्युपगमात् । नापि 'शुक्तिकारजते' इति ज्ञानं विभ्रमः प्रसज्यते रजतस्यासत्त्वाभ्युपगमात् तादात्म्यावभासाभ्युपगमाच्च । अत एवोक्तम् 'असतः सत्त्वप्रतीतिः सतोऽसत्त्वप्रतीतिरि'ति । वक्ष्यति च 'विषयस्य कुतो बाध' इत्यसतो रजततादात्म्ययोर्ज्ञानविषयतामाचार्यः ।**

**बिन्दुः—** अन्यस्य तु न तथात्वं तथा प्रमाणाभावादिति यथा वा देवदत्तः पुत्रः परन्तु यज्ञदत्तस्यैव कुतः विष्णुमित्रस्य कुतो नेति प्रश्ने यो यत्पुत्रत्वेन सर्वैर्व्यवह्रियते स तत्पुत्र इत्युत्तरं इत्यभिप्रेत्य यत् ज्ञानं यद्विषयत्वेन प्रतिभासते स तद्विषय इत्यर्थप्रदर्शकं निर्वचनमुक्तं **यद्विज्ञानं यत्प्रतिभासमिति**। तथा च आत्माश्रयादिशङ्कैव नेति ध्येयम्। अत एवं उक्तिविषयत्वेनानुभूयमानं वा शुक्तिविषयत्वेनानुभूयमानं वा शुक्तिविषयं चेद्रजतविषयत्वेनानुभूयमानत्वात्तद्विषयत्वमपि स्यादिति चोद्यमपूपदण्डन्यायेनाभ्युपगम्येष्टापत्त्या समाहितमिति तत्त्वम्। ततश्चायमर्थः। येन घटादिना विशेषणेन प्रतिभासतेऽनुभूयत इति यत्प्रतिभास इत्यर्थः । घटोऽयमिति ज्ञानं हि घटमहं जानामीत्यनुव्यवसाये घटविशिष्टं प्रतिभासत इति घटस्य तज्ज्ञानविषयत्वम् । एवं चास्मिन्पक्षे विषयत्वं विषयित्वं च घटत्वादिवत् प्रतियोगित्वानुयोगित्वादिवच्च अखण्डमेव । घटोऽयमिति ज्ञानविषयत्वं पटस्य कुतो न भवतीति पर्यनुयोगे तु तथाऽनुभवाभावात् । अनुव्यवसायेन घटविषयत्वस्यैव विषयीकरणात् । यथा गवि गजत्वाभावः अश्वत्वाभावश्चास्ति । तत्र गजत्वाभावोऽश्वत्वप्रतियोगिकोऽश्वत्वाभावश्च गजत्वप्रतियोगिकः कुतो न भवतीत्युक्ते यो यत्प्रतियोगिकत्वेनानुभूयते स तत्प्रतियोगिक इत्युत्तरम्। यथाच घटत्वेन अनुभूयमानः पटत्वप्रतियोगिकः कुतो न भवतीत्यत्र च पटत्वेनाऽनुभूयमानत्वात् यः पटत्वेन अनुभूयते स एव पट इत्यादिपरिहारस्तथा यज्ज्ञानं यद्विषयत्वेनानुभूयते तत्तद्विषयकमित्युत्तरमित्युक्तं भवति। अत एवानुपदं न चैवमित्यादिनाऽनुभवविरोधमाशङ्क्य परिहरति। इत्येवं व्यवस्थेति व्यवस्थापदं





च प्रयुंक्ते । अत एव च एवं सतीत्युत्तरत्र रजतं जानामीत्यनुभवाद्रजतस्यापि विषयत्वमाशङ्क्येष्टापत्त्या समाधत्ते। इयान् परं विशेषः। यत् पूर्वस्मिन् कल्पे शुक्तिरेव विषयः न रजतमिति परिभाषितम्। अस्मिंस्तु कल्प्ये तस्यापि विषयत्वमिति । परिभाषाविशेषमाश्रित्य परमते ईश्वरज्ञानस्य प्रमात्वतद्बहिर्भाववच्च न विरोध इति द्रष्टव्यम् । तदुभयमपि विषयत्वं सिद्धान्तसंमतमेवेत्याशयेन द्वितीयपरिभाषांशे मूलसंमतिं दर्शयति **वक्ष्यति च विषयस्य कुतो बाध इत्यादिना**। नेदं रजतमिति ज्ञानेन भ्रमस्य निवृत्त्याख्यो बाध इति परेणोक्तं तत्खण्डनार्थं प्रवृत्तविषयस्य कुतो बाध इति मूलं तस्यार्थः ज्ञानार्थरूपो हि त्वन्मते भ्रमतन्त्रज्ञानस्य क्षणिकत्वेन स्वयमेवमेव निवृत्तत्वान्नानेन बाधः । विषयस्य रजतस्य तादात्म्यस्य च अत्यन्तासत्त्वेन नित्यनिवृत्तत्वात्कुतो बाधः न कुतोऽपीति रजतेऽपि विषयशब्दं प्रयुञ्जानेनाचार्येणेयं परिभाषानुमतेति ध्वन्यत इति भावः । आद्यपरिभाषा तु आचार्यसंमतेति शिष्यैरवगतत्वादेव तदंशे विशिष्य संमतिर्न प्रदर्शिता । मिथ्यात्वानुमानखण्डनादौ दृग्विषयत्वरूपदृश्यत्वहेतोः शुक्तिरजतादावभावाद्दृष्टान्तस्य साधनवैकल्यमभिदधानेन स्फुटं सूचितत्वात्तत्रैव प्रपञ्चितत्वाच्च । द्वितीयपरिभाषामवलम्ब्य तदुद्धारे त्वन्यानि दूषणानि द्रष्टव्यानि । न हि प्रलयानलापन्नभस्मसाद्भावस्य पिपीलिकामूत्रसमासिञ्चनेनोज्जीवनप्रत्याशा भवतीति दिक् । यद्वा तत्प्रतिभासत्वं तद्वाचकशब्दप्रयोगरूपव्यवहारजनकज्ञानत्वं बालमूकादिविज्ञानेऽपि तद्योग्यत्वमस्त्येवं, कारणाभावात् दुरदृष्टादिप्रतिबन्धकसद्भावाद्वा न तत्र व्यवहार इति नाव्याप्तिरिति पूर्वोक्तमनुसन्धेयम्।

**परि०**— एवं रजतं दृष्टमिति भ्रममात्रत्वादित्याद्युक्त्यनुरोधेन शुक्तिरूप्यादेर्विषयत्वं नेत्युपेत्य एकं लक्षणमुक्तम् । इदानीं पक्षस्य शुक्तिरूप्यादेश्च विषयत्वमस्तीत्युपेत्य 'विषयस्य कुतो बाध' इत्यादिवक्ष्यमाणानुव्याख्यानानुरोधेन पक्षादिगतविषयत्वसाधारणं जन्याजन्यसर्वज्ञानविषयसाधारणं च लक्षणमाह **अस्तु वेति** । यदिति भिन्नं पदम् । न तु यस्य विज्ञानं यद्विज्ञानमिति । यत्प्रतिभासं यदुल्लेखीत्यर्थः । उल्लेखित्वं चाभिलपनकारणत्वम् । यदभिलपनरूपव्यवहारकारणं ज्ञानं तद्विषयकमित्यर्थः । कारणत्वं च योग्यतारूपं न फलोपधानम् । **वक्ष्याम इति** । ज्ञानैकत्वसमर्थनेनेति भावः । **उक्तमिति** । विष्णुतत्त्वविनिर्णये । **वक्ष्यति चेति** । वियत्पादे पृथगुपदेशादित्येतद्व्याख्यानावसरे । एतेन क्वचित्प्रकरणादौ शुक्तिरूप्यादेर्विषयत्वं नेत्युक्तं क्वचिदस्तीत्युच्यते । अतो विरोध इति प्रत्युक्तम् । विषयत्वस्य विवक्षाभेदेनोपपत्तेरिति । न चान्यथाख्यातिजनने कारणं पश्याम इत्यादिनोक्तमुद्धरति ।

**यादु०**— ननु भवन्मते शुक्तिकाया एव विषयत्वे नासतो रजतस्य तत्तादात्म्यावभासस्य चेत्यङ्गीकारात्कथमिष्टमेवैतदुच्यत इत्यत आह **वक्ष्यति चेति** । असतोऽपि रजतादेर्ज्ञानव्यावर्तकतयोल्लिख्यमानत्वरूपं





विषयत्वमस्माकमिष्टम् । यत्सन्निकृष्टेन करणेन यज्ज्ञानमुत्पद्यते स तस्य विषय इति निरुक्तं विषयत्वं तु असतो नास्ति किन्तु शुक्तिकादावेवातो न कोऽपि विरोध इति ध्येयम् ।

**वं०प०**— ननु रजतावभासस्य रजतविषयकत्वे तेन रजतेन भवितव्यमित्याशङ्क्य कथं न भवितव्यमित्यादिना ज्ञानद्वित्वाङ्गीकारेण समाधानमभिहितमित्यर्थः । यद्विज्ञानमित्यत्र यदिति भिन्नम् । न तु यस्य विज्ञानं यद्विज्ञानमिति षष्ठीसमासः । यत्प्रतिभासं यदुल्लेखीत्यर्थः । उल्लेखित्वं चाभिलपनकारणत्वम् । यदभिलपनरूपव्यवहारकारणं ज्ञानं तद्विषयकमित्यर्थः । कारणत्वं च योग्यतारूपं न फलोपधानम् । तथात्वे रजतज्ञाने शुक्तिरवभासते न वेति वक्तव्यमित्यादिनाऽनुभवविरोध उक्त इति चेत्तत्राह **तथाऽपीति** । इदन्ताकारस्य शुक्तित्वविषयतायामिति वर्तते । **न कश्चिद्विरोध इति** । शुक्तिनिष्ठेदमाकारस्य शुक्तिविषयतायाः सिद्धत्वादित्यर्थः । तन्निष्ठेदमाकारस्य तद्विषयकत्वे यदि विरोधः कथ्यते तदाऽतिप्रसङ्गमाह **विरोधे वेति** । **अनभ्युपगच्छत इति** । अनुभवविरोधेनानङ्गीकर्तुर्ज्ञानद्वयाङ्गीकारिणः प्राभाकरस्यैवेत्यर्थः । **एवं सतीति** । इदमाकारस्य रजतप्रतिभासविषयत्वे । **न चैवमिति** । असतो ज्ञानविषयत्वाभावाद्रजतस्य ज्ञानविषयत्वाङ्गीकारे सत्त्वप्राप्तेरख्यातिपक्षपातः स्यादित्यर्थः । **ज्ञानैक्येति** । ज्ञानद्वित्वाङ्गीकारे ह्यख्यातिपक्षपातः स्यात् । न चैवम् । विशिष्टज्ञानस्यैकस्यैवाङ्गीकारादिति भावः । नन्वेवं शुक्तिरजतोभयविषयकमेकं ज्ञानं भ्रम इत्युक्तं स्यात् । तथाच शुक्तिरजते इति समूहालम्बनरूपं ज्ञानमपि भ्रमः स्यादित्याशङ्क्य निराकरोति **नापीति** । **असत्त्वेति** । समूहालम्बनज्ञानविषयीभूतं तु रजतं सदिति न तस्य भ्रमत्वमिति भावः । किञ्च भ्रमस्थले ज्ञानैक्याभ्युपगमेऽपि तार्किकरीत्या रजतस्य सत्त्वाभ्युपगमेऽपि न समूहालम्बनसाम्यम् । भ्रमे तादात्म्यावभासस्याधिकस्याङ्गीकारादित्याह **तादात्म्येति** । **वक्ष्यति चेति** ।

**आनन्दः**— लक्षणान्तरमाह **अस्तु वेति** । न च यत्प्रतिभासमित्यत्र यस्य रजतस्य प्रतिभासमिति वा रजतशब्दोल्लेखीति वा । नाद्यः । षष्ठ्यर्थस्य विषयविषयिभावरूपत्वेन विषयत्वलक्षणे विषयत्वप्रवेशेनात्माश्रयः स्यात् । द्वितीयेऽपि उल्लेखशब्दस्य विषयत्वार्थत्वेन स एव दोष इति वाच्यम् । यद्विज्ञानं यद्व्यवहारजननयोग्यम् । तत्तद्विषयत्वमित्यर्थात् । एवं च न किञ्चिद्विरोध इति । **उतेदन्ताकारस्येति** । रजतावभासस्येदन्ताकारविषयतायां अनुभवविरोध आपाद्यत इति द्वितीयार्थः । संप्रतिपत्तिमेव दर्शयति **न हि वयमिति** । ननु रजतावभासस्येदन्ताकारविषयत्वेऽस्त्येवानुभवविरोध इत्यत आह **विरोधे वेति** । **एवं सतीति** । एवं विषयत्वनिर्वचने सतीत्यर्थः । **न चैवमिति** । तस्य ज्ञानस्य रजतविषयत्वे ख्यातिपक्षपातस्य । तेन तथाङ्गीकारादित्यर्थः । ननु तर्हि शुक्तिरजते इति ज्ञानस्यापि रजतविषयत्वात् विभ्रमत्वमित्यत्राह **नापीति** । **रजतस्येति** । तत्र च रजतस्य सत्त्वादिति भावः । **तादात्म्येति** । भ्रम इति शेषः । अस्य च समूहालंबनरूपत्वान्न तादात्म्यभानमत्रेति भावः । **अत एवेति** । तादात्म्यभानाभ्युपगमादेवेत्यर्थः । नन्वसतो ज्ञानविषयत्वं सिद्धान्तविरुद्धमत्राह **वक्ष्यति चेति** ।

**कं०रा०**— तदेवोपपादयति **रजतेति** । स्तम्भकुम्भादिज्ञानानां स्तंभकुंभादिसन्निकृष्टकरणजन्यत्वेन स्तम्भकुम्भादिविषयत्ववद्रजताभासस्यापि शुक्तिकासन्निकृष्टकरणजन्यत्वेन शुक्तिविषयत्वस्योपपत्तेर्न कश्चिद्विरोध





इति भावः । **एवमिति** । यज्ज्ञानं यत्प्रतिभासं तत्तद्विषयकमिति व्यवस्थाङ्गीकारे इदं रजतमिति ज्ञानस्य रजतप्रतिभासरूपतया रजतस्यापि तज्ज्ञानविषयता प्रसज्येतेत्यर्थः । **न चैवमिति** । रजतज्ञानस्य रजतविषयत्वे इदमाकारज्ञानस्य चेदंपदार्थविषयत्वादख्यातिपक्षपात एव स्यात् । नान्यथाख्यातिपक्षपात इति न चेत्यर्थः । **ज्ञानैक्येति** । रजतपुरोवर्तिज्ञानैक्यस्याभ्युपगमादित्यर्थः । तथा चान्यथाख्यातिसिद्धिरिति भावः । ज्ञानैक्यमात्रेणान्यथाख्यातित्वे शुक्तिरजते इति समूहालम्बनज्ञानमपि विभ्रमः स्यादित्यत आह **नापीति** । **रजतस्येति** । भ्रमे सत्त्वेन प्रतीयमानस्य रजतस्यासत्त्वाभ्युपगमादसत्तादात्म्यावभासस्याभ्युपगमाच्चेत्यर्थः । तथा चासद्रजततादात्म्यावभासाभ्यां भ्रमत्वं वच्मो न ज्ञानैक्यमात्रेण येनोक्तातिप्रसङ्गः स्यादिति भावः । **वक्ष्यति चेति** । 'विषयस्य कुतो बाधो विद्यमानं हि बाध्यते । न हि वन्ध्यासुतो बाध्यो यज्ञदत्तो हि बाध्यत' इत्यत्रासतो रजततादात्म्ययोरिदंरजतमिति ज्ञानविषयतामाचार्यो वक्ष्यति चेत्यर्थः ।

**श्रीनिधि०— रजतस्यासत्त्वाभ्युपगमादिति** । भ्रमस्थल इति शेषः । समूहालम्बनस्थले च रजतस्य सत्त्वान्न विभ्रमत्वमिति भावः । **तादात्म्यावभासस्याभ्युपगमाच्चेति** । अत्रापि भ्रम इति ज्ञेयम् । समूहालंबने तदभावादिति भावः । पूर्वं संसर्गारोपपक्ष इति ज्ञेयम् । असतः सत्त्वप्रतीतिरित्यनेन भ्रमे असतः प्रतीतिः । सत्त्वेनेति असत्तादात्म्यप्रतीतिश्चोक्ता । एवमुत्तरत्रापि ।

**वा०चं०—** नन्वस्य जन्यज्ञानविषयत्वलक्षणत्वेऽजन्यज्ञानविषयत्वस्यान्यादृशतया अनुगतविषयत्वव्यवहारानुपपत्तिः द्वेधा कल्पनापत्तिश्च । उत्तरत्रासतोऽपि प्रतीतिविषयत्वोपपादनेन विषयस्य कुतो बाध इति भाष्यकारीयेण वचनेन विरोध इति भासमानत्वस्यैव विषयत्वरूपत्वे वक्तव्ये संविद्विरोधस्तदवस्थ इत्यतस्तमेव पक्षमभ्युपगम्य संविद्विरोधं निरस्यति **अस्तु वेति** । शुक्तेरालम्बनत्वेऽनुभवविरोधः किं तस्याः शुक्तित्वरूपासाधारणाकारेणापि । तथात्वे वाऽऽद्योऽनभ्युपगमपराहतः । न हि शुक्तित्वप्रतिभासस्य रजतावभासविरोधमभ्युपगच्छता रजतावभासस्य शुक्तित्वविषयत्वमभ्युपगन्तुमुचितम् । द्वितीये साधारणाकारप्रतिभासे न कश्चिद्विरोधः । न चेदन्त्वं न साधारणाकारः किन्तु शुक्तित्वमिव शुक्त्यसाधारणाकार एवेति वाच्यम् । तथात्वे सत्यस्थले इदन्त्वोल्लेखिरजतप्रतीतिर्न स्यादित्याह **तत्किमित्यादिना** । किञ्च विशिष्टविषयैकज्ञानस्यानुभवसिद्धताया 'अनुभव एवेति ब्रूमः । यथा ही'त्यादिनोत्तरत्रोपपादयिष्यमाणतया तवैवानुभवविरोध इत्याह **इदमाकारस्येति** । गूढाभिसन्धिः शङ्कते **एवं सतीति** । तथैव परिहरति **सत्यमिति** । रजतस्य ज्ञानविषयत्वं वदता शुक्त्यविषयकरजतज्ञानविषयत्वं वा शुक्तिविषयज्ञानविषयत्वं वा वक्तव्यं गत्यन्तराभावात् । तत्राद्येऽख्यातिपक्षपक्षपातः । द्वितीये तु शुक्तिरजतोभयविषयकैकज्ञानं भ्रम इत्युक्तं स्यात् । तथा च शुक्तिरजते इति समूहालम्बनस्य भ्रमत्वापत्तिरित्याशये परेणोद्घाटिते आद्यमनभ्युपगमेन परिहरति **ज्ञानैक्येति** । समूहालम्बनवैषम्योक्त्याऽतिप्रसङ्गं निरस्यति **रजतस्येति** । वस्तुस्थितिमनुरुद्ध्यांशे भ्रमरूपसमूहालम्बनादपि वैषम्यमाह **तादात्म्येति** । रजतासत्त्वतत्तादात्म्यावभासाभ्युपगमं मूलसंमत्या द्रढयति **अत एवेति** । अस्तु वेत्युक्तपक्षस्य





भाष्यकारीयाभिमतिज्ञापकमाह **वक्ष्यतीति** । अनेन विषयत्वदूषणपरिहारप्रकारस्य मूलादेव लाभः सूचित इति द्रष्टव्यम्।

**वा०र०— अन्यादृशतयेति** । यद्विज्ञानं यत्प्रतिभासमित्येवंरूपतयेत्यर्थः । **अनुगतेति** । जन्यज्ञान-स्थलीयलक्षणस्यापरत्राभावेनानुगमायोग इत्यर्थः । अथवाऽन्यादृशतया जन्यत इत्येतद्विरोधि व्यज्यत इत्येत-द्घटिततयेत्यर्थः । एवं चाननुगमो यथास्थित एवेति ज्ञेयम् । प्रत्येकमननुगतं कारणं तृणारणिमण्यादिकं वह्न्यादेः उपलब्धमित्यत आह **द्वेधेति** । क्लृप्तत्वाभावान्न तृणादिसाम्यमित्याशयेन कल्पनेत्युक्तं **उपपादनेनेति** । उपपादनरूपेणेत्यर्थः । **विरोध इतीति** । तद्वचनेन रजतस्य विषयतायाः प्राप्तत्वादिति भावः । इतीत्यस्येत्यत इत्यर्थः । तत्किं रजतेत्यादिग्रन्थं व्याकुर्वन्नेवावतारयति **शुक्तेरालम्बनत्व इत्यादिना** । किमित्यस्येदन्तेत्युत्तरत्रापि संबन्धात्किं वेति लभ्यते । उतेदन्ताकारस्येत्यत्र रजताभावस्येति वर्तते । बुध्या विवेकेन विषयतायामिति च । शुक्तित्वविषयतायामित्यस्य शुक्तित्वरूपासाधारणाकारेण विषयतायामित्यर्थस्य पूर्ववाक्येऽभिप्रेतत्वादिह षष्ठ्याः तृतीयार्थत्वे इदंत्वरूपसाधारणाकारेणेति लभ्यत इत्याशयेनोक्तं **इदंत्वरूपसाधारणेति** । न च प्रतीति-विरोधः । रजताकाराया इत्यादि तत्त्वप्रदीपिकाव्याख्यानावसरे नयनप्रसादिन्यां तत्र रजताकारप्रतीतिं प्रति शुक्तेरालम्बनत्वेऽनुभवविरोधः । उतेदन्तामात्रस्याधोऽनभ्युपगमपराहत इत्यादेरुक्तत्वात् । अत्र चेदमाकारो नामेदंत्वाकारो व्याख्येयः भामत्यामपि । किं शुक्तिकात्वस्येदंरजतमिति ज्ञानं प्रत्यनालम्बनत्वमाहोस्वित् द्रव्यमात्रस्य पुरःस्थितस्य सितभास्वरस्येत्याद्युक्तेः । न्यायमकरन्देऽपि शुक्तिकाकारस्येदं रजतमिति ज्ञानं प्रतीति द्रव्यमात्रस्येति चोक्तेस्तट्टीकायां व्याख्यानाच्चेति ज्ञेयम् । अनभ्युपगमोपपादनम् । **न हीत्यादि** । द्वितीयेन कश्चिदित्यस्यार्थः । **द्वितीयेऽसाधारणेति** । विरोधे वेत्यप्रतीतेर्व्याख्यानम् । **न चेदंत्वमित्यादि** । समीचीनेत्यादेरर्थाप्रतिभासादुक्तं **सत्यस्थल इति** । उत्तरवाक्यं व्याकुर्वन्नवतारयति **किञ्चेति** । तवैवेति सामर्थ्यलब्धमुक्तं **तथैवेति** । गूढाभिसन्धिरेवेत्यर्थः । न चैवमख्यातीत्यस्याभिप्रायानाविष्करणे ज्ञानैक्येत्यादिग्रन्थासङ्गतिरित्यतस्तदभिप्राय-माविष्कुर्वन्नुत्तरवाक्यद्वयं क्रमेणावतारयति **रजतस्य ज्ञानेति** । **उद्घाटित इति** । समूहालम्बनेत्युक्त्यैवेति ज्ञान-मित्यस्य समूहालम्बनरूपं ज्ञानमित्युपस्कार्यमिति सूचयति । अनेन न वेति वाक्यस्योक्ताभिप्रायेण प्रवृत्तिरित्युक्तं भवति । उक्तरीत्याऽभिप्रायानाविष्करणेनापि शुक्तीत्युत्तरग्रन्थासङ्गतिरिति भावः । **समूहालम्बनेति** । अंशद्वयेऽपि प्रमारूपसमूहालम्बनेत्यर्थः । अत एव वक्ष्यति **अंशे भ्रमेति** । यत्समूहालंबनमंशे भ्रमरूपं तद्वैलक्षण्योप-पादनस्यासङ्गतिपरिहारायाह **वस्तुगतिमिति** । अपिशब्देनाशयोद्घाटनदशायामस्याप्रसक्तत्वेऽपीति सूचयति **मूलसंमत्येति** । मूलकारीयतत्त्वनिर्णयस्थोक्त्येत्यर्थः । प्रागपि भाष्येऽन्यदन्यात्मनेत्युक्तेत्यस्य भाष्यकारेण तत्त्वनिर्णये उक्ते सतोऽसत्त्वेत्यादावित्यर्थ इति प्रागेवोक्तं **ज्ञापकमाहेति** । पृथगधिकरणीयानुव्याख्यानरूपं ज्ञापकमित्यर्थः । **मूलादेवेति** । इतरत्र परिहारोऽभिप्रेततयाऽस्माभिरुपदर्शितः । विषयत्वदूषणपरिहारप्रकारस्तु स्थलान्तरीयमूलकारोक्त्येतत्स्थलीयतदीयोक्त्या च लब्धोऽस्माभिरुपदर्शित इति भावेन भाष्यकारोक्तिः संमतीकृता मूल इति भावः ।

**स०व्र०— प्रतीतिविरोधं वक्ष्याम इति** । ननु सत्यस्थलीयशुक्तिरजतोभयविषयकज्ञानस्यापि सत्त्वादत्र चासत्त्वात् तत्रोभयोरपि प्रत्येकं भानादत्र च तादात्म्यावभासात्तदपेक्षया विशेषान्न तस्य भ्रमत्वापत्तिरित्याह **नापीति** ।

**स०ना०—** तद्विषयकत्वतत्प्रतिभासत्वयोर्भेदमङ्गीकृत्याह **अस्तु वेति** । अत्र तद्विषयत्वतत्प्रतिभासत्वयोर्भेद एव । प्रामाणिकोंशोऽङ्गीकारवादेनाभिहितः अन्यत्सर्वं प्रामाणिकमिति बोध्यम् । परमतेऽज्ञानवादनिराकरणसुधायां तथा सति अज्ञानाभावस्य तव सर्वथाऽप्यप्रतीतिप्रसङ्गादिति । त्वदीयस्य शास्त्रार्थज्ञानाभावस्य ज्ञानं तव न स्यादित्यर्थः ।

**विठ्ठ०—** यद्विज्ञानं यत्प्रतिभासं तत्तद्विषयमित्येतदन्यथा परिभाषणमित्युक्तं तस्यैव लक्षणत्वाङ्गीकारेऽपि न दोष इत्याह **अस्तु वेति** । इदं रजतमिति ज्ञानस्य शुक्तिः विषय इत्युक्तेऽनुभवविरोध इति दोषोऽभिहित इत्यत आह **तथापीति** । **शुक्तित्वविषयतायामिति** । शुक्तित्वप्रकारेण शुक्तिकाया अवभासविषयतायामित्यर्थः । उत इदंत्वाकारस्येत्यतःपरं रजतविषयतायामिति शेषः । अनुभवविरोधं ब्रूषे इत्यस्यावृत्तिः । शुक्तित्वप्रकारेण शुक्तिकावभासाभावेऽपि इदंत्वप्रकारेण शुक्त्यवभाससद्भावाद्विरोध इत्यत आह **प्रतिभासस्येति** । **द्वितीये त्विति** । इदंत्वप्रतिभासरजतावभासयोर्वध्यघातकभावादिति भावः । विरोधाङ्गीकारे बाधकमाह **विरोधे वेति** । न केवलं इदं आभासरजतानुभासयोर्विरोधाभावः किन्तु इदंरजतमित्यत्रेदमाकारस्य रजतावभासं प्रति विषयत्वानभ्युपगम एव विरोध इत्याह **इदमाकारस्येति** । गूढाभिसन्धिः शङ्कते **एवं सतीति** । यद्विज्ञानं यत् प्रतिभासं तत् तद्विषयमित्यङ्गीकारे इत्यर्थः । अविदिताशय इवोत्तरमाह **इष्टमिति** । रजतस्य ज्ञानविषयत्वं कथमिष्टं तथात्वे शुक्तिविषयकज्ञानविषयत्वं रजतस्योच्यते तद्विषयकज्ञानविषयत्वं वा । आद्ये स्मृतिरूपज्ञानविषयत्वापत्त्या अख्यातिपक्षपातः । द्वितीये शुक्तिरजतोभयविषयकैकज्ञानं भ्रम एव इत्युक्तं स्यात् । तथाच शुक्तिरजते इति समूहालम्बनज्ञानस्यापि भ्रमत्वापत्तिरिति परस्याशयं ज्ञात्वा आद्यमनभ्युपगमेन द्वितीये समूहालम्बनवैषम्योक्त्या परिहरति **न चैवमित्यादिना** । **असत्त्वाभ्युपगमादिति** । शुक्तिरजते इति सत्यशुक्तिरजतोभयावगाहिज्ञाने शुक्तिवत् रजतस्यापि सत्यत्वात् वस्तुद्वयावभासरूपत्वाच्च न विभ्रमत्वापत्तिः । इदं रजतमित्यत्र तु रजतस्यासत्त्वादविद्यमानरजततादात्म्यावभासाभ्युपगमाच्च विभ्रमत्वमिति भावः । उक्तार्थे आचार्यसंमतिमाह **अत एवोक्तमिति** । तत्त्वनिर्णये इति शेषः । नन्वाचार्यमते शुक्तिकाया एव विषयत्वं नासतो रजतस्य तत्तादात्म्यस्य चेत्युक्तेः कथं तदभ्युपगम इत्यत्राह **वक्ष्यतीति** । यत्सन्निकृष्टकरणेन यज्ज्ञानं जन्यते स तस्य विषय इत्येवं प्रकारविषयत्वं शुक्तिकायामेव ज्ञाने भासमानत्वरूपत्वमपि विषयत्वं इति विवक्षया वा वक्ष्यतीति भावः ।

**गूढ०—** लक्षणान्तरमाह **अस्तु वेति** । न च यत्प्रतिभासमित्यत्र यस्य रजतस्य प्रतिभासमिति वा रजतशब्दोल्लेखीति वा । नाद्यः । षष्ठ्यर्थस्य विषयविषयीभावरूपत्वेन विषयत्वलक्षणे विषयत्वप्रवेशेनात्माश्रयः स्यात् । द्वितीयेऽपि उल्लेखशब्दस्य विषयत्वार्थत्वेन स एव दोष इति वाच्यम् । यद्विज्ञानं यद्व्यवहारजननयोग्यम् । तत्तद्विषयत्वमित्यर्थात् । एवं च न कश्चिद्विरोध इति । **उतेदन्ताकारस्येति** । रजतावभासस्य





इदन्ताकारविषयतायामनुभवविरोध आपाद्यत इति द्वितीयार्थः । संप्रतिपत्तिमेव विशदयति **न हि वयमिति** । ननु रजतावभासस्येदन्ताकारविषयत्वेऽस्त्येवानुभवविरोध इत्यत आह **विरोधे वेति** । **एवं सतीति** । एवं विषयत्वनिर्वचने सतीत्यर्थः । **न चैवमिति** । तस्य ज्ञानस्य रजतविषयत्वे ख्यातिपक्षपातस्य । तेन तथाङ्गीकारादित्यर्थः । ननु तर्हि शुक्तिरजते इति ज्ञानस्यापि रजतविषयत्वात् विभ्रमत्वमित्यत्राह **नापीति** । **रजतस्येति** । तत्र च रजतस्य सत्त्वादिति भावः । **तादात्म्येति** । भ्रम इति शेषः । अस्य च समूहालम्बनरूपत्वान्न तादात्म्यभानमत्रेति भावः । **अत एवेति** । तादात्म्यभानाभ्युपगमादेवेत्यर्थः । नन्वसतो ज्ञानविषयत्वं सिद्धान्तविरुद्धं अत्राह **वक्ष्यति चेति** ।

**प्रदीपः— तथापीति** । रजतावभासस्य शुक्तित्वं चेद्विषयः स्यादेव तदा विरोध इदमाकारश्चेन्न विरोध इत्यर्थः । शुक्तिरजतोभयज्ञानस्य भ्रमत्वमसद्रजतेन सद्रजतविषयत्वे अतो नातिप्रसङ्ग इत्याह **नापीति** । **तादात्म्येति** । शुक्तिरजते इति ज्ञाने तादात्म्याभाव इत्यर्थः ।

**३६२ सु०— न चान्यथाख्यातिजनने कारणाभावः । इन्द्रियादेरेव तत्कारणत्वात् । समीचीनज्ञानकारणस्यापि तस्य दोषकलुषितस्य विभ्रमहेतुत्वोपपत्तेः । न च दोषाणां स्वारसिकशक्तिविरोधितामात्रमिति वाच्यम् । तथा सति समीचीनव्यवहारहेतोर्विज्ञानाद् अयथार्थव्यवहारजन्मानुपपत्तिप्रसङ्गात् ॥ किञ्च सहकारिमात्रस्य विपरीतशक्त्यनाधायकत्वमङ्गीकर्तव्यं दोषाणामेव वा । आद्ये पशुहिंसा किं धर्मजनने स्वारसिकशक्तिमती उताधर्मजनन इति वाच्यम् । आद्ये कथं क्रतुबाह्यापि धर्मं न जनयेत् । द्वितीये कथं क्रत्वन्तर्गतापि धर्मं जनयेत् । सहकारिवशादिति चेत् अङ्गीकृतं तर्हि सहकारिणां स्वारसिकशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वम् । न द्वितीयः नियामकाभावात् ।**

**परि०— न चान्यथाख्यातीति** । ननूक्तमत्र तस्य समीचीनज्ञानकारणतावधारणादिति तत्राह **समीचीनेति** । ननु ज्ञानहेतावेवायं नियमो न त्वन्यत्रेति वादिनं प्रत्याह **किञ्चेति** । **सहकारीति** । मन्त्रादिरूपसहकारिवशादित्यर्थः ।

**वं०प०—** पृथगुपदेशादित्यादिना 'चक्षुरादेः समीचीनज्ञानकारणत्वावधारणात् । न खलु जरामरणविध्वंसहेतुः सुधा जातु जरामरणहेतुर्भवती'त्यादिनोक्तं दोषं परिहरति **समीचीनेति** । दोषा हि करणानामौत्सर्गिककार्यजननसामर्थ्यं निघ्नन्ति न तु विपरीतकार्यजननसामर्थ्यमप्यादधतीत्यादिनोक्तं दोषमाशङ्क्य परिहरति **न च दोषाणामिति** । **व्यवहारः** प्रवृत्तिः । सहकारिणां स्वारसिकशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वमस्तीत्यानेतुमाह **आद्ये पशुहिंसेत्यादिना** । पशुहिंसा सामान्येन पशुहिंसामात्रम् । **सहकारिवशादिति** ।





विधिमन्त्रादिरूपसहकारिवशादित्यर्थः । **सहकारिणाम्** मन्त्राणाम् । **स्वारसिकेति** । क्रत्वनन्तर्गतहिंसाया अधर्मजनकत्वरूपस्वारसिकशक्तिरित्यर्थः । **विपरीतशक्तीति** । धर्मजनकत्वरूपेत्यर्थः ।

**आनन्दः**— हेत्वभावादित्युक्तं दोषमुद्धरति **न चेति** । ननु तस्य समीचीनज्ञानकारणत्वान्नासमीचीनज्ञानकारणत्वं अत आह **समीचीनेति** । विरोधिमात्रमित्यत्र मात्रशब्देन विपरीतकार्यजननशक्त्याधायकत्वं व्यावर्तितम् । **तथा सतीति** । विपरीतजननशक्त्याधायकत्वस्यानङ्गीकृतत्वादिति भावः । **आद्य इति** । तस्या धर्मजनकत्वस्वाभाव्यादिति भावः । ननु तस्याधर्मजनकत्वस्वाभाव्येऽपि सहकारिसामर्थ्येन धर्मजनकत्वमिति शङ्कते **सहकारीति** ।

**कं०रा०**— **सहकारीति** । पशुहिंसाङ्गत्वेन विहितेतिकर्तव्यतालक्षणसहकारिवशादित्यर्थः ।

**श्रीनिधि०**— **सहकारिवशादिति** । पूर्वोत्तराङ्गकलापमात्रादिरूपसहकारिवशादित्यर्थः ।

**वा०चं०**— एवमन्यथाख्यातिस्वरूपमुपपाद्य परोक्ततत्कारणाभावं निरस्यति **न चेति** । **तथा सतीति** । न च प्रामाण्यस्य स्वतस्त्वादिन्द्रियादीनां समीचीनज्ञानकारणत्वस्वाभाव्येऽपि बाधकाभावेन ज्ञानस्योभयविधव्यवहारहेतुत्वसंभवान्न साम्यमिति वाच्यम् । असति दोषे ज्ञानस्य समीचीनव्यवहारहेतुत्वनियमेऽपि तत्स्वाभाव्याभावे इन्द्रियादीनामपि साम्यात्स्वतःप्रामाण्यमेव न स्यादित्यत्र तात्पर्यात् ।

**वा०र०**— तस्य समीचीनज्ञानकारणत्वावधारणादिति प्रागुक्तं दोषमुद्धरति मूले **समीचीनज्ञानेति** । दोषा हि करणानामित्युक्तं विपरीतकार्यजनकत्वाभावमाशङ्कते **न चेति** मूलम् । समीचीनज्ञानकरणत्वतथाविधव्यवहारकारणत्वयोः करणज्ञानस्वभावत्वे हि प्रतिबन्धनावकाशः । न चैवमित्येवं प्रतिबन्धानुत्थानमाशङ्कते **न च प्रामाण्यस्येति** । स्वतस्त्वादित्युक्त्या समीचीनज्ञानकारणत्वस्वभावानङ्गीकारे प्रामाण्यस्वतस्त्वं न स्यादिति बाधकसत्त्वादिन्द्रियादेस्तत्स्वभावत्वेऽपीति सूचितम् । अत एव व्यवहारपक्षे बाधकाभावेनेति वक्ष्यति । **बाधकाभावेनेति** । ज्ञानस्य समीचीनव्यवहारकारणत्वस्वभावानङ्गीकारे बाधकाभावेनेत्यर्थः । **उभयेति** । एकनियमाभावे द्वितीयस्यापि न्यायप्राप्तत्वादिति भावः । दोषे सति समीचीनव्यवहारस्येव समीचीनज्ञानस्याप्यभावः । असति दोषे तु समीचीनज्ञानस्येव तथा व्यवहारस्यापि भाव एव । एवं च दोषाभावे ज्ञानवद्व्यवहारेऽपि समीचीनत्वनियमात् तद्धेतुज्ञाने उक्तव्यवहारहेतुत्वस्य करणे चोक्तज्ञानहेतुत्वस्य च नियमाविशेषेऽपि यदि ज्ञाने उक्तव्यवहारहेतुत्वस्यास्वाभाविकत्वं तर्हीन्द्रियावपि तथाविधज्ञानहेतुत्वस्वभावो न स्यादिति प्रतिबन्दीं द्रढयति **असति दोष इति** ।

**विठ्ठ०**— एवं अन्यथाख्यातिस्वरूपमुपपाद्य परेणोक्तं कारणाभावं निरस्यति **न चेति** । ननु यथार्थज्ञानजननस्वभावस्येन्द्रियादेः दोषसहकृतत्वे ज्ञानजनकशक्तिप्रतिबन्ध एव भवेत् न विपरीतज्ञानोत्पादः





अतोऽन्यथाख्यातेः कारणाभाव एवेत्याशयेनाशङ्क्य निषेधति **न चेति** । **समीचीनव्यवहारहेतोरिति** । रजतोचितार्थक्रियानुकूलदानादिव्यवहारहेतोरित्यर्थः । तथाच समीचीनव्यवहारकारणविज्ञानादसमीचीनव्यवहारोत्पादनं प्रति दोषस्यैव कारणत्वमिति मन्तव्यम् । यदि च दोषस्य विपरीतकार्यजननसामर्थ्यानाधायकत्वं तथा सति समीचीनव्यवहारहेतोर्विज्ञानात् असमीचीनव्यवहारजन्मानुपपत्तिप्रसङ्गः स्यादिति भावः । **नियामकाभावादिति** । सर्वत्र सहकारिणो विपरीतशक्त्याधायकत्वमस्ति न दोषरूपसहकारिण इत्यत्र नियामकप्रमाणाभावादित्यर्थः ।

**गूढ०**— हेत्वभावादित्युक्तं दोषमुद्धरति **न चेति** । ननु तस्य समीचीनज्ञानकारणत्वान्नासमीचीनज्ञानकारणत्वमत आह **समीचीनेति** । विरोधिमात्रमित्यत्र मात्रशब्देन विपरीतकार्यजननशक्त्याधायकत्वं व्यावर्तितम् । **तथा सतीति** । विपरीतजननशक्त्याधायकत्वस्यानङ्गीकृतत्वादिति भावः । **आद्य इति** । तस्याधर्मजनकत्वस्वाभाव्यादिति भावः । ननु तस्याधर्मजनकत्वस्वाभाव्येऽपि सहकारिसामर्थ्येन धर्मजनकत्वर्मित शङ्कते **सहकारीति** ।

**प्रदीपः**— एवमारोपितमर्थं प्रतिपाद्य मिथ्याज्ञानमपि प्रतिपादयति **न चान्यथेति** । ननु जनकस्येति ज्ञानविषयस्य जनकत्वनियमात् असतो जनकत्वायोगान्न ज्ञानविषयत्वमित्यर्थः ।

**३६३ सु०— किञ्च काचादयोऽपि विपरीतज्ञानजनने सहकारिण एवाङ्गीक्रियन्ते । दोषत्वं त्विष्टकार्यविघातितामात्रेणोच्यते । कामुकस्य कामिनीविभ्रमेषु गुणत्वाभिमानात् । न चैवं भर्जिता(ताः)कुटजधाना वटांकुरं कुतो न जनय(यं)तीति वाच्यम्, पदार्थशक्तिवैचित्र्यात् । केचिद्वस्त्वन्तरशक्तिमेव प्रतिबध्नन्ति, यथा भर्जनादयः । केचित्सहजशक्तिप्रतिबन्धेन विपरीतामपि शक्तिमादधति; यथा विषस्य मारकत्वशक्तिं प्रतिबद्ध्यारोग्यादि(जनन)-शक्तिमादधानाः पदार्थाः । 'गुणा एव न ते दोषा' इति चेत् 'काचादयोऽपि गुणा एव न ते दोषा' इत्युक्तमेव ॥**

**परि०**— ननु दोषत्वान्यथानुपपत्तिरेव नियामिका प्रतिबन्धकरूपत्वाद्दोषस्य शक्त्यन्तराधानेन कार्यानुकूलत्वे सहकारितापत्त्या दोषत्ववाचोयुक्ती रिक्ता स्यादिति मन्वानं प्रत्याह **किञ्च काचादयोऽपीति** ॥ **तेषु** काचादिषु । **कुटजधाना** गिरिमल्लिकाबीजम् ॥ **पदार्था इति** । ते च वैद्यके प्रसिद्धाः । एवमसतो नभानात्संविद्विरोधाद्धेत्वभावाच्चेति अन्यथाख्यातौ पूर्वपक्षिणोक्तं बाधकत्रयं परिहृतम् ।





**गु०दी०— कामुकस्य कामिनीविभ्रम** इत्यत्र परकामिन्यां स्वकामिनीत्वविभ्रमे गुणत्वाभिमानात् स्वेष्टपरालिङ्गनविरोधित्वाभावेन गुणत्वाभिमानादित्यर्थः । **यथा विषस्य मारकत्वशक्तिं प्रतिबध्य** इत्यत्र रसौषधेषु विमिश्रितवत्सनाभ्याख्यविषस्य हिङ्गुमरीचिसैन्धवलवणादिपदार्था इत्यर्थः ।

**यादु०—** ननु सहकारिणामिष्टविघातित्वमात्रेण दोषत्वं क्वोपलब्धमित्यपेक्षायामाह **कामुकस्येति** । **विभ्रमेष्विति** । विरक्तं प्रति वस्तुतो दोषरूपेष्विति शेषः । **गुणत्वाभिमानात्** प्रकृतकार्यानुगुणत्वाभिमानात् । सहकारित्वाभिमानादिति यावत् । एवमग्रेऽपि गुणपदं सहकारिपरम् । प्रसिद्धं च परीक्षकाणां गुणपदं सहकारिविशेषपरतया प्रामाण्यं गुणजन्यमित्यादिव्यवहारादिति ज्ञातव्यम् । **यथा विषस्येति** । रसौषधेषु विमिश्रितवत्सनाभ्याख्यविषस्येत्यर्थः ।

**वं०प०— सहकारिण एवेति** । चक्षुरादिना भ्रमे जननीये काचादिदोषाणामपि मन्त्रादिवत्सहकारि-त्वेनैवाङ्गीकारात्सहकारीभूतानां काचादिदोषाणां युक्तं स्वारसिकशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्वमिति भावः । ननु काचादीनां सहकारित्वे दोषत्वप्रसिद्धिः कथमित्यत आह **दोषत्वं त्विति । इष्टं** समीचीनज्ञानम् । **कामिनीविभ्रमेष्विति** । हावभावविलासादिष्वित्यर्थः । कामुकस्य कामिनीविभ्रमेषु ग्राम्यकर्मरूपकार्यानुगुणत्वेन सहकारित्वाभिमानेऽपि विरक्तस्य मुक्तिरूपेष्टविघातित्वेन दोषत्वं दृष्टमिति सहकारिणामपीष्टविघातित्वमात्रेणैव दोषत्वं युक्तमिति भावः । न खलु दुष्टं कुटजबीजं वटं जनयति किं नाम न जनयत्येव कुटजाङ्कुरमित्युक्तं दोषमाशङ्क्य परिहरति **न चैवमिति** । सहकारिणां सहजशक्तिप्रतिबन्धेन विपरीतशक्त्याधायकत्व इत्यर्थः । भर्जिता भर्जनरूपसहकारिमन्तः । **गुणा एवेति** । वत्सनाभ्याख्यविषस्य मारकत्वशक्तिं प्रतिबध्यारोग्यजननशक्तिमादधाना ये पदार्थास्ते गुण एव सहकारिणो न तु दोषाः । अस्माभिस्तु दोषाणामेव सहजशक्तिप्रतिबन्धेन विपरीत-शक्त्याधायकत्वमुच्यत इति भावः । **उक्तमेवेति** । किञ्च काचादयोऽपीत्यादिनेत्यर्थः ।

**आनन्दः—** इष्टकार्यविघातितामात्रेण दोषत्वमन्यथा तु गुणत्वमित्येतत् क्वोपलब्धमत्राह **कामुकस्येति** । **तेषु** काचादिषु । दोषस्य विपरीतकार्यजनकत्वे बाधकमाशङ्क्य निषेधति **न चैवमिति** । शक्तिवैचित्र्यमेवाह **केचिदिति** ।

**श्रीनिधि०—** गुणस्यैवेष्टकार्यविघातितामात्रेण तत्र दोषत्वाभिमानः । न तु स्वरूपेण दोषत्वं गुणत्वं वा तथाभिमाने प्रयोगस्वरूपेण गुणत्वाभावेऽपि दोष एव गुणत्वाभिमानदर्शनादिति व्यतिरेकमुखेन उपपादयति **कामुकस्येति । कामिनीविभ्रम इति** । परकामिन्यां स्वकामिनीत्वविभ्रम इत्यर्थः । **तेषु** तदङ्गस्पर्शादिदोषेषु । **वस्त्वन्तरशक्तिं** वस्त्वन्तरजननशक्तिम् । यथा विषस्येति औषधेषु विमिश्रित वत्सनाभ्यादिविषस्थाः पदार्थाः हिंसादयः ।

**वा०चं०—** पराभ्युपगमरीत्या दोषाणां विपरीतकार्यजनकत्वमुपपाद्य सहकारिप्रतिबन्धाऽपि तदुपपादयति **किञ्चेति** । ननु न नियामकाभावः । दोषस्यैव नियामकत्वात् । अत एव केचित्सहकारिण एव केचिद्दोषा एवेति





व्यवस्थाऽन्यथा सा न स्यादित्यस्वरसादाह **किञ्चेति**। एवं चेष्टविघातित्वाद्दोषत्वव्यवहारेऽपि न दोषत्वजात्याक्रान्तः कश्चिद्दोष इति व्यवस्थैव नेत्याशयः। उक्तं काचादीनां सहकारित्वमेव पूर्वपक्ष्युक्तातिप्रसङ्गपरिहारे आकाङ्क्षाक्रमेण व्यापारयितुं परोक्तातिप्रसङ्गमाशङ्क्य निषेधति **न चैवमिति**। एवमसतो ज्ञानविषयत्वे तज्ज्ञानस्येन्द्रियादिजन्यत्वे चोपपादिते तर्हीन्द्रियजन्यज्ञानांशे पुनरसतो विषयत्वानुपपत्तिरेवेत्याशङ्कानिरासायोत्तरो ग्रन्थः। एवं च विषयत्वोपपादनदशायामेवैतदनुपपत्तिपरिहारस्यापि कर्तव्यत्वे कारणोपपादनानन्तरभावित्वमनुपपन्नमिति दूषणमलग्नकम्। उभयोक्त्यनन्तरमेवैतच्छङ्कोत्थानादिति द्रष्टव्यम्।

वा०र०— **पराभ्युपगमेति**। समीचीनव्यवहारहेतुता स्वभावस्यापि ज्ञानस्यान्यथाव्यवहारजनकत्वस्य परेणाभ्युपगमात् दोषाणां विपरीतकार्यजनकताऽस्तीति प्राप्तमिति तत्प्रतिबन्धाविपर्ययरूपविपरीतजनकत्वमुपपाद्येत्यर्थः। **सहकारीति**। पशुहिंसाया यत्सहकारि तत्प्रतिबन्धेत्यर्थः। **नियामकत्वादिति**। सहकारिष्वविद्यमानविपरीतशक्त्यनाधायकत्वस्य दोषेषु सत्त्वे दोषत्वमेव नियामकमित्यर्थः। तस्यैव नियामकत्वे व्यवस्थां प्रमाणयति **अत एवेति**। केचिच्च दोषा एवेति स्वरसः पाठः। केचिदित्येव पाठेऽपि चशब्दः पूरणीयः। **इति व्यवस्था**। इत्येवं सहकारित्वदोषत्वयोर्भिन्नभिन्नव्यक्तिनिष्ठतारूपा व्यवस्थेत्यर्थः। क्वचिदेव कश्चिदेव दोषो भवति। यत्र येनेष्टविघातः कृतः स्यात्। न तु दोषत्वेन संमतः सर्वत्र दोष एव। क्वचिदपि सर्वोऽपि वा दोष इत्यस्ति व्यवस्था। तथा च व्यवस्थाभावो नानिष्ट इति भावः। भवेदिष्टविघातित्वात्क्वचिदेव दोषत्वं यदि तदन्यत्र तस्य गुणत्वं स्यादित्यत आह **कामुकस्येति** मूलम्। **उक्तमिति**। काचादयोऽपीत्यादिनोक्तमित्यर्थः। **पूर्वपक्ष्युक्तेति**। भर्जितकुटजबीजस्यापि वटाङ्कुरजनकता स्यादित्यतिप्रसङ्गपरिहारे पदार्थशक्तिवैचित्र्येण कृते तदुपपादनाय प्रकृतदोषानुगुणतया केचित्सहजेत्युक्तप्रकारेऽभिहिते गुणा एवेति परः शङ्केत। तदा तर्हि काचादयोऽपि गुणा एवेति वदाम इत्येवमाकाङ्क्षाक्रमेण तदेव व्यापारयितुमित्यर्थः। अनेन प्रागुक्तं काचादेः सहकारित्वमेव पूर्वपक्ष्युक्तशङ्कान्तरनिराकरणव्याजेन परमुखेनानयतीत्युक्तं भवति **परोक्तेति**। यद्यपि न खलु कुटजबीजमिति पूर्वग्रन्थेऽतिप्रसङ्गो मुखतो नोक्तस्तथाऽप्यन्यथा कुटजबीजमपि दुष्टं वटाङ्कुरं जनयेदिति तत्रापादनस्याभिप्रेतत्वमिति सिद्धवत्कातिप्रसङ्गेत्युक्तम्। एतद्ग्रन्थेऽपि कुतो न जनयती यस्यैवं सति भर्जिता कुटजधाना वटाङ्कुरं जनयेदित्यत्रैव तात्पर्यस्य प्रतीतेश्चेति न दोषः। ननु जनकस्येत्युत्तरे ग्रन्थे पुनर्विषयत्वानुपपत्तिशङ्का तत्परिहारश्च क्रियते। तदुभयमसङ्गतम्। प्राक् यत्पुनरन्याकारोल्लेखीत्यादिनेत्यादिना नन्वन्यथाख्यातिजनने कारणाभाव इत्येतदवधिकेन ग्रन्थेनासतोऽपि विषयत्वस्योपपादनं कृत्वा न चान्यथेत्यादिना तत्कारणासंभवपरिहारकारणतदनन्तरं पुनर्विषयत्वानुपपत्तिशङ्कायास्तत्परिहारस्य चासङ्गतिः। प्रकारान्तरेण विषयत्वानुपपत्तितत्परिहारयोः सत्त्वे तदुभयस्य कारणविचारात्पूर्वमेव कर्तव्यत्वादित्याशङ्कां परिहरिष्यन्नुत्तरग्रन्थसङ्गतिमाह **एवमसत इति**। एवं सङ्गत्यभिप्रायसत्त्वादेव प्रागुक्ता सङ्गतिर्नेत्याह **एवं चेति**। शङ्काव्याजेन विवृत्तमेतत्। कथमेवं सङ्गत्युक्तिमात्रेण तद्दूषणालगनमित्यत आह **उभयेति**। भवेदसङ्गतिः यदि पूर्वत्र विषयत्वोपपादनदशायामेतच्छङ्कोत्थापनावसरः स्यात्। न चैवम्। साक्षात्कारं प्रति जनकस्यैव विषयत्वमित्यादिशङ्काबीजस्य अन्यथाख्यातेरिन्द्रियजन्यत्वस्य तदाऽप्रसक्तेः। इदानीं त्वन्यथाख्यातिकारणप्रतिपादनेन बीजोपस्थितौ तन्मूलकशङ्कावसर इति भावः।





**स०व्र०**— ननु सहकारिणामेवेष्टविघातित्वमात्रेण दोषत्वं क्वोपलब्धमित्यपेक्षायामाह **कामुकस्येति** । **गुणत्वाभिमानात्** । प्रकृतकार्यानुगुणत्वाभिमानात् । सहकारित्वाभिमानादिति यावत् । इत्थमग्रेऽपि गुणपदं सहकारिपदम् । **उक्तमेवेति** । काचादयोऽपि विपरीतज्ञानजनने सहकारित्वाभिमानादिनेति शेषः ।

**विठ्ठ०**— **काचादय** इत्यत्र काचः चक्षुर्दोषविशेषरूपसहकारि इत्येके उपनेत्रविशेषः, काचः इत्यन्ये, उपनेत्रेणापि सूक्ष्मलिपिषु स्थूलसद्भ्रमदर्शनात् । आदिशब्देन शङ्खादौ पीतत्वादिभ्रमजनककामलादिग्रहणम् । ननु चक्षुरादेः सहकारितया काचादीनां कार्यविशेषजनकत्वे दोषत्वोक्तिः कुत इत्यतः सापेक्षितसम्यग्ज्ञानादिप्रति-बन्धकतामात्रेणेत्याह **दोषत्वं त्विति** । प्रकृतकार्यानुगुणत्वे विपरीतज्ञानकारणेष्वपि गुणत्वाभिमानोऽप्यस्तीत्याह **कामुकस्येति** । अकामिन्यां कामिनीत्वभ्रमस्य प्रकृतस्वकार्यानुगुणत्वाभिमानादित्यर्थः । सहकारित्वाभिमानादिति वा । **यथा विषस्येति** । रसौषधेषु विमिश्रितवत्सनाभ्याख्यरसस्येत्यर्थः । **पदार्थाः** रसगन्धाद्याः वैद्यके प्रसिद्धाः ।

**चषकः**— **कामुकस्येति** । **कामिनीविभ्रमेषु** कामिनीविलासेषु । विरक्तं प्रति दोषरूपेति पूरणीयम् ।

**गूढ०**— **इष्टकार्यविघातितामात्रेण** दोषत्वं अन्यथा तु गुणत्वमित्येतत्क्वोपलब्धमत्राह **कामुकस्येति** । **तेषु** काचादिषु । दोषस्य विपरीतकार्यजनकत्वे बाधकत्वमाशङ्क्य निषेधति **न चैवमिति** । शक्तिवैचित्र्यमेवाह **केचिदिति** ।

**३६४ सु०— ननु जनकस्यैव साक्षात्कारिप्रत्ययविषयत्वं दृष्टम् । न च रजतस्ये-दन्तादात्म्यस्य वाऽसतो जनकत्वमस्ति । तत्कथं विषयत्वमिति । मैवम् । तथा सति ईश्वरज्ञानस्य नित्यस्यार्थो विषयो न स्यात् । प्रत्यभिज्ञानस्य च तत्तांशो विषयो न भवेत् । तन्निरूपकत्वादिमात्रेण विषयत्वाङ्गीकारे रजतादेरपि ज्ञाननिरूपकत्वेन विषयत्वोपपत्तेः ।**

**परि०**— तत्र यदुक्तमिष्टमेवैतदिति तदयुक्तमिति शङ्कते **ननु जनकस्यैवेति** । जन्यज्ञान एवायं नियम इत्यत आह **प्रत्यभिज्ञानस्य चेति** ॥

**वं०प०**— **जनकस्यैवेति** । विषयतया ज्ञानजनकस्यैवेत्यर्थः । **न स्यादिति** । जनकत्वाभावादिति भावः । **तदंशः** तत्तांशः । तद्देशकालसंबन्धरूपस्य तत्तांशस्य प्रत्यभिज्ञानकालेऽभावेन जनकत्वाभावादिति भावः । **निरूपकत्वमात्रेण** व्यावर्तकत्वमात्रेण ।

**आनन्दः**— साक्षात्कारिप्रत्ययविषयत्वव्यापकाभावान्न रजतस्य साक्षात्कारिप्रत्ययविषयत्वमिति शङ्कते **ननु जनकस्येति** । ननु जन्यसाक्षात्कारिप्रत्ययविषयत्वजनकत्वाद्व्याप्तं न तु केवलमिति नातिप्रसङ्ग इत्यत आह

**प्रत्यभिज्ञानस्येति** । ननु जन्यलौकिकप्रत्यक्षविषयत्वं जनकव्याप्तं तदंशस्य तु लौकिकप्रत्यक्षविषयत्वाभावान्न जनकत्वमिति चेन्न । नियमस्याप्रयोजकत्वात् । प्रत्यक्षज्ञानमात्रे क्लृप्तकारणेनैव तदुपपत्तौ अतिरिक्तकारणकल्पने मानाभावात् लौकिकत्वव्यवहारस्तु लौकिकसन्निकर्षजन्यत्वेनैवोपपन्न इति । **तन्निरूपकत्वादिमात्रेणेति** । तस्य विषयस्य ज्ञानावच्छेदकत्वमात्रेणेत्यर्थः ।

**श्रीनिधि०— साक्षात्कारिप्रत्ययेति** । साक्षात्करोतीति साक्षात्कारीति णिनि प्रत्ययान्तः । साक्षात्कारः साक्षात्करत्वं तदस्यास्तीति मत्वर्थे इनिप्रत्ययो वा । निरूपकत्वं व्यावृत्तिप्रत्ययजनकत्वम् । आदिपदेन स्वाभाविकमेव ज्ञानस्यार्थविषयत्वं न तु जन्यत्वादिप्रयुक्तमिति गृह्यते ।

**वा०चं०—** ननु जनकत्वस्य साक्षात्कारप्रत्ययविषयत्वव्यापकत्वाद्रजतादेस्तन्निवृत्तौ व्याप्यभूत-विषयत्वमपि निवर्तेतैवेत्युक्तमयुक्तमिति शङ्कते **नन्विति** । व्यभिचाराज्जनकत्वसाक्षात्कारिप्रत्ययविषयत्वयो-र्व्याप्यव्यापकभाव एवासिद्ध इत्याह **तथा सतीति** । न च जन्यसाक्षात्कारिप्रत्ययविषयत्वं जनकत्वव्याप्यमतो न व्यभिचारः । प्रकृतस्य च जन्यसाक्षात्कारिप्रत्ययत्वाद्रजतादेर्जनकत्वस्य निवृत्त्या तादृक्प्रत्ययविषयत्वस्यापि निवृत्तिरिति वाच्यम् । जनकत्वाभावेऽपि निमित्तान्तरेणाजन्यसाक्षात्कारविषयत्ववज्जन्यसाक्षात्कारविषयत्वस्यापि निमित्तान्तरेणोपपत्तेरप्रयोजकत्वेन जन्यत्वविशेषितस्यापि तस्य जनकत्वव्याप्यत्वासंभवात् । अस्तु वा जन्यत्वं विशेषणं तथाऽपि विशिष्टस्यापि व्यभिचार इत्याह **प्रत्यभिज्ञानस्येति** । ननु जनकस्यैव साक्षात्कारिप्रत्यय-विषयत्वमित्युत्सर्गः । ईश्वरज्ञानविषयादौ च बाधकवशाज्ज्ञानं प्रति निरूपकत्वादिमात्रं विषयत्वप्रयोजकत्वेन अङ्गीक्रियतेऽतो न दोष इति चेत् । तर्हि बाधकवशादेव रजतादेरपि अपवादविषयत्वात् ज्ञानं प्रति निरूपकत्वमात्रेण तस्यापि विषयतोपपत्तेर्नानुपपत्तिरित्याह **तन्निरूपकत्वादीति** । **निरूपकत्वं** व्यावर्तकत्वम् । आदिपदेन ज्ञान-जन्यातिशययोगित्वज्ञानभाननियतभास्यमानत्वादेः सङ्ग्रहः ।

**वा०र०— उक्तमिति** । सतोऽपि रजतादेरिन्द्रियविषयत्वमस्तीत्युक्तमित्यर्थः । इत्युक्तमित्यत्रेतीत्य-स्येत्यत इत्यर्थः । **जनकत्वसाक्षात्कारीति** । व्याप्यव्यापकेत्यत्राल्पाच्तरस्य पूर्वनिपाताद्व्याप्यव्यापकेत्येवो-क्तेऽपि जनकत्वेत्यादिक्रमानुसारेण जनकत्वस्य व्यापकता साक्षात्कारिप्रत्ययविषयत्वस्य च व्याप्यतेति विवेको बोध्यः । यथायोग्यं संबन्ध इत्यप्याहुः । **असिद्ध इति** । ततश्च व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वयुक्त्या नोक्तविषयत्वव्यावृत्तिप्रसक्तिरिति भावः । **इत्याहेति** । इत्याशयेनेश्वरज्ञानविषये साक्षात्कारिप्रत्ययविषयत्वसत्त्वेऽपि जनकत्वाभावाद्व्यभिचार इत्याहेत्यर्थः । अत एव तदुद्धारमाशङ्कते **न च जन्येति** । एवं तर्हि जनकत्वा-भावेन साक्षात्कारिप्रत्ययविषयत्वमात्राभावप्रसञ्जनमनुपपन्नमित्यतो रजतादिप्रत्ययस्य जन्यसाक्षात्कारप्रत्ययत्वेन रजतादेस्तद्विषयत्वस्थित्या जनकत्वाभावेन तद्व्याप्यजन्यसाक्षात्कारिप्रत्ययविषयत्वनिवृत्त्यापादनोपपत्तेरित्याह **प्रकृतस्य चेति** । **निमित्तान्तरेणेति** । स्वभावसिद्धप्रज्ञयाऽतीतानागतवर्तमानसर्वार्थविषयकज्ञानं प्रति तज्ज्ञान-सामर्थ्यादेव विषयत्वस्य स्थित्या तादृशजन्यज्ञानसामर्थ्यरूपनिमित्तेनेत्यर्थः । **निमित्तान्तरेणेति** । जनकत्वा-





भावेऽपीति वर्तते । तत्सन्निकर्षतदनुभवजनितसंस्कारादिरूपनिमित्तान्तरेणेत्यर्थः । यद्वोभयत्रापि निरूपकत्वादिरूपवक्ष्यमाणनिमित्तान्तरेणेत्यर्थः । **व्याप्यत्वासंभवादिति** । तदाश्रयणासंभवादित्यर्थः । तदाश्रयणेऽप्यप्रयोजकत्वेन व्याप्यत्वानुपपत्तिप्रास्त्या तदाश्रयणासंभवेन जन्यत्वविशेषणप्रक्षेपानुपपत्त्या तदविशेषणे चेश्वरज्ञाने व्यभिचार एवेति भावः । एवं जन्यत्वेन विशेषणपक्षस्य बहिरेव दूषणेन प्रत्यभिज्ञाविषये तदंशे विशिष्टस्य यद्वद्व्यभिचाराभिधानं तदङ्गीकारवादेनेति सूचयन्नाह **अस्तु वेति** । **निरूपकत्वमात्रेणेति** । निरूपकत्वादिति योज्यम् । .........अनुसारेण आदिपदार्थमाह **आदिपदेनेति** ।

**विठ्ठ०**— जनकस्य साक्षात्कारिप्रत्ययविषयताव्याप्यत्वात् असद्रजतादेस्तद्व्यावृत्तौ तद्व्याप्यं विषयत्वं च निवृत्तमेवेति कथमत्रासतो रजतादेः साक्षात्कारिज्ञानविषयत्वमिति शङ्कते **ननु जनकस्यैवेति** । व्यापकत्वमसिद्धं व्यभिचारादित्याह **तथा सतीति** । जन्यज्ञानावच्छिन्न एवेयं व्याप्तिरित्यत आह **प्रत्यभिज्ञानस्येति** ।

**गूढ०**— साक्षात्कारिप्रत्ययविषयत्वव्यापकाभावान्न रजतस्य साक्षात्कारिप्रत्ययविषयत्वमिति शङ्कते **ननु जनकस्येति** । ननु जन्यसाक्षात्कारिप्रत्ययविषयत्वजनकत्वाद्व्याप्तं न तु केवलमिति नातिप्रसङ्ग इत्यत आह **प्रत्यभिज्ञानस्येति** । ननु जन्यलौकिकप्रत्यक्षविषयत्वं जनकव्याप्तं तदंशस्य तु लौकिकप्रत्यक्षविषयत्वाभावान्न जनकत्वमिति चेन्न । नियमस्याप्रयोजकत्वात् । प्रत्यक्षज्ञानमात्रे क्लृप्तकारणेनैव तदुत्पत्तौ अतिरिक्तकारणकल्पने मानाभावात् । लौकिकत्वव्यवहारस्तु लौकिकसन्निकर्षजन्यत्वेनैवोपपन्न इति । **तन्निरूपकत्वादिमात्रेणेति** । तस्य विषयस्य ज्ञानावच्छेदकत्वमात्रेणेत्यर्थः ।

**प्रदीपः**— ज्ञानविषयस्य जनकत्वनियमो नास्तीत्याह **मैवमिति** ।

**३६५ सु०— कथमसतो निरूपकत्वमिति चेत् । (न) । 'गुरूणां टीका', 'कुरूणां क्षेत्रमि'तिवदुपपत्तेः । अतीतादिविषयानुमित्यादिव्यावर्तकत्वं च प्रमेयस्य न स्यात् । तत्र व्यावर्तकं कदाचिदस्ति रजतादिकं कदाऽपि नास्तीति वैषम्यमिति चेत् । तत्किं यदाकदाचित्सतः कारणत्वं पूर्वक्षणे सतो वा । नाद्यः अतिप्रसङ्गात् । द्वितीये तु किमनेन ॥ अथ नातीतादिरर्थः स्वसामर्थ्येनानुमित्यादिकं व्यावर्तयति, येन तत्सत्तापेक्षा स्यात्; किन्तु स्वहेतुसामर्थ्यादर्थव्यावृत्तं ज्ञानमुत्पद्यत इति चेत् । समं प्रकृतेऽपि ॥ किञ्च सत्यस्थलेऽपि न साक्षात्साक्षात्कारं प्रति कारणत्वमर्थस्य किन्त्विन्द्रियसन्निकर्षस्यैव । स च यत्रासता नोपपद्यते तत्रार्थसत्तामपेक्षत इति पारम्पर्येणैवार्थस्य कारणत्वम् ॥ ननु तर्ह्यसता रजतादिना सन्निकर्षायोगात्कथमिन्द्रियेण तज्ज्ञानजन्मेति चेन्न । शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तामेवात्यन्तासद्रजतात्मनाऽवगाहमानं ज्ञानं जनयतीत्यङ्गीकारात् । अत एव नासत्ख्याति-**





**प्रसङ्गः । यावत्खलु विगीते प्रत्यये भासते तस्य सर्वस्यासत्त्वेऽसत्ख्यातिः स्यात् । न चैवमित्युक्तम् ।**

**बिन्दुः— कथमसतो निरूपकत्वमिति** । यद्यपि व्यावृत्तिबुद्धिजनकत्वरूपव्यावर्तकत्वापरपर्यायं निरूपकत्वमसतो न भवति । तथापि यदेव परेणातीतविषयकज्ञानानुरोधेन कुरूणां क्षेत्रमिति सर्वजनव्यवहारानुरोधेन चातीतस्यापि व्यावृत्तिज्ञानजनकज्ञानविषयत्वरूपस्य बाधधर्मिसत्तानपेक्षस्य अखण्डस्यैव वा निरूपकत्वस्यावश्यवाच्यतया शुक्तिरजतस्यापि तत्संभवान्नेयमाशङ्का युक्तेति प्रघट्टकतात्पर्यार्थः । **न साक्षात्कारं प्रति कारणत्वमिति** । नन्वतीतादिज्ञाने विषयाभावेन कारणत्वासंभवेऽपि लौकिकप्रत्यक्षत्वेन विषयत्वेन कारणतास्तु व्यभिचाराभावादिति चेत् किमनेनोक्तं भवति । अलौकिकप्रत्यक्षांशे विषयत्वेनाभ्युपगतरजते बाधकानुपन्यासेन प्रकृतानुपयोगात् । रासभसमवधानकालीनघटत्वेन रासभत्वेन कार्यकारणभावस्य वक्तुमशक्यत्वेनातिप्रसङ्गाच्च । **पारम्पर्येणैवेति** । कुलालपितृवदन्यथासिद्धत्वमित्यर्थः । **शुक्तिकासन्निकृष्टमिति** । अर्थसन्निकर्षत्वमेव प्रयोजकं लाघवात् न तु यावदर्थसन्निकर्षत्वं गौरवादिति भावः ।

**परि०— व्यावर्तकत्वं चेति** । व्यावृत्तिबुद्धिकारणत्वं चेत्यर्थः ॥ **अतिप्रसङ्गादिति** । विनष्टकारणादपि कार्योत्पत्तिप्रसङ्गादित्यर्थः । अर्थव्यावृत्तं अर्थेन व्यावृत्तमित्यर्थः ॥ **प्रकृतेऽपीति** । शुक्तिरूप्यादिज्ञानस्थलेऽपीत्यर्थः । ननु सत्यरूप्यादिस्थले जनकस्यैव जन्यज्ञानं प्रति विषयत्वं दृष्टमित्यतस्तत्रापि नेत्याह **किञ्च सत्येति** ॥ **कारणत्वमिति** । प्रयोजकत्वमित्यर्थः । सन्निकर्षेणान्यथासिद्धस्य कारणत्वायोगात् । न चैवं चक्षुरादेरपि साक्षाद्धेतुत्वं न स्यात् । सन्निकर्षस्य व्यापारत्वेनाव्यवधायकत्वेऽर्थस्याप्येवं स्यादिति चेन्न । रूपादिज्ञानं करणसाध्यं कार्यत्वादित्यादिधर्मिग्राहकमानेन चक्षुरादेर्हेतुत्वसिद्धिवदर्थस्य तदभावात् । तदुक्तं तर्कताण्डवे प्रत्यक्षादिप्रमास्वनुगतगुणभङ्गे । चक्षुरादिवत्कारणत्वेन धर्मिग्राहकमानासिद्धोऽर्थः सन्निकर्षेणान्यथासिद्धत्वादतीतादिविषययोगिप्रत्यक्षादावसत्त्वाच्च न प्रत्यक्षप्रमाहेतुरिति ॥ **तस्य सर्वस्यासत्त्व इति** ॥ अन्यथा सदुपरागेणासदपि तादात्म्यादि भासत इति प्राचीनतार्किकमतेऽप्येष दोषः स्यादिति भावः ॥

**गु०दी०—** गुरुपुस्तके कुरुक्षेत्रे च चक्षुषा स्वासन्निकृष्टेतरपुस्तकक्षेत्रादिभ्यः व्यावृत्ता पुस्तकविषयिणी क्षेत्रविषयिणी च बुद्धिर्जायते । तस्यां बुद्धौ श्रुत्युपनीतानां गुरूणामेव कुरूणामेव चोल्लेख एव यथा निरूपकत्वमित्युच्यते एवं दोषसहितपुरोवर्तिसन्निकृष्टेन्द्रियादितरेभ्यो व्यावृत्ता पुरोवर्तिविषयिणी या बुद्धिर्जायते तस्यां बुद्धौ





रजतस्यैव य उल्लेखस्तदेव निरूपकत्वं नाम, तत्र च किमसत्त्वेनापराध्यत इति भावेनोक्तं **समं प्रकृतेऽपीति** । **अत एव** इत्यत्र **अतः** सद्रूपाधिष्ठानसंवलितासत्ख्यात्यङ्गीकारात् ।

**यादु०— अत एवेति** । साक्षिरूपज्ञानस्य नियतयाथार्थ्यादिवेत्यर्थः ।

**वं०प०— कथमसत इति** । निरूपणसमयेऽभावादिति भावः । **इतिवदिति** । तटस्थत्वेनेत्यर्थः । प्रमेयस्यातीतादेः । **अतिप्रसङ्गादिति** । रासभस्यापि पटकारणत्वापत्तिरित्यर्थः । **किमनेनेति** । कदाचित्सत्त्वकथनेनोक्तमित्यर्थः । तथा चातीतादिविषयकानुमितिपूर्वक्षणे विषयस्य सत्त्वाभावाद्व्यावर्तकत्वं न स्यादिति भावः । **स्वसामर्थ्येनेति** । स्वसन्निकृष्टकरणजन्यत्वेनेत्यर्थः । **स्वहेत्विति** । अतीतादिविषयकानुमित्यादिहेतुभूतलिङ्गादिसामर्थ्यदिवेत्यर्थः । अर्थव्यावृत्तमर्थेनेतरव्यावृत्तम् । अर्थसंबद्धमर्थनिरूपितमिति यावत् । **सममिति** । अत्रापि दुष्टेन्द्रियरूपज्ञानहेतुसामर्थ्यादिव रजतादिव्यावृत्तं ज्ञानमुत्पद्यत इत्यर्थः । **पारम्पर्येणैवेति** । ज्ञानजनकसन्निकर्षजनकतयाऽन्यथासिद्धत्वान्नार्थस्य ज्ञानजनकत्वमिति भावः । न चैवमिन्द्रियस्यापि सन्निकर्षजनकत्वेनान्यथासिद्धत्वान्न साक्षात्कारज्ञानजनकत्वं किन्तु पारम्पर्येणैव स्यादिति वाच्यम् । अन्वयव्यतिरेकाभ्यामिन्द्रियस्य साक्षाज्ज्ञानकारणत्वावधारणात् । न चैवं विषयस्याप्यन्वयव्यतिरेकाभ्यां साक्षाज्ज्ञानकारणत्वावधारणान्नान्यथासिद्धिरिति वाच्यम् । अतीतादौ व्यभिचारेण विषये ज्ञाननिरूपितान्वयव्यतिरेकयोरभावादित्यवधेयम् । **तामेव** शुक्तिकामेव । अवगाहमानं यज्ज्ञानं इदं रजतमिति ज्ञानं तज्जनयतीत्यर्थः । इदं रजतमिति ज्ञानस्यासद्रजतविषयकत्वे शून्यवाद्यभिमतासत्ख्यातिप्रसङ्ग इति चेत्तत्राह **अत एवेति** । अत एवेत्युक्तं विशदयति **यावदिति** । **न चैवमिति** । अस्माभिरधिष्ठानभूतशुक्तिकाशकलस्य सत्यत्वाङ्गीकारात् । शून्यवादिमतेऽधिष्ठानस्याप्यसत्त्वादिति भावः ।

**आनन्दः— नु** निरूपकत्वं हि व्यावर्तकत्वं तच्च व्यावृत्तिबुद्धिजनकत्वं तथाच कथमसतस्तदित्याशङ्कते **कथमसत इति** । अत्र हि व्यावर्तकत्वं व्यावृत्तिबुद्धिविषयत्वं तच्चासतोऽप्युपपाद्यते । अन्यथाऽसतो गुर्वदिरपि टीकादिव्यावर्तकत्वं न स्यादिति परिहरति **गुरूणामिति** । अतीतादिप्रमेयस्य तदानीमभावेनाजनकत्वादिति भावः । **अतिप्रसङ्गादिति** । नष्टदण्डेनापि इदानीं घटोत्पत्तिः स्यादित्यर्थः । **किमनेनेति** । यदाकदाचित् सत्त्वोपन्यासेन किमित्यर्थः । तर्हि प्रकृतेऽप्यसद्रजतज्ञानहेतोरेतदसद्रजतज्ञानं व्यावृत्तमुत्पद्यत इति परिहरति **समं प्रकृतेऽपीति** । तर्ह्यथाभावेपीन्द्रियसन्निकर्षेण ज्ञानोत्पत्तिः स्यादित्यत्राह **स चेति** । कारणत्वं प्रयोजकमित्यर्थः । तथाचान्यथासिद्धत्वान्न कारणमिति भावः । असद्रजतावगाहनेऽसत्ख्यातिः स्यादित्यत आह **अत एवेति** । भ्रमे भासमानस्य सर्वस्यासत्त्वानङ्गीकारादेवेत्यर्थः ।

**कं०रा०— किमिति** । अनेन यदाकदाचित्सत्त्वेन किमित्यर्थः । **स्वेति** । स्वस्यातीतादिविषयानुमित्यादेर्यो हेतुर्लिङ्गपरामर्शादिलक्षणस्तत्सामर्थ्यादिवेत्यर्थः ।





**श्रीनिधि०— किमनेनेति**। यदाकदाचित् सत्त्वासत्त्ववैषम्येण। पूर्वक्षणवृत्तित्वाभावस्योभयत्र तौल्यादिति भावः । **तत्सत्तापेक्षेति** । पूर्वक्षणादाविति शेषः । **समं प्रकृतेऽपीति** । रजतज्ञानमपि स्वसामग्रीसामर्थ्यादिव व्यावृत्तमुत्पद्यत इति भवतु तथा च नासज्ज्ञाननिरास इति भावः । अवगाहमानं विषयीकुर्वत् । **अत एवेति** । सदधिष्ठानसंवलितासत्ख्यात्यङ्गीकारादित्यर्थः ।

**वा०चं०—** नित्यज्ञानविषयस्य तदंशस्य (तत्तांशस्य) च सत्त्वान्निरूपकत्वादिसंभवेऽत्यन्तासतो रजतादेर्निरूपकत्वादेरपि संभव इति वैषम्यं शङ्कते **कथमिति** । अत्र वक्तव्यं निरूपणदशायां सत्त्वस्य निरूपकत्वे प्रयोजकतया रजतादेरत्यन्तासतस्तदभावान्न निरूपकत्वमित्याशयो वा कदाचिदपि सत्त्वस्य निरूपकत्वप्रयोजकतयाऽत्यन्तासतस्तदभावान्निरूपकत्वासंभव इति वा । आद्येऽपि निरूपणदशायां सत्त्वं निरूपकत्वमात्रप्रयोजकत्वेनाभिमतं ज्ञाननिरूपकत्व एव वेति विकल्पान्मनसि निधायाद्यं दूषयति **गुरूणामिति** । न द्वितीयः । असतो ज्ञानेतरनिरूपकत्ववज्ज्ञाननिरूपकत्वस्याप्युपपत्तेः । अभ्युपेत्याह **अतीतादीति** । आद्यादिपदेनानागतग्रहणम् । द्वितीयेन शाब्दसङ्ग्रहः । चशब्देन प्रत्यभिज्ञाव्यावर्तकतदंशसङ्ग्रहः । द्वितीयं शङ्कते **तत्रेति** । कार्यकालेऽसतः कदाचित्सत्त्वस्याप्रयोजकत्वान्न तद्वैषम्यापादकमित्याह **तत्किमिति** । ननु न वयमतीताद्यर्थस्य व्यावृत्तिजननशक्तिमत्त्वरूपं वा व्यावृत्तिबुद्धिजननशक्तिमत्त्वरूपं वा व्यावर्तकत्वमभ्युपगच्छामो येन शक्तिमतोऽभावे शक्त्यसंभवदोषः प्रसज्येत । किन्तु ज्ञानेऽन्यस्माद्या व्यावृत्तिस्तज्जननशक्तिर्ज्ञानहेतुष्वेव । ज्ञानमन्यस्माद्व्यावृत्तमिति व्यावृत्तिबुद्धिजननशक्तिस्तु ज्ञानहेत्वासादितेऽवश्याभ्युपगमनीये ज्ञाननिष्ठस्वाभाविकविशेषे एव । एवं च तदुभयविधं व्यावर्तकत्वं ज्ञानेहतुज्ञानगतस्वाभाविकविशेषयोरेव । अतीताद्यर्थे तु ज्ञानहेतुजन्यव्यावृत्तिविशिष्टज्ञाने वा ज्ञानहेत्वासादितस्वाभाविकविशेषेण जन्यव्यावृत्तिबुद्धौ वोल्लेखित्वमात्रं व्यावर्तकत्वं विषयत्वप्रयोजकत्वेनाभ्युपगम्यते । तच्च न तत्सत्तापेक्षम् । न चैवं त्वया वक्तुं शक्यम् । अतीतादिज्ञानस्य प्रमात्वेन जन्यज्ञाने तत्ताभानोपयुक्ततत्तानुभवजन्यसंस्कारादेः सामग्रीकोटौ निवेशेन तत्र हेतुसामर्थ्यादिकल्पनासंभवेऽप्यसज्ज्ञानस्य भ्रमरूपत्वेन जन्यज्ञानेऽसद्भानोपयुक्ततत्सन्निकर्षादिरसंभवेन तस्य सामग्रीकोटावनिवेशेन न तत्रैतत्कल्पनासंभव इत्याशयेन शङ्कते **अथेति** । **अर्थव्यावृत्तमिति** । अर्थनिरूपितव्यावृत्तिमदित्यर्थः । अर्थस्य व्यावृत्तिनिरूपकत्वं चोक्तविधव्यावर्तकत्वरूपमेवेति भावः । अतीतादिज्ञानस्य प्रमात्वात्समीचीनसामग्र्योत्पादितज्ञाने तादृशसामग्र्युत्पादितस्वाभाविकविशेषजन्यव्यावृत्तिबुद्धौ वोल्लेखितत्वं रजतादिज्ञानस्य भ्रमत्वात्तदसमीचीनसामग्र्युत्पादितज्ञाने तादृशज्ञानोत्पादितज्ञानगतस्वाभाविकविशेषजन्यव्यावृत्तिबुद्धौ वोल्लेखितत्वमित्येतावन्मात्रविशेषसद्भावेऽपि स्वसामग्र्यासादितज्ञानोल्लेखित्वमात्रस्य व्यावर्तकत्वादिरूपतया ज्ञानसामग्रीसमीचीनत्वादेरकिञ्चित्करत्वात् शक्तिसन्निकर्षसादृश्यादिदोषादेरेव जन्यज्ञानेऽसतो भानोपयुक्तस्य भ्रमसामग्रीकोटावपि प्रवेशेन तादृशव्यावर्तकत्वादेरसत्यपि सत्त्वान्न काऽप्यनुपपत्तिरित्याशयेनाह **समं प्रकृतेऽपीति** । इदं च सर्पभ्रमादावपि हीत्यनुव्याख्याव्याख्यानरूपोत्तरग्रन्थे स्पष्टम् । अत एव तत्त्वोद्योतटीकायां न विषयत्वं नाम वस्तुसामर्थ्यं किं नाम करणसामर्थ्याद्यदुल्लेखिज्ञानमुत्पद्यते स विषय इत्युच्यत इत्याद्युक्तम् । एवमधिकरणत्वकर्तृत्वकर्मत्वप्रतियोगित्वा-





दिकमपि तादृशतादृशज्ञानसामग्र्यासादितायां तत्तदधिकरणत्वतत्तत्कर्तृत्वतत्तत्कर्मत्वतत्तत्प्रतियोगित्वादिप्रतीतावधिकरणत्वादिनोल्लेखित्वादिमात्रं न तु वस्तुकृतम् । इदं च ननु कथमसतो भाति भास्यत इति कर्तृत्वमित्याद्येतदधिकरणोत्तरग्रन्थे साध्यधर्मोऽयं सन्नसन्वा न वोभयमित्यनुव्याख्याव्याख्यानरूपोत्तरग्रन्थेऽभावज्ञानोपयोगिज्ञानतामात्रस्य प्रतियोगित्वादिति तत्त्वोद्योतटीकायां स्फुटमिति दिक् । ननु तर्ह्यव्यभिचारादस्तु लौकिकसाक्षात्कारविषयत्वव्यापकत्वं जनकत्वस्य । तथा च रजतादेरसतोऽजनकस्य लौकिकसाक्षात्कारविषयत्वानुपपत्तिरेवेति चेन्न । अजनकस्याप्यतीतादेरलौकिकसाक्षात्कारविषयत्ववदजनकस्यापि निरूपकत्वादिमात्रेण लौकिकसाक्षात्कारविषयत्वाभ्युपगमे बाधकाभावेनाप्रयोजकत्वात् रजतांशेऽलौकिकत्वस्य प्रत्यभिज्ञायास्तत्तांश इवाङ्गीकर्तुमुचितत्वाच्चेति समाधाने स्थितेऽपि स्वमतेऽभिनवान्यथाख्यातिस्वरूपप्रतिपादनाय शङ्कामुत्थापयितुमुपक्षेपाय सन्निकर्षजनकतयाऽन्यथासिद्धत्वान्न लौकिकसाक्षात्कारेऽपि विषयस्य जनकत्वमिति प्रकारान्तरेण समाधत्ते **किञ्चेति** । अस्तु तर्हि सन्निकर्षासंभवादेवासतो विषयत्वानुपपत्तिरिति शङ्कामुत्थापयति **नन्विति** । मास्तु तत्सन्निकर्षोऽधिष्ठानसन्निकर्षादिव ज्ञानोत्पत्त्युपपत्तेरित्याशयेनाभिनवान्यथाख्यातिस्वरूपमाह **शुक्तिकेति** । एवं सत्यन्यदपि सिद्धं फलमित्याह **अत एवेति** ।

**वा०र०— निरूपकत्वादीति** । ज्ञानं प्रतीति शेषः । एवमुत्तरत्रापि । असतो ज्ञाननिरूपकत्वस्येह प्रस्तुतत्वेन गुरूणामित्याद्युदाहरणायोग इत्यतो निरूपकत्वमात्रे सत्त्वं प्रयोजकमित्येतत्पक्षे दूषणकथनपरत्वान्न तदयोग इत्याशयेनोत्तरग्रन्थनिवर्त्यसंभावितविकल्पप्रदर्शनपूर्वकं तन्निरासपरतयोत्तरवाक्यान्यवतारयति **अत्र वक्तव्यमिति** । सत्त्वं ज्ञाननिरूपकत्वेनाभिमतमिति पक्षेऽतीतादीत्युक्तदूषणपर्यन्तधावनानर्थक्यम् । गुरूणां टीकामित्यादावसत एव गुर्वदिष्टीकादिनिरूपकत्ववज्ज्ञाननिरूपकत्वस्यापि संभवेन तद्दूषणपर्यन्तधावनानर्थक्यादित्यतः सत्येव तद्दूषणेऽभ्युपगमवादेनासतोऽप्यनुमित्यादिव्यावर्तकत्वमस्तीति न तस्य ज्ञाननिरूपकत्वानभिर्मातः संभवतीति दूषणान्तरमुच्यत इति न दोष इत्याशयेन स्वयं पूर्वन्यायप्राप्तदूषणेन द्वितीयनिराकरणं बहिरेव कृत्वाङ्गीकारवादेन दूषणान्तरकथनपरतयोत्तरवाक्यमवतारयति **न द्वितीय इत्यादिना** । **द्वितीयमिति** । कदाचिदपि सत्त्वस्येत्युक्तद्वितीयमित्यर्थः । तत्किमित्यादिग्रन्थस्थद्वितीये किमनेनेत्यस्यार्थः । **कार्यकालेऽसत इति** । यदाकदाचिदित्यादेरर्थः । **कदाचिदिति** । **शक्तिमत्त्वरूपं वेति** । अनेन व्यावर्तकत्वपदार्थकथनं च कृतं भवति । वक्ष्यति च । तदुभयविधं **व्यावर्तकत्वमिति** । व्यावृत्तिबुद्धिजनकत्वं हि व्यावर्तकत्वमित्यादि प्रकृत्यधिकरणीयमूलानुसारेण चायं ग्रन्थः । किंत्वित्यस्य ज्ञानहेतुज्ञानगतस्वाभाविकविषययोरेवेति संबन्धः । ज्ञानहेतुश्च ज्ञानगतस्वाभाविकविशेषश्च तयोरिति विग्रहः । अभ्युपगच्छाम इति वर्तते । कुतस्तदभ्युपगम इत्यतो वस्तुस्थितिप्रदर्शनं **ज्ञानेऽन्यस्मादित्यादि** । **अन्यस्मात्** विषयान्तरात् । तथाऽप्यतीतादेरर्थस्य व्यावर्तकत्वाभाव एवेति कथं विषयत्वनिर्वाह इत्यतः करणीयत्वेन मूलाभिप्रेतमधिकमप्याह **अतीताद्यर्थे त्विति** । **व्यावृत्तिविशिष्टेति** । विषयान्तरादिति शेषः । बुद्धावुल्लेखित्वमित्यत्रोल्लेखवत्वमर्थः । उल्लेख्यत्वमिति यावत् । वक्ष्यति चोल्लेखमात्रमिति । एवमुत्तरत्राप्युल्लेखित्वमित्यस्यार्थो ज्ञेयः । तर्ह्यसतोऽपि तथैवास्त्वित्यत आह **न चैवमिति** ।





कुत इत्यतो वैषम्यं स्पष्टयति **अतीतादीति । असज्ज्ञानस्येति** । सप्तम्यन्ततया विपरिणतमनुवर्तते । असद्रजतादिज्ञाने हेतुसामर्थ्यादिकल्पनासंभवो नेत्यर्थः । अत्र टीकायामथेतीति प्रतीकोपादानानन्तरमर्थव्यावृत्तमितीत्यारभ्य रूपमेवेति भाव इत्यन्तो ग्रन्थस्तदनन्तरं चातीतादिज्ञानस्येत्यादिग्रन्थः । दिगित्यनन्तरं तत्पाठस्तु तत्र तत्र निक्षेप्य शोधसङ्ग्रहरूपे शोधपत्रे दिगित्यन्तानन्तरं तल्लेखात् तल्लेखस्य चाथेतीत्यनन्तरं निवेशाभिप्रायकस्य तथात्वानवधानेन लेखकप्रयुक्तत्वादिति ज्ञेयम् । तत्रार्थजन्यव्यावृत्तीत्यादिप्रतीतिनिरासायाः । **अर्थनिरूपितेति** । कथं तस्य निरूपकत्वमपीत्यतो ज्ञानहेत्वित्युक्तरीत्या तदित्याह **अर्थस्येति** । अतीतादिज्ञानस्य प्रमात्वादित्यादिवैषम्ये शङ्किते सति कथं साम्योक्तिरित्यतः येन प्रमात्वभ्रमत्वरूपेण वैषम्यमुच्यते न तेन रूपेण साम्यमत्रोच्यते । किन्तु स्वसामग्र्यासादितज्ञानोल्लेखित्वमात्ररूपव्यावर्तकत्वस्यातीतादिस्थल इव प्रकृतेऽपि सत्त्वेन तेनैव साम्यमुच्यते ततो नानुपपत्तिरित्याद्याह **अतीतादिज्ञानस्य प्रमात्वादिति । समीचीनसामग्रीति** । ज्ञानसामग्रीति योज्यम् । **उत्पादितज्ञान इति** । व्यावृत्तिविशिष्टज्ञानइत्यर्थः । उल्लेखित्वमित्यनेन संबन्धः । **तादृशेति** । समीचीनसामग्र्योत्पादितो यो ज्ञानगतः स्वाभाविको विशेषस्तज्जन्या या ज्ञानमन्यस्मात् व्यावृत्तमिति ज्ञाने विषयान्तरव्यावृत्तिबुद्धिस्तत्रेति योज्यम् । उल्लेखित्वमतीतादेरिति शेषः । रजतादिज्ञानस्य त्विति पाठः स्वरस एव । तुशब्दाभावे वा तदर्थान्तर्भविन व्याख्येयम् । **तदसमीचीनेति** । तस्य रजतादिज्ञानस्यासमीचीना या सामग्री तदुत्पादितव्यावृत्तिविशिष्टज्ञान इत्यर्थः । तादृशसामग्र्युत्पादितज्ञानगतेति पाठः । क्वचित्कज्ञानेति पाठे ज्ञायते अनेनेति करणव्युत्पत्त्या सामग्र्येव विवक्षितेति न दोषः । **स्वसामग्रीति** । समीचीनत्वासमीचीनत्वविशेषं विहाय ज्ञानसामग्रीत्वेन विवक्षितज्ञानसामग्र्या आसादितं यज्ज्ञानं व्यावृत्तिविशिष्टं ज्ञानं नञोल्लेखित्वेत्यर्थः । अत्रोल्लेखित्वादिमात्रस्य व्यावर्तकत्वरूपतयेति पाठः । आदिपदेन स्वसामग्र्यासादितज्ञानगतविशेषजन्यव्यावृत्तिबुद्धावुल्लेखित्वपरिग्रहः । असज्ज्ञानस्य भ्रमरूपत्वेनेत्यादिनोक्तं दूषणमुद्धरति **शुक्तिसन्निकर्षेति** । तथा चातीतादिस्थल इवासद्रजतादिस्थलेऽपि हेतुसामर्थ्यकल्पनोपपत्त्या ज्ञानहेतुनैव व्यावृत्तिविशिष्टज्ञानोत्पत्तिस्तत्र रजतादेरुल्लेख इत्यादि युज्यत इति साम्यमेवेत्यर्थः । **अपि हीत्यनुव्याख्येति** । प्रकृत्यधिकरणीयेति शेषः । **तत्त्वोद्योतेति** । न हि ज्ञानज्ञेययोरेकाकारतेत्येतद्वाक्यटीकायामित्यर्थः । एतदसतोऽपि रजतादेर्ज्ञानविषयत्वोपपादनं मूलकारीयमुपलक्षणम् । एतन्न्यायेनाधिकरणत्वकर्तृत्वादेरप्युपपाद्यत्वादित्याह **एवमिति** । एवमधिकरणत्वादिकं द्रष्टव्यमित्येवोक्ते विषयत्वोपपादनप्रकारो यावांस्तावतः सर्वस्यातिदेशो विज्ञायेत । स मा विज्ञायीत्याशयेन व्यावर्तकत्वस्योभयविधस्याभावेऽप्यधिकरणत्वादिनोल्लेखित्वादिमात्रमेवाधिकरणत्वादिकमित्युक्तम् । **न वस्तुकृतमिति** । वस्तुनस्तत्तन्निरूपिताधारत्वस्वातन्त्र्यादेरसति सत्त्वात्तद्रूपकारणेनाधिकरणत्वादिकमिति नेत्यर्थः । **अधिकरणोत्तरग्रन्थ इति** । असद्विलक्षणज्ञात्या इत्येतदनुव्याख्यानव्याख्यानरूपोत्तरग्रन्थ इत्यर्थः । **अनुव्याख्यानेति** । पृथगधिकरणीयेति शेषः । **तत्त्वोद्योतटीकायां चेति** । चशब्दयुक्तो मूलकोशानुसारी पाठः । चशब्दाभावो लेखकप्रमादात् । मिथ्याशब्दोऽनिर्वचनीयं वदतीत्यत्र चेत्येतत्तत्त्वोद्योतटीकायां न हि प्रतियोगित्वं रूपादिवद्धर्मिसत्तासापेक्षम् । अभावज्ञानेत्यादेरुक्तत्वादिति भावः । अर्थव्यावृत्तमितीत्यादिग्रन्थस्तु पूर्वमेव पाठ इति पूर्वमेवोक्तम् । किञ्चेत्याद्युत्तरग्रन्थव्यावर्त्यशङ्कां दर्शयंस्तत्परिहारस्याजनकस्याप्यतीतादेरित्युक्तप्रकारेण संभवे किं मूलोक्तप्रकारा-





न्तरानुसरणेनेत्यतः स्वोक्तप्रकारेण तत्परिहारे सत्येव प्रकारान्तरेण शङ्कां परिहर्तुं मूलं प्रवृत्तमिति न दोष इत्याह **ननु तर्हीत्यादिना** । **शङ्कामिति** । ननु तर्ह्यसत इत्यादिनेति शेषः । **उपक्षेपाय** शङ्काप्रसक्तये । शङ्कोत्थापनेन प्रकारान्तरेण तत्परिहारस्यापि प्रयोजनं स्वमत इत्यादि प्रतिपादनायेत्यन्तम् । तत्प्रतिपादनं च **शुक्तिकेत्यादि** मूल इत्युत्तरत्र स्पष्टम् ।

**विठ०— व्यावर्तकमिति** । व्यावर्तकबुद्धिं प्रति कारणत्वमित्यर्थः । **अतिप्रसङ्गादिति** । विनष्ट-करणादपि कार्योत्पत्तिप्रसङ्गादित्यर्थः । ननु व्यावर्तकत्वं नाम न व्यावृत्तिबुद्धिजननशक्तिमत्त्वं येनोक्तदोषः किं नामार्थव्यावृत्तज्ञानशक्तिमत्स्वकारणेन जातेत्यर्थस्य तदुल्लेख्यत्वमात्रव्यावर्तकत्वमित्याशयेन शङ्कते **अथ नातीतादीति** । **सममिति** । अत एव तत्त्वोद्योतटीकायां विषयत्वं नाम न वस्तुसामर्थ्यं किं नाम करणसामर्थ्यात् यदुल्लेखिज्ञानमुत्पद्यते स विषय इत्याद्युक्तम् । ज्ञानं प्रति अर्थस्य कारणत्वं क्वापि न साक्षादस्तीत्याह **किञ्चेति** । ज्ञानं प्रति अर्थस्य क्वापि जनकतासंमतेरिति तत्त्वोद्योतटीकावचनं चैतदभिप्रायेणैवेति ज्ञेयम् । तर्हि इन्द्रियसन्निकर्षनिष्पत्तये सत्ताऽङ्गीकार्येति शङ्कते **ननु तर्हीति** । दोषाभाव एव चैवं, दोषयुक्तमिन्द्रियं तु अन्येनासता सन्निकृष्टं अन्यदन्यात्मना ज्ञापयतीति परिहरति **नेति** । ननु असत एव रजतस्य प्रतीत्यङ्गीकारे सर्वासत्त्ववादिभिः बौद्धैरुच्यमाना या विगीतप्रत्यये प्रतीयमाना सर्वासत्ख्यातिः तदभ्युपगमप्रसङ्ग इत्यत आह **अत एवेति** । इन्द्रियसन्निकर्षविषयाधिष्ठानसत्त्वा-भ्युपगमादेवेत्यर्थः । तदेव विवृणोति **यावत्खल्विति** ।

**गूढ०—** ननु निरूपकत्वं हि व्यावर्तकत्वं तच्च व्यावृत्तिबुद्धिजनकत्वं तथाच कथमसतस्तदित्याशङ्कते **कथमसत इति** । अत्र हि व्यावर्तकत्वं व्यावृत्तिबुद्धिविषयत्वं तच्चासतोऽप्युपपद्यते । अन्यथा असतो गुर्वादेरपि टीकादिव्यावर्तकत्वं न स्यादिति परिहरति **गुरूणामिति** । अतीतादिप्रमेयस्य तदानीमभावेनाजनकत्वादिति भावः । **अतिप्रसङ्गादिति** । नष्टदण्डेनापि इदानीं घटोत्पत्तिः स्यादित्यर्थः । **किमनेनेति** । यदाकदाचित्सत्त्वोपन्यासेन किमित्यर्थः । तर्हि प्रकृतेऽप्यसद्रजतज्ञानहेतोरेतदसद्रजतज्ञानं व्यावृत्तमुत्पद्यत इति परिहरति **समं प्रकृतेऽपीति** । तर्ह्यर्थाभावेऽपीन्द्रियसन्निकर्षेण ज्ञानोत्पत्तिः स्यादित्यत्राह **स चेति** । कारणत्वं प्रयोजकत्वमित्यर्थः । तथा चान्यथासिद्धत्वान्न कारणत्वमिति भावः । असद्रजतावगाहने असत्ख्यातिः स्यादित्यत आह **अत एवेति** । भ्रमे भासमानस्य सर्वस्यासत्त्वानङ्गीकारादेवेत्यर्थः ।

**प्रदीपः—** निरूपकत्वमात्रेण विषयत्वानङ्गीकारे दोषमाह **अतीतादीति** । अथेत्यतीतादीनां विषयत्वं सहकारिबलाद्युक्तमित्यर्थः । **सममिति** । इहापि काचादयः सहकारिण इत्यर्थः ।

**२६६ सु०— यच्चोक्तं 'विषयव्यभिचारे ज्ञानस्य सर्वत्रानाश्वास' इति तत् 'औत्सर्गिकं ज्ञानानां प्रामाण्यमपवादाद्विपर्यय' इति वदताऽऽचार्येणैव परिहरिष्यते । 'साक्षी खलु चैतन्यरूपो नियतयाथार्थ्यः कदाचिदपि संशयानास्कन्दितोऽन्तःकरणवृत्तीनां याथार्थ्य**





**स्वयमेव गृह्णाति । परीक्षासहकृतस्त्वयाथार्थ्यमि'ति बादरायणीयं मतम् । अत एव 'अनाश्वासनिरसनोपायो न ज्ञानेषु कश्चिद्विशेषोऽस्ती'ति निरस्तम् । अन्यथा परस्यापि कथं विषयव्यभिचारे व्यवहृतेर्व्यवहारान्तरे समाश्वासः स्यात् । तदभावे च कथं व्यवहार-दर्शनेनान्वितार्थे व्युत्पत्तिः । क्वचिद्विवेकाग्रहे च कथमन्यत्र विशिष्टप्रत्यये विश्वासो भवेत् । तदभावे च कथं निःशङ्क प्रवृत्तिः । 'बाधकाभावादिना समाश्वासः' तु परोक्तरीत्यैव निरस्तः । किञ्च प्रवृत्त्युत्तरकालीनो बाधकाभावः कथं निःशङ्कप्रवृत्तावुपयुज्यते । बाधकाभावादिना विशिष्टज्ञानस्वरूपनिश्चयमङ्गीकुर्वाणः कथं स्वप्रकाशविज्ञानवादं न जह्यात् । 'औत्सर्गिकी प्रवृत्तिरपवादान्निवृत्तिरि'ति चेत् । समं प्रकृतेऽपि ।**

**परि०— परिहरिष्यत इति** ॥ 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि । अनवस्थान्यथा हि स्यादप्रामाण्यं तथान्यत' इत्यत्रैवाधिकरण उत्तरत्र । तथा 'तत्प्रामाण्यं यथा साक्षी स्थापयत्येवमेव हि । सर्वकालेष्वपि स्थैर्याद्व्यभिचारमपोह्य च' इत्यादौ प्रकृत्यधिकरणे । 'उत्सर्गतोऽपि यत्प्राप्तमपवाद-विवर्जितम् । व्यभिचार्यपवादेन मानमेव भविष्यती'ति भक्तिपादादौ च तत्र तत्र परिहरिष्यत इत्यर्थः । तत्कथमित्यतः किञ्चिद्व्यनक्ति **साक्षी खल्विति** ॥ **अत एवेति** ॥ साक्षिगृहीतयाथार्थ्यकत्वादेवेत्यर्थः । उक्तमर्थं प्रतिबन्द्याऽपि साधयति **अन्यथेत्यादिना समं प्रकृतेऽपीत्यन्तेन । परोक्तरीत्यैवेति** ॥ बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वादित्यादिनाऽत्र पूर्वपक्षग्रन्थोक्तरीत्यैवेत्यर्थः ।

**गु०दी०— बाधकाभावादिना समाश्वासस्तु परोक्तरीत्यैव** इत्यत्र परोक्तरीत्या निरस्तः । तस्याऽपि बाधकज्ञानस्य ज्ञानद्वयत्वशङ्कास्कन्दितत्वेन निरस्त इत्यर्थः । अत एव रीत्येत्युक्तम् ।

**वं०प०—** किञ्च प्रदर्शिताकारव्यभिचारे प्रत्ययस्य सर्वत्र व्यभिचारशङ्का दुर्वारा स्यादिति यदुक्तं तदनूद्य निराकरोति **यच्चोक्तमिति** । परिहरिष्यते प्रत्यक्षवच्च प्रामाण्यमित्यत्रेति भावः । तदुपपादयति **साक्षी खल्विति** । नियतयाथार्थ्योपपादनाय चैतन्यरूप इत्युक्तम् । मोक्षयोग्यजीवचैतन्यसाक्षिणो याथार्थ्यनियमादित्याशयः । **परीक्षेति** । विसंवादरूपपरीक्षेत्यर्थः । प्रकृते तु न ज्ञानत्वावान्तरविशेषमनाश्वासनिरसनक्षममीक्षामह इति यदुक्तं तदप्यत एवापास्तमित्याह **अत एवेति** । साक्षिरूपे ज्ञानेऽनाश्वासनिरसनोपायस्य चैतन्यरूपत्वप्रयुक्तनियत-याथार्थ्यरूपस्य सत्त्वादेवेत्यर्थः । ज्ञानस्य प्रदर्शिताकारव्यभिचारेण सर्वत्रार्थव्यभिचारशङ्कयाऽनाश्वासे बाधकमाह **अन्यथेति** । परस्यापि मते व्यवहृतिः प्रवृत्तिः । तथा चेदं रजतमिति ज्ञानजन्याया व्यवहृतेर्विषयव्यभिचारे घटादिज्ञानजन्ये व्यवहारान्तरे समाश्वासः कथं स्यादित्यर्थः । मास्तु व्यवहारान्तरे समाश्वास इत्यत आह **तदभावे चेति । व्यवहारदर्शनेनेति** । चैत्र जलमाहरेति प्रयोजकवृद्धोदीरितवाक्यश्रवणानन्तरं प्रयोज्यवृद्धस्य





जलाहरणविषयप्रवृत्तिदर्शनेन पार्श्वस्थबालस्य कथमन्वितार्थे व्युत्पत्तिः स्यादित्यर्थः । **क्वचिद्विवेकाग्रह चेति** । इदं रजतमित्यादिस्थले ग्रहणस्मरणात्मकं ज्ञानद्वयं नैकं भ्रमरूपं विशिष्टज्ञानमस्ति । प्रवृत्तिस्तु स्वरूपतो विषयत एव मिथो विवेकाग्रहादेवेत्यङ्गीकार इत्यर्थः । **अन्यत्रेति** । अयं घट इत्यादिविशिष्टप्रत्यय इत्यर्थः । तत्रापि ज्ञानद्वय-मेवाङ्गीकृत्य विवेकाग्रहादेव प्रवृत्तिरस्त्वित्यर्थः । तदभावेऽन्यत्र विशिष्टप्रत्यये विश्वासाभावे । नन्वन्यत्र विशिष्टप्रत्यये बाधकाभावादाश्वासः । इदं रजतमित्यत्र बाधकसद्भावादनाश्वास इत्यत आह **बाधकाभावादिनेति** । **परोक्त-रीत्यैवेति** । बाधकस्यापि ज्ञानत्वेन शङ्कास्पदत्वान्न खलु बाधकस्य किमपि शृङ्गमस्तीति परोक्तरीत्यैवेत्यर्थः । इतोऽप्यन्यत्र विशिष्टप्रत्यये बाधकाभावादिना समाश्वासस्त्वया वक्तुं न शक्यत इत्याह **किञ्चेति** । तथाच निःशङ्कप्रवृत्यन्तरं बाधकाभावनिश्चयः सति च तस्मिन्निःशङ्कप्रवृत्तिरित्यन्योन्याश्रय इति भावः । **बाधकाभावा-दिनेत्यादि** । त्रिपुटीप्रत्यक्षवादिनः प्राभाकरस्य मते इदमहं जानामीति ज्ञानाकारः । तत्रात्मांशवेद्यांशानां प्रतीतिमङ्गीकृत्य स्वप्रकाशत्वेन विज्ञानस्वरूपनिश्चयोऽङ्गीकृतः । बाधकाभावादिना विशिष्टज्ञानस्वरूपनिश्चयाङ्गीकारे स्वप्रकाशविज्ञानवादत्यागापत्तेरिति भावः । तदभावे च कथं निःशङ्का प्रवृत्तिरित्युक्तं तत्र शङ्कते **औत्सर्गिकीति** । तथा चान्यत्रापि विशिष्टप्रत्ययेऽनाश्वासेन न निःशङ्कप्रवृत्यभाव इत्यर्थः । **सममिति** । ज्ञानानां प्रामाण्य-मौत्सर्गिकमपवादाद्विपर्यय इत्यङ्गीकारादिदं रजतमिति ज्ञानस्य विषयव्यभिचारे न सर्वत्रानाश्वासप्रसङ्ग इत्यर्थः । अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यम् । न तावत्पुरोवर्तिनिष्ठ इतीष्टमन्यथाख्यातिवादिनाम् । बाधकविरोधश्च तथा सति स्यात् । नापि देशान्तरवर्तीति वक्ष्यामः । ततश्च ज्ञानस्थ एवायमित्यापतितम् ।

**आनन्दः**— धियामनाश्वासभयादित्युक्तदोषमुद्धरति **यच्चोक्तमिति** । परिहरिष्यते प्रामाण्यवाद इति शेषः । साक्षिणा प्रामाण्यग्रहस्वीकारादिति भावः । ननु साक्षिणोऽपि ज्ञानरूपत्वादनाश्वासोऽपरिहार्य इत्यत आह **साक्षीति** । याथार्थ्यनियमः कुत इत्यत उक्तं **चैतन्यरूप इति** । **अत एवेति** । प्रामाण्यनिश्चय-रूपानाश्वासरसनोपायसत्त्वादेवेत्यर्थः । **अन्यथेति** । निश्चायकसत्त्वेऽप्यनाश्वास इत्यर्थः । **तदभाव इति** । आश्वासाभाव इत्यर्थः । ननु विवेकाग्रहादेव प्रवृत्त्यादीति न व्यवहारे समाश्वास इत्यत आह **क्वचिदिति** । अन्यत्र सत्यस्थले । बाधकाभावादेव निःशङ्कप्रवृत्तिरत आह **बाधकेति** । बाधकस्यापि ज्ञानरूपत्वात्तत्राप्याश्वासो न युज्यत इत्यर्थः । **किञ्चेति** । बाधकाभावे निःशङ्का प्रवृत्तिः । तस्यां च सत्यां बाधकाभावः । तस्य प्रवृत्त्युत्तरकालीनत्वादित्यन्योन्याश्रय इति भावः । अपसिद्धान्तमप्याह **बाधकेति** ।

**कं०रा०— अत एवेति** । नियतयाथार्थ्येन कदाचिदपि संशयानास्कन्दितेन साक्षिचैतन्येन निश्चित-प्रामाण्यकत्वरूपस्यानाश्वासनिरसनोपायस्य सत्त्वादेवेत्यर्थः ।

**श्रीनिधि०— परीक्षासहकृतस्त्विति** । एवं च ज्ञानग्राहकसाक्षिमात्रग्राह्यत्वाभावेन न परतस्त्वहानिरिति बोध्यम् । क्वचिदनुमिति ग्राह्यत्वं चोक्तम् । **अत एवेति** । ज्ञानप्रामाण्यस्यौत्सर्गिकत्वादेवेत्यर्थः । व्यवहृतेः विषयव्यभिचार इति संबन्धः । **अन्वितार्थे व्युत्पत्तिरिति** । अयं घटानयनादिव्यवहारः अन्वयज्ञानपूर्वकः ।





व्यवहारत्वान्मदीयभोजनादिव्यवहारवदिति अन्वितज्ञानमनुमाय तत्र सन्निहितत्वादावापोद्वापक्रमेण पदानां तत्र हेतुत्वं गृहीत्वा तत्र तत्र तस्य तस्य शक्तिर्ग्राह्या। लिङ्गस्य व्यवहारविसंवादशङ्कायां अगृहीतासंसर्गकानेकज्ञानपूर्वकत्वशङ्कया विशिष्टज्ञानं न सिद्ध्येत्तथा चान्विते व्युत्पत्तिरसंभविनीत्यर्थः । **परोक्तरीत्यैवेति** । बाधकस्यापि ज्ञानत्वेन ज्ञानत्वशङ्कास्पदत्वादित्यर्थः।

**वा०चं०**— अपवादाभावे ज्ञानग्राहकेण प्रामाण्यनिश्चयादपवादकसद्भावे च तदग्रहणादप्रामाण्यग्रहणान्न ज्ञानानाश्वास इत्याशयेनाह **तदिति**। ननु ज्ञानग्राहकस्यापि ज्ञानत्वाद्विषयव्यभिचारशङ्कया न तेन प्रामाण्यनिश्चयः। न च तद्ग्राहकेण तत्र प्रामाण्यनिश्चयः। अनवस्थापत्तेः। न च तस्य स्वप्रकाशत्वाङ्गीकारान्नानवस्थेति वाच्यम्। तथाऽपि ज्ञानत्वप्रयुक्तानाश्वासशङ्कया अपरिहारात्। न च तस्य याथार्थ्यनियमाभ्युपगमान्न दोष इति वाच्यम्। किञ्चिद्दूरं गत्वा स्वप्रकाशत्वयाथार्थ्यनियमाभ्युपगमादप्यादावेव सर्वज्ञानानां स्वप्रकाशत्वाद्यभ्युपगमस्योचिततवात्। अपवादकस्थले ज्ञानग्राहकस्यैवाप्रामाण्यग्राहकत्वे तस्यापि स्वतस्त्वापत्तिश्चातो नैतत्समाधानं युक्तमित्यत आह **साक्षी खल्विति**। ननु साक्षी स्वयमेव याथार्थ्यं गृह्णातीत्ययुक्तम्। तथात्वे ज्ञानग्राहकेण साक्षिणा सर्वत्र प्रामाण्यग्रहणापत्त्याऽपवादाभाव इत्युक्तानुपपत्तेः संशयानुपपत्तेश्चेति चेन्न। संशयादिनिवृत्तये परीक्षापेक्षाभ्युपगमात्। न च तर्हि परीक्षानवस्था स्यादिति वाच्यम्। मनोवृत्तिविषय एव संशयप्राप्त्या तन्निवृत्त्यर्थं परीक्षायाः साक्षिसिद्धसुखाद्यवतारपर्यन्ततयाऽनवस्थाभावात्। न च मनोवृत्तिविषय इव साक्षिविषयेऽपि संशयः कुतो नेति वाच्यम्। स्वारसिकसंशयस्य विशेषादर्शनादिदोषमूलकतयाऽऽहार्यसंशयस्य च प्रथमज्ञाने दोषजन्यत्वशङ्का-मूलकतया दोषाणां च ज्ञानस्य दोलायमानतया बलवद्बाधकोपनिपातेन च कल्प्यतया साक्षिदर्शनस्य च निर्णयात्मकत्वेन बाधकशून्यतया च दोषमूलकत्वासंभवान्न मनोवृत्तितुल्यतेत्याशयेनोक्तं **कदाचिदपि संशयानास्कन्दित इति**। न चैवं स्वतःप्रामाण्यभङ्गः। प्रामाण्यग्रहणे परीक्षानपेक्षणात्। तदिदमुक्तम् **एवेति**। ननु साक्षिणो बाध्यत्वस्य क्वचिदभ्युपगमेऽपि नानिष्टमिति चेन्न। साक्षिणः क्वचिदयाथार्थ्येऽविश्वसनीयत्वापत्त्या करणदोषाद्यनिश्चयप्रसङ्गेन ज्ञानानां भ्रमत्वाभ्रमत्वनिर्धारणाभावप्रसक्त्याऽर्थतथात्वातथात्वनिर्णयाभावानुषङ्गेण हानोपादानादिव्यवहाराभावापत्त्या सर्वलोकसिद्धनिःशङ्कविसंवादिव्यवहाररूपकार्यसिद्धये कारणीभूतवस्तुतथात्व-निश्चयस्य तत्सिद्धये च करणदोषादिनिश्चयद्वारा साक्षिणा ज्ञानानां भ्रमत्वाभ्रमत्वनिश्चयस्य तदर्थं च साक्षिणो विश्वसनीयत्वस्य तदर्थं च साक्षिणो निर्दोषत्वयाथार्थ्यनियमस्यावश्याभ्युपगन्तव्यतया बाध्यत्वं तस्य न क्वचिदपि युक्तमित्याशयेनोक्तं **नियतयाथार्थ्य इति**। ननु माऽस्तु परीक्षानवस्था ग्राहकानवस्था तु स्यादेव। न च स्वप्रकाशत्वात्साक्षिणः स्वस्यैव स्वप्रामाण्यग्राहकत्वमिति वाच्यम्। तर्हि वृत्तिज्ञानानामेव स्वप्रकाशतायाथार्थ्या-नियमाभ्युपगमेन सर्वस्योपपत्तौ साक्षिणस्तदभ्युपगमो व्यर्थ इत्यतश्चैतन्यरूप इति अन्तःकरणवृत्तीनामिति चोक्तम्। अत्रैकवचनबहुवचनाभ्यामेकस्यैव याथार्थ्यनियमाद्यभ्युपगमेन सर्वस्योपपत्तौ किमप्रामाणिकसर्वप्रमाणविरुद्ध-सर्वप्रत्यययार्थ्यनियमाद्यभ्युपगमेनेति चैतन्यरूपत्वान्तःकरणवृत्तित्वोक्त्या च साक्षिणश्चैतन्यरूपत्वात्स्वप्रकाशत्व-याथार्थ्यनियमोपपत्तावप्यन्तःकरणवृत्तीनां जडत्वान्न तत्संभव इति वक्ष्यमाणमुपपादनप्रकारं सूचयति। प्रामाण्यग्रहणे





दोषनिवृत्त्यर्थमेव परीक्षापेक्षावन्नाप्रामाण्यग्रहे तथा किन्तु अव्यभिचारादप्रामाण्यग्रह एवेति नाप्रामाण्यस्वतस्त्वापत्ति-रित्याशयेनाह **परीक्षेति** । तत्प्रामाण्यं बादरायणस्यानपेक्षत्वादिति जैमिन्यभ्युपेतबादरायणमतरहस्यानभिज्ञस्य कथं जैमिनिसूत्रव्याख्यातृत्वमिति परिहाराय बादरायणीयमित्युक्तम् । यद्वा त्वदुक्तानाश्वासप्रसङ्गस्य गौतमीयादीन्प्रति संभवेऽपि न बादरायणीयानस्मान्प्रतीत्याशयेनैतदुक्तम् **अत एवेति** । चैतन्यरूपत्वस्य ज्ञानत्वावान्तरविशेष-स्योक्तत्वादेवेत्यर्थः । उत्सर्गापवादन्यायेन समाधानं परमुखेनापि दर्शयितुं प्रतिबन्दीमाह **अन्यथेति** । बाधकाभावेन समाश्वासं परोक्तरीत्या निरस्य वस्तुगतिमनुरुद्ध्यापि निरस्यति **किञ्चेति** । अपसिद्धान्तेनापि तन्निरस्यति **बाधकेति** ।

**वा०र०**— तदौत्सर्गिकमित्यादि मूलाशयाप्रतीतेराशयं दर्शयन्नवतारयति **अपवादेति** । औत्सर्गिक-मित्यस्यापवादाभाव इत्यर्थकथनम् । इतःपरं न परीक्षानवस्था स्यात्साक्षिसिद्धे त्वसंशयात् । भ्रमत्वमभ्रमत्वं चेत्याद्युपासनापादीयप्रकृत्यधिकरणीयानुव्याख्यामूलानुसारेण ग्रन्थः स्पष्टार्थः । अस्माकं मतमित्यनुक्त्वा बादराय-णीयमित्युक्तेरभिप्रायमाह **तत्प्रमाणमिति** । परदूषणपरतया योजनां कृत्वा स्वपक्षे दोषाभावकथनपरतयापि योजयति **यद्वेति** । **अन्यथेतीति** । व्यवहृतेर्व्यवहारस्य विषयव्यभिचार इति संबधः । **निरस्यतीति** । अन्योन्याश्रयेणेति शेषः । किञ्चेति वक्ष्यमाणरीत्या बाधकाभावस्यान्योन्याश्रयेण प्रवृत्तिकारणत्वासंभवाभिप्राये परोक्तरीत्या समाश्वासोपपादकता बाधकाभावस्य न निराकार्या । तथा निराकरणस्य संमतत्वे वोक्ताभिप्रायकोत्तरग्रन्थायोग इत्यतः पूर्वोत्तरग्रन्थाभिप्रायमाह **बाधकाभावेनेति** । अनेन बाधकाभावेन समाश्वासः संभवतीत्येतत्परोक्तरीत्यैव निरस्याङ्गीकृत्य चैतदुक्तं वस्तुतस्तु बाधकाभावो निःशङ्कप्रवृत्तिहेतुरेव न अन्योन्याश्रयादिति प्रकारान्तरेणापि तन्निरस्यतीति योजना सूचिता भवति । यद्यपि बाधकाभावादिनेति मूले आदिपदेन संवादभावादेरपि सङ्ग्रहोऽभि-प्रेतस्तथापि किञ्चेत्युत्तरग्रन्थे बाधकाभावांशस्यैव वस्तुगतिमनुरुध्य निराकरणाट्टीकायां तदंश एव पूर्वोत्तरग्रन्थ-विरोधपरिहारसूचनाय बाधकाभावस्यैकस्यैव ग्रहणमिति न दोषः । **तमिति** । बाधकाभावेन समाश्वासमित्यर्थः।

**वि०**— **आचार्येणैव परिहरिष्यत इति** । अतो दोषप्रतीतस्येति चतुर्थपादे निर्दोषस्थले प्रामाण्यस्य ज्ञानग्राहकेण साक्षिणा ग्रहणादाश्वास इति परिहरिष्यत इत्यर्थः । ननु ज्ञानग्राहकस्यापि ज्ञानत्वात् विषय-व्यभिचारशङ्क्या न तेन प्रामाण्यनिश्चयः न च तस्यापि प्रामाण्यग्राहकेणान्येन प्रामाण्यनिश्चयेऽनवस्थाप्रसङ्गात् अतो नैतत्समाधानं इत्यतः **परिहरिष्यते** इत्युक्तम् । लेशतो व्यनक्ति **साक्षी खल्विति** । तत्प्रामाण्यं बादरायणस्यानपेक्षत्वादिति जैमिन्यभ्युपेतबादरायणमतरहस्यानभिज्ञस्य कथं जैमिनिसूत्रव्याख्यातृत्वमित्यपहासाय बादरायणीयं मतमित्युक्तम् । उत्सर्गतः आश्वासः यत्रापवादस्तत्र त्याग इति समाधानं परमुखेनाप्यङ्गीकारयितुं प्रतिबन्दीमाह **अन्यथेति** । परोक्तरीत्या बाधकस्यापि प्रत्येतव्यत्वेन शङ्कास्पदत्वादिति उक्तरीत्यैवार्थः । परोक्त-रीत्या निराकृत्य वस्तुस्थितिकथनेनापि निराकरोति **किञ्चेति** । अपसिद्धान्तेनाप्यपाकरोति **बाधकाभावादिनेति** । बाधकाभावेन विशिष्टज्ञानस्वरूपनिश्चय इत्यङ्गीकारे ज्ञानस्य स्वप्रकाशत्वाभ्युपगमविरोधः इति भावः । उत्सर्गतो ज्ञानस्य स्वप्रकाशत्वेनैव विशिष्टज्ञानतानिश्चयात् प्रवृत्तिः बाधकसद्भावरूपापवादान्निवृत्तिरिति चेत् तर्हि उत्सर्गतो ज्ञानानां प्रामाण्यं अपवादादप्रामाण्यमिति सममित्याह **औत्सर्गिकीति** ।





**गूढ०**— धियामनाश्वासभयादित्युक्तदोषमुद्धरति **यच्चोक्तमिति** । परिहरिष्यते प्रामाण्यवाद इति शेषः । साक्षिणा प्रामाण्यग्रहस्वीकारादिति भावः । ननु साक्षिणोऽपि ज्ञानरूपत्वादनाश्वासोऽपरिहार्य एवेत्यत आह **साक्षीति**। याथार्थ्यनियमः कुत इत्यत उक्तं **चैतन्यरूप इति** । **अत एवेति** । प्रामाण्यनिश्चयरूपानाश्वासनिरसनोपाय-सत्त्वादेवेत्यर्थः । **अन्यथेति** । निश्चायकसत्त्वेऽपि अनाश्वास इत्यर्थः । **तदभाव इति** । आश्वासाभाव इत्यर्थः । ननु विवेकाग्रहादेव प्रवृत्त्यादीति न व्यवहारे समाश्वास इत्यत आह **क्वचिदिति** । **अन्यत्र** सत्यस्थले । बाधका-भावादेव निःशङ्कप्रवृत्तिरत आह **बाधकेति** । बाधकस्यापि ज्ञानरूपत्वात्तत्राप्याश्वासो न युज्यत इत्यर्थः । **किञ्चेति** । बाधकाभावे निःशङ्का प्रवृत्तिः । तस्यां च सत्यां बाधकाभावः । तस्य प्रवृत्युत्तरकालीनत्वादित्यन्योन्याश्रय इति भावः । अपसिद्धान्तमप्याह **बाधकेति**।

**प्रदीपः**— **अन्यथेति** । सर्वत्र व्यवहारप्रतिबन्धाज्ञानसमाधानं द्रष्टव्यम् । **किञ्चेति** । नियतपूर्वक्षणवर्तिन एव कारणत्वात् **बाधकेति** ।

**३६७ सु०— यदप्युक्तं विपरीतख्यातिपक्षे 'ज्ञानं साकारमापतेदि'ति । तदनुपपन्नम् । अत्यन्तासत एवाकारस्य स्फुरणाङ्गीकारात् । अन्यथा व्यवह्रियमाणस्याकारस्य बहिरभावाद् व्यवहारोऽपि तदाकारः प्रसज्येत ॥**

**या चेयं प्रक्रिया 'रजतमिदमि'त्यादिनोक्ता सा ज्ञानद्वित्वे रजतज्ञानस्य च स्मृतित्वे प्रमाणाभावादनुपपन्ना । विशिष्टज्ञानबाधकानां परिहृतत्वात् । अनुमानानां च दूष्यत्वात् ॥**

**परि०**— अपि च प्रतीयमानोऽयं रजताकारः कुतस्त्य इति वक्तव्यमित्यादिनोक्तमनूद्य निराह **यदप्युक्तमित्यादिना** ॥ **इत्यादिनेति** । रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे इत्यादिनोक्तेत्यर्थः । नन्वन्यथाऽनुपपत्तेरेव मानतयोक्तत्वात्कथं मानाभाव इत्यत आह **विशिष्टेति** ॥ साकारवादासदभान-संविद्विरोधहेत्वभावरूपबाधकानामित्यर्थः । नन्वन्यथाऽनुपपत्तेरमानत्वेऽपि किञ्चेदमिति तावदित्यादि-नोक्तपरिशेषादिरूपानुमानानामस्तु मानत्वमित्यत आह **अनुमानानां चेति** ॥

**वं०प०**— ततश्च जितं साकारविज्ञानवादिभिर्बाह्यैरिति यदुदितं पूर्वपक्षावसरे तदनूद्य समाधत्ते **यदप्युक्तमित्यादिना** । **विपरीतख्यातिपक्षे** अन्यथाख्यातिपक्षे । उक्तरीत्या ज्ञानस्य साकारत्वापादनेऽतिप्रसङ्गमाह **अन्यथेति** । बहिर्बाह्यार्थे । तथा व्यवह्रियमाणोऽयं रजताकारः कुतस्त्य इति वाच्यम् । न तावद्बाह्यार्थे पुरोवर्तिनि शुक्तिकाशकलेऽस्तीतीष्टमख्यातिवादिनाम् । नापि देशान्तरवर्ति । तस्यात्र व्यवहारानुपपत्तेः । तथाच व्यवहृतिनिष्ठ एवायमित्यापतितमिति व्यवहारोऽपि तदाकारः स्यादिति भावः । ननु तर्हीदं रजतमित्यादिप्रत्ययानां का गतिः ।





उच्यते । रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे इत्यादिनोक्तां प्रक्रियामनूद्य दूषयति **याचेयं प्रक्रियेत्यादिना** । ननु भ्रमरूपविशिष्टज्ञानाङ्गीकारे 'साकारवादादसतो न भानादि'ति कारिकोक्तबाधकानां सत्त्वाज्ज्ञानद्वित्वं रजतज्ञानस्य स्मृतित्वं चाङ्गीकार्यमित्यत आह **विशिष्टज्ञानबाधकानामिति** । नन्विदं स्मरणमनाकलितरजतस्यानुत्पद्यमान-त्वादित्याद्यनुमानान्येव रजतज्ञानस्य स्मृतित्वादौ प्रमाणानीत्यत आह **अनुमानानां चेति** ।

**आनन्दः**— साकारवादादित्युक्तं दोषमुद्धरति **यदप्युक्तमिति** । **अन्यथेति** । असत एवाकारस्य स्फुरणानङ्गीकार इत्यर्थः । **व्यवह्रियमाणस्य** शुक्तिविशिष्टाकारस्येत्यर्थः । **तदाकारः** शुक्तिविशिष्टाकारः । तथाच व्यवहारस्यापि साकारत्वं स्यादिति भावः । तस्मात्त्वयापि तस्याकारस्यासत्त्वमेव वक्तव्यम् । तच्च समं ममेति भावः । ननु विशिष्टज्ञानबाधकसत्त्वाज्ज्ञानद्वित्वमङ्गीक्रियत इत्यत आह **विशिष्टेति** ।

**कं०रा०**— **अन्यथेति** । क्वचिद्विषयव्यभिचारदर्शनेन सर्वत्र ज्ञानेऽनाश्वासे क्वचिद्व्यवहारस्य विषय-व्यभिचारे सति व्यवहारान्तरे समाश्वासः परस्यापि कथं स्यादित्यर्थः । इदं स्मरणमनाकलितरजतस्यानु-त्पद्यमानत्वादिति यद्रजतज्ञानस्य स्मरणत्वसाधकमनुमानमुक्तं तद्दूषयति **अनाकलितेति** ।

**वा०चं०**— एवं बाधकानि परिहृत्य न केवलं बाधकानामुक्तरीत्याऽन्यथासिद्धिः किन्त्विदं रजत-मित्यादिप्रत्ययानां गत्यन्तराभावाच्चेत्याशयवान्परोक्तगत्यन्तरनिरासायाह **या चेयमित्यादिना** । ननु रजतज्ञानस्य स्मृतित्वात् इदंज्ञानस्य च सर्वाविवादानुभवत्वात्प्राप्तमेव ज्ञानद्वित्वमित्यत आह **रजतेति** । अन्यथाऽनुपपत्ते-रुक्तत्वादित्युक्तं ज्ञानद्वित्वे प्रमाणं निरस्यति **विशिष्टेति** । ननु प्रत्ययत्वाद्यनुमानान्येव तत्र प्रमाणानीत्यत आह **अनुमानानां चेति** । एवं च सतीत्यादिना दूष्यमाणत्वादित्यर्थः ।

**वा०र०**— **बाधकानीति** । अन्यथाख्यातिलक्षणासंभवादीनि बाधकानीत्यर्थः । **उक्तरीत्याऽन्यथा-सिद्धिरिति** । उक्तरीत्या परिहारसिद्धेस्तेषामन्यथाख्यातिनिरासकत्वायोग इत्येव न । अपि त्विदंरजतमित्यादिरूपाणां प्रत्ययानामन्यथाख्यात्यनङ्गीकारे गत्यन्तराभावात्तत्त्वे सिद्धे तत्प्रत्ययानामन्यथाख्यातित्वाङ्गीकारे बाधकाना-मापातप्रतीतावपि तदनादरोपपत्तेस्तेषां प्रमितान्यथाख्यातिनिरासकत्वायोगरूपान्यथासिद्धिरित्यर्थः । **परोक्तेति** । उच्यते । रजतमिदमितीत्यादिना परोक्तेत्यर्थः । **इत्युक्तमिति** । इत्यनेन परोक्तमित्यर्थः ।

**स०व्र०**— ननु विगीतः प्रत्यय इत्याद्यनुमानैर्याथार्थ्यस्य सिद्धत्वाद्विशिष्टज्ञानाङ्गीकारे तस्यायाथार्थ्येन अनुमानविरोधस्तत्राह **अनुमानानां चेति** । एतेनेत्यादिनेति शेषः ।

**विट्ठ०**— **साकारं आपतेत्** इत्यतःपरं तथाच जितं साकारवादिभिर्बौद्धैरित्यपि ग्राह्यम् । अन्यथा प्रतीयमानाकारस्यासत्त्वानङ्गीकारेण प्रतीतेस्तदाकारत्वाङ्गीकारे इत्यर्थः । अन्यथाख्यात्यभ्युपगमे बाधकानि परिहृत्य इदंरजतमित्यादिप्रत्ययानां गत्यन्तराभावाच्चाभ्युपगन्तव्येत्याशयेन परोक्तगत्यन्तरनिरासायाह **या चेयमित्यादिना** ।





ननु कथं मानाभावः अन्यथानुपपत्तेरुक्तत्वादित्यत आह **विशिष्टेति**। तथापि परिशेषादिरूपः तदवस्थः इत्यत आह **अनुमानानां चेति**।

**गूढ०—** साकारवादादित्युक्तं दोषमुद्धरति **यदप्युक्तमिति** । **अन्यथेति** । असत एवाकारस्य स्फुरणानङ्गीकार इत्यर्थः। **व्यवह्रियमाणस्य** शुक्तिविशिष्टाकारस्येत्यर्थः। **तदाकारः** शुक्तिविशिष्टाकारः। तथाच व्यवहारस्यापि साकारत्वं स्यादिति भावः। तस्मात् त्वयापि तस्याकारस्यासत्त्वमेव वक्तव्यम्। तच्च समं ममेति भावः। ननु विशिष्टज्ञाने बाधकसत्त्वाज्ज्ञानद्वित्वमङ्गीक्रियत इत्यत आह **विशिष्टेति**।

**३६८ सु०— यस्तु 'रजतज्ञानस्य स्मृतित्वे परिशेषो'पन्यासः सोऽपि प्रत्युत्पन्नक(का)रण-दुष्टेन्द्रियादिजन्यतोपपादनात् परिशेषानुपपत्तेरयुक्तः।**

**अनाकलितरजतस्यानुत्पद्यमानत्वं गगनादावनैकान्तिकम्। रजतज्ञानवत एवोत्पद्यमानत्वं विवक्षितमिति चेन्न। तथाऽपि रजतसंस्कारव्यवहारादौ व्यभिचारात्। ज्ञानत्वे सतीतिविशेषणाददोष इति चेन्न। रजतनिर्विकल्पकज्ञानवत एवोत्पद्यमाने रजतसविकल्पकानुभवे व्यभिचारतादवस्थ्यात्। रजतसविकल्पकज्ञानवत एवोत्पद्यमानत्वं विवक्षितमिति चेन्न। हानादिबुद्धिष्वनैकान्तिकताऽनिस्तारात्। संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चानुमानम्। न चानेनैव हेतुनाऽस्य पक्षे साधनं व्यभिचारस्योक्तत्वात्।**

**परि०—** दूष्यत्वादित्युक्तं तदाह **यस्त्वित्यादिना**। **प्रत्युत्पन्नेति**। प्रागजातं तदानीमेव संपन्नं क(का)रणं यददुष्टेन्द्रियादि तज्जन्यतायाः 'न चान्यथाख्यातिजनने कारणाभाव' इत्यादिना ग्रन्थेनोपपादनादित्यर्थः। यच्चोक्तं इदं स्मरणं अनाकलितरजतस्यानुत्पद्यमानत्वात्संप्रतिपन्नस्मरणवदिति। तन्निराह **अनाकलितेति**। **संस्कारमात्रेति**। प्रत्यभिज्ञायां साध्यव्याप्यत्वसिद्धये समव्याप्त्यभिप्रायेण मात्रपदम्। साधनाव्यापकत्वसिद्धये वा॥ **अनेनैव हेतुनेति**। अनाकलितेत्युक्तहेतुना रजतज्ञानवत एवेत्यादिविवक्षितहेतुना चेत्यर्थः।

**गु०दी०—** **प्रत्युत्पन्नकारण** इत्यत्र ज्ञानं प्रति कारणतया ज्ञानाव्यवहितपूर्वक्षणोत्पन्नत्वं प्रत्युत्पन्नत्वमित्यर्थः। **अनुभूतविषयत्वं स्मृतित्वं चेत्** हेतूकृतं **अनाकलितरजतस्यानुत्पद्यमानत्वं** अपि ''द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत'' इति वचनात् आकलितरजतस्यैव जायमानत्वं स्यात्। अतो हेतुसाध्ययोरर्थत एकत्वात्साध्याविशिष्टतेत्यर्थः। **अनुभवबाधितत्वात्** इत्यत्र प्रमुषिततत्ताकं रजतस्मरणमिति वदतस्तवैवानुभवबाधितत्वादित्यर्थः।





**यादु०— संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चेति**। अत्र समव्याप्तेर्विवक्षिततत्वेन प्रत्यभिज्ञायां व्यभिचारवारणाय मात्रपदम्। घटाद्यनुभवे व्यभिचारवारणाय संस्कारसहकृतेत्युक्तम्। वेदादिसंस्कारजन्ये कर्मादौ व्यभिचारवारणाय मनःपदम्। **व्यभिचारस्योक्तत्वादिति**। गगनादाविति शेषः।

**वं०प०—** किञ्चेदमिति तावत्पुरोवर्तिनयनसंप्रयोगजं ज्ञानमनुभव इत्यविवादम्। रजतज्ञानं च न तावत् इन्द्रियजन्यमितीन्द्रियजन्यत्वाभावमुपपाद्य लिङ्गाद्यनुसन्धानविधुराणामपि जायमानमनुमानप्रभवमिति न शक्यते वक्तुमतः प्रत्युत्पन्नकारणाभावेऽप्युत्पद्यमानेनानेन परिशेषात्स्मरणेनैव भवितव्यमित्येवं रजतज्ञानस्य स्मृतित्वे परिशेष एव प्रमाणमिति पूर्वपक्ष्युक्तमाशङ्क्य निराकरोति **यस्त्वित्यादिना**। **प्रत्युत्पन्नकारणेति**। अव्यवहितपूर्वक्षण-वृत्तिकारणेत्यर्थः। किञ्चेदं स्मरणमनाकलितरजतस्यानुत्पद्यमानत्वादित्युक्तमनुमानं दूषयति **अनाकलितरजतस्येति**। **गगनादाविति**। सर्वथाऽनुत्पद्यमानत्वादेवेति भावः। **संस्कारव्यवहारादाविति**। तयोरनुभवजन्यत्वादिति भावः। नन्वनाकलितरजतस्यानुत्पद्यमानत्वहेतुनैवोपाधिः पक्षे साध्यतेऽतः साधनव्यापकत्वान्नायमुपाधिरित्याशङ्क्य गगनादौ व्यभिचारान्नैवं साधयितुं शक्यत इत्याह **न चानेनैवेत्यादिना**।

**आनन्दः—** इदं स्मरणं अनाकलितरजतस्यानुत्पद्यमानत्वादित्येतदनुमानमनैकान्तिकत्वेन दूषयति **अनाकलितेति**। **रजतसंस्कारव्यवहारादाविति**। रजतसंस्कारे रजतव्यवहारे चेत्यर्थः। व्यभिचारेण दूषयित्वोपाधिनापि दूषयति **संस्कारेति**। मात्रग्रहणं प्रत्यभिज्ञाव्युदासार्थम्। संस्कारग्रहणं सुखादिव्यवच्छेदार्थम्। साधनवतः पक्षाद्व्यावर्तमानत्वे साधनाव्यापकत्वम्। मात्रपदं तु साधनाव्यापकत्वसिध्यर्थम्। पक्षीकृतज्ञाने दोषजन्यत्वस्यापि सत्त्वेन संस्कारमात्रसहकृतमनोजन्यत्वस्याप्यभावेन साधनाव्यापकत्वमित्यर्थः। अनेनैव रजतज्ञानवत एवोत्पद्यमानत्वादित्यनेनैवेत्यर्थः।

**कं०रा०— रजतनिर्विकल्पकेति**। एतच्च नैयायिकरीत्योक्तमिति द्रष्टव्यम्। स्वमते निर्विकल्पकाभावात्। तदुक्तं पद्धतौ द्रव्यादिविकल्पानां प्रथममेवोत्पत्तौ बाधकाभावेन निर्विकल्पकानुपपत्तिरिति। **हानादीति**। इदं चोपलक्षणम्। रजतलिङ्गकानुमितौ व्यभिचार इत्यपि बोध्यम्। **संस्कारमात्रेति**। संस्कारसहकृतपदं साधनव्यापकत्वनिरासाय। मात्रपदं तु समव्याप्तस्योपाधित्वाभिप्रायेण। प्रत्यभिज्ञायां साध्याव्याप्यत्वनिरासाय। तेनेन्द्रियं व्यवच्छिद्यते।

**श्रीनिधि०— व्यवहारादाविति**। व्यवहारादाविति आदिपदेन रजतेच्छा गृह्यते। **उपाधिग्रस्तं चेति** पक्षे चेन्द्रियेणापि जन्यत्वेन उपाधिर्व्यावर्तमानः साध्यमपि व्यावर्तयतीति भावः। **अनेन** हेतुना रजत-ज्ञानसविकल्पकज्ञानवत एव व्युत्पद्यमानज्ञानत्वेन व्यभिचारस्योक्तत्वादिति। हानादिबुद्धाविति शेषः। संस्कारजन्यत्वाभावात्सविकल्पकजन्यत्वेन तन्मात्रसहकृतमनोजन्यत्वाभावाच्चेति भावः।

**वा०चं०—** ननु तथाऽपि स्मृतित्वे प्रमाणाभावादित्यनुपपन्नम्। परिशेषादेरुपन्यस्तत्वादित्यतस्तत्क्रमेण निरस्यति **यस्त्वित्यादिना**। ननु यथाश्रुतेऽनैकान्तिकतायामपि द्वौ नञाविति न्यायलब्धार्थविवक्षायां न सेत्याशङ्क्ते





**रजतेति । हानादीति** । अत्रापि तद्व्यतिरिक्तेति विशेषणोपादानेऽतिप्रसङ्गाद्विशिष्टहेतोरप्रयोजकत्वापत्तेश्चेत्याशयः । उपाधौ संस्कारेति मात्रेणेति च विशेषणं पक्षे साधनाव्यापकत्वसिध्यर्थमुपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति द्रष्टव्यम् । अनेनैव स्मृतित्वसाधनायोपात्तेनानाकलितरजतस्यानुत्पद्यमानत्वेनैव । उक्तत्वादुक्तप्रायत्वात् ।

**वा०र०**— रजतज्ञानवत एवेत्यर्थलाभो न प्रतीयते इत्यतस्तल्लाभोपपादकन्यायोदाहरणेन तदुपपत्तिमाह **द्वौ नञाविति** । एतन्न्याये सरूपनिषेधस्य निषेधोऽपि विधिरेवेत्यादि विद्यैवेत्यधिकरणीयानुभाष्यमूले अहिकुण्डलाधिकरणमूले तट्टीकादौ च स्पष्टं भविष्यति वैलक्षण्यं सतश्चापीत्येतन्मूलटीकादौ च प्राग्व्युत्पादितम् । **संस्कारेति मात्रेति चेति** । मनोजन्यत्वमात्रस्योपाधित्वे पक्षीभूते रजतज्ञानेऽनाकलितरजतस्यानुत्पद्यमानत्वहेतुसत्त्ववन्मनोजन्यत्वस्यापि सत्त्वेन साधनव्यापकताप्राप्तेस्तन्निरासाय संस्कारसहकृतत्वस्योपाधिशरीरे विवक्षणेऽपि पक्षे संस्कारसहकृतमनोजन्यत्वस्यापि सत्त्वेनोक्तदोषतादवस्थ्ये प्राप्ते तन्निरासाय मात्रेति विशेषणमुपात्तमिति योजना । तथोपाध्यभावेन पक्षे साध्याभावसाधने मनोजन्यत्वोपाधेरेव पक्षे सत्त्वेन तदभावरूपहेतोरसिध्यापत्त्या तत्परिहाराय संस्कारसहकृतेति विशेषणोपादानेऽप्युक्तरीत्याऽसिद्धिरेवेति तन्निरासाय मात्रेत्युक्तमिति योज्यमिति ज्ञेयम् । **असिद्धिपरिहारार्थं चेति** । हेतौ व्यभिचारवारकविशेषणमेव ग्राह्यं नासिद्धिवारकमिति तु न शङ्कनीयम् । अकार्यत्वमुपाधिरित्युक्त इत्येतत्तत्वनिर्णयटीकायामुपाध्युन्नीत एवानुमाने व्यभिचारवारकविशेषणवत्त्वं दोषो नोपाध्युन्नीत इति व्यवस्थाश्रयणे दोषाभावादित्युक्तत्वेन तद्रीत्या प्रकृते उपाध्युन्नीतप्रतिपक्षेऽसिद्धिवारकत्वाश्रयणोपपत्तेरिति ज्ञेयम् । न चानेनैवेतिवाक्यस्थमनेनैवेत्येतदुपादाय व्याचष्टे **अनेनैवेत्यादि** । एतद्दूषणस्यानुक्तत्वादुक्तत्वादित्येतदनूद्य व्याचष्टे **उक्तप्रायत्वादिति** ।

**स०व्र०**— **संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चेति** । अत्र समव्याप्तेर्विवक्षितत्वेन प्रत्यभिज्ञायां व्यभिचारवारणाय मात्रेत्युक्तम् । संस्कारसहकृतेत्येतदन्तं सुखादौ व्यभिचारवारणाय (हानादाविति शेषः ।) **व्यभिचारस्योक्तत्वादिति** । गगनादाविति शेषः ।

**विट्ठ०**— **संस्कारमात्रसहकृतेति** । अत्र समव्याप्तेः विवक्षितत्वेन प्रत्यभिज्ञायां व्यभिचारवारणाय साधनाव्यापकत्वसिद्ध्यर्थं वा मात्रपदम् । **उक्तत्वात्** उक्तप्रायात् गगनादाविति शेषः ।

**चषकः**— **संस्कारमात्रसहकृतमनोजन्यत्वोपाधिग्रस्तं चेति** । अत्र विवृण्वानाः उपाधौ संस्कारेति मात्रेति च विशेषणं पक्षे साधनाव्यापकतासिद्ध्यर्थमुपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति विवृण्वते । अत्र समव्याप्तेर्विवक्षितत्वेन प्रत्यभिज्ञायां व्यभिचारवारणाय मात्रपदं संस्कारसहकृतेत्येतदन्तं च घटाद्यनुभवे व्यभिचारवारणायेत्यपि स्थितम् । **व्यभिचारेति** । गगनादाविति पूरणीयम् ।

**गूढ०**— इदं स्मरणं अनाकलितरजतस्यानुत्पद्यमानत्वादित्येतदनुमानमनेकान्तिकत्वेन दूषयति **अनाकलितेति** । **रजतसंस्कारव्यवहारादाविति** । रजतसंस्कारे रजतव्यवहारे चेत्यर्थः । व्यभिचारेण दूषयित्वा उपाधिना





दूषयति **संस्कारेति** । मात्रग्रहणं प्रत्यभिज्ञाव्युदासार्थम् । संस्कारग्रहणं सुखादिव्यवच्छेदार्थम् । साधनवतः पक्षाद्व्यावर्तमानत्वे साधनाव्यापकत्वम् । मात्रपदं तु साधनाव्यापकत्वसिद्ध्यर्थम् । पक्षीकृतज्ञाने दोषजन्यत्वस्यापि सत्त्वेन संस्कारमात्रसहकृतमनोजन्यत्वस्याप्यभावेन साधनाव्यापकत्वमित्यर्थः । अनेनैव रजतज्ञानवत एवोत्पद्यमानत्वादित्यनेनैवेत्यर्थः ।

**प्रदीपः**— प्रवृत्तीनां स्वप्रकाशत्वं मन्वानस्य स्वतःप्रामाण्यवादिनोऽन्यतस्तन्निश्चयो नोचितः अनाकलितरजतस्यानुत्पद्यमानत्वादिति हेतुं दूषयति **अनाकलितेति** । **संस्कारमात्रेति** । मात्रग्रहणं प्रत्यभिज्ञाव्युदासार्थं संस्कारग्रहणं सुखादिव्यवच्छेदार्थं, साधनवतः पक्षाद्व्यावर्तमानत्वेन साधनाव्यापकत्वं विमतं संस्कारमात्रसहकृतमनोजन्यमनाकलितरजतस्यानुत्पादादिति नेत्याह **न चेति** । स्मृत्यनुभवयोः स्मृत्यनुभवान्तरान्यत्वं स्मृत्यनुभवयोरन्योन्यज्ञानाधीनज्ञानत्वादन्योन्याश्रयत्वं च द्रष्टव्यम् । इदमन्यत्रोपक्षीणेन्द्रियव्यापारान्वयव्यतिरेकवत् ।

**३६९ सु०— किञ्चेदं स्मरणत्वं साध्यं न तावत्सामान्यं गुणेषु प्राभाकरैरभ्युपगतम् । अननुभवत्वमिति चेत् । तदपि किमनुभवादन्यत्वमनुभवत्वानधिकरणत्वं वा ॥ आद्येऽनुभवस्यापि तत्संभवेन सिद्धसाधनता स्यात् ॥ द्वितीयेऽनुभवत्वं किमिति वाच्यम् । स्मृत्यन्यत्वमिति चेन्न स्मृतावपि प्रसङ्गात् इतरेतराश्रयप्रसक्तेश्च ॥ ज्ञानसंस्कारमात्रप्रभवत्वं स्मृतित्वमिति चेन्न । मानसप्रत्यक्षजा स्मृतिरित्यस्माभिरङ्गीकृतत्वेन पक्षस्याप्रसिद्धविशेषणत्वात्, दृष्टान्तस्य साध्यवैकल्याच्च ।**

**बिन्दुः— ज्ञानसंस्कारमात्रप्रभवत्वमिति** । ज्ञानजन्यः संस्कार इति मध्यमपदलोपी समासः । तेन च वेगादिनिरास इति भावः । अत्र सर्वत्रापि साध्यत्वेनोक्तं स्मृतित्वं पारिभाषिकं निरुच्यते न तु स्मृतेर्लक्षणं क्रियते । तथाच नात्राव्याप्त्यादिकमुद्भाव्यत इति ध्येयम् ।

**परि०**— साध्यविकल्पेनाप्यनुमानं दूषयितुं साध्यं पृच्छति **किञ्चेदमिति** । जातिर्वा अननुभवत्वं वा अनुभवत्वानधिकरणत्वं वा ज्ञानसंस्कारमात्रप्रभवत्वं वा अप्रत्युत्पन्नकारणप्रभवत्वं वा अनुभूतविषयत्वं वा तत्तांशोल्लेखित्वं वा ज्ञानसंभिन्नार्थगोचरत्वं वेत्यष्टौ विकल्पान्हृदि कृत्वा क्रमेण निराह **न तावदित्यादिना अनेनैवेत्यन्तेन** । **अनुभवस्यापीति** । रजतज्ञानस्यानुभवत्वेऽपीत्यर्थः । यत्किञ्चिदनुभवस्यानुभवान्तरादन्यत्वादिति भावः । ननु स्मृतित्वानधिकरणत्वमनुभवत्वमतो न दोष इत्यतो दोषान्तरमाह **इतरेतरेति** ॥ त्वया गुणगतजातेरनङ्गीकारेण स्मृतित्वं नामानुभवत्वानाधिकरणज्ञानत्वं वाच्यम् । अनुभवत्वं च स्मृतित्वानधिकरणत्वमिति ज्ञप्तावन्योन्याश्रय इत्यर्थः । **ज्ञानसंस्कारेति** ।





ज्ञानजन्यसंस्कारेत्यर्थः । क्रियाजन्यसंस्कारमात्रप्रभवे अतिव्याप्तिवारणाय ज्ञानेत्युक्तिः । प्रत्यभिज्ञाव्यावृत्तये मात्रेत्युक्तिः । **मानसेति** । 'मानसं तद्धि विज्ञानमि'ति न विलक्षणनयान्ते वक्ष्यमाणत्वादिति भावः । यद्वा प्रमाणलक्षणवाक्यानुवादोऽयम् । **अप्रसिद्धेति** । इदं स्मरणमिति प्रतिज्ञायां ज्ञानजन्यसंस्कारमात्रप्रभवमित्यर्थः स्यात् । तादृशप्रभवत्वं च क्वाप्यप्रसिद्धमित्यप्रसिद्धविशेषणत्वमित्यर्थः । इदं च परीत्यैव दूषणं बोध्यम् । तेन 'आश्रयव्याश्रयासिद्धी साध्यासिद्धिश्च दूषणम् । केषाञ्चिन्न च ते दोषाः' इति भक्तिपादीयानुव्याख्यानविरोधो न शङ्क्यः । एवमग्रेऽपि । **दृष्टान्तस्येति** । संप्रतिपन्नस्मरणवदिति पूर्वपक्ष्युक्तस्येत्यर्थः । स्मृतिमात्रस्य मनोजन्यत्वादिति भावः ।

**यादु०— न तावत्सामान्यमिति** । प्राभाकरै रूपादीनामेकैकत्वाङ्गीकारेण तैरेवानुगतव्यवहारोपपत्तौ तदर्थं तेषु गुणत्वावान्तरजातयो नाङ्गीकृता इत्यर्थः । जातेराकृतिव्यङ्ग्यत्वाद्गुणेषु च तदभावाज्जात्यभाव इत्यप्याहुः । **ज्ञानसंस्कारेति** । ज्ञानजन्यसंस्कारेत्यर्थः । कैश्चित्सर्वार्थिनां संस्काराधायकत्वमङ्गीकृतम् । अत एव चाविद्यासंस्काराज्ज्ञानिनां प्रवृत्तिरित्यपि वदन्ति । तद्रीत्या तत्रातिव्याप्तिवारणाय ज्ञानपदम् ।

**वं०प०—** साध्यविकल्पेनाप्यनुमानं दूषयितुं साध्यं पृच्छति **किञ्चेदमिति** । **न तावदिति** । जातेराकृतिव्यङ्ग्यत्वाद्गुणानां च निराकारत्वादिति भावः । **तत्संभवेनेति** । इदं रजतमिति ज्ञानं स्मरणमित्यस्यानुभवान्यत्वरूपमननुभवत्वमर्थः । तथाच पक्षीभूते रजतमिति ज्ञाने घटाद्यनुभवान्यत्वस्य सिद्धत्वेन सिद्धसाध्यता स्यात् । एतादृशानुभवान्यत्वस्य स्मरणत्वोक्तौ यज्ञदत्तानुभवस्यापि देवदत्तानुभवान्यत्वस्य सत्त्वाद्घटानुभवस्यापि पटानुभवान्यत्वस्य सत्त्वात्स्मरणत्वापत्तिरिति भावः । **स्मृतावपीति** । यज्ञदत्तस्मृतेरपि देवदत्तस्मृत्यन्यत्वादनुभवत्वं स्यादित्यर्थः । **इतरेतराश्रयेति** । अनुभवत्वज्ञाने तदनधिकरणत्वरूपस्मृतित्वज्ञानं स्मृतित्वज्ञाने तदन्यत्वरूपानुभवत्वज्ञानमितीतरेतराश्रयप्रसङ्गादित्यर्थः । **अप्रसिद्धविशेषणत्वादिति** । अस्मन्मते स्मृतेर्मानसप्रत्यक्षजन्यत्वेन संस्कारप्रभवत्वानङ्गीकारात्संस्कारप्रभवत्वरूपस्मृतित्वसाधनेऽस्माकमप्रसिद्धविशेषणत्वं स्यादित्यर्थः । **दृष्टान्तस्येति** । संप्रतिपन्नस्मरणे मानसप्रत्यक्षजन्यत्वेन संस्कारप्रभवत्वस्यानङ्गीकारेण साध्यवैकल्यं स्यादित्यर्थः ।

**आनन्दः—** हेतुं दूषयित्वा साध्यं दूषयति **किञ्चेति** । गुणगतजातेः ज्ञाने अनङ्गीकारादिति भावः । **तत्संभवेनेति** । अनुभवस्यापि अनुभवान्तरादन्यत्वसंभवेनेत्यर्थः । **स्मृतावपीति** । स्मृतेरपि स्मृत्यन्तरान्यत्वादित्यर्थः । **इतरेतराश्रयेति** । स्मृत्यन्यत्वमनुभवत्वं अनुभवान्यत्वं स्मृतित्वमिति परस्परप्रवेशेनेत्यर्थः । **दृष्टान्तस्येति** । तत्रापि मनोजन्यत्वस्य सत्त्वेन संस्कारमात्रप्रभवत्वरूपसाध्याभावेनेत्यर्थः ।

**कं०रा०— इतरेतरेति** । स्मृतित्वे ज्ञाते स्मृत्यन्यत्वरूपानुभवत्वज्ञानम् । ज्ञाते चानुभवत्वे तदनधिकरणत्वरूपस्मृतित्वज्ञानमित्यन्योन्याश्रयप्रसङ्गाच्चेत्यर्थः । **दृष्टान्तस्येति** । दृष्टान्तितस्य संप्रतिपन्नस्मरणस्य मानसप्रत्यक्षजन्यतया संस्कारमात्रप्रभवत्वरूपस्मरणत्वाभावेन साध्यवैकल्याच्चेत्यर्थः ।





**श्रीनिधि०— सिद्धसाध्यतेति** । सिद्धं साध्यं यस्य तत्तथोक्तं तस्य भावः । सिद्धसाध्यता सिद्धसाधनतेति यावत् । **अनुभवस्यापीति** । अनुभवान्तरस्यापीत्यर्थः । किं यत्किञ्चित् स्मृत्यन्यत्वं विवक्षितं उत स्मृतित्वानधिकरणत्वमिति विकल्पौ मनसि निधायाद्यं दूषयति **स्मृताविति** । द्वितीयं दूषयति **इतरेतरेति** । अनुभवानधिकरणत्वं स्मृतित्वं स्मृतित्वानधिकरणत्वमनुभवत्वमिति ।

**वा०चं०— किञ्चेति** । यद्यपि साध्यदूषणस्य हेतुदूषणात्पूर्वभाव एवोचितस्तथाऽपि साध्यदूषणप्रसङ्गे इतरेतराश्रयादेरन्यस्यापि क्वचिद्दृष्टान्तदूषणस्य क्वचिदनैकान्तिकत्वादिहेतुदूषणस्याप्युच्यमानतया साध्यमात्रदूषणत्वाभावेन हेतुमात्रदूषणोक्त्याऽऽनन्तर्यस्यैवोचितत्वादिति भावः । **अभ्युपगतमिति** । गुणत्वं न जातिरनुगततयाऽप्रत्यक्षत्वाद्व्यतिरेकेण गोत्ववत् । रूपं रूपत्वतद्व्याप्यभिन्नसत्ताव्याप्यजातिमन्न तत्त्वेनाप्रतीयमानत्वाद्गोत्ववदित्यनुमानात् । न च सामान्यवत्वे सति स्पर्शरहितत्वे सति द्रव्याश्रितत्वमित्यादिव्यञ्जकवशात्तदुपलब्धिरिति वाच्यम् । कर्मादिसाधारणस्य तस्य गुणत्वाव्यञ्जकत्वात्तदर्थं कर्मान्यत्वेन विशेषणे रूपान्यत्वादिनाऽपि विशेषयितुं शक्यतयाऽनपेक्षितव्यावृत्तेरतिप्रसञ्जकत्वात् । न च रत्नतत्त्वमिवोपदेशसहकृतचक्षुरादिना तदुपलब्धिः । सामान्यनियतधर्मान्तर्भावेणोपदेशस्य जातिग्राहकतया प्रकृते तदभावात् । अत एव न रूपत्वादेरपि जातित्वम् । चक्षुरितरबहिरिन्द्रियाग्राह्यविशेषगुणत्वादिना रूपादिसंज्ञोपपत्तेश्चेति तेषामाशय इति भावः । अत्र नाभ्युपगतमित्यनभ्युपगममात्रोक्त्या परोक्तसामान्यत्वदूषणस्य परिहार्यत्वं सूचयति । तथा हि । परस्परविरुद्धसंयोगविभागलक्षणकार्योत्पादकत्वरूपव्यञ्जकव्यङ्ग्याया उत्क्षेपणादिरूपकर्मवृत्तिजातेरवश्याङ्गीकर्तव्यतया विरुद्धकार्यजनकरूपादि गुणानां कर्मैकजातीयत्वानुपपत्त्याऽकर्मकत्वेन तद्वैलक्षण्यस्य च द्रव्यादिसाधारणतया विरुद्धकार्यजनकत्वाविशेषेऽपि सापेक्षत्वानपेक्षत्वाभ्यां द्रव्यकर्मणोर्विजातीयत्ववत्सामान्यवत्वकार्यानाश्रयत्वाविशेषेऽपि विरुद्धाविरुद्धकार्याभ्यां गुणकर्मणोरपि विजातीयत्वमावश्यकम् । एवं च कार्यानाश्रयत्वविशिष्टाविरुद्धकार्यजनकत्वादिव्यञ्जकवशात् गुणत्वाद्युपलब्धिरुपपन्नैव । अननुसंहितोपाधेरुपहितप्रत्ययायोगेन नोपाधिनिबन्धनत्वं रूपदिसंज्ञानामपीति गुणत्वस्य जातित्वमिति दिक् । अनुभवशब्देन काचिदनुभवव्यक्तिरुच्यतेऽनुभवत्वावच्छिन्नं वेत्याशयेन विकल्पयति **किमिति** । यद्वा नञोपन्यार्थत्वमभावार्थत्वं चेत्याशयेन विकल्पयति **किमिति** । स्मृतिशब्देन यत्किञ्चित्स्मृतिविवक्षायामाह **स्मृताविति** । सर्वस्मृतिविवक्षायामाह **इतरेति** । वेगादिमात्रप्रभवपतनादावतिव्याप्तेराह **ज्ञानेति** । अप्रसिद्धविशेषणत्वस्यादोषत्वमतेऽप्याह **दृष्टान्तस्येति** ।

**वा०र०— इतरेतराश्रयादेरिति** । इतरेतराश्रयादिकं साध्याश्रितम् । दूषणमिव तदतिरिक्तं दृष्टान्तदूषणं हेतुदूषणं च साध्यदूषणप्रसङ्ग एव क्वचित्क्वचिदुच्यमानं भवतीति साध्यदूषणग्रन्थस्य साध्यमात्रदूषणत्वाभावः । हेतुदूषणं तु हेतुमात्रस्यैव । न साध्यस्यापि । तस्माद्धेतुमात्रनिराकरणस्याल्पविषयत्वेन प्रथमतो हेतुदूषणमुक्त्वा तदनन्तरमेव बहुविषयसाध्यदूषणग्रन्थस्य प्रवर्तनमुचितमित्यर्थः । मूले **किञ्चेदमिति** । यदिदं स्मरणत्वं साध्यं तन्न तावत्सामान्यमिति योजना । प्राभाकराभ्युपगमाभावः कुत इत्यतो गुणत्वमसिद्धगोत्वादिवदप्रतीतेः व्यवस्थापकाभावाच्चेत्यादि गुणकिरणावलीव्याख्यानरूपं तत्र गुणत्वं न जातिरनुगतत्वेनाप्रत्यक्षत्वात् व्यतिरेकेण





गोत्ववदित्यर्थादित्यादि वर्धमानग्रन्थमनुसन्धायाह **गुणत्वं न जातिरित्यादिना**। परस्परविरुद्धसंयोगविभागलक्षण-कार्योत्पादकत्वमित्यादिकिरणावलीतद्व्याख्यानादिकमनुसन्धाय सुपरिहार्यत्वमुपपादयति **तथाहि परस्परेति**। रूपत्वं सत्ताव्याप्यजातिव्याप्यरूपमात्रवृत्ति जातित्वात् शुक्लत्ववत्। न च रूपत्वव्याप्यत्वमुपाधिः। पृथिवीत्वादौ साध्यव्यापकत्वात्। इत्यादीन्यनुमानानि तद्विचारं च मनसि निधायाह **दिगिति**। विशेषतोऽप्यत्र लेख्यमस्ति।

**स०व्र०**— स्मृतित्वानधिकरणत्वं विवक्षितमतो न दोष इत्यत आह **इतरेतराश्रयेति**। **ज्ञानसंस्कारेति**। ज्ञानजन्यसंस्कारेत्यर्थः। केषाञ्चिन्मते सर्वपदार्थानां संस्काराधायकत्वमङ्गीकृतम्। अत एवाविद्यासंस्कारादज्ञानिनां प्रवृत्तिरित्यादि वदन्ति। तद्रीत्याऽन्यत्रातिव्याप्तिवारणाय ज्ञानपदम्।

**वि०ठ०**— **किञ्चेदमिति**। यद्यपि साध्यदूषणस्य हेतुदूषणात् पूर्वभाव एवोचितः तथापि साध्यदूषणप्रसङ्गे इतराश्रयत्वादेः क्वचित् दृष्टान्तदूषणस्य क्वचिदनेकान्तिकादिहेतुदूषणस्यापि उच्यमानत्वेन साध्यमात्रदूषणत्वाभावो न दोष इति ज्ञेयम्। **न तावत्सामान्यमिति**। प्राभाकरैः रूपादीनामेकत्वाङ्गीकारे तैरेवानुगतव्यवहारोपपत्तौ तदर्थं गुणेषु एव अवान्तरजातयो नाङ्गीकृता इत्यर्थः। **ज्ञानसंस्कारेति**। ज्ञानजन्यसंस्कारेत्यर्थः। वेगादिप्रभवे अतिव्याप्तिवारणाय ज्ञानेत्युक्तम्।

**गूढ०**— हेतुं दूषयित्वा साध्यं दूषयति **किञ्चेति**। गुणगतजातेः ज्ञाने अनङ्गीकारादिति भावः। **तत्संभवेनेति**। अनुभवस्यापि अनुभवान्तरादन्यत्वसंभवेनेत्यर्थः। **स्मृतावपीति**। स्मृतेरपि स्मृत्यन्तरा-न्यत्वादित्यर्थः। **इतरेतराश्रयेति**। स्मृत्यन्यत्वं अनुभवत्वं अनुभवान्यत्वं स्मृतित्वमिति परस्परप्रवेशेनेत्यर्थः। **दृष्टान्तस्येति**। तत्रापि मनोजन्यत्वस्य सत्त्वेन संस्कारमात्रप्रभवत्वरूपसाध्याभावेनेत्यर्थः।

**३७० सु०— किञ्च 'इन्द्रियव्यापारान्वयव्यतिरेकानुविधायीदं रजतज्ञानं तत्कार्यम्' इत्यवसीयते। तथा च बाधितविषयत्वम्। अन्वयव्यतिरेकयोरन्यत्रोपयोगान्नैवमिति चेत्। तत्किमस्य स्मृतित्वे सिद्धेऽन्यत्रोपक्षयः कल्प्यते उतैवमेव। नाद्यः तदभावात्, अस्मादेव अनुमानात्तत्सिद्धावन्योन्याश्रयप्रसङ्गात्। न द्वितीयः। समीचीनरजतप्रत्ययेऽपि तथात्व-प्रसङ्गात्। अन्यत्रोपक्षयः शङ्कित इति चेन्न तथाऽपि सन्दिग्धकालातीतताऽनिस्तारात्। समीचीनरजतानुभवेऽपि कथमन्यत्रानुपक्षयो निश्चितो भवता। अनुभवत्वनिश्चयादिति चेन्न। इन्द्रियव्यापारस्यान्यत्रोपयोगशङ्कयाऽनुभवत्वस्यापि सन्दिग्धत्वात्। पुरोवर्तिव्यवहार-संवादादनुभवत्वनिश्चय इति चेन्न। संवादानुभवस्याप्यनिश्चितत्वात्। असति बाधके न वृथाऽन्यत्रोपक्षयः शङ्क्यत इति चेत् समं प्रकृतेऽपीति॥**

**परि०— बाधितविषयत्वमिति** । बाधितसाध्यकत्वं पक्षस्येत्यनुषङ्गः । **अन्यत्रेति** । इदमिति ज्ञानजनन इत्यर्थः । तथाच रजतमितिज्ञानमिन्द्रियकार्यं तदन्वयव्यतिरेकानुविधायित्वादित्युक्तौ हेतोरसिद्धत्वान्न बाधितविषयत्वमिति भावः । **एवमेवेति** । निर्बीजमेवेत्यर्थः । **अस्मादेवेति** । अनाकलितरजतस्य अनुत्पद्यमानत्वादित्युक्तानुमानादेव स्मृतित्वसिद्धिरित्युक्तौ स्मृतित्वे सिद्धे इन्द्रियान्वयव्यतिरेकयोरन्यत्रोपयोगकल्पना कल्पिते चान्यत्रोपयोगे तेन बाधितविषयत्वाभावेन निर्दोषादनुमानात् स्मृतित्वसिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्यर्थः । बाधकत्वेन शङ्कितानुमानं सन्दिग्धासिद्धमिति भावेन शङ्कते **अन्यत्रेति** । **सन्दिग्धकालातीततेति** । पक्षे हेतुसत्त्वासत्त्वसन्देहे तत्प्रयुक्तसाध्यतदभावगोचरसन्देहस्यावर्जनीयत्वात्सन्दिग्धबाधितत्वदोषः स्यादेवेत्यर्थः । साध्यसन्देहस्य स्वरसतो जायमानस्यानुमित्यङ्गत्वेऽप्युपाधिसन्देहाहितसाध्यसन्देहस्येव हेतोरप्रयोजकत्वाहितसाध्यसन्देहस्येव च सन्दिग्धासिद्ध्याहितसाध्याभावसन्देहस्याप्यनुमितिप्रतिबन्धकत्वमस्त्येवेति भावः । निश्चितबाधोऽपि संभवतीति प्रतिबन्दीमुखेनाह **समीचीनेति** ।

**यादु०— सन्दिग्धेति** । यद्यपि बाधसन्देहस्य साध्यसन्देहपर्यवसन्नतया नानुमितिप्रतिबन्धकत्वम् । तथाऽप्याहितस्य तस्य प्रतिबन्धकत्वमस्त्येवेत्यभिप्रायेणेदमुक्तमित्यवधेयम् । **पुरोवर्तिव्यवहारेति** । पुरोवर्तिविषयकसमर्थप्रवृत्तिसमानविषयकत्वादित्यर्थः ।

**वं०प०— तत्कार्यमितीति** । रजतज्ञानमिन्द्रियजन्यं तदन्वयव्यतिरेकानुविधायित्वादित्यनुमानादित्यर्थः । स्मृतिबीजसंस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एव इन्द्रियान्वयव्यतिरेकयोः उपक्षीणत्वादिति पूर्वपक्ष्युक्तमाशङ्क्य निराकरोति **अन्वयव्यतिरेकयोरिति** । **अन्यत्रेति** । अधिकरणभूतशुक्तिग्रहण इत्यर्थः । **अस्मादेवेति** । अनाकलितरजतस्यानुत्पद्यमानत्वहेतोः सकाशादेवेत्यर्थः । **अन्योन्याश्रयेति** । अस्मादनुमानात्स्मृतित्वे सिद्धे इन्द्रियान्वयव्यतिरेकयोरन्यत्रोपक्षयसिद्धिः । तत्सिद्धौ च रजतज्ञानस्येन्द्रियजन्यत्वसाधकानुमानस्य दुष्टत्वेन तद्विरोधाभावादुक्तानुमानेन स्मृतित्वसिद्धिरित्यन्योन्याश्रयादित्यर्थः । **तथात्वेति** । तथाऽपीन्द्रियान्वयव्यतिरेकयोरधिकरणभूतभूतलग्रहण एवोपक्षीणत्वप्रसङ्गेनेन्द्रियजन्यत्वं न स्यादित्यर्थः । **सन्दिग्धेति** । इन्द्रियान्वयव्यतिरेकयोरन्यत्रोपक्षयशङ्क्या रजतज्ञानस्य तत्कार्यत्वसन्देहेन स्मरणत्वरूपसाध्यस्यापि सन्दिग्धत्वेन सन्दिग्धकालातीतता स्यादित्यर्थः । यद्यपि बाधसन्देहस्य ग्राह्यसंशयपर्यवसन्नत्वेन नानुमितिप्रतिबन्धकत्वम् । यथाऽऽहुः । नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते । अपि तु सन्दिग्धेऽर्थे इति । तथाऽप्यन्यत्रोपक्षयशङ्काहितस्य बाधसन्देहस्य प्रतिबन्धकत्वमेवेत्याशयेनेदं दूषणमुक्तमित्यवगन्तव्यम् । **पुरोवर्तिव्यवहारसंवादादिति** । पुरोवर्तिनि व्यवहारसंवादात्समर्थप्रवृत्तिजनकत्वरूपविजातीयसंवादादित्यर्थः । **संवादानुभवस्यापीति** । विजातीयसंवादस्यानुभवत्वमुक्तरीत्या सन्दिग्धमिति भावः । समीचीनरजतानुभवस्थले इन्द्रियान्वयव्यतिरेकयोरन्यत्रानुपक्षये निश्चित ह्रीत





शङ्कते **असति बाधक इति** । **प्रकृतेऽपीति** । इदं रजतमित्यत्रापि येनान्वयव्यतिरेकयोरन्यत्रोपक्षयः शङ्क्यो बाधकाभावादित्यर्थः ।

**आनन्दः**— रजतज्ञानमिन्द्रियजन्यइन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादित्यनुमानेनेन्द्रियजन्यत्वस्य निश्चिततत्वाद्बाधितविषयमनुमानमित्याह **किञ्चेति** । किमत्र यथाकथञ्चिदन्वयव्यतिरेकानुविधायित्वेनेन्द्रिय-जन्यत्वमुतान्यत्रानुपक्षीणत्वेन वा । नाद्यः । अनुमितेरपीन्द्रियजन्यत्वापत्तेः । नान्त्यः । तयोरधिष्ठानग्रह उपक्षीणत्वादीत्याशङ्कते **अन्वयेति** । **तदभावादिति** । स्मृतित्वसिद्ध्यभावादित्यर्थः । **अन्योन्याश्रयादिति** । अन्यत्रोपक्षीणत्वे कल्पिते बाधकाभावादनुमानेन स्मृतित्वसिद्धिः । तत्सिद्धौ चान्यत्रोपक्षीणत्वकल्पनमित्यर्थः । **तथात्वप्रसङ्गादिति** । अन्यत्रोपक्षयकल्पनाप्रसङ्गादित्यर्थः । तर्हि यदान्यत्रोपक्षयो न तदेन्द्रियजन्यत्वस्य सत्त्वात् सन्दिग्धकालातीतत्वं स्यादित्याह **तथापीति** । निश्चितकालातीतताम‌प्याह **समीचीनेति** । **पुरोवर्तिव्यवहार-संवादादिति** । पुरोवर्तिविषयकव्यवहारेण यः संवादस्तदनुभवादित्यर्थः ।

**कं०रा०**— **इन्द्रियेति** । चक्षुरिन्द्रियव्यापारान्वयव्यतिरेकानुविधायि रजतज्ञानं चाक्षुषमिति निश्चीयते । तथा च स्मरणत्वसाधकानुमानस्य बाधितविषयत्वमित्यर्थः । इन्द्रियव्यापारान्वयव्यतिरेकयोः स्मृतिबीज-संस्कारोद्बोधहेतुपुरोवर्तिसाधारणाकारग्रहण एवोपक्षीणतयेन्द्रियजन्यत्वनिश्चयायोगान्न बाधितविषयत्वमिति शङ्कते **अन्वयेति** । **अन्योन्येति** । अस्मादनुमानात्स्मृतित्वसिद्धाविन्द्रियव्यापारान्वयव्यतिरेकयोरन्यत्रोपक्षयसिद्धिः तत्सिद्धौ चेन्द्रियजन्यत्वनिश्चयाभावेन बाधितविषयत्वाभावादनुमानात्स्मृतित्वसिद्धिरित्यन्योन्याश्रयप्रसङ्गादित्यर्थः । **तथा चेति** । इन्द्रियव्यापारान्वयव्यतिरेकयोरन्यत्रोपक्षीणत्वकल्पनाप्रसङ्गादित्यर्थः । उक्तरीत्या कल्पकाभावेनान्यत्रोप-क्षयनिश्चयाभावेऽपि तत्संशयोऽस्त्येव । तथा चेन्द्रियजन्यत्वनिश्चयाभावान्न बाध इत्याशयेन शङ्कते **अन्यत्रेति** । इदमिति ज्ञानजनन इत्यर्थः । **तथाऽपीति** । अन्यत्रोपक्षयसंशयेन निश्चितकालातीतत्वाभावेऽपीन्द्रियव्यापारस्य अन्यत्रोपक्षयो वा रजतज्ञान एवोपयोगो वेति शङ्कया आहितस्य स्मृतित्वतदभावसन्देहस्य सत्त्वेन सन्दिग्धकालातीतत्वस्यानिस्तारादित्यर्थः । यद्यपि पक्षीयसाध्याभावसन्देहस्य न दोषत्वम् । तथात्वेऽनुमान-मात्रोच्छेदप्रसङ्गात् । तथाऽप्यन्याहितस्य दोषत्वं संभवतीत्यनुसन्धेयम् । **सममिति** । असत्यस्थलेऽपि बाधकेन विना वृथाऽन्यत्रोपक्षयो न शङ्क्यत इति तुल्यमित्यर्थः । तथा चान्यत्रोपक्षयशङ्काविरहादन्यत्रानुपक्षीणेन्द्रिय-व्यापारानुविधानेन तज्जत्वे रजतज्ञानस्य निश्चिते स्मृतित्वाभावनिश्चयात्स्मृतित्वसाधकानुमानं बाधितविषयमेवेति भावः ।

**श्रीनिधि०**— एवं **बाधितविषयत्वमिति** अन्वयव्यतिरेकयोरन्यत्रानुपक्षयात् प्राबल्यं परकीयानुमानस्य अप्रसिद्धविशेषणत्वादिना दुर्बलत्वमित्येवमुक्तम् । अन्यथा सत्प्रतिपक्ष इत्यवक्षत् । **अन्योन्याश्रयादिति** । स्मृतित्वे सिद्धे अन्यत्रोपक्षयः तस्मिन् सिद्धे स्मृतित्वमिति । **इन्द्रियव्यापारस्येति** । करणव्यापारारोपोपलक्षणम् ।

**वा०चं०—** नन्वस्त्वयं तर्हि केवलव्यतिरेकी । न च साधारण्यमनुकूलतर्काभावदशायामेव तस्य दोषत्वात् । अत्र चानुकूलतर्कं व्युत्पादयिष्यामीत्यतो दूषणान्तरमाह **किञ्चेति** । यद्वा मानसप्रत्यक्षजत्वस्य स्मृतौ परेणानङ्गीकृततयाऽस्योपपाद्यदूषणत्वात् दूषणान्तरमाह **किञ्चेति** । अन्यत्रानुपक्षीणत्वेनान्वयव्यतिरेकयोरविशेषणे प्रत्यक्षसिद्धलिङ्गकरणकलिङ्गिज्ञाने व्यभिचारो विशेषणे च हेतुविशेषणासिद्धिरित्याशयेन शङ्कते **अन्वयव्यतिरेकयोरिति** । आद्येऽप्यस्य स्मृतित्वसिद्धिः प्रकारान्तरेण वा यस्यानाकलितरजतस्यानुत्पद्यमानत्वस्य बाधितविषयत्वमस्माभिर्व्युत्पाद्यते तत एव वा । आद्ये आह **तदिति** । द्वितीये त्वाह **अस्मादेवेति** । समीचीनस्थलेऽनुभवत्वनिश्चायकस्य शङ्कानिवर्तकत्वेऽपि न प्रकृते तन्निवर्तकं किञ्चिदिति सन्दिग्धहेतुविशेषणासिद्धिः स्यादेवेत्याशङ्कते **अन्यत्रेति** । हेतुसन्देहाहितसाध्यसन्देहोऽपि बाधसंशयपर्यवसन्नत्वाद्दोष एवेति भावेनाह **तथाऽपीति** । समीचीनस्थले शङ्कानिवर्तकसद्भावं प्रकृते तदभावमभ्युपगम्य सन्दिग्धकालातीतत्वमुक्तम् । वस्तुतस्तु तत्रापि तन्निवर्तकमिति नोक्तातिप्रसङ्गपरिहार इति प्रकृते उपक्षयशङ्कानिवृत्तिं परमुखेनैवोपपादयितुमाह **समीचीनेति** । अनुभवत्वनिश्चयोऽपीन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वप्रयुक्ततज्जन्यत्वनिश्चयनिबन्धनो वा प्रकारान्तरेण वा । नाद्य इत्याह **इन्द्रियेति** । द्वितीयं शङ्कते **पुरोवर्तीति** । इदानीं साम्यं वक्तुं शङ्कानिवर्तकं परमुखेनाशङ्कते **असतीति** ।

**वा०र०—** **लिङ्गिज्ञाने व्यभिचार इति** । तस्यापि स्वकारणीभूतलिङ्गग्राहकं प्रत्यक्षान्वयव्यतिरेकानुविधायित्वादिति भावः । अत्रान्वयव्यतिरेकयोरन्यत्रेति मूलानुसारेणान्वयव्यतिरेकयोरितीति प्रतीकोपादानर्मित युक्तः पाठः । तयोरन्यत्रेति क्वचित्कमूलपाठानुसारेण तयोरितीति पाठोऽपि क्वचिदस्ति । अन्वयव्यतिरेकयोरित्यस्य प्रकृतत्वमनुसन्धाय लाघवाय तयोरिति प्रतीकोपादानमित्यप्याहुः । प्रकारान्तरेण वेति विकल्पयता तदभावार्दित्यस्य स्मृतित्वसाधकान्तराभावादिति व्याख्यातप्रायम् । नन्विन्द्रियजन्यत्वहेतुसन्देहेन तत्साध्यस्मृतित्वाभावादित्यसन्देहप्राप्तावपि तत्सन्देहस्य पूर्वानुमानीयसाध्यसन्देहपर्यवसन्नतया तत्सन्देहमात्रस्य पूर्वानुमाने प्राप्तावपि न सन्दिग्धकालातीततादोषप्राप्तिः । साध्यसन्देहस्यैव सन्दिग्धकालातीततापदेन ग्रहणं त्वयुक्तम् । सन्दिग्धकालातीतताया दोषत्वेऽपि साध्यसन्देहस्यानुमित्यनुकूलत्वेनादोषत्वादित्यत आह **हेतुसन्देहेति** । सत्यबाधकानुमानीयसाध्यसन्देहे पूर्वानुमाने साध्यसन्देहमात्रमायातीति । तथापि स एव सन्देहो यत्र स्वारसिकस्तत्रादोषः प्रकृत उत्तरानुमानीयहेतुसन्देहेनाहितो बाधसन्देहे पर्यवसन्न इति भवत्येव दूषणम् । एतादृशसन्देहस्य चानुमित्यननुकूलत्वेन सन्दिग्धकालातीततापदेन ग्रहणोपपत्तेरित्याशयः । यत्त्वन्यथाख्यातौ बाधसंशयस्य साध्यसंशयपर्यवसन्नत्वेनादोषत्वमाशङ्क्य साध्यसन्देहस्य हि तत्त्वेन दोषत्ववर्णनम् । तदसत् । साध्यसन्देहस्य स्वरसतो दोषत्वाभावेऽपि आहितस्य दोषत्वे बाधसंशयपर्यवसन्नत्वस्य निमित्तत्वेन; तत्पर्यवसन्नत्वमसाध्यसन्देहस्य दोषत्वोपपादनसंभवेऽपि बाधसंशयस्य साध्यसंशयपर्यवसन्नत्वं साध्यसन्देहस्य चाहितत्वेन दोषत्वमित्येवं बाधसंशयस्य दोषत्वोपपादनस्य विपरीतत्वेनासंभवात् । बाधस्य साध्याभावविषयकप्रमाणजन्यप्रमितिरूपतया तत्सन्देहस्य स्वत एव दूषणत्वादित्युक्तम् । एतद्बाधसन्देहविषयेऽपौरुषेयत्ववादीयवेदाप्रामाण्यहेतुत्वेनाशङ्कितानृतत्वव्याघातादिनिराकरणस्थलीयसन्दिग्धकालातीतत्वव्युत्पादनमस्माभिः करिष्यते । तत्त्वनिर्णयव्याख्यानटीकाप्रपञ्चे च कृतमस्माभिः स





प्रकारोऽनुकूलश्चेदत्रापि ज्ञेयम् । नन्वनादेः कथं निवृत्तिप्रकरणे किं सङ्कोचनं बाध्यत्वमित्येतदवतारटीकायां पक्षे साध्याभावरूपस्य तत्प्रमारूपस्य प्रसिद्धबाधस्य वेंत्युक्तिरपि अनुकूलनीया तदनुसारि पक्षान्तरं तु तत्त्वनिर्णय-टीकाप्रपञ्चेऽस्माभिर्यदि त्वित्यादिना प्रदर्शितं ज्ञेयम् । प्रकृते तदभावमित्यत्र प्रकृते चेति वा तदभावं चेति वा चशब्दयुक्तः पाठः स्वरसः । तथा पाठाभावेऽपि वा चशब्दान्तर्भावेनैव व्याख्येयम् ।

**स०व्र०**— आहितस्य साध्यसन्देहस्यानुमितिप्रतिबन्धकत्वाभिप्रायेणाह **सन्दिग्धेति** । **पुरोवर्ति-व्यवहारसंवादादिति** । पुरोवर्तिविषयकसमर्थप्रवृत्तिसमानविषयकत्वादित्यर्थः ।

**विठ्ठ०**— **सन्दिग्धकालातीततेति** । न च वाच्यं बाधकसन्देहपर्यवसन्नत्वेन अनुमित्यङ्गतया दूषणत्व-मिति स्वरसतो जायमानस्यैवानुमित्यङ्गत्वेन उपाधिसन्देहेन अप्रयोजकत्वेन चापादितसाध्यसन्देहस्यैव सन्दिग्ध-प्रमाणबाधाहितसन्देहस्यापि प्रतिबन्धकत्वात् । निश्चितबाधोऽपि संभवतीति प्रतिबन्दीमुखेनाह **समीचीनेति** ।

**चषकः**— हेतोः सन्दिग्धविशेषणासिद्धिमाशङ्कते **अन्यत्रेति** । हेतुसन्देहाहितसाध्यसन्देहोऽपि बाधसन्देह-पर्यवसन्नत्वाद्दोष इत्याह **तथाऽपीति** ।

**गूढ०**— रजतज्ञानं इन्द्रियजन्यं इन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादित्यनुमानेनेन्द्रियजन्यत्वस्य निश्चितत्वात् बाधितविषयमनुमानमित्याह **किञ्चेति** । किमत्र यथाकथञ्चिदन्वयव्यतिरेकानुविधायित्वेनेन्द्रियजन्यत्वं उतान्यत्रानुपक्षीणत्वेन वा । नाद्यः । अनुमितेरपीन्द्रियजन्यत्वापत्तेः । नान्त्यः । तयोरधिष्ठानग्रहे उपक्षीणत्वा-दित्याशङ्कते **अन्वयेति** । **तदभावादिति** । स्मृतित्वसिद्ध्यभावादित्यर्थः । **अन्योन्याश्रयादिति** । अन्यत्रोपक्षीणत्वे कल्पिते बाधकाभावादनुमानेन स्मृतित्वसिद्धिः । तत्सिद्धौ चान्यत्रोपक्षीणत्वकल्पनमित्यर्थः । **तथात्वप्रसङ्गादिति** । अन्यत्रोपक्षयकल्पनाप्रसङ्गादित्यर्थः । तर्हि यदान्यत्रोपक्षयो न तदेन्द्रियजन्यत्वस्य सत्त्वात् सन्दिग्धकालातीतत्वं स्यादित्यत आह **तथापीति** । निश्चितकालातीततामप्याह **समीचीनेति** । **पुरोवर्तिव्यवहारसंवादादिति** । पुरोवर्ति-विषयकव्यवहारेण यः संवादस्तदनुभवादित्यर्थः ।

**प्रदीपः**— अनाकलितरजतस्यानुत्पद्यमानत्वादिति नेत्याह **अस्मादेवेति** ।

**३७१ सु०— एतेन "अप्रत्युत्पन्नकारणप्रभवत्वं स्मृतित्वम्" इत्यपि परास्तम् । संस्कारो-त्पत्त्यनन्तरमेव जातायां स्मृतावनैकान्तिकत्वं च ॥**

**'अनुभूतविषयत्वं स्मृतित्वमि'त्यपि चेन्न । द्वितीयादिभ्रमे सिद्धसाधनत्वात्, साध्याविशिष्टताप्रसङ्गाच्च ॥**

**'तत्तांशोल्लेखित्वं स्मृतित्वमि'ति चेन्न अनुभवबाधितत्वात् ॥**





**एतेन 'ज्ञानसंभिन्नार्थगोचरत्वमि'त्यपि परास्तम् ॥**

**अनेनैव प्रतिपक्षानुमानद्वयमपि समाहितं वेदितव्यम् । 'नेदं स्मृतिरिति व्यवहर्तव्यं तत्तोल्लेखादिस्मृतिचिह्नविकलत्वादि'ति प्रथमप्रयोगे विवक्षितत्वात् । अत एव तिक्त-गुडादिप्रत्ययप्रक्रियाऽपि परास्ता ।**

**बिन्दुः— ज्ञानसंभिन्नार्थगोचरत्वमिति** । सघट इत्यस्य व्यवहारस्य पूर्वानुभूतो घट इत्यर्थ-परिकल्पितज्ञानविशिष्टार्थविषयत्वं स्मृतित्वम् । पूर्वानुभवस्यापि घटविशेषणतया भानादिति ये वदन्ति तन्मतमपि पक्षीभूते इदं रजतमिति ज्ञाने तत्तदनवगाहिनि उक्तविधसाध्याभावस्य निश्चितत्वेन बाधितत्वान्निरस्तमित्यर्थः । प्रतिपक्षानुमानद्वये द्वितीयानुमाने दोषशङ्काया एवाभावात् आद्यानुमाने व्यवहार एव साध्य इति न साध्याविशिष्टत्वादिकमित्याशयेनाह **प्रथमप्रयोग इति** । यद्यपि परेण न व्यवहारः साध्यकोटौ प्रवेशितस्तथाऽप्युभयवादिसिद्धस्मृतित्वस्य परेण दुर्निरूपत्वात् स्मृतिरिति व्यवहारविषयत्वमेवागत्या साध्यत्वेन वक्तव्यम् । तथाच सत्प्रतिपक्षो युज्यत एवेति बोध्यम् । तत्तोल्लेखादीति स्मृतिलक्षणानाक्रान्तत्वादित्यर्थः ।

**परि०— एतेनेति** । इन्द्रियजत्वसाधकानुमानबाधितत्वकथनेनेत्यर्थः । **अप्रत्युत्पन्नेति** । चिरकालोत्पन्नेत्यर्थः । संस्काररूपकारणोत्पत्त्यनन्तरं चिरकाले स्मृतेरुत्पत्तेरिति भावः । **साध्या-विशिष्टेति** । अनाकलितरजतस्यानुत्पद्यमानत्वादित्यस्य हि 'द्वौ नञावि'ति न्यायेन आकलित-रजतस्यैवोत्पद्यमानत्वादिति विवक्षितमित्युक्तत्वादस्य चानुभूतविषयत्वादित्येतदनन्यत्वादिति भावः । **अनुभवेति** । विप्रतिपन्नं भ्रमस्थलीयरजतज्ञानं पक्षीकृत्येदं ज्ञानं तत्तांशोल्लेखीतिसाधनेऽनुभवबाध इत्यर्थः । **एतेनेति** । अनुभवबाधेनैव ज्ञानमिलितार्थविषयकत्वं स्मृतित्वमित्यपि निरस्तमित्यर्थः । **अनेनैवेति** । तत्तांशोल्लेखित्वस्य अनुभवबाधितत्वकथनेनैव । तथा किञ्चेन्द्रियव्यापारान्वयव्यतिरेकानु-विधायीदं रजतमितिज्ञानमित्यादिनेन्द्रियव्यापारस्यान्यत्रोपयोगाभावकथनेनैव च । यथाक्रमं इदमस्मरणं तत्तांशविकलत्वात्संप्रतिपन्नवत् । नेयं स्मृतिः इन्द्रियजन्यत्वादिति प्रागुक्तप्रतिपक्षद्वयमपि समाहित-मित्यर्थः । नन्वाद्यमप्रयोजकत्वेन दूषितं प्रागित्यतो यथा नाप्रयोजकत्वं तथाऽऽह **नेदमिति** । हेतूच्छित्तिरेवात्र विपक्षे बाधिकेत्यर्थः । यद्वा नेदं स्मरणं तत्तांशविकलत्वादित्युक्तौ तत्तोल्लेखस्यानुभव-बाधेन स्वरूपासिद्ध्यभावेऽपि साध्याविशिष्टता तु स्यादेव स्मृतित्वस्य तत्तोल्लेखित्वरूपत्वादित्यत आह **नेदं स्मृतिरिति व्यवहर्तव्यमिति** । न च हरिहरादिस्मृतौ व्यभिचारः शङ्क्यः । तत्र पूर्वानुभूतविषयकत्व-





संस्कारजत्वादिस्मृतिचिह्नान्तरसत्त्वात्। अत एव तत्तोल्लेखादीत्यादिपदप्रयोगः। **अत एवेति**। ज्ञानद्वित्वे प्रमाणाभावादेवेत्यर्थः।

**गु०दी०— तत्तोल्लेखादि** इत्यत्र आदिपदेन संस्कारजत्वादिकं गृह्यते। तेन श्रवणजन्यसंस्कारजनिते हरिहरादिस्मरणे न व्यभिचारः। **अत एव तिक्तगुडादिप्रत्ययप्रक्रिया** इत्यत्र तिक्तरहितरसनाग्रस्य शिशोरीदृशज्ञानादर्शनेन जिह्वास्थपित्तगततिक्तानुभवजन्यत्वस्य त्वयाऽपि वक्तव्यत्वेन संस्कारजत्वाख्यस्मृतिचिह्नाभावादित्यर्थः। शिशोः प्राग्भवीयस्तनपानोद्बोधकजीवनादृष्टवत्, इह कल्पकाभावादिति वा। अथ यदि तिक्तो गुड इत्यत्र अगृहीतभेदमनुभवद्वयं परो वदेत् तदा — इदं रजतमित्यत्र ज्ञानद्वित्वनिरसनन्यायेन निरस्यत इति भावः।

**यादु०— एतेनेति**। उक्तरीत्या बाधितविषयत्वेनेत्यर्थः। **ज्ञानसम्भिन्नेत्यादि**। मयेदं ज्ञातमिति विशिष्टार्थगोचरत्वमित्यर्थः। इदमपीदं रजतमित्यत्र ज्ञानस्य विशेषणतयाऽनुभवाभावाद्बाधितमेवेति भावः। **तत्तोल्लेखादीति**। अत्रादिपदेन संस्कारमात्रजन्यत्वं ग्राह्यम्। पदात्पदार्थस्मृतौ हरिहरादिस्मृतौ च किञ्चित् स्मृतिचिह्नमस्त्येवेति न व्यभिचार इति भावः।

**वं०प०— एतेनेति**। इन्द्रियान्वयव्यतिरेकानुविधायित्वेनेन्द्रियजन्यत्वस्य निर्धारितत्वेन प्रत्युत्पन्नकारणजन्यत्वस्यैव सिध्या बाधितविषयत्वेनेत्यर्थः। **संस्कारोत्पत्त्यनन्तरमेवेति**। तथाच तादृशस्मृतावनाकलितरजतस्यानुत्पद्यमानत्वे सत्यपि संस्काररूपप्रत्युत्पन्नकारणप्रभवत्वस्यैव सत्त्वेनोक्तरूपस्मृतित्वाभावाद्व्यभिचार इत्यर्थः। **द्वितीयादिभ्रम इति**। रजतमिति ज्ञानसामान्यस्य पक्षत्वेन द्वितीयादिभ्रमस्यापि पक्षत्वात्तत्रानुभूतविषयत्वसद्भावात्सिद्धसाधनतेत्यर्थः। **साध्याविशिष्टतेति**। यथानुभूतविषयत्वाख्यस्मृतिरूपं साध्यं रजतज्ञाने सन्दिग्धं तथाऽनाकलितरजतस्यानुत्पद्यमानत्वरूपो हेतुरपि सन्दिग्धः। रजतानुभववत एवोत्पद्यमानत्वस्यैव तदर्थत्वात्। तथाच साध्यसमो हेतुरित्याशयः। **अनुभवेति**। रजतमिति स्मरणस्य प्रमुशिततत्तांशकत्वाङ्गीकारेण तत्र तत्तांशोल्लेखित्वरूपे स्मृतित्वे साध्येऽनुभवबाध इत्यर्थः। **अनुमानद्वयमपीति**। इदमस्मरणं तत्तांशविकलत्वात्। संप्रतिपन्नवत्। नेयं स्मृतिरिन्द्रियजन्यत्वात्। तच्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादित्येवं यत्स्मृतित्वसाधकानुमानस्य प्रतिपक्षद्वयमाशङ्कितं तदपि समाहितम्। इन्द्रियव्यापारान्वयव्यतिरेकयोरन्यत्रानुपक्षयस्योपपादितत्वादित्यर्थः। ननु तत्तांशोल्लेखित्वस्यैव स्मरणत्वेन तत्तांशविकलत्वादस्मरणमिति प्रथमप्रयोगे साध्यावैशिष्ट्यमित्याशङ्क्य व्यवहारस्य साध्यत्वान्न दोष इत्याह **नेदं स्मृतिरिति व्यवहर्तव्यमिति**। अथवा नायं नियमो ग्रहणस्मरणे एवागृहीतविवेके व्यवहारादिप्रवर्तके इति। किन्तु क्वचिद्ग्रहणे एव मिथोऽगृहीतभेदे यथा पीतः शङ्ख इतीति प्रतिज्ञाय। अत्र हि विनिर्यन्नयनरश्मिवर्तिनः पित्तद्रव्यस्येत्यादिना तदुपपाद्य एवं तिक्तो गुड इति व्यवहारोऽपीति प्रक्रियोक्तां दूषयति **अत एवेति**। आदिपदेन पीतशङ्खग्रहणम्। तथा च तिक्तगुडपीतशङ्खप्रत्ययप्रक्रिया विशिष्टज्ञानाङ्गीकारे बाधकाभावेन ज्ञानद्वयानङ्गीकारादेव परास्तेत्यर्थः। तथा च जन्मान्तरानुभुक्तां तिक्ततां स्मृत्वा गुडे





आरोपयति इति स्मर्यमाणारोपो वा जिह्वागतपित्तद्रव्यनिष्ठां तिक्ततां गृहीत्वा गुडे आरोपयतीति गृह्यमाणारोपो वेति द्रष्टव्यम्।

**आनन्दः— एतेनेति**। बाधितविषयत्वकथनेनेत्यर्थः। इन्द्रियव्यापारान्वयाद्यनुविधायित्वेनेन्द्रियजन्यत्वेन प्रत्युत्पन्नकारणजन्यत्वाभावस्यैव निश्चयादिति भावः। **ज्ञानसंभिन्नार्थगोचरत्वम्**। अनुभूतमित्यादिरूपेण ज्ञान-विशिष्टार्थगोचरत्वम्। तस्येन्द्रियजन्यत्वेन प्रत्यक्षज्ञानत्वादिति भावः। **अनेनैवेति**। परानुमानस्य बाधकथनेन इत्यर्थः। ननु व्यभिचारस्योक्तत्वात्कथं तत्समाधानमित्यत आह **नेदमिति**। अत्र स्मृतिचिह्नविलक्षणत्वादित्येव हेतुः। तत्तोल्लेखेत्यनेन तु स्मृतिचिह्नं प्रदर्शितम्। न चैवमपि पदात्पदार्थस्मृतौ हरिहरादिस्मृतौ स्मृतिचिह्न-विकलत्वेऽपि स्मृतित्वेनाव्यवहर्तव्यत्वरूपसाध्याभावाद्व्यभिचारापरिहार इति वाच्यम्। तत्र स्मृतित्वेन व्यवहर्तव्यत्वाभावादित्येके। वस्तुतस्तु। तत्र स्मृतित्वेन व्यवहर्तव्यत्वं सिद्धमसिद्धं वा। आद्ये बाह्येन्द्रियासहकृत-संस्कारप्रभवत्वरूपस्मृतिचिह्नस्यापि तत्र कल्पनीयत्वेन हेतोरभावेन व्यभिचाराभावात्। अन्त्ये हेतुसाध्ययोस्तत्र च सत्त्वेन न व्यभिचार इति। नन्वेवमपि कथमस्य सत्प्रतिपक्षत्वं विरोधाभावात्। पूर्वानुमाने यत्साध्यं स्मृतित्वं तदभावमसाधयित्वा स्मृतित्वेन व्यवहर्तव्यत्वाभावसाधनस्य क्रियमाणत्वादन्यथातिप्रसङ्गादिति। मैवम्। स्मृतित्वाभावसाधन एव तात्पर्यात्। नेदं स्मृतिः स्मृतित्वेन व्यवहर्तव्यत्वाभावात्। यथानुभवः। इदं स्मृतित्वेन न व्यवहर्तव्यं स्मृतिचिह्नविकलत्वादित्येवं परंपरया तत्रैव तात्पर्यात्। न च व्याप्यव्याप्यस्य सुतरां व्याप्य-त्वात्स्मृतिचिह्नविकलत्वेनैव स्मृतित्वाभावः किं न साध्यत इति वाच्यम्। स्मृतिचिह्नविकलत्वेन स्मृतित्वेन व्यवहर्तव्यत्वाभावेन वेति द्वेधा स्मृतित्वाभावसिद्धिमभिप्रेत्यैवमुक्तमिति न कश्चिद्विरोध इति। **अत एवेति**। ज्ञानद्वित्वे तस्य स्मृतित्वे च प्रमाणाभावादेवेत्यर्थः।

**कं०रा०— एतेनेति**। रजतज्ञानस्योक्तरीत्या इन्द्रियजन्यत्वनिश्चयेनेत्यर्थः। **अप्रत्युत्पन्नेति**। इन्द्रिय-व्यापाररूपप्रत्युत्पन्नकारणप्रभवत्वस्य निश्चितत्वेनाप्रत्युत्पन्नकारणप्रभवत्वरूपं स्मृतित्वं साध्यमित्येतत्परास्त-मित्यर्थः। **संस्कारेति**। संस्कारोत्पत्त्यनन्तरमेव जातायां रजतस्मृतौ रजतज्ञानवत एवोत्पद्यमानत्वादिति हेतुरस्ति साध्यमानमप्रत्युत्पन्नकारणप्रभवत्वरूपस्मृतित्वं तु नेत्यनैकान्तिकत्वं चेत्यर्थः। **द्वितीयेति**। धारावाहिकभ्रम-स्थलीयद्वितीयादिरजतज्ञाने प्रथमज्ञानानुभूतार्थविषयत्वस्य सिद्धतयाऽनुभूतविषयत्वरूपस्मृतित्वसाधने सिद्ध-साधनादित्यर्थः। **साध्याविशिष्टतेति**। हेतूकृतं रजतज्ञानवत एवोत्पद्यमानत्वं द्वेधा संभवति। रजतज्ञानजन्यत्वेन वाऽनुभूतरजतविषयत्वेन वेति। तत्र प्रथमस्य विवक्षायां रजतलिङ्गकानुमितौ व्यभिचारापत्त्या द्वितीयस्यैव विवक्षणीयतया तस्य साध्यमानानुभूतविषयत्वादविशेषेण साध्याविशिष्टताप्रसङ्गाच्चेत्यर्थः। **अनुभवेति**। भ्रम-स्थलीयरजतज्ञाने तत्तांशोल्लेखित्वाभावस्यानुभवसिद्धत्वेन तस्य तद्बाधितत्वादित्यर्थः। स घटः स पट इत्यादिस्मृतौ सः पूर्वं ज्ञात इत्येवं स इत्यंशे स्मर्यमाणार्थस्य ज्ञानसंभेदप्रतीतेर्ज्ञानसंभिन्नार्थगोचरत्वं स्मृतित्वं तदेव च प्रकृते साध्यमस्त्वित्यत आह **एतेनेति**। तत्तांशानुल्लेखिनो भ्रमस्थलीयरजतज्ञानस्य ज्ञानसंभिन्नार्थगोचरत्वाभावस्यानुभव-





सिद्धत्वेन तत्साधनस्यानुभवबाधितत्वात्साध्यमानं स्मृतित्वं ज्ञानसंभिन्नार्थगोचरत्वमित्येतदपि परास्तमित्यर्थः । **अनेनेति** । भ्रमस्थलीयरजतज्ञानस्येन्द्रियजन्यत्वसमर्थनेन तत्तांशोल्लेखित्वाभावसमर्थनेन चेदं रजतज्ञानमस्मरणं तत्तांशविकलत्वान्नेयं स्मृतिरिन्द्रियजन्यत्वादिति प्रागुक्तं प्रतिपक्षानुमानद्वयमपि समाहितं वेदितव्यमित्यर्थः । ननु प्रथमप्रयोगे पदजन्यपदार्थस्मृत्यादौ व्यभिचारस्य सत्त्वात्तस्य कथं समाहितत्वमित्यत आह **नेदमिति** । तथा च पदजन्यपदार्थस्मृत्यादौ स्मृतित्वव्यवहाराभावलक्षणसाध्यस्यापि सत्त्वान्न व्यभिचार इति भावः । **अत एवेति** । भ्रमस्थलीयज्ञानस्य कुत्रापि स्मृतित्वाभावादेवानास्वादिततिक्तस्य शिशोस्तिक्तस्मरणानुपपत्तेः कथं तिक्तो गुड इति प्रत्यय इत्याशङ्क्य तत्र जन्मान्तरानुभूतत्वात्तिक्तस्य स्मरणमुपपद्यत इत्यादिना या प्रक्रिया परेणोक्ता साऽपि परास्तेत्यर्थः ।

**श्रीनिधि०— एतेनेति** । तात्कालिककारणस्य इन्द्रियसन्निकर्षादिरुक्तत्वेनेत्यर्थः । **अनेकान्तिकत्वं चेति** । तत्र तात्कालिकसंस्कारजन्यत्वेनाप्रत्युत्पन्नकारणजन्यत्वाभावादिति भावः । **साध्याविशिष्टतेति** । अनाकलितरजतस्य अनुत्पाद्यमानत्वादित्यस्य रजतज्ञानवत एवोत्पद्यमानत्वादित्यर्थविवक्षायाः कृतत्वेन तस्य च साध्यापेक्षयार्थतः भेदाभावेन साध्याविशिष्टता स्यादित्यर्थः । विशेषणभेदेऽप्यंशतः साध्याविशिष्टता भवत्येवेति । **अनुभवबाधितत्वादिति** । प्रमुषिततत्ताकं रजतस्मरणमिति वदतस्तवापि अनुभवबाधितत्वादित्यर्थः । एतेन ज्ञानसंभिन्नेति एतेनानुभवबाधेनैव । स घटस्तदानीं मया ज्ञात इत्येवं ज्ञानं घटितार्थगोचरत्वमिति पक्षोऽपि निरस्त इति वेदितव्यः । **नेदमिति** । ननु पदात्पदार्थस्मृतौ हरिहरादिस्मृतौ च व्यभिचार इत्यतः हेतुवचनस्य विवक्षितमर्थमाह **तत्तोल्लेखादीति** । आदिपदेनाप्रत्युत्पन्नकारणजन्यत्वादि गृह्यते । तेन पदार्थस्मृत्यादौ संस्कारजन्यत्वेन न व्यभिचारः । तर्हि साध्याविशिष्टतेत्यतो नेदं स्मृतिरिति व्यवहर्तव्यमिति साध्यनिर्देशः कृतः । **अत एवेति** । तिक्तरहितरसनाग्रस्य शिशोः उद्देशज्ञानादर्शनेन जिह्वास्थपित्तगततिक्तानुभवजन्यत्वस्याङ्गीकार्यत्वेन संस्कारजन्यत्वाख्यस्मृतिचिह्नविकलत्वादित्यर्थः । उक्तरीत्या अनुमानादिना दूषितत्वात् विशिष्टज्ञाने बाधकाभावात् ज्ञानभेदे अन्यतरस्य स्मृतित्वे प्रमाणाभावाच्चेति वार्थः ।

**वा०चं०— एतेनेति** । प्रत्युत्पन्नेन्द्रियजन्यत्वोपपादनाद्बाधितविषयत्वेनेत्यर्थः । **एतेनेति** । ज्ञानसंभिन्नार्थविषयकत्वाभावस्यानुभवसिद्धतयाऽनुभवबाधितत्वेनेत्यर्थः । ननु द्वितीयप्रतिपक्षसमाधानेऽपि न प्रथमप्रतिपक्षसमाधानं पदात्पदार्थस्मृतौ हरिहरादिस्मृतौ च व्यभिचारापरिहारादित्यत आह **नेदमिति** । स्मृतित्वरूपजातेः परेणानभ्युपगमादन्यस्य चोक्तरीत्यैवानुपपत्त्या स्मृतिचिह्नोपेतत्वस्यैव स्मृतित्वेन वक्तव्यतया साध्याविशेषात्तवापि न स्मृतित्वाभावसाधनं सुशकमित्यतो व्यवहर्तव्यमित्युक्तम् । तत्तोल्लेखादीत्यादिपदेन पदार्थस्मृत्यादौ तत्तोल्लेखाभावेऽपि पदार्थं स्मरामीत्यनुव्यवसायादिरूपस्मृतिचिह्नमस्त्येवेति न व्यभिचार इति सूचितं भवति । **अत एवेति** । ज्ञानद्वित्वे प्रमाणाभावादेवेत्यर्थः ।

**वा०र०— ज्ञानसंभिन्नेति** मूलम् । अयं च पक्षः कोऽयं स्मरणाभिमानो नाम । न तावज्ज्ञानानुविद्धतया ग्रहणमित्येतत्पञ्चपादिकातद्विवरणादौ स्पष्टः । ममेदं ज्ञानमिति ज्ञानविशिष्टार्थगोचरत्वमित्यर्थः । **द्वितीयप्रतिपक्षेति** ।





नेयं स्मृतिरिन्द्रियजन्यत्वात्तच्चेन्द्रियव्यापारान्वयव्यतिरेकानुविधायित्वादिति प्रतिपक्षेत्यर्थः । **समाधानेऽपीति** । अन्यत्रोपक्षयनिराकरणेनेति शेषः । **अत आहेति** । तत्परिहारार्थं साध्यहेत्वोर्विशेषणप्रक्षेपेण परिहारमाहेत्यर्थः ।

**स०व्र०— एतेनेति** । किञ्चेन्द्रियव्यापारान्वयेत्युक्तदोषेणेत्यर्थः । **अनुभवबाधितत्वादिति** । इदं रजतमिति ज्ञाने तत्तांशोल्लेखाभावस्यानुभवसिद्धत्वात्तद्विरोधादित्यर्थः । **ज्ञानसंभिन्नेति** । ज्ञानसंभिन्नपदेन ज्ञानगृहीतार्थविवक्षायां द्वितीयादिभ्रमे सिद्धसाधनता । ज्ञानविशिष्टार्थविवक्षायां च बाधितत्वमिति भावः ।

**विट्ठ०— एतेनेति** । बाधितविषयत्वेनेत्यर्थः । **साध्याविशिष्टतेति** । द्वौ नञाविति न्यायेनानाकलित-रजतस्यानुभूतरजतस्योत्पद्यमानत्वादिति पर्यवसितार्थकत्वात् हेतुवाक्यस्येति भावः । **अनुभवबाधितत्वादिति** । प्रकृतसाध्यस्येति शेषः । **एतेनेति** । इदंरजतमित्यत्र ज्ञानस्य विशेषणतयाऽननुभवात् तद्बाधितत्वेन स्मृतिरूप-जातेः परेणानभ्युपगमात् अन्यस्य चोक्तरीत्यैवानुपपत्त्या स्मृतिचिह्नोपेतस्यैव स्मृतिज्ञानविशिष्टार्थगोचरत्वमपि निरस्तमित्यर्थः । ननु द्वितीयप्रतिपक्षसमाधानेऽपि न प्रथमप्रतिपक्षसमाधानं पदार्थस्मृतौ हरिहरादिस्मृतौ च व्यभिचारापरिहारादित्यत आह **नेदमिति** । तत्तोल्लेखादि इत्यादिपदेन संस्कारजन्यत्वादिग्रहणं तेन पदार्थस्मृत्यादौ किञ्चित् स्मृतिचिह्नत्वमस्त्येवेति भावः । स्मृतित्वरूपजातेः परेणानभ्युपगमादन्यस्य चोक्तरीत्यैवानुपपत्या स्मृतिचिह्नोपेतस्यैव स्मृतित्वेन वक्तव्यतया साध्याविशिष्टत्वात् तत्रापि न स्मृतित्वाभावसाधनं सुशकमित्यतो **व्यवहर्तव्यमि**त्युक्तम् । **अत एव** ज्ञानद्वित्वे प्रमाणाभावादेव ।

**गूढ०— एतेनेति** । बाधितत्वकथनेनेत्यर्थः । इन्द्रियव्यापारान्वयाद्यनुविधायित्वेनेन्द्रियजन्यत्वेन प्रत्युत्पन्नकारणजन्यत्वाभावस्यैव निश्चयादिति भावः । **ज्ञानसंभिन्नार्थगोचरत्वम्** । अनुभूतमित्यादिरूपेण विशिष्टार्थगोचरत्वम् । तस्येन्द्रियजन्यत्वेन प्रत्यक्षज्ञानत्वादिति भावः । **अनेनैवेति** । परानुमानस्य बाधकथनेनेत्यर्थः । ननु व्यभिचारस्योक्तत्वात्कथं तत्समाधानमित्यत आह **नेदमिति** । अत्र स्मृतिचिह्नविकलत्वादित्येव हेतुः । तत्तोल्लेखेत्यनेन तु स्मृतिचिह्नं प्रदर्शितम् । न चैवमपि पदात् पदार्थस्मृतौ हरिहरादिस्मृतौ स्मृतिचिह्नविकलत्वेऽपि स्मृतित्वेनाव्यवहर्तव्यत्वरूपसाध्याभावाद्व्यभिचारापरिहार इति वाच्यम् । तत्र स्मृतित्वेन व्यवहर्तव्यत्वाभावादित्येके । वस्तुतस्तु । तत्र स्मृतित्वेन व्यवहर्तव्यत्वं सिद्धमसिद्धं वा । आद्ये बाह्येन्द्रियासहकृतसंस्कारप्रभवत्वरूप-स्मृतिचिह्नस्यापि तत्र कल्पनीयत्वेन हेतोरभावेन व्यभिचाराभावात् । अन्त्ये हेतुसाध्ययोस्तत्र च सत्त्वेन न व्यभिचार इति । नन्वेवमपि कथमस्य सत्प्रतिपक्षत्वं विरोधाभावात् । पूर्वानुमाने यत्साध्यं स्मृतित्वं तदभावमसाधयित्वा स्मृतित्वेन व्यवहर्तव्यत्वाभावसाधनस्य क्रियमाणत्वात् अन्यथातिप्रसङ्गादिति । मैवम् । स्मृतित्वाभावसाधन एव तात्पर्यात् । नेदं स्मृतिः स्मृतित्वेन व्यवहर्तव्यत्वाभावात् । यथानुभवः । इदं स्मृतित्वेन न व्यवहर्तव्यं स्मृतिचिह्नविकलत्वादित्येवं परंपरया तत्रैव तात्पर्यात् । न च व्याप्यव्याप्यस्य सुतरां व्याप्यत्वात् स्मृतिचिह्न-विकलत्वेनैव स्मृतित्वाभावः किं न साध्यत इति वाच्यम् । स्मृतिचिह्नविकलत्वेन स्मृतित्वेन व्यवहर्तव्यत्वाभावेन वेति द्वेधा स्मृतित्वाभावसिद्धिमभिप्रेत्यैवमुक्तमिति न कश्चिद्विरोध इति । **अत एवेति** । ज्ञानाद्वित्वे तस्य स्मृतित्वे च प्रमाणाभावादेवेत्यर्थः ।





**प्रदीपः— एतेनेति**। अप्रसिद्धविशेषणत्वेन दृष्टान्तसाध्यवैकल्येन बाधितविषयत्वेनेत्यर्थः। **एतेनेति**। अनुभवबाधितत्वेनेत्यर्थः। मयेदं ज्ञातमित्यनुसन्धानाभावात् नेदमिति पदार्थहरिहरादिस्मृतौ किञ्चित्स्मृतिचिह्न-मस्तीति न व्यभिचारः।

**३७२ सु०— यदपि विपर्ययाभ्युपगमे कल्पनागौरवमुक्तम्। तत् विवेकाग्रहमात्रेण प्रवृत्त्यादेरुपपत्तौ तथाऽस्तु। न चैवमिति वक्ष्यामः।**

**किञ्चैवमन्त्यतन्तुसंयोगपर्यन्तं कारणकलापमुपादाय पटोऽपि नाङ्गीकरणीयः। तन्मात्रेण सर्वस्योपपत्तेः। पटोऽपि प्रमितो न हातुं शक्यते। न च तेन विना एकत्वादिप्रत्ययोपपत्तिरिति चेत् विपर्ययेऽप्येवमिति कुतो गौरवम्॥**

**बिन्दुः— किञ्चैवमिति**। तद्धेतोरेवास्तु किं तेनेति न्यायस्य सर्वत्राप्यङ्गीकार इत्यर्थः। **किञ्च रजतार्थिन** इति पुरोवर्तिविशेष्यकरजतत्वप्रकारिका प्रवृत्तिस्तादृशमेव ज्ञानमाक्षिपेदित्यर्थः। प्रवृत्तिजनकज्ञानस्य प्रवृत्तिविषयविषयकत्वनियमादिति भावः।

**परि०— गौरवमुक्तमिति**। तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनयेतिग्रन्थेनोक्तमित्यर्थः। **वक्ष्याम इति**। नन्वियं प्रवृत्तिः स्वरूपतो विषयतश्चागृहीतभेदाद्वेदनद्वयादुपपद्यत इति चेदित्यादिना ग्रन्थेनेति भावः। **किञ्चैवमिति**। विवेकाग्रहमादाय विशिष्टज्ञानापलापे सतीत्यर्थः।

**यादु०— वक्ष्याम इति**। कोऽयं भेदो नामेत्यादिनेति शेषः।

**वं०प०—** किञ्च विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहो ग्राह्य एव। न हि विवेकग्रहे विपर्ययावकाशः, विरोधात्। अन्यथा विपर्ययनिवृत्त्यनुपपत्तेः। तथा च तत एव सर्वस्योपपत्तौ किं विपर्ययकल्पनयेति विपर्ययाभ्युपगमे यत्कल्पनागौरवमुक्तं तदनूद्य दूषयति **यदपीत्यादिना**। **न चैवमिति**। विवेकाग्रहशब्दार्थ एव न वक्तुं शक्य इति वक्ष्याम इत्यर्थः। विवेकाग्रहादेव प्रवृत्त्युपपत्तौ किं विपर्ययकल्पनयेति गौरवमुक्तम्। तत्र प्रतिबन्दीं गृह्णाति **किञ्चैवमिति**। विवेकाग्रहमादाय विशिष्टज्ञानापलापे सतीत्यर्थः। **तन्मात्रेणेति**। अन्त्यतन्तुसंयोगपर्यन्तकारणकलापमात्रेणेत्यर्थः। **सर्वस्येति**। पटकार्यस्य शीतनिवारणादेरुपपत्तेः। पटरूपकार्याङ्गीकारे गौरवं स्यादित्याशयः। **प्रमित इति**। प्रामणिकत्वान्न गौरवं दोषमावहतीति भावः। **तेन विना** पटेन विना। **एकत्वेति**। एकः पट इति प्रत्ययस्तावदस्ति। स च पटरूपमेकं पदार्थं विना न संभवति। कारणकलापानां बहुत्वेनैकत्वप्रत्ययविषयत्वाभावादित्याशयः। **एवमिति**। पटवद्विपर्ययोऽपि प्रमित इति न हातुं शक्यत इति प्रामाणिकत्वान्न गौरवं दोष इति भावः।





**आनन्दः— कल्पनागौरवम्**। तद्धेतोरेवेति न्यायेनेति भावः। **तथास्तु** कल्पनागौरवमस्तु। **न चैवमिति**। विवेकाग्रहमात्रेण प्रवृत्त्यादिकं नेत्यर्थः। **वक्ष्यामः**। किञ्चं रजतार्थिन इत्यत्रेति शेषः। नैयायिकमतानुसारेण दूषणमाह **किञ्चेति**। स्वमतेऽन्त्यतन्तुसंयोगातिरिक्तपटाभावादिति द्रष्टव्यम्। **तेन विनेति**। कारणानामनेकत्वा-दित्यर्थः। **एवमिति**। प्रमित इत्यर्थः। एकत्वादिप्रत्ययश्च तेन विना न संभवतीत्यर्थः।

**कं०रा०— यदपीति**। विपर्ययमङ्गीकुर्वाणेनापि विवेकाग्रहो ग्राह्य एवेत्यादिना विपर्ययाभ्युपगमे यत्कल्पनागौरवमुक्तं तद्विवेकाग्रहमात्रेण प्रवृत्त्यादेरुपपत्तौ स्यात्। न च विवेकाग्रहमात्रेण प्रवृत्त्यादिकमुपपद्यत इति वक्ष्याम इत्यर्थः।

**श्रीनिधि०— विपर्ययोऽप्येवमिति**। प्रमितः एकत्वादिप्रत्ययश्च तेन विना नोपपद्यते इत्यर्थः। मात्रयापि लेशेनापि इत्यर्थः। एकदेशेनेति यावत्।

**वा०चं०—** किञ्चेत्यादिना पूर्ववाद्युक्तकल्पनागौरवपर्यवसानं सूचयन्नेव तदनूद्य दूषयति **यदपीति**। अङ्गीकृत्य चेदमुदितम्। वस्तुतस्तु प्रमाणसिद्धविपर्ययाभ्युपगमे कल्पनागौरवप्रसक्तिरेव नेत्यन्यथाख्यातिप्रमाणोप-न्यासाय तच्छङ्कामुत्थापयितुं प्रस्तावाय प्रतिबन्दीमुखेन दूषणान्तरमाह **किं चेति**।

**वा०र०— किञ्चेत्यादिनेति**। किञ्च विपर्ययमङ्गीकुर्वाणेनापीत्यादिनेत्यर्थः। **वक्ष्याम इति** मूलम्। कोऽयं भेदो नामेत्यादिनेति शेषः। प्रसक्तिरेव नेतीत्यस्य दूषणान्तरमित्यनेन संबन्धः। कुत एवं दूषणप्रकार आरब्ध इत्यत उक्तं **अन्यथाख्यातीत्यादि**। यथास्थितप्रमाणमात्रं कुतो नोदाहृतमित्यत उक्तं **प्रतिबन्दीति**। प्रतिबन्दीग्रहणे च परोक्तरीत्योपपादनसौलभ्यम्। परोऽपि स्वोद्भावितदूषणेनैव निगृहीतत्वापत्त्या यत्किञ्चिन्नाशङ्केते चेति भावः।

**स०व्र०— न चैवमिति वक्ष्याम इति**। कोऽयं भेदो नामेत्यादिनेति शेषः।

**विठ्ठ०—** किञ्चास्तु वा विवेकाग्रहमात्रेण प्रवृत्त्याद्युपपत्तिः तथापि न विपर्ययाभ्युपगमे कल्पनागौरवं विपर्ययस्य प्रमितत्वादित्याशयेन तत्र प्रमाणोपन्यासाय शङ्कामुत्थापयितुं प्रतिबन्दीमुखेन दूषणमाह **किञ्चैव-मित्यादिना**। अभिज्ञाभिलपनादिव्यवहारसिद्धये पटोऽङ्गीकरणीय इत्यत आह **तन्मात्रेणेति**। **एवमिति**। विपर्ययोऽपि प्रमितः तं विना एकत्वादिप्रत्ययानुत्पत्तिरित्येवमित्यर्थः।

**चषकः— वक्ष्याम इति**। कोऽयं भेदो नामेत्यादिनेत्युपस्कर्तव्यम्। यथा हि पुरोवर्तिनि रजत इति वास्तवरजतस्थल इत्यर्थः, स्वप्रकाशतयेति प्राभाकरदिशा, मानसप्रत्यक्षेणेति नैयायिकदिशा, साक्षिणा वेति सिद्धान्तदिशोक्तम्।

**गूढ०— कल्पनागौरवम्**। तद्धेतोरिति न्यायेनेति भावः। **तथास्तु** कल्पनागौरवमस्तु। **न-चैवमिति**। विवेकाग्रहमात्रेण प्रवृत्त्यादिकं नेत्यर्थः। **वक्ष्यामः** किञ्च रजतार्थिन इत्यत्रेति शेषः। नैयायिकमतानुसारेण दूषणमाह





**किञ्चेति** । स्वमतेऽन्त्यतन्तुसंयोगातिरिक्तपटाभावादिति द्रष्टव्यम् । **तेन विनेति** । कारणानामनेकत्वादित्यर्थः । **एवमिति** । प्रमित इत्यर्थः । एकत्वादिप्रत्ययश्च तेन विना न संभवतीत्यर्थः ।

**३७३ सु०— अन्यथाख्यातौ किं प्रमाणमिति चेत् । अनुभव एवेति ब्रूमः ॥ (त)यथा हि पुरोवर्तिनि रजते 'रजतमिदमि'ति विशिष्टविषयमेकमेव विज्ञानं स्वप्रकाशतया वा मानस-प्रत्यक्षतया वा साक्षिणा वाऽवभासते, तथेदमपीति कुतोऽस्य न विशिष्टविषयैकज्ञानत्वम् । न हि ततोऽस्य मात्रयाऽपि विशेषं पश्यामः । दर्शने वाऽस्मात्प्रवृत्तिर्न स्यात् ॥ केवलमेकं तादृग्विषयसद्भावाद्यथार्थं तदभावादपरमयथार्थम् । अविशिष्टविषयमनेकमपि तद्विशिष्ट-विषयैकत्वेन प्रतिभासत इति चेन्न । अन्यस्यापि विशिष्टविषयैकत्वे समाश्वासासंभव-प्रसङ्गात्, विपर्ययाङ्गीकारप्रसक्तेश्च । नास्त्येव विशिष्टविषयैकत्वग्राहिप्रत्यय इति चेन्न । अनुभवसिद्धज्ञानापलापे स्मृत्यनुभवस्वरूपापलापप्रसङ्गात् ॥**

**परि०**— न चान्यथाख्यातौ किमपि प्रमाणमस्तीति पूर्वपक्षिणा यदुक्तं तदाशङ्क्योत्तरमाह **अन्यथाख्याताविति** । प्राभाकरमतेनाह **स्वप्रकाशतया वेति** । न्यायमतेनाह **मानसेति** । स्वमतेनाह **साक्षिणा वेति** । **अन्यस्यापीति** । सत्यरजतविषयकस्यापीत्यर्थः । सत्यस्थलेऽपि अगृहीतासंसर्गक-धर्मधर्मिविषयकैकज्ञानत्वमेव विशिष्टज्ञानत्वमित्युपेत्याह **नास्त्येवेति** ।

**यादु०**— पटवन्न विपर्ययः प्रमित इत्याशङ्कते **अन्यथाख्याताविति** । **विपर्ययाङ्गीकारेति** । अविशिष्ट-विषयमनेकं विशिष्टविषयैकत्वेन विषयीकुर्वज्ज्ञानं विपर्ययरूपमेवेति भावः । **नास्त्येवेति** । तत्राप्यगृहीतभेदं वेदनद्वयमेवेति वदाम इति भावः । **स्मृत्यनुभवेति** । इदं रजतमिति ग्रहणस्मरणात्मकज्ञानद्वयापलापोऽपि स्यादित्यर्थः ।

**वं०प०**— पटवद्विपर्ययो न प्रमित इति न तत्प्रतिबन्दीग्रहणं युक्तमित्याशयेन शङ्कते **अन्यथाख्याताविति** । यथा सत्यरजतस्थले रजतमिदमिति विशिष्टविषयकमेकमेव ज्ञानं तद्वदिदं रजतमित्यपि विशिष्टविषयकमेकमेव विज्ञानमित्यभिप्रेत्योपपादयति **पुरोवर्तिनीत्यादिना** । स्वप्रकाशतया वेति त्रिपुटीप्रत्यक्षवादिप्राभाकररीत्या, मानस-प्रत्यक्षेणेति तार्किकरीत्या, साक्षिणेत्यस्मद्रीत्योक्तमित्यवगन्तव्यम् । ततः सत्यरजतस्थले इदं रजतमिति ज्ञानात् अस्य भ्रमस्थले इदं रजतमिति ज्ञानस्य । अस्मात् शुक्ताविदं रजतमिति ज्ञानात् । तथात्वे तयोर्याथार्थ्यायाथार्थ्यविभागो न स्यादित्यत आह **केवलमेकमिति** । **तादृगिति** । यथा प्रतीयते तादृशेत्यर्थः । **अनेकमपि** । **तदिति** । ज्ञानद्वय-मित्यर्थः । **अन्यस्यापीति** । सत्यरजतस्थले इदं रजतमिति ज्ञानस्यापीत्यर्थः । तदपि ज्ञानद्वयं स्यादिति भावः । **नास्त्येवेति** । भ्रमस्थल इति शेषः । तथाच न विपर्ययाङ्गीकारप्रसङ्ग इति भावः । तदनुभवाभाव इत्युक्तेऽनुभवः स्मृतिश्च





नास्तीत्युक्ते किमुत्तरमिति प्रमाणलक्षणवाक्यं मनसि निधायाह **अनुभवसिद्धेति** । इदं रजतमित्यस्य विशिष्ट-विषयैकज्ञानत्वं साक्षिसिद्धमित्यर्थः । **स्मृत्यनुभवस्वरूपेति** । त्वदभिमतज्ञानद्वयस्वरूपेत्यर्थः ।

**आनन्दः**— न बाधकाभावमात्रेणार्थसिद्धिः अतः साधकत्वं वक्तव्यम् । तच्च किमिति शङ्कते **अन्यथाख्याताविति** । ज्ञानस्य व्यधिकरणधर्मप्रकारत्व इत्यर्थः । **स्वप्रकाशतयेति** । प्राभाकरमतानुसारेण । मानसप्रत्यक्षेणेति तर्कमते । साक्षिणेति स्वमते । **तत इति** । सत्यस्थलीयरजतज्ञानादित्यर्थः । नन्वस्ति विशेषस्तत्राह **दर्शने वेति** । मात्रयापि विशेषाभावे यथार्थत्वादिव्यवहारो न स्यादत्राह **केवलमिति** । **अन्यस्यापीति** । सत्यरजतज्ञानस्यापीति इत्यर्थः । वस्तुतो विशिष्टविषयं विशिष्टविषयत्वेन भासत इत्यङ्गीकारे विपर्ययस्वीकारापात इत्याह **विपर्ययस्यापीति** ।

**कं०रा०**— एवं विशिष्टज्ञानकारणं भेदाग्रहमुपादाय विशिष्टज्ञानापलापे तर्हि सत्यरजतज्ञानादस्य सर्वात्मना विशेषः किमुत कश्चिद्विशेषोऽस्तीत्यपेक्षायामेतावाननयोर्विशेषोऽस्तीत्याह **केवलमिति** । एकं सत्यरजतज्ञानमपरं शुक्तिरजतज्ञानम् । **विपर्ययेति** । अविशिष्टविषयमनेकमपि शुक्ताविदं रजतमिति विशिष्टविषयतयैकत्वेन च प्रतिभासत इत्युक्तेऽविशिष्टविषये विशिष्टविषयत्वप्रतिभासस्यानेकस्मिन्नेकत्वप्रतिभासस्य चान्यथाख्यातिरूपतयाऽन्यथा-ख्यात्यङ्गीकारप्रसङ्गाच्चेत्यर्थः । नन्वविशिष्टविषयेऽनेकस्मिंश्च विशिष्टविषयत्वैकत्वप्रकारकः प्रत्ययो नास्त्येव । किन्तु तत्रापि तदसंसर्गाग्रहमात्रमतो नान्यथाख्यात्यङ्गीकारप्रसङ्ग इत्याशयेन शङ्कते **नास्त्येवेति** । यद्वा । अन्यथाख्यातौ किं प्रमाणमिति प्रश्ने रजतज्ञानवद्विशिष्टविषयैकत्वग्राह्यनुभवोऽसत्यरजतज्ञानेऽप्यस्तीति स एव तत्र प्रमाणमित्युक्तम् । तस्यानुभवस्यासिद्धिं शङ्कते नास्त्येवेतीत्यवतारणीयोऽयं ग्रन्थः ।

**श्रीनिधि०**— **दर्शने वेति** । स च विशेषो रजताभावविषयकत्वमेवेति भावः । विशेषाभावे कथं याथार्थ्या-दीत्यत आह **केवलमिति** । लब्ध्वन्यः पुनश्शङ्कते **अविशिष्टेति** । **अनुभवसिद्धेति** । अनुभवसिद्धविशिष्टज्ञानापलाप इत्यर्थः । **स्मृतीति** । सर्वं विज्ञानमनुभवरूपमेव स्मृतिरूपं तु नास्त्येवेति तदपलापोऽपि कर्तुं शक्य एवेत्यर्थः ।

**वा०चं०**— इदं रजततया प्रत्यभादिति वेदं रजततया जानामीति वाऽनुभवस्य प्रकृतस्य विशिष्टविषय-कैकत्वानिश्चायकत्वे पुरोवर्तिरजतस्थलेऽपि तज्ज्ञानानुभवस्य न तन्निश्चायकत्वं स्यादविशेषादित्याह **न हीति** । अत एव दृष्टान्ततया पूर्वं तदुपपादनम् । नन्वेतज्ज्ञानानुभवस्यापि विशिष्टविषयैकत्वविषयत्वे पुरोवर्तिरजत-ज्ञानवदेवास्यापि यथार्थत्वोपपत्त्या यायाथ्यार्याथार्थ्यविभागमभिलषता तदनुभवयोर्विशिष्टविषयैकत्वाविषयकत्व-तदभावाभ्यां विशेषः स्वीकर्तव्य एवेत्यत आह **दर्शने वेति** । कथं तर्हि उक्तदूषणपरिहार इत्यतो विशिष्टविषयैकत्वाविशेषेऽपि विषयसदसत्त्वाभ्यामेव ज्ञानयाथार्थ्यतदभावोपपत्तेर्नानुपपत्तिरित्याह **केवलमिति** । ननु तथाऽपि नैतदनुभवबलादिदं रजतमिति प्रत्ययस्यान्यथाख्यातित्वसिद्धिः । एतदनुभवस्यैवान्यथात्वोपपत्ते-रित्याशङ्कते **अविशिष्टेति** । अत्रापि समीचीनज्ञानानुभवप्रतिबन्दीमुखेनोत्तरमाह **अन्यस्यापीति** । बाधकाभावादिना





समाश्वासस्तु पूर्वमेव निरस्त इति भावः । किञ्चेदंरजतमितिज्ञानस्य विशिष्टविषयैकत्वे विपर्ययप्राप्तेर्बिभ्यतैतज्ज्ञानानुभवस्य विपर्ययत्वमङ्गीकर्तव्यमेवेतीदंरजतमिति ज्ञानस्यैव तदस्तु विपर्ययाङ्गीकारस्यापरिहार्यत्वादित्याह **विपर्ययेति** । नन्वङ्गीकारवादेन मया त्वदुक्तानुभवस्य कथञ्चिदुपपत्तिरुक्ता मदभिमतं त्वित्थमित्याशयेन शङ्कते **नास्त्येवेति**।

**वा०र०— विशिष्टविषयकैकत्वेति** । विशिष्टविषयत्वैकत्वेति प्रत्येकं त्वप्रत्ययसंबन्धः । **उक्तदूषणेति** । उभयोर्विशिष्टविषयकत्वैकत्वाविशेषे याथार्थ्यायाथार्थ्यविभागानुपपत्तिरिति दूषणेत्यर्थः । विशिष्टविषयकत्वेनेति मूलमुपलक्षणम् । एकत्वेनेत्यपि द्रष्टव्यम् । **अत्रापि समीचीनेति** । अनेनैतदनुभवस्यान्यथात्वे पुरोवर्तिरजतस्थलीयविशिष्टज्ञानानुभवस्यान्यथात्वप्राप्तौ तद्विषयीकृतेदंरजतमिति पुरोवर्तिस्थलीयज्ञानगतविशिष्टविषयकत्वैकत्वयोरपि समाश्वासाभावप्रसङ्गादिति व्याख्यातं भवति ।

**विठ०—** ननु तथापि नैतदनुभवबलेनेदं रजतमित्यादिप्रत्ययस्यान्यथाख्यातित्वसिद्धिः एतदनुभवस्यैव अन्यथोपपत्तेरिति शङ्कते **अविशिष्टेति** । सत्यरजतानुभवमुखेनोत्तरमाह **अन्यस्यापीति** । किञ्चापसिद्धान्त इत्याह **विपर्ययेति** । अवशिष्टविषयमनेकं विशिष्टविषयैकत्वेन विषयीकुर्वत् ज्ञानं विपर्ययरूपमेवेति भावः । नन्वङ्गीकारवादेन मया त्वदुक्तानुभवस्य उपपत्तिरुक्ता । वस्तुतस्तु अगृहीतासंसर्गधर्मधर्मिविषयकैकज्ञानत्वमेव, विशिष्टज्ञानत्वमेव विशिष्टज्ञानमित्याशयेन शङ्कते **नास्त्येवेति** ।

**स०व्र०—** ननु विषयस्याप्रमितत्वान्न पटप्रतिबन्दीत्याशङ्कते **अन्यथाख्याताविति** । **नास्त्येव विशिष्टविषयैकत्वेति** । तत्रागृहीतभेदं वेदनद्वयमेवेति वदाम इति भावः । **स्मृत्यनुभवेति** । इदं रजतमितिग्रहणस्मरणात्मकज्ञानद्वयापलापोऽपि स्यादित्यर्थः ।

**गूढ०—** न बाधकाभावमात्रेणार्थसिद्धिरतः साधकत्वं वाच्यम् । तच्च किमिति शङ्कते **अन्यथाख्याताविति** । ज्ञानस्य व्यधिकरणधर्मप्रकारकत्व इत्यर्थः । **स्वप्रकाशतयेति** प्राभाकरमतानुसारेण । **मानसप्रत्यक्षेणेति** तर्कमते । **साक्षिणेति** स्वमते । **तत इति** । सत्यस्थलीयरजतज्ञानादित्यर्थः । नन्वस्ति विशेषस्तत्राह **दर्शने वेति** । मात्रयापि विशेषाभावे यथार्थत्वादिव्यवहारो न स्यादत्राह **केवलमिति** । **अन्यस्यापीति** । सत्यरजतज्ञानस्यापीत्यर्थः । वस्तुतो विशिष्टविषयं विशिष्टविषयत्वेन भासत इत्यङ्गीकारे विपर्ययस्वीकारापात इत्याह **विपर्ययस्यापीति** ।

**प्रदीपः—** ननु विशेषाभावे कथं याथार्थ्यायाथार्थ्ये अत आह **केवलमिति** । **अन्यस्यापीति** । सत्यरजतस्यापीत्यर्थः । **विपर्ययेति** । अविशिष्टविषयमनेकं विशिष्टविषयैकत्वेन प्रतिभासते चेदन्यथाख्यातिः स्यात् ।





**३७४ सु०—** **किञ्च रजतार्थिनः शुक्तिकायां प्रवृत्तिरन्यथाऽनुपपन्नाऽन्यथाज्ञानमाक्षिपति । नन्वियं प्रवृत्तिः स्वरूपतो विषयतश्च अगृहीतभेदाद्वेदनद्वयादुपपद्यत इति चेत् । कोऽयं भेदो नाम । किं स्वरूपम्, उत पृथक्त्वम्, उतान्योन्याभावः, अथवा वैधर्म्यम् ॥ न प्रथमः स्वप्रकाशज्ञानज्ञेयप्रतिभासे तदनवभासानुपपत्तेः ॥ न द्वितीयः, गुणे गुणानभ्युपगमात् । सर्वत्र भेदाग्रहसंभवेनान्यार्थिनोऽन्यत्र प्रवृत्तिप्रसङ्गात् ॥ तृतीये वक्तव्यं किमिदंरजतत्वयोरन्योन्याभावो नावभासते उतेदंरजतयोरिति । नाद्यः । अपर्यायशब्दस्मारकयोः जातिव्यक्त्योस्तदनवभासासंभवात् । किञ्चान्योन्याभावो नामान्योन्यस्वरूपमेव परस्य, तच्चोपलब्धमिति कथं तदनुपलम्भः । अत एव न द्वितीयः ॥ नापि चतुर्थः । रजतासंभविनः पुरोवर्तिनीदंत्वस्य पुरोवर्त्यसंभविनश्च रजते रजतत्वस्य गृहीतत्वात् ।**

**बिन्दुः—** **अपर्यायशब्देति** । इदं रजतत्ववदिति संसर्गारोपे यदि धर्मधर्मिणोर्भेदं नाग्रहीष्यत् तर्हि तज्जन्यव्यवहारेऽपर्यायशब्दं कथं प्रायोक्ष्यत । भेदाग्रहे धर्मधर्मिभावयोः एवासंभवादिति भावः ।

**परि०—** अनुभवं प्रमाणीकृत्यान्यथानुपपत्तिं च विपर्ययस्यैकत्वज्ञानत्वे प्रमाणयति **किञ्चेति** । **स्वप्रकाशज्ञानज्ञेयेति** । स्वप्रकाशज्ञानज्ञेययोस्त्वदभिमतग्रहणस्मरणयोर्ग्रहणज्ञेययोर्वा शुक्तिरजतयोश्चावभासे सति ज्ञानस्वरूपभेदः तद्विषययोः स्वरूपभेदश्च न भासत इति न युक्तमित्यर्थः । वैधर्म्यमितिपक्षं निराह **नापि चतुर्थ इति** ।

**गु०दी०—** **सर्वत्र भेदाग्रहसंभवेन** इत्यत्र इदमस्मात् पृथगिति सावधिकत्वेन प्रतीयमानपृथक्त्वस्य सर्वदा ग्रहणाभावात्सर्वत्र पृथक्त्वरूपभेदाग्रहसंभवेनेत्यर्थः ।

**यादु०—** **स्वप्रकाशज्ञानेति** । स्वप्रकाशं यज्ज्ञानं तत्प्रतिभासे तत्र ज्ञेयस्य च प्रतिभासे सतीत्यर्थः । स्वप्रकाशज्ञाने वेद्यांशस्य प्रतीतत्वादिति द्रष्टव्यम् । **गुणे गुणानभ्युपगमादिति** । तथा च सर्वत्र गुणेषु ज्ञानानां स्वरूपतो विषयतश्चाविद्यमानपृथक्त्वाग्रहसंभवेन रूपज्ञानाद्रूपार्थिनो रसेऽपि प्रवृत्तिप्रसङ्ग इत्यर्थः । **जातिव्यक्त्योरिति** । भेदगमकासङ्कीर्णस्वरूपावगमे भेदानवगमो न युक्त इत्यर्थः । असङ्कीर्णस्वरूपावगमोपपादनायैवापर्यायशब्दस्मारकयोरित्युक्तम् । **परस्परेति** । 'भावान्तरमभावो हि कयाचित्तु विवक्षये'ति तद्वचनादिति भावः ।

**वं०प०—** **किञ्चेति** । इदं रजतमिति तादात्म्यारोपानन्तरमत्र रजतत्वमिति संसर्गारोपानन्तरं चेति शेषः । अन्यथा भ्रमरूपविशिष्टविषयैकज्ञानाभावे । तत्र तादात्म्यारोपस्थले प्रवृत्त्यन्यथानुपपत्तेरन्यथोपपत्तिमाशङ्कते **नन्वियमिति** । **भेदो नामेति** । यदग्रहात्प्रवृत्तिस्त्वयोच्यत इत्यर्थः । **स्वरूपमिति** । ज्ञानयोर्ज्ञेययोश्चेत्यर्थः ।





वैधर्म्यं विरुद्धधर्मवत्वम् । स्वप्रकाशत्वं ज्ञानस्यैव विशेषणम् । **इदंरजतत्वयोरिति** । जातिव्यक्त्योरित्यर्थः । **इदंरजतयोरिति** । व्यक्त्योरेवेत्यर्थः । **अत एवेति** । अपर्यायशब्दस्मारकयोर्व्यक्त्योस्तदनवभासासंभवात् । अन्योन्याभावस्यान्योन्यस्वरूपत्वेन स्वरूपोपलब्धौ तदनुपलम्भासंभवाच्चेत्यर्थः । **गृहीतत्वादिति** । तथाच विरुद्धधर्माग्रहो नास्तीत्यर्थः ।

**आनन्दः— अन्यथानुपपन्नेति** । आख्यातिपक्षस्य दूषितत्वेन प्रकारान्तराभावादिति भावः । अन्यथोपपत्तिं शङ्कते **नन्वियमिति** । **भेदाग्रहसंभवेनेति** । पृथक्त्वाग्रहसंभवेनेत्यर्थः । तथाच घटार्थिनः घटेऽपि प्रवृत्तिः स्यात् । वेदनयोः पृथक्त्वाग्रहसंभवादित्यर्थः । **जातिव्यक्त्योरिति** । तज्ज्ञानयोरित्यर्थः । तथाचेदंज्ञानेनेदंशब्दस्मृतिः रजतत्वज्ञानेन रजतत्वस्मृतिर्भवतीति भावः । **अत एवेति** । अस्य तु अन्योन्याभावस्य स्वरूपत्वादेवेत्यर्थः । वैधर्म्यं हि विरुद्धधर्मवत्वम् । तच्च गृहीतमेवेत्याह **रजतासंभविन इति** ।

**कं०रा०— स्वप्रकाशेति** । स्वप्रकाशज्ञानस्य ज्ञेयस्य च प्रतिभासे तत्स्वरूपभूतभेदस्यापि प्रतिभासावश्यंभावेन तदनवभासानुपपत्तेरित्यर्थः । ज्ञानानवभासदशायां तत्स्वरूपभूतभेदस्यानवभासः संभवतीत्याशङ्कानिरासाय स्वप्रकाशेत्युक्तम् । स्वप्रकाशस्य ज्ञानस्यानवभासदशैव नास्तीति भावः । **गुण इति** । गुणे गुणानभ्युपगमेन सर्वत्र घटपटादिज्ञाने पृथक्त्वाभावादेव पृथक्त्वरूपभेदाग्रहसंभवेन घटाद्यर्थिनः पटादावपि प्रवृत्तिप्रसङ्गादित्यर्थः । यद्यपि घटपटयोः पृथक्त्वरूपभेदग्रहसत्त्वेन स्वरूपतो विषयतश्चागृहीतभेदज्ञानद्वयाभावान्नान्यार्थिनोऽन्यत्र प्रवृत्तिप्रसङ्गः । तथाऽपि गुणानां क्रियाणां च परस्परपृथक्त्वरूपभेदाभावेनैकगुणादिज्ञानाद्गुणान्तराद्युपस्थितिकाले तत्र तत्तादात्म्यव्यवहारप्रसङ्गः । स्वरूपतो विषयतश्चागृहीतभेदज्ञानद्वयस्य व्यवहारहेतोः सत्त्वादित्यत्र तात्पर्यम् । **अत एवेति** । इदंरजतयोरन्योन्याभावस्य तत्स्वरूपतया तयोरुपलम्भकाले तस्यानवभासायोगादेवेत्यर्थः ।

**श्रीनिधि०— वैधर्म्यं** विरुद्धधर्मत्वम् । अस्मिन् पक्षे भेदशब्दो भेदकपर इति ज्ञेयम् । **स्वप्रकाशेति** । ज्ञानस्य स्वप्रकाशत्वेन ज्ञानेन ज्ञानतद्विषययोः प्रतिभासे सति तत्स्वरूपभूतभेदस्यानवभासानुपपत्तेरित्यर्थः । **सर्वत्र भेदाग्रहसंभवेनेति** । पृथक्त्वलक्षणभेदाभावाभावात् सर्वत्र तदग्रहसंभवेन सर्वत्र ज्ञाने पृथक्त्वाभावः कृत इत्यत उक्तं **गुणे गुणानभ्युपगमादिति** । अस्तु वा गुणे पृथक्त्वाभ्युपगमः तथापीदमस्मात् पृथगिति सावधिकत्वेन प्रतीयमानस्य तस्य सर्वत्राग्रहसंभवेनेति वार्थः । अपर्यायशब्देनेति शब्दानामेकनिष्ठत्वे हि पर्यायत्वं तदभावे अपर्यायत्वम् । एवं चापर्यायशब्दस्मारकत्वं भेदमन्तरा नोपपद्यत इत्यर्थः । **अन्योन्यस्वरूपमेव परस्येति** । तेनाधिकरणातिरिक्ताभावानभ्युपगमादिति भावः । **अत एवेति** । अभावस्य अधिकरणानतिरिक्तत्वाभ्युपगमेनेत्यर्थः । **रजतासंभविन इति** । न च पूर्वग्रन्थविरोधः । रजतावभासस्य इदमाकारविषयतायां अविरोध उक्तः प्राक् । अत्र पुरोवर्तिनिष्ठएतद्देशकालसंबन्धित्वस्य व्यवहिते रजते असंभवित्वमुच्यते इति स्पष्टभेदप्रतीतेरिति ज्ञेयम् ।





**वा०चं०**— नन्वेवं सति अनुभवकलह इत्यतः प्रत्यक्षे विप्रतिपद्यमानं प्रत्यर्थापत्तिमाह **किञ्चेति** । ननु भेदग्रहादेव प्रवृत्त्युपपत्तेर्न तदनुपपत्त्याऽन्यथाख्यातिसिद्धिः । ननु विषयतोऽगृहीतभेदज्ञानस्य न प्रवर्तकत्वं युक्तम् । रजतानिष्टभेदाग्रहादप्रवृत्तेः । न चेष्टेतिविशेषणाददोषः । इष्टपुरोवर्त्यनुपस्थितावपि तत्सत्त्वेन प्रवृत्त्यापत्तेः । न चोपस्थित्वेनेष्टपुरोवर्तिनो विशेषणाददोष इति वाच्यम् । रजते नेदंरजतमितिज्ञानात्प्रवृत्त्यापत्तेः । न च स्वातन्त्र्यमुपस्थितेष्टविशेषणं तत्किमन्याविशेषणत्वमभावाविशेषणत्वं वा । आद्ये रजतवदिदंगेहमिति ज्ञानात्प्रवृत्त्यभावापत्तिः । द्वितीये इदं रजतं गेहे नास्तीत्यादौ प्रवृत्त्यभावापत्तिः । न च पुरोवर्तिवृत्तित्वेन गृहीतभेदाविशेषणत्वं तत् । अन्यथाख्यातिभिया रजतानुभवरजतभेदस्मरणात्मता रजतभेदस्मरणात्मतया रजतभेदानुभवरजतप्रतियोगित्वस्मरणात्मतया वा त्वया कल्प्यमाने रजत एव नेदंरजतभेदस्मरणस्थले पुरोवर्तिवृत्तित्वेन भेदस्याग्रहणात् । रजतप्रतियोगित्वस्मरणस्थले पुरोवर्तिवृत्तित्वेन भेदज्ञानेऽपि तद्विशेषणतया रजतस्याग्रहादुभयत्रापि रजतस्य पुरोवर्तिवृत्तित्वेन गृहीतभेदाविशेषणत्वरूपस्वातन्त्र्यसद्भावात्तत्रापि प्रवृत्त्यापत्तेः । अत एव पुरोवर्तिनिष्ठभेदे रजतप्रतियोगित्वज्ञानविषयत्वाभावस्य पुरोवर्तिनिष्ठभेदप्रकारकज्ञानविषयत्वाभावस्य वा हेतुत्वं भेदाग्रहस्य हेतुत्वं वदतो ममाभिमतमिति निरस्तम् । रजतानुभवरजतभेदस्मरणात्मके रजतभेदानुभवरजतप्रतियोगित्वस्मरणात्मके वा रजत एव नेदं रजतमित्यादावुभयत्राप्युभयविधाभावसद्भावेन तत्रापि प्रवृत्त्यापत्तेः । न च पुरोवर्त्यगृहीतासंसर्गभेदे रजतप्रतियोगिकत्वज्ञानविषयत्वाभावस्य पुरोवर्त्यगृहीतासंसर्गेष्टभिन्नत्वज्ञानाभावस्य वा हेतुत्वमभिमतम् । रजते नेदंरजतमित्यत्र रजतभेदस्मरणस्थले रजतप्रतियोगित्वेन ज्ञातभेदस्य रजते संसर्गाग्रहस्य तज्ज्ञानस्य च सत्त्वात् रजतभिन्नत्वस्य च रजतेऽसंसर्गाग्रहतज्ज्ञानस्य च सत्त्वात् प्रतिबन्धकस्यैव सत्त्वेन न तदुभयाभाव इति वाच्यम् । रजतनिष्ठभेदानुभवरजतप्रतियोगित्वस्मरणात्मके तत्रैवैतदुभयाभावमादायोक्तदोषानतिवृत्तेः । न च पुरोवर्तिनिष्ठतया ज्ञायमानभेदे रजतप्रतियोगित्वज्ञानसमानकालीनो यस्तदभावस्य हेतुत्वोक्तौ नायमतिप्रसङ्ग इति वाच्यम् । रजतानुभवरजतभेदस्मरणात्मके एतादृशाभावस्यापि सत्त्वेन तत्रापि प्रसङ्गात् । न च पुरोवर्तिनिष्ठभिन्नत्वज्ञानसमानकालीनो यस्तदसंसर्गग्रहस्तदभावस्य हेतुत्वेनायं दोष इति वाच्यम् । रजतनिष्ठभेदानुभवरजतप्रतियोगित्वस्मरणात्मके तस्य सत्त्वेनातिप्रसङ्गानिस्तारात् । तस्मान्न भेदाग्रहस्य हेतुत्वं सुवचमिति चेन्न । प्रवृत्त्यभावनियतानां मिलितानामेतेषां सर्वेषामेकस्यैवाभावस्य हेतुत्वे दोषलेशाभावात् । एतेन भेदग्रहासंसर्गग्रहरूपाणामेषां प्रतिबन्धकानां बहुविधतया तावदभावानां हेतुत्वे गौरवमित्यपि निरस्तम् । न च ग्राह्यभावानवगाहिनो ज्ञानस्य जनकीभूतज्ञानविघटकत्वेनैव प्रतिबन्धकतया भेदग्रहस्य प्रतिबन्धकत्वं वदताऽभेदग्रहस्य प्रवृत्तिहेतुत्वं स्वीकर्तव्यमेवेति वाच्यम् । अत्यन्ताभावगर्भव्यभिचारज्ञानस्यान्योन्याभावगर्भव्याप्तिज्ञानं प्रतीव मणिमन्त्रादिवत्स्वरूपेणैव वा मत्सिद्धान्ते शक्तिविघटकत्वेनैव वा भेदग्रहस्य प्रतिबन्धकत्वोपपत्तेः । तस्मान्न प्रवृत्त्यन्यथाऽनुपपत्त्याऽन्यथाख्यातिसिद्धिरित्याशयेन शङ्कते **नन्विति** । अत्रागृहीतभेदाद्वेदनद्वयादिति भेदाग्रहस्यावच्छेदकत्वं वेदनद्वयस्य हेतुत्वमिति सूचनाच्चेतनव्यापाररूपप्रवृत्तेः कथमग्रहणमात्रपूर्वकत्वमिति शङ्कापहस्तिता भवति । अत्र भेदशब्दो भेदनं भेद इति व्युत्पत्त्या तत्तद्वादिप्रसिद्धार्थको वा भिद्यतेऽनेनेति व्युत्पत्त्या व्यावर्तकपरो वेति विकल्पं मनसि निधायाद्यं विकल्पयति **किमिति** । स्वरूपमिति प्राभाकरमतेन । अन्योन्याभाव इति नैयायिकैकदेशिमतेन । पृथक्त्वमिति वैशेषिकमतेन ।





वैधर्म्यमिति करणव्युत्पत्त्याश्रयणे तत्सर्वमतेन । आद्यत्रयस्याभेदाद्वैधर्म्यस्यापि क्वचिद्भेदशब्देन व्यवहारात्स्वमतेन सर्वमपि । ज्ञेयानवभासप्रयुक्ततद्भेदाग्रहस्य प्रवृत्तिप्रयोजकतया परेणाप्यनभ्युपगमादवभासपक्षमाश्रित्यैव दूषणमाह **न प्रथम इति** । ननु ज्ञानानवभासाज्ज्ञानयोर्भेदाग्रह उपपद्यत एवेत्यतः स्वप्रकाशेति ज्ञानविशेषणम् । अनभ्युपगमादित्यनुभवसिद्धस्यापलापं सूचयति **सर्वत्रेति** । पृथक्त्वगुणशून्ये ज्ञानमात्रे तद्विषये च भेदाभावादेव तदग्रहसंभवेनेत्यर्थः । संसर्गतादात्म्यारोपाभिप्रायेण विकल्पयति **तृतीय इति** । अपर्ययेति जातिव्यक्त्योर्भिन्नेऽपि तद्भेदाप्रतिभाने इदमिति रजतमित्यपर्यायशब्दस्मारकत्वं न स्यादिति हेतुगर्भं विशेषणमेतत् । परमतेन दूषणमाह **किञ्चेति** । एवेति निर्विशेषत्वमाह । नन्वेवमपसिद्धान्त इत्यतः परस्येत्याह **अत एवेति** । किञ्चेत्युक्तदूषणादेवेत्यर्थः ।

**वा०र०—** ........................अनुसारेणागृहीतभेदवेदनद्वयमुपपादयति **ननु भेदग्रहादेवेत्यादि शङ्कत इत्यन्तेन** । .......................अनुसारेणाह **अगृहीतेति** । चेतनव्यापाररूपेत्यनेन ज्ञानपूर्वक एव चेतनव्यापार इति तत्र हेतुतया ज्ञानमेव वाच्यम् । प्राक्तु स्वरूपतो विषयतश्च भेदाग्रहादिति विवेकाग्रहादिति चोक्तेरग्रहणमात्रस्य हेतुतया प्राप्त्या तत्पूर्वकत्वं प्रवृत्तेरनुपपन्नमिति शङ्कावसर इति भावः । **इति विकल्पं मनसीति** । अनेनैतद्विकल्पीयाद्यपक्षविकल्पत्रयं द्वितीयं विकल्पं च मिलित्वा विकल्पचतुष्टयप्रदर्शनं मूले । वक्ष्यति च चतुर्थपक्ष इति । वस्तुतो विकल्पक्रमः प्रकारान्तरेण ज्ञेय इति सूचितं भवति । मूले कोऽयं भेदो नाम स्वरूपं वेत्यादि विकल्पेषु स्वरूपमिति प्रथमो न युक्तः । स्वरूपतोविषयतश्चागृहीतेति परेणोक्ते स्वरूपतोऽगृहीतस्वरूपेत्यर्थापत्त्या स्वरूपतो भेदेत्यस्य स्वरूपगतभेदेत्यर्थानुसारेण च स्वरूपगतस्वरूपाग्रह इत्यर्थस्य प्राप्त्या चासङ्गतत्वापत्तेरिति दूषणे सत्येव ज्ञानस्य स्वरूपमिति षष्ठ्या प्रयोगसद्भावानुसारेण ज्ञानाभावे तस्त्वरूपभानं चास्तीति स्वरूपग्रहो-ऽनुपपन्न इत्येवं दूषणं च न प्रथम इत्यनेन कृतमिति द्रष्टव्यम् । द्वितीयं पक्षं निर्दिशति वैधर्म्यमितीत्यवतारमभिप्रेत्य प्रागुक्तं तत्पक्षप्रापकं दर्शयंस्तत्पक्षवादिनश्चाह **वैधर्म्यमितीति** । एतेन तथावताराद्यनुक्तिशङ्का निरस्तेति ज्ञेयम् । **अभेदादिति** । पर्यायशब्दवाच्यत्वादित्यर्थः । स्वप्रकाशत्वेन ज्ञानप्रतिभासेऽपि ज्ञेयप्रतिभासः कुत इत्यत आह **ज्ञेयेति** । ज्ञानप्रकाशेऽपीति शेषः । परेणापीत्यनेन तत्पक्षदूषणमनावश्यकमिति न न्यूनतेत्युक्तं भवति । भेदो नाम पृथक्त्वमिति द्वितीयेऽपि किं ज्ञानद्वयस्वरूपे तद्विषययोश्च विद्यमानस्यैव पृथक्त्वस्याग्रहणमित्युच्यते उत ज्ञानादौ पृथक्त्वस्याभावादेव तदग्रहणमित्युच्यत इति विकल्पद्वयं मनसि कृत्वाऽद्यं निराचष्टे मूले **गुण इति** । अत्र गुणे गुणाभावादित्यनुक्त्वा गुणानभ्युपगमादिति । कुत उक्तमित्यतस्तत्प्रयोजनमाह **अनभ्युपगमादितीति** टीका । यद्यपि विषययोः पृथक्त्वमस्ति तथापि न वेदनद्वये तत् परेणानङ्गीकारात् । ततश्च विषययोर्विद्यमानस्य पृथक्त्वरूपभेद-स्याग्रहणसंभवेऽपि ज्ञानद्वये विद्यमानस्यैव तस्याग्रहणमित्येतदयुक्तमिति मूलाशयः । द्वितीयस्य दूषणं **सर्वत्र भेदेति** मूलम् । यद्यप्यत्र ज्ञानरूपगुणे गुणानङ्गीकारेण तत्रैव पृथक्त्वस्य विद्यमानता न तु तद्विषयेऽपि । शुक्तिरजतरूपद्रव्ये तद्गुणस्य परेणाप्यङ्गीकारात् । अतः स्वरूपतो विषयतश्चागृहीतभेदत्वमिति वदता विषयांशे भेदाभावादेव तदग्रहणमिति न वक्तुं शक्यमित्यपि टीकाकृता मूलाशयः स्पष्टनीयः । तथापि तद्दूषणस्य स्पष्टत्वाच्छिष्यैरेवोह्यत्वमित्याशयेन यत्र ज्ञाने विषये च पृथक्त्वाभावस्तादृशस्थलमुपादायैव सर्वत्रेति मूलोक्तोऽतिप्रसङ्ग इति व्यञ्जयन् भेदाग्रहसंभवेनेत्येतद्भावं





च दर्शयति **पृथक्त्वगुणशून्य इति** टीका। यद्यप्यत्र ज्ञानविशेष इति वक्तव्यम्। तथापि विषये पृथक्त्वमङ्गीकृत्य ज्ञान एव तदभावादेव तदग्रह इत्यङ्गीकारे घटपटादिज्ञानस्थलेऽपि ज्ञाने तदग्रहसंभवाद्घटार्थिनः पटे प्रवृत्तिरित्याद्यतिप्रसङ्ग इत्यपि मूलाशयं वर्णयितुं ज्ञानमात्र इत्येवोक्तम्। एतच्च तद्विषयस्यापि विशेषणम्। तादृशो विषयश्च गुणकर्मादिः। तथाच गुणकर्मादिज्ञानरूपज्ञानविशेषे गुणकर्मादिरूपतद्विषयविशेषे च पृथक्त्वरूपगुणाभावादेव तदग्रहसंभवा त्स्वरूपतो विषयतश्च भेदाग्रहप्राप्त्या गुणार्थिनः कर्मादौ प्रवृत्तिः स्यात्। गुणेष्वपि गन्धार्थिनः रसविशिष्टे प्रवृत्तिः स्यादित्यर्थः सूचितो भवति। अत एव तद्विषये चेति समुच्चय उपपन्न इति द्रष्टव्यम्। **संसर्गतादात्म्येति**। इदंरजतत्व-संसर्गारोपपक्षे इदंरजतत्वयोरन्योन्याभावो नावभासत इति विकल्पकोटिः। इदं रजततादात्म्यारोपपक्षे इदं-रजतयोरन्योन्याभावो नावभासत इति द्वितीय इति विवेकः। यद्यप्यन्योन्याभावस्य तादात्म्यप्रतियोगिकाभावतया तादात्म्यारोपपक्ष एवेदं विकल्पद्वयं प्रवर्तनीयम्। किञ्चेदंरजतत्वयोरन्योन्याभावग्रहेऽपि संसर्गाग्रहात्प्रवृत्तिरित्य-भ्युपगच्छन्तं प्रति नैतद्विकल्पावकाशः। अवकाशे वा त्वया तयोरन्योन्याभावाग्रहस्य प्रवर्तकत्वानङ्गीकारादित्येव दूष्यत्वापातात्। असंसर्गाग्रहपक्षस्योत्तरमूले दूषणाच्च। तथापि अन्योन्याभावाग्रहात्प्रवर्तकत्वानङ्गीकारादित्येवात्र प्रवृत्तिमभ्युपगच्छता संसर्गारोपस्थलेऽपि तदग्रहः प्रवर्तकत्वेन वाच्यः। स चान्ययोरसंभवादिदंरजतत्वयोरेव परेण वाच्य इति युक्तो विकल्प इत्यभिप्रायेण संसर्गारोपेत्युक्तावपि संसर्गाभावस्य तादात्म्याभावत्वानभि-प्रायकत्वेनादोषात्। तदन्योन्याभावाग्रहस्य प्रवर्तकत्वानङ्गीकारेण निग्रहस्तु स्पष्टत्वान्न कृत इति तात्पर्यात्। **परस्येत्याहेति**। इत्युक्तमित्यर्थः। एतद्बलादेव प्राक्परमतेनेत्युक्तम्। **न तद्दूषणेति**। भेदपक्षोक्तदूषणप्राप्त्यभावा-दित्यर्थः।

**स०व्र०— गुणे गुणानभ्युपगमादिति**। तथा च सर्वत्र गुणेषु स्वरूपतो विषयतश्चाविद्यमान-पृथक्त्वाग्रहसंभवेन रूपज्ञानाद्रूपार्थिनो रसेऽपि प्रवृत्तिप्रसङ्ग इत्यर्थः। **जातिव्यक्त्योरिति**। ज्ञानयोरिति शेषः। भेदगमकासङ्कीर्णस्वरूपावगमे भेदानवगमो न युक्त इत्यर्थः। असङ्कीर्णस्वरूपज्ञानोपपादनायापर्यायशब्द-स्मारकयोरित्युक्तम्। अन्यथा तन्न स्यादिति भावः। **अत एवेति**। स्वरूपग्रहे तदभिन्नस्यान्योन्याभावस्यापि गृहीतत्वादेवेत्यर्थः।

**वि०ठ०—** नन्वेवं सति अनुभवकलह इत्यतोऽर्थापत्तिमाह **किञ्चेति**। अत्र भेदशब्दो भेदनं भेद इति तत्तद्वादिप्रसिद्धार्थको वाऽभिधीयते अनेनेति व्युत्पत्त्या व्यावर्तकपरो वेति विकल्पं मनसि निधायाद्यं विकल्पयति **किमिति**। **तदनवभासेति**। ज्ञानयोर्ज्ञेययोश्च विद्यमानस्वरूपभूतभेदानवभासस्यानुपपत्तेरित्यर्थः। नन्वस्तु ज्ञेयभेदावभासानुपपत्तिः ज्ञानयोर्भेदाग्रहस्तूपपद्यत इत्यतः स्वप्रकाशेति ज्ञानविशेषणम्। **गुणे गुणानभ्युपगमादिति**। तथाच ज्ञानमात्रे पृथक्त्वाभावेन सर्वत्र ज्ञाने स्वरूपतो विषयतश्च पृथक्त्वापरनामकभेदाग्रहसंभवात् घटज्ञानात् घटार्थिनो पटे प्रवृत्तिप्रसङ्गादित्यर्थः। संसर्गतादात्म्यारोपाभिप्रायेण विकल्पयति **तृतीय इति**। **अपर्यायेति**। जातिव्यक्त्योरवभासेऽपि तद्भेदाप्रतिभासे इदंरजतत्वमिति अपर्यायशब्दस्मारकत्वं न स्यात् इति हेतुसूचनायै





तद्विशेषणम् । परमतेनापि दूषणमाह **किञ्चेति** । भावान्तरमभावो हि कयाचित्तु व्यपेक्षयेति परवचनात् भावातिरिक्ताभावमात्रस्यैव परैरनङ्गीकारादिति भावः । **अत एवेति** । अन्योन्याभावस्य स्वरूपत्वादेवेत्यर्थः ।

**चषकः— स्वप्रकाशज्ञानज्ञेयप्रतिभास इति** । गुरूणां मितिमातृमेयरूपत्रिपुटीप्रत्यक्षवादित्वादिति भावः ।

**गूढ०— अन्यथानुपपन्नेति** । आख्यातिपक्षस्य दूषितत्वेन प्रकारान्तराभावादिति भावः । अन्यथोपपत्तिं शङ्कते **नन्वियमिति** । **भेदाग्रहसंभवेनेति** । पृथक्त्वाग्रहसंभवेनेत्यर्थः । तथाच घटार्थिनः पटेऽपि प्रवृत्तिः स्यात् । वेदनयोः पृथक्त्वासंभवादित्यर्थः । **जातिव्यक्त्योरिति** । तज्ज्ञानयोरित्यर्थः । तथाचेदंज्ञानेनेदंशब्दस्मृतिः रजतत्वज्ञानेन रजतत्वशब्दस्मृतिर्भवतीति भावः । **अत एवेति** । अस्य त्वन्योन्याभावस्य स्वरूपत्वादेवेत्यर्थः । वैधर्म्यं हि विरुद्धधर्मवत्वम् । तच्च गृहीतमेवेत्याह **रजतासंभविन इति** ।

**प्रदीपः— अपर्यायशब्दस्मारकयोरिति** । बहुव्रीहिः । भेदगमके सति न भेदानवगमो युक्त इत्यर्थः ।

**३७९ सु०— इदंरजतत्वयोरसंसर्गाग्रहो विवक्षित इति चेन्न । असंसर्गो हि संसर्गस्याभावः । स चेदंरजतत्वयोः स्वरूपमेव परेषाम् इति कथं तदवभासे नावभासेत । विपर्ययाभ्युपगमवादिभिरपि भेदाग्रहोऽभ्युपगमनीय एव । तत्रापि समानो दोष इति चेन्न । भेदस्य स्वरूपतावन्मात्रत्वानभ्युपगमात् ।**

**बिन्दुः— असंसर्गाग्रहो विवक्षित इतीति** । भेदाग्रहशब्देनेत्यर्थः । **स्वरूपतावन्मात्रत्वानभ्युपगमादिति** । परेण तु अधिकरणस्वरूपमेवाभाव इति वदतो भवन्त्येतानि दूषणानि तद्विशेषत्ववादिनां त्वस्माकं विशेषमहिम्नैव । सर्वव्यवस्थोपपत्तौ न किञ्चिद्बाधकमिति भावः ।

**परि०**— शङ्कते **विपर्ययेति** । **स्वरूपतावन्मात्रत्वेति** । तथाच तदवभासेऽपि भेदानवभासोऽयुक्त इति भावः ।

**गु०दी०— भेदस्य स्वरूपतावन्मात्रत्वानभ्युपगमात्** इत्यत्र सविशेषाभेदाङ्गीकारेण धर्मिप्रतीतावपि दोषवशात् धर्मभूतभेदाप्रतीतिसंभवादित्यर्थः ।

**यादु०— स्वरूपमेवेति** । तन्मतेऽभावस्याधिकरणस्वरूपत्वादिति भावः । **स्वरूपतावन्मात्रत्वेति** । सविशेषाभेदाङ्गीकारादित्यर्थः ।





**वं०प०**— संसर्गारोपस्थलेऽपि प्रवृत्तेरन्यथोपपत्तिमाशङ्कते **इदंरजतत्त्वयोरिति** । **विवक्षित इति** । प्रवृत्तिजनकत्वेनेत्यर्थः **स्वरूपमेव परेषामिति** । प्राभाकराणां मतेऽधिकरणातिरिक्ताभावाभावादिति भावः । तदवभासे इदंरजतत्वरूपजातिव्यक्त्योरवभासे । **भेदाग्रहोऽभ्युपगमनीय एव** । अन्यथेदंपदार्थे रजतभेदग्रहे प्रवृत्तिर्न स्यादित्यर्थः । **समानो दोष इति** । कोऽयं भेदो नामेत्यादिनोक्तो दोषः समान इत्यर्थः । **भेदस्येति** । तथा चेदंपदार्थे रजतप्रतियोगिकोऽन्योन्याभावो न गृहीत एव । न चेदंपदार्थस्वरूपस्य भेदस्य तदवभासेऽनवभासानुपपत्तिरिति वाच्यम् । भेदस्य धर्मिस्वरूपतावन्मात्रत्वानभ्युपगमात् । निर्विशेषाभेदानङ्गीकारादिति यावत् । तथाच भेदस्य धर्मिणाऽत्यन्ताभेदे सत्यपि विशेषबलादिदंपदार्थावभासेऽपि रजतभेदस्याग्रहोऽस्मन्मते युक्त एवेति भावः।

**आनन्दः**— **स चेति** । तथा च संसर्गग्रहस्यैव सत्त्वान्न प्रवृत्त्याद्युपपत्तिरिति भावः । **भेदस्येति** । तस्य वस्तुविशेषत्वाङ्गीकारादिति भावः ।

**कं०रा०**— **भेदस्येति** । मया भेदस्य स्वरूपतावन्मात्रत्वानङ्गीकारात्स्वरूपविशेषत्वस्यैव चाङ्गीकाराद्विशेषबलेन वस्तुनि गृहीतेऽपि तद्भेदाग्रहः संभवतीति भावः ।

**श्रीनिधि०**— **विवक्षित इतीति** । भेदाग्रहपदेनेति शेषः । **स्वरूपतावन्मात्रत्वानभ्युपगमादिति** । स्वरूपस्य तावन्मात्रं स्वरूपतावन्मात्रं तत्त्वानभ्युपगमात् । स्वरूपमित्युक्ते यावानर्थः प्रतीयते तन्मात्रार्थत्वानभ्युपगमादित्यर्थ इति यावत् ।

**वा०चं०**— रजतासंभविनः पुरोवर्त्यसंभविन इति इदंत्वरजतत्वयोः परस्परात्यन्ताभावसामानाधिकरण्यरूपविरुद्धत्वप्रदर्शनम् । भेदविकल्पवदसंसर्गस्यैकरूपत्वेन विकल्पाप्रसरादसंसर्गाग्रहस्य हेतुत्वेन दूषणप्राप्तिरित्याशयेन शङ्कते **इदमिति** । यद्वाऽपर्यायशब्दस्मारकतया जातिव्यक्तिभेदस्य ग्राह्यत्वेऽप्यसंसर्गस्यावश्यग्राह्यत्वे नियामकाभावात्तदग्रहस्य प्रवर्तकत्वोपपत्तिरित्याशयेन शङ्कते **इदमिति** । अभावमात्रस्य त्वन्मतेऽधिकरणमात्रतयोक्तदूषणानिस्तार एवेत्याशयेन दूषयति **नेति** । एवशब्देन परस्येत्यनेन सूचितं स्वपक्ष एतद्दोषाप्रसरं स्पष्टयितुं भेदाग्रहस्य स्वमते प्रवर्तकत्वादेवैतद्दूषणाप्रसक्तेस्तत्परिहारसूचनमयुक्तमित्यतस्तदनुगुणां शङ्कामुत्थापयति **विपर्ययेति** । यद्वा प्रतिबन्दीमुखेनैतद्दूषणं परिहर्तुं न परस्य शक्यमिति भावेन सूचितदूषणं स्पष्टयितुं प्रतिबन्दीं शङ्कते **विपर्ययेति** । भेदग्रहे विपर्ययस्यैवासंभवादिति भावः ।

**वा०र०**— **एवशब्देनेत्यादि** । अन्योन्याभावो नामान्योन्यस्वरूपमेव परस्येति पूर्ववाक्य इति शेषः । भेदाग्रहस्येत्यनेनैवानन्तरितासंसर्गाग्रहपक्षसंबन्धो नेति सूचितम् । **प्रतिबन्दीति** । एतद्दूषणं परस्य न परिहर्तुं शक्यमिति संबन्धः । मूले **स्वरूपतावन्मात्रत्वेति** । त्वप्रत्ययः स्वरूपेत्यनेनापि संबध्यते । स्वरूपत्वे सति यत्तावन्मात्रत्वं स्वरूपमात्रत्वं निर्विशेषस्वरूपत्वमिति यावत् । उक्तं च प्राक् टीकायामेव इति निर्विशेषत्वमाहेति । इहाप्येवशब्देन सूचितमिति । स्वरूपमात्रत्वेत्येव वक्तव्येऽधिकवचनं पराङ्गीकृतस्वरूपत्वमात्रांशे साम्यमिति ज्ञापनायेति ज्ञेयम् ।





**विठ्ठ०—** न भेदग्रहः प्रवर्तकः येनोक्तदोषः किन्तु इदंरजतत्वयोरसंसर्गाग्रह एवेति शङ्कते **इदमिति** । नैतद्दोषावकाशस्सपक्षेऽस्तीति तदनुगुणामाशङ्कामुत्थापयति **स्वरूपतावन्मात्रेति** । सविशेषत्वाङ्गीकारादिति भावः ।

**चषकः—** **परेषामिति** । प्राभाकराणां मते अभावस्याधिकरणात्मकत्वादिति भावः । **स्वरूपतावन्मात्रत्वेति** । सविशेषाभेदोपगतेरिति भावः ।

**गूढ०—** **स चेति** । तथाच संसर्गग्रहस्यैव सत्त्वान्न प्रवृत्त्याद्युपपत्तिरिति भावः । **भेदस्येति** । तस्य वस्तुविशेषत्वाङ्गीकारादिति भावः ।

**३७६ सु०— अथ मन्यसे पुरोवर्तिनो यः शुक्तित्वादिधर्मो रजतव्यावर्तको यश्च रजते व्यवहितदेशत्वादिधर्मः पुरोवर्तिव्यावर्तकस्तयोरग्रहणं प्रवर्तकमिति । तदसत् ॥ पुरोवर्तिनो हि शुक्तित्वाग्रहे न शुक्तिकार्थी तत्र प्रवर्तेत । रजतस्य चासन्निहितत्वादिधर्माग्रहे रजतार्थी न तत्र प्रवर्तताम् । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतः ॥**

**किञ्च भेदाग्रहादन्यार्थिनोऽन्यत्र प्रवृत्तिमाचक्षाणः प्रष्टव्यः— किमयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात्; उत सर्वोऽपि भेदाग्रहादिति ॥**

**बिन्दुः— अन्यस्त्वभेदग्रहादिति** । सत्यस्थले व्यवहार इत्यर्थः । अपेक्षितोभयेष्टसाधनं रजतादिरित्यर्थः । अविसंवादी यथार्थो यो व्यवहारः प्रवृत्त्यादिः तज्जनकत्वविशिष्टस्तज्जनक इति यावत् । स चासौ साकाङ्क्षरूपिसहोपलम्भश्चेति योजना । साकाङ्क्षाणि यानि रूपाणि स्वरूपाणि प्रत्यक्षबोधे निराश्रयाणि न भासन्ते प्रतीयमानान्याश्रयविशिष्टान्येव भासन्त इत्यर्थः । तानि च गुणक्रिया-जात्यवयव्यादीनि । तानि हि भासमानानि शुक्लः पटः चलति गौरित्यादिबोधे धर्मिविशिष्टान्येव भासन्तेऽयुतसिद्धोपलक्षणमेतत् । दण्डादयो हि दण्डीति प्रत्यये धर्मिविशिष्टाः भासमाना अपि दण्ड इति प्रत्यये आश्रयविनिर्मुक्ता अपि प्रतीयन्त इति न ते साकाङ्क्षा इत्युच्यन्ते अत एव तत्र समवायसिद्धिः । तेषां साकाङ्क्षरूपाणां रूपिणा गुण्यादिना यः सहोपलम्भः गुणादिविशिष्टगुण्यादिप्रत्यय इत्यर्थः । भावप्रधानश्च निर्देशः । इदमुक्तं भवति । विमतः शुक्लः पट इत्यादिप्रत्ययः संबन्धवद्विषयकः अविसंवादिप्रवृत्तिजनकविशिष्टप्रत्ययत्वात् दण्डीत्यादिप्रत्ययवत् । यद्वा मास्तु भावप्रधानो निर्देशः विषयितासंबन्धेन तथाविधोपलम्भ एव लिङ्गम् । तथाच प्रयोगः । शुक्लपटः शुक्लरूपसंबन्धवान् शुक्लः पट इति यथार्थप्रत्ययविषयत्वाद्यदेवं तदेवं यथा संप्रतिपन्नमिति । तत्र च हेतुविशेषणरूपं याथार्थ्यापरपर्यायं प्रामाण्यमपि समवायवादिनो नैयायिकस्य प्रतिवादिनो मते परत इति अविसंवादि-





प्रवृत्तिजनकत्वलिङ्गेनानुमेयम् । तथाच सत्यां प्रवृत्तौ संसर्गज्ञानतज्ज्ञाने च प्रवृत्तिरित्यन्योन्याश्रय इति बह्वर्थं स्फुटयितुमेवमुक्तमिति ध्येयम् ।

**परि०— न तत्र प्रवर्तततामिति** । स्थलविशेषस्थत्वाज्ञानादिति भावः । **अयमेवेति** । भ्रमस्थलीयप्रवृत्त्यादिरूपव्यवहार इत्यर्थः ।

**यादु०— तत्र** शुक्तौ । **तत्र** व्यवहिते रजते । **किञ्च भेदाग्रहादिति** । अत्र सर्वत्र भेदाग्रहशब्देनागृहीत-भेदनिष्ठपुरोवर्तिज्ञानमेव ग्राह्यम् । उत्तरग्रन्थानुसारात् ।

**वं०प०—** भेदाग्रह एव प्रवर्तकस्तत्र भेदो नाम वैधर्म्यं विवक्षितमित्याशयेन शङ्कते **अथेति** । **तत्र** शुक्तौ । **असन्निहितत्वादिधर्माग्रह इति** । व्यवहितदेशत्वादिधर्माग्रह इत्यर्थः । **रजतार्थी** व्यवहितरजतार्थी । **तत्र** व्यवहितरजते । **अन्यार्थिनोऽन्यत्रेति** । रजतार्थिनः शुक्तिकायामित्यर्थः । **अयमेव व्यवहार इति** । रजतार्थिनः शुक्तिकायां प्रवृत्तिरेवेत्यर्थः । **अन्यस्त्विति** । सत्यरजतस्थले इदं रजतमिति ज्ञानानन्तरं रजतार्थिनो रजते प्रवृत्तिरूपो व्यवहार इत्यर्थः । **सर्वोऽपीति** । सर्वोऽपि व्यवहारः सर्वाऽपि प्रवृत्तिरित्यर्थः ।

**आनन्दः—** प्रवर्तकान्तरं शङ्कते **अथ मन्यस इति** । तथाच शुक्तित्वादिव्यवहितदेशत्वादिधर्मयो-रविवेकाग्रहणं प्रवर्तकमिति भावः । **रजतार्थिन इति** । न च सन्निहितत्वादिरजतधर्माग्रहादेव रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरिति वाच्यम् । लाघवेन सन्निहितत्वग्रहस्यैव प्रवर्तकत्वात् तस्य चाभावद्वयप्रवेशेन गुरुत्वात् । न च सन्निहितत्वग्रहस्याकारणताया क्लृप्तत्वात्तद्धेतोरेवेति न्यायेनासन्निहितत्वाग्रहस्यैव कारणत्वमिति वाच्यम् । तस्यापि समीचीनप्रवृत्तौ कारणत्वस्य क्लृप्तत्वाल्लाघवाचेति ।

**कं०रा०— तदिति** । प्रवर्तकाभेदग्रहसारूप्यादगृहीतभेदं ज्ञानद्वयमपि प्रवर्तकत्वेनेष्यत इत्यर्थः ।

**श्रीनिधि०— तयोरग्रहणं प्रवर्तकमितीति** । वैधर्म्याग्रहणं प्रवर्तकमित्यत्र विवक्षित इति शेषः । **रजतार्थी न तत्रेति** । असन्निहितादिदेशादावित्यर्थः । असन्निहितादिग्रहे हि तत्र देशादौ प्रवृत्तिदर्शनादिति भावः ।

**वा०चं०—** भेदाग्रहो नाम व्यावर्तकाग्रह इति चतुर्थपक्षे विशेषं शङ्कते **अथेति** । एवं वदन्प्रष्टव्यः । यद्व्यावर्तकधर्माग्रहस्तदर्थिनोऽन्यत्र प्रवृत्तिरित्यभिमतमुत यद्व्यावर्तकयदीयधर्माग्रहो यत्र तदर्थिनस्तत्र प्रवृत्तिरिति । अथवा रजतव्यावर्तकपुरोवर्तिनिष्ठशुक्तित्वादिधर्माग्रहो यत्र पुरोवर्तिनि तत्र रजतार्थिनः प्रवृत्तिरिति । नाद्यः । रजतव्यावर्तकपाषाणत्वादेः पुरोवर्तिन्यग्रहेण रजतार्थिनः पाषाणादौ प्रवृत्त्यापत्तेः । न द्वितीयः । पुरोवर्तिनि शुक्तित्वाग्रहणेऽपि पाषाणत्वाग्रहेण रजतार्थिनः पुरोवर्तिनि प्रवृत्त्यापत्तेः । नापि तृतीयः । अतिगौरवापत्तेः । तस्माद्यत्र यन्निष्ठधर्मग्रहणं तत्र तदर्थिनः प्रवृत्तिरित्येव वक्तव्यम् । तथा च शुक्तित्वादिधर्माग्रहणे हेत्वभावान्माऽस्तु शुक्त्यर्थिनः





पुरोवर्तिनि प्रवृत्तिः । माऽस्तु वा रजतनिष्ठासन्निहितत्वाद्यग्रहणे रजतार्थिनोऽसन्निहितदेशे प्रवृत्तिः । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिस्तु कुतः । पुरोवर्तिनि रजतत्त्वाग्रहणेन हेत्वभावादिति भावेनाह **पुरोवर्तिनो हीति** । ननु भेदादेः स्वरूपतन्मात्रत्वादिकमनभ्युपगच्छतां तावद्भेदाग्रहादिस्वरूपसंभवादर्थापत्तेरन्यथासिद्धिः सुलभैव । अन्येषामपि तन्मात्रांशेऽनवभासाभ्युपगमेनान्यथासिद्धिव्युत्पादनं सुलभमेवेत्यतो भेदाग्रहमभ्युपगम्यापि तस्य प्रवर्तकत्वा-नुपपत्तिमाह **किञ्चेति** ।

**वा०र०— चतुर्थपक्ष इति** । प्रथमविकल्पे द्वितीयोऽप्ययं मेलनेन पक्षोपन्यासाच्चतुर्थो भवतीति प्रागेवोक्तम् । **यद्व्यावर्तकेति** । पूर्वपूर्वपक्षेषु प्राप्तानुपपत्तिपरिहारेणोत्तरोत्तरपक्षप्रवृत्तिरिति दूषणग्रन्थादेवावगम्यते । रजतव्यावर्तकधर्माग्रहे सति रजतार्थिनो रजतादन्यत्र प्रवृत्तिरिति विशेषपर्यवसानमाद्ये रजतव्यावर्तकधर्म्यन्तरनिष्ठ-धर्माग्रहे । यत्र धर्मिणि तत्र रजतार्थिनः प्रवृत्तिरिति द्वितीये । तृतीये तु स्पष्ट एवार्थः । **पुरोवर्तिनि शुक्तित्वग्रहणे-ऽपीति** पाठः । मूलकोशात् । युक्तत्वाच्च । इष्टापत्तिनिरासायैतत् । शुक्तित्वादिधर्माग्रहण इति सति सप्तमी । तथाच धर्माग्रहणे सति शुक्तिनिष्ठधर्मग्रहणरूपहेत्वभावाच्छुक्त्यर्थिनः पुरोवर्तिशुक्तिपदार्थे प्रवृत्तिर्मास्त्वित्यर्थः । **असन्निहित-त्वाद्य-ग्रहण इति** । तथा च रजतनिष्ठधर्माग्रहणे तद्ग्रहणरूपकारणाभावात् रजतार्थिनः पुरोवर्तिदिशादन्यस्मिन्देशे यत्र रजतं तत्र प्रवृत्तिर्मास्त्वित्यर्थः । **रजतत्वाग्रहणेनेति** । रजतनिष्ठरजतत्वस्य पुरोवर्तिनि ग्रहणे रजतार्थिनः प्रवृत्त्युपपत्तावपि तत्र तद्ग्रहणाभावे रजतनिष्ठधर्मग्रहणरूपकारणाभावान्न रजतार्थिनः पुरोवर्तिनि प्रवृत्तिः संभवतीत्यर्थः । एतद्विकल्पनिरासक्रमेणैव पुरोवर्तिनो हीत्यादिवाक्यत्रयं क्रमेण व्याख्यातम् । यथाश्रुतः पुरोवर्तिनी हीत्यादिमूल-ग्रन्थो न सङ्गतः । परस्परव्यावर्तकधर्माग्रहे प्रवृत्तिकारणतयोक्ते सति तत एव प्रवृत्त्युपपत्तौ प्रवृत्तिस्तु कुत इति कारणाभावरूपदूषणायोगात् । अतो वैधर्म्याग्रह इत्यत्र प्रकारान्तरं पराकृत्य प्रवर्तकत्वेन प्रवृत्तिविषये इच्छाविषयीभूतार्थनिष्ठसाधारणधर्मज्ञानमेव परिशेष्य तत्रेदं प्रवृत्तिकारणाभावरूपं दूषणमित्यभिप्रेतं ग्रन्थकारस्येति तदभिप्रायवर्णनमावश्यकमिति बोध्यम् । **भेदादेरिति** । आदिपदेनासंसर्गग्रहः । **स्वरूपतन्मात्रत्वेति** । स्वरूपत्वे सति तन्मात्रत्वेत्यर्थः । आदिपदेन स्वरूपत्वपरिग्रहः । भेदस्य स्वरूपमात्रत्वमसंसर्गपदोक्तसंसर्गाभावस्वरूपत्वे सति तन्मात्रत्वेत्यर्थः । आदिपदेन स्वरूपत्वपरिग्रहे इदंपदार्थेन वा रजतत्वेन वा निरूपितस्य रजतत्वादिस्वरूपत्वं चानभ्युपगच्छतामित्यर्थः । **भेदाग्रहादी**त्यादिपदेनासंसर्गाग्रहस्य ग्रहणम् । अत्र मूले केवलभेदाग्रहस्य प्रवर्तकत्वं क्वचिद्वा सर्वत्र वेति विकल्पकरणेऽपि । नन्वस्तु तर्हि द्वितीय इत्यादि वक्ष्यमाणशङ्काग्रन्थेऽसंसर्गाग्रहभेदाग्रहयोः प्रवर्तकत्वेनाशङ्कनस्यासंसर्गाग्रहभेदाग्रहयोर्निरस्तत्वादिति परिहारे तन्निराकरणस्य च सत्त्वेन भेदाग्रहे क्वचित्सर्वत्र प्रवर्तकत्वविकल्पोऽसंसर्गाग्रहेऽपि उपलक्षणया बोध्यः । असंसर्गाग्रहस्यापि इदंरजतत्वयोरसंसर्गाग्रह इत्यादिग्रन्थे प्रकृतत्वादित्याशयेन भेदमात्रस्य प्रकृतत्वेऽपि भेदादेरित्याद्यादिपदेनासंसर्गादेरपि ग्रहणम् । अत एव नन्वस्त्वि-त्युत्तरग्रन्थे प्राग्विकल्पितद्वितीयपक्षदूषणायाप्रवृत्ते असंसर्गाग्रहस्य सर्वत्र प्रवर्तकत्वशङ्कनमपि युज्यत इति परिभावनीयं सुधीभिः । **न तु पुरुषाकाङ्क्षामपेक्षत इति** मूलम् । पुरुषस्य योऽर्थोऽपेक्षितः तन्मात्रज्ञानजननोप-युक्ता या पुरुषस्यार्थापेक्षा तां नापेक्षन्त इत्यर्थः । **स्वरूपसंभवादित्यादि** । तथाचोक्तमनभ्युपगच्छतां भवतां मते





नार्थापत्तेः प्रवृत्त्यन्यथानुपपत्तेरन्यथा भेदाग्रहादिना सिद्धिरुपपत्तिः सुलभैवेत्यर्थः । तथापि त्वद्रीत्या सा नेति चेत्तत्राह **अन्येषामपीति** । **तन्मात्रांशे** स्वरूपमात्रभूतभेदाद्यंशे । भवन्मते तन्मात्रत्वाभावेन भेदादेरनवभासः । मन्मते तु तन्मात्रस्याप्यनवभासाभ्युपगमात् भेदाद्यग्रहोपपत्तिरिति भावः । **भेदाग्रहमभ्युपगम्यापीति** । अनेन पूर्वं भेदाग्रहासंभवो वर्णितः । इदानीं त्वस्तु वा भेदाग्रह इत्यङ्गीकारवादेन तन्मात्रस्य प्रवर्तकत्वादिविचारः क्रियत इति न पूर्वोत्तरग्रन्थविरोध इति सूचितं भवति ।

**विठ्ठ०**— व्यावर्तके धर्माग्रह एव प्रवर्तते इति शङ्कते **अथेति** । न व्यावर्तकधर्माग्रहणमात्रस्य प्रवर्तकत्वं तथात्वे पररीत्या निर्विकल्पकप्रत्ययस्यापि प्रवर्तकत्वापातात् । तस्मात् सविकल्पकरूपवस्तुनिष्ठासाधारण-धर्मग्रहणस्य च सर्वत्र प्रवर्तकत्वमिति वक्तव्यं तथाच शुक्तित्वादिधर्माग्रहणे हेत्वभावान्मास्तु रजतार्थिनोऽप्रवृत्तिः तथा रजतार्थी रजतस्य सन्निहितत्वादिधर्माग्रहे असन्निहिते न प्रवर्ततां रजतार्थिनः पुरोवृत्तिप्रवृत्तिस्तु कुतः तत्र सन्निहितरजतत्वाग्रहे प्रवर्तकहेत्वभावादिति भावेनाह **पुरोवर्तिनो हीति** । **किञ्च भेदाग्रहादिति** । अत्र सर्वत्र भेदाग्रहशब्देनागृहीतभेदं वेदनद्वयमुच्यते इति ज्ञेयम् ।

**गूढ०**— प्रवर्तकानन्तरं शङ्कते **अथ मन्यस इति** । तथाच शुक्तित्वादिव्यवहितदेशत्वादिधर्मयोरविवेका-ग्रहणं प्रवर्तकमिति भावः । **रजतार्थिन इति** । न चासन्निहितत्वादिरजतधर्माग्रहादेव रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरिति वाच्यम् । लाघवेन सन्निहितत्वग्रहस्यैव प्रवर्तकत्वात्तस्य चाभावद्वयप्रवेशेन गुरुत्वात् । न च सन्निहितत्वग्रहस्याकारणताया क्लृप्तत्वात्तद्धेतोरेवेति न्यायेनासन्निहितत्वाग्रहस्यैव कारणत्वमिति वाच्यम् । तस्यापि समीचीनप्रवृत्तौ कारणत्वस्य क्लृप्तत्वाल्लाघवाच्चेति ।

**प्रदीपः**— 'भावान्तरमभावो हि कयाचित्तु व्यपेक्षया' इति वचनात् परस्येत्युक्तं **पुरोवर्तिनो हि इति** । ततः शुक्तौ तत्र व्यवहिते रजते अस्ति तावदिति । अपेक्षितोपायो रजताकारः पुरोवर्तीदमाकारः अर्थस्येत्यर्थस्य विद्यमानत्वेन कारणत्वं नास्त्यसतोऽपि निरूपकत्वेन विषयत्वसंभवात् दोषसहकृतेन चक्षुषैवापरोक्षतया भासत इत्यर्थः ।

**३७७ सु०— नाद्यः । अनियतकारणतापातात् ।**

**ननु च सर्वत्राभेदग्रह एव प्रवर्तकः । तत्सारूप्याद् भेदाग्रहोऽपि तथेष्यते । तथा हि । अस्ति तावत्प्रवर्तकत्वाभिमतप्रत्ययेऽप्यपेक्षितोपायपुरोवृत्त्यवगमांशयोः स्वरूपतो विषयतश्च भेदविरहादेव भेदाग्रहः । तथाऽत्राप्यविवेचकं साधारणं रूपमवगम्यते । नावगम्यते च विवेचकोऽसाधारणधर्मो वेद्ययोर्वेदनयोश्च । ततश्चैकप्रवर्तकप्रत्ययसदृशावपुरुपजनयतीदं वेदनद्वयं प्रवृत्तिमिति । मैवम् । अनियतहेतुकत्वानिस्तारात् ।**





**परि०— प्रवर्तकाभिमतप्रत्यय इति** । इदंरजतमित्येवंरूपे सत्यरूप्यज्ञान इत्यर्थः । **अपेक्षितोपायेति** । इष्टसाधनावगमांशपुरोवृत्त्यवगमांशयोरित्यर्थः । साधारणं रूपम् । इदंत्वज्ञानत्वादिलक्षणमित्यर्थः । **असाधारणेति** । शुक्तित्वग्रहणत्वादिरूपः । **एकेति** । एको यः प्रवर्तकः प्रत्ययस्तत्सदृशवपुरिदं वेदनद्वयं प्रवृत्तिमुपजनयतीत्यर्थः ।

**यादु०—** नन्वभेदग्रहे तत्सदृशे ज्ञानद्वये च भेदाविषयकत्वरूपैकधर्मावच्छेदेन प्रवृत्तिजनकताऽङ्गीक्रियते अतो न प्रवृत्तेरनियतकारणत्वमित्याशयेन शङ्कते **नन्विति** । **सर्वत्रेति** । संवादिप्रवृत्तावित्यर्थः । अपेक्षितोपायपदेनेष्टसाधनं रजतादि विवक्षितम् । पुरोवर्तीत्यनेनेदमंशः । भेदाविषयकज्ञानहेतुत्वस्य द्वितीयपक्षपर्यवसन्नतयाऽत्र वक्तुमशक्यत्वेनाभेदज्ञानत्वेन तत्सदृशज्ञानत्वे च हेतुत्वे वाच्ये पुनरनियतकारणत्वं प्रसज्यत एवेत्याशयवानाह **अनियतहेतुकत्वानिस्तारादिति** ।

**वं०प०— अनियतेति** । प्रवृत्तित्वावच्छेदेनैकस्य कारणस्यालाभादित्यर्थः । तत्सारूप्याद्भेदाविषयकत्वरूपात् । अभेदग्रहे भेदाग्रहे च भेदाविषयकत्वसद्भावादिति भावः । प्रवर्तकाभिमतप्रत्यये इदं रजतमिति सत्यरजतस्थले । **अपेक्षितोपायेति** । अपेक्षितमपेक्षाविषय इच्छाविषयः इष्टमिति यावत् । तस्योपायः साधनम् । इष्टसाधनं रजतमिति यावत् पुरोवर्ती च तद्विषयकावगमांशयोरित्यर्थः । अविवेचकं अव्यावर्तकम् । साधारणं रूपं इदंरूपम् । असाधारणो धर्मः शुक्तित्वग्रहणादिरूपः । **एकेति** । एको यः प्रवर्तकः प्रत्ययस्तत्सदृशवपुरित्यर्थः । सदृशवपुः सदृशशरीरमिदं वेदनद्वयं प्रवृत्तिमुपजनयतीत्यन्वयः ।

**आनन्दः— अनियतकारणतापातादिति** । प्रवृत्तित्वावच्छेदेनानुगतकारणस्यैकस्याभावात्प्रवृत्तिलक्षणं कार्यमाकस्मिकं स्यादिति भावः । ननु प्रवृत्तिर्द्वेधा समीचीनाऽसमीचीना च । तत्र समीचीनप्रवृत्तावभेदग्रहणस्य कारणत्वम् असमीचीनप्रवृत्तौ भेदग्रहस्य कारणत्वमिति न कश्चिद्दोष इति शङ्कते **ननु चेति** । ननु प्रमेयत्वादिना अभेदग्रहसारूप्यस्य घटप्रत्ययेऽपि सत्त्वात्तस्यापि प्रवर्तकत्वं स्यादित्यत आह **तथा हीति** । अपेक्षितोऽपि उपाय इष्टसाधनीभूतो रजतादिः पुरोवर्तीदंपदार्थः अनयोर्योऽवगमो विशिष्टप्रत्ययस्तस्य यावंशौ तयोरित्यर्थः । **ततश्चेति** । एको यः प्रवर्तकः प्रत्ययो विशिष्टप्रत्ययः तत्सदृशाकारमित्यर्थः । **अनियतेति** । ननु समीचीनप्रवृत्तित्वावच्छेदेन अभेदग्रहस्यासमीचीनप्रवृत्तित्वावच्छेदेन भेदाग्रहस्यैव कारणत्वेन कारणतावच्छेदकार्यतावच्छेदकयोर्भेदान्नानियतहेतुत्वापात इति चेत् भवेदेवं यदि भेदाग्रहस्य कारणत्वं सिद्धं इत्यन्यथाख्यातौ बाधकं च स्यान्न चैवमित्युक्तम्।

**श्रीनिधि०—** ननु भेदाग्रहाभेदग्रहयोः समप्रधानभावेन प्रवर्तकत्वं न ब्रूमः येनोक्तदोषः स्यात् किंनाम उत्सर्गतः अभेदग्रह एव क्वचित् गत्यन्तराभावात् तत्सारूप्येणाभेदाग्रहः प्रवर्तक इत्यभिप्रायेण शङ्कते **ननु चेति** । **अपेक्षितोपायेति** । इष्टसाधनेत्यर्थः । अपेक्षितोपायपुरोवर्तिनोरवगमांशौ तयोः ।





**वा०चं०— अनियतेति** । तथा च परस्परव्यभिचारान्नैकस्यापि कारणत्वमित्याशयः । नन्वनियतकारणत्वं यत्र परस्परनिरपेक्षया स्वातन्त्र्येण कार्यजनकत्वं तत्रैव । यथा तृणादीनां वह्न्यादौ । प्रकृते त्वभेदग्रहस्यैव प्रवृत्तिजनकत्वं क्वचिद्भेदाग्रहस्य तत्त्वे प्रवर्तकाभेदग्रहसादृश्यं निमित्तमिति प्रतिनिधिवदभेदग्रहपरतन्त्रत्वान्न भेदाग्रहस्य स्वातन्त्र्यमित्याशङ्कते **ननु चेति** । भेदाग्रहोऽपीत्यस्यागृहीतभेदं वेदनद्वयमित्यर्थः । अत एव शङ्कोपसंहारे तथोक्तिः । क्वचिद्भेदविरहाद्भेदाग्रहः । क्वचिच्च सत्यपि भेदे भेदकाग्रहात्स इति भेदाग्रहप्रयोजके विशेषसद्भावेऽपि भेदाग्रहे न कश्चिद्विशेष इति भावेनागृहीतभेदत्वेन सादृश्यमुपपादयति **तथा हीति** । एवं हि वदताऽप्यभेदग्रहे वेदनद्वये चानुगतमगृहीतभेदज्ञानत्वमेकं प्रवर्तकतावच्छेदकमिति वक्तुं तावन्न युक्तम् । तथात्वे उत्तरपक्षवदेकप्रवर्तकाभ्युपगमेनाभेदग्रह एव सर्वत्र प्रवर्तकस्तत्सारूप्याद्भेदाग्रहोऽपि तथेष्यत इति पक्षाभ्युपगमानुपपत्तेः । किन्त्वभेदग्रहत्वं तत्सदृशत्वं चेति द्वयं प्रवर्तकतावच्छेदकमित्येव वक्तव्यम् । तथा च कारणतावच्छेदकानेकत्वेनानियतकारणत्वप्राप्त्या परस्परसंबन्धमात्रस्याप्रयोजकत्वादित्याशयेनाह **अनियतेति** ।

**वा०र०—** अनियतकारणकत्वेऽपि को दोष इत्यतस्तदभिप्रायमाह **तथा चेति** । **यथा तृणादीनामिति** । यद्यपि तत्र विजातीयकार्यजनकत्वेन परस्परव्यभिचाराभावात् तत्पर्यवसाय्यनियतकारणत्वं नोदाहर्तुं शक्यम् । अत एव ननु तृणादिस्थल इवेति वक्ष्यते । तथाप्यत्र स्वातन्त्र्येण कार्यजनकत्वेनानियतकारणकत्वमात्राभिप्रायेणैवेदमुदाहरणम् । न तु व्यभिचारपर्यवसानाभिप्रायेणापीति न दोषः । **तत्त्व इति** । प्रवर्तकत्व इत्यर्थः । चेतनप्रवृत्तेर्ज्ञानसाध्यतया अग्रहमात्रस्य प्रवर्तकत्वानुपपत्तेर्व्याचष्टे **अगृहीतेति** । **तथोक्तिरिति** । तत्र भेदाग्रहस्यार्थतो लाभाद्वेदनद्वयमिति स्पष्टमुक्तेश्चेति भावः । **सः** भेदाग्रहः । **विशेषसद्भावेऽपीति** । अनेनोक्तविशेषसद्भावात् कथं दृष्टान्तीकरणमिति न शङ्कनीयम् । तद्विशेषस्याप्रयोजकत्वादगृहीतभेदत्वमात्रे दृष्टान्तत्वोपपत्तेरिति मूलाभिप्राय इति सूचयति । अभेदग्रहेण भेदाग्रहस्य सारूप्यादित्युक्त्याऽगृहीतभेदत्वं प्रवर्तकतावच्छेदकतयैकमेव प्राप्नोतीति । कथमनियतकारणकत्वनिस्तारो मूले उच्यत इत्यतस्तथा प्रतीतावपि न तदभिप्रायः शङ्कितुः संभवति । ततोऽभेदग्रहभेदाग्रहयोरगृहीतभेदत्वेन सादृश्यरूपकथनसंबन्ध एवोक्त इति वक्तव्यम् । तन्न प्रयोजकम् । तावता कारणतावच्छेदकनानात्वप्रयुक्तानियतकारणकत्वानिस्ताराभावात् **एवेति** मूलाभिप्रायं वदन्नवतारयति **एवं हीति** । अयोगे हेतुमाह **तथात्व इति** । **उत्तरपक्षवदिति** । नन्वस्त्वित्याद्युत्तरपक्षाशङ्काग्रन्थे ह्यसंसर्गाग्रहे एक एव प्रवर्तक इत्युपपाद्येदंरजतत्वाधारयोर्भेदाग्रहत्वात्सत्यरजते प्रवृत्तिहेतुरित्यादिनैकस्यैव भेदाग्रहस्य सत्यासत्यसत्त्वे प्रवर्तकतयाऽभिधानेन तद्वदत्रापि प्रवर्तकैक्याश्रयणेन प्रवृत्तद्वितीयपक्षाभ्युपगमापत्त्येत्यर्थः । **परस्परेति** । सादृश्याख्यसंबन्धेत्यर्थः । **अप्रयोजकत्वात्** इत्यनन्तरं तत्कथनमनर्थकमिति शेषः । अस्ति तावदित्यादिना तत्कथनमित्यर्थः । अप्रयोजकत्वमित्येव पाठे तु न स दोषः ।

**स०व्र०—** नन्वत्यन्तविलक्षणजन्यत्वे अनियतकारणजन्यत्वेन नानियतकारणत्वापात इति शङ्कते **ननु चेति** । अपेक्षितोपायो रजतादिः । पुरोवर्तीदमाकारः । **अनियतहेतुकत्वानिस्तारादिति** । भेदज्ञानत्वाभेदज्ञानत्वरूपकारणतावच्छेदकभेदादित्यर्थः ।





**विठ्ठ०—** उत्तरग्रन्थानुसारात् न नियतकारणत्वं किन्तु भेदाग्रह एक एव प्रवर्तकः स च प्रवर्तकतया संप्रतिपन्नाभेदग्रहस्थले अगृहीतभेदवेदनद्वयस्थले तु तत्सादृश्यात् प्रवृत्तिरिति न नियतकारणता इति भावेन शङ्कते **नन्विति । सर्वत्रेति ।** संवादिप्रवृत्तावित्यर्थः । अपेक्षितोपायपदेनेष्टसाधनं रजतादिविवक्षितं पुरोवृत्तीत्यनेन इदमंशः । **एकप्रवर्तकेति ।** एको यः प्रवर्तकप्रत्ययः तत्सदृशवपुरिदं वेदनद्वयं प्रवृत्तिमुपजनयतीत्यर्थः । तथापि अभेदग्रहत्वं तत्सादृश्यं चेति द्वयं प्रवर्तकावच्छेदकं इत्येव वक्तव्यं तथाचानियतकारणत्वापत्तिरित्याशयेन समाधानमाह **मैवम् अनियतेति ।**

**चषकः—** नन्वन्यथाख्यातिवाद्यभिमतविशिष्टज्ञाने प्राभाकरानुमतज्ञानद्वये च वेद्यवेदनप्रतियोगिकभेदाविषयकत्वमनुगतमिति तद्धर्मावच्छिन्नस्यैव प्रवृत्तिहेतुत्वोपगमान्न प्रवृत्तेरनियतकारणकतापत्तिरित्याशङ्क्ते **नन्विति ।** सर्वत्र संवादिप्रवृत्तिसामान्ये । **अनियतहेतुकत्वानिस्तारादिति ।** भेदस्याधिकरणस्वरूपतया तदविषयकत्वस्य दुर्वचतया अभेदग्रहत्वं तत्सदृशज्ञानत्वं च जनकतावच्छेदकद्वयमुपेयमिति परस्परजन्यकार्ययोः परस्परधर्मावच्छिन्नयोर्व्यतिरेकव्यभिचारतादवस्थ्यमिति भावः ।

**गूढ०—** **अनियतकारणतापातादिति ।** प्रवृत्तित्वावच्छेदेनानुगतकारणस्यैकस्याभावात् प्रवृत्तिलक्षणं कार्यं आकस्मिकं स्यादिति भावः । ननु प्रवृत्तिर्द्विविधा । समीचीना असमीचीना च । तत्र समीचीनप्रवृत्तावभेदग्रहस्य कारणत्वम् असमीचीनप्रवृत्तौ भेदग्रहस्य कारणत्वमिति न कश्चिद्दोष इति शङ्क्ते **ननु चेति ।** ननु प्रमेयत्वादिना अभेदग्रहसारूप्यस्य घटप्रत्ययेऽपि सत्त्वात्तस्यापि प्रवर्तकत्वं स्यादित्यत आह **तथा हीति ।** अपेक्षितोऽपि उपाय इष्टसाधनीभूतो रजतादिः पुरोवर्तीदंपदार्थः अनयोर्योऽवगमो विशिष्टप्रत्ययस्तस्य यावंशौ तयोरित्यर्थः । **ततश्चेति ।** एको यः प्रवर्तकः प्रत्ययो विशिष्टप्रत्ययः तत्सदृशाकारमित्यर्थः । **अनियतेति ।** ननु समीचीनप्रवृत्तित्वावच्छेदेनाभेदग्रहस्यासमीचीनप्रवृत्तित्वावच्छेदेन भेदाग्रहस्यैव कारणत्वेन कारणतावच्छेदककार्यतावच्छेदकयोर्भेदान्नानियतहेतुत्वापात इंति चेद्भवेदेवं यदि भेदाग्रहस्य कारणत्वं सिद्धम् इन्यथाख्यातौ बाधकं च स्यान्न चैवमित्युक्तम् ।

**प्रदीपः—** भेदाग्रहादभेदस्त्वभेदज्ञानं ज्ञानस्य ... ताग्राह्यत्वान्न प्रवृत्तिरिच्छापूर्वत्वात्तस्या इच्छा च भेदाग्रहात्प्रवृत्ताविवाभेदाग्रहान्निवृत्तावपि स्यादित्याह **मैवमिति ।**

**३७८ सु०— किञ्च प्रवर्तकसादृश्यात्प्रवृत्तिरित्यत्रैव कल्प्यते, उत यद्यत्सदृशं तत्तत्कार्यकारीति सर्वत्र नियमः ॥ नाद्यः, अदृष्टकल्पनाप्रसङ्गात् । प्रवृत्तिलोभादित्थमास्थीयत इति चेन्न, तस्याः विपर्ययाङ्गीकारादेव सुव्यवस्थितेः ॥ न द्वितीयः, कृशानुसदृशाद् गुञ्जापुञ्जाच्छीतनिवृत्तेरदर्शनात् ।**





**परि०— अत्रैव** भ्रमस्थल एव।

**गु०दी०— कृशानुसदृशात् गुञ्जापुञ्जात्** इत्यत्र यदि च बहुसादृश्यमपेक्षितं तदाऽप्यतिसदृशयोः यमयोरन्योन्यकार्यकारित्वादर्शनादित्यूह्यम्।

**वं०प०— प्रवर्तकसादृश्यादिति**। भेदाग्रहादित्यर्थः। तत्र भेदाभावादेव भेदाग्रहः अत्र तु विद्यमानस्यापि भेदस्याग्रह इति द्रष्टव्यम्। **अदृष्टकल्पनेति**। कुत्राप्यदृष्टस्यात्रैव कल्पनेत्यर्थः। **प्रवृत्तिलोभादिति**। प्रवृत्तिरूपकार्यलोभात्। तदन्यथाऽनुपपत्त्येति यावत्। प्रवर्तकसादृश्यात्प्रवृत्तिरित्येवमन्यत्रादृष्टमप्यत्रैव कल्प्यत इत्यर्थः। अन्यथाऽनुपपत्तेरन्यथैवोपपत्तिमाह **तस्या इति**। प्रवृत्तेरित्यर्थः।

**आनन्दः— अदृष्टकल्पनेति**। अप्रामाणिककल्पनेत्यर्थः। ननु प्रवृत्तिलक्षणकार्यान्यथानुपपत्त्या एवं कल्पनान्नाप्रामाणिककल्पनापात इति शङ्कते **प्रवृत्तीति**। **तस्यापीति**। प्रवृत्तिलोभस्यापीत्यर्थः।

**कं०रा०— प्रवर्तकत्वेति**। प्रवर्तकत्वेनाभिमतसमीचीनरजतप्रत्ययेऽपीत्यर्थः। अपेक्षितोपायः सत्यरजतस्थले।

**वा०चं०—** ननु तृणादिस्थले इव कार्यवैजात्यस्य वा कारणेष्वेकशक्तिकत्वस्य वा कल्पनान्नायं दोष इत्यरुचेराह **किञ्चेति**। ननु प्रवृत्तिरूपकार्यान्यथानुपपत्तिसिद्धेऽर्थे नादृष्टकल्पनेत्याशङ्कते **प्रवृत्तीति**। ननु विपर्ययमङ्गीकुर्वाणेनापि विषयजन्यत्वाज्ज्ञानस्य रजतसाध्यज्ञानस्य शुक्तेर्जन्माभ्युपगच्छता नियामकान्तराभावाद्विपर्ययरूपज्ञाने प्रयोजकत्वेन तद्विषयशुक्तौ रजतसादृश्यमभ्युपेयम्। मया च प्रवृत्तिप्रयोजकत्वेन ज्ञानयोः सादृश्यमाश्रीयते।

**वा०र०— नायं दोष इति**। एवं कार्यस्यानियततत्कारणकत्वं यत्प्राप्तं तत्तृणादिजन्यवह्निस्थल इव दोषो न भवतीत्यभ्युपेयम्। अन्यथा तत्स्थलेऽपि तद्दोषः स्यादिति भावः। नन्विदमिति ग्रन्थे सादृश्याश्रयणप्रतिबन्दी शङ्क्यते। तत्र विपर्ययवाद्यङ्गीकृतसादृश्यस्य प्रवर्तकनिष्ठत्वाभावात्कथं प्रतिबन्दीत्यतो न सर्वत्राभ्युपगमसाम्यं विवक्षितम्। अपि तु यथा सादृश्यादन्यकार्यमन्येनेति भवताऽभ्युपेयते एवमहमपीति सादृश्यात्किञ्चित्कार्यसंभवमात्रांशे प्रतिबन्दीति न दोष इत्याशयं मूलकारीयं दर्शयन्नवतारयति **ननु विपर्ययमिति**।

**वि०ठ०—** ननु प्रवृत्तिरूपकार्यान्यथानुपपत्त्यैवास्यार्थस्य सिद्धेर्नादृष्टकल्पनेति शङ्कते **प्रवृत्तिलोभादिति**।

**गूढ०— अदृष्टकल्पनेति**। अप्रामाणिककल्पनेत्यर्थः। ननु प्रवृत्तिलक्षणकार्यान्यथानुपपत्त्यैवं कल्पनान्नाप्रामाणिककल्पनापात इति शङ्कते **प्रवृत्तीति**। **तस्यापीति**। प्रवृत्तिलोभस्यापीत्यर्थः।





**३७९ सु०— नन्विदं रजतमिति यथा रजतसाध्या बुद्धी रजतसदृशाच्छुक्तिशकलाद् भवति भवताम् । तथा प्रवर्तकैकज्ञानसदृशाज्ज्ञानद्वयात्प्रवृत्तिरपि कुतो न स्यात् । मैवम् । अर्थस्य साक्षाज्ज्ञानकारणत्वानभ्युपगमात् । सादृश्यं तु काचादिवद् दोषतयोपयुज्यते ।**

**अपि चेदं ज्ञानद्वयं प्रवर्तकसादृश्यमात्राद्यदि प्रवृत्तिमुपजनयेत् निवृत्तिमपि कुतो न जनयेत् । अस्ति हि तत्र निवर्तकभेदग्रहसारूप्यमभेदाग्रहणम् ।**

**परि०**— नन्वर्थस्य सन्निकर्षद्वारैव हेतुत्वे सादृश्यान्वेषणं व्यर्थम्, तस्यार्थहेतुत्वपक्ष एवोपयोगस्य वाच्यत्वादित्यत आह **सादृश्यं त्विति** । **निवर्तकेति** । इयं शुक्तिः इदं तु रजत-मितिज्ञानयोर्भेदग्रहाद्यत्र शुक्तौ न प्रवर्तते तत्राभेदग्रहणमस्ति विषययोर्ज्ञानयोश्चेत्यर्थः । **भेदाग्रह इति** । भेदाग्रहसहितचक्षुरादिकरणमित्यर्थः । **पुरोवृत्तिप्रवृत्तेर्हीति** । शरीरपरिस्पन्दरूपप्रवृत्तेरित्यर्थः । **पक्षधर्मताया इति** । इष्टसाधनतानुमाने पक्षीभूतप्रवृत्तिविषयशुक्तिकादाविष्टसाधनताप्रयोजकस्य अज्ञातत्वादित्यर्थः । **भेदाग्रहसारूप्यादिति** । इदंरजतमिति सत्यरजतस्थलीयेदंग्रहरजतग्रहयोरेकत्वेन तत्र यथा ज्ञानं स्वरूपतो विषयतश्च भेदाग्रहात् पुरोवर्तिनीष्टसाधनतानुमानद्वारेच्छादिकं तथाऽत्रा-पीत्यर्थः ।

**यादु०**— **अर्थस्येति** । अतीतादौ व्यभिचारात् । अपरोक्षज्ञानेऽपि तज्जनकसन्निकर्षोपक्षीणत्वादिति भावः । ननु सादृश्यं तावद् भ्रमहेतुः । तच्चार्थस्याजनकत्वे जनकसादृश्यरूपत्वाभावान्न भ्रमोपयोगि स्यादित्यत आह **सादृश्यं त्विति** । **अभेदाग्रहणमिति** । अभेदग्रहणेऽन्यथाख्यात्यापत्तिरिति भावः ।

**वं०प०**— सादृश्यज्ञानं प्रवर्तकमित्याशयेन शङ्कते **नन्विति** । **रजतसाध्या बुद्धिरित्यादि** । रजत-रूपार्थस्य विषयतया रजतज्ञानकारणत्वे वस्तुगत्या रजतसाध्या रजतबुद्धिः । रजतसदृशाच्छुक्तिशकलाद्भवतां मते भवतीत्यर्थः । **तथेति** । यथा रजतसदृशस्य शुक्तिशकलस्य रजतबुद्धिजनकत्वं भवन्मते तथेत्यर्थः । **प्रवर्तकैक-ज्ञानसदृशादिति** । भेदाग्रहरूपसादृश्योपेतादित्यर्थः । **अर्थस्येति** । तथा च रजतसाध्यबुद्धी रजतसदृशाच्छुक्ति-शकलाद्भवति भवतामित्यस्मन्मते रजतबुद्धे रजतसाध्यत्वं यदुक्तं तदसदिति भावः । ननु रजतसादृश्यं तावद्भ्रमहेतुः । तत्र रजतरूपार्थस्य रजतबुद्ध्यजनकत्वे जनकसादृश्यरूपत्वाभावात्कथं रजतसादृश्यस्य भ्रमजनकत्वमित्यत आह **सादृश्यं त्विति** । चक्षुरिन्द्रियेण भ्रमे जननीये काचादिवत्सादृश्यस्य भ्रमोपयोगित्वमात्रमेव न तु साक्षाद्भ्रमरूपज्ञानजनकत्वम् । तथा चेदं रजतमिति बुद्धी रजतसदृशाच्छुक्तिशकलाद्भवतीति सादृश्यस्य साक्षाज्ज्ञानजनकत्वमस्मन्मते यदुक्तं तदसदिति भावः । प्रवर्तकसादृश्यं भेदाग्रहः । तत्र ज्ञानद्वये । **निवर्तकेति** । प्रवृत्त्यजनकेत्यर्थः । तथाच निवर्तको यो नेदं रजतमिति भेदग्रहस्तत्सादृश्यमित्यर्थः । **अभेदाग्रहणमिति** । यत्र





निवर्तको भेदग्रहस्तत्राभेदस्याभावादेवाभेदाग्रहणमस्ति । तदभेदाग्रहणमत्राप्यस्ति । अभेदग्रहे विशिष्टज्ञानरूपान्यथाख्यात्यापत्तिः स्यात् । तथा च यदि प्रवर्तकसादृश्याद्भेदाग्रहादिदं ज्ञानद्वयं प्रवृत्तिमुपजनयेत्तर्हि निवर्तकभेदग्रहसादृश्यादभेदाग्रहान्निवृत्तिरपि स्यादित्यर्थः । भेदाग्रह इदंरजतयोः । भवतां मतेऽभेदग्रहं भ्रमरूपविशिष्टज्ञानम् । भेदग्रहे भ्रम एव न स्यादिति भावः ।

**आनन्दः**— ननु यद्यत्सदृशामित्यादिनियमो न सर्वत्र मयाभ्युपगम्यते किन्तु ज्ञानविशेष एवेति नातिप्रसङ्गादिति शङ्कते **ननु चेति** । **साक्षाज्ज्ञानकारणत्वानभ्युपगमादिति** । सन्निकर्षोपयोगित्वेनान्यथासिद्धित्वादिति भावः । ननु तर्हि सादृश्यस्याप्युपयोगो न स्यादित्यत आह **सादृश्यमिति** । नन्वेतादृशनियमस्य मयानभ्युपगमादनभ्युपगतं दूषणमयुक्तम् । मया सादृश्यमात्रादेव वेदनद्वयस्य प्रवर्तकत्वाङ्गीकारादित्यत आह **अपि चेति** ।

**कं०रा०**— रजतस्येन्द्रियार्थसन्निकर्षजननोपयुक्तत्वेन साक्षाज्ज्ञानकारणत्वाभावाद्रजतसाध्या बुद्धिरित्येतदयुक्तमित्याह **अर्थस्येति** । सादृश्यस्य सादृश्यत्वेन रूपेणोपयुक्तत्वे रजतसाध्या बुद्धी रजतसदृशी जायत इति वक्तुं शक्यते । न चैतदस्ति । सादृश्यस्य दोषत्वेन रूपेणोपयुक्तत्वादित्याह **सादृश्यं त्विति** । **अस्ति हीति** । नेदं रजतमिति निवर्तकभेदग्रहस्थले रजताभेदाग्रहणं यथा वर्तते तथाऽगृहीतभेदज्ञानद्वयस्थलेऽपि रजताभेदाग्रहणमस्तीति तद्रूपं निवर्तकभेदग्रहसारूप्यं तिष्ठतीत्यर्थः । **भेदग्रहेति** । समीहितसाधनभेदग्रहसारूप्यात्समीहितसाधनाभेदाग्रहादुपेक्षाया अप्यापातादित्यर्थः ।

**श्रीनिधि०**— ननु विषयस्य स्वप्रतीतिहेतुत्वेऽपि क्वचित्तत्परित्यज्यानियतहेतुकत्वमनादृत्य विषयसदृशस्यैव रजतादिबुद्धिहेतुत्वं भवद्भिरङ्गीक्रियते तथा ममापि किं न स्यादिति शङ्कते **नन्विदमिति** । नन्वर्थस्य कारणत्वानभ्युपगमे रजतबुद्धेस्सादृश्यान्वयव्यतिरेकानुविधानविरोध इत्यत आह **सादृश्यं चेति** । अन्यथा विशेषदर्शने सत्यपि कारणसत्त्वाद्रजतबुद्ध्यन्तरोत्पादप्रसङ्ग इति भावः ।

**वा०चं०**— तत्र यदि मां प्रत्यदृष्टकल्पनाऽतिप्रसङ्गौ तर्हि त्वां प्रत्यपि तत्परिहारोपायस्तवेव ममापीत्याशङ्कते **नन्विदमिति** । अर्थसन्निकर्षस्यैव ज्ञानकारणतयाऽसता सन्निकर्षासंभवे तत्प्रयोजकत्वेनार्थस्यान्यथासिद्धतया अकारणत्वान्न तत्सादृश्यं शुक्तौ ज्ञानप्रयोजकतया मया वाच्यम् । अभेदग्रहस्य प्रवृत्तिकारणत्वाद्भेदाग्रहस्य तत्सादृश्यं त्वया वाच्यमिति न साम्यमित्याशयेनाह **अर्थस्येति** । ननु माऽस्तु ज्ञानस्य रजतसाध्यत्वेन सादृश्यकल्पना । रजतसन्निकर्षसाध्यज्ञानस्य शुक्तिसन्निकर्षाज्जन्माङ्गीकुर्वता तन्निमित्तत्वेन शुक्तौ रजतसादृश्यं स्वीकर्तव्यमेव । अन्यथा सादृश्याभ्युपगमवैयर्थ्यप्रसङ्गादित्यतोऽन्यसन्निकर्षसाध्यस्यान्यसन्निकर्षाज्जन्म दोषवशादित्येव मदभ्युपगमः किन्तु स दोषः क्वचिदन्यः क्वचित्सादृश्यमित्येव । अत एव पीतः शङ्ख इत्यादौ यत्र कामलादिरूपं दोषान्तरं न तत्र विषययोः सादृश्यमाश्रीयते । त्वया त्वभेदग्रहस्यैव प्रवर्तकत्वं वेदनद्वयं तु





सादृश्यात्तथेति वदता कारणसादृश्यं सादृश्यत्वेन निमित्ततयाऽऽश्रीयत इत्यदृष्टकल्पनाऽतिप्रसङ्गौ तवैवेत्याशयेनाह **सादृश्यं त्विति**। एवं सादृश्यस्य प्रवृत्तिप्रयोजकत्वं विकल्पेन निराकृत्य नन्वधिष्ठानं च सदृशमिति वदता त्वयापि सादृश्याङ्गीकार्यत्वे दोषत्वेनान्यथा वेति वैलक्षण्यमप्रयोजकमित्यतस्तत्प्रतिबन्द्याऽपि निराचष्टे **अपि चेति**।

**वा०र०— कल्पनाऽतिप्रसङ्गाविति**। दोषावुच्येते इति पूरणीयम्। **ताविति**। वक्तुं शक्याविति पूरणीयम्। अहमदृष्टकल्पनातिप्रसङ्गौ कथञ्चित्परिहरिष्यामीत्यत आह **तत्परिहारेति**। **अर्थसन्निकर्षस्यैवेत्यादि**। अर्थस्य कारणत्वे हि तत्सादृश्यं शुक्तौ ज्ञानप्रयोजकतया मया वाच्यं स्यान्न तस्य ज्ञानकारणत्वमस्ति। न च तर्हि कारणान्तराभावाद् ज्ञानायोगः। अर्थसन्निकर्षस्यैव कारणत्वात्। न च तावताऽर्थस्यापि कारणत्वप्राप्तिः। असतार्थेन सन्निकर्षस्यासंभवात् तत्संभवायार्थस्योपयोगाङ्गीकारेण सन्निकर्षप्रयोजकतया अर्थस्यान्यथासिद्धत्वेन कुलाल-पित्रादिवत्कारणत्वायोगात्। एवमर्थस्याकारणत्वात् तत्सादृश्यं शुक्तौ मया यथा न वाच्यम्। नैवं त्वया सादृश्यं भेदाग्रहेन वाच्यमित्यस्ति। अभेदग्रहस्य कारणतया कारणीभूततत्सादृश्यस्य भेदाग्रहे त्वयाऽवश्यं वाच्यत्वात्। तथा च न साम्यमित्यर्थः। **साध्यत्वेनेति**। रजतसाध्यत्वेन निमित्तेन या सादृश्यकल्पना सा मास्त्विति योज्यम्। **दोषवशादिति**। अनेनातिप्रसङ्गभञ्जकमुक्तं भवति। तथापि सादृश्याङ्गीकारस्तवापि प्राप्तः। भ्रमस्थले सादृश्यस्यैव दोषत्वादित्याशङ्कते **किन्त्विति**। न सादृश्यमेव सर्वत्र दोषः। किन्तु दोषान्तरमपि तत्र तत्रान्यदस्ति। सादृश्या-भावेऽपि कामलादिदोषान्तरेण पीतः शङ्ख इत्यादि भ्रमदर्शनात्। यत्रापि सादृश्यं तिष्ठति। न तत्रापि तस्य सादृश्यत्वेन प्रयोजकत्वमपि तु दोषत्वेनैवेत्याद्याह **स च दोष इति**। कामलादीति प्रसिद्धः पाठः। कामार्तिकारस्य तत्र तत्र पाठस्तु लेखकागत इति प्रतीयते। **इति वदता त्वयेति**। इतिपूर्वाचार्यवचनस्य स्वयमङ्गीकृतत्वेन स्वस्यापि तद्वादित्वमित्याशयेनैवमुक्तं तत्प्रतिबन्द्यापीत्यत्र तदिति द्वितीयान्तम्। सादृश्यं प्रतिबन्द्यापि निराचष्ट इत्यर्थः।

**स०व्र०— अर्थस्येति**। सत्यस्थले सन्निकर्षस्यैव साक्षात्कारं प्रति कारणत्वात्सन्निकर्षो यत्रासता नोपपद्यते तत्रैवार्थसत्तापेक्षेति पारम्पर्येणैवार्थस्य कारणत्वमिति भावः। नन्वेवं रजतबुद्धे रजतसाध्यत्व एव सादृश्यमरजतस्य शुक्तिशकलस्यापेक्षितमिति तदुक्तिसार्थक्येऽपि रजतासाध्यत्वे सादृश्योक्तिर्व्यर्थेत्यत आह **सादृश्यं त्विति**। **अभेदाग्रहणमिति**। अभेदग्रहणे चान्यथाख्यात्यापत्तिरिति भावः।

**वि०ट०— अर्थस्येति**। अतीतादौ व्यभिचारात् अपरोक्षज्ञानेऽपि तज्जनकसन्निकर्षोपक्षीणत्वादिति भावः। ननु अर्थस्याजनकत्वे जनकसादृश्यानुपयोगात् सादृश्यान्वेषणं व्यर्थमित्यत आह **सादृश्यं त्विति**।

**चषकः— अर्थस्येति**। अतीतादिज्ञानानुत्पादप्रसङ्गेन लौकिकालौकिकसाक्षात्कारसाधारणसाक्षात्कार-त्वावच्छिन्नं प्रति वर्तमानगोचरसाक्षात्कारजनकसन्निकर्षेणान्यथासिद्ध्या च लौकिकसाक्षात्कारत्वावच्छिन्नं प्रति हेतुतोपगतिर्न सङ्गच्छत इत्याशयः। ननु रजतसन्निकर्षोत्पादनीयज्ञानस्य शुक्तिसन्निकर्षाधीनोत्पत्तिमूरीकुर्वतां





रजतप्रतियोगिकशुक्त्यनुयोगिकसादृश्यमेव तद्धेतुतयाश्रयणीयं तच्चार्थस्य जनकत्वाभावे न सङ्गच्छत इत्याशङ्कायां सादृश्यं दोषविधयैवोपयुज्यते। स च दर्शितरूपस्तदन्यकामलादिरूपश्चेति न क्षतिरित्याह **सादृश्यं त्विति**।

**गूढ०**— ननु यद्यत्सदृशमित्यादिनियमो न सर्वत्र मयाभ्युपगम्यते किन्तु ज्ञानविशेष एवेति नातिप्रसङ्ग इति शङ्कते **ननु चेति**। साक्षाज्ज्ञानकारणत्वानभ्युपगमादिति। सन्निकर्षोपयोगित्वेनान्यथासिद्धत्वादिति भावः। ननु तर्हि सादृश्यस्याप्युपयोगो न स्यादित्यत आह **सादृश्यमिति**। नन्वेतादृशनियमस्य मयाऽनभ्युपगमादनभ्युपगत-दूषणमयुक्तम्। मया सादृश्यमात्रादेव वेदनद्वयस्य प्रवर्तकत्वाङ्गीकारादित्यत आह **अपि चेति**।

**३८० सु०— ननु च यथा भेदाग्रहो भवतामभेदग्रहं जनयति तथा प्रवृत्तिमपि किं न जनयेदिति। मैवम्। वैषम्यात्। ज्ञानजनने हि कारणानां स्वातन्त्र्यं न पुरुषस्य। तानि च यादृशसामग्रीमध्यपतितानि तादृशं ज्ञानमुपजनयन्ति। न तु पुरुषाकाङ्क्षामपेक्षन्ते हेयोपेक्षणीयज्ञानजननात्। प्रवृत्तौ तु पुरुष एव स्वतन्त्रो न ज्ञानम्। स हि सत्यपि ज्ञानेऽपेक्षित एव प्रवर्तते। न तु 'ज्ञानं जातमि'त्येवोदासीनविपरीतयोरपि। तथा च भेदाग्रहदोषकलुषितानि नयनादीनि विपर्ययं जनयन्ति। न तु पुरुषः प्रवर्तकसादृश्यमात्रेण प्रवर्तितुमर्हति। तथात्वे वा निवर्तकसादृश्यात्प्रेक्षावान्निवर्तेतापीत्युक्तम्।**

**वं०प०**— **तथेति**। भवतामिति वर्तते। तथाच तद्धेतोरेवास्तु तद्धेतुत्वं किं तेनेति न्यायेन भ्रमजनकभेदाग्रहादेव प्रवृत्त्युपपत्तौ किं प्रवृत्तिजनकतयाऽभेदग्रहरूपभ्रमाख्यविशिष्टज्ञानकल्पनयेति भावः। भेदाग्रहस्य भ्रमजनकत्वेऽपि न प्रवृत्तिजनकत्वमित्याह **मैवमित्यादिना**। **यादृगित्यादि**। यदि दोषघटितसामग्रीमध्यपतितानि तर्हि दुष्टं ज्ञानमुपजनयन्तीत्यर्थः। कुतः पुरुषाकाङ्क्षां नापेक्षन्त इत्यत आह **हेयेति**। तदुपपादयति **स हीति**। अपेक्षिते इष्टे उपादेयवस्तुनीति यावत्। विपरीतं हेयम्। **तथा चेति**। भेदाग्रहस्याभेदग्रहजनकत्वं यद्यप्यस्तीत्यर्थः। तथाऽपि तस्य प्रवृत्तिजनकत्वं तु नास्तीत्याह **न त्विति**। प्रवर्तकसादृश्यमात्रेण भेदाग्रहरूपेण। निवर्तकसादृश्यात् निवर्तको भेदग्रहस्तत्सारूप्यात् अभेदाग्रहात्। **इत्युक्तमिति**। अपिचेदमित्यादिग्रन्थेनेत्यर्थः। प्रवृत्तिमुपादानादिरूपाम्। एवमुत्तरत्रापि।

**आनन्दः**— **ननु चेति**। तद्धेतोरिति न्यायादिति भावः। वैषम्यमेवोपपादयति **ज्ञानेति**। **तथात्वे वेति**। पुरुषस्वातन्त्र्यमनङ्गीकृत्य सादृश्यमात्रस्यैव प्रवर्तकत्वाङ्गीकारादित्यर्थः।

**श्रीनिधि०**— ननु विपर्ययात् प्राक् रूप्यपुरोवर्तिनोर्भेदाग्रहो अभेदग्रहश्चास्ति तत्राभेदाग्रहो अभेदग्रहं जनयति न तु अभेदाग्रहः भेदज्ञानमिति भवतामप्यङ्गीकारः तथा ममापि प्रवर्तकसादृश्यनिवर्तकसादृश्योस्सत्त्वेऽपि प्रवर्तकसादृश्यात्प्रवृत्तिं जनयति न तु निवर्तकसादृश्यान्निवृत्तिमिति मतमिति शङ्कते **ननु च यथेति**। यादृक्





सामग्रीपतितानीति अभेदग्रहसामग्रीमध्यपतितानि चेत् अभेदज्ञानं भेदग्रहसामग्रीमध्यपतितानि चेत् भेदज्ञानमित्यर्थः । नन्वत्र भेदाभेदज्ञानद्वयकारणयोरेकत्र समावेशात् कथं अन्यतरस्यैवान्यतरसामग्रीमध्यपतितत्वनिश्चय इत्यत आह **तथा चेति**।

**वा०चं०**— ननु प्रवर्तकाभेदग्रहसादृश्याद्भेदाग्रहात्प्रवृत्तौ निवर्तकभेदग्रहसादृश्यादभेदाग्रहान्निवृत्तिरपि स्यादित्यापादयताऽपि भेदाग्रहस्य विपर्ययोत्पादप्रयोजकतया स्वीकारात्तं प्रति मयाऽप्यापादयितुं शक्यमेव । यदि भेदाग्रहादभेदग्रहरूपविपर्ययस्तर्ह्यभेदाग्रहाद्भेदग्रहरूपसमीचीनज्ञानं किं न स्यादिति तत्र दोषादिरूपसहकारिभावाभावरूपस्तव परिहारप्रकारो ममापि सम इत्याशयेन शङ्कते **ननु चेति** । तथा चेत्यादिना परिहारं वक्तुमुपोद्घातमाह **ज्ञानेति** । यदि कारणानां स्वातन्त्र्यं तर्हि भेदग्रहरूपसमीचीनज्ञानमेव कुतो नोत्पादयेयुरित्याशङ्कां परिहरन्नेव तेषां स्वातन्त्र्यमुपपादयति **तानि चेति** । यादृक्सामग्रीमध्यपतितानीति सामान्येनोक्तस्य प्रकृतारूढतया विशेषोत्कीर्तनं भेदाग्रहदोषाभ्यां कलुषितानीति । **तथा चेति** । अयमाशयः । यद्यत्कार्ये स्वतन्त्रं तदेव तत्सहकारिविशेषभावाभावाभ्यां तादृशतादृशकार्यं जनयतीति हि प्रसिद्धम् । एवञ्च ज्ञानजनने स्वतन्त्राणां चक्षुरादीनां दोषादिरूपसहकारिसद्भावे तैर्विपर्ययजननम्, अन्यथा समीचीनज्ञानजननमिति दोषसद्भावाच्छुक्तिरजतादिस्थले विपर्यय एव न तु भेदग्रहरूपसमीचीनज्ञानमिति कल्पयितुं युक्तम् । पुरुषाधीनतया ज्ञानानधीनायां तु प्रवृत्तौ प्रवर्तकज्ञानसादृश्यस्य ज्ञानगतस्य नोपयोगः । अथ पुरुष एव स्वप्रवृत्त्यर्थं प्रवर्तकसादृश्यमुपादत्त इति साम्प्रतम् । तर्हि तत्रैव विद्यमानं निवर्तकसादृश्यं कथं नोपादद्यात् । न निवर्तते च । अथ चेतनप्रवृत्तिं प्रति स्वरूपसतस्तस्यानुपयोगात्प्रवर्तकसादृश्यमालोच्य प्रवर्तते तर्हि निवर्तकसादृश्यमप्यालोच्य कथं न निवर्तेत । अन्यथा प्रेक्षावत्वहानेरिति न ज्ञानतुल्यता प्रवृत्तेरिति । अत एवोक्तं **प्रेक्षावानिति** । नन्वस्तु तर्हि पुरुषापेक्षाऽप्यधिका सहकारिणी ज्ञानं स्वतन्त्रमेव प्रवृत्तौ कारणमुपेक्षणीयादौ च सहकार्यभावादप्रवृत्तिः । न च ज्ञानस्य स्वातन्त्र्ये ज्ञानादेव साऽपि स्यादिति वाच्यम् । तस्या विषयसौन्दर्याधीनत्वात् ।

**वा०र०**— मूले **यादृक् सामग्रीति** । यत्कार्योत्पत्त्यनुकूलयद्घटिता सामग्रीति योज्यम् । तादृशं तत्सामग्र्यनुगुणमित्यर्थः । इतःपरं नन्वस्त्विति प्रवृत्तित्वावच्छिन्नं प्रत्यये संसर्गेत्येतत्पर्यन्तं व्याख्येयमस्ति ।

**विठ्ठ०**— ननु केवलं भेदाग्रहस्य प्रवर्तकत्वाभावेऽपि भेदाग्रहसहितचक्षुरादिकरणस्य प्रवर्तकसादृश्यज्ञापनद्वारा प्रवृत्तिजनकत्वं संभवतीति शङ्कते **ननु चेति** । यथा भवतां मते अधिष्ठानप्रधानयोः भेदाग्रहसहकृतमिन्द्रियं अत्यन्तासद्रजततादात्म्यं जनयति तथा भेदाग्रहो प्रवर्तकसादृश्यज्ञापनद्वारा प्रवृत्तिमपि किं न जनयतीति किं नाङ्गीक्रियते विशेषाभावादिति भावः । चक्षुरादिकारणानां ज्ञानजनने सामर्थ्यवत् प्रवृत्तिजननेन सामर्थ्यं किन्तु प्रवृत्तिस्तु इष्टसाधनताज्ञानवत् पुरुषार्थानां तथाच वैषम्यान्नोक्तप्रतिबन्दीत्याशयेन परिहरति **मैवं वैषम्यादिति** । कारणानां स्वातन्त्र्यमुपपादयति **तानि चेति** ।

**गूढ०**— **ननु चेति** । तद्धेतोरिति न्यायादिति भावः । वैषम्यमेवोपपादयति **ज्ञानेति** । **तथात्वे वेति** । पुरुषस्वातन्त्र्यमनङ्गीकृत्य सादृश्यमात्रस्यैव प्रवर्तकत्वाङ्गीकार इत्यर्थः ।





**३८१ सु०— किञ्च ज्ञानमर्थे प्रवृत्तिं किं साक्षादुपजनयति उतेच्छाप्रयत्नद्वारेण । नाद्यः, हेयोपेक्षणीययोरपि प्रवृत्तिप्रसङ्गात् । द्वितीये कथमगृहीतभेदाज्ज्ञानद्वयात्प्रवृत्तिः । पुरोवर्तिप्रवृत्तेर्हि साक्षात्कारणं प्रयत्नः । तस्य चेच्छा, तस्याश्च समीहितसाधनतानुमानम् । न च तत्संभवति । रजतत्वस्य पक्षधर्मताया अप्र(तयाऽप्रति)तिपन्नत्वात् ।**

**वं०प०— साक्षादिति** । इच्छाप्रयत्नद्वारमन्तरेणेत्यर्थः । **इच्छेति** । जानातीच्छति प्रयतत इति क्रमसद्भावादित्यर्थः । **प्रयत्नः** शरीरव्यापारः । **समीहितसाधनतेति** । इष्टसाधनतेत्यर्थः । **रजतत्वस्येति** । इदमिष्टसाधनं रजतत्वादितीष्टसाधनतानुमानं कार्यं तन्न संभवति । ज्ञानद्वयं प्रवर्तकमिति त्वत्पक्षे रजतत्वस्य पक्षीभूते पुरोवर्तिनीदंपदार्थेऽप्रतिपन्नत्वेन स्वरूपासिद्धिप्रसङ्गादित्यर्थः । **रजते** सत्यरजते ।

**आनन्दः— समीहितेति** । इदं समीहितसाधनं रजतत्वादित्यनुमानमित्यर्थः । **रजतत्वस्येति** । रजतस्मृत्यङ्गीकारेण पुरोवर्तिनि रजतत्वस्यागृहीतत्वादिति भावः ।

**श्रीनिधि०— पुरोवर्तिप्रवृत्तेरिति** । अत्र प्रवृत्तिरादानादि चेष्टा विवक्षिता । तेन त्रिविधा हि पुंसां चित्तवृत्तिरित्यादिना न विरोधः । **समीहितसाधनेति** । इष्टसाधनेत्यर्थः । **पक्षधर्मतयेति** । इदमिष्टसाधनं रूप्यत्वादित्यत्र रूप्यत्वहेतोः पुरोवर्तिनिष्ठतया अप्रतिपन्नत्वादित्यर्थः ।

**वा०चं०—** नन्वसुन्दरेऽपि कथं कस्यचिदिच्छा । तस्याः पुरुषस्वभावविशेषप्रयुक्तत्वादिति चेन्न । अन्ततोऽपि पुरुषस्वभावाश्रयणे आदावेव तत्कल्पनौचित्यात् । अस्तु वा ज्ञानस्य प्रवृत्तावपेक्षा सहकारिणी त्वत्पक्षे साऽपि नोपपद्यत इत्यत आह **किञ्चेति** ।

**विठ्ठ०—** किञ्चागृहीतभेदस्य वेदनद्वयस्य भेदाग्रहसादृश्यात् न सर्वथा प्रवर्तकत्वम् अतः प्रवृत्त्यन्यथानुपपत्त्या विपर्ययोऽङ्गीकार्य इत्याह **किञ्च ज्ञानमिति** । ननु कारणं कथं वा अगृहीतभेदवेदनद्वयस्यापि इच्छाप्रयत्नद्वारा प्रवृत्तिजनकत्वे बाधकाभावादित्यतो इष्टसाधनतानुमानस्यैवेच्छाप्रयत्नहेतुत्वात् अगृहीतभेदज्ञानद्वयात् इष्टसाधनतानुमित्यनुदयादित्याशयेनाह **पुरोवर्तिप्रवृत्तेरिति** । शरीरपरिस्पन्दप्रवृत्तेरित्यर्थः । **पक्षधर्मतयेति** । इष्टसाधनतानुमानपक्षीभूतपुरोवर्तीदमंशसंबन्धितया अविज्ञातत्वादिति भावः ।

**गूढ०— समीहितेति** । इदं समीहितसाधनं रजतत्वादित्यनुमानमित्यर्थः । **रजतत्वस्येति** । रजतस्मृत्यङ्गीकारेण पुरोवर्तिनि रजतत्वस्यागृहीतत्वादिति भावः ।



**३८२ सु०— अथ रजते प्रतिपन्नेन रजतत्वेन तत्समीहितसाधनताज्ञानमुपजातं भेदाग्रह-(भेदाग्रहेऽभेदग्रह)सारूप्यात्पुरोवर्तिनीच्छामुपजनयतीति चेन्न। तथा सति भेदग्रहसारूप्या-दभेदाग्रहादुपेक्षाया अप्यापातादिति॥**

**वं०प०— उपजातमिति**। तत्र रजतत्वसद्भावेनासिध्यभावादिति भावः। **पुरोवर्तिनि** इदंपदार्थे। **उपेक्षा** प्रवृत्त्यभाव इति।

**वा०चं०— अभेदग्रह(भेदाग्रहा)सारूप्यादिति**। पुरोवर्तिसमीहितसाधनाभेदग्रहस्य पुरोवर्तिसमीहित-साधनभेदाविषयकत्वाद् गृहीतभेदवेदनद्वयस्य तदविषयकत्वेन सारूप्यादित्यर्थः।

**वि०— ** ननु रजतत्वस्य पुरोवर्तीदमंशे अप्रमितत्वेऽपि संप्रतिपन्नरजतप्रतिपन्नत्वेन तत्रेष्टसाधनत्वानुमाने जाते तत्सारूप्यात् पुरोवर्तिनीइच्छोत्पादात् पुरुषस्य तत्र प्रवृत्तिरुपपद्यते इति शङ्कते **अथ रजते इति**। **भेदग्रहसारूप्यादिति**। पुरोवृत्तिसमीहितसाधनयोः अभेदग्रहेण संप्रतिपन्नरजते प्रवृत्तावपि तत्र पुरोवृत्ति-समीहितसाधनयोः भेदादगृहीतभेदवेदनद्वये अभेदग्रहाभावेऽपि भेदाग्रहरूपतत्सारूप्यादित्यर्थः। सारूप्यमात्रस्य अतिप्रसञ्जकत्वेन न कार्यजनकत्वमित्याशयेन परिहरति **नेति**।

**३८३ सु०— नन्वस्तु तर्हि द्वितीयः पक्षः। तथा हि। सत्यरजते तावदस्ति रजतव्यक्तिज्ञानं रजतत्वजातिबोधश्च। न चास्त्यसंसर्गज्ञानम्। एतावतैव तत्र तदर्थिनां प्रवृत्तिः। न हि तयोस्तादात्म्यं पश्यन्ति। जातिव्यक्त्योस्तादात्म्याभावात्। न च तत्र संसर्गग्रहः प्रवर्तकः। समवायो हि तयोः संसर्गः। न चासौ प्रत्यक्षः। इन्द्रियसन्निकर्षाभावात्। नाप्यनुमानतस्तदा शक्यते ज्ञातुम्। लिङ्गाभावात्। अविसंवादिव्यवहारजनकत्वविशिष्टसाकाङ्क्षरूपरूपि-सहोपलम्भो हि तल्लिङ्गम्। न चाविसंवादित्वं प्राक् प्रवृत्तेः शक्याधिगमम्। अस्ति चेदं सकलमपि प्रवर्तकं विभ्रमेऽपीति कुतो विपर्ययाभावे प्रवृत्त्यनुपपत्तिः।**

**परि०—** उत सर्वोऽपि भेदाग्रहादितिपक्षमाशङ्कते **अस्तु तर्हि द्वितीयः पक्षः** इत्यादिना **एतदप्ययुक्तमित्यन्तेन**। संयोगस्य संयुक्तसमवायस्य वा सन्निकर्षत्वमुपेत्याह **इन्द्रियसन्नि-कर्षाभावादिति**। विसंवादिन्यव्यभिचारायाविसंवादिव्यवहारजनकत्वविशिष्टेत्युपलम्भविशेषणम्। **साकाङ्क्षेति**। साकाङ्क्षौ यौ रूपरूपिणौ धर्मधर्मिणौ तयोः सहोपलम्भ इत्यर्थः। **निरस्तत्वादिति**। किञ्चान्योन्याभावो नामेत्यादिना ग्रन्थेनेत्यर्थः।

**गु०दी०— अविसंवादिव्यवहारजनकत्वविशिष्ट** इत्यत्र संवादरहितज्ञानद्वयस्थलीयरूपरूप्युपलम्भ-व्यावृत्त्यर्थं ह्याद्यं विशेषणम् । पटगतरूपघटाख्यरूपिणोः सहोपलम्भव्यावृत्त्यर्थं साकाङ्क्षेति विशेषणम् । इदं रूपं अयं घट इत्यसमानकालीनरूपरूप्युपलम्भव्यावृत्त्यर्थं सहेति विशेषणम् । धर्मधर्मितयोपलम्भः सहोपलम्भः अतो ''घटरूपे'' इति सहोपलम्भेऽपि नातिप्रसङ्ग इति ज्ञेयम् ।

**यादु०—** ननु विशिष्टज्ञानमेव प्रवर्तकं तत्र कस्मान्न भवतीत्याशङ्कायां वैशिष्ट्यं किं तादात्म्यरूपं संसर्गरूपं वेति विकल्प्याद्यं निराकरोति **न हीति** । द्वितीयं दूषयति **न चेति** । नापीत्यर्थः । **रूपरूपिसहोपलम्भ इति** । अत्र हि नीलो घट इत्याद्यनुभवः संबन्धिभिन्नविशेषणविशेष्यसंबन्धविषयो विशिष्टज्ञानत्वाद्दण्डी पुरुष इति विशिष्टज्ञानवत् । न च घटाभाववद्भूतलमित्यादौ व्यभिचारः । तद्विषयकत्वे बाधकाभावे सतीति हेतुविशेषणादिति हि प्राभाकराणां समवायेऽनुमानं विवक्षितम् । तत्र विशिष्टज्ञानत्वं लिङ्गम् । तच्च न वैशिष्ट्यविषयकज्ञानत्वं तन्मते संभवति । समवायरूपवैशिष्ट्यस्यातीन्द्रियत्वात् । साध्यावैशिष्ट्यतापत्तेश्च । अतस्तन्मते विशिष्टज्ञानत्वं निर्वक्तुमिदमुक्तमिति ज्ञातव्यम् । अत्र रूपरूपिशब्दौ धर्मधर्मिवचनौ । भिन्नकालीनयोरिदं नीलमयं घट इति ज्ञानयोर्नीलविशिष्ट-ज्ञानत्वपरिहाराय सहेत्युक्तम् । नीलघटाविति समूहालम्बनज्ञानेऽतिव्याप्तिपरिहाराय **साकाङ्क्षेति** । अत्र रूपरूपिशब्दौ भावप्रधानौ । तथा च साकाङ्क्षं परस्परापेक्षं धर्मत्वं धर्मित्वं च तयोरुपलम्भ इत्यर्थः । उक्तसमूहालम्बने चोभयोर्धर्मित्वमेवावभासते न परस्परनिरूपितो धर्मधर्मिभावोऽतो न तत्रातिव्याप्तिः । भ्रमस्थानाभिषिक्त-ग्रहणस्मरणात्मकज्ञानद्वयातिव्याप्तिवारणायाविसंवादिप्रवृत्तिजनकत्वविशिष्टेत्युक्तम् । ननु भावप्राधान्यविवक्षयैवोक्त-समूहालम्बनव्यावृत्तिर्लभ्यते । तत्र नीलरूपस्य धर्मत्वाभानादिति चेन्मैवम् । तथात्वे धर्मत्वधर्मित्वे इति समूहालम्बन एवातिव्याप्तिप्रसङ्गात् । घटाभाववद्भूतलमिति ज्ञानस्य घटविशिष्टभूतलज्ञानत्वप्रसङ्गाच्च । तत्र ह्यभावापेक्षया भूतले धर्मित्वस्य घटे धर्मत्वस्य भानात् । प्रमेयदण्डवान्पुरुष इति ज्ञानस्यापि प्रमेयत्वविशिष्टपुरुषज्ञानप्रसङ्गाच्च । दण्डापेक्षया प्रमेयत्वे धर्मत्वस्य पुरुषे धर्मित्वस्य च भानात् । अतः साकाङ्क्षेति विशेषणम् । उक्तज्ञानेषु च न परस्परापेक्षो धर्मधर्मिभावोऽतो न तत्रातिव्याप्तिरिति । नन्वेवमविसंवादिव्यवहारजनकत्वविशिष्टेत्युपलम्भविशेषणं व्यर्थमापन्नम् । भ्रमस्थानाभिषिक्तज्ञानद्वयातिव्याप्तिपरिहाराय हि तद्वक्तव्यम् । न च भिन्नज्ञानविषययो रजत-त्वेदंपदार्थयोः प्रतीयमाने धर्मधर्मित्वे परस्परसापेक्षेऽतिप्रसङ्गात् । अतः साकाङ्क्षपदेनैव तत्रातिव्याप्तिपरिहारे अविसंवादिव्यवहारजनकत्वविशिष्टेति विशेषणं व्यर्थमेवेति चेन्मैवम् । साकाङ्क्षधर्मत्वधर्मित्वविषयकत्वपदेन तद्धर्मप्रकारकतद्धर्मिविशेष्यकेच्छादिजनकत्वस्यैव विवक्षितत्वात् । तस्य च भ्रमस्थलेऽपि सत्त्वेन तत्राति-व्याप्तिवारकत्वात् । भिन्नज्ञानगोचरयोरपीदंरजतत्वयोरसंसर्गाग्रहदशायां परस्परनिरूपितधर्मत्वधर्मित्वग्रहस्वीकारे बाधकाभावादित्यप्याहुः । अत एवैतन्मते सहेति विशेषणं सार्थकम् । अन्यथा साकाङ्क्षपदेनैव क्रमभाव्यनेकज्ञानवारणे सहेत्यस्य स्वरूपकथनार्थत्वादिति सर्वमनवद्यम् ।

**वं०प०— द्वितीयः पक्ष इति** । सर्वोऽपि व्यवहारो भेदाग्रहादिति प्राग्विकल्पितो द्वितीयः पक्ष इत्यर्थः । द्वितीयपक्षे सर्वोऽपि व्यवहारो भेदाग्रहादिति तादात्म्याभिप्रायेणोक्तम् । संसर्गारोपे त्वसंसर्गाग्रहादित्यपि





द्रष्टव्यमित्यभिप्रेत्योपपादयति **सत्यरजते तावदित्यादिना** । **रजतव्यक्तिज्ञानमिति** । विशेष्यज्ञानमित्यर्थः । जातिबोधो विशेषणज्ञानरूपः । **न चास्तीति** । रजतत्त्वजातिसंसर्गो रजतव्यक्तौ नास्तीति ज्ञानं नास्तीत्यर्थः । **एतावतैवेति** । विशेष्यज्ञानविशेषणज्ञानतदुभयासंसर्गाग्रहरूपकारणत्रयेणेत्यर्थः । **तदर्थिनां** रजतार्थिनाम् । प्रवर्तकतया भवदभिमताभेदग्रहस्तत्र नास्तीत्याह **न हीति** । **संसर्गग्रह इति** । असंसर्गाग्रहापेक्षया लघुत्वादिति भावः । **तदा** विशिष्टज्ञानसमये । **रूपरूपीति** । नीलो घट इत्याद्यनुभवः संबन्धिभिन्नो विशेषणविशेष्ययोर्यः संबन्धस्तद्विषयो विशिष्टज्ञानत्वात् । दण्डी पुरुष इति विशिष्टज्ञानवदिति प्राभाकरमते समवायसाधकमनुमानम् । दृष्टान्ते संयोगमादाय साध्यपर्यवसानम् । पक्षे तु नीलघटयोरुभयोरद्रव्यत्वेन संयोगमादाय साध्यपर्यवसानायोगात्समवायमादाय साध्यपर्यवसानं द्रष्टव्यम् । घटाभाववद् भूतलमित्यादौ व्यभिचारवारणाय तद्विषयकत्वे बाधकाभावे सतीति हेतौ विशेषणं देयम् । तत्र हेतुभूतं विशिष्टज्ञानत्वं निर्वक्ति **अविसंवादीत्यादिना** । **व्यवहारः** प्रवृत्तिः । अत्र रूपरूपिशब्दौ धर्मधर्मिवचनौ भावप्रधानौ साकाङ्क्षत्वं नाम परस्परापेक्षत्वम् । तथाच साकाङ्क्षं परस्परापेक्षं धर्मधर्मित्वम् । तयोः सहैकस्मिन्नेव काले उपलम्भ इत्यर्थः । अत्र कालभेदेन जातयोरिदं नीलम्, अयं घट इति ज्ञानयोर्विशिष्टज्ञानत्वपरिहाराय सहेत्युक्तम् । नीलघटादाविति समूहालम्बनज्ञानेऽतिव्याप्तिवारणाय साकाङ्क्षेत्युक्तम् । उक्तसमूहालम्बने चोभयोर्धर्मित्वमेवावभासते न परस्परनिरूपितो धर्मधर्मिभाव इति नातिव्याप्तिः । एवं चेद्भमस्थानाभिषिक्ते विसंवादिसंवादिप्रवृत्तिजनकेऽगृहीतभेदग्रहणस्मरणात्मके ज्ञानद्वयेऽतिव्याप्तिवारणायाविसंवादीत्यारभ्य विशिष्टेत्यन्तं विशेषणम् । इदं चोपलम्भविशेषणम् । **प्राक् प्रवृत्तेः शक्याधिगममिति** । तथा चाविसंवादिव्यवहारगर्भोक्तलिङ्गेन समवायज्ञानानन्तरं संसर्गग्रहप्राप्त्या प्रवृत्तिः । प्रवृत्त्यनन्तरं तद्गर्भलिङ्गेन संसर्गज्ञानमित्यन्योन्याश्रय इति भावः । **सकलमपि प्रवर्तकमिति** । इदं पदार्थरूपं विशेष्यज्ञानं रजतत्वजातिबोधस्तदुभयासंसर्गाग्रहश्चेति सामग्रीत्रयमित्यर्थः । विभ्रमेऽपीत्यनन्तरं तावन्मात्रेणैव प्रवृत्त्युपपत्तेरिति वाक्यशेषः ।

**आनन्दः— सत्यरजत इत्यादि** । तथाच जातिव्यक्तिबोधसहकृतासंसर्गाग्रह एव प्रवर्तक इति भावः । ननु तत्र जातिव्यक्त्योस्तादात्म्यग्रहादेव प्रवृत्तिरित्यत आह **न हीति** । **इन्द्रियेति** । इन्द्रियेण सह समवायस्य सन्निकर्षो भवन् संयोगो वा समवायो वा । नाद्यः । तथा सति समवायस्य द्रव्यत्वापत्तेः । न द्वितीयः । अस्यैव समवायस्य तत्त्वे आत्माश्रयः समवान्तराश्रयणे चानवस्थापत्तेरिति । यद्वा समवायत्वं नित्यसंबन्धत्वं तच्च अतीन्द्रियमेवेति भावः । **अविसंवादीति** । अविसंवादी यो व्यवहारः तज्जनकत्वविशिष्टौ यौ साकांक्षौ रूपरूपिणौ तयोः सहोपलम्भ इत्यर्थः ।

**कं०रा०— असंसर्गेति** । यद्यपि प्राग्विकल्पदशायामुत सर्वोऽपि भेदाग्रहादिति भेदाग्रहस्य सार्वत्रिकव्यवहारकारणताया द्वितीयपक्षत्वेनोक्तत्वात् । इदानीं द्वितीयपक्षोत्थापनावसरेऽसंसर्गाग्रहोपपादनमसङ्गतमिवाभाति । तथाऽप्युत सर्वोऽपि भेदाग्रहादित्यत्रत्यस्य भेदाग्रहशब्दस्यासंसर्गाग्रहोपलक्षकत्वेनोत सर्वोऽपि व्यवहारो भेदाग्रहादसंसर्गाग्रहाद्वेति द्वितीयपक्षपर्यवसानात्तदुत्थापनकाले संसर्गाग्रहस्यापि व्यवहारकारणत्वोपपादनं सङ्गतमिति द्रष्टव्यम् । **इन्द्रियेति** । समवायसंयुक्तसमवायलक्षणसन्निकर्षाभावेनेन्द्रियसंयुक्तविशेष्यविशेषणभावस्य संबन्ध-





लक्षणाभावेनासंबद्धतया चेन्द्रियसन्निकर्षाभावादित्यर्थः । तदा रजतव्यक्तिरजतत्वबोधोत्तरप्रवृत्तिपूर्वकाले । लिङ्गाभावाल्लिङ्गज्ञानाभावात् । तमेव लिङ्गप्रदर्शनपूर्वकमुपपादयति **अविसंवादीति** । अविसंवादिव्यवहारजनकत्वविशिष्टः साकाङ्क्षयोर्धर्मधर्मिणोः सहोपलम्भो हि तस्मिन्समवाये लिङ्गमित्यर्थः । यद्यप्येतादृशसहोपलम्भः समवायरहितयोर्दण्डदेवदत्तयोरप्यस्तीति व्यभिचारान्न तेन तत्साधनं युक्तम् । तथाऽप्यनेन सहोपलम्भेन रजतरजतत्वयोः संसर्गमात्रसाधनं युक्तमेव । न च समवायासिद्धिः । जातिव्यक्त्योः संबन्धान्तराभावेन संसर्गमात्रसिद्धेः समवाय एव पर्यवसानादिति द्रष्टव्यम् । तथा चेत्थं प्रयोगः । पुरोवर्तिरजतरजतत्वे परस्परसंसर्गवती अविसंवादिव्यवहारजनकत्वविशिष्टसाकाङ्क्षधर्मधर्मिसहोपलम्भविषयत्वाद्दण्डदेवदत्तवदिति । अत्र धर्मधर्मिसहोपलम्भविषयत्वमात्रं नेदं रजतमिति ज्ञानविषययोः शुक्तिरजतत्वयोरस्ति परस्परसंसर्गवत्त्वलक्षणं साध्यं तु नेति व्यभिचारस्तन्निरासाय साकाङ्क्षेत्युक्तम् । शुक्तिरजतत्वयोर्नेदं रजतमिति गृहीतासंसर्गत्वेन साकाङ्क्षत्वाभावात्तेन तद्व्युदासः । साकाङ्क्षधर्मधर्मिसहोपलम्भविषयत्वमात्रं चेदंरजतमिंति भ्रमविषययोः शुक्तिरजतत्वयोर्व्यभिचरितमित्यविसंवादिव्यवहारजनकत्वविशिष्टेत्युक्तम् । तस्य च विसंवादिव्यवहारजनकत्वात्तेन तन्निरासः ।

**श्रीनिधि०— अस्तु तर्हि द्वितीय इति** । सर्वोऽपि व्यवहारो भेदाग्रहादिति द्वितीय इत्यर्थः । **इन्द्रियसन्निकर्षाभावादिति** । न च संयुक्तविशेषणविशेष्यभावः संभवतीति वाच्यम् । प्राभाकरैर्विशेषणविशेष्यभावादेर्भिन्नोभयाश्रितैकत्वरूपलक्षणसंबन्धलक्षणाभावेन संबन्धत्वानङ्गीकारादिति । **अविसंवादीति** । उपलम्भ इत्येवोक्ते रूपरूपिणोरुपलम्भे व्यभिचारः । अत उक्तं **सहेति** । सहोपलम्भ इत्युदिते घटपटयोः सहोपलम्भे व्यभिचारः ।

**वा०चं०— नन्वस्त्विति** । प्रवृत्तित्वावच्छिन्नं प्रत्यसंसर्गभेदग्रहयोरेव कारणत्वाभ्युपगमेनानियतकारणत्वाद्यनापत्तिरिति भावः । ननु संसर्गग्रहस्य लघुत्वात्तस्यैव सत्यस्थले प्रवृत्तिहेतुत्वं स्वीकर्तव्यमित्यतस्तदनुपपत्त्या गुरुभूतस्याप्यसंसर्गाग्रहस्यैव तद्युक्तमित्याशयेनाह **तथा हीति** । एतावतैवेत्युक्तं परिशेषं समर्थयितुं प्रसक्तं तादात्म्यज्ञानं संसर्गज्ञानं च क्रमेण निराचष्टे **न हीत्यादिना** । समवायस्याद्रव्यत्वेन समवायान्तराभावेन च संयोगसमवाययोरभावाद्विशेषणविशेष्यभावस्य च संबन्धत्वस्यैवाभावेन तस्येन्द्रियेण न सन्निकर्ष इत्याह **इन्द्रियेति** । इदं रजतमित्युपलम्भः संबन्धविषयको (समवायेत्यर्थः) अविसंवादिव्यवहारजनकसाकाङ्क्षरूपरूपिसहोपलम्भत्वादित्यनुमानमभिप्रेत्याह **अविसंवादीति** । अत्र घटः पट इति ज्ञानद्वयव्युदासायैकोपलम्भत्वादिति । घटपटाविति ज्ञानव्युदासाय धर्मधर्मिपदम् । घटरूपालोकाविति ज्ञानव्युदासाय **साकाङ्क्षेति** । अत्र धर्मधर्मिणोः साकाङ्क्षत्वं नाम संसर्गमर्यादया भासमानव्यावर्त्यव्यावर्तकभावापन्नत्वम् । पीतः शङ्ख इत्यादिव्युदासाय **अविसंवादीति** । एतावतैवेत्युक्तं विशदयति **प्राक् प्रवृत्तेरिति** । **इदं** व्यक्तिज्ञानादिकम् । जातिव्यक्तिसंसर्गाविषयकत्वेनैव सविल्पकस्य निर्विकल्पकाद्वैलक्षण्यं वाच्यं गत्यन्तराभावात् । संसर्गाविषयकत्वे च सविकल्पकं नास्त्येवेत्युक्तं स्यात् । तथा च निर्विकल्पकमेव प्रवर्तकमिति वक्तव्यम् ।





**वा०र०— असंसर्गभेदाग्रहयोरेवेति** । असंसर्गश्च भेदश्च तयोरग्रहयोरेवेत्यर्थः । उभयोः प्रकृतत्वेन प्राचीनविकल्पस्योपलक्षणयाऽसंसर्गाग्रहेऽपि प्रवृत्त्या तत्र क्वचिदसंसर्गाग्रहात्क्वचित्संसर्गग्रहादिति प्रथमपक्षेऽनियत-कारणत्वापत्तिरूपदूषणेन पराकृते सति द्वितीयस्य भेदाग्रहसमकक्षतया आशङ्कनं युक्तमित्यावेदितमधस्तात् । मूलेऽविसंवादीत्यादिकं लीलावत्यनुसारेण । अविसंवादीत्येतद्धेतौ सहोपलम्भत्वं नामैकोपलम्भत्वमिति विवक्षि-तार्थस्फोरणं कुर्वन्नेव सहेति पदकृत्यमाह **अत्र घटः पट इतीति** । रूपरूपीत्यस्य धर्मधर्मीत्येतदर्थकत्व-मित्याशयेन तद्विशेषणकृत्यमाह **घटपटावितीति** । ननु नीलघटाविति प्रत्ययविचारः । घटरूपस्यालोकापेक्षत्वेऽपि आलोकस्य घटरूपत्वापेक्षत्वाभावेन परस्परापेक्षत्वरूपसाकाङ्क्षत्वस्य तत्राभावेऽपि नीलघटयोः स्वप्रतीत्यर्थं परस्परापेक्षत्वसत्त्वेन तत्प्रत्यये तादृशधर्मधर्मिविषयकैकोपलम्भत्वसद्भावादित्यत आह **अत्र धर्मधर्मिणोरिति** । नीलघटावित्यत्र तु व्यावर्त्यव्यावर्तकभावस्य न संसर्गमर्यादया भानम् । नीलो घट इत्यादिसामानाधिकरण्यस्थल एव तद्भासनादिति भावः । यद्वा सापेक्षत्वं साकाङ्क्षत्वं तथा च घटरूपस्यापि आलोकापेक्षत्वेन कथं व्यभिचार-परिहार इत्यतो विवक्षितमर्थमाह **अत्र धर्मेति** । अत्रानुमाने लीलावतीवर्द्धमानमणिटीकाद्यनुसारेण विशेषविचारः कर्तव्योऽस्ति । अन्यथाख्यातिदूषणं च कर्तव्यमस्ति।

**स०व्र०— नन्वस्तु तर्हि द्वितीय इति** । उत सर्वोऽपि भेदाग्रहादिति द्वितीय इत्यर्थः । ननु वैशिष्ट्यविषयकमेव ज्ञानं प्रवर्तकमस्त्वित्याशङ्क्य वैशिष्ट्यं किं तादात्म्यरूपं संसर्गरूपं वेति विकल्पं मनसि निधायाद्यं दूषयति **न हीति** । द्वितीयं निराकरोति **न चेति** । नापीत्यर्थः । **रूपरूपिसहोपलम्भ इति** । युगपद्धर्मधर्म्युपलम्भ इत्यर्थः । अत्र धर्मधर्मिणोरयुतसिद्धयोर्विवक्षितत्वान्नेह कुण्डे बदराणीत्यादौ व्यभिचारः । ननु तथापि रूपाभाववदिदमिति ज्ञानस्यापि रूपसमवायानुमापकता स्यात् । तत्रापि धर्मिण इदमंशस्य रूपलक्षणधर्मस्यापि सहोपलम्भात् । अत उक्तं **साकाङ्क्षेति** । परस्परापेक्षया धर्मधर्मिभावो विवक्षित इत्यर्थः । तत्र चेदमंशापेक्षया धर्मत्वं न रूपे । किन्तु रूपाभाव इत्यर्थः । एवमपीदं रजतमितिज्ञानद्वयात्मकसहोपलम्भस्य परस्परसाकाङ्क्षेदमंशरजतत्वाव-गाहितया तद्बलादिदमंशरजतत्वसमवायापत्तिरत्र उक्तमविसंवादिव्यवहारजनकत्वविशिष्टेत्युपलम्भविशेषणम् ।

**विठ्ठ०—** सर्वोऽपि भेदाग्रहादिति पक्षमाशङ्कते **नन्वस्तु तर्हीति** । **एतावतेति** । तदन्यस्यासंभवादिति भावः । एतावतेत्युक्तमेव परिशेषं समर्थयितुं विशिष्टज्ञानमेव प्रवर्तकं किं न स्यादित्याशङ्क्य वैशिष्ट्यं किं तादात्म्य-रूपं संसर्गरूपं वेति विकल्प्य क्रमेणापाकरोति **न हीत्यादिना** । **सन्निकर्षाभावादिति** । समवायस्याद्रव्यत्वेन संयोगाभावादनवस्थितेः समवायस्याप्यनङ्गीकारात् अन्यस्य संबन्धस्यासंमतेरिति भावः । ननु कथं लिङ्गाभावः, इदंरजतमिति प्रत्ययो, रजतरजतत्वयोः समवायविषयकः, अविसंवादिव्यवहारजनकत्वविशिष्टसाकाङ्क्षरूपरूपि-सहोपलम्भत्वात्, नीलो घट इत्यादि विशिष्टज्ञानवदित्यनुमानसद्भावादित्याशङ्क्य निषेधति **अविसंवादीति** । रूपरूप्युपलम्भत्वादित्येवोक्ते इदं नीलं अयं घटः इति ज्ञानद्वये व्यभिचारः अतः सहेत्युक्तं, सहोपलंभत्वादित्येवोक्ते





घटपटाविति ज्ञाने व्यभिचारः अत उक्तं रूपरूपीति, अत्र रूपरूपिशब्दौ धर्मधर्मिपरौ, धर्मधर्मिसहोपलम्भत्वादित्यर्थः, तावत्युक्ते प्रमेयदण्डवान् पुरुष इत्युपलम्भे व्यभिचारः दण्डनिष्ठप्रमेयत्वे धर्मत्वस्य पुरुषे च वस्तुतो यत्किञ्चिद्धर्मं प्रति धर्मित्वस्य च विशकलिततया भानात्, अतः साकाङ्क्षेत्युक्तम्, विसंवादिन्युक्तरूपज्ञाने व्यभिचारवारणाय अविसंवादिव्यवहारजनकत्वविशिष्टेत्युपलम्भविशेषणम्। अत्र धर्मधर्मिणोरयुतसिद्धत्वस्य विवक्षितत्वात् नेह कुण्डे बदराणीत्यादौ व्यभिचारः। सन्दिग्धविशेषणासिद्धोऽयं हेतुरित्याह **न चेति**। तथाच सत्यरजते जातिव्यक्त्योः तादात्म्याभावात् संसर्गग्राहकप्रमाणाभावाच्च केवलं व्यक्तिज्ञानरजतत्वजातिबोधतदसंसर्गाज्ञानानामेव प्रवर्तकत्वमिति वक्तव्यम्, विभ्रमत्वेनाभिमतेऽपि इदमिति व्यक्तिज्ञानं तत्राविकलस्मरणरूपरजतत्वजातिबोधः तयोरसंसर्गाज्ञानं चेति सकलमस्ति तैरेव प्रवृत्त्युपपत्तेः विपर्ययाभ्युपगमोऽनुपपन्न इत्याह **अस्ति चेदमिति**।

**चषकः**— **एतावतैव तदर्थिनां प्रवृत्तेरिति**। असंसर्गाग्रहमात्रेणेत्यर्थः। विशिष्टज्ञानस्य प्रवर्तकोपगन्तृभिस्तादात्म्यावगाहिज्ञानस्य प्रवर्तकता संसर्गावगाहिज्ञानस्य वेति कल्पद्वयमभिप्रेत्याद्यं प्रत्याह **न हीति**। द्वितीयं प्रतिविधत्ते **न चेति**। **इन्द्रियेति**। विशेषणविशेष्यभावस्य गुरुमते संसर्गत्वानुपगतेरिति भावः। **अविसंवादीति**। गुणक्रियाद्युपरागेण द्रव्यादिप्रतीतौ पर्यवसानगत्या समवायविषयकतां गुरून्प्रत्यनुमिमानानां नैयायिकानां गुणक्रियाद्युपरक्तद्रव्यादिप्रतीतिः प्रतियोग्यनुयोगिभिन्नसंबन्धवृत्तिसंसर्गतानिरूपिका, विशेष्यतासमानाधिकरणधर्मप्रकारकप्रवृत्तिजनकत्वे सति विशेषणाभिमतवृत्तिप्रकारतानिरूपितद्रव्यादिविशेष्यताघटितधर्मावच्छिन्नेच्छावृत्तिजन्यतानिरूपकत्वात् दण्डीत्यादिप्रत्ययवदित्यनुमानं स्वरूपसंबन्धमादायार्थान्तरतामपहस्तयितुं साध्यशरीरे संबन्धविशेषणतया भिन्नाङ्गनिवेशनं, विसंवादिप्रवृत्तिजनके गुरुमतदिशाऽनैकान्त्यव्युदसनाय आद्यदलोपादानम्, निर्विकल्पकादिबुद्धौ तद्वारणायोत्तरदलनिवेश इत्यादि अविसंवादीत्यादितल्लिङ्गमित्यन्तस्य फलिताशयः।

**गूढ०**— **सत्यरजत इत्यादि**। तथा च जातिव्यक्तिबोधसहकृतासंसर्गाग्रह एव प्रवर्तक इति भावः। ननु तत्र जातिव्यक्त्योस्तादात्म्यग्रहादेव प्रवृत्तिरित्यत आह **न हीति**। **इन्द्रियेति**। इन्द्रियेण सह समवायस्य सन्निकर्षो भवन् संयोगो वा समवायो वा। नाद्यः। तथा सति समवायस्य द्रव्यत्वापत्तेः। न द्वितीयः। अस्यैव समवायस्य तत्त्वे आत्माश्रयः समवायान्तराश्रयणे चानवस्थापत्तेरिति। यद्वा समवायत्वं नित्यसंबन्धत्वं तच्चातीन्द्रियमेवेति भावः। **अविसंवादीति**। अविसंवादी यो व्यवहारस्तज्जनकत्वविशिष्टौ यौ साकाङ्क्षौ रूपरूपिणौ तयोः सहोपलम्भ इत्यर्थः।

**प्रदीपः**— **न चेति**। संसर्गाग्रहाभावे रजतत्वस्येदमाकारनिष्ठत्वेनाज्ञानादित्यर्थः।





**३८४ सु०— इदंरजतत्वाधारयोर्भेदाग्रहो वा सत्यरजते प्रवृत्तिहेतुः । अस्ति चासौ प्रकृतेऽपि । न च पुरोवर्तिनि रजतत्वाप्रतीताविच्छानुपपत्तिरिति वाच्यम् । रजतत्वेन सहागृहीतासंसर्गतया वा रजतादगृहीतभेदतया वा समीहितसाधनतानुमानोपपत्तेरिति ॥**

**यादु०— रजतत्वाप्रतीताविति** । पक्षे हेत्वप्रतीत्येष्टसाधनताऽनुमानासंभवादिति भावः । **रजतत्वेन सहागृहीतेति** । न पक्षे हेतुज्ञानमेव सर्वत्रानुमितिजनकं किन्तु हेत्वसंसर्गाग्रहो वा हेतुमद्भेदाग्रहो वेति भावः ।

**वं०प०—** भेदाग्रहस्य प्रवृत्तिहेतुत्वमुपपादयति **इदंरजतत्वाधारयोरिति** । रजतत्वाधारो रजतम् । रजतत्वाप्रतीतावित्यनन्तरं पक्षे हेत्वप्रतीत्येष्टसाधनतानुमानासंभवादिति शेषः । **रजतत्वसहेति** । तथा चेदमिष्टसाधनं रजतत्वेन सहागृहीतासंसर्गत्वात्, रजतादगृहीतभेदवत्वादित्यनुमानद्वयेनेष्टसाधनत्वानुमानाङ्गीकारेण रजतत्वस्या-हेतुत्वान्नोक्तदोष इत्यर्थः । **असंसर्गाग्रहभेदाग्रहयोरिति** । कोऽयं भेदो नामेत्यादिना भेदाग्रहस्य, असंसर्गो हि संसर्गाभाव इत्यादिनाऽसंसर्गाग्रहस्य च निरस्तत्वादित्यर्थः ।

**आनन्दः—** प्रकारान्तरेण प्रवृत्तिमुपपादयति **इदमिति** ।

**स०व्र०— इदंरजतत्वाधारयोर्भेदाग्रहो वेति** । जातिव्यक्त्योस्तादात्म्याभावेन तत्र तादात्म्यज्ञानादेः प्रवर्तकत्वाभावेन असंसर्गाग्रहस्यैव कारणत्वेन क्लृप्तत्वादत्रापि तस्यैव हेतुत्वमिति भावः । **रजतत्वाप्रतीताविच्छा-नुपपत्तिरिति** । पक्षे हेत्वप्रतीत्येष्टसाधनतानुमानासंभवादिति भावः । **रजतत्वेन सहागृहीतेति** । न पक्षे हेतुज्ञानमेवानुमितिजनकम् । किन्तु हेत्वसंसर्गाग्रहो वा हेतुमद्भेदाग्रहो वेति भावः । **निरस्तत्वादिति** । कोऽयं भेदो नामेत्यादिनेति शेषः ।

**विठ्ठ०—** भेदाग्रहस्य वा प्रवर्तकत्वमित्याह **इदंरजतत्वाधारयोरिति** । प्रवर्तकेच्छाद्युपायाभावेन विपर्ययाभ्युपगमे प्रवृत्त्ययोग इत्याशङ्क्य निराकरोति **न चेति** । रजतत्वेन सहेति समीहितसाधनतानुमानं खल्विच्छाजनकं तदसंसर्गाग्रहभेदाग्रहाभ्यामेवोत्पद्यत इति भावः ।

**चषकः— रजतत्वाप्रतीताविति** । इष्टसाधनतानुमापकरजतत्वहेतोः प्रकृतपक्षवृत्तित्वाग्रहे तादृशा-नुमित्यनुदयेन तन्नियन्त्रितप्रवृत्त्यनुदयप्रसङ्ग इति भावः ।

**गूढ०—** प्रकारान्तरेण प्रवृत्तिमुपपादयति **इदमिति** ।





**३८५ सु०— एतदप्ययुक्तम् ॥ असंसर्गाग्रहभेदाग्रहयोः निरस्तत्वात् । किञ्चैवं सति सविकल्पकप्रत्यक्षोच्छेदप्रसङ्गः । वस्तुमात्रग्रहस्यासंसर्गाग्रहस्य च निर्विकल्पकसाम्यात् । रूपरूपिभावः सविकल्पके चकास्ति, निर्विकल्पके तु वस्तुस्वरूपमात्रमिति भेद इति चेत् । कोऽयं रूपरूपिभावः । धर्मधर्मिणोः परस्पराकाङ्क्षाविषयत्वमिति चेत् । तत्किं तयोः स्वरूपमुतान्यत् । आद्ये तदपि निर्विकल्पके प्रकाशत एव । द्वितीये किं तदैन्द्रियक-मुतातीन्द्रियम् । प्रथमे कथमविकल्पके न प्रकाशेत । द्वितीये कथं सविकल्पके प्रकाशेत ॥ अथ तद्वस्तुदर्शनसापेक्षदर्शनं निर्विकल्पकेऽचकासदपि सविकल्पके भातीति चेत् । तर्हि न तत्संसर्गातिरिक्तमस्तीति संसर्गग्रहादेव सविकल्पकोपपत्तिः । न च निर्विकल्पकस्य प्रवर्तकत्वमस्ति । किञ्चासंसर्गाग्रहादेव सर्वत्र प्रवृत्त्यङ्गीकारे मध्यमवृद्धप्रवृत्तेरपि तथात्वेन बालस्य तदीयसंसर्गज्ञानानुमानोपायाभावात् पदानामन्वितार्थेषु व्युत्पत्त्यनुपपत्तौ- शाब्द-प्रमाणोच्छेदप्रसङ्गः ।**

**बिन्दुः— किञ्चैवं सतीति** । सविकल्पकप्रत्यक्षजनकत्वेनाभिमतानि घटोऽयं रजतमिद-मित्यादिज्ञानानि यदि संसर्गं नावगाहेरन् तर्हि निर्विकल्पकान्यापद्येरन् । संबन्धविषयकत्वाविषयकत्वकृतो हि सविकल्पनिर्विकल्पकयोर्विशेषः । तदभावे च ज्ञानमात्रस्य निर्विकल्पकत्वापत्त्या सविकल्पकोच्छेद इत्यर्थः । अस्तु सर्वं निर्विकल्पकं तावता को दोष इत्यत आह **न च निर्विकल्पकस्येति** ।

**परि०— एवं सतीति** । सर्वोऽपि व्यवहारो भेदाग्रहादित्यङ्गीकारे सतीत्यर्थः । कस्तर्हि व्यवहारहेतुरित्यतो निर्विकल्पकप्रत्यय एव हेतुर्भविष्यतीतिभावेन तत्र परोक्तसामग्रीमुपपादयति **वस्तुमात्रेति** । शङ्कते **रूपेति** । तथाच तादृश एव व्यवहारहेतुरिति भावः । अचकासदपीति पदविभागः । नन्वेवं तर्हि सविकल्पक एव मास्तु व्यवहारस्तु निर्विकल्पकादेवास्तु । तथाच न संसर्गग्रहस्वीकार इत्यत आह **न च निर्विकल्पकस्येति** ।

**गु०दी०— वस्तुदर्शनसापेक्षदर्शनम्** इत्यत्र धर्मिद्वयदर्शनजन्यदर्शनविषयत्वमित्यर्थः । **तर्हि नेति** । तत्संबन्धिद्वयदर्शनजन्यदर्शनविषयत्वं संसर्गातिरिक्तं नास्तीत्यर्थः ।

**यादु०— किं चैवं सतीति** । विशिष्टज्ञाने संसर्गो न भासत इत्यङ्गीकार इत्यर्थः । सकलसविकल्पकोच्छेद इत्यत्रेष्टापत्तिरित्यत आह **न च निर्विकल्पकस्येति** । तथा च सविकल्पकानङ्गीकारे प्रवृत्तिमात्रोच्छेदः स्यादिति भावः ।





**वं०प०— एवं सतीति** । विशिष्टज्ञानरूपे सविकल्पकज्ञाने संसर्गो न भासते । किं नामासंसर्गाग्रह एव तत्र विवक्षितस्तस्मादेव प्रवृत्तिरित्यङ्गीकार इत्यर्थः । तथाच निर्विकल्पकाद्भेदाभावप्राप्त्येति शेषः । तदुपपादयति **वस्तुमात्रेति** । **तदपीति** । अङ्गुलित्रयवन्निर्विकल्पके धर्मधर्मिस्वरूपप्रतीतौ तत्स्वरूपभूतं परस्पराकाङ्क्षितत्वमपि प्रतीतमेवेत्यर्थः । **भातीति** । निर्विकल्पके वस्तुदर्शनस्य जातत्वादिति भावः । **तदिति** । निर्विकल्पकेऽचकासत् । सविकल्पके चकासदित्यर्थः । सविकल्पकोच्छेदप्रसङ्ग इत्यत्रेष्टापत्तिं परिहरति **न चेति** । तथा च प्रवृत्तिमात्रोच्छेदः स्यादिति भावः । **तथात्वेन** असंसर्गाग्रहपूर्वकत्वेन । **बालस्येति** । पार्श्वस्थस्य व्युत्पित्सोरित्यर्थः । **तदीयेति** । अस्येयं प्रवृत्तिः संसर्गज्ञानपूर्विकेति मध्यमवृद्धसंबन्धिसंसर्गज्ञानानुमानेत्यर्थः । **अन्वितार्थेषु** । आनयनादिसंसर्गवत्सु गवादिरूपार्थेषु ।

**आनन्दः**— अतिदेशेन दूषयति **एतदपीति** । **एवं सतीति** । असंसर्गाग्रहमात्रस्यैव प्रवर्तकत्वे सतीत्यर्थः । वैषम्यं शङ्कते **रूपरूपीति** । **तयोः** धर्मधर्मिणोः । शङ्कते **अथेति** । तद्दर्शनं धर्मधर्मिणोः परस्पराकाङ्क्षित्वदर्शनं वस्तुदर्शनसापेक्षमित्यन्वयः । तत्र निर्विकल्पके भासते पूर्वं वस्तुदर्शनाभावात् । सविकल्पके च भासते । निर्विकल्पकरूपवस्तुदर्शनस्य पूर्वं जातत्वादिति भावः । नन्वस्तु निर्विकल्पकसाम्यं ततः को दोष इत्याशङ्क्य तथा सति निर्विकल्पकस्येव कस्यापि प्रवर्तकत्वं न स्यात् । न च निर्विकल्पकस्यापि प्रवर्तकत्वमस्तीति वाच्यम् । तथा सति तन्मात्रादेव प्रवृत्त्याद्युपपत्तौ सविकल्पकस्वीकारस्यानर्थक्यं स्यादित्याह **न चेति** । **तथात्वेन** असंसर्गाग्रहादेव भावेन ।

**कं०रा०— असंसर्गेति** । असंसर्गो हि संसर्गस्याभावः । स चेदंरजतत्वयोः स्वरूपमेव[१] परेषामिति कथं स्वरूपावभासे नावभासेतेत्यसंसर्गाग्रहस्य निरस्तत्वात्, भेदाग्रहस्य च कोऽयं भेदो नाम किं स्वरूपं किंवा पृथक्त्वमित्यादिना विकल्प्य निरस्तत्वादित्यर्थः । (१. तदवभासे इति प्र.पाठः सुधायाम् ।)

**श्रीनिधि०**— अत उक्तं **रूपरूपीति** । समवायसंबन्धिनो रूपलक्षणमेतत् । रूपरूपिसहोपलम्भ इत्युक्ते घटनिष्ठरूपपटयोस्सहोपलम्भे व्यभिचार इत्यत उक्तम् **साकाङ्क्षेति** । तावत्युक्ते नभो नीलमित्यादिरूपे समवायरहितज्ञानद्वयस्थलीये रूपरूपिसहोपलम्भे व्यभिचार इत्यत उक्तम् अविसंवादिव्यवहारजनकत्वविशिष्टेति असंसर्गाग्रहभेदग्रहयोः निरस्तत्वादिति । असंसर्गो हि संसर्गाभाव इत्यादिना कोऽयं भेदो नाम किं स्वरूपमित्यादिना च निरस्तत्वादित्यर्थः । निर्विकल्पके अचकासदपीति विभागः । **संसर्गातिरिक्तमिति** । संबन्धिदर्शनानन्तरं जायमानस्य संबन्धत्वनियमादिति भावः । **संसर्गाग्रहादेव सविकल्पकेति** । सविकल्पकत्वमन्यप्रयुक्तं नेत्यर्थः । अस्तु सविकल्पकोच्छेद इति चेत्तर्हि निर्विकल्पकात्प्रवृत्तिः प्रसज्येत न च तत्संभवतीत्याह **न च निर्विकल्पकेति** । नन्वेवमस्तु संसर्गज्ञानसिद्धिः तथापि असंसर्गाग्रह एव प्रवर्तको भवतीत्यतो वा आह **न चेति** । किञ्चिदिदमिति ज्ञानात्प्रवृत्तौ रजताद्यर्थिनो घटादावपि प्रवृत्तिः स्यान्न तत्रैवेति भावः ।





**वा०चं०**— तच्चानुभवबाधितमित्याह **किञ्चेति** । एवं प्रत्यक्षे संसर्गभानासंभवादसंसर्गाग्रहादेव प्रवृत्तिरिति वदन्तं प्रति प्रत्यक्षविशेषोच्छेदमभिधायासंसर्गाग्रहादेव सर्वत्र प्रवृत्त्यङ्गीकारे शब्दप्रमाणसामान्योच्छेदं बाधकमाह **किञ्चेति** ।

**वा०र०**— **प्रत्यक्षविशेषेति** । सविकल्पिकेत्यर्थः । **शब्दप्रमाणे**त्यत्र सामान्येति पूरितम् ।

**स०व्र०**— **किं चैवं सतीति** । विशिष्टज्ञानेऽपि संसर्गो न भासत इत्यङ्गीकार इत्यर्थः । **संसर्गग्रहादेव सविकल्पकोपपत्तिरिति** । तथा च विशिष्टज्ञानापत्त्या निर्विकल्पकेऽत्राभासमानस्य सविकल्पके भानासंभवेन सविकल्पकोच्छेदः स्यादित्यर्थः । नन्वस्तु सविकल्पकोच्छेदः । न च प्रवृत्त्याद्यनुपपत्तिः निर्विकल्पकादपि तदुपपत्तेरित्यत आह **न च निर्विकल्पकस्येति** । **शाब्दप्रमाणोच्छेद इति** । मध्यमवृद्धप्रवृत्तिः संसर्गज्ञानपूर्विका प्रवृत्तित्वादिति संसर्गज्ञानपूर्वकत्वानुमानस्यासंसर्गाग्रहजन्यप्रवृत्तौ व्यभिचारेणासंभवादित्यर्थः ।

**वि०ठ०**— किञ्चासंसर्गाग्रहादिनैव प्रवृत्त्यङ्गीकारे सविकल्पमात्रोच्छेदापत्तिः जातिव्यक्तिसंसर्गविषयत्वादिनैव सविकल्पकस्य निर्विकल्पकाद्वैलक्षण्यं वाच्यं गत्यन्तराभावात् । संसर्गज्ञानाभावेऽपि प्रवृत्त्यङ्गीकारे सविकल्पकस्य व्यर्थत्वात् । न च वस्तुमात्रबोधादेः सविकल्पकत्वं धर्मवैशिष्ट्याविषयकत्वेन निर्विकल्पकसाम्यादित्याह **किञ्चैवं सतीति** । संसर्गाविषयत्वेऽपि धर्मधर्मिभावप्रकारकज्ञानत्वात् सविकल्पकत्वं संभवतीति शङ्कते **रूपरूपिभाव इति** । निर्विकल्पके अचकासदिति पदच्छेदः । संसर्गाग्रहाभावे सविकल्पकोच्छेद इत्युक्तम् अस्तु तदुच्छेदः निर्विकल्पकादेव प्रवृत्त्युपपत्तेरित्याह **न चेति** । अनुभवविरुद्धत्वादिति भावः ।

**चषकः**— सविकल्पकोच्छेदप्रसङ्गोपधायकसामग्रीघटकापाद्यानिष्टताविघटकेष्टापत्तिमपहस्तयते **न च निर्विकल्पकस्येति** ।

**गूढ०**— अतिदेशेन दूषयति **एतदपीति** । **एवं सतीति** । असंसर्गाग्रहमात्रस्यैव प्रवर्तकत्वे सतीत्यर्थः । वैषम्यं शङ्कते **रूपरूपीति** । **तयोः** धर्मधर्मिणोः । शङ्कते **अथेति** । तद्दर्शनं धर्मधर्मिणोः परस्पराकाङ्क्षित्वदर्शनं वस्तुदर्शनसापेक्षमित्यन्वयः । तन्न । निर्विकल्पके भासते । पूर्वं वस्तुदर्शनाभावात् । सविकल्पके च भासते । निर्विकल्पकरूपवस्तुदर्शनस्य पूर्वं जातत्वादिति भावः । नन्वस्तु निर्विकल्पकसाम्यं ततः को दोष इत्याशङ्क्य तथा सति निर्विकल्पकस्येव कस्यापि प्रवर्तकत्वं न स्यात् । न च निर्विकल्पकस्यापि प्रवर्तकमस्तीति वाच्यम् । तथा सति तन्मात्रादेव प्रवृत्त्याद्युपपत्तौ सविकल्पकस्वीकारस्यानर्थक्यं स्यादित्याह **न चेति** । **तथात्वेन** । असंसर्गाग्रहादेव ।

**प्रदीपः**— **रूपरूपिभावः** धर्मधर्मिभावः ।





**३८६ सु०— अथैवं मन्येत । अस्त्येव व्यवहर्तुरन्वयज्ञानं किं नाम सदपि न प्रवृत्तावुपयुज्यते, अतो न कश्चिद्दोष इति । तत्र किं तदन्वयज्ञानं प्रवृत्तौ नियतमुतानियतमिति वाच्यम् । आद्येऽस्तु तत्प्रवृत्तावुपयोगि मा वा भूत् । अन्यथाख्यातिं विना न रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरिति तावत्सिद्धम् । द्वितीये तु शब्दोच्छेदस्तदवस्थः ।**

**परि०— अन्यथाख्यातिं विनेति** । शुक्तौ रजतत्वसंसर्गज्ञानस्य प्राप्तत्वादिति भावः ।

**वं०प०— प्रवृत्तौ नियतमिति** । प्रवृत्त्यपेक्षया नियतपूर्वभावीत्यर्थः । **उपयोगि** जनकम् । रजतार्थिनः पुरोवर्तिनि प्रवृत्तिरन्यथाख्यातिं विना नेति तावत्सिद्धमित्यन्वयः । पुरोवर्तिनि रजतत्त्वसंसर्गज्ञानस्यैवान्यथाख्यातित्वात् । तस्य च प्रवृत्त्यपेक्षया नियतपूर्वभावित्वाङ्गीकारेण तां विना न प्रवृत्तिरिति तावत्सिद्धम् । तथाच सदपि न प्रवृत्तावुपयुज्यत इत्युक्तमसदिति भावः । द्वितीये अन्वयज्ञानस्य प्रवृत्त्यपेक्षया पूर्वमनियतत्वे । **शब्दोच्छेद इति** । मध्यमवृद्धप्रवृत्तेरपि तथात्वेन बालस्येत्यादिनोक्तरीत्येत्यर्थः ।

**आनन्दः—** शाब्दप्रमाणोच्छेदप्रसङ्गं परिहर्तुं शङ्कते **अथैवं मन्येतेति** । **अस्त्येवेति** । यद्यपि व्यवहारेऽन्वयज्ञानस्य कारणत्वाभावात्परेण व्यवहर्तुः अन्वयज्ञानमस्तीति न ज्ञातुं शक्यं तथापि यो व्यवहारः सोऽन्वयज्ञानपूर्वक इति व्याप्त्या व्यवहारस्यान्वयज्ञानपूर्वकत्वस्य निश्चितत्वादन्वयज्ञानोपायस्य सत्त्वादन्विते व्युत्पत्त्युपपत्तेर्न शास्त्रप्रामाण्योच्छेदः । न चायं नियमोऽप्रयोजक इति वाच्यम् । निरुपाधिकसहचारेण व्याप्तेर्निश्चितत्वात् । **द्वितीये त्विति** । अन्वयज्ञानस्यानियतत्वे प्रवृत्तौ तदभावेऽपि । असंसर्गज्ञानमात्रेणैव प्रवृत्तिरिति वक्तव्यम् । तथाचान्वयज्ञानोपायाभावेनान्विते व्युत्पत्त्यनुपपत्तौ शाब्दप्रमाणोच्छेदः स्यादित्यर्थः ।

**कं०रा०— द्वितीय इति** । संसर्गज्ञानस्य प्रवृत्तावनियतत्वे मध्यमवृद्धप्रवृत्त्या संसर्गज्ञानानुमानाभावेन पदानामन्वितार्थेषु व्युत्पत्त्यभावाच्छब्दप्रामाण्योच्छेदस्तदवस्थ इत्यर्थः ।

**श्रीनिधि०— अतो न कश्चिद्दोष इति** । गवानयनप्रवृत्तिः । गवानयनसंसर्गज्ञानसाध्या गवानयनप्रवृत्तित्वान्मदीयतादृशप्रवृत्तिवदित्यनुमानासंभवेऽपि गवानयनज्ञानपूर्विकेति साध्यनिर्देशेन भविष्यतीति भावः । **शाब्दोच्छेदस्तदवस्थ इति** । यस्यां प्रवृत्तौ तादृशज्ञानं नास्ति तत्र हेतोर्व्यभिचारादिति भावः ।

**वा०चं०—** ननु संसर्गस्य प्रत्यक्षविषयत्वासंभवादसंसर्गाग्रहादेव प्रवृत्तिं वदन्तं प्रति सविकल्पकोच्छेदशाब्दप्रमाणोच्छेदप्राप्तावपि स्वरूपेण संसर्गज्ञानमङ्गीकृत्याप्यसंसर्गाग्रहादेव प्रवृत्तिं वदन्तं मां प्रति न तावित्यख्यातिमतविशेषं शङ्कते **अथेति** । संसर्गज्ञानस्य प्रवृत्तिनियतत्वे अन्यथाख्यातिसिद्धिः । अनियतत्वे च व्यभिचारेण प्रवृत्त्या संसर्गज्ञानानुमानासंभवाच्छाब्दप्रमाणोच्छेदस्तवापीत्याह **तत्रेति** ।





**वा०र०— अख्यातिमतविशेषमिति** । अनेन पूर्वत्रान्वयज्ञानाभावमङ्गीकृत्यैव प्रवृत्त्युपपादनादिदानीमन्वयज्ञानाभ्युपगमो व्याहत इति न शङ्कनीयमिति सूचितम्।

**विठ्ठ०— व्यवहर्तुरन्वयज्ञानमिति** । जलाहरणादिप्रवृत्तिमतो मध्यमवृद्धस्यास्ति । संसर्गज्ञानमित्यर्थः । तर्हि संसर्गज्ञानस्यैव प्रवर्तकत्वमापन्नमिति शङ्कते **किं नामेति । सदपीति** । असंसर्गाग्रहादेव प्रवृत्त्युपपत्त्या संसर्गज्ञानस्यापि प्रवर्तकत्वोक्तौ गौरवादिति भावः । **अन्यथाख्यातिं विनेति** । इदंरजतत्वज्ञानस्यैव अन्यथाख्यातित्वेन प्रवृत्तौ नैयत्याङ्गीकारे अन्यथाख्यातिं विना प्रवृत्तिर्नेति प्रवृत्त्यन्यथानुपपत्त्या अन्यथाख्यातिरङ्गीकार्येत्यर्थः।

**गूढ०—** भावेन शाब्दप्रमाणोच्छेदप्रसङ्गं परिहर्तुं शङ्कते **अथैव मन्येतेति । अस्त्येवेति** । यद्यपि व्यवहारेऽन्वयज्ञानस्य कारणत्वाभावात्परेण व्यवहर्तुः अन्वयज्ञानमस्तीति न ज्ञातुं शक्यं तथापि यो व्यवहारः सोऽन्वयज्ञानपूर्वक इति व्याप्त्या व्यवहारस्यान्वयज्ञानपूर्वकत्वस्य निश्चिततत्वादन्वयज्ञानोपायस्य सत्त्वादन्विते व्युत्पत्त्युपपत्तेर्न शास्त्रप्रामाण्योच्छेदः । न चायं नियमोऽप्रयोजक इति वाच्यम् । निरुपाधिकसहचारेण व्याप्तेर्निश्चितत्वात् । **द्वितीये त्विति** । अन्वयज्ञानस्यानियतत्वे प्रवृत्तौ तदभावेऽपि । असंसर्गज्ञानमात्रेणैव प्रवृत्तिरिति वक्तव्यम्। तथाचान्वयज्ञानोपायाभावेनान्विते व्युत्पत्त्यनुपपत्तौ शाब्दप्रमाणोच्छेदः स्यादित्यर्थः।

**३८७ सु०— किञ्च नियतपूर्वभावि चाकारणं चेत्यनुपपन्नम् । प्रतिभासमानयोरसंसर्गाग्रहे सति संसर्गग्रहोऽवर्जनीयसन्निधिरिति चेन्न । विपर्ययस्यापि वक्तुं शक्यत्वात् । अवश्यं चैतदेवम् । व्यवहारो हि व्यवहर्तव्योपलंभनिबन्धनो युक्तः । न तु व्यवहरणीयविपर्ययानुपलब्धिनिबन्धनः। न हि घटव्यवहारो घटमतिमतिक्रम्य तद्विपर्ययाप्रतिभासे सति भवति । तदमी प्रयोगाः । विमतो व्यवहारो व्यवहर्तव्यज्ञानपुरःसरो व्यवहारत्वाद्धटव्यवहारवत् । विवादपदं ज्ञानं पुरोवर्तिविषयं तद्विषयव्यवहारजनकत्वात्संमतवत् । पुरोवर्ती वा रजतज्ञानगोचरो रजतानुपायत्वे सति तदर्थिप्रवृत्तिविषयत्वात्सम्यग्रजतवत् । विवादपदं रजतज्ञानमिदंज्ञानान्न भिद्यते प्रकाशमानात्ततोऽप्रकाशमानभेदत्वे सति प्रकाशमानत्वात्संप्रतिपन्नरजतज्ञानवदित्यादयः ॥**

**बिन्दुः— नियतपूर्वभावि चाकारणं चेति** । यद्यपि दण्डरूपादेर्नियतपूर्ववर्तिनोऽपि घटाद्यकारणत्वमस्ति, तथापि तत्रावश्यक्लृप्तपूर्ववर्तिन एव कार्यसंभवं तत्सहभूतत्वादिरूपमन्यथासिद्धत्वमिव प्रकृते न संभवति । शब्दोच्छेदापत्त्या असंसर्गाग्रहस्य कारणताया निरस्तत्वादिति भावः ।

**रजतानुपायत्वे सतीति** । रजतार्थिप्रवृत्तिविषये रजतनिर्माणकारणमहौषधीविशेषे व्यभिचारवारणाय **प्रकाशमानात्तत इति** । इदंज्ञानादित्यर्थः । परकीयज्ञानादौ व्यभिचारवारणाय प्रकाशमानत्वात् इति । शब्दादिना तत्प्रकाशे तु भेदग्रहस्याप्यवर्जनीयतया सत्यन्ताभावान्न व्यभिचारः । घटादिप्रतियोगिकभेदस्य प्रकाशमानत्वेनैव स्वरूपासिद्धेरुक्तं **प्रकाशमानात्तत इति** । **संप्रतिपन्नवदिति** । इदंज्ञानवदित्यर्थः । विशेषव्याप्तिरेवेहाभिप्रेता । तेनेदंत्वेन प्रकाशमानाच्छुक्तिकाशकलादप्रकाशमानभेदत्वे सति प्रकाशमाने मिथ्यारजते विशिष्टहेतोरपि व्यभिचार इति चोद्यानवकाश इति ध्येयम् ।

**परि०**— आद्ये दोषान्तरमाह **किञ्चेति** । **विपर्ययस्यापीति** । संसर्गग्रहे सति असंसर्गाग्रहोऽवर्जनीयसन्निधिरिति त्वदुक्तविपर्ययस्यापीत्यर्थः । तर्हि विनिगमनाविरहात्संसर्गग्रह एव प्रवर्तक इत्यस्य भङ्ग इत्यत आह **अवश्यं चेदमिति** । **विमत इति** । शुक्ताविदंरजतमिति व्यवहार इत्यर्थः । रजतोपाये व्यभिचारनिरासाय रजतानुपायत्वे सतीति । प्रतियोगिज्ञानाभावेन अन्यथोपपत्तिवारणाय प्रकाशमानादिति । धर्म्यज्ञानेनान्यथोपपत्तिनिरासाय प्रकाशमानत्वादित्युक्तम् । विवादपदमिदंज्ञानं रजतज्ञानान्न भिद्यते उक्ताद्धेतोरित्यादिरादिपदार्थः ।

**गु०दी०**— **न तु व्यवहरणीयविपर्ययानुपलब्धिनिबन्धन** इत्यत्र व्यवहरणीययोः पुरोवर्तिरजतयोः संसर्गस्तस्य विपर्ययानुपलब्धिरभावाग्रहणं तन्निबन्धनो नेत्यर्थः । **रजतानुपायत्वे सति तदर्थिप्रवृत्तिविषयत्वात्** इति हेतौ रजतप्राप्त्युपायभूतापणे व्यभिचारव्युदासाय रजतानुपायत्वे सतीति विशेषणम् ।

**यादु०**— ननु नियतपूर्वभाविनोऽप्यन्यथासिद्धत्वादकारणत्वमुपपद्यत इत्याशङ्क्ते **प्रतिभासमानयोरिति** । **विपर्ययस्यापीति** । संसर्गग्रहे सत्यसंसर्गाग्रहोऽवर्जनीयसन्निधिरित्यपि वक्तुं शक्यत्वादित्यर्थः । नन्वेवं विनिगमकाभावादुभयोरपि कारणत्वमस्त्विति तटस्थशङ्कायामाह **अवश्यं चैतदेवमिति** । तथाऽनुभवाल्लाघवाच्चेति भावः । अत्र व्यवहारपदेन प्रवृत्तिरेवाभिमताऽतो नासङ्गतिरिति ध्येयम् । अत्र प्रवृत्तिवदभिलपनस्यापि साध्यतया विवक्षितत्वात् । व्यवहारपदेनोभयमपि विवक्षितम् । अत एव पूर्वं प्रवृत्तिपदेनाभिलपनमप्युपलक्षणीयमतो नासङ्गतिरित्यप्याहुः । **इदंज्ञानान्न भिद्यत इति** । अत्र प्रकाशमाने रजतस्मरणे धर्मिज्ञानाभावेनेदंज्ञानादप्रकाशमाने व्यभिचारवारणाय विशेष्यमिदंज्ञानस्यैवाप्रकाशमानतादशायां प्रतियोगिज्ञानाभावेन प्रकाशमानभेदे तत्रैव व्यभिचारवारणाय सत्यन्तमिति ज्ञातव्यम् ।

**वं०प०**— **अवश्यं चैतदेवमिति** । संसर्गग्रह एव प्रवर्तकोऽसंसर्गाग्रहस्त्ववर्जनीयसन्निधिरित्येतदावश्यकमित्यर्थः । **व्यवहर्तव्योपलम्भनिमित्त इति** । व्यवहर्तव्यज्ञानसाध्य इत्यर्थः । व्यवहर्तव्यो रजतत्वसंसर्गस्तदुपलम्भस्तद्ग्रहः । **युक्त इति** । लाघवादित्यर्थः । व्यवहरणीयः संसर्गः । तद्विपर्ययोऽसंसर्गस्तदनुप-





लब्धिस्तदग्रहस्तन्निबन्धनो न भवति गौरवादित्यर्थः । लोकेऽदर्शनादित्याह **न हीति** । **घटमतिमतिक्रम्येति** । घटज्ञानसाध्यत्वं विहायेत्यर्थः । तद्विपर्ययाप्रतिभासेऽघटाप्रतिभासे । घटाभावाग्रहे सतीत्यर्थः । व्यवहर्तव्यधीः संसर्गधीः । रजतार्थिप्रवृत्तिविषयत्वं रजतसाधने व्यभिचारीत्यतो रजतानुपायत्वे सतीत्युक्तम् । रजतासाधनत्वे सतीति तदर्थः । **तत इति** । इदंज्ञानादित्यर्थः । **संप्रतिपन्नेति** । सत्यरजतस्थले इदंरजतमिति ज्ञानवदित्यर्थः । हेतौ प्रकाशमानत्वादित्येवोक्ते आपणस्थरजते इदंरजतमित्यनुभवानन्तरं देशान्तरं गतस्य तद्रजतमिति रजतस्मरणं जातमनन्तरमिदं शुक्तिकाशकलमिति च ज्ञानं जातं तदा तस्मिन् रजतस्मरणे प्रकाशमानत्वे सत्यपीदं ज्ञानाद्भेदस्यैव सत्त्वेन व्यभिचारः स्यादतः सत्यन्तम् । तथाच प्रकाशमानादिदंज्ञानात्प्रकाशमानभेदवत्वस्यैव सत्त्वेनाप्रकाशमान-भेदवत्वाभावान्न व्यभिचारः । प्रकाशमानादिति पदत्यागे रजतस्मरणानन्तरमिदंशुक्तिकाशकलमिति ज्ञानं न जातम् । तदानीं तस्मिन् रजतस्मरणे इदंज्ञानरूपप्रतियोगिज्ञानाभावेन ततोऽप्रकाशमानभेदवत्वे सत्यपीदंज्ञानाद्भेदस्यैव सत्त्वेन व्यभिचारः स्यादत उक्तं **प्रकाशमानात्तत इति** । एवं च न व्यभिचारः । तावत्युक्ते यदा रजतानुभवानन्तरं रजतस्मरणमेव न जातमिदं शुक्तिकाशकलमिति ज्ञानं च जातं तदा तस्मिन्प्रकाशमाने रजतस्मरणे प्रकाशमानात्तत इदं शुक्तिकाशकलमिति ज्ञानादप्रकाशमानभेदवत्वमस्ति रजतस्मरणरूपधर्मिज्ञानस्यैवाभावेन कुत्र भेदप्रकाशः स्यादतस्तत्र हेतुसत्त्वेऽपि वस्तुगत्येदं ज्ञानात्स्वरूपसद्भेदस्यैव सत्त्वेन व्यभिचारः स्यादतः प्रकाशमानत्वादित्युक्तम् । एवं च न व्यभिचार इति द्रष्टव्यम् ।

**आनन्दः**— नियतपूर्वभावित्वेऽपि अन्यथासिद्धत्वान्न करणत्वमिति शङ्कते **प्रतिभासमानेति** । **विपर्ययस्यापीति** । संसर्गग्रह एव कारणम् असंसर्गाग्रहस्त्ववर्जनीयसन्निधिरिति । **विपर्ययस्येति** । तत्र विनिगमकाभावेन संसर्गग्रह एव कारणमिति । न निश्चेतुं शक्यमित्यत आह **अवश्यमिति** । **विमत इत्यादि** । अत्र हि व्यवहर्तव्यं शुक्तिरजतं वा तत्संसर्गो वा तज्ज्ञानपुरःसरत्वे साधिते तदन्यथाख्यातिरूपमेव सिध्यतीति भावः । **रजतानुपायत्वे सतीति** । अत्र रजतार्थिप्रवृत्तिविषये रजतोपाये रजतज्ञानगोचरत्वाभावेन व्यभिचारः स्यादिति सत्यन्तं घटादौ व्यभिचारवारणाय विशेष्यम् । **प्रकाशमानात्तत इत्यादि** । अप्रकाशमानभेदत्वे सति प्रकाशमान-त्वादित्युक्ते पटज्ञानाप्रकाश्ये ततोऽप्रकाशमानत्वे सति प्रकाशमानं घटज्ञानं भवति ततो न भिद्यत इत्यस्याभावेन व्यभिचारः स्यादिति प्रकाशमानात्तत इत्युक्तम् । आदिशब्देन रजतसंसर्गः शुक्तिनिष्ठत्वेन ज्ञानविषयः तन्निष्ठत्वेन प्रवृत्तिविषयत्वादिति द्रष्टव्यम् ।

**कं०रा०**— संसर्गज्ञानं प्रवृत्तौ नियतमपि न कारणमित्याद्यपक्षे दूषणान्तरमाह **किञ्चेति** । नियतत्वेऽपि संसर्गज्ञानस्यासंसर्गाग्रहेणान्यथासिद्धत्वान्न प्रवृत्तिकारणत्वमिति शङ्कते **प्रतिभासमानयोरिति** । **विपर्ययस्येति** । संसर्गग्रहे सत्यसंसर्गाग्रहस्यावर्जनीयसन्निधितयाऽन्यथासिद्धत्वमिति वैपरीत्यस्यापि वक्तुं शक्यत्वादित्यर्थः । **विवादेति** । विवादविषयीभूतं रजतज्ञानं शुक्तिविषयकं तद्विषयकव्यवहारजनकज्ञानत्वादित्यर्थः । अत्र रजतज्ञानमित्येव पक्षीकारे सत्यरजतज्ञानस्यापि पक्षत्वप्राप्त्यांऽशतो बाधः स्यात्तन्निरासाय विवादविषयीभूत-





मित्युक्तम् । हेतौ च ज्ञानत्वादित्येवोक्ते घटादिज्ञाने व्यभिचारः । तन्निरासाय शुक्तिविषयकव्यवहारजनकेति । तावत्युक्तेऽदृष्टादौ व्यभिचारस्तन्निरासाय ज्ञानपदम् । **सम्मतेति** । शुक्तिविषयकव्यवहारजनकशुक्तित्वप्रकारक-शुक्तिज्ञानवदित्यर्थः । **रजतानुपायत्वे सतीति** । एतच्च रजतार्थिप्रवृत्तिविषये रजतोपाये व्यभिचारवारणाय । रजतानुपायत्वमात्रं च घटादावनैकान्तिकमिति तद्वारणाय विशेष्यम् । **प्रकाशमानादिति** । एतच्चेदंज्ञानाप्रकाशदशायां ततोऽप्रकाशमानभेदे प्रकाशमाने पटादिज्ञाने व्यभिचारवारणाय । ततोऽप्रकाशमानभेदत्वे सतीति विशेषणं त्विदंज्ञानात्प्रकाशमानभेदे घटादौ व्यभिचारवारणाय । प्रकाशमानादिदंज्ञानाद्धर्मिज्ञानाभावेनाप्रकाशमानभेदे वस्तुनि व्यभिचारवारणाय विशेष्यम् ।

**श्रीनिधि०**— तर्हि विनिगमनाविरह इत्यत आह **अवश्यं चैतदेवमिति** । **रजतानुपायत्वे सतीति** । इदं च रजतसाधनस्यापि रजतार्थिप्रवृत्तिविषयत्वेन तत्र व्यभिचारवारणाय । **इदंज्ञानादिति** । इदंविषयक-ज्ञानादित्यर्थः । प्रकाशमानत्वादित्युक्ते घटादौ व्यभिचारः अतः अप्रकाशमानभेदत्वे सतीत्युक्तम् । ततः इदंज्ञानात् । तावत्युक्ते प्रतियोग्यस्फुरणकालीने घटादावेवातिव्याप्तिः अतः प्रकाशमानात्तत इत्युक्तम् । प्रकाशमानात्ततो-ऽप्रकाशमानभेदत्वे इत्येवोक्ते स्वास्फुरणकालीनघटादावेवातिव्याप्तिः । अतः प्रकाशमानत्वादित्युक्तम् । विमता प्रवृत्तिर्नासंसर्गमात्राग्रहमात्रजन्या प्रवृत्तित्वाद्विशिष्टज्ञानजन्यसंमतप्रवृत्त्यन्तरवदित्यादिरादिपदार्थः । अग्रहणनिवर्तक-तया ग्रहणप्रागभावनिवर्तकतया । तथा च सर्वेषां ज्ञानानां स्वस्वप्रागभावनिवर्तकतया बाधत्वापत्तेरिति भावः । अग्रहणनिवर्तकतयेत्यत्र भेदग्रहणनिवर्तकतयेत्यर्थ इति पक्षे तु घटः पटाद्भिन्नः घटज्ञानं पटज्ञानान्न भिन्नमित्यादिरूप-सर्वप्रत्ययानामित्यर्थः । **अतदर्थिनां** अभिलपनमनिच्छतां मौनिप्रभृतीनाम् । आदानादिकमनिच्छतां विरक्तादीनां च प्रतिबन्धकल्पनायोगादिति सत्यां सामग्र्यां यस्मिन् सति न कार्योत्पत्तिस्तदेव हि प्रतिबन्धकम् । कारणाभावादेव कार्यानुत्पत्तौ नेदं रजतमिति ज्ञानस्य व्यवहारप्रतिबन्धकत्वकल्पनमसङ्गतमिति भावः ।

**वा०चं०**— प्रवृत्तिसमनियतत्वेनान्यथाख्यातिमुपपाद्य प्रवृत्तिकारणत्वेनापि तामुपपादयति **किञ्चेति** । नन्वेवं सति न प्रवृत्तिकारणत्वनिश्चयः संसर्गज्ञानस्येत्यत आह **अवश्यं चेति** । एवमसंसर्गाग्रहादिनिरासेनान्यथा-सिद्ध्यादिपरिहारान्निष्प्रत्यूहाः प्रयोगा इत्याह **तदमी इति** । रजतार्थिप्रवृत्तिविषये रजतज्ञानागोचरे रजतोपाये-ऽव्यभिचारायाह **रजतेति** । आदिपदेनेदंज्ञानं रजतज्ञानान्न भिद्यते उक्तहेतोरेव, विमता प्रवृत्ती रजतपुरोवर्ति-विशिष्टज्ञानसाध्या रजतार्थिताजन्यपुरोवर्तिप्रवृत्तित्वादित्यादीनां सङ्ग्रहः । अत्र फलैक्येऽपि प्रकारभेदाद्भेदो द्रष्टव्यः ।

**वा०र०**— **एवं सतीति** । नियामकविशेषस्याभावे सतीत्यर्थः । व्यवहारो हीत्यादिव्यवहारपदं प्रवृत्तिपरमिति मनसि निधाय प्रवृत्तिकारणत्वेत्युक्तम् । तदमी इत्यत्र तच्छब्दव्याख्यानं एवमित्यादि परिहारादि-त्यन्तम् । अमी प्रयोगा इत्यस्य तात्पर्यं निष्प्रत्यूहाः प्रयोगा इतीति ज्ञेयम् । . . . . . . . . मीदाद्यादीत्यर्ताद्रजतार्थ इत्यादिग्रन्थस्यासङ्गतिशङ्कानवकाशः । **रजतार्थीति** । अत्राद्येन विशेषणेन हेतुसत्त्वाभिधानम् । द्वितीयेन





साध्याभावाभिधानम् । तृतीयेन रजतानुपायत्वविशेषणव्यावर्तकताभिधानमिति विवेकः । **प्रकाशमानात्तत** इति मूलम् । अत्र प्रकाशमानत्वादित्येवोक्ते तद्रजतमिति स्मरणे व्यभिचारस्तस्य प्रकाशमानत्वेऽपि इदंज्ञाना- द्भिन्नत्वेन साध्याभावादित्यत उक्तम् **अप्रकाशमानभेदत्वे सतीति** । घटादिभ्यः प्रकाशमानभेदतया पक्षे असिद्धिरिति तत्परिहाराय यद्यतोऽप्रकाशमानभेदं तत्ततो न भिद्यत इति विवक्षणे च यत्र इदमिति ज्ञानरूप- प्रतियोगिनो न ज्ञानं तत्रेदमिति ज्ञानादप्रकाशमानभेदत्वं स्मरणस्यापीति तत्रैव व्यभिचार इति तन्निरासाय प्रकाशमानादित्युक्तम् । प्रकाशमानादिदंज्ञानादपि रजतस्मरणं यदा स्मरणरूपधर्मिज्ञानाभावादप्रकाशमानभेदं भवति । तदा तत्रैव व्यभिचारपरिहाराय प्रकाशमानत्वादित्युक्तमिति ज्ञेयम् । यत्त्वन्यथाख्यातावत्र प्रकाशमाने रजतस्मरणे धर्मिज्ञानाभावेनेदंज्ञानादप्रकाशमानभेदे व्यभिचारवारणाय विशेषणमिदं ज्ञानस्यैवाप्रकाशमानत्वा- दशक्यप्रतियोगिज्ञानाभावेनाप्रकाशमानभेदे तत्रैव व्यभिचारवारणाय सत्यन्तमिति कृत्यनिरूपणं तदसत् । प्रकाशमान इत्यनेन हेतुसमर्पणाभिधाने **प्रकाशमानात्तत इति** मूले अवधित्वेनेदंज्ञानोत्त्या रजतस्मरणस्यैव धर्मितया तज्ज्ञानस्यैव प्राप्त्या तदभावोक्तिविरोधः । प्रकाशमानत्वमात्रस्य रजतस्मरणे प्राप्तव्यभिचार- परिहारायेदंज्ञानादित्यादिविशेषणसार्थक्यवर्णने सत्यन्तमित्युत्तरविरोधश्च । एतदनुसारेण प्रतियोगिज्ञानेत्यत्र रजतस्मरणरूपप्रतियोगीति प्राप्त्या पूर्वोत्तरासङ्गतिस्तद्वाक्य एवार्थासङ्गतिश्च । तद्दोषपरिहाराय नञः प्रश्लेषेण अप्रकाशमान इति पाठकल्पनेऽपि विशेष्यमित्येव वक्तव्यतया विशेषणमित्युक्त्ययोग एवाविशेषणपदस्य विशिष्यतेऽनेनेति विशेषणं व्यावर्तकमिति विवक्षया वा विशेष्यमिति पाठकल्पनया वा विशेष्यपरत्वेऽपि इदंज्ञानस्यैवाप्रकाशमानतेति कृत्यकथनायोग एव । अस्य प्रकाशमानादित्येतदंशकृत्यकथनतया प्रकाशमाना- दित्युक्तमित्येव वर्णनीयतया सत्यन्तमित्युक्तेरपरामर्शमूलकत्वम् । सत्यन्तमित्यस्य सत्यन्तगताप्रकाशमान- त्वादित्युक्तमित्यर्थे च लोकोत्तरं व्याख्यानचातुर्याविष्करणमित्यास्तां तावत् ।

**स०व्र०— अवश्यं चैतदेवमिति** । अत्र संसर्गज्ञानस्य व्यवहारं प्रति कारणत्वस्य क्लृप्तत्वात्तस्यैव प्रवृत्तिं प्रति कारणत्वं न त्वसंसर्गाग्रहस्येत्यत्र तात्पर्यान्न प्रकृतासङ्गतिरिति बोध्यम् ।

**विठ्ठ०—** आद्ये दोषान्तरमाह **किञ्चेति** । ननु न नियतपूर्वभावित्वमात्रेण कारणत्वनिश्चयः कारणत्वा- भावेऽपि कुलालसंबन्धिवस्त्रादिवदवर्जनीयसन्निधित्वोपपत्तिरिति शङ्कते **प्रतिभासमानयोरिति** । **विपर्ययस्यापीति** । संसर्गग्रह एव प्रवृत्तिं प्रति कारणं संसर्गग्रहे सति असंसर्गाग्रहो अवर्जनीयसन्निधिरिति वक्तुं शक्यत्वादित्यर्थः । तर्हि विनिगमकाभावात् संसर्गग्रह एव प्रवर्तक इति अस्य भङ्ग इत्यत आह **अवश्यं चैतदिति** । अत्र व्यवहारपदेन प्रवृत्तिरभिप्रेतेति ज्ञेयम् । विमतो व्यवहार इत्यभेदव्यवहार इत्यर्थः । रजतार्थिप्रवृत्तिविषये रजतज्ञानागोचरे रजत- साधने व्यभिचारवारणाय **रजतानुपायत्वे सतीति** । **प्रकाशमानात्तत इति** । घटपटावित्यत्र प्रकाशमानयो- र्घटपटयोर्व्यभिचारवारणाय अप्रकाशमानभेदत्वे सतीत्युक्तम् । तावत्युक्ते भेदप्रतियोगिज्ञानाभावेनाप्रकाशमाना- न्यथासिद्धिवारणाय प्रकाशमानात्तत इत्युक्तम् । धर्मज्ञानेनान्यथोपपत्तिनिरासाय प्रकाशमानत्वादित्युक्तम् ।





**३८८ सु०— किञ्च विपर्ययाभावे 'नेदं रजतमि'ति ज्ञानस्य बाधकत्वमनुपपद्यमानं तं गमयति । न हि तथात्वे बाधकत्वमस्ति । न तावदग्रहणनिवर्तकतया बाधकत्वम् । सर्वप्रत्ययानां तथात्वापातात् । नापि व्यवहारविच्छेदकत्वेन । अतदर्थिनां व्यवहारानुत्पत्तौ नेदं रजतमितिज्ञानस्याबाधकत्वप्रसङ्गात् । व्याघ्रचोरादिज्ञानस्यापि प्रवृत्तिविच्छेदकत्वेन बाधकत्वप्रसक्तेश्च । न चार्थस्य व्यवहारयोग्यताविच्छेदकत्वेन; समयान्तरेऽपि तत्र विभ्रमात्प्रवृत्त्यभावापत्तेः । न च व्यवहारप्रतिबन्धकत्वेन; अविवेकनिवृत्तौ कारणाभावादेव व्यवहारानुत्पत्तेः प्रतिबन्धककल्पनायोगात्, व्याघ्रचोरादिज्ञानस्य बाधकतापत्तेश्च । विमत-मयथार्थं बाध्यत्वाद् व्यवहारवदिति । अत एव भ्रान्तित्वप्रसिद्ध्याऽपि विपर्याससिद्धिः ॥**

**बिन्दुः— सर्वप्रत्ययानामिति** । स्वस्वप्रागभावनिवर्तकत्वेनेत्यर्थः । प्रागभावध्वंसः प्रति-योग्यतिरिक्त इति मतेनायं दोषः ।

**परि०**— हेतूनामप्रयोजकत्वनिरासाय विपक्षे बाधोच्छेद एव बाधक इति भावेन आह **किञ्च विपर्ययेति** । यद्वाऽनुमानेन विपर्ययं समर्थ्यार्थापत्त्यापि तं साधयति **किञ्चेति** । यद्वा वक्ष्यमाण-प्रयोगस्याप्रयोजकत्वशङ्कानिरासायान्यथोपपत्तिं निराह **किञ्चेत्यादिना** । **तथात्वे** विपर्ययाभावे । तथात्वापातात् बाधकत्वापातादित्यर्थः । **समयान्तरे** कालान्तरे । विमतमित्यतः प्राक् तदयं प्रयोग इति विपरिणामेनानुषङ्गः । अत्र सर्वत्र पक्षपरिष्कारः पूर्वोक्तरीत्यैव ध्येयः । **अत एवेति** । साधकानामुक्तत्वात् बाधकानां परिहृतत्वात्ताभ्यां हेतुभ्यामेवेत्यर्थः ।

**गु०दी०— न च व्यवहारस्य योग्यताप्रतिबन्धकत्वेन** इत्यत्र प्रतिबन्धकत्वे तु भ्रमसामग्र्या उत्तेजकत्वात् पुनर्भ्रमसंभव इति भावः ।

**यादु०— अविवेकेति** । भेदाग्रहेत्यर्थः । **प्रतिबन्धककल्पनेति** । सति पुष्कलकारणे यस्मिन्सति यन्नोत्पद्यते तस्यैव तत्र प्रतिबन्धकत्वादिति भावः ।

**३९१ वं०प०**— भेदाग्रहप्रसञ्जिताभेदव्यवहारबाधनेनैव नेदमिति विवेकज्ञानस्य बाधकत्वमुपपद्यते । तदुपपत्तौ चागृहीतविवेकस्य ज्ञानद्वयस्य भ्रान्तित्वमपि लोकसिद्धं सिद्धमिति यदुक्तं तद् दूषयति **किञ्चेत्यादिना** । **तथात्व इति** । विपर्ययाभाव इत्यर्थः । विपर्ययाभावेनेदंरजतमिति ज्ञानेन बाध्यं कुतो नास्तीत्यतः परिशेषमाह **न तावदिति** । **अग्रहणेति** । शुक्त्यज्ञानेत्यर्थः । **सर्वप्रत्ययानामिति** । घटादिज्ञानानामपि घटाद्यज्ञाननिवर्तकत्वेन बाधकत्वव्यवहारापातादित्यर्थः । **व्यवहारेति** । प्रवृत्तिविच्छेदकत्वेनेत्यर्थः । अतदर्थिनां रजतार्थिताशून्यानाम् ।





**अबाधकत्वेति** । उत्पन्नस्यैव हि विच्छेद इति भावः । **व्यवहारयोग्यतेति** । प्रवृत्तिविषयत्वयोग्यतेत्यर्थः । **समयान्तरे** कालान्तरे । **प्रवृत्त्यभावापत्तेरिति** । आदाविदं रजतमिति भ्रमो जातोऽभूत् । तदनन्तरं नेदं रजतमिति बाधकप्रत्ययेनार्थे शुक्तौ प्रवृत्तियोग्यता विनष्टा । पुनः कालान्तरे तस्यामेव शुक्ताविदं रजतमिति भ्रमानन्तरं प्रवृत्तिर्भवति सा न स्यात् । पूर्वं बाधकप्रत्ययेनार्थे शुक्तिशकले प्रवृत्तिविषयत्वयोग्यताया विनष्टत्वादिति भावः । **अविवेकनिवृत्ताविति** । नेदंरजतमितिज्ञानेन भेदाग्रहनिवृत्तावित्यर्थः । **कारणाभावादेवेति** । भेदाग्रहरूपकारणाभावादेवेत्यर्थः । **व्यवहारानुपपत्तेरिति** । प्रवृत्त्यनुपपत्तेरित्यर्थः । **प्रतिबन्धकेति** । सति पुष्कलकारणे यस्मिन्सति यन्नोत्पद्यते तत्तत्र प्रतिबन्धकम् । प्रकृते च पुष्कलकारणस्यैवाभावेन प्रतिबन्धककल्पनायोगादिति भावः । **बाधकत्वेति** । प्रवृत्तिबाधकत्वादिति भावः । तदेवं विपर्ययाभावे बाधस्यैवाभावप्राप्त्या नेदंरजतमिति ज्ञानस्य बाधकत्वायोगात्तदन्यथाऽनुपपत्त्या विपर्ययसिद्धिरिति भावः । अनुमानं चास्ति विपर्ययसद्भावे प्रमाणमित्याह **विमतमिति** । इदंरजतमिति ज्ञानमित्यर्थः । न केवलं नेदंरजतमिति ज्ञानस्य बाधकत्वान्यथाऽनुपपत्त्या विपर्ययसिद्धिः । किन्तु लोकप्रसिद्ध्याऽपीत्याह **अत एवेति** । अगृहीतविवेकस्य ज्ञानद्वयस्यानुपपन्नत्वादेवेत्यर्थः । **भ्रान्तित्वेति** । विशिष्टविषयकभ्रमरूपैकज्ञानप्रसिद्ध्याऽपीत्यर्थः ।

**आनन्दः**— एवमनुमानेऽन्यथाख्यातिषु साध्यबाध्यत्वान्यथानुपपत्त्यापि साधयन्बाध्यत्वस्यान्यथोपपत्तिं निरस्यति **किञ्चेति** । **तथात्वापातादिति** । बाधकत्वापातादित्यर्थः । **नापीति** । विच्छेदकत्वेन नाशकत्वेन अत्र व्यवहारस्य त्रिक्षणावस्थायित्वेन स्वयमेव नाशसंभवादित्यपि द्रष्टव्यम् । **समयान्तरेऽपीति** । न च विभ्रमेण पुनर्योग्यतोत्पद्यत इति । तस्याः स्वरूपत्वेन पुनर्जननासंभवात् । न च साध्यधर्मान्तरम् । प्रमाणाभावादिति भावः । फलितमनुमानमाह **विमतमिति** । अत एवेत्यस्यैव विवरणम् । **भ्रान्तित्वप्रसिद्ध्येति** । करणजन्यत्वमात्रस्योपाधित्वे ईश्वरज्ञाने साध्याव्यापकता स्यादिति ।

**कं०रा०— तथात्वे** विपर्ययाभावे । **अत एवेति** । उक्तरीत्या व्यवहारस्य तन्मते बाध्यत्वायोगेन बाध्यव्यवहारजनकतया अगृहीतभेदज्ञानद्वयस्य भ्रान्तित्वप्रसिद्धिविषयताया उपपादयितुमशक्यत्वादेवेत्यर्थः । न च वाच्यं विमतमयथार्थं बाध्यत्वाद्व्यवहारवदित्यत्र यद्बाध्यत्वं सिद्धान्त्यभिमतं तदेव तन्मतेऽपि भविष्यतीति । अयथार्थत्वेन विज्ञाततत्वस्य सिद्धान्त्यभिमतबाध्यत्वरूपत्वात्तस्य च विशिष्टविषयकायथार्थज्ञानाभावेन विशिष्टविषयायथार्थव्यवहारस्य परमते असंभवाद्बाध्यत्वरूपत्वानुपपत्तेः । यथा च विशिष्टज्ञानं विना व्यवहारासंभवस्तथोपपादितमधस्तात् । व्यवहारवदिति दृष्टान्तीकरणं तु पराभ्युपगममात्रेण ।

**श्रीनिधि०— अत एवेति** । यत एव विपर्ययातिरिक्तस्य न बाध्यत्वमत एव विपर्ययातिरिक्तस्य बाध्यत्वे हि भ्रान्तित्वमन्यथासिद्धमित्युक्तं परेणेति भावः ।

**वा०चं०**— एवमन्यथाविज्ञानमेव भ्रान्तिरित्यंशसूचितयुक्तिमभिधायान्यथाविज्ञातस्य सम्यग्विज्ञानमेव बाध इत्यंशसूचितं दूषणं वक्तुं वक्ष्यमाणे बाध्यत्वानुमाने अन्यथासिद्धिशङ्कानिरासायोपोद्घातमाह **किञ्चेति** ।





विपर्ययाभावे कथं बाधकत्वानुपपत्तिरित्यतो विपर्ययाङ्गीकारे बाध्यलाभात्तत्प्रसञ्जितान्यथाकारलोडनेनैव बाधकत्वोपपत्तावपि तदनङ्गीकारे बाध्यालाभान्न तदुपपत्तिरित्याह **न हीति** । तदर्थिनामिति विशेषणेऽप्यति- व्याप्तिरपीत्याह **व्याघ्रेति** । **न चेति** । व्यवहारानुपपत्तिस्थलेऽपि तद्योग्यताऽस्त्येवेति भावः । **न चेति** । पूर्वं व्यवहारयोग्यताप्रतिबन्धेऽपि समयान्तरे प्रवृत्त्युपपत्तिरिति भावः । **अविवेकेति** । सति पुष्कलकारणे कार्यानुत्पत्ति- प्रयोजकस्यैव प्रतिबन्धकत्वादित्याशयः । यदर्थमयं प्रयत्नस्तदाह **विमतमिति** । भेदाग्रहनिवर्तकत्वेन बाधकज्ञानस्य बाधकत्वोपपत्तौ भेदाग्रहमात्रेण भ्रान्तित्वप्रसिद्ध्यन्यथासिद्धावपि तदसंभवप्रतिपादनेन पूर्वज्ञानप्रसञ्जितान्यथा- कारलोडनेन तस्य बाधकत्वे वक्तव्ये पूर्वज्ञानस्याप्यन्यथाकारप्रसञ्जकत्वेनैव भ्रान्तित्वस्य वक्तव्यत्वाद्भ्रान्तित्व- प्रसिद्ध्यन्यथाऽनुपपत्त्याऽन्यथाख्यातिसिद्धिरित्याह **अत एवेति** ।

**वा०र०**— अत्रान्यथाविज्ञानमेव भ्रान्तिस्तत्प्रसञ्जितान्यथाकारलोडनं सम्यग्विज्ञानमेव बाध इत्यव- धारयता मतान्तराणि निरस्तानीत्यख्यातिवादोपक्रममूले विज्ञातस्यान्यथेति भाष्यस्थैवकारस्य द्वेधा योजनया प्रमेयद्वयसूचकत्वमिति वर्णितम् । तत्राख्यातिमतेऽन्यथाविज्ञानमेव भ्रान्तिरिति प्रथमावधारणसूचितयुक्तिकथनेन अन्यथाख्यातिस्वरूपानुपपत्तिनिराकरणस्यात्रोच्यते यत्तावदित्यादि ग्रन्थाभिप्रेततया प्रागुपवर्णनात्तदनुसारेणाव ङ्गा- क्रमेणान्यथाख्यातिकारणतत्प्रमाणतदन्यथासिद्धिप्रतिषेधादिनिरूपणस्यान्यथाख्यातिसाधकप्रयोगकथनान्त- ग्रन्थेन करणमित्येवमन्यथाख्यातिसमर्थनमन्यथाज्ञानमेव भ्रान्तिरित्याद्यवधारणयोजनायां तदंशसूचितयुक्तिकथनेन जातमितीत्यादयः प्रयोगा इत्यन्तग्रन्थस्यावधित्वं दर्शयन् तत्प्रसञ्जितान्यथाकारलोडनं सम्यग्विज्ञानमेव बाध इति द्वितीयावधारणयोजनया सूचितयुक्तिप्रतिपादनाय किञ्च विपर्ययाभाव इत्युक्त्वा ग्रन्थ इति पूर्वोत्तरग्रन्थविवेकं च वदन्नुत्तरग्रन्थमवतारयति **एवमन्यथाविज्ञानमेवेति** । एवमित्यस्येयताग्रन्थेनेत्यर्थः । तस्य चात्रोच्यत इत्यारभ्ये- त्यादय इत्यन्तेनेत्यर्थः पूर्वोक्तरीत्या ज्ञेयः । युक्तिमित्यस्यान्यथाख्यातिस्वरूपान्तरानभ्युपगतिः स्वाभिप्रेत- तत्स्वरूपे नैयायिकाद्यभिप्रेततत्स्वरूपपक्षे प्राप्तानुपपत्त्यप्रसक्तिः । स्वाभिप्रेततत्स्वरूपेऽनुभवविरोधाभावः उक्तरीत्या अवतरणादिसंभवः इत्यादिरूपमित्यर्थः । **बाध्यत्वानुमान इति** । विमतमयथार्थं बाध्यत्वादिति बाध्यत्वहेतुक- वक्ष्यमाणानुमाने बाध्यत्वहेतोरसंसर्गभेदाग्रहणव्यवहारविच्छेदकत्वादिनाऽभ्युपपत्तेः साध्यभूतायथार्थत्वगमकत्वायोग इति अन्यथासिद्धिशङ्केत्यर्थः । **उपोद्घातमिति** । अन्यथासिद्धिशङ्काया अनुमानप्रवृत्त्युत्तरमुत्थानेऽपि प्रथमत- स्तदनुत्थानमित्यादि न शङ्क्यम् । उपोद्घातप्रत्यये क्रियातट्टीकोत्थापनतन्निराकरणयोरुपपत्तेरदोषादिति सूचितमनेनेति ज्ञेयम् । न हि तथात्वे बाध्यमस्तीति वाक्ये विपर्ययानङ्गीकारे बाध्यं न लभ्यत इत्यर्थमभिप्रेत्य तदङ्गीकारे तु बाध्यं लभ्यत इत्यर्थादागतमिति दर्शयन् लाभफलं च वदन् तदनङ्गीकारे बाध्यालाभस्य च फलं बाध्यत्वानुपपत्तिरूपं दर्शयन्नुत्तरवाक्यमवतारयति **विपर्ययाभाव इति** । **सर्वप्रत्ययानामिति** मूलम् । सत्यस्थलीयायं घट इत्यादि सर्वप्रत्ययानां भेदासंसर्गाग्रहणनिवर्तकतया बाधकत्वेन व्यवहारः स्यादित्यर्थः । **नापि व्यवहारेति** । इदंरजतमिति ज्ञानानन्तरं प्रवृत्तिरूपो यो व्यवहारः प्राप्तस्तद्विच्छेदकत्वेनेत्यर्थः । **व्यवहारानुत्पत्ताविति** । तथाच नेदमिति ज्ञानस्य तत्र तद्विच्छेदकत्वाभावाद्बाधकत्वेन व्यवहारो न स्यादित्यर्थः । तदर्थिनां व्यवहाराविच्छेदकत्वेन बाधकत्वमिति





विशेषणान्नेदं बाधकमित्याशङ्कावारकतयोत्तरवाक्यमवतारयति **तदर्थिनामिति** । **विशेषणेऽपीति** । **अतिव्याप्तिरपीति** । अत्रापिपदस्य प्रसक्तेश्चेति मूलस्थचशब्दव्याख्यानव्याजेन प्रयोगात्तेन तदर्थिनामिति विशेषणप्रक्षेपात् प्रागुक्ताव्याप्तेरेव यथास्थितमूलानुसारेण समुच्चयो योजितः । न तु तदर्थिनामिति विशेषणोपादानेऽप्यतिव्याप्तिरिवाव्याप्तिरप्यायातीत्यभिप्रायेण । एतेन तदर्थिनामिति विशेषणोपादानेन नेदं रजतमिति ज्ञाने प्रागुक्ताव्याप्तिपरिहारसिद्धेरतिव्याप्तिरपीत्यपिपदेन तत्समुच्चयानुपपत्तिरिति दूषणानवकाशः । व्याघ्रेति मूलवाक्यस्य न दूषणान्तरकथनमात्रे तात्पर्यम् । अपि तु प्रागुक्ताव्याप्त्युद्धारशङ्कायां मास्तु तर्ह्यव्याप्तिरतिव्याप्तिस्तु स्यादित्यत्रैव । अत एव तत्त्वप्रदीपिकायां तदर्थिना च व्यवहाराविच्छेदकस्य बाधकत्वे चोरादिज्ञानस्यापि तद्विच्छेदकस्य बाधकत्वापत्तेरित्युक्तम् । अतोऽव्याप्त्युपमर्देन ग्रन्थोऽयं योजितष्टीकायामिति ज्ञेयम् । व्यवहारानुत्पत्तिस्थलेऽपीति पाटः । अनुपपत्तीति लेखकागतः । तथा च व्यवहारानुत्पत्तिस्थलेऽपि प्रवृत्तियोग्यतायाः सत्त्वात् तद्विच्छेदकेनैव नेदंरजतमित्यस्य बाधकत्वं संभवतीति नाव्याप्तिरिति भावः । **समयान्तरेऽपीति** मूलम् । योग्यतानाशेन तदसंभवादित्याशयः । **न चेतीति** । समयान्तरेऽपीत्युक्तदोषोद्धारशङ्केयम् । उक्तमूलेन तदुद्धाराप्रतीतेस्तं दर्शयति **पूर्वं व्यवहारेति** । योग्यताप्रतिबन्धो बाध इत्यपि नेत्यादि तत्त्वप्रदीपिकादौ योग्यताप्रतिबन्धकत्वरूपबाधाशङ्केनेऽपि योग्यताप्रतिबन्धे व्यवहारप्रतिबन्ध एव पर्यवसानाभिप्रायेण मूले व्यवहारप्रतिबन्धकत्वेनेत्येवोक्तमित्याशयेन तथा च प्रतिबन्धापाये पुनरपि भ्रमिष्यतीति नयनप्रसादिर्नी मनसि निधायोक्तं **योग्यताप्रतिबन्धेऽपीत्यादि** । अन्यथा व्यवहारप्रतिबन्धेऽपीत्येवावक्ष्यत् मूलानुसारादिति ज्ञेयम् । **अविवेकेति** मूलम् । विवेकग्रहणेन विवेकाग्रहणस्येति नयनप्रसादिन्यनुसारेण विवेकाग्रहनिवृत्तावित्यर्थः । **सति पुष्कलकारण इति** । उक्तस्यैव प्रतिबन्धकस्वरूपत्वेऽपि तत्त्वोद्योतटीकायां सति पुष्कलकारणे तज्ज्ञानप्रतिबन्धकं हि तदज्ञानमिति अज्ञानस्वरूपकथनावसरे तज्ज्ञानप्रतिबन्धकमित्येव वक्तव्ये सति पुष्कलेत्येतद्विशेषणान्तर्भावेन कथनं तु कार्यानुत्पत्तिप्रयोजकत्वमात्ररूपप्रतिबन्धकत्वस्वरूपमाश्रित्य; न तु कारणाभावादिव्यावर्तकं विशिष्टं प्रतिबन्धकत्वमाश्रित्येति न तद्विशेषणवैयर्थ्यम् । न च सति पुष्कलकारणे कार्यानुत्पत्तिप्रयोजकत्वस्य दोषसाधारण्यमिति वाच्यम् । तत्त्वोद्योतटीकाविवरणप्रपञ्चेऽस्माभिः पञ्चपादिकाद्यनुसारेण अज्ञानसाधनाय परेण कारणान्तरसद्भावमङ्गीकृत्य निमित्ततया दोषं चाङ्गीकृत्य तेनाज्ञानान्यथासिद्धिं चोपादानजन्यं सर्वं कार्यं भवतीत्यत उपादानतयाऽज्ञानमङ्गीकार्यमिति न दोषेणान्यथासिद्धिरिति परिहृत्य प्रतिबन्धकत्वेनाज्ञानस्य समर्थितत्वेन तत्सिद्धमज्ञानमुपादायात्र तत्प्रतिबध्यज्ञानसाधनस्याभिप्रेततयाऽज्ञानस्वरूपकथनावसरे दोषेति व्याप्तिपरिहारस्याकर्तव्यत्वादित्यादेः प्रतिपादितत्वेनादोषादित्युक्तं प्रसक्तानुप्रसक्तविषयप्रपञ्चेन । शिष्टं तत्रैव प्रतिपत्तव्यम् । तदयं प्रयोग इति पूरणीयमिति सूचयन् उपोद्घातमाहेत्युक्तं प्रपञ्चयन्ननुमानमवतारयति **यदर्थमिति** । भ्रान्तित्वप्रसिध्या कथं विपर्याससिद्धिः । बाधकज्ञानस्य भेदाग्रहनिवर्तकत्वेन बाधकत्वपक्षे भेदाग्रहमात्रेण भ्रान्तित्वप्रसिध्युपपत्त्या तदसिद्धेरित्यत उक्तं मूले **अत एवेति** । तत्परामृष्टार्थं दर्शयन् विपर्याससिद्धिप्रकारमुपदर्शयन्नेवोत्तरवाक्यमवतारयति **भेदाग्रहेति** । **उपपत्ताविति** । उपपत्तिश्चेत्स्यात्तर्हीत्यर्थः । **तदसंभवेति** । तथा बाधकत्वासंभवेत्यर्थः । **लोडनेन** । लोडनेनैवेत्यर्थः । **प्रसिध्यन्यथेति** । अन्यथोपपत्तेरभावादित्याशयः । वैवक्षिकत्वादिति सतोरपि कर्तृकर्मणोऽयं तदभावात्कार्याभावो यत्सद्भावे च



भवत्येव कार्यमित्येवंरूपेण विवक्षितत्वात् यादृच्छिकसंवादिलिङ्गविभ्रमादेस्तु अन्वयव्यतिरेकव्यभिचारेण तथात्वाभावादिति भावः ।

**स०व्र०— अतदर्थिनामिति** । अनेनैव प्रागुक्तो भेदाग्रहप्रसञ्जिताभेदव्यवहारस्य विद्यमानविषयकत्व-ज्ञापकत्वेन बाधकत्वमितिपक्षो निराकृतः । अतदर्थिनामभेदव्यवहारानुपपत्तौ तद्विषयासत्त्वावेदकत्वाभावेन तत्त्वानुपपत्तेः । यद्वा विमतो व्यवहारो व्यवहर्तव्यज्ञानपुरःसर इत्यादिप्रागुक्तप्रकारेणाभेदव्यवहारस्याभेदग्रहस्य असाध्यत्वोपपादनेन तस्य भेदाग्रहप्रसञ्जितत्वानुपपत्त्या तस्याः शङ्कितुमपि अशक्यत्वात्तमनाशङ्क्यैव पक्षान्तरमेव निराकृतमिति भावः । **प्रतिबन्धककल्पनायोगादिति** । सति पुष्कलकारणे यस्मिन्सति यन्नोपपद्यते तस्यैव तत्र प्रतिबन्धकत्वादिति भावः ।

**वि०ठ०— इदंरजतमिति** ज्ञानं एकविषयकं एकत्र व्यवहारजनकत्वादित्यादिरादिशब्दार्थः । एवमन्यथा-विज्ञानमेव भ्रान्तिरित्यंशसूचितां युक्तिमभिधाय अन्यथाविज्ञातस्य सम्यग्विज्ञान इत्यंशेन सूचितं दूषणं वक्तुं वक्ष्यमाणबाध्यत्वान्यतरासिद्धिशङ्कावारणायोपोद्घातमाह **किञ्चेति** । **तथात्वे** विपर्ययाभावे । तथात्वापातात् । **व्यवहारविच्छेदकत्वेन** असंसर्गाग्रहादिप्रयुक्तान्यथाव्यवहारविच्छेदकत्वेन । **अतदर्थिनामिति** । रजतापेक्षा शून्यानां पूर्वमेव व्यवहारानुत्पत्तौ पश्चादुत्पद्यमानस्येदंरजतमिति प्रत्ययस्य बाधकत्वाभावादित्यर्थः । **अर्थस्येति** । इदंरजतमिति ज्ञानस्येत्यर्थः । **समयान्तरेऽपीति** । कालान्तरे तस्मिन्नेव विषये विभ्रमेण व्यवहारदर्शनात् प्राचीनबाधस्यैव व्यवहारयोग्यतोच्छेदकत्वे ज्ञानव्यवहाराभावापत्तेरित्यर्थः । **अविवेकेति** । सति पुष्कलकारणे कार्यानुत्पत्तिप्रसञ्जकस्यैव वा प्रतिबन्धकत्वं प्रकृते च व्यवहारं प्रति अविवेक एव कारणं तन्निवृत्तौ च तत्कार्यव्यवहारनिवृत्तेर्नियतत्वात् नात्र प्रतिबन्धकल्पनमिति भावः । **व्याघ्रचोरेति** । तज्ज्ञानस्यापि व्यवहारप्रतिबन्धकत्वादिति भावः । यदर्थोऽयं यत्नस्तदाह **विमतमिति** ।

**चषकः—** अवर्जनीयसन्निधिरन्यथासिद्धिः । विमतो व्यवहारः प्रकृतसाध्यतदभावकोटिकविमति-विषयीभूता प्रवृत्तिः । तुरीयानुमाने प्रतियोग्यनुयोगिज्ञानाभावनियन्त्रितभेदज्ञानाभावाधीनहेतुमत्ताकघटादा-वनैकान्त्यमपहस्तयितुं हेतुतावच्छेदकघटकतया प्रतियोग्यनुयोगिनोः प्रकाशमानत्वांशनिवेशनम् । दर्शित-साधनानामप्रयोजकतानिरसनौपयिकीं बाधकाभिमतज्ञानस्य बाधकत्वानुपपत्तिम् । विपर्यासाधिकामर्थापत्तिं वाभिधत्ते **किं चेत्यादि** । तथात्वे विपर्यासानुपगमे बाधकाभिमतज्ञानस्य बाधकत्वमग्रहणनिवर्तकतया नियन्त्रितं व्यवहारविच्छेदकतानिबन्धनं व्यवहारयोग्यताविनाशकतानिघ्नं व्यवहारप्रतिबन्धकतावत्त्वं वेति कल्पचतुष्टयी-मनुसन्दधानः क्रमेण प्रतिविधत्ते **न तावदित्यादिना** । अग्रहणनिवर्तकतया । पुरोवर्तिनि शुक्तित्वस्य रजते वा असन्निहितत्वस्याग्रहणनिवर्तकतया । **सर्वेत्यादि** । घटादिप्रत्ययानामपि घटत्वाद्यग्रहणनिवर्तकतया बाधकत्वा-पातादित्यर्थः । **व्यवहारविच्छेदकत्वेन** रजतार्थिनेष्टशुक्तिकागोचरप्रवृत्तिध्वंसप्रयोजकत्वेन । **अतदर्थिन इति** ।





इच्छाघटितसामग्र्यभावादेव प्रवृत्तिरूपप्रतियोगिन एवानुत्पादेन तत्र बाधकज्ञानस्य तदृध्वंसप्रयोजकत्वस्य दुरुपपादत्वादिति भावः । **अर्थस्य** इदमंशस्य । **व्यवहारयोग्यताविनाशकत्वेन** प्रवृत्तिविषयतावच्छेदकीभूतेदन्त्वनाशकत्वेन । **व्यवहारप्रतिबन्धकत्वेन** रजतार्थिनिष्ठेदमंशविषयकप्रवृत्त्यनुत्पादप्रयोजकत्वेन । **अविवेकेति** । सामग्र्यभावादेव कार्यानुत्पादे तत्र कस्यचित्तदनुत्पादप्रयोजकत्वाकल्पनादिति भावः ।

**३८९ सु०— एवं च सति प्रत्ययत्वानुमानं कालात्ययापदिष्टं वेदितव्यम् । अदुष्टकरणजन्यत्वोपाधिग्रस्तं च ॥**

**एतेन रजतज्ञानत्वानुमानमपि निरस्तम् । अन्यथा 'विमतो व्यवहारो यथार्थो व्यवहारत्वात्, रजतविषयो वा रजतव्यवहारत्वादि'त्यपि स्यात् ।**

**परि०— एवं च सतीति** । भ्रान्तित्वस्य प्रमाणसिद्धत्वे सतीत्यर्थः । **प्रत्ययत्वेति** । विगीतः प्रत्ययो यथार्थः प्रत्ययत्वादिति पूर्वपक्ष्युक्तानुमानमित्यर्थः । विवादाध्यासितं (विवादपदं) रजतज्ञानं रजतविषयं रजतज्ञानत्वादिति प्रागुक्तं परकीयानुमानं च निराह **एतेनेति** । कालात्ययापदिष्टत्वादिदोषेणेत्यर्थः । शुक्तिविषयकत्वस्य साधितत्वादिति भावः । निरस्तानुमानद्वयेऽस्मदुक्तदोषेण दुष्टत्वानङ्गीकारे चाभाससाम्यरूपबाधकं चाह **अन्यथेति** ।

**यादु०— अदुष्टकरणेति** । अत्र दुष्टकरणजन्यत्वाभावस्यैवोपाधित्वं विवक्षितम् । अतो नेश्वरज्ञाने साध्याव्यापकता । नन्वेवमपि दुष्टकरणजन्ये यादृच्छिकसंवादिनि ज्ञाने साध्याव्यापकतेति चेन्न । तादृशस्थले विद्यमानस्यापि दोषस्य जनकताऽनभ्युपगमात् । प्रामाण्यस्य स्वतस्त्वेन ज्ञानकरणमात्रेणैव तत्र यथार्थज्ञानजननात् । न च दोषस्यापवादकता । विषयसत्त्वस्य तदपवादकत्वात् ।

**वं०प०— एवं च सतीति** । भ्रमरूपज्ञानसिद्धावित्यर्थः । **प्रत्ययत्वानुमानमिति** । विगीतप्रत्ययो यथार्थः । प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानमित्यर्थः । किञ्च विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात्संमतवदित्युक्तानुमानं दूषयति **एतेनेति** । कालात्ययापदिष्टत्वेनेत्यर्थः । रजतज्ञानस्य शुक्तिविषयकत्वेन रजतविषयकत्वाभावादिति भावः । विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्संप्रतिपन्नवदित्यनुमानेन प्रत्ययस्य याथार्थ्यसाधने तथा विवादाध्यासितं रजतज्ञानं रजतविषयकं रजतज्ञानत्वात्संमतवदित्यनुमानेनेदंरजतमिति ज्ञानस्य रजतविषयकत्वसाधने प्रतिबन्दीं गृह्णाति **अन्यथेति** । **विमत इति** । इदंरजतमिति ज्ञानजन्य इत्यर्थः । तथा च अयथार्थव्यवहारो यस्त्वयाङ्गीकृतः स न स्यादिति भावः । रजतविषयो वेत्यत्रापि विमतो व्यवहार इत्यनुवर्तते । तथा च रजतार्थिप्रवृत्तेः शुक्तिविषयतायाः परसंमतत्वेन तस्याः रजतविषयकत्वसाधने ज्ञानवत्प्रवृत्तेरपि याथार्थ्यप्राप्त्याऽयथार्थप्रवृत्त्यङ्गीकारवादभङ्गप्राप्तेरिति भावः ।





**आनन्दः— अदुष्टेति**। विशेषणाच्च नैवमप्यपरिहारः। दुष्टकरणजन्यत्वाभावस्य विवक्षितत्वेन दोषाभावात्। **एतेनेति**। उक्तोपाधिनैवेत्यर्थः। आभाससाम्यमाह **अन्यथेति**। बाधितस्यापि यथार्थत्वाङ्गीकार इत्यर्थः।

**कं०रा०— एवं चेति**। अनुकूलतर्कसचिवैरुक्तानुमानैर्विगीतप्रत्ययस्यायाथार्थ्ये सिद्धे तद्याथार्थ्यसाधकप्रत्ययत्वानुमानं कालात्ययापदिष्टं वेदितव्यमित्यर्थः। **अदुष्टेति**। यद्यपि नित्येश्वरज्ञाने साध्याव्यापकत्वशङ्का स्वमते प्रसज्यते तथापि दुष्टकरणजन्यत्वाभावरूपोपाधिग्रस्तं चेत्यर्थो द्रष्टव्यः। **एतेनेति**। अनुकूलतर्कसनाथोक्तानुमानै रजतज्ञानस्य शुक्तिविषयतायाः सिद्धतया कालात्ययापदिष्टत्वेन विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वादित्यनुमानमपि निरस्तमित्यर्थः।

**श्रीनिधि०— एवं च सतीति**। निर्दोषमानान्यथानुपपत्त्यादिके सतीत्यर्थः।

**वा०चं०— एवं च सतीति**। उक्तानुभवानुमानादिभिरन्यथाज्ञाने सिद्धे सतीत्यर्थः। **अदुष्टेति**। दुष्टकरणजन्यत्वाभाव इत्यर्थः। तेन नेश्वरज्ञानमादाय साध्याव्यापकता। करणत्वस्य च वैवक्षिकत्वान्न यादृच्छिकसंवादिस्थलेऽपि सेति ध्येयम्। अनुमानद्वयेऽप्याभाससाम्यं चाह **अन्यथेति**।

**वा०र०—** कालात्ययापदिष्टत्वोपाधिक्यामनुमानान्तरनिरासोऽपि सिद्ध इत्याह **एतेनेति** मूलम्।

**स०व्र०— अदुष्टकरणजन्यत्वोपाधिग्रस्तं चेति**। दुष्टकरणाजन्यत्वोपाधिग्रस्तमित्यर्थः। अतो नेश्वरज्ञाने साध्याव्यापकता। यादृच्छिकसंवादिनि च न दुष्टकरणजन्यत्वम्। सतोरपि कर्तृकर्मणोर्यज्जातीयानन्तरं नियमेन कार्यमुत्पद्यते तत्साधनमित्येवंरूपवैवक्षिककरणत्वस्य तत्रासंभवेन दुष्टकरणजन्यत्वाभावरूपोपाधेस्तत्र सत्त्वेन न साध्याव्यापकत्वमिति भावः। केचित्तु नन्वीश्वरज्ञाने साध्याव्यापकत्वान्नास्योपाधित्वम्। न च जन्यत्वरूपपक्षधर्मावच्छिन्नसाध्याव्यापकत्वविवक्षणादीश्वरज्ञाने चावच्छिन्नसाध्याभावव्यापकत्वमिति वाच्यम्। तथापि यादृच्छिकसंवादिनि साध्याव्यापकत्वादिति चेन्न। अयादृच्छिकसंवादिजन्यज्ञानत्वरूपपक्षधर्मत्वावच्छिन्नसाध्यव्यापकत्वसंभवादित्याहुः।

**विठ्ठ०—** इदंरजतमिति ज्ञानस्यान्यथाख्यातित्वप्रसिद्ध्यन्यथानुपपत्त्या च तत्सिद्धिरित्याह **एवं च सतीति**। उक्तानेकप्रमाणैरिदंरजतमिति प्रत्ययस्यायाथार्थ्ये प्रमिते सति। विगीतप्रत्ययो यथार्थः प्रत्ययत्वादित्यनुमानं बाधितमिति सिध्यतीत्यर्थः। **अदुष्टकरणजन्यत्वेति**। दुष्टकरणजन्यत्वाभाव इत्यर्थो ज्ञेयः। **एतेन** ईश्वरज्ञाने याथार्थ्यसद्भावेऽपि अदुष्टकरणजन्यत्वाभावात् साध्याव्यापकत्वमिति निरस्तम्। अनीश्वरज्ञानमात्रस्यैवात्र विवक्षितत्वाद्वा कारणत्वस्य वैवक्षिकत्वात् न यादृच्छिकसंवादिस्थले साध्यव्यापकतेति ध्येयम्। **एतेनेति**। कालात्ययापदिष्टत्वेन विवादाध्यासितं रजतज्ञानं रजतविषयं रजतज्ञानत्वात् इत्यनुमानं निरस्तमित्यर्थः। निरस्तानुमानद्वये आभाससाम्यं चाह **अन्यथेति**। इदंरजतमिति ज्ञानानन्तरं क्रियमाणे रजतोचितादानादिव्यवहार इत्यर्थः।

**चषकः— एवं च सति** । निरवग्रहानुमानादिभिर्विपर्यासे सिद्धे । **अदुष्टेति** । दुष्टकरणजन्यत्वाभावलक्षणोपाधिदूषितं चेत्यर्थः । तेन नेश्वरज्ञानान्तर्भाविन साध्यव्यापकताभङ्ग इति भावः । न च प्रतारकोच्चरितवाक्यजनितान्वयबोधे दैववशसंपन्नयाथार्थ्यके साध्यव्यापकताऽभाङ्क्षीदिति वाच्यम् । तादृशान्वयबोधे दोषहेतुत्वासंप्रतिपत्तेः । सिद्धान्ते प्रामाण्यस्य गुणाजन्यत्वेन ज्ञानसामग्रीमात्रायत्तोत्पत्तिकतयाऽऽस्यभावेऽपि तत्र याथार्थ्यजननात् । दोषस्तु विषयसत्तयाऽपोदित इत्यवसेयम् । अन्यथा विपर्यासानुपगमे । विमतो व्यवहारः विशेष्यताव्यधिकरणप्रकारकेच्छाप्रवृत्तिलक्षणः । गुरुमते ज्ञानस्य याथार्थ्यं नियतम् । इच्छाप्रवृत्त्योस्तु क्वचिदयाथार्थ्यमुपगतं तुल्यदिशा तदप्यनुपेतव्यं स्यादिति भावः ।

**३९० सु०— यदपि 'ज्ञानत्वं च यथार्थमात्रवृत्ती'त्यादि; तत्र किमिदं ज्ञानत्वं सामान्यं वा प्रतिनियतं वा । नाद्यः । वादिप्रतिवादिनोराश्रयासिद्धेः । द्वितीये यथार्थज्ञानवृत्तिज्ञानत्वे सिद्धसाधनता । विमतज्ञानवृत्तिज्ञानत्वपक्षीकारेऽपि मात्रेति व्यर्थं स्यात् । तत्त्यागेन च प्रतिज्ञाने प्रथमानुमानदोष एव ॥ किञ्च यथार्थमात्रवृत्तीत्ययथार्थावृत्तित्त्वमात्रं विवक्षितम् । उतायथार्थज्ञानावृत्तित्वम् । आद्ये सिद्धसाधनम्, अयथार्थव्यवहारावृत्तित्वस्य सिद्धत्वात् । द्वितीये परस्याप्रसिद्धविशेषणता, अदुष्टसामग्रीजन्यमात्रवृत्तित्वमुपाधिश्च ॥**

**बिन्दुः— प्रथमानुमानोक्तदोष इति** । कालात्ययापदिष्टादिरित्यर्थः ।

**परि०—** ज्ञानत्वं यथार्थमात्रवृत्ति ज्ञानमात्रवृत्तिधर्मत्वात्प्रमात्ववदिति पूर्वपक्षिणोक्तमनुमानान्तरं च निराह **यदपीत्यादिना** । **विमतज्ञानेति** । भ्रमस्थलीयज्ञानेत्यर्थः । **तत्त्यागेन च प्रतिज्ञान इति** । मात्रपदं हित्वा यथार्थज्ञानवृत्तीत्येव प्रतिज्ञाकरणे सति याथार्थ्यसाधकेषु यत्प्राथमिकं विगीतः प्रत्ययो यथार्थः प्रत्ययत्वादित्यनुमानं तत्रोक्तो बाधितत्वरूपो दोष एवेत्यर्थः ।

**यादु०— वादिप्रतिवादिनोरिति** । प्राभाकरैर्गुणेषु गुणत्वावान्तरजातेरनङ्गीकारात् । अस्माभिरप्यनुगतसामान्यानङ्गीकारादिति भावः । **विमतज्ञानेति** । इदंरजतमिति ज्ञानवृत्तिप्रतिनियतज्ञानत्वपक्षीकार इत्यर्थः । **व्यर्थं स्यादिति** । न च धर्म्यंशे सिद्धसाध्यतापरिहाराय तदिति वाच्यम् । विमतग्रहणेनैव तस्य पक्षत्वपरिग्रहात् । **प्रथमानुमानदोष एवेति** । कालात्ययापदिष्टत्वमित्यर्थः । **अदुष्टसामग्रीति** । दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थः । अन्यथा प्रमात्वे साध्यव्यापकता । तत्र साध्यस्य सत्त्वेऽपि तस्येश्वरज्ञानेऽपि सत्त्वेनादुष्टसामग्रीजन्यमात्रवृत्तित्वाभावात् । परमतेन वा इदमुपाध्युद्भावनं तन्मते ईश्वराभावात् । उपाधौ मात्रपदं च समव्याप्त्यर्थं तत्त्यागे प्रमेयत्वादौ व्यभिचारात् । तस्यायथार्थव्यवहारवृत्तित्वेन तत्र साध्याभावात् । घटः पचतीति पाठे पचतीत्यत्र





प्रकृतिप्रत्यययोरपि प्रत्येकं प्रयोगविषयत्वमभिप्रेतम् । तथा च घटः पचनं कर्तेत्यपार्थकादित्युक्तं भवति । अनन्वितस्यैवापार्थकत्वात् । अन्यथा क्रियाकारकभावेनान्वयासंभवेनेदमपि बाधोदाहरणमेव स्यात् । पचन्तीति पाठे तु स्फुटमपार्थकत्वम् ।

**वं०प०**— इत्यादीत्यादिपदेन ज्ञानमात्रवृत्तित्वात्प्रमात्ववदिति हेतुदृष्टान्तग्रहणम् । **असिद्धेरिति** । अनुगतसामान्यानङ्गीकारादिति भावः । **सिद्धसाधनतेति** । प्रतिनियतज्ञानत्वपक्षीकारे यथार्थज्ञानवृत्तिज्ञानत्वानि गृहीत्वा तेषां यथार्थज्ञानमात्रवृत्तित्वस्य सिद्धत्वात्सिद्धसाधनता स्यादित्यर्थः । **विमतज्ञानवृत्तिज्ञानत्वेति** । प्रतिनियतज्ञानत्वस्य पक्षत्वेऽपि न सिद्धसाधनता । इदंरजतमिति ज्ञानवृत्तिज्ञानत्वस्यैव पक्षीकरणादिति भावः । **प्रथमानुमानदोष एवेति** । विगीतप्रत्ययो यथार्थः प्रत्ययत्वात्संमतवदित्यनुमाने यो दोषः कालात्ययापदिष्टत्वरूपः स एव दोषोऽत्रापीत्यर्थः । **सिद्धत्वादिति** । पक्षीभूते ज्ञानत्व इति शेषः । **अप्रसिद्धेति** । अयथार्थज्ञानस्यैवानङ्गीकारादिति भावः । **अदुष्टसामग्रीति** । ननु प्रमात्वे साध्याव्यापकता । तत्रायथार्थज्ञानावृत्तित्वे सत्यप्यदुष्टसामग्रीजन्यमात्रवृत्तित्वं नास्ति । तदजन्ये ईश्वरज्ञानेऽपि सत्त्वादिति चेन्न । दुष्टसामग्र्यजन्यवृत्तित्वस्य विवक्षितत्वात् । यद्वेश्वरज्ञानस्य गुणदोषाजन्यत्वेन प्रमाऽप्रमाबहिर्भूतत्वेन तत्र प्रमात्वस्यैवाभावान्न साध्याव्यापकताशङ्केति द्रष्टव्यम् । अथवा परमतेनैवेदमुपाध्युद्भावनम् । तन्मते ईश्वराभावेन साध्याव्यापकताशङ्काया एवाभावादिति मन्तव्यम् । उपाधौ मात्रपदाभावे समव्याप्तिपक्षेऽभिधेयत्वे व्यभिचारः स्यात् । तस्यादुष्टसामग्रीजन्यवृत्तित्वेऽप्ययथार्थव्यवहारेऽपि सत्त्वेन यथार्थमात्रवृत्तित्वाभावात् । अतो मात्रपदम् । अभिधेयत्वस्य दुष्टसामग्रीजन्येऽपि सत्त्वेन व्यभिचाराभावादिति द्रष्टव्यम् । एवं प्रमेयत्वेऽप्युपाधेः सत्त्वेऽप्ययथार्थव्यवहारस्वरूपस्य सत्यत्वेन तत्रापि सत्त्वेन साध्याभावाद्व्यभिचारः स्यादतो मात्रपदम् । तस्य दुष्टसामग्रीजन्यज्ञानस्वरूपस्य सत्यत्वेन तत्रापि विद्यमानत्वान्न व्यभिचार इत्यपि द्रष्टव्यम्।

**आनन्दः**— **तत्त्यागेन** मात्रपदत्यागेन । **प्रथमानुमानदोष एवेति** । बाधकृतदोष एव उक्तप्रमाणैः पक्षीकृतज्ञाने यथार्थत्वस्य सिद्धत्वेन यथार्थत्वे साध्यमाने बाध इत्यर्थः । **अदुष्टेति** । अत्रापि जन्यमात्रवृत्तित्वस्योपाधित्वे प्रमात्वसाध्याव्यापकत्वं तस्येश्वरज्ञानेऽपि सत्त्वेन जन्यमात्रवृत्तित्वाभावात् । अत उक्तम् **अदुष्टसामग्रीति** । अत्रापि दुष्टसामग्रीजन्यमात्रवृत्तित्वाभावस्य विवक्षितत्वान्न दोषः । मात्रपदं च समव्याप्त्यर्थम् ।

**कं०रा०**— **तत्त्यागेनेति** । मात्रपदत्यागेन विमतज्ञानवृत्तिज्ञानत्वं यथार्थवृत्तीति प्रतिज्ञायामुक्तानुमानैरनुकूलतर्कसचिवैर्विमतज्ञानस्यायथार्थत्वेन निश्चितत्वात्कालात्ययापदिष्टत्वरूपप्रथमानुमानदोष एवेत्यर्थः । **अदुष्टेति** । दुष्टसामग्र्यजन्यमात्रवृत्तित्वमुपाधिरित्यर्थः । तेनेश्वरज्ञानादौ न साध्याव्याप्तिः । मात्रपदाभावे साधनवति ज्ञानत्वरूपपक्षे उपाधेः सत्त्वात्साधनव्यापकता स्यात्तन्निरासाय मात्रपदम् ।





**श्रीनिधि०— आश्रयासिद्धेरिति** । गुरुणा गुणगतजाते अनङ्गीकारात् अस्माभिरनुगतजाते अनङ्गीकारादिति भावः । **प्रथमानुमानदोष एवेति** । प्रत्ययत्वानुमानदोषः कालात्ययापदिष्टतेत्यर्थः ।

**वा०चं०—** धर्मिविकल्पप्रयुक्तदूषणालाभाय ज्ञानत्वस्य पक्षतया निर्देशोऽपि तत्प्रयुक्तदूषणं स्यादेवेत्याशयेनाह **तत्रेति** । **वादीति** । वादिना गुणगतजातेः प्रतिवादिना चानुगतसामान्यस्य क्वाप्यनभ्युपगमादिति भावः । प्रथमानुमानदोषः कालात्ययापदिष्टत्वम् । **अदुष्टेति** । अदुष्टसामग्रीजन्यवर्तिनि सत्तादावयथार्थज्ञानावृत्तित्वाभावेन समव्याप्तिभङ्ग इत्यतः समव्याप्तस्यैवोपाधित्वमिति पक्षे तदर्थं मात्रपदम् । दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थान्नेश्वरज्ञानत्वे साध्याव्यापकत्वम् । उपाधौ मात्रेति विशेषणं च पक्षे साधनाव्यापकत्वसिद्ध्यर्थम् । उपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति द्रष्टव्यम् ।

**वा०र०— अलाभायेति** । अप्राप्तय इत्यर्थः । **तत्प्रयुक्तं** धर्मिविकल्पप्रयुक्तम् । यद्यपीश्वरज्ञानत्वे यथार्थमात्रवृत्तित्वसाध्यवत्यपि नादुष्टसामग्रीजन्यमात्रवृत्तित्वमिति साध्याव्यापकत्वशङ्कोदेति । तथापि पूर्वोक्तरीत्या अत्रापि दुष्टसामग्र्यजन्यमात्रवृत्तित्वस्य विवक्षाया ज्ञातुं शक्यतया न साध्याव्यापकत्वमिति स्पष्टम् । शिष्यैरेवोह्यतामित्याशयेन मात्रपदकृत्यमेवाह **अदुष्टेति** । सत्तादावित्यादिपदेन प्रमेयत्वादिग्रहणम् । इत्यत इत्यस्य तदर्थमिति वक्ष्यमाणेनान्वयः । तत्र तदर्थमित्यस्य समव्याप्त्यर्थमित्यर्थः । तस्यानावश्यकत्वमित्यत उक्तं **समव्याप्तस्यैवेत्यादि** । अत्र संस्कारमात्रसहकृतमनोजन्यत्वोपाधीति स्मरणत्वसाधकानुमानीयोपाधिपरमूलव्याख्याने उपाधौ संस्कारेति मात्रेति च विशेषणं पक्षे साधनेत्युक्तं तदनुसारेण गुरुराजसंमतः पाठस्तु; दुष्टेतीति प्रतीकोपादानानन्तरमदुष्टसामग्रीजन्यवर्तिनि सत्तादौ अयथार्थज्ञानावृत्तित्वाभावेन समव्याप्तिभङ्ग इत्यतः समव्याप्तस्यैवोपाधित्वमिति पक्षे तदर्थं मात्रपदमित्यनन्तरं वस्तुतस्तु दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थान्नेश्वरज्ञानत्वे साध्यव्यापकत्वम् । उपाधौ मात्रेति विशेषणं च पक्षे साधनाव्यापकत्वसिध्यर्थम् । उपाध्यभावेन साध्याभावसाधनेऽसिद्धिपरिहारार्थं चेति द्रष्टव्यमित्यन्तः । तत्र वस्तुत इत्यनेन वक्ष्यमाणरीत्या साधनाव्यापकत्वादिसंपादनस्यान्तरङ्गतया तादर्थ्यमनुक्त्वा समव्याप्त्यर्थत्वाभिधानायोग इति पूर्वयोजनायामस्वरसं सूचयति **साधनाव्यापकत्वेति** । अदुष्टसामग्रीजन्यत्वस्येदमंशे सत्त्वेन तद्वृत्तित्वेन साधनव्यापकत्वपरिहारायादुष्टसामग्रीमात्रेति मात्रपदमुपात्तम् । ततश्च नेदमंशमादायापि उपाधिसत्त्वम् । तदंशे दुष्टसामग्र्यजन्यत्वेऽपि तस्यैव रजतांशे तत्सामग्रीजन्यतया विमतज्ञानत्वस्य दुष्टसामग्र्यजन्यमात्रवृत्तित्वं नेति युक्तं साधनव्यापकत्वम् । न चोभयांशेऽपि अदुष्टसामग्रीजन्यत्वमेवेति वाच्यम् । तथात्वे तस्य समीचीनज्ञानतुल्यतापत्तौ ग्रहणस्मरणवत्स्वविषयविवेकत्वप्रसङ्गात् । अन्यथा व्यवहारजनकत्वाभावप्रसङ्गाच्चेति भावः । **असिद्धीति** । उपाध्युन्नीतप्रतीतिपक्षेऽसिद्धिवारकमपि विशेषणं सार्थकम् । व्यभिचारवारकत्वनियमस्तु तदनुन्नीतप्रतिपक्ष एवेति व्यवस्थाश्रयणस्य शरीरजन्यत्वोपाधिविचारे तत्त्वनिर्णयटीकायामुक्तत्वादिति प्रागेवोक्त मिति ज्ञेयम् ।





**स०व्र०— वादिप्रतिवादिनोरिति** । अनेकानुगतसामान्यस्य तत्त्ववादिनानङ्गीकारात् । प्राभाकरेणापि तार्किकमते जातेरिवानुगतव्यवहारहेतुत्वादिना रूपादेरेकत्वाभ्युपगमेन व्यक्त्यैक्यरूपजातिबाधकेन ज्ञानत्वजातेरङ्गीकारेण वादिप्रतिवादिनोराश्रयासिद्धेरित्यर्थः । **मात्रेति व्यर्थं स्यादिति** । ननु भ्रमस्यापि धर्म्यंशे प्रमात्वेन सिद्धसाधनतापरिहारार्थं तदिति वाच्यम् । धर्म्यंशस्य तद्विषयत्वाभावात् । **अदुष्टेति** । ननु प्रमात्वे साध्याव्यापकत्वम् । तस्य यथार्थमात्रवृत्तित्वेऽपीश्वरज्ञाने यादृच्छिकसंवादिनि च वृत्तित्वेनादुष्टसामग्रीजन्यज्ञानमात्रवृत्तित्वाभावात् । न च दुष्टसामग्रीजन्यज्ञानमात्रवृत्तित्वाभावो विवक्षित इति न साध्याव्यापकत्वमिति वाच्यम् । तथा सति मात्रपदवैयर्थ्यापत्तेरिति चेन्न । दुष्टसामग्रीजन्यज्ञानावृत्तित्वे सति अदुष्टसामग्रीजन्यज्ञानावृत्तित्वस्यैवोक्तोपाध्यर्थत्वात् । मात्रशब्दस्य दुष्टसामग्रीजन्यज्ञानवृत्तित्वव्यावर्तकत्वेऽपि अजन्यज्ञानवृत्तित्वव्यावर्तकत्वाभावेन न साध्याव्यापकत्वमित्याशयः । केचित्तु दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थः । अतो नेश्वरप्रमात्वे साध्याव्यापकत्वमिति द्रष्टव्यम् । परमतेन चेदमुपाध्युद्भावनम् । तन्मते ईश्वरानङ्गीकारात् । उपाधौ मात्रपदं च समव्याप्त्यर्थम् । अन्यथा प्रमेयत्वादौ व्यभिचारात् । तस्यायथार्थव्यवहारवृत्तित्वेन तत्र साध्याभावादिति व्याचक्षते ।

**वि०ठ०— ज्ञानत्वं यथार्थमात्रवृत्तीत्यादि**पदेन शुक्तिकारजतत्वेनावभासते इत्यादि ग्रहणम् । तत्र तावत् ज्ञानत्वपक्षानुमाने पक्षभूतं ज्ञानत्वं विकल्पेन पृच्छति **तत्र किमिदमिति** । **वादिप्रतिवादिनोरिति** । वादिना मीमांसकेन गुणेषु अवान्तरजातेः अस्माभिश्चानुगतसामान्यस्वरूपस्यैवानङ्गीकारादित्यर्थः । **द्वितीय इति** । प्रतिनियतसकलज्ञानत्वानामपि पक्षत्वेन यथार्थज्ञानत्वेनाभ्युपगतज्ञानत्वांशे सिद्धसाधनतेत्यर्थः । प्रकृतविवादविषयज्ञानत्वमेव पक्षीक्रियते न तु सकलमपि ज्ञानत्वंमित्यत आह **विमतेति** । **मात्रेति** । **व्यर्थमिति** । व्यावृत्त्यभावादिति भावः । **प्रथमानुमाने दोष एवेति** । कालात्ययापदिष्टत्वमेव शुक्तिरजतादिज्ञानायाथार्थ्यस्य प्रमितत्वाभिधानादिति भावः । अयथार्थावृत्तित्वमात्रत्वमित्यत्र अयथार्थपदेन ज्ञानातिरिक्तायथार्थव्यवहारग्रहणम् । **अप्रसिद्धविशेषणेति** । अयथार्थं ज्ञानमेव नास्तीति मते तदवृत्तित्वस्य अप्रसिद्धत्वादिति भावः । **अदुष्टसामग्रीजन्यमात्रवृत्तित्वमिति** । अत्र दुष्टसामग्र्यजन्यमात्रवृत्तित्वमित्यर्थत्वात् नेश्वरज्ञानत्वे साध्याव्यापकता परमते ईश्वराभावात् तद्रीत्या वा एतदुद्भावनम् । उपाधौ समव्याप्त्यर्थं मात्रपदं तेन न प्रमेयादौ व्यभिचारः ।

**प्रदीपः— आद्ये त्विति** । संसर्गज्ञानस्य नियतत्वात्तस्मिन् सत्येव विपर्यय इति वादिप्रतिवादिनोरितरेण गुणेषु सामान्यं नाङ्गीकृतमस्माभिः स्वरूपमेवानभ्युपेयमित्यर्थः । **अदुष्टसामग्रीति** । अदुष्टसामग्रीजन्यमात्रवृत्तित्वाभिधाने नित्यायामीश्वरप्रमायां प्रमात्वस्य अयथार्थवृत्तित्वात्यन्ताभावाधिकरणत्वस्य दुष्टसामग्रीजन्यत्वस्याभावेन साध्यव्याप्तेस्तदर्थः । दुष्टसामग्र्यजन्यमात्रवृत्तित्वमिति वक्तव्यं मात्रग्रहणं चोपाधेः समव्यापकतामङ्गीकृत्य सत्ताप्रमेयत्वादौ व्यभिचारनिवारणार्थम् । न च समव्यापकता तथा समीचीनग्रहण एव तत्स्वविषयविवेचकत्वाप्रसङ्गादयथाव्यवहारजनकत्वाभावप्रसङ्गाच्चेति द्रष्टव्यम् । परेणेश्वरानभ्युपगमाद्वा तन्मतावलम्बनेनोपाध्युद्भावनमिति ।





**३९१ सु०— यच्च 'शुक्तिका रजतत्वेन नावभासत' इत्यादि; तदप्यसत् । मेरुः सर्षप इत्यादिवाक्यान्मेरोरपि सर्षपत्वेन प्रतिभासाद् दृष्टान्तस्य साध्यवैकल्यात् । अन्यथा तथाविधवाक्याभासं श्रुतवता तत्प्रतिषेधो न क्रियेताप्रसक्तत्वात् । न हि पदार्थप्रतिषेधो युक्तः ॥ अपि चैवं सति 'अग्निरनुष्ण' इति बाधितविषयस्य वाक्यस्य 'घटः पचति(न्ति)' इत्यपार्थकाद्भेदो न स्यात् ॥ ॥**

**यदपि 'इदं रजततादात्म्यमि'त्यादि । तच्चायुक्तम् । तदप्रतीतावाश्रयासिद्धेः, प्रतीतौ व्याघातात् । दृष्टान्तस्य साध्यसमत्वाच्चेत्यास्तां विस्तरः ॥ १ ॥**

**परि०—** शुक्तिका न रजतत्वेनावभासते तद्रूपेणासत्त्वात् । यद्यद्रूपेण असत् तत्तद्रूपेण नावभासते । यथा मेरुः सर्षपत्वेन । इदं रजततादात्म्यं न प्रत्येतुं शक्यम् असत्त्वात्कूर्मरोमवदिति पूर्वपक्षान्ते परोक्तमन्यदपि निराह **यच्चेति** । **पदार्थेति** । मेरुपदस्य सर्षपपदस्य वा योऽर्थः तस्य प्रतिषेधो न युक्तः प्रमितत्वात् । किन्तु तत्तादात्म्यस्यैवेत्यर्थः । व्यक्तमुक्तमेतत्तर्कताण्डवे योग्यतावादे । **एवं सतीति** । बाधितस्थले संसर्गबोधाभावे सत्यनन्वितवाचकपदादिप्रयोगरूपत्वात् घटः पचति कुण्डमजाजिनं दश दाडिमानि षडपूपा इत्याद्यपार्थकवाक्याद्भेदो न स्यात् । अन्वयाप्रतीतेरुभयत्र तुल्यत्वादिति भावः ।

**गु०दी०— आश्रयासिद्धेः** इत्यत्र प्रतिवादिभिः गुणगतजातेरनङ्गीकारात्, वादिभिर्जातेरेवानङ्गीकारादिति भावः । **मात्रेति व्यर्थम्** इत्यत्र अस्मिन् पक्षे यथार्थवृत्तीत्येतावतैव त्वदभिलषितसिद्धेः साध्ये मात्रपदवैयर्थ्यमित्यर्थः ।

**यादु०— साध्यसमत्वादिति** । पक्षसमत्वादित्यर्थः । तथा च तदप्रतीतावाश्रयासिद्धिः प्रतीतौ च व्याघात इति यथा पक्षे दूषणमुक्तं तथा दृष्टान्तेऽपि दूषणं वक्तव्यमित्यर्थः । यद्वा कूर्मरोम्णोऽपि भ्रान्तिविषयत्वसंभवात्साध्यं तत्र सन्दिग्धमित्याशयः ।

**वं०प०— इत्यादीत्यादिपदेन** तद्रूपेणासत्त्वात् यद्यद्रूपेणासत् तत्तद्रूपेण नावभासते । यथा मेरुः सर्षपत्वेनेत्यस्य ग्रहणम् । **अन्यथेति** । मेरुः सर्षप इति वाक्यान्मेरोः सर्षपत्वेन प्रतिभास एव न भवतीत्यङ्गीकारे तादृशवाक्याभासश्रवणानन्तरं मेरुः सर्षपो न भवतीति तादात्म्यरूपसंबन्धप्रतिषेधः क्रियते तन्न स्यात् । प्रतिषेधस्य प्रतियोग्यधिकरणसंसर्गज्ञानरूपप्रसक्तिपूर्वकत्वात्तस्याश्चात्राभावादिति भावः । ननु मेरुरूपस्य पदार्थस्य सर्षपरूपस्य पदार्थस्य च प्रत्यक्षसिद्धतया प्रसक्तत्वेन तत्प्रतिषेधः संभवतीत्यत आह **न हीति** । प्रत्यक्षबाधादेवेति भावः । मेरुः सर्षप इति बाधितवाक्यान्मेरोः सर्षपत्वरूपान्वयज्ञानमेव नोत्पद्यत इत्यङ्गीकारे बाधकान्तरमाह **अपि चैवं सतीति** । घटः पचतीति । घटः पचनकर्तेत्यर्थः । अपार्थकत्वात् गौरश्वः पुरुषो हस्तीतिवदनन्वितात् । अनन्वितमपार्थकमिति





वचनात् । तथा च बाधितापार्थकवाक्यद्वयादप्यन्वयज्ञानानुत्पत्तेस्तयोर्न भेदः स्यादित्यर्थः । इत्यादीत्यादिपदेन न प्रत्येतुं शक्यम् । असत्त्वात्कूर्मरोमवदित्यस्य ग्रहणम् । अत्र प्रष्टव्यम् । इदंरजततादात्म्यरूपपक्षः प्रतीतो न वा । द्वितीये आश्रयासिद्धिः । आद्ये न प्रत्येतुं शक्यत इति साधने व्याघात इत्याह **तदप्रतीतावित्यादिना** । **साध्यसमत्वादिति** । साध्यधर्मवत्तया साधयितुं योग्यं साध्यं पक्षस्तत्समत्वादित्यर्थः । यथा पक्षे विकल्प्य दूषणमुक्तमेवं दृष्टान्तेऽपि विकल्प्य दूषणं वक्तव्यमिति भावः । तथा हि दृष्टान्तीकृतं कूर्मरोम प्रतीतं न वा । द्वितीये दृष्टान्तरूपाश्रयस्यैवासिद्धिः । आद्ये प्रत्येतुमशक्यत्वरूपसाध्याभावेन साध्यवैकल्यमिति द्रष्टव्यम् । विस्तरः शब्दप्रपञ्चः । 'विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तर' इत्यभिधानात् ।

**आनन्दः— अन्यथेति** । मेरुः सर्षप इत्यादिवाक्यान्मेरोः सर्षपत्वेनावभासाभाव इत्यर्थः । ननु तत्पदार्थप्रतिषेध एव क्रियते इत्यत्राह **न हीति** । बाधितत्वादिति भावः । **भेदो न स्यादिति** । अबोधकत्वतौल्यादिति भावः ।

**कं०रा०— अपि चैवमिति** । बाधितसंसर्गविषयकस्य मेरुः सर्षप इत्यादिवाक्यस्याबोधकत्वेऽग्निरनुष्ण इति बाधितविषयस्य वाक्यस्य घटः पचतीत्यनन्वितवाचकपदप्रयोगरूपादपार्थकाद्भेदो न स्यात् । अबोधकत्व-स्योभयत्र साम्यादित्यर्थः । **दृष्टान्तस्येति** । कूर्मरोमरूपदृष्टान्तस्य प्रत्येतुमशक्यत्वलक्षणसाध्यवत्तया सन्दिग्धत्वेन पक्षसमत्वादित्यर्थः । तथा च दृष्टान्तत्वं तस्य न घटत इति भावः ।

**श्रीनिधि०— न हि पदार्थप्रतिषेध इति** । तथा सति मेरुसर्षप इत्यादिना तत्तत्पदार्थमात्रज्ञानं जायत इत्युक्तं स्यात् । न च तद्युज्यते । मेरुस्सर्षपो नेत्यादि निषेधस्य पदार्थविषयकत्वापातात् । **अन्यस्याप्रसक्तत्वादिति** । **अपि चैवं सतीति** । **विपर्ययानङ्गीकारे** असंसर्गाग्रहाङ्गीकारे । **अपार्थकादिति** । अनन्वितार्थप्रतिपादकं पदजातं वाक्यजातं वा अपार्थकम् । असंसर्गाग्रहस्य उभयत्र तौल्यात् तस्मादेकत्र संसर्गबोधः अपरत्र तदभाव इत्येव वैलक्षण्यं वाच्यमिति भावः । **दृष्टान्तस्य** कूर्मरोमादेः ।

**वा०चं०—** ननु मेरुसर्षपतादात्म्यं नैव प्रतिषिद्ध्यत इत्यतः प्रतिषेधस्यानुभवसिद्धत्वात्तादात्म्याप्रतिषेधे-ऽन्यस्याप्रसङ्गात्पदार्थप्रतिषेधो वक्तव्यः । स च पदार्थानां स्वरूपेण सत्त्वेन बाधितत्वान्न युक्त इत्याह **न हीति** । यद्वाऽस्तु तर्हि प्रसक्तत्वात्पदार्थानामेव प्रतिषेध इत्यतोऽयुक्तः स इत्याह **न हीति** । ननु मेरुः सर्षप इत्यस्यानन्वितत्वात्प्रतिषेध इत्यत आह **अपि चेति** । तर्ह्यग्निरनुष्ण इत्यस्य मेरुः सर्षप इत्यतोऽविशेष-त्वादनन्वितवाचकप्रयोगत्वादेव दुष्टत्वोपपत्तौ बाधितापार्थकयोर्भेदो न स्यादित्यर्थः । असतोऽपि प्रतीते-र्वक्ष्यमाणत्वेनासत्त्वादिहेतूनामप्रयोजकत्वादेः सुज्ञानत्वादुपरम्यत इत्याशयेनाह **आस्तामिति** । यद्वैतच्चक्षुरेतच्चक्षु-र्जन्ययथार्थज्ञानातिरिक्तज्ञानजनकं चक्षुष्ट्वादिन्द्रियत्वाद्वा चक्षुरन्तरवदिन्द्रियान्तरवच्च । विमतानि पदानि स्वस्मारि-तार्थान्वयप्रतिपादकान्याकाङ्क्षादिमत्पदकदम्बकत्वात्संमतवदित्याद्यन्यथाख्यातिसाधकानुमानानां विपर्ययानभ्युपगमे

प्रतिपक्षाप्रतिपत्तौ तन्निरासाय कथारम्भासंभव इत्यादिबाधकानां चोपपत्तौ तदनुपन्यासेन कथमुपरम्यत इत्यतोऽनुमानानामुपाधिप्रतिपक्षकलङ्कितत्वेन तन्निरासेन बहुयत्नसापेक्षेण न फलं परेषां तु वाचालतयाऽयुक्तो वाक्प्रपञ्चः। अविरुद्धसाधकबाधकयोरुक्तरीत्या सुज्ञानत्वादुपरम एवोचित इत्याशयेनाह **आस्तामिति** ॥ १ ॥

**वा०र०**— प्रतिषेधो न क्रियेतेत्यत्रेष्टापत्तिशङ्कानिरासकत्वेनोत्तरवाक्यं प्रवृत्तमित्याशयेन योजयति **ननु मेरुसर्षपेति**। न निषिध्यत इति कोऽर्थः। किं तथा प्रतिषेध एव नास्तीति। उत सत्त्वेऽपि तस्य विषयान्तरमितीति विकल्पं मनसि कृत्वाद्यदूषणं **प्रतिषेधस्येति**। द्वितीयं परिशेषयंस्तद्दूषणपरत्वेनोत्तरवाक्यमवतारयति **तादात्म्येति**। **अनन्वितत्वादिति**। दश दाडिमानि षडपूपा इत्यादिवदनाकाङ्क्षिताभिधानत्वादित्यर्थः। **बाधितेति**। अग्निरनुष्ण इत्ययं प्रमाणबाधितो व्यवह्रियते। कुण्डमजेत्येतदपार्थकमिति व्यवह्रियते। तदुभयत्रानन्वयसत्त्वेऽपि बाधिते प्रथमोपस्थित्यादिनिमित्तेन बाध एव दूषणम्। नानन्वितवाचकपदप्रयोगतयाऽपार्थकत्वम्। कुण्डमित्यादौ तु प्रथमोपस्थित्यादिना अपार्थकमेव। आकाङ्क्षाभावेनैव दुष्टत्वप्रतीतेः। स चायं भेदो न स्यादित्यर्थः। तत्त्वप्रदीपिकाद्युक्तरीत्याऽधिकमपि साधकं कुतो नोक्तमित्याशङ्क्य तत्र कृतचर्चस्यापर्यवसानमेवेति युक्ता। तत्रोक्तसाधकानुक्तिरित्येतदर्थकतया आस्तामित्येतदवतारयति **यद्वैतच्चक्षुरित्यादिना**। इत्यादीत्यादिपदेन ....................अनुमानान्तरसङ्ग्रहः। अत्राद्यमनुमानं चक्षुषु विभ्रमे प्रमाणम्। द्वितीयं शाब्दविभ्रमसद्भावे इति विवेकः। आद्येऽनुमाने एतच्चक्षुषोऽपि स्वजन्यप्राक्कालीनयथार्थज्ञानातिरिक्तेदानींतनयथार्थज्ञानजनकतामादाय सिद्धसाधनतापरिहाराय एतच्चक्षुर्जन्ययथार्थज्ञानत्वानधिकरणज्ञानजनकमिति साध्यार्थो विवक्षित इति ज्ञेयम्। चक्षुर्मात्रपक्षीकरणे चक्षुरन्तरजन्ययथार्थज्ञानत्वानधिकरणेनैतच्चक्षुर्जन्ययथार्थज्ञानेन सिद्धसाधनता। तन्निवृत्त्यर्थमेतदिति चक्षुर्विशेषितम्। एवं साध्येऽपि द्रष्टव्यम्। यथार्थज्ञानत्वानधिकरणज्ञानजनकमित्युक्ते प्राभाकररीत्या अप्रसिद्धविशेषणता। विरुद्धता चेत्यत एतच्चक्षुर्जन्येत्युक्तम्। चक्षुरन्तरजन्यज्ञानस्य यथार्थत्वेनाङ्गीकारेऽपि एतच्चक्षुर्जन्यत्वाभावादेव एतच्चक्षुर्जन्यत्वे सति यथार्थज्ञानत्वानधिकरणत्वमस्तीति नाप्रसिद्धविशेषणता नापि विरुद्धतोक्तिलब्धं दृष्टान्ते साध्यवैकल्यम्। व्याहतिनिवृत्त्यै यथार्थग्रहणम्। पक्षेत्वेतच्चक्षुर्जन्ययथार्थज्ञानत्वानधिकरणत्वमेतच्चक्षुर्जन्यत्वरूपविशेषणस्याभावमादाय न संभवति। व्याघातादतो यथार्थत्वरूपविशेष्याभावमादायैव पर्यवस्यतीति यथार्थत्वानधिकरणं किञ्चिच्चक्षुर्जन्यं ज्ञानं सिध्यतीति चाक्षुषाऽयथार्थज्ञानसिद्धिः। एवं लिङ्गाभासादिकमपि पक्षीकृत्य लैङ्गिकादिभ्रमः साधनीय इति भावः। **विमतानि पदानीति**। द्वितीये पदमात्रपक्षीकरणे गामानयेत्यादिषु यथार्थज्ञानजनकेषु सिद्धसाधनता। तदर्थं विमतग्रहणम्। आकाङ्क्षासन्निधिमात्रवन्ति पदानीत्यर्थः। पदानां देवदत्तोऽयमधीत इति वक्तृविशेषानुमापकतयाऽप्यन्वयप्रतिपत्तिजनकत्वेन सिद्धसाधनता तत उक्तं **स्वस्मारितेति**। पदकदम्बकत्वादित्युक्ते उरगस्तुरगः खदिर इत्यादिपदसमूहेष्वनैकान्तिकता तदर्थमाकाङ्क्षाग्रहणम्। तावत्युक्ते गामानय प्रासादं पश्येत्यसाकाङ्क्षयोरप्यसन्निहिततया परस्परमन्वयप्रतीत्यजनकयोर्गां पश्येत्यनयोरनैकान्तिकता। तन्निवृत्त्यर्थं सन्निधिमदिति। तावत्युक्ते चायमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामिति वाक्ये राज्ञ इति पुरुष इति च पदयोः सन्निधिमत्त्वेऽपि पुरुषपदनैराकांक्ष्येण परस्परसमन्वयप्रतीत्यजनकयोरनैकान्तिकता।





तदर्थमाकाङ्क्षाग्रहणं अधिको विचारः शब्दमणिमधुरानाथीग्रन्थानुसारेण कर्तव्योऽस्ति । न विलक्षणत्वाधिकरणीय-मूलगतविवादाध्यासितानि पदानीत्यनुमानविचारष्टीकायां करिष्यते । तदनुमानस्यागमानुमानतासाधकत्वेना-न्वयप्रमितिपूर्वकत्वसाध्यकत्वम् । योग्यतागर्भहेतुकत्वं विशेष इति ज्ञेयम् । **प्रतिपक्षाप्रतिपत्ताविति** । योग्यतारहितस्याप्याकाङ्क्षादिमतः प्रतीतिजनकत्वानङ्गीकारे प्रतिवादिवाक्यात् शब्दोऽनित्य इत्यादेरयोग्ययोः शब्दनित्यत्वयोः संसृष्टप्रतीत्यनुपपत्तौ तदनुवादाभावेन तन्निराकरणादिरूपकथनारम्भप्रसङ्गो बाधक इत्यर्थः । शब्दो नित्य इति शब्दस्यानित्यत्वे वादिना प्रतिपादिते सति प्रतिवादी यदि तन्न बुध्येत तदा अज्ञातस्य निराकरणानुपपत्त्या वादिपरिषद्भ्यां विज्ञातस्य स्वयमविज्ञानेऽविज्ञातार्थरूपनिग्रहस्थानापत्त्या च बुध्यत इत्यङ्गीकारे तज्ज्ञानस्य प्रतिवादिनि यथार्थत्वायोगेन विपर्यय एवाङ्गीकृतो भवतीति भावः । यद्यपीदं बाधकाभिधानं द्वितीयानुमाने अप्रयोजकत्वनिरासायैव तत्त्वप्रदीपिकायां कृतम् । तथापि विपर्ययानभ्युपगमे विपक्षे चेत्यनेनोक्तं बाधकं प्रथमेऽपि प्रसरत्येवेति उभयत्रापि तदभिधानं युक्तम् । द्वितीयानुमान एवैतदित्यप्याहुः । आदिपदेनैकाधि-करणकविरुद्धधर्मप्रतिपत्तिलक्षणविप्रतिपत्तेरेव त्वन्मतेऽसिध्या कथारम्भस्य सुतरामयोगाद्विप्रतिपत्तिनिरासस्य सुतमामयोगः । संसर्गप्रतिपत्त्यजनकं चेत्सर्वं वाक्यमनृतापार्थकनिरर्थकभेदासिद्धिप्रसङ्गः । यत्र समुदायार्थ-प्रतीतिसद्भावेऽपि वाक्यार्थबाधास्तत्रानृतत्वं यथा नदीतीरे पञ्चफलानीत्यादौ । यत्रावयवार्थप्रतीतिसद्भावेऽपि न समुदायार्थप्रतीतिस्तत्र दश दाडिमानीत्यादावपार्थकता । यत्र च नावयवार्थप्रतीतिरपि तत्र चटतकपानां जडदगब-त्वात् । छठथखफवदित्यादौ तत्र निरर्थकत्वम् । तथा चास्य भेदस्य संसर्गप्रतीतेः सर्वत्राभावेऽयोग इत्येतयोः बाधकयोः संग्रहः । **उपाधिप्रतिपक्षेति** । यद्यपि प्रथमानुमाने चक्षुश्चक्षुर्जन्ययथार्थज्ञानजनकत्वे सत्यतिरिक्तज्ञान-जनकं न भवति इन्द्रियत्वाच्छ्रावणवदिति प्रतिपक्षस्यैव द्वितीये च योग्यतावत्वादिरूपोपाधेरेव चाशङ्कानुसारेण प्रतिपक्षोपाधीति वाच्यम् । तथापि विशेषानुगतिभ्यामिति सूत्र इवाल्पाच्तरतयोपाधिग्रहणं प्रथमत इत्यदोषः । **तन्निरासेनेति** । प्रतिपक्षे मनस्यनैकान्त्येनोपाधेश्चाकाङ्क्षासन्निधिरहितपदे प्रयोज्यतावत्वसद्भावेऽपि साध्याभावेन साध्यसमव्याप्तत्वाभावादित्येवंरूपनिरासेनेत्यर्थः । **बहुयत्नेति** । बहिरिन्द्रियत्वस्य हेतुतायां नानैकान्त्यमिति शङ्कापरिहाराय मास्तु अनैकान्त्यम् । तथापि चक्षुषि स्वजन्ययथार्थज्ञानातिरिक्तरसादिज्ञानजनकत्वाभावेन सिद्धसाधनत्वं तु स्यादेव । आकाङ्क्षादिमत्वे सति योग्यतावत्वस्योपाधित्वे समव्याप्त्युपपत्तावपि व्यर्थविशेष्यत्व-मनिवार्यम् । आकाङ्क्षासन्निधिमत्वेऽपि योग्यताभावप्रयुक्तान्वयज्ञानाजनकत्वस्य वादिप्रतिवाद्युभयसंमते स्थले दर्शनाभावात् । आकाङ्क्षासन्निधिमतां योग्यतारहितानां च सर्वेषां पक्षीकरणात् । योग्यतावत्त्वस्यैव विषमव्याप्त-त्वेनोपाधित्वमप्ययुक्तम् । यदयोग्यार्थं तदन्वितप्रतिपत्तिजनकं नेत्यस्य उदाहरणाभावेन व्यतिरेकोपसंहारानुप-पत्त्योपाधिव्यतिरेकेण साध्यव्यतिरेकसाधनायोग इत्यादि बहुयत्नसापेक्षेणेत्यर्थः । सर्वथा साधकाद्यनुक्तिस्तु नास्तीत्याह **अविरुद्धेति** । ननूत्तरत्राप्यख्यातिमतनिराकरणमनुपपन्नम् । तन्निराकरणस्य प्रागेव सिध्या पुनस्तस्या-कर्तव्यत्वात् । न च प्राक्प्राभाकरमतमात्रनिराकरणं कृतमिदानीं तु रामानुजमतं निराक्रियत इत्यपुनरुक्तिरिति वाच्यम् ।





**स०व्र०**— ननु मेरोः सर्षपत्वस्याप्रसक्तत्वेऽपि मेरुसर्षपयोः प्रसक्तत्वात्तयोर्निषेधः किं न स्यादत आह **न हि पदार्थेति । घटःपचन्तीत्याद्यपार्थकादिति ।** एकवचनबहुवचनान्तयोः कर्तृक्रियावाचकपदयोरन्योन्यान्वयवदर्थबोधकत्वाभावादपार्थकत्वमिति भावः । केचित्तु । घटः पचतीति एकवचनान्तप्रतीकमुपादाय । ननु घटः पचतीति कथमपार्थकोदाहरणमनन्वितवाचकस्यैवापार्थकत्वात् । अत्र च क्रियाकारकभावेनान्वयसंभवात् । प्रत्युतेदमपि बाधोदाहरणमेवेति चेन्न । पचतीत्यत्र प्रकृतिप्रत्ययार्थयोरपि प्रत्येकं प्रयोगविषयत्वेनाभिप्रेतत्वात् । तथा च घटः पचनं कर्तेत्यपार्थकादित्युक्तं भवति । इदं च कुण्डमजाजिनमित्यादिवदपार्थकमेवेति न कोऽपि दोष इत्याहुः । बाधिते तदनवतारदशायां प्रत्यायकत्वम् अपार्थके तु न कदापि प्रत्ययजनकत्वमिति सर्वसंप्रतिपन्नो भेदस्तयोर्न स्यादिति भावः । **दृष्टान्तस्य साध्यसमत्वाच्चेति ।** पक्षसमत्वादित्यर्थः । तथा च तदप्रतीतावाश्रयासिद्धिः प्रतीतौ व्याघात इति यथा पक्षे दूषणमुक्तम् तथा दृष्टान्तेऽपि तद्दूषणं वाच्यमित्यर्थः ।

**विठ्ठ०**— तस्य यथार्थव्यवहारवृत्तित्वे तत्र साध्याभावात्, साधनाव्यापकतासिध्यर्थं वा तादात्म्यप्रतिषेधाभावेऽपि मेरुसर्षपरूपपदार्थप्रतिषेधो भवत्वित्यत आह **न हीति । अपि चैवं सतीति ।** एवं सति मेरुस्सर्षप इत्यादिबाधितस्थलेऽपि संसर्गबोधाभावेऽपि सति अग्निरनुष्ण इत्यस्य घटः पचतीत्याद्यपार्थकाविशेषाद्भेदो न स्यादिति भावः । घटः पचतीत्यत्र क्रियाकारकभावेनान्वयसंभवेऽपि पचतीत्यत्र प्रकृतिप्रत्ययार्थयोः प्रत्येकं प्रयोगविषयत्वेनाभिप्रेतत्वात्कुण्डमजाजिनं दश दाडिमानीत्यादिवत् अपार्थकमेवेति न कोऽपि क्षुद्रोपद्रवः । असतोऽपि प्रतीतेर्वक्ष्यमाणत्वात् असत्त्वादिहेतूनामप्रयोजकत्वादेः सुज्ञानत्वादुपरम्यत इत्याह **आस्तामिति ।**

**चषकः**— उपाधिशरीरे मात्रपदानुपादाने प्रमेयत्वादौ तादृशसाध्यविशेषिते उपाध्यभावेन समव्याप्तिभङ्गात् तन्निर्वाहाय तदुपादानमित्यपि व्याकुर्वते । **न हि पदार्थेति ।** अनलीकयोस्तत्तत्पदाभिधेयमेरुसर्षपयोः प्रत्याख्यानायोगेन वाक्यतात्पर्यगोचरालीकभूततादात्म्यस्यैव प्रत्याख्यानगोचरतोपेयेति भावः । **एवं सति** बाधस्थलेऽपि संसर्गबोधानुपगमे । **अपार्थकादिति ।** अनन्वितवाचकपदप्रयोगरूपात्कुण्डमजाजिनं दश दाडिमानीत्याद्यर्थकवाक्याद्बाधितार्थस्य भेदो न स्यादन्वयाप्रतीतेः स्थलद्वयेऽपि साम्यादिति भावः.। **साध्यसमत्वादिति ।** दृष्टान्तस्य पक्षसदृशत्वादित्यर्थः । पक्षे यथा दूषणद्वयमभिहितं तथा दृष्टान्तेऽपि तद् द्वयमभिधातव्यमित्यर्थः । **इति प्राभाकरमतनिरासः ॥**

**प्रदीपः**— **दृष्टान्तस्येति ।** कूर्मरोमापीति भ्रान्तिविषयत्वसंभवादित्यर्थः ।





॥ रामानुजाख्यातिवादः ॥

रामानुजाख्याति-अनुवादः—

**३९२ सु०— कश्चित्पुनरेवमाह । 'तासां त्रिवृतं त्रिवृतमेकैकामकरोदि'त्यादिश्रुतेः, 'समेत्यान्योन्यसंयोगमि'त्यादिपुराणात्, 'त्र्यात्मकत्वादि'सूत्राच्च सर्वस्य सर्वात्मकत्वं प्रतीयते ॥ किञ्च 'सोमाभावे पूतिकग्रहणं, व्रीह्यभावे च नीवारग्रहणम्' अन्यथाऽनुपपद्यमानं पूतिकनीवारयोः सोमव्रीह्यवयवसद्भावं गमयति ॥ अपि च वस्तुनो वस्त्वन्तरसादृश्यं प्रत्यक्षत एव प्रतीयते । न च तद्द्रव्यावयवयोगादन्यत्सादृश्यं नामास्ति । अतः शुक्तिकादिषु रजतादेः सद्भावाद्यथार्थ एवायं रजतप्रत्ययः । निर्देशव्यवस्थाऽर्थक्रियाव्यवस्था च भूयस्त्वादुपपद्यते । दोषवशादिन्द्रियं भूयांसमप्यंशं परित्यज्याल्पीयांसमंशं प्रकाशयतीति रजतार्थिनस्तत्र प्रवृत्तिरपि युज्यते । अपगते तु दोषे भूयस एवांशस्योपलम्भे निवर्तते । बाध्यबाधकभावोऽपि ज्ञानयोरत एवोपपद्यते ॥ पीतशङ्खादौ नयनवृत्तिपित्तसंभिन्नाः नायनरश्मयः शङ्खादिभिः संयुज्यन्ते । ततः पित्तगतपीतिमाऽभिभूतः शङ्खगतशुक्लिमा न गृह्यते । अतः सुवर्णानुलिप्तशङ्खवत् 'पीतः शङ्ख' इति प्रतीयते ॥ एवं स्वप्नस्फटिक-लौहित्यमरीचिकाजलालातचक्रदर्पणमुखदिगन्तरद्विचन्द्रादिप्रत्ययाः सर्वेऽपि यथार्था बोद्धव्या इति ॥**

**बिन्दुः**— रामानुजमतमवतारयति **कश्चित्पुनरेवमाहेति । एवं स्वप्नस्फटिकलौहित्येति ।** रूपपरिमाणसंख्यासंस्थानादेरपि परस्परसङ्कीर्णत्वादिति भावः ।

**परि०**— अख्यात्यवान्तरचोदनं निराह **कश्चित्पुनरिति** । रामानुजादिः । **तासां** तेजोऽबन्न-शब्दितदेवतानाम् । त्रिवृतं तेजोऽबन्नरूपवस्तूनामंशत्रयमेलनम् । एकैकपृथिव्यादिद्रव्यमकरोदिति षष्ठछन्दोगश्रुतेरित्यर्थः । 'समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते' इति पुराणवाक्यात् । 'त्र्यात्मकत्वात्तु भूयस्त्वादि'ति तृतीयाद्यपादे वक्ष्यमाणसूत्रादित्यर्थः । सर्वात्मकत्वं तेजोऽबन्नरूपभूतत्रयात्मकत्वमिति वा । त्रिवृत्त्वस्योपलक्षणत्वेन सर्वभूतात्मकत्वमिति वाऽर्थः । अर्थापत्तिं चाह **किञ्च सोमेति** । ज्योतिष्टोमे हि 'सोमेन यजेत' इति सोमलतारूपद्रव्यस्य 'दर्शपूर्णमासयोर्व्रीहिभिर्यजेते'ति व्रीहिद्रव्यस्य साधनत्वेन प्राप्तत्वात् सोमादिरेव गृह्यते । कदाचित् सोमादेरभावे पूतिकादिरूपसोमप्रतिनिधिग्रहणं याज्ञिकैर्यज्ञाङ्गत्वेन क्रियते । तदन्यथानुपपत्तिरन्यत्रान्या-





वयवसत्त्वे मानम् । समग्रसोमाद्यवयवानामलाभे कतिपयतदवयवलाभाय पूतिकाद्युपादानात् । तथैव पूर्वतन्त्रे षष्ठे तृतीयपादे व्युत्पादितत्वादिति भावः । प्रत्यक्षं च प्रमाणयति **अपि चेति** । कथं तर्हीयं शुक्तिः इदंरजतमित्यादिनिर्देशः शुक्तिकया कटकादिरजतोचितार्थक्रियाऽभाव इत्यत आह **निर्देशेति** । **अत एवेति** । भूयोऽवयवज्ञानेनाल्पावयवज्ञाननिवर्तनादेवेत्यर्थः । **एवं स्वप्नेत्यादि** । एतच्चाग्रे दूषणावसरे स्फुटीकरिष्यामः ।

**यादु०**— रामानुजमतं दूषयितुमनुवदति **कश्चित्पुनरेवमित्यादिना** । सर्वत्र सर्वांशानां सत्त्वेन सर्वविज्ञानानां याथार्थ्यमुपपादयितुं सर्वत्र सर्वांशानां सद्भावे तावत् श्रुतिपुराणसूत्राणि दर्शयति **तासामित्यादिना** । आदिपदेन 'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्ये'ति वाक्यं ग्राह्यम् । अत्र ह्यग्नौ त्रिरूपता प्रत्यक्षेणोपलभ्यमानोक्ता । अत्र पञ्चीकरणमपि प्रतिपादयद्वेदवाक्यमुपलक्षणया ग्राह्यम् । एवं भूतानां परस्परं मिश्रणं श्रुत्योपपाद्य तत्त्वानामपि तत्पुराणवचनेनोपपादयति **समेत्येति** । 'नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता दृश्यन्त' इति पुराणवाक्यस्यायमर्थः । तत्त्वानां संहतिर्द्वेधा विवक्षिता । पृथक् स्थित्यर्हसंयोगमात्ररूपा, तदनर्हसंश्लेषविशेषरूपा चेति । पूर्वमेतद्द्वयाभावात्तत्त्वानि स्रष्टुं नाशक्नुवन्नित्याह नानावीर्या इति । एतदुभयं प्राप्यासृजन्नित्याह समेत्येति । नन्वेवमेकस्मिंस्तत्त्वे सर्वाणि तत्त्वानि सन्ति चेत्सर्वे शब्दाः सर्वत्र प्रसज्येरन्नित्यत आह परस्परेति । परस्परमाश्रयाश्रयिभावश्च न्यूनाधिकभावनिबन्धनः । तत्कृता च व्यवस्थेति भाव इति । एवं सामान्यतः सर्वत्र सर्वांशसद्भावमुपपाद्य सदृशे सदृशान्तरसद्भावमर्थापत्त्योपपादयति **किञ्च सोमाभाव इति** । प्रत्यक्षेणापीम-मर्थमुपपादयति **अपि च वस्तुन इति** । **अत एवेति** । अल्पभूयोंऽशावगाहित्वादेवेत्यर्थः । दोषवशादल्पांशग्राहि विसंवादिप्रवृत्तिजनकपूर्वज्ञानं बाध्यं दोषापगमानन्तरं भूयोंशावगाह्युत्तरज्ञानं बाधकमिति भावः । शङ्खे पीतरूपस्यांशकल्पनाऽसंभवात् प्रकारान्तरेण तज्ज्ञाने याथार्थ्यमुपपादयति **पीतशङ्खादाविति** । **सुवर्णानुलिप्तेति** । तथा च परम्परासंबन्धेन शङ्खे पीतरूपावगाहित्वात्तज्ज्ञानं यथार्थमिति भावः । एवं स्वप्नेऽन्यत्रैवं यथार्था बोद्धव्या इति याथार्थ्यमात्रातिदेश एव विवक्षितो न पूर्वोक्तस्तदुपपादकप्रकारातिदेशः । स्वाप्नार्थादिषु सदृशे सदृशान्तरावयव-सद्भावरूपस्य नयनगतद्रव्यसंबन्धरूपस्य वोक्तप्रकारस्य संभवेन प्रकारान्तरेणैव तज्ज्ञानानां याथार्थ्यस्य परेण स्वग्रन्थे दर्शितत्वात् । तत्प्रकारश्च लेशतः कथ्यते । स्वाप्नार्थज्ञानं तावद्यथार्थमेव । यतः प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यास्तत्तद्देशकालानुभवास्तत्तत्कालावसानास्तथाभूता एवार्थाः सृज्यन्ते । तथाहि स्वप्नविषया श्रुतिः । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान्पथः सृजते' इत्यादिका । स हि कर्तेति वाक्याच्च सत्यसङ्कल्पस्याश्चर्यशक्तेस्तथाविधं कर्तृत्वं नासंभावितमित्यर्थोऽवगम्यते । सूत्रकारोऽपि 'सन्ध्ये सृष्टिराह हि' 'निर्मातारं चैके पुत्रादयश्चे'ति सूत्रद्वयेन स्वप्नार्थेषु जीवस्य स्रष्टृत्वमाशङ्क्य 'मायामात्रं तु कात्स्न्र्येनानभिव्यक्तस्वरूप-त्वादि'ति परमात्मैव तत्र स्रष्टेति परिहरति । स्फटिकलौहित्यमरीचिकाजलालातचक्रदिङ्मोहेषु द्रव्यान्तरसंबन्धाद्यथार्था प्रतीतिरिति निर्वाहः । स्फटिकलौहित्यं हि स्फटिकस्य जपाकुसुमसंबन्धवत्वात्प्रतीयते । जपाकुसुमसंबद्धस्यापि





पाषाणादेरस्वच्छत्वान्न तत्र लौहित्यं प्रतीयते। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरम्बुनो विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्योरग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थत्वम्। अलातचक्रेऽप्यलातस्य द्रुततरगमनेन सर्वदेशसंयोगात्पूर्वोत्तरभावितत्तत्प्रदेशविशेषालातसंयोगक्रमाग्रहणात्तथा प्रतीतिरुपपद्यते। सत्यचक्रप्रतीतावपि क्रमाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। इयांस्तु विशेषः। तत्र क्रमाभावादेव क्रमाग्रहणम्। अत्र शैघ्र्यात्तदग्रहणमित्यतस्तदपि यथार्थम्। दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्था। दर्पणादिप्रतिहतगतयो नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादिकं गृह्णन्ति। तत्राप्यतिशैघ्र्यादन्तरालाग्रहणात्तथाप्रतीतिः। अत एव तत्र सव्यदक्षिणविपर्यासप्रतीतिः मलिनत्वाल्पत्वाभिमुख्यप्रतीतिश्च यथार्था। स्वाभिमुखतया विपर्यस्तसव्यदक्षिणभावस्य दर्पणस्थमुखस्य चान्तरालाग्रहणमेव तत्र न तु दर्पणादिगतसव्यदक्षिणविपर्यासादिकं मुखगततया गृह्यते। येनान्यथाख्यातिः स्यादिति। दिङ्मोहेऽपि सर्वत्र सर्वदिग्भावात्प्राच्यादिव्यवहारस्य प्रतियोग्यपेक्षत्वात्। अदृष्टवशेन तत्तद्दिगन्तरप्रतियोगिनो दिगन्तरस्य च निरन्तरभानम्। अतो यथार्थविषयत्वम्। द्विचन्द्रादिज्ञानादावप्यङ्गुल्यवष्टम्भादिभिर्नायनतेजोऽभिभवेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु किञ्चिद्वक्रगतित्वेन चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति। अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे भवतः। ग्रहणभेदेन ग्राह्याकारभेदादेकत्र ग्रहणाभावाच्च द्वौ चन्द्राविति भवतीति विशेषः। देशान्तरस्य तद्विशेषणत्वं तु देशान्तरस्यागृहीतस्वदेशचन्द्रस्य च निरन्तरं ग्रहणेन भवति। अगृहीतस्वदेशचन्द्रस्य प्रतीयमाने समीपदेशान्तरेऽसंसर्गो न गृहीतोऽतस्तद्विशेषणमिव न तु विशेषणतया भवति। येनान्यथाख्यातिः स्यात्। तत्र सामग्रीद्वित्वं पारमार्थिकं तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं परस्परमगृहीतभेदं पारमार्थिकम्। ग्रहणद्वित्वेन चन्द्रस्यैकस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकमिति न किञ्चिदत्रायथार्थमिति।

**वं०प०— गमयतीति**। तथा च शुक्तावपि रजतावयवाः सन्तीति गम्यत इति भावः। ननु तर्हीदमित्यङ्गुल्या शुक्तिः कस्मान्निर्दिश्यते। रजतावयवसद्भावे तदेव रजतं निर्दिश्येतेति निर्देशव्यवस्था। तथा रजतावयवसद्भावे रजतोचितार्थक्रिया स्यात्। सा न भवति। प्रत्युत शुक्त्युचितैवार्थक्रिया भवतीत्येवमर्थक्रियाव्यवस्था च नोपपद्यत इत्याशङ्क्याह **निर्देशेति**। **भूयस्त्वादिति**। शुक्त्यवयवानामिति शेषः। भूयांसमंशं शुक्त्यंशं तदवयवमित्यर्थः। अल्पीयांसमंशं रजतांशं तदवयवमित्यर्थः। भूयस एवांशस्य संभिन्नाः संबद्धाः।

**आनन्दः**— अख्यातिवाद्येकदेशिमतं दूषयितुमनुवदति **कश्चिदिति**। ननु तर्हि रजतमिति शुक्तिरिति निर्देशव्यवस्था कटकाद्यर्थक्रियाव्यवस्था च कथं स्यादत्राह **निर्देशेति**। ननु तर्हि पुरोवर्तिनि भूयसां शुक्त्यंशानां सत्वाद्रजतार्थिनस्तत्र प्रवृत्तिः कथमत्राह **दोषेति**। **अत एवेति**। भूयसामंशानामुपलम्भानुपलम्भाभ्यामेवेत्यर्थः। ननु पीतः शङ्ख इत्यादौ कथं तत्रावयवसंयोगाभावादित्यत आह **पीतेति**।

**कं०रा०— समेत्येति**। "समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते" इत्यादिपुराणादित्यर्थः। **न चेति**। तस्य द्रव्यस्य येऽवयवास्तद्योगादन्यत्तत्सादृश्यं नाम न चास्तीत्यर्थः।

ननु शुक्तिकादिषु रजतादिसद्भावे इयं शुक्तिरित्यादिनिर्देशव्यवस्था शुक्त्याद्युचितार्थक्रियाव्यवस्था च कथमित्यत आह **निर्देशेति** । भूयस्त्वात् शुक्त्याद्यवयवभूयस्त्वात् । शुक्त्यवयवभूयस्त्वे शुक्त्यर्थिप्रवृत्तिरेव तत्र स्यात् । न रजतार्थिप्रवृत्तिरित्यत आह **दोषेति** । **बाध्येति** । अल्पांशभूयोऽशविषयीकरणाभ्यामेव ज्ञानयोर्बाध्यबाधकभाव उपपद्यत इत्यर्थः । तदुक्तं रामानुजभाष्ये ''यथार्थं सर्वविज्ञानमिति वेदविदां मतम् । श्रुतिस्मृतिभ्यः सर्वस्य सर्वात्मत्वप्रतीतितः । बहु स्यामिति सङ्कल्पपूर्वसृष्ट्याद्युपक्रमे । तासां त्रिवृतमेकैकामिति श्रुत्यैव चोदितम् । त्रिवृत्करणमेवं हि प्रत्यक्षेणोपलभ्यते । यदग्ने रोहितं रूपं तेजसस्तदपामिति । शुक्लं कृष्णं पृथिव्याश्चेत्यग्नावेव त्रिरूपता । श्रुत्यैव दर्शिता तस्मात्सर्वे सर्वत्र सङ्गताः । पुराणे चैवमेवोक्तं वैष्णवे सृष्ट्युपक्रमे । नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन्प्रजाः स्रष्टुमसमागम्य कृत्स्नशः । समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमित्यादिना ततः । सूत्रकारोऽपि भूतानां त्रिरूपत्वं तथा वदन् । त्र्यात्मकत्वात्तु भूयस्त्वादिति तेन भिदाभिदा । सोमाभावे च पूतीकाग्रहणं श्रुतिदर्शितम् । सोमावयवसद्भावादिति न्यायविदो विदुः । व्रीह्यभावे च नीवारग्रहणं व्रीहिभावतः । तदेव सदृशं तस्य यत्तद्द्रव्यैकदेशभाक् । शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधितः । रूप्य-शुक्त्यादिनिर्देशभेदो भूयस्त्वहेतुतः । रूप्यादिसदृशश्चायं शुक्त्यादिरुपलभ्यते । अतस्तस्यात्र सद्भावः प्रतीतेरपि निश्चितः । कदाचिच्चक्षुरादेश्च दोषाच्छुक्त्यंशवर्जितः । रजतांशो गृहीतोऽतो रजतार्थी प्रवर्तते । दोषहानौ तु शुक्त्यंशे गृहीते तन्निवर्तते । अतो यथार्थरूप्यादिविज्ञानं शुक्तिकादिषु । बाध्यबाधकभावोऽपि भूयस्त्वेनोपपद्यते । शुक्तिभूयस्त्ववैकल्यसाकल्यग्रहरूपतः । नातो मिथ्यार्थसत्यार्थविषयत्वनिबन्धनः । एवं सर्वस्य सर्वत्वे व्यवहारव्यवस्थितिः'' इति । **सुवर्णानुलिप्तेति** । सुवर्णानुलिप्तशङ्खे पीतः शङ्ख इति प्रत्ययो यथा परम्परासंबन्धविषयतया यथार्थस्तथाऽयमपि प्रत्यय इति भावः । **एवं स्वप्नेति** । स्वप्ने प्राणिनां पुण्यपापानुगुणं तत्तत्पुरुषमात्रानुभाव्यास्तत्तत्कालावसानाः पदार्था भगवतैव सृज्यन्ते । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इत्यादिश्रुतेः । अतस्तत्प्रत्ययो यथार्थः । जपाकुसुमसमीपवर्ती स्फटिकमणिः स्वच्छद्रव्यसंयोगवशात्स्फुटतरमुपलभ्यमानजपाकुसुमप्रभाभिभूततया रक्त इति गृह्यते । अतः स्फटिकलौहित्य-प्रत्ययोऽपि यथार्थः । मरीचिकाजलप्रत्ययोऽपि तेजःपृथिव्योरम्बुनोऽपि विद्यमानत्वादिन्द्रियदोषेण तेजःपृथिव्यो-रग्रहणाददृष्टवशाच्च अम्बुनो ग्रहणाद्यथार्थः । आलातचक्रस्य द्रुततरगमनेन सर्वदेशसंयोगादन्तरालाग्रहणात्तत्र चक्रप्रतीतिरुपजायते । चक्रप्रतीतावप्यन्तरालाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव । क्वचिदन्तरालाभावा-दन्तरालाग्रहणं क्वचिद्दैर्घ्यादिति विशेषः । अत अलातचक्रप्रत्ययोऽपि यथार्थः । दर्पणादिप्रतिहतगतयो हि नयन-रश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्ति । तत्राप्यतिदैर्घ्यादन्तरालाग्रहणाद्दर्पणे निजमुखप्रत्यय इति सोऽपि यथार्थः । दिगन्तरस्यास्यां दिशि विद्यमानत्वाददृष्टवशेनैतद्दिगंशवियुक्तस्य दिगन्तरांशस्य ग्रहणाद्दिगन्तर-प्रत्ययोऽपि यथार्थः । अङ्गुल्यवष्टम्भतिमिरादिभिर्नयनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किञ्चिद्वक्रगतिश्चन्द्र-समीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशसंयुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्रमसाविति भवति प्रत्ययः । देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य





गृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवति। तत्र सामग्रीद्वयं पारमार्थिकम्। तेन देशद्वयविशिष्टचन्द्रग्रहणद्वयं च पारमार्थिकम् । ग्रहणद्वित्वेन चन्द्रस्यैकस्यैव ग्राह्याकारद्वित्वं च पारमार्थिकमिति द्विचन्द्रप्रत्ययोऽपि यथार्थ इत्येवंप्रकारेण सर्वेऽपि प्रत्यया यथार्था बोद्धव्या इत्यर्थः।

**श्रीनिधि०—** **कश्चित्** रामानुजः। त्रित्वेन वर्तत इति त्रिवृत्। **त्र्यात्मकत्वात्** तेजोबन्नात्मकत्वात्। **तेज आदावेव** तद्व्यपदेशस्तु तत्र तत्र तेज आद्यवयवानां भूयस्त्वादित्यर्थः । **अन्यथानुपपद्यमानमिति** । पूतीकादौ सोमाद्यवयवाभावे तयोस्तत्कार्यकारित्वानुपपत्तेरित्यर्थः। **निर्देशाव्यवस्थेति**। रजतादावेव रजतमित्यादि निर्देशाव्यवस्थेत्यर्थः । **ज्ञानयोरत एवेति** । अल्पीयोंशविषयकत्वभूयोंशविषयकत्वादेव । **पित्तद्रव्यसंभिन्नाः** पित्तद्रव्यसंमिश्राः। **एवं स्वप्नेत्यादि**। यत्र स्वयं गजादिकं पश्यति चन्द्रान्तरं वा पश्यति तत्र तत्र गजचन्द्राद्यवयवानां सत्त्वादेव यथार्थत्वनिर्देशाव्यवस्था बाध्यबाधकव्यवस्थादिकं बोध्यमिति भावः।

**वा०चं०—** यथार्थख्यातिमत्वाविशेषेऽप्यवान्तरविशेषानिराकरणेन प्रभाकरमतनिरासमात्रेण न तन्निरास-सिद्धिरिति रामानुजमतनिरासाय तदुपन्यस्यति **कश्चिदिति** । आदिपदेन तेजआदिभूतत्रिवृत्करणसंभावक-तत्कार्याग्न्यादिरूपत्रयप्रदर्शनपरस्य यदग्ने रोहितं रूपमिति पदोदाहृतवाक्यस्य वा त्रिवृत्करणपरवाक्यान्तरस्य वोपादानम् । तत्त्वान्तरेऽपि मिश्रताप्रतिपादकत्वात्पुराणस्य भूतत्रयमात्रविषयकश्रुत्यपेक्षया अधिकविषयकत्वम् । आदिपदेन 'परस्परसमाश्रयाः । महदाद्या विशेषान्ता ह्यण्डमि'ति वाक्यशेषस्य पुराणवाक्यान्तरस्य वोपादानम् । श्रुतिस्मृत्योरुक्तार्थपरतानिर्णयाय सूत्रोपादानम् । आदिपदेन तच्छेषस्य वा सूत्रान्तरस्य वा ग्रहणम् । यद्यप्येषां वाक्यानां तत्त्वमिश्रताप्रतिपादकतया न रजतादिभ्रमे उपयोगस्तथापि तत्त्वे तत्त्वान्तरभ्रमे साक्षात्कारणमिश्र-तायाः कार्यरजतादिभ्रमेऽपि परम्परयोपयोगोऽस्त्येव। अत एवाह **सर्वस्य सर्वात्मकत्वमिति**। अन्यथा तत्त्वस्य तत्त्वान्तरात्मकत्वमित्यवक्ष्यत् । यथा चैतत्तथा तन्मतदूषणावसरे स्पष्टयिष्यते । भूतादित्रिवृत्करणस्य सदृशे सदृशान्तरभ्रमे उपयोगात् भूतत्रिवृत्करणश्रुत्यादिकमुपन्यस्य सदृशे सदृशान्तरभ्रमोपयोगितया श्रुतार्थापत्ति-मुपन्यस्यति **किं चेति**। श्रुतार्थापत्त्या व्रीह्यादिसद्भावे नीवारादौ सिद्धे शुक्त्यादौ रजतादिसद्भावः फलित इत्याशयः। साक्षादेव शक्त्यादौ रजतादिसद्भावे प्रमाणमुपन्यस्यति **अपि चेति**। तर्हि सर्वस्य सर्वात्मकत्वात्सर्वत्र सर्वशब्दप्रवृत्त्या सर्वस्य सर्वार्थक्रियाकारित्वापत्त्या च निर्देशादिव्यवस्था न स्यादित्यत आह **निर्देशेति** । ननु तर्हि तथैव शुक्तौ रजतांशभूयस्त्वाभावेन रजतार्थिनस्तत्र प्रवृत्तिरपि न स्यादित्यत आह **दोषेति** । तर्हि पश्चान्निवृत्तिर्न स्यादित्यतः प्रागभिभावकांशानुपलम्भप्रयुक्तप्रवृत्तावप्यभिभावकांशोपलम्भान्निवृत्तिः पश्चाद्युक्तैवेत्याह **अपगते त्विति**। ननूभयोः सद्विषयकत्वान्न बाध्यबाधकभावोपपत्तिरित्यतोऽल्पांशभूयोंशविषयकत्वाभ्यामेव तदुपपत्तिरित्याह **बाध्येति** । भूतसदृशयोर्भूतसदृशान्तरसद्भावप्रकारस्य पीतशङ्खादावनुपपत्त्या तत्र प्रकारान्तरमाह **पीतेति** । पित्तद्रव्यरहितं पीतरूपं गृह्यते पित्तद्रव्यं न गृह्यते इति प्राभाकरमतम्। रूपवद् द्रव्ये चक्षुषः सामर्थ्यात्पित्तद्रव्यमपि गृह्यत इत्येतन्मते विशेषः। **एवमिति**। स्वप्ने प्राणिनां पुण्यपापानुगुणं भगवतैव तत्तत्पुरुषमात्रानुभाव्यतत्तत्कालावसानाश्चर्यभूततथा-विधपदार्थाः सृज्यन्त इत्यर्थस्य श्रुतिस्मृतिसूत्रादिभिर्निर्णीतत्वात्तत्तत्पदार्थविषयकज्ञानं प्रमेव। विततजपाकुसुमप्रभा





स्वच्छद्रव्यसंयुक्ता स्फुटमुपलभ्यत इति जपाकुसुमप्रभाभिभूततया तत्समीपवर्ती स्फटिकमणी रक्त इति प्रतीयत इति साऽपि यथार्थैव। मरीचिकाजलज्ञानेऽपि तेजःपृथिव्योरम्बुनोऽपि विद्यमानत्वादिन्द्रियदोषेण च तेजःपृथिव्यो-रग्रहणाददृष्टवशाच्चाम्बुनो ग्रहणाद्यथार्थत्वम्। अलातचक्रस्थलेऽप्यलातस्य द्रुतगमनेन सर्वदेशसंयोगात्पूर्वोत्तर-कालभाविनोस्तत्तत्प्रदेशविशेषालातसंयोगयोः क्रमाग्रहणाच्च तथा प्रतीतिरुत्पद्यते। सम्यक् चक्रप्रतीताव-प्यन्तरालाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव। इयांस्तु विशेषः। तत्रान्तरालाभावादग्रहणम् अत्र तु शैघ्र्यादित्यलातचक्रप्रतीतिरपि यथार्थैव। दर्पणादिप्रतिहता नायनरश्मयो दर्पणादिदेशग्रहणपूर्वकं दर्पण-देशमुखान्तरालग्रहणपूर्वकं निजमुखादि गृह्णन्तीति दर्पणादिषु निजमुखादिप्रतीतिरपि यथार्थैव। दिङ्मोहेऽपि दिगन्तरांशस्य दिगन्तरेऽपि सत्त्वाददृष्टवशाद्दिगन्तराग्रहेण दिगन्तरांशस्यैव ग्रहणमिति दिगन्तरे दिगन्तरप्रतीतिरपि यथार्थैव। द्विचन्द्रादावङ्गुल्यवष्टम्भेन नायनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रग्रहणद्वयहेतु-र्भवति। तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति। द्वितीया तु चन्द्रसमीपदेशग्रहणपूर्वं स्वदेशरहितं चन्द्रं गृह्णाति। अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारविशिष्टभेदात्। अत्रैकत्वाग्रहणाच्च द्वौ चन्द्राविति प्रतीतिः। तत्र देशान्तरस्य विशेषणत्वं चन्द्रं प्रत्यप्रधानत्वमेव। तथाच चाक्षुषतेजोगतिभेदरूपसामग्रीजन्यमति-शैघ्र्याद्गृहीतभेदं ज्ञानद्वयमगृहीतैकत्वं चन्द्रमगृहीतान्तरालदेशान्तरं च निरन्तरं गृह्णातीति तत्प्रत्ययोऽपि यथार्थ एव। प्राभाकरमते नेत्रवृत्तिर्वित्तिगतद्वित्वमगृहीतभेदं गृह्णातीत्येव, अत्र तु देशगतद्वित्वं चागृहीतभेदं गृह्णातीति वैषम्यमित्येवं तदीयोपपादनप्रकारो बोद्धव्य इति भावः।

**वा०र०**— निराकर्तव्ये विशेषाभावेऽङ्गीकर्तृभेदमात्रेण तन्मतनिराकरणे शास्त्रापर्यवसानप्रसङ्गादित्यत-स्तन्मतयोरनतिभेदे उक्तदोषप्रसङ्गेऽपि प्राभाकरमतापेक्षया रामानुजमतेऽवान्तरविशेषसद्भावेन तत्प्रसङ्ग इति सूचयन् प्राभाकरमतरूपाख्यातिमतनिरासमात्रेणैव मतान्तरनिरासस्यापि सिद्धेः किमवान्तरविशेषनिराकरणेनापीत्यतस्तस्य आवश्यकत्वं दर्शयन् रामानुजमतोपन्यासाभावे तन्निराकरणानवकाशात् तदर्थं तन्मतोपन्यासस्तावत्क्रियत इत्याह **यथार्थख्यातिमत्वेति**। इह टीकायां प्राभाकरमतनिरासमात्रेण रामानुजमतनिराससिद्धिरिति तन्निरासाय तदुपन्यस्यतीति मूलकोशानुसारी पाठः। तन्निराससिद्धिरित्येवं तत्पदस्य रामानुजमतनिरासायेति रामानुजपदस्य च व्यत्यासो लेखकागतः। तत्पाठेऽपि वा प्रथमप्रयुक्ततत्पदस्य बुद्धिस्थवक्ष्यमाणरामानुजपरत्वमिति ज्ञेयम्। रामानुजमतनिरासो नाम तदुक्तयथार्थख्यातिनिरासः। यद्वैतन्मतनिरासाय तदुपन्यस्यतीति प्रथमतो योज्यम्। तत्र यथार्थख्यातिमतविरोधे प्राभाकरमतनिरासेनैव सिद्धेः पुनस्तन्निरासो व्यर्थ इत्यत उक्तं यथार्थख्यातित्वेत्यादि-निराससिद्धिरितीत्यन्तं तच्च तच्छब्देन रामानुजमतपरामर्शसंभव इति ज्ञेयम्। अत्र च प्राभाकरेति रामानुजेति च पदसमभिव्याहारेण प्राभाकररामानुजमतयोर्यथार्थख्यातिमतत्वाविशेषेऽपीति लभ्यते। अथवा रामानुजमतस्य प्राभाकरमतेन यथार्थख्यातिमतत्वेन विशेषेणेति योज्यम्। तथाचावान्तरविशेषेत्यत्र रामानुजमतगतावान्तर-विशेषेति व्याख्येयम्। इदंरजतमिति ग्रहणस्मरणात्मकं ज्ञानद्वयमिति प्राभाकरमतापेक्षयैकमेवेदं ज्ञानं रजता-वयवानां च शुक्तिकायां सत्त्वात्तस्य यथार्थत्वमिति रामानुजमतेऽवान्तरो विशेषः। एवमन्योऽपि उत्तरमूलटीकयोरुक्तो





विशेषो ज्ञेयः । उक्तविशेषस्यानिराकरण इति सप्तमी । सिद्धिर्नेति संबन्धः । पूर्वमतनिरासेन तन्मताविशिष्टे तन्मतभागमात्रनिराससिद्धावपि तदपेक्षया योऽवान्तरो विशेषस्तदभ्युपगमेन पूर्वमतोक्तविशेषान्तरस्वीकारे पाप्त-दूषणपरिहारस्य तेन कृतत्वात्तस्यापि दूषणाभावे यावत्तन्मतनिराससिद्धिर्नेति तत्सिध्यर्थमवश्यं तद्विशेषनिराकरणं कार्यमिति । एवं चात्र पाठे न्यायकल्पतरूदीरितमित्युत्तरमतोपन्यासावतारटीकायामपि यथार्थख्यातिमतत्वा-विशेषेऽपीत्यादिकं निरासायेत्यन्तमनुवर्तनीयम् । रामानुजपदस्थानेऽख्यातिमतान्तरेति पठनीयमिति ज्ञेयम् । पाठान्तरेति तथैव । यद्वा पाठान्तरे इयं योजना । **अवान्तरविशेषेति** । प्राभाकरमतातिरिक्तरामानुजमत-न्यायकल्पतरुमतरूपावान्तरविशेषनिराकरणाभाव इत्यर्थः । अत एवोक्तं **न प्राभाकरमतनिरासमात्रेणेति** । इतीत्यतःपरं तावदिति शेषः । तेनेत्यतो हेतोस्तावद्रामानुजमतेति योजनया विवक्षितसंपूर्त्तिरिति मूले त्रिवृत्करणे तासां त्रिवृतमिति श्रुतेरिव श्रुत्यन्तरस्यापि सद्भावाभिप्रायेणादिपदोपादानमिति प्रतीयते तच्चायुक्तम् । तादृशश्रुत्यन्तरा-भावात् । पञ्चीकरणसाधकश्रुतिसङ्ग्रहोऽप्यत एवानुपपन्नः । इति श्रुत्यैव चोदितम् । त्रिवृत्करणमेवं हीत्येव तद्ग्रन्थे उक्तेश्च किन्तु त्रिरूपताप्रतिपादकश्रुतिसङ्ग्रह एवाभिप्रेतः । न च तच्छ्रुत्यन्तरस्य त्रिवृत्करणाप्रतिपादकतया तत्संग्रहासङ्गतिरिति वाच्यम् । साक्षात्तस्य त्रिवृत्करणासाधकत्वेऽपि तत्संभावकतत्कार्याग्र्यादिरूपत्रयप्रदर्शनपरतया परम्परया तदुपयोगादित्याशयेनाह **आदिपदेनेति** । **वाक्यान्तरस्य वेति** । वाशब्दोऽनास्थायाम् । पूर्वोक्तयुक्त्या प्रथमपक्षस्यैव युक्तत्वात् । सद्भावेऽपि वाक्यान्तरस्य परानुपदर्शितस्य वचने कारणाभावादिति ज्ञेयम् । एवमुत्तरत्रापि पक्षान्तरगतिर्वा शब्दार्थश्च बोध्यः । प्रधानतया श्रुत्युदाहरणमात्रमस्तु कृतं पुराणोदाहरणेनेत्यतः श्रुत्यपेक्षया अधिकार्थप्रतिपादकत्वात् तदुदाहरणं युक्तमित्याह **तत्त्वान्तरेऽपीति** । तेजोबन्नातिरिक्तवाय्वाकाशभूतयोर्महदादि-तत्त्वेऽपीत्यर्थः । **अधिकविषयत्वमिति** । अतस्तदुदाहरणमिति शेषः । **निर्णयायेति** । सूत्राणां तदुभयनिर्णायक-त्वादिति भावः । **उपयोग इति** । शुक्त्यादौ रजतादिमिश्रताप्रतिपादकत्वाभावादिति भावः । **साक्षादिति** । उपयोगो-ऽस्त्येवेति संबधः । **स्पष्टयिष्यत इति** । कार्ये कारणसद्भावनियमादित्यादिना ननु पाञ्चभौतिकेष्वपीत्यादिग्रन्थेन चेति शेषः । **भ्रमेऽनुपयोगादिति** । अनेन पूर्वेणास्य गतार्थताशङ्का नेति सूचयति **उपन्यस्येति** । उपन्यस्यापीति योज्यम् । **श्रुत्यर्थापत्तिमिति** । एतन्मतदूषणमूलस्थश्रुतार्थापत्तिस्त्वित्येतदनुसारेण तत्पर्यवसानमभिप्रेत्य श्रुत्यर्थेति व्यवहृतम् । उत्तरवाक्ये तु यथाश्रुतानुवाद एवेति ज्ञेयम् । श्रुतार्थापत्त्या व्रीह्यादौ नीवारसद्भावसिद्धावपि न शुक्त्यादौ रजतादिसद्भावसिद्धिरित्यत आह **श्रुतार्थापत्त्येति** । समानन्यायत्वादिति भावः । श्रुत्यैव बोधित इति परकारिकार्थस्य मूलेऽनुक्तिशङ्काव्युदासाय तदुपपादनरूपेण फलितत्त्वमत्रोक्तमिति ज्ञेयम् । **तथैवेति** । निर्देशादिवदेव प्रवृत्तिरपी-त्युत्तरेण संबन्धः । **भूतसदृशयोरिति** । भूते भूतान्तरसद्भावः सदृशे सदृशान्तरसद्भाव इति संबन्धः । **अनुपपत्त्येति** । विसदृशत्वेन रूपस्य निरवयवत्वेन च सादृश्यस्यासंभवादिति भावः । पीतग्रहणे विशेषाप्रतीतेराह **पित्तद्रव्येति** । **प्राभाकरमतमिति** । तन्मते द्रव्यगुणयोः केवलयोरेव दोषवशाद्ग्रहणाङ्गीकारादिति भावः । स्वप्नस्फटिकलौहित्यादिषु पीतशङ्खादिभ्रमस्य तद्ग्रन्थे गृहीततया अत्रापि स्वप्नादेरेव ग्रहणे कर्तव्येऽपि यदादितस्ततः पृथक्कृत्य च शङ्खपीतादिग्रहणं न तत्र विशेषविचारावकाशाभिप्रायेण । अत एव तद्ग्रन्थे कृतमप्युपपादनमुदाहरणान्तरं परित्यज्यात्रैवोपन्यस्तम् । दूष्यते चान्यपरित्यागेनेदमेव विशेषतः । नन्वेतदपि कुत इति चेत्; स्वप्नादीनां भ्रमत्वेनान्येष्टानां रजतभ्रमवैलक्षण्येन





तत्रोपपादनस्य भिन्नभिन्नप्रकारतया सङ्ग्रहेऽपि रजतारोपतुल्यपीतारोपस्य तु पूर्वोक्तप्रकारेणैवोपपादनं कार्यम् । तच्चायुक्तमित्यतस्तत्र प्रकारान्तरस्य मूलकृता वक्तव्यत्वादिति बोध्यम् । एवं कारिकोक्तप्रकारेऽप्ययथार्थज्ञानतया रजतज्ञानादिकमुपपाद्य स्वप्ने च प्राणिनामित्यादिग्रन्थेनोक्तान् भ्रमत्वेन शङ्क्यमानान् यथार्थप्रत्ययत्वेनोपपादयद् ग्रन्थानुसारेण स्वप्नादिभ्रमाभावमुपपादयति **स्वप्ने प्राणिनामित्यादिना** । अनुगुणमिति सृज्यन्त इत्येतत्क्रिया-विशेषणम् । भाव्यावसानभूतविधान्तानां पदार्थपदेन कर्मधारयः । **तथाविधाः** बाह्यसदृशाः । **श्रुतिस्मृतिसूत्रा-दिभिरिति** । न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत इति न तत्रानन्दामुदप्रमुदो भवन्त्यथानन्दानित्यादिका श्रुतिः मायामात्रं तु कात्स्न्येनानभिव्यक्तेति सूत्रम् । स्मृतिश्च यद्यपि परग्रन्थे नोपन्यस्ता तथापि ग्रन्थे उदाहृत ............................इत्यादिस्मृतिं मनसि निधाय स्मृतिग्रहणं स्वमते स्वप्नस्य सत्यतया परोपपादनमनुकूलमित्याशयेनेति न दोषः । तद्ग्रन्थव्याख्याने तद्ग्रहणादत्र तथोक्तमित्यप्याहुः । आदिपदेन जीवस्य आश्चर्यसृष्टिकर्तृत्वायोगरूपयुक्तिग्रहणम् । जपाकुसुमप्रभयाभिभूतत्वे हेतुकथनं वितत्येत्यादि । इतिशब्दो हेतौ । पाषाणादिसंयोगे सति कुतः स्फुटतरोपलम्भाभाव इत्यत उक्तं **स्वच्छेति** । **तत्तत्प्रदेशाश्लेषेति** । पूर्वदेशेनाश्लेषो विभाग अलातस्याकर्षः । उत्तरदेशेनालातसंयोगश्चानयोरित्यर्थः । **अन्तरालेति** । पूर्वोत्तरदेशाभ्यामराणां विभाग-संयोगक्रमस्येत्यर्थः । यत्तु स्फटिकलौहित्यमरीचिकाजलालातचक्रदिङ्मोहेषु द्रव्यान्तरसंबन्धाद्यथार्थाप्रतीतिरिति निर्वाह इति प्रतिज्ञाय प्रत्येकमुपपादनमन्यथाख्यातौ कृतम् । तदसत् । द्रव्यान्तरसंबन्धो हि अवयविसामीप्यरूप-श्चेत्तस्य स्फटिकादौ सत्त्वेऽपि न मरीचिकादौ सद्भावः । सर्वत्र सर्वावयवसंयोगमङ्गीकृत्यावयवसंयोगश्चेन्न स्फटिकादौ तस्य सत्त्वं तत्कथं द्रव्यान्तरसंबन्धादिति अनुगमेन वचनम् । किञ्चालातचक्रे न द्रव्यान्तरसंबधस्योपयोगः । सर्वत्रापि केनचिन्निमित्तेन द्रव्यान्तरसंबन्धोपयोगवर्णने वा स्फटिकादावपि जपाकुसुमावयवानां सद्भावेन दोषविशेष-सामीप्यादिकमाश्रित्य स्फटिकावयवानामग्रहणं अन्यावयवानामेव ग्रहणमिति कल्पनापातः । तत्र तथा परानुत्त्या तदस्वीकारे चान्यत्रापि व्यर्थं तत्स्वीकरणेन व्याख्यानम् । तस्माद्यत्किञ्चिदेतत् । **दर्पणदेशमुखेति** । दर्पणदेशमुखयोर्यदन्तरालं व्यवधानं तदग्रहणेत्यर्थः । **अङ्गुल्यवष्टम्भेनेति** । अङ्गुल्यवष्टम्भतिमिरादिभिरिति तद्ग्रन्थे उक्तत्वादुपलक्षणमिदम् । ननु ग्रहणभेदेऽपि नार्थे भेदप्रतीतिः संभवति । अनेकग्रहणसन्निपातेऽप्यर्थस्यैकत्वा-पातादित्यतो वस्तुन एकत्वेऽपि तद्ग्रहणविषयीकृतविलक्षणदेशादिरूपतत्तद्वस्त्वाकारविशिष्टस्य भेदेन देवदत्ते दण्डकुण्डलादिविशेषणयोगेनानेकविशिष्टप्रतीतिः तद्वस्तुनि भेदेन प्रतीत्युपपत्तेरित्याह **ग्राह्याकारेति** । तर्ह्यनेकपुरुष-प्रतीतेः ग्रहणभेदेन वस्तुनि भेदप्रतीतिप्रसङ्ग इत्यत उक्तम् **अत्रैकत्वेति** । तत्र तु एकत्वग्रहणमेव प्रतिबन्धकमिति भावः । ननु देशान्तरस्य विशेषणत्वं नोपपत्तिमत् । व्यावर्तकरूपविशेषणं न वस्तुतोऽव्यावृत्ते व्यावृत्तिकरणायोगात् । असंबद्धस्य व्यावर्तकत्वायोगेन संबद्धत्वेन ज्ञानाङ्गीकारेऽन्यथाख्यात्यापत्तिश्चेत्यत आह **तत्र देशान्तरस्येति** । एवेति व्यावर्तकत्वं व्यावर्तयति । यद्यपि देशान्तरस्य तद्विशेषणत्वं देशान्तरस्य चागृहीतस्वदेशचन्द्रस्य च निरन्तरग्रहणेन भवतीति परग्रन्थे उक्तम् । तथापि उक्तनिरन्तरग्रहणेन संबन्धग्रहमात्रे प्रतिपादितेऽपि संबन्धाग्रहेऽपि विशेषणत्वमायातीति व्यावर्तकत्वप्राप्तावसंबद्धस्य व्यावर्तकत्वानुपपत्त्या संबन्धग्रहसिद्धिरेव स्यादतो विशेषणत्व-मेवान्यथयितव्यम् । निरन्तरग्रहणरूपमेव विशेषणत्वमिति पर्यवसानाय निरन्तरग्रहणेनेति तृतीया प्रथमार्थ व्याख्येया ।





ततश्चाप्रधानत्वमेव फलत आयाति । असंसर्गरूपान्तरग्रहणाभावेऽपि वेदनद्वयस्य परस्परविशेषणत्वेनानङ्गीकारादित्याशयः । **अगृहीतेति** । न गृहीतो भेदो यत्र ज्ञानद्वये तदगृहीतभेदं ज्ञानद्वयमिति प्रथमा । अगृहीतमेकत्वं यत्र सोऽगृहीतैकत्वः स चासौ चन्द्रश्च तमिति द्वितीया । न गृहीतमन्तरालं चन्द्रेणासंबन्धो यत्र तादृशं देशान्तरं चेति असंसर्गप्रतियोगिनिर्देशोऽयम् । चन्द्रदेशान्तरयोरसंसर्गरूपान्तरस्याग्रहणे सामग्रीकथनं पूर्वोक्तम् । **निरन्तरमिति** फलकथनम् । चन्द्रं देशान्तरं च निरन्तरमिति निरन्तरत्वेन विद्यमानासंसर्गमग्रहीत्वैवेत्यर्थः । **अगृहीतभेदमिति** । अगृहीतासंसर्गकमित्यर्थः । चन्द्रेण सहेति शेषः । यथोक्तं प्राक् । ग्रहणनिष्ठद्वित्वस्य च चन्द्रेण सहासंसर्गाग्रहः ततश्च द्वौ चन्द्राविति सामानाधिकरण्याव्यवहार इति । उदाहृतं च नयवीथीवाक्यम् । तथा द्विचन्द्रबोधेऽपीत्यादि । संवित्ती तेन भिद्येते तद्वित्वे सति मन्यते । भिन्नार्थबुद्धीत्यादि चादेशगतद्वित्वमगृहीतभेदमित्यत्रापि चन्द्रेणेति शेषः । आहितासंसर्गकमित्यर्थः ।

**स०व्र०**— ननु सर्वस्य सर्वात्मकत्वे असङ्कीर्णशब्दव्यवहारार्थक्रिये न स्यातामित्याशङ्क्य भूयस्त्वादिति सूत्रशेषेण परिहरति **निर्देशाव्यवस्थार्थक्रियाव्यवस्था चेति** । ननु द्रव्ययोरन्योन्यावयवयोगोऽस्तु न तु द्रव्यगुणयोरित्याशङ्कयामाह **पीतशङ्खादाविति** । एवं च संयुक्तसमवायसंबन्धेन शङ्खे पीतत्वज्ञानं प्रमेति भावः । **एवं स्वप्नस्फटिकलौहित्येति** । अत्र स्फटिकलौहित्यप्रत्ययस्तत्र जपाकुसुमावयवयोगेनोपादनीयः । इतरप्रत्ययास्तु तत्तदधिष्ठाने तत्तदारोप्यद्रव्यावयवयोगेनोपपादनीया इति द्रष्टव्यम् । स्वाप्नपदार्थानामधिष्ठानं शरीरं मनो वा द्रष्टव्यम् । द्विचन्द्रप्रत्यये द्वितीयश्चन्द्रो यत्र प्रतीयते स प्रदेशविशेष एवाधिष्ठानम् । शिष्टं स्पष्टम् ।

**वि०ट०**— यथार्थख्यातिमतत्वाविशेषेऽपि अवान्तरविशेषनिराकरणाय रामानुजमतमनुवदति **कश्चिदिति** । अत्र प्रथमादिपदेन त्रिवृत्करणसंभावकतत्कार्याग्न्यादिरूपत्रयप्रदर्शनपरस्य यदग्ने रोहितं रूपं इति परोदाहृतवाक्यस्य, द्वितीयादिपदेन परसमाश्रयाः महदाद्या विशेषान्ता इत्यस्य, तृतीयादिपदेन तच्छेषस्य भूयस्त्वादित्यस्य च ग्रहणम् । एतेषां वाक्यानां तत्त्वमिव श्रवणमात्रप्रतिपादकत्वे परंपरया सर्वमिश्रताप्रतिपादकत्वं लभ्यत इत्युपयोगः । परस्याभिप्रेतश्रौतार्थापत्तिमाह **किञ्चेति** । पूतिकादौ कतिपयसोमाद्यवयवत्त्वानामप्यभावे पूतिकादिग्रहणानुपपत्तिरिति भावः । एवमेव शुक्त्यादौ रजतादिसद्भावः फलित इति द्रष्टव्यम् । साक्षादेव शुक्तिकादौ रजतादिसद्भावे प्रमाणमुपन्यस्यति **अपि चेति** । तर्हि सर्वस्य सर्वात्मकत्वे असङ्कीर्णव्यवहारार्थक्रिये न स्यातामित्यत आह **निर्देशेति** । **अत एवेति** । भूयोऽवयवज्ञानेनाल्पावयवज्ञाननिवर्तनादेवेत्यर्थः । नन्वयं न्यायः पीतः शङ्ख इत्यादौ नोपपद्यते द्रव्ययोरन्योन्यावयवसंयोगेऽपि द्रव्यगुणयोस्तदभावादित्यतः प्रकारान्तरमाह **पीतशङ्खेति** । **एवमिति** । अत्र 'एवं यथार्था बोद्धव्या' इति याथार्थ्यमात्रातिदेश एव विवक्षितः न तु पूर्वोक्तोपपादनोपदेशः । तस्य स्वाप्नादिष्वसंभवेन प्रकारान्तरेण तद्धानानां याथार्थ्यस्य परेण स्वग्रन्थे उपपादितत्वात् । तथाहि वासनोपादानकपदार्था भगवतैव स्वप्ने सृज्यन्ते इति तदज्ञानं प्रमैव । जपाकुसुमप्रभाभिभूतः स्फटिकशौक्लिमा न गृह्यते, लौहित्यमेव तदनुलिप्ततया प्रतीयत इति तत्प्रतीतिरपि यथार्थैव । एवं मरीचिकागततदंश एव न प्रतीयते । अलातस्य च द्रुततरगमनेन तत्तत्प्रदेशालातक्रमाग्रहणाच्चक्रतया प्रतीतिरुपपद्यते । सत्यचक्रप्रतीतावपि अन्तरालाग्रहणपूर्वकं तत्तद्देशसंयुक्ततत्तद्वस्तुग्रहणमेव इयांस्तु विशेषः । तत्रान्तरालाभावात्तदग्रहणं

अत्र तु शैघ्रादिति । तथा दर्पणप्रतिहता नायनरश्मयो दर्पणदेशमुखान्तरालाग्रहणपूर्वकं निवृत्त्य मुखं गृह्णन्ति । दिगन्तरांशस्य दिगन्तरेऽपि सत्त्वात् तद्ग्रहणं चोपपद्यते । द्विचन्द्रावप्यङ्गुल्यवष्टंभे नायनतेजोगतिभेदेन सामग्रीभेदात् सामग्रीद्वयं चन्द्रद्वयग्रहणे । हेतुर्भवति तत्रैका स्वदेशाविष्टं चन्द्रं गृह्णाति अन्या तु समीपदेशग्रहणपूर्वकं स्वदेशरहितं चन्द्रं गृह्णातीति सामग्रीद्वयेन युगपद्देशद्वयविशिष्टैकचन्द्रग्रहणे भवतः द्वित्वप्रतीतिप्रदेशविषयेति सर्वोऽपि प्रत्ययो यथार्थ एवेति तदीयोपपादनप्रकारो बोद्धव्यः ।

**चषकः**— ज्ञानत्वावच्छेदेन याथार्थ्योपगन्तृत्वांशे रामानुजस्य गुरुकल्पत्वेऽपि प्रत्याख्यातव्यविषय-विशेषवैशेष्यसद्भावनियन्त्रिततया पृथक् तत्प्रतिविधित्सया तन्मतमनुवदति **कश्चिदित्यादिकबोद्धव्या** इत्यन्तेन । तासां तेजोऽबन्नपदाभिधेयानां देवतानाम् । त्रिवृतं तादृशदेवतात्रयाभिमन्यमानतेजोबन्नाख्यांशत्रयं मिलितमेकैक-पृथिव्यादिद्रव्यात्मनाऽकरोदिति छन्दोगश्रुत्यर्थोऽवसेयः । यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्येति तदुदाहृतं वाक्यान्तरं पञ्चीकरणप्रतिपादकवाक्यं वादिपदेनोपादेयम् । 'समेत्यान्योन्यसंयोगं परस्पर-समाश्रयाः । महदाद्या विशेषान्ता अण्डमुत्पादयन्ति ते' इति पुराणवाक्यात् । सूत्रात् तृतीयाद्यपादीयात् । सर्वात्मकत्वं तेजोबन्नरूपभूतत्रयात्मकत्वम् । अर्थापत्तिमप्युक्तार्थे प्रमापयति **किञ्चेति** । प्रत्यक्षमपि तत्र प्रमाणीकुरुते । **अपि चेति** । **अत एवेति** । दोषाधीनाल्पांशविषयीकारित्वविशेषितव्यधिकरणप्रकारकप्रवृत्तिजनकतानियन्त्रितं प्राक्तनज्ञानस्य बाध्यत्वमुत्तरस्य तु दोषविधूननोत्तरकालीनानल्पांशावगाहितानिघ्नबाधकत्वमित्युपगमादेवेत्यर्थः । दर्शितभङ्ग्याः पीतः शङ्ख इत्यत्रानुपपत्त्या तत्र भङ्ग्यन्तरमाश्रयते **पीतेति** । पीतः शङ्ख इत्यादिस्थल इत्यर्थः । तथा च तादृश-प्रत्ययस्य स्वाश्रयसंयुक्तत्वसंसर्गावच्छिन्नपीतरूपवृत्तिप्रकारतानिरूपितशङ्खवृत्तिविशेष्यताकत्वात्तज्ज्ञानस्य न विपर्यासतेति भावः । स्थलान्तरेऽष्वपि उक्तविधाया असंभवे विधान्तरं श्रयितव्यमित्याह **एवमिति** । तत्तत्पुरुषी-यादृष्टानुरूपतत्तन्मात्रानुभाव्यतत्तत्कालावसानाश्चर्यभूतभगवदेकसृष्टपदार्थानां स्वप्नस्थले विषयत्वोपगमादाद्ये, जपा-कुसुमप्रभैव स्वच्छद्रव्यसंयुक्ता स्फुटमुपलभ्यत इति जपाकुसुमप्रभाभिभूततया तत्समीपवर्ति स्फटिकमणी रक्त इति प्रतीयत इति वोपगमात् द्वितीये, तेजः पृथिव्योरम्बुनो विद्यमानत्वादिन्द्रियदोषेण च तेजःपृथिव्योरग्रहणेन दोषा-दम्बुनो ग्रहणात्तृतीये, अलातस्य द्रुतगमनेन सर्वदेशसंयोगात्पूर्वोत्तरकालभाविनोस्तत्तत्प्रदेशाश्लेषालातसंयोगयोः क्रमाग्रहणात्तुरीये, दर्पणादिप्रतिहता नायनरश्मयो दर्पणादिदेशमुखान्तरालाग्रहणपूर्वकं निजमुखादि गृह्णन्तीति पञ्चमे, दिगन्तरांशस्य दिगन्तरेऽपि सत्त्वाददृष्टवशाद्दिगन्तराग्रहेण दिगन्तरांशस्यैव ग्रहणात् षष्ठे, चाक्षुषतेजोगतिभेदरूप-सामग्रीजन्यगतिशैघ्र्यादगृहीतभेदं ज्ञानद्वयमगृहीतैकत्वं चन्द्रमगृहीतान्तरालदेशान्तरं च निरन्तरं गृह्णातीति सप्तमेऽपि याथार्थ्योपपादनरीतिरवसेया ।

**प्रदीपः**— अन्यथाख्यातिमतान्तरमुपस्थापयति **कश्चिदिति** । आगमार्थापत्तिप्रत्यक्षैः सर्वस्य सर्वात्मत्वं साधयति **तासामित्यादिना** । ततः किमित्यत आह **अत इति** । सर्वस्य सर्वात्मत्वे सर्वशब्दवाच्यत्वं सर्वार्थक्रियाकारित्वं च स्यादित्याशङ्क्य सूत्रशेषेणोत्तरमाह **निर्देशेति** । नन्वेवं सति लौकिकसिद्धौ भ्रान्तिबाधौ नोपपद्येयातामित्यत आह **दोषवशादिति** । न तु द्रव्ययोरेवान्योन्यावयवयोग इति भावः ।





रामानुजाख्याति-निरासः—

**३९३ सु०— तदिदमयुक्तम् ॥ तथा हि ॥ यानि तावच्छुक्तिकादिषु रजतादिसद्भावे श्रुतिपुराणसूत्राणि पठितानि तानि तेजोऽबन्नादीनां मिश्रतामभिदधति; न पुना रजतादीनां शुक्तिकादौ सद्भावम् । न हि कारणसद्भावे कार्यस्य सद्भावो नियतो येनोपपत्त्याऽपीममर्थं प्रतीमः । तथात्वे वा शुक्तौ रजतवत्सर्वस्यापि प्रतीतिः प्रसज्येत । अदृष्टादिवशान्नैवमिति चेन्न कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनायाः ॥**

**बिन्दुः**— ननु मूलप्रकृतेः सकलकार्योपादानताया उभयवादिसिद्धत्वात् । तस्याश्च सर्वकार्य-जननशक्तिमत्याः शुक्तावपि संभवेन रजतरूपकार्यारम्भे बाधकाभावात्पुरोवर्तिनि रजतसिद्धिरित्यत आह **न हि कारणसद्भावः कार्यसद्भावनियत इति ।**

**परि०**— ननु तेजोऽबन्नरूपकारणानां मेलनेन सर्वकार्येषु तेजोऽबन्नकारणसत्त्वे तत्कार्याणामपि सर्वत्र सत्त्वमनुमीयत इत्यत आह **कारणसद्भाव इति** । **कार्येति** । सर्वत्र सर्वावयवसत्त्वरूप-कार्यनिश्चयेत्यर्थः ।

**गु०दी०**— **न हि कारणसद्भावे कार्यसद्भावो नियत** इत्यत्र जगत्कारणतया रजतकारणभूततेजोऽबन्नानां शुक्तिं प्रत्यपि कारणत्वे तदपि रजतमेव भवेदिति नियमस्तवापि न हि । तथा सति तस्यापि कटकयोग्यत्वप्रसङ्गात् । अतः कार्यवैजात्याय कारणेषु वैजात्यं त्वयैव वक्तव्यम् । अतः किं शुक्तिशकले ईदृग्रजतावयवप्रवेशकल्पनयेति भावः ।

**यादु०**— ननु पाञ्चभौतिकेष्वपि पदार्थेषु किञ्चित्कार्यं केनचित्प्रचुरेण भूतेन परिणामविशेषवता आरब्धं तत्कार्यं यादृशपरिणामयुक्तं यद्भूतप्रचुरं तादृशपरिणामवतो भूतस्य कार्यान्तरेष्वपि विद्यमानत्वात्तेषु तथाविध-तत्तद्भूतप्रचुरतत्कार्यविषयबुद्धिरुपपद्यते । अतो रजतादीनां शुक्तिकादौ सद्भावः त्रिवृत्करणपञ्चीकरणाभिधायि-श्रुत्यादिप्राप्त एव । यथोक्तम् । 'शुक्त्यादौ रजतादेश्च भावः श्रुत्यैव बोधित' इति अतः कथमेतदित्यत आह **न हीति** । **नियत इति** । कारणान्तराभावेन कार्याभावसंभवादिति भावः । **अदृष्टादीति** । अत्रादिपदेन साधारणाकार-ग्रहणभेदाग्रहणदोषा गृह्यन्ते । **कार्यनिश्चयेति** । अदृष्टदोषादेः कार्यैकोन्नेयत्वात्कार्यस्वरूपस्य चेदानीमप्यनिर्धारित-त्वान्नादृष्टादिकल्पकमत्रास्तीत्युक्तातिप्रसङ्गस्तदवस्थ एवेति भावः ।

**वं०प०**— ननु तेजोऽबन्नानां कारणानां मिश्रत्वात्तत्कार्ये शुक्त्यादावपि रजतावयवमिश्रता प्राप्तैवेत्यत आह **न हीति** । कारणसद्भावे कारणे मिश्रतासद्भावे । कार्यसद्भावः कार्ये मिश्रतासद्भावः । निमित्तान्तराभावेन कार्येऽभावसंभवादित्याशयः ।





**आनन्दः**— ननु रजतस्य तैजसत्वात्तेजोंशानां च शुक्तौ सद्भावेन कारणसद्भावात्कार्यमपि तत्रानुमीयत इत्यत आह **न हीति** । **तथात्वे वेति** । कारणसद्भावे नियतः कार्यसद्भावश्चेदित्यर्थः । **कार्येति** । कार्यनिश्चये-ऽदृष्टवशत्वकल्पना तस्यां च सत्यां कार्यनिश्चय इत्यर्थः ।

**श्रीनिधि०**— **तथात्वे वेति** । कारणसद्भावे कार्यसद्भावस्यापि नियतत्व इत्यर्थः । सर्वकारणाना-मप्येकत्रमिति तत्त्वादिभावः । एवं चोपपत्त्याभास एवायमिति भावः । सर्वस्यापि प्रतीतिरिति रजतसादृश्यलक्षण-दोषादन्यपरित्यागेन रजतमेव प्रतीयते न सर्वमिति चेन्न । द्रव्यावयवयोग एव सादृश्यमिति मते सर्वसादृश्यस्यापि तत्र सत्त्वादिति । न च वाच्यं रजतादि भूयोऽवयव योग एव रजतादि सादृश्यमिति । तर्हि रजतादिकमेव तन्न तु रजतादिसदृशं न हि रजतादिकमपि केवलं रजतादिकं किन्तु रजताद्यंशभूयस्त्ववदेव ।

**वा०चं०**— तथा हीति परोक्तसर्वयुक्तीनामयुक्तत्वविशदनं प्रतिज्ञाय प्रथमयुक्तेस्तावदयुक्ततामुपपादयति **यानीति** । आदिपदेन पुराणोक्तमहदादितत्त्वसङ्ग्रहः । तथा चास्माकं तत्त्वे तत्त्वान्तरभ्रमस्य अभावात् तत्त्वसाक्षा-त्कारवतां योगिनां च भ्रमस्यैवानुपपत्त्याऽस्मदादिभ्रमविषयशुक्तिरजतादौ चैतत् श्रुत्यादेरप्रयोजकत्वात्तदुदाहरण-मसङ्गतमिति भावः । ननु श्रुत्यादेः साक्षाच्छुक्त्यादौ रजतादिसद्भावाप्रतिपादकत्वेऽपि तेन स सिद्ध्यत्येव । श्रुत्यादिना तेज आदीनां त्रिवृत्करणे प्रतिपादिते कार्ये कारणसद्भावनियमात्पार्थिवशुक्त्यादेरपि त्रिवृत्कृतपृथिवीकार्यतया शुक्त्यादौ तेजोंऽशस्य सत्त्वात्तैजसरजतसद्भावोऽपि तत एव सिद्ध्यतीत्यत आह **न हीति** । ननु पाञ्चभौतिकेष्वपि पार्थिवेषु किञ्चित्कार्यं केनचिद्भूतेन परिणामविशेषवताऽऽरब्धम् । तत्र यादृशपरिणामविशेषवद्यद्भूतप्रचुरं किञ्चित्कार्यं तादृशपरिणामविशेषवत्तद्भूतं कार्यान्तरेऽपि । यद्यपि त्रिवृत्करणदशायामवान्तरपरिणामविशेषो नास्ति तथाऽपि त्रिवृत्करणेन कार्यानुप्रविष्टस्य भूतस्य कार्यान्तरानुप्रविष्टसमानपरिणामसंभवात् । तथा च येन तेजोभूतेन प्रचुरेण परिणामविशेषवता रजतमारब्धं तत्परिणामविशेषवत्तेजोभूतं शुक्त्यादौ विद्यत इति शुक्त्यादौ रजतादिसद्भावसिद्धिः । तथा त्रिवृत्करणेन शुक्त्याद्यन्तर्गततेजोंशस्य शुक्लभास्वररूपेण परिणामवतो रजतसादृश्याद्रजतावयवत्वमुपपन्नम् । रजतावयवसदृशाकारत्वमेव हि रजतावयवत्वं न तु रजतादिभ्य आनीय निवेशितत्वम् । गेहस्थापणस्थरजतयो-रपीदमेव सादृश्यम् । पूतिकादिषु प्रतीयमानसोमलताद्यवयवानां संप्रतिपन्नसोमलतावयवसदृशाकारत्वमेव सोमलता-द्यवयवत्वम् । एवं च शुक्त्यादौ रजतावयवसिद्धिः । अयं च पक्षः शुक्त्यादौ रजतादिसद्भावप्रतिपादनप्रसङ्गात्कथितः प्रथमपक्ष एव च प्रथमयुक्तिदूषणावसरे सङ्गतः । तथा च कथं न शुक्त्यादौ रजतसद्भावसिद्धिरिति चेत्तर्हि त्रिवृत्कृतत्वादेव शुक्तौ नानापरिणामविशेषवदंशस्य नानापरिणामविशेषवत्सुवर्णादितेजोंऽशस्य नानापरिणाम-विशेषवत्पाषाणादिपृथिव्यंशस्य तत्तत्सदृशावयवानां च सत्त्वाच्छुक्तौ रजतस्येवान्यस्य सर्वस्य प्रतीतिप्रसङ्ग इत्याह **तथात्वे वेति** । सिद्धे शुक्त्यादौ सर्वकार्यसद्भावे रजतादिप्रतीतिविशेषनियामकतयाऽदृष्टकल्पना तस्यां च सत्यामतिप्रसङ्गाभावात्तत्सिद्धिरिति परस्पराश्रयतेत्याशयेनाह **कार्येति** ।

**वा०र०**— **तथा हीतीति** । तथा रामानुजोक्तयुक्तीनामयुक्तत्वं हि प्रसिद्धमित्यर्थकेन तथा हीत्यनेनेत्यर्थः । अनेन परोक्तसर्वयुक्तीनामयुक्तत्वप्रसिद्धिं प्रतिजानीते तथाहीत्यवतारं सूचयति **आदिपदेनेति** । तेजोबन्नादीना-





मित्यादिपदेनेत्यर्थः । **अस्माकमिति** । तत्त्वसाक्षात्कारशून्यानामित्यनेनाधिष्ठानं प्रधानज्ञानाभावरूपो भ्रमाभावे हेतुरभिहितः । तथापि तत्त्वसाक्षात्कारवतां योगिनां भ्रमः स्यादित्यत उक्तं **तत्त्वेत्यादि** । अनेन श्रुतिपुराणादिकं किं तत्त्वे तत्त्वान्तरसंयोगसद्भावे प्रमाणमुत प्रकृतशुक्त्यादौ रजतादिभ्रमोपयोगिनि शुक्त्यादौ रजतादिसद्भावे; आद्येऽपि स भ्रमः किमस्मदादीनामुत योगिनामिति विकल्प्य, नाद्यः अस्मदादीनां तत्साक्षात्कारस्यैवाभावात् । न द्वितीयः । योगिनां भ्रान्तेरभावात् । नापि प्रथमद्वितीयः । तत्रास्यानुपयोगादिति योजनां सूचयति । मूले सोमादीति प्रकृतत्वेऽपि सोम एवेति सोममात्रग्रहणं व्रीह्याद्युपलक्षणाभिप्रायेण । आक्षेपकासिद्धिरुक्ता भवतीति नीवारेष्विति चोत्तरवाक्यव्याख्यावसरेऽस्य विशिष्यते चेदं स इति । रजतादिसद्भाव इत्यर्थः । कथं तत्र तत्सद्भावसिद्धिरित्यत-स्तमुपपादयति **श्रुत्यादिनेति** । शुक्त्यादावित्यनन्तरं त्रिवृत्कृतपृथिवीसत्त्वेनेति शेषः । प्रतिपादित इत्यस्य प्रतिपादनादित्यर्थात्तद्बलेन शुक्त्यादौ त्रिवृत्कृतपृथिवीसत्त्वेन तेजोंशसत्त्वमित्यत उक्तं त्रिवृत्त्वस्यापि सत्त्वात् तत एव तैजसरजतसद्भावोऽपि सिध्यतीति संबन्धः । शुक्त्यादौ कुतः पृथिवीसत्त्वमित्यत उक्तं कारणस्य कार्ये सत्त्व-नियमादिति । तावतापि कुतः पृथिवीसत्त्वमित्यत उक्तं **पार्थिवेति** । पृथिवीकार्येत्यर्थः । पृथिवीसत्त्वेऽपि कुत-स्तेजोंशसत्त्वमित्यत उक्तं **त्रिवृत्कृतपृथिवीति** । एवं च त्रिवृत्कृतत्वसिध्यर्थं श्रुत्यादिकमिति परम्परया शुक्त्यादौ रजतादिसद्भावे श्रुत्यादिकं प्रमाणमित्युक्तं भवति । **न हीतीति** । श्रुत्यादिप्रतिपादितत्रिवृत्त्वोपेतपृथिवी-स्वीकार्यशुक्त्यादावस्तु नामाकार्ये कारणसद्भावोऽपि नियतो भवतु । न तावतापि रजतसद्भावः शुक्त्यादौ सिध्यति । न च त्रिवृत्कृतपृथिवीरूपकारणसत्त्वे तेजोंशसिध्या तत्कार्यमपि तत्र सिध्यतीति वाच्यम् । यत्र यत्र कारणं सत् तत्र तत्कार्यमपि सदित्येवं कारणसत्त्वे कार्यसत्त्वनियमाभावेन क्वचित्तेन कारणेन स्वकार्यजननेऽपि शुक्त्यादौ सत्यपि तस्मिंस्तत्कार्याभावोपपत्त्या श्रुत्यादेः परम्परयाऽपि शुक्त्यादौ रजतादिसद्भावावेदकत्वं नायातीति मूलार्थः । कारणसद्भावः कार्ये चेदङ्गीकृतस्तर्हि तत्कारणेन जायमानं कार्यमपि कार्ये प्राप्तमेव । अन्यत्र तेन कारणेन स्वकार्यकरणात् । न च स्थलान्तरे तस्य स्वकार्यजनकत्वे तदन्यत्रापि तज्जनकत्वे नियामकाभावेन कार्ये तत्कार्य-नियमो नेत्युक्तमिति वाच्यम् । यत्र तत्कारणं यादृशं स्वकार्यकारितयाऽवधृतं तादृशस्यैव तस्य कार्यान्तरानुप्रवेशे तत्रापि स्वकार्यकारिताया अवर्जनीयत्वात् । ततश्च शुक्त्यादौ रजतरूपकार्यकारितया स्थलान्तरेऽवधृततेजोभूतांशस्य सत्त्वे रजतोत्पत्तिः संभवत्येवेत्याद्याशङ्कामुत्थाप्य तन्निवर्तकतयोत्तरवाक्यमवतारयति **ननु पाञ्चभौतिकेष्वपीति** । अत्र त्रिवृत्करणपक्षस्यैव परोपन्यासानुसारेण प्रकृतत्त्वेऽपि वस्तुतः समानन्यायतयाऽभ्युच्चयेन सर्वत्र कार्यसद्भावोप-पादनाय पाञ्चभौतिकेष्वपीत्युक्तम् । अन्यथा पार्थिवाप्यतैजसेऽपीत्यवक्ष्यत् । अत एव प्रकृताभिप्रायेण यद्यपी-त्याद्यधिकमुपपादनमित्यदोषः । **किञ्चिदित्यादि** । किञ्चित्पार्थिवं कार्यं शैलतर्वादिपृथिवीरूपभूतेन शैलाद्याकार-परिणामविशेषवता आरब्धम् । तत्र तदानीमिति यावत् । तत्किंञ्चिच्छैलादिकार्यं शैलादिपरिणामविशेषवत्पृथि-व्याख्यभूतप्रचुरं जातम् । एवं यदा प्रचुरपृथिवीभूतस्य कार्यप्रवेशो जातस्तदैव तत्पृथिवीभूतमप्रचुरं यत्राबादिप्रचुरे सरिदादौ तिष्ठति तत्रापि शैलादिपरिणामविशेषवदेव स्वयमस्ति । पार्थिवं शैलादिकं जनयित्वा तत्रानुप्रविष्टपृथिवी-भूतस्याबादिगतस्य चैकत्वादित्याशयः । ननु यदा त्रिवृत्करणं जायते तदा शैलादिपरिणामविशेषवत्त्वं पृथिवीभूतस्य नास्त्येव । तदानीमेवोत्तरपरिणामविशेषस्याभावात्तथाच कथं कार्यान्तरानुप्रविष्टस्यापि परिणामविशेषवत्त्वमित्युच्यत

इत्याशङ्कते **यद्यपीति** । तद्दशायामवान्तरपरिणामाभावेऽपि तदुत्तरं तत्परिणामसत्त्वेन तत्परिणामकाल एव तत्परिणामवद्भूतस्य कार्यान्तरेऽपि सत्त्वं संभवत्येवेति परिहरति **तथापीति** । **त्रिवृत्करणेनेति** । भूतस्य स्वकार्यजनकता त्रिवृत्करणाधीना । तथा च त्रिवृत्करणेन तदनन्तरमिति यावत् कार्यविशेषारम्भकतया कार्यानुप्रविष्टस्येति योज्यम् । कार्यान्तरेऽनुप्रविष्टं यत्तदेवभूतं तत्समानपरिणामसंभवो नाम स्वयं प्रचुरं सद्यत्कार्यानुप्रविष्टं तत्र कार्ये कार्यान्तरगताप्रचुरस्य यः परिणामस्तेन समानो यथा स्यात्तथा परिणामः तत्संभवादित्यर्थः । परिणामसंभव इत्येव वक्तव्ये संभवादिति पञ्चमी ततश्च युक्तं तादृशस्यैव कार्यान्तरेऽपि सत्त्वमिति पूर्वत्र हेतुत्वाभिप्रायेण । एवं च त्रिवृत्करणदशायामवान्तरपरिणामविशेषाभावेऽपि त्रिवृत्करणेन कार्यानुप्रविष्टेत्यादेः संभवादित्यन्तम् । विद्यत एवेति पूर्वप्रतिज्ञोपपादकत्वेन योजनीयम् । संभव इत्येव पाठस्तु यथाश्रुत एव । एवं सामान्यतोभूतस्थितिमभिधाय शुक्त्यादावपि रजतसद्भावोपपादकतया तदुपयोगमाह **एवं चेति** । तेजोभूतं हि प्रचुरं तैजसपदार्थभूतरजतारम्भकम् । तथा च तदारम्भोपयोगिपरिणामविशेषवद्यदा प्रचुरं तेजोभूतं भवति । तदैव शुक्त्यादिगताप्रचुरस्य तस्य तथाविधः परिणामविशेषोऽस्त्येव । प्रागुक्तसमानपरिणामत्वयुक्तेः । तथा च रजतारम्भोपयोगिपरिणामविशेषे सति तेजोभूतेनान्यत्र स्थले रजतारम्भवच्छुक्तिकादावपि विद्यमानेन तेन तदारम्भाच्छुक्त्यादौ रजतसद्भावसिद्धिरित्यर्थः । प्रकारान्तरेऽपि शुक्त्यादौ रजतादिसद्भावमुपपादयति **तथा त्रिवृदिति** । एतत्पक्षोपन्यासस्यासङ्गतिं स्वयमेव परिहरिष्यति । पार्थिवेऽपि शुक्त्यादौ त्रिवृत्करणेन निमित्तेन त्रिवृत्कृतपृथिवीरूपकारणसत्त्वेनेति यावत् । पास्तो यस्तेजोंशस्तस्येति योजना । त्रिवृत्करणेनेत्येतत्सादृश्यादित्यत्रापि संबध्यते । रजतसादृश्यं च रजतावयवसादृश्यादित्युत्तरग्रन्थादेव स्पष्टम् । कथं तदवयवसादृश्यमात्रेण तदवयवत्वमित्यतः पारिभाषिकमेतदित्याह **रजतावयवेति** । **सदृशाकारत्वमेव हीति** । प्रमाकरणत्वमेव हि प्रमाणत्वमितिवत्प्रमाकरणत्वमितिवच्चेदमुपपाद्यम् । शुक्त्याद्यन्तर्गतस्य तेजोंशस्येत्यनुवर्तते । अवयवत्वमित्यनन्तरं विवक्षितमिति शेषः । एवकारव्यावर्त्यमाह **नन्विति** । उक्ततेजोंशस्य रजतावयवत्वं तदवयवसदृशाकारणत्वादेवोपपन्नम् । न तु तस्य तदवयवत्वोक्त्या रजतादानीय शुक्त्यादौ निवेशितत्वं विवक्षितमिति योजनान्न कश्चित्क्षुद्रोपद्रवः । रजतादिभ्य इत्यादिपदं स्थलान्तरेऽप्यारोपोपपादनमुक्तरीत्यैव द्रष्टव्यमित्याशयेन । ननु शुक्तिकादिगततेजोंशे रजतावयवसदृशाकारत्वरूपसादृश्याद्रजतावयवत्वमित्युक्तमसत् । सादृश्यस्य तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपत्वात् । गेहस्थापणस्थरजतयोः सादृश्ये तद्गतभूयोधर्मवत्वरूपत्वस्यैव दर्शनात् । न चेहोक्ततेजोंशे रजतावयवगतभूयोधर्मवत्वं संभवति । गेहस्थापणस्थरजतयो रजतत्वादिभूयोधर्मवत्ववदुक्ततेजोंशे रजतावयवगतरजतावयवत्वादिधर्मबाहुल्याभावादित्यत आह **गेहस्थेति** । इदमेव शुक्लभास्वररूपेण सदृशाकारत्वमेवेत्यर्थः । तावन्मात्रेणैव सदृशव्यवहारोपपत्तौ तद्गतभूयोधर्मवत्त्वानुसरणस्य व्यर्थत्वात् । तथाच रजतावयवत्वादिधर्मवत्त्वाभावेऽपि शुक्त्यादिगततेजोंशस्य शुक्लभास्वररूपेण रजतावयवसादृश्यसंभवाद्रजतावयवसदृशाकारत्वरूपं सादृश्यं संभवतीति भावः । शुक्त्यादिगततेजोंशे रजतावयवत्वोपपादनप्रकारेणैव पूतिकाद्यवयवानां सोमलताद्यवयवत्वमुपपादयति **पूतिकादिष्विति** । प्रतीयमानसोमेत्यस्य सोमलताद्यवयवत्वेन प्रतीयमानानां पूतिकाद्यवयवानामित्यर्थः । शुक्त्यादिगततेजोंशे रजतावयवत्वं पारिभाषिकं यथाश्रितमेवं सोमलताद्यवयवत्वमपि पूतिकाद्यवयवानां पारिभाषिकमेव । न तु सोमलताभ्य





आनीयनिवेशितत्वमित्यर्थः । एवमुक्ततेजोंशे रजतावयवत्वोपपादनं यत्कृतं तत्फलमाह **एवं चेति** । प्रतीतेर्यथार्थत्वोपपादकशुक्त्यादौ रजतसद्भावप्रतिपादनायोपन्यस्तश्रुत्यादिनिराकरणावसरे श्रुत्यादिबलादागतरीतेरेवोपन्यसनीयत्वेऽपि सादृश्ययुक्तेरपि च वस्तुनो वस्त्वन्तरेति युक्तौ कथञ्चित्सङ्गतत्वेऽपि इडासङ्गत्योपन्यासायोग इत्याशङ्कापरिहारायाह **अयं च पक्ष इति** । एवमपि शुक्त्यादौ रजतावयवसद्भावेन रजतसद्भावोपपादनं कथञ्चित्कर्तुं शक्यमिति प्रकारान्तरसंभवः प्रसङ्गादुक्त इत्यर्थः । अतो नासङ्गतिः शङ्कनीयेति भावः । **प्रथमपक्ष एवेति** । कार्यान्तरेऽपि किञ्चित्कार्यानुप्रविष्टपरिणामविशेषवत्तेजोभूतमस्तीति तत्कार्यरजतसिद्धिरिति । प्रथमपक्ष इत्यर्थः । **प्रथमयुक्तीति** । श्रुत्यादिरूपेत्यर्थः । **तथा चेति** । उक्तरीत्या रजतकारणतेजोभूतांशस्य शुक्त्यादौ सत्त्वेन विशिष्टकारणसद्भावे कार्यनियमेन रजतसद्भावसिद्धिरित्यर्थः । उत्तरवाक्यार्थस्य स्पष्टमप्रतीतेस्तदर्थं कथयन्नेवोत्तरवाक्यमवतारयति **तर्हीति** । रजतकारणपरिणामविशेषवत्तेजोंशस्य शुक्त्यादौ सत्त्वेन तत्कार्यरजतसद्भावमङ्गीकृत्य तत्र तत्प्रतीतिरित्यङ्गीकार इत्यर्थः । अंशस्येति त्रयस्य सत्त्वादित्यनेन संबन्धः । प्राक्प्रसङ्गात्प्रकारान्तरसंभव उक्तस्तन्निराकरणमपि प्रसङ्गादेवोह्यमित्याशयेन **तत्सादृशावयवानां चे**त्युक्तम् । एतेन प्रसङ्गात्कथितश्चेत्तन्निरासो मूले नास्तीति मूलमपूर्णमिति शङ्का गर्भस्रावेणैव निराकृतेति सूचितम् । **कार्येति** वाक्यं व्याकुर्वन्नेव तत्सूचितं दूषणं च दर्शयंस्तद्वाक्यमवतारयति **सिद्ध इत्यादिना** ।

**स०व्र०**— न च तेजोऽबन्नानां रजतादिकारणत्वात्कारणेषु परस्परावयवसद्भावे कार्येष्वपि परस्परस्य सद्भावः स्यादित्यत आह **न हि कारणसद्भाव इति** ।

**विट्ठ०**— ननु तैजसादीनां श्रुत्यादिना त्रिवृत्करणे प्रतिपादितेऽपि कार्ये कारणसद्भावनियमात् पार्थिवशुक्त्यादेरपि त्रिवृत्कृतपृथिवीकार्यतया शुक्त्यादौ तेजोंशस्य सत्त्वात् तैजसरजतसद्भावोऽपि तत एव सिध्यतीत्यत आह **न हीति** । **कार्यनिश्चय इति** । अदृष्टस्यापि परगृहीतदोषादेश्च कार्यैकोन्नेयत्वात् कार्यस्वरूपस्य चेदानीमनिर्धारितत्वात् नादृष्टादिकल्पकमस्तीत्युक्तातिप्रसङ्गस्तदवस्थ इति भावः ।

**प्रदीपः**— **यानि तावदिति** । त्रिवृत्करणमेवात्र प्रतिपाद्यते न सर्वात्मतेत्यर्थः ।

**३९४ सु०— श्रुतार्थापत्तिस्त्वत्यन्तायुक्ता । तथा हि । पूतिकादौ किं सोमाद्यवयवाः भूयांसः कल्प्यन्ते, उत समाः, अथाल्पीयांसः । आद्ये सोम एवासौ; तत्कथमनुकल्पः स्यात् । न हि सोमोऽपि केवलः सोमः; किन्तु सोमांशभूयस्त्ववान् । न द्वितीयः । उभयदर्शनप्रसङ्गात् । तृतीयं तु कथं सोमकार्यं कुर्यात् । अन्यथा शुक्तिकाऽपि कुतो रजतार्थक्रियां न कुर्यात् । श्रुतिप्रामाण्यात्तदर्थक्रियाकारिताऽवगम्यत इति चेत् । किं तर्हि सोमावयवकल्पनया । श्रुतिप्रामाण्यादत्यन्तविविक्तानामेव वस्तूनामर्थक्रियासाम्यमुपगम्यताम् ॥**





**परि०— अनुकल्प इति ।** 'कस्यचिन्मुख्यस्याभावेऽमुख्यस्यान्यस्योपादानमनुकल्प' इति मीमांसकैः परिभाष्यते। ननु सोमलाभे समग्रसोमावयवलाभोऽस्ति। भूयःसोमावयववतोऽन्यस्योपादाने तु सकलसोमावयवालाभेनामुख्यत्वादनुकल्प एवायमित्यत आह **न हीति ।** सोमेऽपि त्वदुक्तत्रिवृत्करण-प्रक्रियया द्रव्यान्तरावयवसत्त्वादिति भावः । **श्रुतीति ।** 'सोमाभावे पूतिकानभिषुणुयादि'ति श्रुति-प्रामाण्यादित्यर्थः ।

**वं०प०— श्रुतार्थापत्तिः** सोमाभावे पूतिकं गृह्णीयादिति श्रुतार्थापत्तिरित्यर्थः । **अनुकल्पः** प्रतिनिधिः । सोमांशानां भूयस्त्वे कुतः सोमत्वमित्यतस्तदुपपादयति **न हीति** । केवलः सोमांशभूयस्त्वरहितः । **किं त्विति** । तथा च तत्सोमांशभूयस्त्वं पूतिकेऽपि चेदङ्गीकृतं तर्हि पूतिकस्यापि सोमत्वमेव प्राप्तं न तु तत्प्रतिनिधित्वमिति भावः । **उभयेति** । शुक्त्यवयवानां रजतावयवानां च दर्शनप्रसङ्ग इत्यर्थः । **अन्यथेति** । सोमांशानामल्पीयस्त्वेऽपि पूतिकस्य यदि सोमकार्यकारित्वमुच्यते तर्हि शुक्तिकायां रजतांशानामल्पीयस्त्वेऽपि रजतकार्यकारित्वं स्यादित्यर्थः । **श्रुतीति** । सोमाभावे पूतिकं गृह्णीयादिति श्रुतीत्यर्थः । **तदर्थक्रियेति** । सोमोचितार्थक्रियाकारित्वं पूतिकस्यावगम्यत इत्यर्थः । शुक्तिकायास्तु न रजतोचितार्थक्रियाकारित्वम् । तत्र श्रुत्यभावादिति भावः । **अत्यन्तविविक्तानां** परस्परावयवसंबन्धशून्यानाम् । **वस्तूनां** सोमपूतिकादीनाम् ।

**आनन्दः— अन्यथेति** । अंशाल्पीयस्त्वेऽपि तत्कार्यकारित्वं चेदित्यर्थः ।

**कं०रा०— समाः** पूतिकाद्यंशसमाः । **अल्पीयांसः** पूतीकाद्यंशापेक्षया । **अनुकल्पः** प्रतिनिधिः । **उभयेति** । उभयोः सोमत्वपूतीकत्वयोः दर्शनप्रसङ्गादित्यर्थः । **कथं सोमकार्यं कुर्यादिति** । एतच्चोपलक्षणम् । पूर्वतन्त्रे सामान्यं तच्चिकीर्षा हीत्यधिकरणे यदि सदृशमुपादीयते तर्हि तेषामवयवानां कतिपया लभ्यन्ते । जातिमात्रमवयवान्तरमात्रं च परित्यक्तं भवतीत्युक्तेस्ततसदृशे तज्जात्यभावेन सोमादिसदृशे पूतिकादौ सोमत्वादिप्रकारकज्ञानस्य याथार्थ्यं न स्यादित्यपि द्रष्टव्यम् । **अन्यथेति** । सोमाद्यंशाल्पीयस्त्वतः पूतिकादेः सोमादिकार्यकारित्वे रजतांशाल्पीयस्त्ववती शुक्तिकाऽपि रजतार्थक्रियां कुतो न कुर्यादित्यर्थः ।

**श्रीनिधि०—** वक्ष्यति च **न हि सोमोऽपि केवल** इत्यादि । **अत्यन्तायुक्तेति** । सामग्र्यां सत्यां प्रतिबन्धकाभावकाले कार्यं संभवतीति कथञ्चिद्युक्तता प्रकृते तु वक्ष्यमाणन्यायेन कथञ्चिदिति एवमुक्तम् । **अनुकल्पः** प्रतिनिधिः । **केवल इति** । इतरांशा संमिश्र इत्यर्थः ।

**वा०चं०—** एवमाद्यसाधकं निरस्य किञ्चेत्युक्तसाधकस्वरूपं दर्शयन्नेव तदनुपपत्तिं प्रतिजानीते **श्रुतेति** । अदृष्टादिवशाच्छुक्तेरेव प्रतीतिरित्यादिसमाधानाभासोत्प्रेक्षायाः पूर्वत्र संभावनावदत्र तथाभूतोत्प्रेक्षाया अप्यसंभव





इत्याशयेनात्यन्तपदवक्ष्यमाणरीत्या प्रसक्तप्रकारेष्वेकस्याप्यनुपपत्त्या श्रुत्यनुसारेण चावयवकल्पनारूपमूलस्यैव हानापत्त्या वैतत्साधकस्यात्यन्तायुक्तत्वम् । ननु पूतीकावयवानामपि सत्त्वाद्युक्तं सोमानुकल्पत्वमित्यत आह **न हीति** । अनेनार्थापत्तावाक्षेपकासिद्धिरुक्ता भवति । उभयेत्यनेनानिष्टप्रसङ्ग उक्तो भवति **तृतीये त्विति** । तदर्थक्रियाप्रयोजकतदंशभूयस्त्वस्याभावादुपपादकमप्रयोजकमिति भावः । नन्वंशभूयस्त्वतदभावौ नार्थक्रिया-तदभावप्रयोजकावपि त्वनुकल्पबोधकश्रुतिरेवेति नीवारादौ तत्सद्भावाच्छुक्तिकादौ च तदभावान्नानुपपत्तिरिति शङ्कते **श्रुतीति** । **किं तर्हीति** । अनेनाक्षेपकान्यथासिद्धिरुक्ता भवति ।

**वा०र०— आद्यसाधकमिति** । श्रुत्यादिरूपमित्यर्थः । **दर्शयन्निति** । प्राक्किञ्चेत्यादिग्रन्थे श्रौतार्थापत्तित्वेन प्रमाणपर्यवसानं नोक्तमिति भावः । टीकाकृता त्वेतदुत्तरग्रन्थं मनसि कृत्वा पर्यवसानमुक्तमिति ज्ञेयम् । **अत्यन्तपदमिति** । अत्यन्तायुक्तमित्ययुक्तत्वेऽत्यन्तत्वमुक्तमित्यर्थः । अत्रापि श्रुतिप्रामाण्यादिति समाधाना-भासोत्प्रेक्षास्तीति शङ्कानिरासाय प्रकारान्तरेणात्यन्तपदाभिप्रायमाह **वक्ष्यमाणेति** । पूतिकादौ हीत्यनुपदमेव वक्ष्यमाणेत्यर्थः । हान्यापत्त्या वैतत्साधकस्यात्यन्तायुक्तत्वमित्यस्य हान्यापत्त्याशयेन वा अत्यन्तायुक्तेत्यत्यन्त-पदमित्यर्थः । तस्य चायुक्तत्वेत्यन्ततत्वमुक्तमित्यर्थः । **अनेनेति** । एवं विकल्प्य भूयस्त्वपक्षस्य निराकरणेनेत्यर्थः । **आक्षेपकेति** । सोमाभावे पूतिकाग्रहणान्यथानुपपत्त्या पूतीके सोमावयवा इति कल्पितम् । तत्र सोमाभावे पूतीकग्रहणमित्येव त्वत्पक्षेऽसिद्धम् । उक्तरीत्या सोमावयवभूयस्त्वेन सोमवत्पूतिकस्यापि सोमत्वेन सोमत्वादेव सोमस्येव पूतिकस्यापि ग्रहणमिति प्राप्तत्वात् । तथा चोक्ताक्षेपकासिध्या तेन सोमावयवानां पूतिके कल्पनानुप-पत्तिरित्युक्तं भवतीत्यर्थः । मूले उपलक्षणाभिप्रायेण सोम एवासावित्युक्तेष्टीकायामपि पूतिकावयवानामित्येवो-क्तत्वेऽप्युपलक्षणया नीवारग्रहणं व्याख्येयम् । तदनुसारेणाक्षेपकासिद्धिरपि नीवारे व्रीह्यवयवाक्षेपकव्रीह्यभावे नीवारग्रहणसिद्धिः । नीवारे व्रीह्यवयवानां भूयस्त्वेन व्रीहिवन्नीवारस्यापि व्रीहित्वादेव ग्रहणप्राप्तेरित्येवमुपलक्षणया व्याख्येया । अत एव कथं तर्हि नीवारा इत्येतद्भाववर्णनावसरे नीवाराणां व्रीहित्वापत्तेरुक्तत्वादिति वक्ष्यतीति ज्ञेयम् । समा इति द्वितीयदूषणेनापि लब्धमाह **उभयेत्यनेनेति** । कथं कुर्यादित्यस्याभिप्रायमाह **तदर्थक्रियेति** । कथमित्याक्षेपे । न कुर्यादिति भावः सूचितोऽनेनेति ज्ञेयम् । तदंशाल्पत्वेऽपि तदर्थक्रियाकारित्वाभ्युपगमेऽति-प्रसङ्गमाह मूले **अन्यथेति**।

**विठ्ठ०— अनुकल्प इति** । मुख्यस्य कस्यचिदभावे अमुख्यस्यान्यस्योपादानं अनुकल्प इति मीमांसक-परिभाषा । पूतिकावयवानामपि सत्त्वाद्युक्तं सोमानुकल्पत्वमित्यत आह **न हीति** । अनेनार्थापत्तेराक्षेपकासिद्धिरुक्ता भवति । उभयदर्शनेनानिष्टप्रसङ्ग उक्तो भवति । **तृतीये त्विति** । तदर्थक्रियाप्रयोजकतदंशभूयस्त्वाभावात् उपपादक-मप्रयोजकमित्याशयः ।





**३९९ सु०— साद्दश्यं च सामान्यं वा धर्मान्तरं वा नान्योन्यावयवसंयोग इति वक्ष्यामः ॥ किञ्च घृततैलयोरन्योन्यसद्दशयोरन्योन्यावयवसंयोगादन्योन्यार्थक्रियया भाव्यम् । न भाव्यं च विसद्दशयोर्द्रव्ययोः ॥ किञ्च मातृमातङ्गमदिराद्यतिसाद्दश्यं भार्यादिष्वप्यस्तीति तदुपभोगे प्रत्यवायः स्यात् । अल्पावयवसंयोगान्नैवमिति चेत् कथं तर्हि नीवारा व्रीहिकार्यं कुर्युः । श्रुतिप्रामाण्यादिति वदतो दत्तमुत्तरम् ॥ अपरावयवसंयोग एव साद्दश्यं चेत् कथं ककारखकारयोः साद्दश्यमिति चिन्त्यम् ॥**

**परि०—** यद्यपि चेत्यादिना प्रत्यक्षमुक्तं तदपि निराह **साद्दश्यं चेति**। न्यायमतेनाह **सामान्यं वेति** । स्वमतेनाह **धर्मान्तरं वेति** । **वक्ष्याम इति** । वैशेषिकाधिकरणे । 'न सर्वधर्म एकोऽस्ति समुदायस्तु भिन्नगः । एतादृशं च सादृश्यं पदार्थेषु पृथक्पृथक्' इत्याद्यनुव्याख्यानव्याख्यावसर इति भावः । **भार्यादिष्विति** । भार्यायां मातृसादृश्यम् । पितृगुरुप्रभृतिषु मातङ्गशब्दितचण्डालसादृश्यम् । घृतक्षीरादौ मदिराशब्दितमद्यसादृश्यमस्तीत्यर्थः । **ककारखकारयोरिति** । निरवयवत्वात्तयोरिति भावः । न च तत्र सादृश्यमेव नेति वाच्यम् । 'वर्ग्यो वर्गेण सवर्ण' इति शिक्षाग्रन्थविरोधादिति भावः ।

**गु०दी०— न भाव्यं च विसद्दशयोः** इत्यत्र ''आपोभिघार इति'' श्रुत्युक्तं घृतकार्यं विसदृशीभिरद्भिः न जायेतेति भावः । परमते शब्दस्य निरवयवत्वादिति भावेनाह **कथं ककारखकारयोरिति** ।

**यादु०— धर्मान्तरं चेति** । अन्याघटितं जातिवदखण्डरूपमिति समयपादे वक्ष्याम इति भावः । **न भाव्यं चेति** । भारनयनरूपबलीवर्दार्थक्रिया पुरुषविशेषेणापि भवति । सा न स्यात् इत्यर्थः । **ककारेति** । वर्णानां निरवयवत्वादित्यर्थः ।

**वं०प०—** यदपि चेत्यादिना प्रत्यक्षमुक्तं तन्निरासायाह **साद्दश्यं चेति** । अन्योन्यावयवसंयोगात् त्वन्मतेऽन्योन्यावयवसंयोगसद्भावादित्यर्थः । मातृसादृश्यं भार्यायां मातङ्गश्चण्डालस्तत्सादृश्यं पितरि मदिरासादृश्यं क्षीर इति द्रष्टव्यम् । **अल्पेति** । भार्यादौ मात्राद्यवयवा अल्पा एव सन्तीति न तदुपभोगे प्रत्यवाय इत्यर्थः । **नीवारा इति** । तेष्वपि सोमावयवानामल्पीयसामेव सत्त्वादित्यर्थः । बहूनां समानां वा सद्भावे दोषस्योक्तत्वादिति भावः । पूतिके सोमावयवानामल्पानां सद्भावेऽपि तत्कार्यकारित्वं श्रुतिप्रामाण्यात्संभवतीति चेत्तत्राह **श्रुतीति** । **दत्तमिति** । अत्यन्तविविक्तानामेवेत्यादिनेत्यर्थः । **अपरावयवसंयोग एवेति** । नान्योन्यावयवसंयोगोऽतः किञ्च घृतेत्यादिनोक्तातिप्रसङ्गो नेति भावः । **ककारेति** । स्पर्शाक्षरत्वेन सादृश्यसद्भावादिति भावः ।





**आनन्दः**— तृतीयं साधकं निराह **सादृश्यं चेति**। भार्यादिष्वित्यत्रादिशब्देन याग(मातङ्ग)सदृश-फलविशेषस्य मदिरासदृशद्रवद्रव्यविशेषस्य च ग्रहणमिति ज्ञेयम्। **अपरावयवसंयोगि एवेति**। अपर एवावयवाः तत्संयोग इत्यर्थः। **कथमिति**। वर्णानां निरवयवत्वादिति भावः।

**कं०रा०**— **मातृमातङ्गेति**। मात्रतिसादृश्यं भार्यायां मातङ्गशब्दितचण्डालातिसादृश्यं द्विजे मदिरादिसादृश्यं च फेनिलदूर्वामूलरसेऽस्तीति मात्राद्यवयवयोगाद्भार्यादीनां, भार्याद्युपभोगे प्रत्यवायः स्यादित्यर्थः। "चण्डालप्लवमातङ्गदिवाकीर्ति जिनङ्गमा" इत्यमरः। **अल्पेति**। भार्यादिषु मात्राद्यल्पावयवयोगान्मात्राद्युपभोगेनेव न भार्याद्युपभोगेन प्रत्यवाय इत्यर्थः। **तर्हीति**। तदल्पावयवयोगात्तत्कार्यकारित्वाभावे व्रीह्यल्पावयवयुक्ता नीवाराः कथं व्रीहिकार्यं कुर्युरित्यर्थः। **दत्तमिति**। किं तर्हि तदवयवसद्भावकल्पनया ? श्रुतिप्रामाण्यादत्यन्तविविक्तानामेव वस्तूनामर्थक्रियासाम्यमुपगम्यतामित्युत्तरं दत्तमित्यर्थः। **ककारेति**। ककारखकारयोर्निरवयवत्वेनापरावयव-योगाभावादिति भावः।

**श्रीनिधि०**— **न भाव्यं च विसदृशयोरिति**। आपोभिघारा इति श्रुत्युक्तं घृतकार्यं विसदृशाद्भिन्नं कथं जायेतेति भावः। **मातङ्गः** चण्डालः। मातृसादृश्यं तद्भार्यायाम्। मातङ्गसादृश्यं तत्पित्रादौ। मद्यसादृश्यं तदुपभोज्यजलादौ। **ककारखकारयोरिति** परीत्योक्तम्। उपलक्षणमेतत्। केतकीगन्धसदृशः सर्पगन्ध इत्यादा-वपीति बोध्यम्। सदृशमात्र इति नागवङ्गादावित्यर्थः। नागवङ्गत्वादिज्ञाने सत्यपि अल्पानां रजतावयवानां तत्र ज्ञानादिति भावः। किमपि तत्रास्तीति ज्ञानादिति सर्वत्राप्यल्पानां रजतावयवानां सत्त्वेन तज्ज्ञानं यत्किञ्चि-ज्ज्ञानवत् अल्परजतज्ञानमपि भवति। एवमपि यत्किञ्चित्वेन तज्ज्ञानेऽपि रजतत्वेन तज्ज्ञानाभावान्न प्रवृत्तिरिति चेन्न। तथा सति द्वितीयविकल्पदोषापातादिति।

**वा०चं०**— अपि चेत्युक्तसाधकनिरासाय परोक्तसादृश्यस्वरूपं खण्डयति **सादृश्यं चेति**। सामान्यादि-रूपत्वोक्तिमात्रेणान्योन्यावयवसंयोगरूपतानिषेधलाभ इत्याशयेन वक्ष्याम इत्युक्तम्। सामान्यपरीक्षादाविति शेषः। अश्वादिवृत्तिरासभसादृश्यस्याश्वत्वात्परत्वे सर्वाश्वानां रासभसादृश्यापत्त्याऽपरत्वे च रासभेऽप्यश्वत्वापत्त्या जातिसङ्करप्रसङ्गात्कथं सादृशस्य सामान्यत्वम्। अश्वरासभादिद्रव्यगुणावयवकर्मवृत्तिसामान्यानामेव सादृश्यत्वेऽश्वो रासभसदृश इत्यादिव्यवहाराणाममुख्यत्वापत्तिरिति बाधकं मनसि निधाय धर्मान्तरं वेत्युक्तम्। गौर्गवय-सदृशीत्याद्यनुभवेन सादृश्यरूपधर्मान्तरस्य सिद्धत्वादित्याशयः। अस्तु वाऽन्योन्यावयवसंयोगरूपसादृश्यं तथाऽपि तत्कल्पनार्थक्रियोपयुक्ततया वाऽर्थक्रियोपयुक्तत्वमंशभूयस्त्वस्यैव सादृश्यं तु तदवयवसद्भावमात्रकल्पकमित्या-शयेन वा। नाद्य इत्याह **किञ्चेति**। तैलघृतादावन्योन्यार्थक्रियाकारित्वमस्त्येवेति विप्रतिपद्यमानं प्रत्यलौकिकतया तादृग्विप्रतिपत्तिशङ्काशून्यमतिप्रसङ्गमाह **किञ्चेति**। द्वितीयं शङ्कते **अल्पेति**। **कथं तर्हीति**। नीवारेषु व्रीह्यवयव-भूयस्त्वे तेषां व्रीहित्वापत्तेरित्युक्तत्वादिति भावः। ननु नीवाराणां व्रीहिकार्यकारित्वे व्रीह्यवयवसंयोगरूपतत्सादृश्यं न प्रयोजकं येन घृतादावतिप्रसङ्गापत्तिः। नापि तदवयवभूयस्त्वं येन व्रीहित्वापत्तिः किन्तु तदवयवभूयस्त्व-

शून्यानामपि तेषां केवलं श्रुतिबलादेव तत्कार्यकारित्वमतो नानुपपत्तिरिति चेत्तर्ह्यत्यन्तविविक्तानामेव तेषां श्रुतिबलात्तदर्थक्रियाकारितोपपत्तौ नान्योन्यावयवसंयोगरूपसादृश्यतदवयवभूयस्त्वादिकल्पना युक्तेत्याशयेनाह **श्रुतीति** । **चिन्त्यमिति** । आलङ्कारिकादिशास्त्रसिद्धस्य तस्यापलापानर्हत्वादिति भावः ।

**वा०र०**— सामान्यत्वधर्मान्तरत्वयोरेव वक्ष्यमाणत्वेऽपि तद्व्यावयवसंयोगरूपता नेत्यस्य सामान्य-परीक्षायां वक्ष्यमाणत्वाभावात् । कथं विशिष्टस्य वक्ष्यमाणत्वोक्तिरित्यतस्तदभिप्रायमाह **सामान्यादीति** । एवं च मुखतस्तद्व्यावयवसंयोगस्य सादृश्यरूपता नास्तीत्यनुक्तावप्यर्थतस्तदुक्तिलाभान्न परोक्तस्य दूषणाभाव इत्याशयः । **परीक्षादाविति** । वैशेषिकाधिकरणस्थस्तत्परीक्षायां एतादृशं च सादृश्यमित्येतदनुव्याख्यान-व्याख्यानव्याख्यानावसरे तथा आदिपदोक्त....................पादस्थ......................नुव्याख्यानव्याख्यानावसरे चेत्यर्थः । सामान्यत्वपक्षेऽस्वरसं सूचयन् धर्मान्तरं वेत्येतदवतारयति **अश्वादीति** । **अश्वत्वात्परत्वमिति** । अश्वत्वव्यापकत्व इत्यर्थः । सर्वाश्वानामित्यनेन यत्राश्वत्वं तत्र रासभसादृश्यमिति प्राप्ते रासभासदृशाश्वेषु व्यभिचारः । तेषु सत्यप्यश्वत्वे तत्सादृश्याभावात्ततश्च न रासभसादृश्यस्याश्वत्वव्यापकता संभवतीत्युक्तं भवति । अश्वादिवृत्तीत्युक्त्या रासभसादृश्याश्वत्वरूपपरस्परात्यन्ताभावसमानाधिकरणधर्मयो रासभसदृशाश्वव्यक्तिविशेषे समावेशोऽस्तीति सूचितम् । आदिपदं प्रयुञ्जानेनैवमन्यत्रापि यत्र क्वचिद्व्यक्तिविशेषे किञ्चित्सादृश्यं तत्र व्यक्तिविशेषगतजातिमादाय व्यापकत्वं तत्सादृश्यस्य खण्डनीयमिति सूचयति । यद्वा रासभविशेषवृत्तियदश्व-सादृश्यं तस्य रासभत्वपरत्वापरत्वनिराकरणेन सङ्कराभिप्रायेणादिपदम् । वक्ष्यति चाश्वरासभादीति परस्पर-सादृश्याभिप्रायेणेति ज्ञेयम् । सर्पाश्वानामित्यनेनैव रासभसादृश्यमप्यश्वव्यक्तिविशेष एवेति ध्वनयति **अपरत्वे चेति** । रासभसादृश्यस्याश्वत्वादिति वर्तते । तस्याश्वत्वव्याप्यत्व इत्यर्थः । रासभेऽपीत्यनेन रासभसादृश्यं रासभमात्रेऽस्ति नास्ति च तत्राश्वत्वमिति । यत्र सादृश्यं तत्राश्वत्वमिति व्याप्तेर्व्यभिचारान्न तस्य तद्व्याप्यता संभवतीत्युक्तं भवति । एवं रासभसादृश्यस्याश्वत्वव्यापकत्वव्याप्यत्वयोर्निरासे सति परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र-समावेशरूपसङ्करलक्षणसत्त्वात्सङ्कराख्यं जातित्वरूपसामान्यत्वपक्षे बाधकं सिद्धमित्याह **जातीति** । अनेनोपाधि-सङ्करो दोषो नेति वदन्तोऽप्यनुगृहीताः । ननु रासभसादृश्यस्याश्वत्वव्याप्यत्वं न ब्रूमः । अपि तु तद्व्यापकत्वमेव । न च रासभविसदृशाश्वेषु सत्यप्यश्वत्वे तत्सादृश्याभावाद्व्यापकत्वानुपपत्तिरित्युक्तमिति वाच्यम् । अश्ववृत्ति-रासभसादृश्यस्याश्वाख्यद्रव्यतदवयवतद्गुणकर्मादिगतसामान्यरूपतया द्रव्यादिगतसामान्यानां चाश्वेऽपि सत्त्वेन तस्य तद्व्यापकत्वोपपत्तेरित्याशङ्क्य निषेधति **अश्वरासभादीति** । आदिपदेन रासभत्वं प्रत्यश्वसादृश्यस्याप्युक्तरीत्या सामान्यत्वमुपपादनीयमिति सूचयति । अश्वरासभादिद्रव्यं च तद्गुणावयवकर्माणि च तेषु वृत्तीति योज्यम् । **अमुख्यत्वापत्तिरिति** । एवमश्वाख्यद्रव्यतदवयवगुणकर्मवृत्तिसामान्यानामेव सादृश्यत्वाङ्गीकारे गवादिद्रव्यतद्गुण-तदवयवकर्मादिवृत्तिसामान्यानामपि रासभसादृश्यरूपतापत्तौ रासभसादृश्यस्याश्व इव गवादावपि प्राप्त्या अश्वो रासभसदृश इति व्यवहारस्य मुख्यत्वाभावापातात् । आदिपदोपादानेनोक्तरीत्याऽश्वसादृश्यस्य रासभ इव गवादावपि प्राप्त्या रासभोऽश्वसदृश इति व्यवहारमुख्यत्वप्रसङ्ग इति सूचितम् । तया गोगवयादिस्थलेऽप्येवं प्रसङ्ग इति सूचितम् ।





अत एव व्यवहाराणामिति बहुवचनमिति ज्ञेयम्। अत्र मूलं समुदायस्तु भिन्नग इत्येतद्वैशेषिकपरीक्षास्थानुव्याख्यानमूले प्राभाकरास्त्वाहुरित्यादिग्रन्थोऽस्ति स इति ज्ञेयम् । धर्मान्तरासिद्धिरिति न शङ्कनीयम् । प्रमाणसिद्धत्वादिति मूलाभिप्रायमाह **गौरिति** । अन्योन्यावयवसंयोगस्य सादृश्यरूपत्वाभावोक्त्यैव परपक्षदूषणसिद्धेस्तस्य सादृश्य-रूपत्वपक्षे दूषणान्तराभिधानमुत्तरमूलेऽसङ्गतमित्यतो द्रव्याणामन्योन्यावयवसंयोगस्य सादृश्यपदार्थतामङ्गीकृत्यापि दूषणीयोत्तरमूलप्रवृत्तेर्नासङ्गतिरित्याशयेन तत्पक्षेऽपि संभावितविकल्पप्रदर्शनपूर्वकमाद्यपक्षनिरासकतया किञ्च घृतेति ग्रन्थं योजयति **अस्तु वेति** । अर्थक्रियोपयुक्ततया वा तत्कल्पनेति संबन्धः । सादृश्यकल्पनेत्यर्थः । आशयेन वेत्यनन्तरं तत्कल्पनेति वर्तते । मूले **विसदृशयोरिति** । गजोष्ट्राश्वबलीवर्दमाहिषेषु कयोश्चिद्विसदृशत्वेन व्यवह्रिय-माणयोरित्यर्थः । एतेषां भारवहनरूपैककार्यकारितास्ति तया न भवितव्यमिति संबन्धः । येनकेनचिद्रूपेण सादृश्यं तु सर्वत्र वक्तुं शक्यमिति भावः । एवं शुंठिपिप्पलीलवङ्गादिषु वैद्यशास्त्रे प्रतिनिधितया हरीतक्यादिस्थाने औषधान्तरविधानेन तादृशैककार्यकारिविसदृशद्रव्येषु च शैत्यादिदोषनिवारणादिरूपैककार्येण न भवितव्यमित्यादि-रूपोऽप्यर्थो ज्ञेयः । **विप्रतिपद्यमानं प्रतीति** । अनेन घृततैलयोरप्यन्योन्यसादृश्यवदन्योन्यार्थक्रियाया अपि सत्त्वात्तदापादने इष्टापत्तिरित्याशङ्कानिरासाय तच्छङ्काशून्यमतिप्रसङ्गान्तरमाहेत्युक्तं भवति। तत्र तच्छङ्काभावः कुत इत्यत उक्तम् **अलौकिकतयेति** । मूले मातङ्गपदेन चण्डालो विवक्षितः । मात्राद्युपयोगे प्रत्यवायवद्भार्यापितृ-सोमाद्युपयोगे प्रत्यवायवद्भार्यापितृसोमाद्युपयोगेऽपि प्रत्यवायोऽस्त्येवेति विप्रतिपन्नो नास्ति । श्रुतिस्मृत्यादिना भार्याद्युपयोगस्य विहितत्वान्मात्राद्युपयोगस्य च निषिद्धत्वेनापाततस्तत्र शङ्कायाः कर्तुमशक्यत्वादित्यर्थः । एतेन तैलमातृमातङ्गमदिराद्यतिसादृश्यं घृते भार्यादिष्वस्तीत्येकयोक्त्यैवातिप्रसङ्गदानं कुतो नेत्यपि निरस्तम् । तैलघृतस्थले लौकिकतया अन्योन्यार्थक्रियाऽस्त्येवेति शङ्कावकाशोऽपि मातृभार्यादिस्थले तदभावेन तद्वैषम्येन पृथक्करणोपपत्तेः । तदेतदप्युक्तं विप्रतिपद्यमानं प्रतीत्यादिनेति ज्ञेयम् । **अल्पेतीति** । अंशभूयस्त्वस्यैवार्थक्रियोप-युक्तत्वेन सादृश्यस्य चावयवसद्भावमात्रगमकत्वेन तैलमात्रादिसदृशेष्वपि घृतभार्यादिषु अन्योन्यावयवभूय-स्त्वाभावान्नान्योन्यार्थक्रियाप्रसङ्ग इत्यर्थः । नीवारेष्वपि व्रीह्यवयवभूयस्त्वसत्त्वाद्युक्तं तत्कार्यकारित्वमिति शङ्कमानं प्रति आद्ये सोम एवासाविति प्रागुक्तं दूषणं स्मारयति **नीवारेष्विति** । अनेनैव प्राचीनसोमपदघटितवाक्ये व्रीह्याद्युपलक्षणमत्रापि नीवारघटितवाक्ये पूतिकाद्युपलक्षणमिति व्याख्यानप्रकारः सूचितः । अन्यथोक्तत्वादित्ययुक्तं स्यादिति ज्ञेयम् । **इत्याशयेनेति** । किं तर्हि सोमावयवेत्यादिपूर्वमूलोक्तेनाशयेनेत्यर्थः । निरवयवतयाऽपरावयव-संयोगशून्ययोः ककारखकारयोः सादृश्यं नास्त्येवेति वदन्तं प्रत्याह **आलङ्कारिकेति** । अत एव पद्यादिनिर्मातारः यतिप्राससिध्यै द्वितीयचरमवर्णस्थाने ककारप्रासाय ककारारोपितपदालाभादिनिमित्तेन खकारं प्रयुञ्जते। एवं तथदधन-णरळवबानामन्योन्यं द्वयोर्द्वयोः क्रमेण शेषसकाराणां परस्परं च सादृश्यमाश्रित्य तकारादिस्थाने थकारादीन्प्रयुञ्जत इति ज्ञेयम्।

**स०व्र०— सादृश्यं च सामान्यं धर्मान्तरं वेति** । अत्र धर्मान्तरमित्येव सिद्धान्तः । सामान्यमि-त्यभ्युच्चयः । अत एव 'गुणक्रियाजातिपूर्वा धर्माः सर्वेऽपि वस्तुनः' इति वाक्यव्याख्यावसरे टीकाकाराः पूर्वपदेन





शक्तिसादृश्यविशिष्टानां ग्रहणमिति व्याचख्युः । यदि च सादृश्यं सामान्यं स्यात्तर्हि जातिपदेन सामान्यस्य गृहीतत्वात्पूर्वपदेन सादृश्यं न ग्राह्यं स्यादिति द्रष्टव्यम् । **न भाव्यं च विसदृशयोरिति** । भारनयनरूपबलीवर्दार्थक्रिया पुरुषविशेषेणापि भवति । सा च न स्यादित्यर्थः । **ककारखकारयोरिति** । वर्णानां निरवयवत्वादिति भावः ।

**विट्ठ०**— अपि चेत्युक्तप्रत्यक्षनिरासाय सादृश्यं खण्डयति **सादृश्यं चेति** । सामान्यं वा धर्मान्तरं वेति क्रमेण नैय्यायिकरीत्यास्मद्रीत्या चोक्तमिति ध्येयम् । **वक्ष्याम इति** । एतादृशं च सादृश्यं पदार्थेषु पृथक् पृथगिति अनुव्याख्यानव्याख्यानावसर इति भावः । **न भाव्यं चेति** । भारनयनरूपा बलीवर्दार्थक्रिया पुरुषविशेषेणापि भवति सा न स्यादित्यर्थः । घृततैलयोरन्योन्यार्थक्रियाकारित्वमस्त्येवेति विप्रतिपद्यमानं प्रत्यलौकिकतया विप्रतिपत्तिशङ्का शून्येति प्रसङ्गमाह **किञ्चेति** । भार्यादिष्वित्यादिशब्देन भृत्यक्षीरादिग्रहणम् । **ककारेति** । नित्यत्वेन निरवयवत्वादिति भावः । **चिन्त्यमिति** । अलङ्कारादिशास्त्रसिद्धस्य सादृश्यापलापानर्हत्वादिति भावः ।

**चषकः**— **वक्ष्याम इति** । जातिवदखण्डरूपमिति समयचरणेऽभिधास्याम इत्यर्थः । **दत्तमुत्तरमिति** । अत्यन्तविविक्तानामेव वस्तूनामर्थक्रियासाम्यमभ्युपगम्यतामित्यभिहितमित्यर्थः । **चिन्त्यमिति** । वर्णानां निरवयवत्वादिति भावः ।

**प्रदीपः**— सोमेन यजेतेति विधौ योऽयं विशेषणीभूतः सोमः स एवायमिति मुख्यतः सोमाभावे पूतिकामभिषुणुयादित्यनुकल्पो न स्यादन्यावयवसंबन्धः सादृश्यमिति प्रत्यक्षेण सर्वात्मतावगम्येतेत्युक्तं विघटयति **सादृश्यं चेति** ।

**३९६ सु०— रजतार्थिनः शुक्तिकायां प्रवर्तकं च किं भूयसां शुक्त्यवयवानामदर्शनमुताल्पीयसां रजतावयवानां दर्शनमुतोभयम् । नाद्यः सुप्तस्यापि प्रवृत्तिप्रसङ्गात् । द्वितीयेऽपि किं तेषामल्पीयस्त्वज्ञानम् उत भूयस्त्वज्ञानम् अथवा ज्ञानमात्रम् । आद्ये तस्य अरजतत्वमेव विदितमिति कथं ततः प्रवृत्तिः । द्वितीयेऽन्यथाख्यातिप्रसङ्गः । तृतीये सदृशमात्रे प्रवृत्तिप्रसक्तिः । न तृतीयः किमपि तत्रास्तीत्यादिज्ञानादपि प्रवृत्तिप्रसङ्गात् । कथं चास्य ज्ञानस्य भ्रान्तित्वम् । अल्पांशग्रहणादिति चेत् नूनं ब्रह्मज्ञानमपि महाभ्रान्तिरापन्ना । अत एव न बाधस्य बाधकत्वमपि ॥**

**परि०**— **अरजतत्वमेवेति** । रजतावयवानां भूयस्त्वज्ञानस्यैव रजतत्वज्ञानत्वादिति भावः । उतोभयमिति पक्षं निराह **न तृतीय इति** । **ब्रह्मज्ञानमपीति** । सर्वस्यापि पुंसो जायमानब्रह्मज्ञानस्य ब्रह्मैकांशविषयकत्वादित्यर्थः । **अत एव** पूर्वस्य भ्रान्तित्वानुपपत्तेरेव । यद्वा भूयोंऽशग्रहणस्य बाधत्वे सत्यरूप्यादाविदं रूप्यमिति ज्ञानस्यापि बाधत्वप्रसङ्गरूपातिप्रसङ्गादेवेत्यर्थः ।





**गु०दी०— सदृशमात्रे प्रवृत्तिप्रसक्तिः** इत्यत्र सदृशपदमङ्गीकृत्योदितम् । वस्तुतस्तु त्रिवृत्करणमहिम्ना ईषद्रजतावयवानां तन्मते सकलपदार्थेष्वपि सत्त्वाद्यत्किञ्चिदिदमिति दर्शनादपि प्रवृत्तिप्रसङ्ग इत्यपि द्रष्टव्यम् । **किमपि तत्रास्तीत्यादिज्ञानादपि** इत्यत्र भूयसामदर्शनमल्पीयसां दर्शनमिति पक्षेऽप्युक्तरीत्या नाल्पीयस्त्वेन तद्दर्शनं वक्तुं युक्तम् । किन्तु तद्दर्शनमात्रमिति वक्तव्यम् । अतः किमपि तत्रास्तीति दर्शनेऽपि प्राचीनतृतीयपक्षदूषणन्यायेन अविवेचितरजतावयवदर्शनसद्भावात्तदपि रजतार्थिप्रवृत्तिजनकं स्यादित्यर्थः । ननु शुक्तिशकले बहवो रजतावयवाः सन्ति, अतस्तेषां दर्शने तत्रैव प्रवृत्तिर्नान्यत्रेति चेन्न । किमिदं श्रुतिबलात्कल्प्यते, उत तत्रैव भ्रान्त्यन्यथानुपपत्त्या । नाद्यः श्रुतेः सर्वत्र साम्यात् । न द्वितीयः दोषवशात्सर्वथा तत्राविद्यमानस्य रजतस्यैवारोपेण भ्रान्तेरुपपादितत्वात् ।

**यादु०—** दोषवशादित्यादिना परेण यत्प्रवृत्त्यादिकमुपपादितं तद् दूषयति **रजतार्थिन इति** । बाध्यबाधकभावोऽपीत्युक्तं दूषयति **कथं चास्येति** । भ्रान्तित्वं बाध्यत्वम् । **नूनं ब्रह्मज्ञानमिति** । अनन्तगुणस्य ब्रह्मणः केनापि साकल्येन ज्ञातुमशक्यत्वादिति भावः । **अत एवेति** । उक्तरीत्या बाध्याभावादेवेत्यर्थः । ननु पूर्वस्य शुक्तिरजतादिज्ञानस्य विद्यमानविषयकत्वेऽपि बाध्यप्रवृत्तिजनकत्वमेव बाध्यत्वम् । उत्तरज्ञानस्य पूर्वज्ञानप्राप्तप्रवृत्तिनिरोधकत्वमेव बाधकत्वमिति चेन्न । प्रवृत्तेरपि विषयसत्त्वे बाध्यत्वायोगात् । न च प्रवृत्तेरपि प्रतिबद्धोत्पत्तिकत्वमेव बाध्यत्वं नाविद्यमानविषयत्वमिति वाच्यम् । एवं हि उत्पत्स्यमानप्रवृत्तिरेव बाध्या स्यान्न पूर्वमुत्पन्ना प्रवृत्तिः । न चोत्तरज्ञानजन्यध्वंसप्रतियोगित्वमेव प्रवृत्तेर्बाध्यत्वम् । अननुगमापातात् । उत्तरज्ञानजन्यप्रध्वंसप्रतियोगिनि समीचीनपूर्वज्ञानेऽपि बाध्यत्वप्रसङ्गाच्च । अतो विषयासत्त्वव्यतिरेकेण प्रवृत्तेरपि न बाध्यत्वनिर्वाहः शक्य इति नोक्तप्रकारसंभवः । तदिदमुक्तं **कथं चेति** । न केनापि प्रकारेणेत्यर्थः ।

**वं०प०— सुप्तस्यापीति** । तदानीं दर्शनमात्रस्याभावेन भूयसां शुक्त्यवयवानामदर्शनसद्भावादिति भावः । तेषामल्पीयसां रजतावयवानाम् । **ज्ञानमात्रमिति** । अल्पीयस्त्वभूयस्त्वौदासीन्येन रजतावयवज्ञानमात्रमित्यर्थः । **तस्य** शुक्तिशकलस्य । **अरजतत्वमेवेति** । रजतांशानामल्पीयस्त्वेऽरजतत्वमेव प्राप्तम् । यत्र यदंशानामल्पीयस्त्वं तत्तन्न भवतीति त्वयाऽङ्गीकृतत्वादिति भावः । **सदृशमात्रे** रजतसदृशे रङ्गादौ । **प्रसक्तिरिति** । तथाच रजतार्थिनः शुक्तिकायां प्रवृत्तिर्न स्यादिति भावः । **न तृतीय इति** । उतोभयमिति विकल्पितस्तृतीयः पक्षो नेत्यर्थः । **किमपीति** । **किञ्चिदिदमिति** । निर्विकल्पकज्ञानादपीत्यर्थः । तत्रापि भूयसामवयवानामदर्शनस्याल्पीयसां दर्शनस्य च सद्भावादिति भावः । **अस्य ज्ञानस्य** इदं रजतमिति ज्ञानस्य । **अल्पांशेति** । अधिष्ठानभूत-शुक्त्यल्पांशेत्यर्थः । **नूनमिति** । ब्रह्मणोऽपरिच्छिन्नानन्तगुणत्वेनाल्पांशस्यापि सम्यग्गृहीतुमशक्यत्वादिति भावः । **अत एव** उक्तरीत्या भ्रान्त्यसंभवादेव ।

**आनन्दः— ब्रह्मज्ञानमपीति** । साकल्येन ब्रह्माग्रहणादित्यर्थः । **अत एवेति** । भ्रान्त्यनुपपत्तेरित्यर्थः ।





**कं०रा०— द्वितीय इति** । अल्पीयसां रजतावयवानां भूयस्त्वज्ञानेऽन्यस्यान्यात्मना भानादन्यथाख्यातिप्रसङ्ग इत्यर्थः । **ब्रह्मज्ञानमिति** । ब्रह्मस्वरूपेऽज्ञायमानांशस्यातिभूयस्त्वाज्ज्ञायमानस्य त्वंशस्यात्यल्पीयस्त्वाद्ब्रह्मविषयकं ज्ञानं महाभ्रान्तिरूपमापन्नमित्यर्थः । **अत एवेति** । अल्पांशविषयकज्ञानस्य भ्रान्तित्वायोगादेव बाधस्य बाधत्वमपि न संभवतीत्यर्थः । यथार्थं सर्वविज्ञानमिति वदता मायावादिनिष्ठानां जीवब्रह्मस्वरूपैक्यब्रह्मनिर्गुणत्वादिज्ञानानां यथार्थत्वाङ्गीकारे तद्विषयसत्त्वापातेनापसिद्धान्तापत्तिस्तेषामसद्विषयत्वेन भ्रमत्वाङ्गीकारे तु शुक्तिरजतादिज्ञानानामसद्विषयकत्वस्यैतावन्तंकालमसदेव रजतं प्रत्यभादित्यनुभवसिद्धत्वात् भ्रमत्वमेवाङ्गीकर्तुमुचितमित्यादिदूषणं स्फुटत्वाच्छिष्यैरेवोह्यमिति नोक्तम् ।

**श्रीनिधि०— नूनं ब्रह्मज्ञानमपीति** । ब्रह्मणोऽपरिच्छिन्नत्वेन तज्ज्ञानमस्मदीयमल्पांशविषयकमेवेति भावः । **अत एवेति** । अत एव अल्पांशविषयकज्ञानस्य भ्रान्तित्वाभावादेव । **बाधस्य** बाधत्वाभिमतस्य ।

**वा०चं०—** एवं युक्तित्रयमर्थक्रियाप्रयोजकतयोक्तं भूयस्त्वं च निरस्य दोषवशादित्युक्तप्रवृत्तिप्रयोजकं निरस्यति **रजतार्थिन इति** । परित्यागस्यादर्शनातिरिक्तस्यैवाभावात्परित्यज्येत्यनेनोक्ते शुक्त्यवयवादर्शने तात्पर्यं वाऽल्पीयांसमित्यादिनोक्तेऽल्परजतावयवदर्शने वोभयत्रापि वेत्याशयेन विकल्पः । बाध्यबाधकभावोऽपीत्यादिनोक्ते भ्रान्तिबाधयोर्भ्रान्तिबाधत्वे निरस्यति **कथं चेति** । **ब्रह्मेति** । ब्रह्मणोऽतिमहत्वेनेदानीं जायमानब्रह्मज्ञानस्यात्यल्पांशग्रहणरूपत्वादिति भावः । **अत एवेति** । ब्रह्मज्ञानस्य भूयस्तदंशाविषयकत्वेनाबाधकत्वप्रसङ्गादिति भावः ।

**वा०र०— युक्तित्रयमिति** । शुक्त्यादौ रजतादिसद्भावसाधकतयोक्तं यच्छ्रुत्यादिकं श्रुतार्थापत्तिः पदार्थानामन्योन्यं सादृश्यं चेत्येवंरूपयुक्तित्रयमित्यर्थः । अल्पीयांसं प्रकाशयतीत्युक्तेरल्पीयसां रजतावयवानां दर्शनमिति पक्षस्योत्थानेऽपि भूयांसमप्यंशं परित्यज्येत्येवोक्तत्वेन तददर्शनानुक्तेः तथा पक्षोत्थानानुपपत्तिरित्यतस्तत्पक्षोत्थानं पर्यवसानगत्यभिप्रायेणेत्याह **परित्यागस्येति** । तथापि शुक्त्यवयवादर्शनरजतावयवदर्शनयोरुभयोरपि परेणोपन्यस्तत्वात्कथं प्रत्येकपक्षे विकल्पावकाश इत्यत उक्तं **तात्पर्यमिति** । तथा संभावितत्वादिति भावः । विकल्प इत्यनन्तरं युक्त इति शेषः । इति तात्पर्यमाश्रित्य विकल्पप्रवृत्त्यभिप्रायाद्विकल्पो युक्त इत्यर्थः । **ब्रह्मज्ञानस्येति** । अस्मदीयं ब्रह्मविषयकज्ञानं ब्रह्मज्ञानमिति मूलार्थं मनसि कृत्वेदानीं जायमानेत्युक्तम् । ब्रह्मज्ञानस्येत्युत्तरवाक्येऽप्ययमेवार्थः । तेन भूयस्तदंशाविषयकत्वोक्तिर्युक्ता । अस्मदीयब्रह्मविषयकभ्रमबाधकत्वस्यास्मदीये ब्रह्मज्ञाने सत्त्वात्तदभावापादनमेतदिति ज्ञेयम् ।

**स०व्र०— नूनं ब्रह्मज्ञानमिति** । अपरिमितस्य ब्रह्मणः साकल्येन ज्ञातुमशक्यत्वादिति भावः । **अत एवेति** । उक्तरीत्या भ्रान्त्यसंभवादित्यर्थः ।

**विठ्ठ०—** प्रवृत्तिप्रयोजकतयोक्तदोषवशादित्यादिनोक्तं दूषयति **रजतार्थिन इति** । उतोभयमित्युक्तं पक्षं निराह **न तृतीय इति** । सर्वत्रापि रजतावयवसंभवेन किमपि नात्रास्तीति ज्ञाने उक्तोभयसंभवादिति भावः ।





बाध्यबाधकभावोऽपीत्युक्तं दूषयति **कथं चेति**। भ्रान्तित्वं बाध्यत्वं परेण भ्रान्तित्वानभ्युपगतेः। **नूनं ब्रह्मेति**। अपरिमितगुणस्य ब्रह्मणः साकल्येन ज्ञातुमशक्यत्वात् इत्यर्थः। **अत एवेति**। उक्तरीत्या भ्रान्त्यसंभवादेवेत्यर्थः।

**प्रदीपः**— ककारखकारयोरिति वर्णानां निरवयवत्वाद्दोषवशात् भ्रान्तिबाधविवक्षार्थमुक्तं विघटयति **रजतार्थिन इति**। अल्पीयसां भूयस्त्वज्ञानजन्यान्यथाख्यातिरित्याह **द्वितीय इति**। **तृतीय इति**। सर्वेषां अल्पीयोऽवयवयोगात्प्रतीतिः स्यात् किमपीति भूयोभूयोंशाग्रहणेऽप्यल्पावयवग्रहणमात्रेण प्रवृत्तावतिप्रसङ्ग इत्यर्थः। नूनमिति ब्रह्मगताशेषविशेषापरिज्ञानादीषत् ज्ञानसद्भावात् अत एवेति भ्रान्त्यसंभवादेवेत्यर्थः।

**३९७ सु०— पित्तगतपीतिमानुलिप्तश्चेच्छङ्खः कथं तर्हि न तथा पार्श्वस्थेन दृश्यते॥ सूक्ष्मत्वादिति चेत् किमिदं सूक्ष्मत्वम्। अतीन्द्रियत्वं चेत् न तर्हि भ्रान्तेनापि दृश्येत। अन्यच्चेत्किमनेन॥ पित्तोपहतेन तु सामीप्याद् दृश्यत इति चेत्। किमिदं सामीप्यं नाम। इन्द्रियसन्निकर्षश्चेत् स तर्हि उभयोः समानः। शरीरसामीप्यं चेत्तदनुपयुक्तम्। अन्यथा परशरीरसमीपस्थानां दण्डकुण्डलादीनामदर्शनप्रसङ्गात्॥ पीतः शङ्खः प्रतीयत इति कोऽर्थः। किं पीतरूपवत्तयेति उत पीतरूपद्रव्यसंयुक्ततयेति। नाद्यः अन्यथाख्यातिप्रसङ्गात्। द्वितीये अनुभवविरोधः॥ एवमुदाहरणान्तराणि विप्रतिपन्नानि निरसनीयानीत्यलमपहसनीयप्रक्रिया-निराक्रियाविस्तरेण॥ २॥**

**परि०**— याऽपि पीतशङ्खादौ त्वित्यादिनोक्ता प्रक्रिया तां निराह **पित्तगतेति**। **किमनेनेति**। पार्श्वस्थादर्शनानुपयुक्तेनेत्यर्थः। अतीन्द्रियत्वादन्यस्यादर्शनानुपपादकत्वादिति भावः। **उभयोरिति**। पीत इति पश्यतः पार्श्वस्थस्य चेत्युभयोरित्यर्थः। **अन्यथेति**। द्रष्टृशरीरसामीप्यस्यैव दर्शनोपयुक्तत्व इत्यर्थः। **एवमिति**। स्वप्नस्फटिकलौहित्यादिप्रागुक्तोदाहरणान्तराणीत्यर्थः। तथा हि। अथ रथानित्यादिश्रुतेः स्वाप्नार्थानामपीश्वरसृष्टत्वात् तद्धीः सर्वा यथार्थेत्ययुक्तम्। स्वप्न एवायं न जाग्रदिति बाधविरोधात्। स्फटिके रक्तकुसुमप्रभोपलम्भात्तल्लौहित्यधीर्यथार्थेत्यपि न। रक्तकुसुमसमीपस्थ-वस्त्वन्तरेऽपि तथोपलब्धिप्रसङ्गात्। मरीचिकासु जलावयवसत्त्वात्तद्धीरिव तत्रेति तु शुक्तिरूप्य-प्रक्रियानिरासेन निरस्तम्। अलातचक्रे तु अलातस्य सर्वदिशसंयोगधीरेव न भ्रान्तिरिति तन्न। फल्गुपामराणां चक्रताबुद्धेर्भ्रान्तित्वानिवारणात्। नायनरश्मयो दर्पणप्रतिहताः ग्रीवास्थमुखमेव गृह्णन्तीति तद्धीरपि यथार्थेत्यपि न। 'अत एव चोपमा' इत्यत्र निरसिष्यमाणत्वात्। दिगन्तरे दिगन्तरावयवसत्त्वात् शुक्तौ रूप्यधीरिव तद्धीरपि यथार्थेत्यपि शुक्तिरूप्यप्रक्रियानिरासेन निरस्तम्। या तु द्विचन्द्रप्रक्रिया





नयनस्याङ्गुल्यवष्टम्भे हि नायनरश्मयो द्वेधा बहिर्गच्छन्ति । ऋजुतया वक्रतया च । तत्र ये ऋजवस्ते स्वदेशस्थं समीपस्थं गृह्णन्ति । ये तु वक्राः ते तु दूरदेशं व्याप्य तमेव चन्द्रं विप्रकृष्टदेशस्थं गृह्णन्तीति द्वित्वधीर्यथार्थेति । सा तु धीमात्रयाथार्थ्यसिध्युत्तरकालीनैषा अत्यन्ताप्रामाणिककल्पना सैव न सिद्धेत्यादिरूपेण निरसनीयेत्यर्थः ।

**यादु०— अन्यच्चेति** । त्र्यणुकादिवदतीन्द्रियावयवसमवेतत्वरूपं वाऽल्पतरावयवत्वरूपं वा सूक्ष्मत्वं विवक्षितं चेत्तर्हि त्र्यणुकादिवदेव पार्श्वस्थेनापि दृश्येतेत्यतिप्रसङ्गस्यापरिहारात् । अनेन सूक्ष्मत्वादिति वचनेन किमिति भावः । **उभयोरिति** । द्रष्टृपार्श्वस्थयोरित्यर्थः । **अन्यथाख्यातीति** । साक्षात्संबन्धेन पीतरूपभानेऽन्यथाख्यात्यापत्तिरित्यर्थः । **अनुभवेति** । परम्परासंबन्धेन तज्ज्ञानेऽनुभवविरोध इति भावः । **एवमुदाहरणान्तराणीति** । एवं स्वप्नस्फटिकलौहित्येत्यादिनोक्तानीत्यर्थः । अत्र विप्रतिपन्नानीत्युक्त्या केषाञ्चिद्यथार्थत्वं संमतमिति सूचिताम् । ते च स्वप्नस्फटिकलौहित्यदर्पणमुखप्रत्यया एव । स्वप्नानां वासनोपादानकानां भगवन्निर्मितानां सत्यत्वेन तज्ज्ञानानां यथार्थत्वस्यास्मन्मतेऽपि भावात् । स्फटिकलौहित्यदर्पणमुखप्रत्यययोश्च सत्यभूतप्रतिबिम्बावगाहितया यथार्थत्वस्यान्यत्र टीकाकारैरुक्तत्वात् । अनयोः परोक्तयाथार्थ्योपपादनप्रकार एव न तु संमतः । स्फटिकमणेर्जपाकुसुमसंबन्धाल्लौहित्यं प्रतीयत इत्यत्र किं साक्षात्संबन्धेन लौहित्यज्ञानं यथार्थमित्युपपादितमुत परंपरासंबन्धेन । आद्येऽन्यथाख्यातिः । द्वितीयेऽनुभवविरोध इत्युक्तदोषात् । दर्पणमुखादिप्रत्ययेऽप्युक्तप्रक्रियायां स्वच्छताया अनुपयोगेन शिलाद्यभिहतनायनरश्मीनामपि निजमुखादिग्राहकतापातात् । विप्रतिपन्नानां मरीचिकाजलालातचक्रदिगन्तरद्विचन्द्रादिप्रत्ययानां यद्दोषादृष्टविशेषाधीनग्रहणादिना याथार्थ्यमुपपादितं तदपि कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनाया इत्युक्तदोषेण निरसनीयमिति भावेनोक्तम् । एवं **निरसनीयानीति** । किं च मरीचिकाजलप्रत्यये तेजःपृथिव्योरग्रहणेन यदम्बुमात्रग्रहणमुक्तं तदतीव मन्दम् । अधिष्ठानतया तत्रापि तेजःपृथिव्योरन्यतरस्य भाननियमात् । न च साधारणाकारेण तज्ज्ञानमस्त्येवेति वाच्यम् । तज्ज्ञानस्याम्बुज्ञानादभेदेऽन्यथाख्यात्यापत्तिः । भेदे ज्ञानैक्यानुभवविरोधः । यद्यलातचक्रप्रतीतिर्यदि पूर्वोत्तरभावितत्तद्देशविशेषालातसंयोगक्रमाग्रहणमात्रात्स्यात्तदा तत्तद्देशतत्तद्वस्तुसंयोगयौगपद्याग्रहणात् तत्राचक्रत्वप्रतीतिरपि कुतो न स्यात् । दिगन्तरे दिगन्तरसद्भावोऽप्यप्रामाणिकः । दिशो व्याप्तत्वेऽपि तद्भागानामव्याप्तत्वात् । पञ्चीकरणादेश्च भूतमात्रनिष्ठत्वात् । द्विचन्द्रादिज्ञानेऽपि स्वदेशवियुक्तचन्द्रस्य समीपदेशस्य च यद्यसंसर्गाग्रहात्तज्ज्ञानयोर्भेदाग्रहाद्वा तद्विशिष्टव्यवहारस्तदा तयोः संसर्गाग्रहात्तज्ज्ञानयोश्चाभेदाग्रहात्तदविशिष्टव्यवहारोऽपि किं न स्यात् । अदृष्टवशादिति तु निरस्तम् । अत्रापि ज्ञानैक्यानुभवविरोध इत्याद्यभिप्रेत्योक्तम् **अलं विस्तरेणेति** ।

**वं०प०— तथेति** । सुवर्णानुलिप्तशङ्खवत्पीतत्वेनेत्यर्थः । **सूक्ष्मत्वादिति** । पीतत्वस्येति शेषः । **अन्यच्चेति** । अतीन्द्रियावयवसमवेतत्वमेव सूक्ष्मत्वम् । तथा च पीतत्वस्य पित्तद्रव्यरूपातीन्द्रियावयवसमवेतत्वेन सूक्ष्मत्वान्न तत्पार्श्वस्थेन गृह्यते । सुवर्णस्य चैन्द्रियकत्वेन तद्गतपीतत्वस्य निरुक्तसूक्ष्मत्वाभावात्पार्श्वस्थेन ग्रहणं





युक्तमिति भावः । **किमनेनेति** । अतीन्द्रियावयवसमवेतस्यापि त्र्यणुकस्य पार्श्वस्थेन ग्रहणदर्शनेन प्रकृतेऽपि तथोपपत्तेः सूक्ष्मत्वात्पार्श्वस्थेन न गृह्यत इति वचनेन किमित्यर्थः । **सामीप्यादिति** । पार्श्वस्थस्य तु द्रष्टृपुरुषशरीरसामीप्यमिव सामीप्यं नास्तीति पीतत्वं न तेन गृह्यत इति भावः । **अन्यथेति** । द्रष्टृपुरुषशरीर-सामीप्यस्यैव दर्शनोपयोगाङ्गीकारे इत्यर्थः । **अदर्शनेति** । तत्र द्रष्टृपुरुषशरीरसामीप्याभावादिति भावः । **अन्यथाख्यातीति** । साक्षात्संबन्धेन पीतरूपस्य शङ्खेऽभावेन तेन संबन्धेन तत्र तद्धानाङ्गीकारे भ्रमलक्षणा-न्यथाख्यात्यापत्तिरित्यर्थः । **अनुभवेति** । पीतरूपवद्द्रव्यसंयुक्तोऽयं शङ्खः संयुक्तसमवायसंबन्धेन पीतरूपवानिति यावदित्येवं कस्याप्यनुभवाभावादिति भावः ।

**आनन्दः— अनेन** सूक्ष्मत्वोपन्यासेन । **अन्यथेति** । शरीरसामीप्यं चेदुपयुक्तमित्यर्थः ।

**कं०रा०— एवमिति** । स्वाप्नपदार्थानां भगवत्सृष्टतया सत्यत्वात्तत्प्रत्ययो यथार्थ इत्यस्य संमतत्वाद्विप्रतिपन्नान्युदाहरणान्तराणि निरसनीयानीत्युक्तम् । तन्निरसनप्रकारस्तु । यदुक्तं जपाकुसुमसमीपवर्ती स्फटिकमणिर्जपाकुसुमप्रभाभिभूततया रक्त इति गृह्यत इति । तन्न । जपाकुसुमगतलौहित्यस्य स्फटिके प्रतिबिम्बि-तत्वेन रक्तस्फटिक इति प्रतीतेः सर्वानुभवसिद्धत्वात् । किञ्च जपाकुसुमप्रभाभिभूतत्वेन स्फटिके रक्तत्वप्रत्ययो जपाकुसुमसमीपवर्तिशुक्लघटादावपि रक्तत्वप्रतीतिप्रसङ्गः । न च वाच्यं स्वच्छद्रव्यसंयोगेन स्फुटतरलभ्यमानप्रभाया अभिभावकत्वान्नोक्तातिप्रसङ्ग इति । स्वच्छद्रव्यसंबन्धस्य प्रतिबिम्बतोपयुक्तत्वेन स्फुटतरोपलम्भे उपयोगाभावात् । अपि च जपाकुसुमप्रभा स्फटिकदेशपर्यन्तव्यापिन्युत तदव्यापिनी । द्वितीयेऽभिभावकत्वायोगः । आद्ये सा किं रक्तरूपवती उत न । नेति पक्षे जपाकुसुमप्रभाभिभूततया स्फटिको रक्तत्वेन गृह्यत इत्यनुपपन्नम् । नाद्यः । जपाकुसुमस्फटिकयोर्मध्यप्रदेशे रक्तरूपवत्यास्तस्या उपलम्भप्रसङ्गात् । यच्च मरीचिकाजलज्ञानयाथार्थ्योपपादनं तदनुपपन्नम् । तेजःपृथिव्योर्जलांशस्य सत्त्वेऽपि जलांशस्याल्पीयस्त्वज्ञानेऽजलत्वमेव तस्य विज्ञातमिति जलार्थिप्रवृत्त्यनुपपत्त्या ज्ञानमात्रस्य प्रवर्तकत्वेन सर्वत्र प्रवृत्त्यापातेन च जलांशभूयस्त्वज्ञानस्यैव प्रवर्तकत्वेन वक्तव्यतया तस्यायाथार्थ्यावश्यंभावात् । यदप्यलातचक्रज्ञानस्य याथार्थ्योपपादनं तदचारु । अलातस्य द्रुततर-गमने सति निरन्तरालतया चक्रप्रतीतेरनुभवसिद्धत्वेन तद्याथार्थ्योपपादनस्य कर्तुमशक्यत्वात् । प्रसिद्धचक्रप्रतीता-वप्यन्तरालरहितत्वेन सर्वदेशसंयुक्तवस्तुग्रहणमेवानुभवसिद्धम् । यच्च दर्पणादिषु निजमुखादिप्रतीतेर्याथार्थ्योप-पादनायोक्तं दर्पणादिप्रतिहतगतयो हि नयनरश्मयो दर्पणादिदेशग्रहणपूर्वकं निजमुखादि गृह्णन्तीति । तदपि स्थवीयः । दर्पणादिप्रतिहतगतीनां नयनरश्मीनां निजमुखादिग्राहकत्वे शिलातलप्रतिहतगतीनामपि नयनरश्मीनां निजमुखादि-ग्राहकत्वप्रसङ्गात् । न च वाच्यं शिलातलस्यास्वच्छत्वान्न तथात्वमिति । नयनरश्मिगतिप्रतिघातकत्वे स्वच्छताया अनुपयुक्तत्वेन काठिण्यस्यैव चोपयुक्ततया तस्य शिलातलेऽपि सत्त्वेन वैषम्यायोगात् । विरलावयवस्य जल-स्यापि नयनरश्मिप्रतिघातकत्वे स्वच्छजलान्तर्गतशिलादेरग्रहणापत्तेश्च । दर्पणादिप्रतिहतनयनरश्मिभिर्बहुयोजन-व्यवहितोर्ध्वभागस्थसूर्यादिग्रहणे पृष्ठभागस्थस्यापि वस्तुनो ग्रहणापत्तेश्च । दर्पणादिप्रतिहतनयनरश्मिभिर्दर्पणादि-





देशग्रहणपूर्वकं निजमुखादिग्रहणेन ग्रहणद्वयस्य यथार्थत्वेऽपि दर्पणे मुखमिति दर्पणस्थत्वेन मुखप्रत्ययस्य सर्वानुभवसिद्धस्यायाथार्थ्यायोगाच्च । यच्च दिङ्मोहस्य याथार्थ्योपपादनाय दिगन्तरस्यास्यां दिशि विद्यमानत्वादित्युक्तम् । तदप्ययुक्तम् । यस्यां दिशि दिगन्तरभ्रमस्तस्यां दिगन्तरांशसद्भावे मानाभावात् । न च वाच्यं त्रिवृत्करणश्रुतिः समेत्याऽन्योन्यसंयोगमित्यादिस्मृतिश्च तत्र मानमिति । श्रुतेस्तेजोऽबन्नानामन्योन्यमिश्रणाभिधायकत्वेन स्मृतेश्च महदादीनां पृथिव्यन्तानामन्योन्यसंयोगप्रतिपादकतयाऽव्याकृताकाशभागरूपदिशामन्योन्यामिश्रणे मानत्वाभावात् । यदप्यङ्गुल्यवष्टंभतिमिरादिभिर्नयनतेजोगतिभेदेन सामग्रीभेदात्सामग्रीद्वयमन्योन्यनिरपेक्षं चन्द्रद्वयग्रहणहेतुर्भवति । तत्रैका सामग्री स्वदेशविशिष्टं चन्द्रं गृह्णाति । द्वितीया तु किञ्चिद्वक्रगतिश्चन्द्रसमीपदेशग्रहणपूर्वकं चन्द्रं स्वदेशवियुक्तं गृह्णाति । अतः सामग्रीद्वयेन युगपद्देशद्वयविशिष्टचन्द्रग्रहणे ग्रहणभेदेन ग्राह्याकारभेदादेकत्वग्रहणाभावाच्च द्वौ चन्द्रमसाविति भवति प्रत्यय इत्यादिना द्विचन्द्रज्ञानस्य याथार्थ्योपपादनं तदपेशलम् । स्वदेशविशिष्टचन्द्रग्रहणस्य यथार्थत्वेऽपि देशान्तरविशिष्टचन्द्रग्रहणस्य याथार्थ्यायोगात् । नन्वेतद्दोषपरिजिहीर्षयैव देशान्तरस्यागृहीतस्वदेशाचन्द्रविशेषणत्वं देशान्तरागृहीतस्वदेशचन्द्रयोर्निरन्तरग्रहणेन भवतीत्युक्तमिति चेत् । सत्यमुक्तं दुरुक्तं तत् । वैशिष्ट्यप्रतीतिं विना विशेषणत्वस्य क्वाप्यदर्शनात् । अन्यथा नैरन्तर्येण गृहीतयोर्गजाश्वयोर्विशेषणविशेष्यभावप्रसङ्गात् । ग्रहणभेदेन ग्राह्याकारभेदादिति चायुक्तम् । एकविषयकधारावाहिकग्रहणभेदेऽपि ग्राह्याकारभेदाभावादिति द्रष्टव्यम् ।

**श्रीनिधि०— किमनेनेति** । अन्येन न गृह्यते अनेनैव गृह्यत इति व्यवस्था प्रयोजकत्वादिति भावः । **तदनुपयुक्तमिति** । ग्रहण इति शेषः ।

**वा०चं०—** उदाहरणान्तरं निरस्यति **पित्तेति** । **किमनेनेति** । परिणामाल्पत्वादेर्दर्शनादर्शनरूपभ्रान्तपार्श्वस्थवैलक्षण्याप्रयोजकत्वादिति भावः । तद्वैलक्षण्यप्रयोजकं शङ्कते **पित्तेति** । **किमिदमिति** । आद्ये सामीप्यतदभावरूपस्य वैलक्षण्यप्रयोजकस्यासिद्धत्वात् द्वितीये तस्य स्वरूपतः सत्त्वेऽपि तद्वैलक्षण्याप्रयोजकत्वादिति भावः । **एवमिति** । स्वप्नस्थलेऽर्थज्ञानयोरेव सत्त्वं वा तत्र प्रतीतजाग्रत्त्वस्यापि वा । आद्ये संप्रतिपत्तिः । द्वितीये तु तस्येश्वरसृष्टत्वेन प्रमाणाभावाद्बाधकसद्भावाच्च न तदंशे याथार्थ्यं ज्ञानस्य । जपाकुसुमप्रभा स्वच्छद्रव्यसंयुक्तेऽतिरक्तः स्फटिक इति प्रतीयत इत्यपि न । प्रभाया गुणत्वेन गुणाद्वाऽलोकवदिति सूत्रसिद्धतया अन्यत्र टीकाकारैर्निपुणतरं प्रतिपादिततया गुणानां च द्रव्यसमवेततया तदभिन्नतया वा तत्संयोगासिद्धेः शुक्लः स्फटिक इतिवद्रक्त इति प्रतीतेरपि रक्तरूपसमवायविषयकत्वेन तदभेदविषयकत्वेन वाऽनुभवसिद्धतया रक्तद्रव्यतद्रूपसंयुक्तताविषयकताङ्गीकारेऽनुभवविरोधाच्च । तस्माद्रक्तरूपेण स्फटिकपरिणामात्तत्प्रतीतेर्यथार्थत्वमित्येव तत्त्वम् । मरीचिकाजलस्थले दिङ्मोहादिस्थले चैकत्रापरावयवसद्भावे प्रमाणाभावोपपादनेनाल्पावयवग्रहणादिमात्रेण भ्रमत्वाद्यसंभवोक्तेश्च तत्प्रतीत्योरयथार्थत्वमेव । अलातचक्रस्थले अन्तरालाभावाविषयीकरणेऽन्तरालाग्रहणतद्देशसंयुक्तवस्तुग्रहणमात्रेण कथं चक्रप्रतीतिः । न च सम्यक् चक्रप्रतीतिस्थलेऽप्येवमेवेति वाच्यम् । विप्रतिपत्तेः ।





अस्तु वा तत्र तथाप्रतीतेर्याथार्थ्यमत एव विप्रतिपन्नानीत्युक्तमिति । दर्पणादिस्थले च 'दर्पणप्रहता दृष्टिः परावृत्य स्वमाननम् । व्याप्नुवन्त्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखमि'ति परोक्तचौर्येऽपि न तथोपपद्यते । परावृत्य स्वमुखग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीत्ययोगादस्यां क्रियायां स्वच्छताया उपयोगाभावेन शिलाद्यभिहतानामपि नायनरश्मीनां स्वमुखग्राहकत्वापाताच्च । तस्माद्दर्पणादेः प्रतिमुखाद्यात्मना परिणामादेव तत्प्रतीतेर्याथार्थ्यम् । द्विचन्द्रादिस्थले चात्मविशेषगुणानां यौगपद्यायोगेन सामग्रीद्वयेन युगपद्ग्रहणद्वयोक्त्ययोगः । देशान्तरसंयुक्ततया चन्द्रान्तरप्रतीतेः सत्त्वेन देशान्तरस्य चन्द्रं प्रत्यप्राधान्यमात्रोक्त्ययोगश्च । अतस्तत्प्रतीतिरप्ययथार्थैव । तदेवं कासाञ्चिदयथार्थत्वात्कासाञ्चित्प्रतीतीनां याथार्थ्येऽपि प्रायस्त्वदुक्तप्रकारासंभवान्नोदाहरणान्युपपन्नानीति भावः । नन्विदं रजतमित्यादिप्रतीतीनां याथार्थ्येऽसदेव रजतं प्रत्यभादित्यनुभवविरोधः । अल्पांशग्रहणमात्रेण भ्रमत्वेऽतिप्रसङ्गश्चेत्यादिदूषणं स्पष्टमपि किं नोच्यत इत्यत आह **अलमिति**।

**वा०र०**— रजतार्थिनः शुक्तिकायां प्रवर्तकं चेत्यादेर्भिन्नविषयत्वं वदन्नवतारयति **उदाहरणान्तरमिति** । अन्यच्चेदित्येतदन्यशब्दार्थं वदन् किमनेन न किमपीत्याक्षेपलभ्यार्थं च दर्शयति **परिमाणाल्पत्वादेरिति** । भ्रान्तश्च पार्श्वस्थश्च भ्रान्तपार्श्वस्थौ तयोर्दर्शनादर्शनरूपं यद्वैलक्षण्यं क्रमेण तदप्रयोजकत्वादित्यर्थः । समानः अनुपयुक्त - मित्येतत्पक्षद्वयदूषणं यथा स्यात्तथा तदभिप्रायमाह **आद्य इति** । **सामीप्यतदभावेति** । सन्निकर्षतदभावरूपत्वे तस्य पर्यवसानेनोभयोः सन्निकर्षाविशेषे तस्याभावादसिद्धिरित्यर्थः । **तस्येति** । शरीरसामीप्यतदभावे पर्यवसन्नस्य तस्येत्यर्थः । **तद्वैलक्षण्येति** । भ्रान्तपार्श्वस्थवैलक्षण्येत्यर्थः । उदाहरणान्तराणां निरासस्यैकप्रकारत्वाभावात् तत्तद्योग्यनिरासप्रकारेण प्रत्येकमुदाहरणनिरासं दर्शयति **स्वप्नस्थल इत्यादिना** । **न तदंश इति** । ईश्वरसृष्टत्वेन प्रमाणसिद्धार्थतज्ज्ञानयोरेव सत्यत्वाङ्गीकारस्योचितत्वात् । बाधकरहितस्यैव च सत्यत्वेनाङ्गीकारस्योचितत्वादिति भावः । रक्तस्फटिकोदाहरणे प्राक्परोक्तं निराकर्तुं तावदनूद्य तत्प्रतिषेधं प्रतिजानीते **जपेति** । **संयुक्तेतीति** । संयुक्तेत्यत इत्यर्थः । **अन्यत्रेति** । तत्सूत्रीयतत्त्वप्रकाशिकायामित्यर्थः । **द्रव्यसमवेततयेति** । न्यायमतानुसारेण । स्वमतानुसारेणोक्तं **तदभिन्नेति** । तदभेदविषयकत्वेनेति पाठः । अभेदान्यतरेति पूर्वपाठ आसीत् । पश्चाद्भिन्नयोः निर्देशकरणेन दीर्घस्य नाशित्वान्मूलकोश इति ज्ञेयम् । कस्तर्ह्युपपादनप्रकार इत्यत आह **तस्मादुक्तेत्यादि** । सोमपूतिकोदाहरणसाम्यात् तद्वदेव तद्दूषणमित्याशयेनोक्तदूषणप्रकारातिदेशेनोदाहरणद्वयं दूषयति **मरीचिकेति** । स्वयमेव प्रागुपपादितं प्रकारं दूषयितुमाशङ्कते **न च सम्यगिति** । **विप्रतिपत्तेरिति** । सम्यक् चक्रप्रतीतिस्थलेऽप्यन्तरालग्रहणादिमात्रेण तत्प्रतीतिरित्यत्र प्रमाणाभावादित्याशयः । अत्रांशे परोक्तरीत्या यथार्थत्वमङ्गीकृत्यापि समाधत्ते **अस्तु वेति** । तर्हि निरसनीयानीत्युक्तानुपपत्तिरित्यतस्तत्रैव विप्रतिपन्नानीत्युक्तेस्तथाविधानामेव निरासप्रतिज्ञात्वप्राप्त्यै तदुदाहरणस्य च संप्रतिपन्नत्वान्न दोष इत्याह **अत एवेति** । **परोक्तेति** । बिम्बप्रतिबिम्बैक्यवादिमायावाद्युक्तेत्यर्थः । अनेन चौर्यकरणमेकं दूषणमिति सूचितम् । बिम्बप्रतिबिम्बैक्यभङ्गस्थलीय-न्यायामृत-अत एव चोपमेत्यधिकरणीयोत्तरमूलग्रन्थानुसारेणाह **परावृत्येति** । तर्हि कथं समाधेयमित्यत आह **तस्मादिति**।





**स०व्र०—— अन्यच्चेत्किमनेनेति** । त्र्यणुकादिवदतीन्द्रियसमवेतत्वरूपं वा अल्पावयवरूपत्वं वा सूक्ष्मत्वं विवक्षितं चेत्तर्हि त्र्यणुकवदेव पार्श्वस्थेनापि दृश्येतेत्यतिप्रसङ्गस्यापरिहारात् सूक्ष्मत्वादिति वचनेन किमिति भावः । **उभयोरिति** । द्रष्टृपार्श्वस्थयोरित्यर्थः । **उदाहरणान्तराणीति** । एवं स्वप्नेत्यादिनोक्तानीत्यर्थः । **विप्रतिपन्नानीति** । तेषु स्वप्नस्फटिकलौहित्यदर्पणमुखप्रत्ययानां यथार्थत्वं संमतमेवेतरेषां तु याथार्थ्यमुक्तरीत्या निरसनीयमित्यर्थः ।

**विठ्ठ०—** उदाहरणान्तरं निरस्यति **पित्तेति** । **अन्यच्चेति** । परिणामाल्पत्वादिकं चेत्किमनेन दर्शनादर्शनि भ्रान्तपार्श्वस्थवैलक्षण्याप्रयोजकत्वादिति भावः । तद्वैलक्षण्यप्रयोजकं शङ्कते **पित्तेति** । उभयोरिति द्रष्टृपार्श्वस्थयो-रित्यर्थः । **अन्यथेति** । शरीरसामीप्यस्य दर्शनोपयोगित्वमङ्गीकृत्य शरीरसामीप्यात्पित्तोपहितेन दृश्यते परशरीरा-सामीप्यादेव पार्श्वस्थेन न दृश्यते इत्यङ्गीकार इत्यर्थः । **एवमुदाहरणान्तराणीति** । तत्र स्फटिकलौहित्ययोर्यथार्थत्वं संमतमेव दर्पणमुखस्य यथार्थत्वेऽपि परोक्तप्रक्रिया असंभाविनी नायनप्रकाशस्य परावृत्त्य स्वमुखग्रहणे पार्श्वस्थस्य मुखद्वयप्रतीतिर्न स्यात् । इतरेषां याथार्थ्यं उक्तरीत्या निरसनीयम् । किञ्च यथार्थत्वे चोक्तप्रत्ययस्य असदेव रजतं प्रत्यभादित्यनुभवविरोधः इत्यादि दूषणं किं नोच्यते इत्यत उक्तम् **अलमिति** ।

**चषकः—— एवमुदाहरणान्तराणीति** । स्वप्नस्फटिकेत्यादिनाऽभिहितानीत्यर्थः । **निरसनीयानीति** । स्वाप्नपदार्थधर्मिकजाग्रदनुभूतपदार्थप्रतियोगिकतादात्म्याभावगोचरबाधविरोधप्रसङ्गेन आद्यप्रत्ययस्य तादात्म्यांशे प्रमात्वं न संभवत्येव । धर्म्यंशे ताद्रूप्यं सिद्धान्तिनापि संप्रतिपद्यते । स्वच्छद्रव्यसंयुक्ता जपाकुसुमप्रभेव रक्तः स्फटिक इति प्रतीतिगोचर इत्यपगतिरपि न साधीयसी । रक्तं स्फटिकं जानामीत्यनुव्यवसायेन तत्स्थानाभिषिक्तसाक्षिणा वा श्वेतं स्फटिकं जानामीत्यनुव्यवसायेनेव समवायसंसर्गावच्छिन्नरक्तत्वनिष्ठप्रकारता-कत्वविशिष्टस्फटिकवृत्तिविशेष्यताकत्वोपरागेण तादृशव्यवसायावगाहिना न्यायनयदिशा समवायघटितोक्तधर्मस्य तदनुपगन्तृदिशा भेदसंसर्गावच्छिन्नतत्प्रकारताकत्वघटितोक्तधर्मस्य वा अवगाढतया संयोगसंसर्गावच्छिन्नत्वस्य गुणवृत्तिप्रकारतायां परीक्षकापरीक्षिततया प्रभायाः गुणत्वस्याकरनिरूढतया तद्वृत्तिप्रकारतायां समवायावच्छिन्न-त्वस्य मतान्तरदिशा भेदसंसर्गावच्छिन्नत्वस्य वाऽवगाढतया, प्रभासंयुक्तं जानामीत्याकारकतापत्त्या च संयोग-संसर्गावच्छिन्नत्वावगाहनासंभवेन तदुपगतेरयोगेन शिलातलप्रतिहतनायनरश्मीनामपि निजमुखादिग्राहकता-पत्त्या स्फटिकलौहित्यदर्पणमुखप्रतीत्योः परमार्थभूतप्रतिबिम्बावगाहितानियन्त्रितटीकाकृत्पादप्रदर्शितयाथार्थ्योप-पादनभङ्ग्या एव आश्रयणीयत्वात् । मरीचिकाजलालातचक्रदिगन्तरद्विचन्द्रादिप्रतीतीनां दोषादृष्टविशेषायत्ता-ग्रहणादिना याथार्थ्योपपादनदिगपि कार्यनिश्चयोत्तरकालीनत्वादस्याः कल्पनाया इत्यनेनैव प्रत्याख्यातेति नेह प्रयतितव्यम् ।

**प्रदीपः——** पीतशङ्खादिष्वन्यावयवसंयोगमुक्तं विघटयति **पीतेत्यादिना** । अन्यच्चेत्किमनेनेति यद्यल्पा-वयवत्वं सूक्ष्मत्वं त्र्यणुकादिवत्तदा दर्शनमदर्शनं वा द्वयोरपि स्यान्न वा कस्यचिदित्यर्थः ।





॥ तार्किकाख्यातिवादः ॥

तार्किकैकदेशि-अख्याति-अनुवादः तन्निरासश्च—

**३९८ सु०— अन्यस्तु मन्यते । गृह्यमाणयोर्भेदाग्राहि सविकल्पकमेकमेव विज्ञानं भ्रमः । तथा हि । रजतसंस्कारदोषसचिवमिन्द्रियं शुक्तिशकलसन्निकृष्टं रजतशुक्तीदमंशविषयं तत्संसर्गासंसर्गावनवगाहमानमेकमेव सविकल्पकज्ञानमुत्पादयति । तथा च तयोरेक-विज्ञानोपारोहिणोर्भेदाग्रहादयथार्थव्यवहारः । तन्निरासादेव विवेकज्ञानं बाधकमित्युच्यते । न पुनः 'अन्यदन्यात्मना प्रतीयत' इति ॥**

**बिन्दुः**— रजतविषये काणादैकदेशिमतमुत्थापयति **अन्यस्तु मन्यत इति** । ज्ञानं यदि अविद्यमानमेवार्थं गृह्णीयात् तर्हि ज्ञानत्वाविशेषाद्वेदजनितमपि ज्ञानं तथा स्यादित्यनाश्वासापत्त्या वेदस्याप्यननुष्ठानलक्षणमप्रामाण्यं (भ्रमः) स्यादित्यर्थः ।

**परि०**— तार्किकैकदेशिमतमनूद्य निराह **अन्यस्त्विति** । **गृह्यमाणयोरिति** । ज्ञायमानयो-रित्यर्थः । तेन स्मर्यमाणारोपस्य संग्रहः । नत्वनुभवविषययोरित्यर्थः । रजतसंस्कारेत्यग्रेतनग्रन्थविरोधात् । **तत्संसर्गासंसर्गाविति** । रजतस्य शुक्तीदमंशस्य च तादात्म्यभेदाववविषयीकुर्वदित्यर्थः । **अयथार्थ-व्यवहार इति** । अन्यार्थिनोऽन्यत्र प्रवृत्तिः, अन्यस्यान्यात्मनाभिलपनं चेत्यर्थः । **तन्निरासादेव** भेदाग्रहनिरासादेव ।

**यादु०**— तार्किकैकदेशिमतमपाकर्तुमनुवदति **अन्यस्त्विति** । **गृह्यमाणयोरिति** । अत्रैकं विज्ञानं विभ्रम इति अन्यथाख्यातिमतवैलक्षण्यसूचनायोक्तम् । निर्विकल्पकव्यावृत्तये सविकल्पकमिति । नेदं रजतमिति बाधव्यावृत्तये भेदाग्राहीति । अयं घट इति ज्ञानमपि पटादिप्रतियोग्यनुपस्थितिदशायां ततो भेदाग्राहि भवत्येव । अतस्तद्व्यावृत्तये गृह्यमाणयोरिति ।

**वं०प०**— **गृह्यमाणयोः** रजतेदमंशयोः । तयोः रजतशुक्तीदमंशयोः । उपारोहिणोरुपारूढयोः । विषययोरिति यावत् । अन्यथाव्यवहारो रजतार्थिनः शुक्तिकायां प्रवृत्तिरित्यर्थः । इदमुक्तं भवति । तन्मते पुरतः प्रतीयमानं रजतमिदंपदार्थवत् सदेव । तदुभयविषयकं ज्ञानमप्येकमेव । एकज्ञानविषययोरिदंपदार्थरजतयोर्भेदाग्रहा-दयथार्थव्यवहारोऽयथार्थप्रवृत्तिर्भवति । एकज्ञानविषययोर्भेदाग्रहप्रसञ्जितायथार्थव्यवहारनिरासकत्वादेव नेदंरजतमिति विवेकज्ञानं बाधकमित्युच्यते । बाधकत्वप्रसिद्ध्या चैकज्ञानविषययोरिदंपदार्थरजतयोर्विवेकाग्रहादेव तदुभयविषय-कैकज्ञानस्य भ्रान्तित्वमिति लोकप्रवादः । तथा च प्राभाकरमते ज्ञानद्वयमेतन्मते तु ज्ञानमेकमित्येव भेदः ।





तज्जन्यप्रवृत्तेरयथार्थत्वादेव तज्जनकमेकमिदंज्ञानं भ्रमरूपमित्युच्यते । वस्तुतस्तु न भ्रमरूपं ज्ञानमस्तीत्येवं पूर्वमतैतन्मतयोर्ज्ञानद्वित्वज्ञानैकत्वाभ्यामेव विशेष इति द्रष्टव्यम् ।

**आनन्दः**— तार्किकैकदेशिमतं दूषयितुमनुवदति **अन्यस्त्विति** । ननु सविकल्पकरूपैकविज्ञानाङ्गीकारे संसर्गविषयत्वेन अन्यथाख्यात्यापात इत्यत आह **तथा हीति** । नन्विदंत्वेन शुक्तिविषयं कुतः, शुक्तित्वेनैव शुक्तिविषयत्वं कुतो न, इत्यत्राह **दोषसचिवमिति** । ननु संसर्गविषयत्वे संसृष्टत्वेन व्यवहारः कथं स्यात् । व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादित्यत आह **तथा चेति** । **तयोरिति** । रजतशुक्तीदमंशयोरित्यर्थः ।

**कं०रा०**— **रजतेति** । रजतसंस्कारश्च दोषश्च रजतसंस्कारदोषौ तत्सचिवमित्यर्थः । **रजतेति** । रजतं च शुक्तीदमंशश्च तदुभयविषयं तयो रजतशुक्तीदमंशयोः संसर्गासंसर्गावनवगाहमानमित्यर्थः ।

**श्रीनिधि०**— **अन्यस्त्विति** । नैयायिकैकदेशीत्यर्थः ।

**वा०चं०**— न्यायकल्पतरूदितमख्यातिमतान्तरमुत्थापयति **अन्यस्त्विति** । एकज्ञानत्वोक्त्या प्राभाकरमताद्भेदसिद्धिः । निर्विकल्पकेऽनतिव्याप्तये सविकल्पकमिति । नेदं रजतमित्यतो व्यावृत्तये भेदाग्राहीति । घट इत्याद्येकवस्तुग्राहिविज्ञानव्यावृत्तये गृह्यमाणयोरिति । ननु शुक्तिसन्निकर्षजन्यज्ञानस्य रजतेनेन्द्रियस्य सन्निकर्षाभावेन तदजन्यत्वात्कथं तद्विषयता । न च संस्कारतस्तथा । तथात्वे रजतज्ञानस्य स्मृतित्वापातेन नैकज्ञानता । संस्कारस्येन्द्रियसहकारित्वे च प्रत्यभिज्ञावदेकत्वादन्यथाख्यात्यापत्तिरित्यत आह **तथा हीति** । संसर्गाविषयकत्वे कथं संसर्गविषयकव्यवहार इत्यत आह **तथा चेति** । एवं व्यवहारान्यथाऽनुपपत्तिं निरस्य बाधकत्वान्यथाऽनुपपत्तिमन्यथाख्यातौ प्रमाणत्वेनोक्तं विघटयति **तदिति** । विवादविषयं स्पष्टमुद्घाटयति **न पुनरिति** ।

**वा०र०**— **न्यायकल्पतर्विति** । अनेन सविकल्पकरूपैकज्ञानत्वादित्वेऽपि ज्ञानस्वप्रकाशत्वाद्यनङ्गीकारेऽपि च न्यायमतादवान्तरविशेषादुत्तरत्र न्यायमतनिरासेऽपि प्राभाकराद्यख्यातिमतेन समानदूषणत्वादिहैवातिदेशेन तद्दूषणे सौकर्यमित्याशयेनात्रैव निराकरणम् । अन्यथा नैयायिकमतनिराकरणानन्तरं तदेकदेशिमतनिरासः स्यादिति सूचितं भवति । तदुक्तविभ्रमलक्षणे पदकृत्यमाह **एकज्ञानत्वोक्त्येत्यादिना** । **भेदसिद्धिरिति** । एकपदत्यागे प्राभाकराभिमतज्ञानद्वयेऽतिव्याप्तिः स्यात्तत्परिहारायैकपदमित्यर्थः । शिष्टं स्पष्टम् । **तथेति** । रजतेनेन्द्रियस्य सन्निकर्ष इत्यर्थः । नैकज्ञानता स्यादिति शेषः । **प्रत्यभिज्ञावदिति** । सोऽयं देवदत्त इत्यादि प्रत्यभिज्ञावदित्यर्थः । **विवादविषयमिति** । एवंविधाख्यातिमतस्यैकसविकल्पकज्ञानरूपान्यथाख्यातिमतेऽपि सत्त्वात्कृतं विवादेनेत्यत इति शेषः ।





**स०व्र०— गृह्यमाणयोरित्यादि**। एकं विज्ञानमित्यख्यातेर्भेदः। सविकल्पकमिति च वस्तुमात्रावगाहिनो निर्विकल्पकाद्व्यावृत्तिः। नेदं रजतमित्यादिभ्यश्च भेदाग्राहीति व्यावृत्तिः। घट इत्याद्येकवस्तुग्राहिविज्ञानमितरस्माद्भेदं न गृह्णाति उक्तरूपं चेत्यतस्तन्निवृत्त्यर्थं गृह्यमाणयोरित्युक्तम्। एकैकविज्ञानेन तु भेदवत्पटादेरग्रहणात्तद्व्यावृत्तिः।

**विठ्ठ०—** कल्पतरूदितं अख्यातिवादिमतान्तरं निराकरोति **अन्यस्त्विति**। एकज्ञानोक्त्या प्राभाकर-मताद्भेदसिद्धिः। **तत्संसर्गासंसर्गौ इति**। रजतस्य शुक्ति इदमंशस्य च तादात्म्यभेदावविषयीकुर्वदित्यर्थः। संसर्गाविषयत्वे ततः कथं संसर्गविषयकव्यवहार इत्यत आह **तथा चेति**। एवं चान्यथाख्यातौ मानत्वे-नोक्तबाधकत्वान्यथानुपपत्तिश्च नेत्याह **तन्निरासादिति**। भेदाग्रहनिरासादेवेत्यर्थः। स्वाभिमतं विभ्रममभिधाय परोक्तं प्रतिषेधति **न पुनरिति**।

**चषकः—** न्यायकल्पतरूदीरितमख्यातिमतान्तरं दुदूषयिषुरनुवदति **अन्यस्त्वित्यादिकं प्रतीयत** इत्यन्तेन। **शुक्तीदमंशेति**। शुक्तिरूपो य इदमंशस्तद्विषयमित्यर्थः।

**प्रदीपः— अन्यस्त्वित्यादि** प्राभाकरज्ञानद्वयमभ्युपगम्याख्यातिमाचख्यौ। अयं तु ज्ञानैक्यमभिप्रेत्य ब्रुवतीति भेदः तान्येवास्यापि दूषणानि वक्तव्यानि।

**३०९ सु०— तदिदमनुपपन्नम्॥ 'विवेकाग्रहः किं सर्वत्र प्रवृत्तिहेतुरुतात्रैवे'ति प्रागुक्त-विकल्पदोषाणामशेषाणामविशेषात्॥ किञ्च प्राभाकराणां वेदप्रामाण्यसिद्ध्यङ्गतयाऽस्ति अख्यातिस्वीकारे प्रयोजनमिति विद्यते भ्रमः। कणभक्षाक्षचरणपक्षपातिना तु 'अतस्मिं-स्तदिति प्रत्ययो विपर्यय' इति पूर्वाचार्यवचनमनादृत्य परमतप्रमोषः कस्मादिष्यते। असत्ख्यातिपरिहारार्थमिति चेन्न, तथा सत्ययथार्थव्यवहारस्यापि परिहारप्रसङ्गात्। न ह्यसत्प्रत्येतुमशक्यं, शक्यं तु व्यवहर्तुमित्यत्र कारणविशेषोऽस्ति। व्यवहारः प्रतीतिसिद्ध इति चेत्तत्किं विशिष्टप्रत्ययो न प्रतीतिसिद्ध इत्यलम्॥**

**परि०— सर्वत्रेति**। सत्यस्थलेऽपीत्यर्थः। **अत्रैवेति**। भ्रमत्वेन विमतस्थल एवेत्यर्थः। **प्रागुक्तेति**। प्राभाकरमतदूषणोक्तिप्रस्तावे किमयमेव व्यवहारो भेदाग्रहादन्यस्त्वभेदग्रहात्। उत सर्वोऽपि भेदाग्रहात्। नाद्यः। अनियतकारणतापातादित्यादिनोक्ताद्यपक्षदोषाणां नन्वस्तु तर्हि द्वितीयः पक्ष इत्यादिनाऽनूद्योक्तद्वितीयपक्षदोषाणां चाशेषाणामविशेषादित्यर्थः। **कणभक्षाक्षचरणेति**। कणादाक्ष-पादपक्षपातिनेत्यर्थः।





**वं०प०— प्रागुक्तविकल्पदोषाणामिति** । सविकल्पकोच्छेदादृष्टकल्पनादिदोषाणामित्यर्थः । **वेदप्रामाण्यसिद्धीति** । 'अहो बत महानेष प्रमादो धीमतामपि । ज्ञानस्य व्यभिचारित्वे विश्वासः किं निबन्धन' इति तद्वचनादिदंरजतमिति ज्ञानस्याप्रामाण्ये वेदजन्यज्ञानेऽपि अप्रामाण्यशङ्का स्यादतस्तत्परिहाराय ज्ञानमात्रं यथार्थमित्यङ्गीकृत्यान्यथाख्यातिर्न स्वीकृतेत्यर्थः । भ्रम आग्रहविशेषः । कणभक्षः कणादः । अक्षचरणोऽक्षपादः । परमतप्रमोषोऽख्यातिस्वीकारेण प्राभाकरमतचौर्यम् । **असत्ख्यातीति** । रजतस्यासत्त्वाङ्गीकारेऽसतोऽपि ख्यातिः प्रतीतिः प्रसज्यते । सा च न युक्ता । यदसत्तन्न प्रतीयत इति नियमादसतः प्रतीत्यन्यथाऽनुपपत्त्या रजतस्य सत्त्वमङ्गीकृतमित्यर्थः । नन्वसत्ख्यात्यभावेऽसद्विषयकप्रवृत्त्यभावः कुत इत्यत आह **न हीति** । **तत्किमिति** । एतावन्तं कालं शुक्तिकाशकलमेव रजतत्वेनाज्ञासिषमित्युत्तरकालीनानुभवबलेनात्यन्तासद्रजतात्मकतया शुक्त्यवगाहिभ्रमरूपविशिष्टज्ञानमप्यनुभवसिद्धमेवेत्यर्थः ।

**आनन्दः— प्रागुक्तेति** । विवेकाग्रहादेव सर्वत्र प्रवृत्त्यङ्गीकारे मध्यमवृद्धप्रवृत्तेरपि तथात्वेन बालस्य तदीयसंसर्गज्ञानोपायाभावेनान्विते व्युत्पत्तिग्रहानुपपत्तौ शाब्दव्यवहारोच्छेदः । अत्रैव वा एतददृष्टकल्पनाप्रसङ्ग इत्यादिदोषाणामित्यर्थः । अपसिद्धान्तमप्याह **किञ्चेति** । विपर्ययाङ्गीकारे एकत्रानाश्वासे सर्वत्रानाश्वास इति वेदप्रामाण्यसिद्धिर्न स्यादिति भावः । नन्वसत्प्रतीतिरेव न संभवति । असद्व्यवहारस्तु संभवत्येवेत्यत आह **न हीति** । तत्किमिति इदंरजततयाहमज्ञासिषमिति ननु व्यवसायेन विशिष्टप्रत्ययः सिद्ध्यतीति भावः ।

**कं०रा०— परमतप्रमोषः** परमतस्तेयम् । नन्विदंरजतमिति ज्ञानस्य शुक्तिरजतसंसर्गविषयत्वे संसर्गस्य असत्त्वादसत्ख्यातिः प्रसज्यते तत्परिहारार्थं परमतप्रमोष इष्यत इत्याशयेन शङ्कते **असत्ख्यातीति** ।

**श्रीनिधि०— शक्यं तु व्यवहर्तुमित्यत्र कारणविशेषोऽस्तीति** । उपलक्षणमिदम् । व्यवहारस्य व्यवहर्तव्यज्ञानमूलत्वादित्यपि द्रष्टव्यम् ।

**वा०चं०—** ज्ञानस्वप्रकाशत्वस्याभावस्य धर्म्यात्मकतायाश्चानभ्युपगमेन कोऽयं भेदो नामेत्यादि विकल्पदोषाप्राप्तेर्विकल्पं विशिनष्टि **विवेकाग्रह इति** । एतन्मतासाधारणं दोषमाह **किञ्चेति** । वेदप्रामाण्यसिद्ध्यङ्गत्वं नन्वित्यादिवक्ष्यमाणशङ्काग्रन्थे स्पष्टम् । भ्रमत्वोक्तिस्तु तथा सतीत्यादि तत्परिहाराभिप्रायेण । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति द्वितीयसूत्रस्थवार्तिकवचनमतस्मिंस्तदिति । मिथ्याज्ञानमनेकप्रकारकम् । तद्यथा नित्येऽनित्यमिति निर्भये सभयमिति भाष्यमादिपदेनोपादत्ते । अपसिद्धान्त इत्यनुक्त्वा परमतप्रमोष इति वदता 'वध्यतां वध्यतां बालो नानेनार्थोऽस्ति जीवता । स्वपक्षहानकर्तृत्वाद्यः कुलाङ्गारतां गत' इति न्यायविषयतासूचनमुखेनापसिद्धान्तः सूचितो भवति । न तावत्पूर्वाचार्यवचनानादरो विशिष्टप्रत्यये साधकाभावात्तस्यानुभवसिद्धताया उपपादितत्वादिति व्यवहारप्रतिबन्दीमुखेन वक्तुं शङ्कामुत्थापर्यात **असदिति** । तर्हि व्यवहारस्यापि परिहर्तव्यत्वात्तद्गतिकथनाय भेदाग्रहोक्त्यनुपपत्तिरित्याह **नेति** ।





**वा०र०—** विवेकाग्रहपक्षे प्रागुक्तयावद्दूषणातिदेशमकृत्वा कतिपयदूषणातिदेशे निमित्तं वदन्नुत्तरवाक्यमवतारयति **ज्ञानस्वप्रकाशत्वस्येति** । कोऽयं भेदः स्वरूपमित्यादिनाऽनेकधा विकल्पान्कृत्वा दूषणान्युक्तानि । तत्र यदि प्रागुक्तविकल्पदोषाणामित्येव ब्रूयात्तर्हि स्वप्रकाशत्वाद्याश्रयणेनापि निराकृतविकल्पानां तद्दोषाणां चातिदेशो विज्ञायेत । न चासौ तदनङ्गीकारिणं प्रति युज्यते । अतोऽत्रैतन्मतानुसारेणैव प्रवर्तनीयविकल्पस्य तद्दोषस्य चातिदेश इति वाच्यम् । तदर्थं च विकल्पपदेन विकल्पविशेषोपस्थित्यर्थं विवेकाग्रहः । किं सर्वत्र प्रवृत्तिहेतुरुतात्रैवेति विकल्प इति विकल्पस्य विशेषणं कृतमित्यर्थः । प्रागुक्तदूषणातिदेशमात्रेण तन्मतनिरासाभिप्राये तावन्मात्रमेव दूषणमेतन्मते आयाति । यच्चापि दूषणान्तरमायाति तत्प्राभाकरमतेऽपि संभवतीति भ्रान्तिद्वयनिराकरणायैतन्मते असाधारणदूषणं कथयन्तीत्याह **एतन्मतेति** । **वक्ष्यमाणेति** । अनुपदमेव वक्ष्यमाणेत्यर्थः । अख्यातिस्वीकारे प्रयोजनमिति कुतो भ्रम इत्यत आह **भ्रमत्वोक्तिस्त्विति** । **तत्परिहारेति** । नन्वित्यादिशङ्कापरिहारेत्यर्थः । अतस्मिंस्तदिति प्रत्ययो विपर्यय इत्युक्तिः । कस्य पूर्वाचार्यस्येत्यत आह दुःखजन्मेति । आदिपदोक्तां मुक्तिं तत्पूर्वाचार्ये चाह **मिथ्याज्ञानमिति** । **न्यायविषयतेति** । अपसिद्धान्तस्य दूषणतां स्फोरयितुं न्यायविषयत्वसूचनमिति भावः । बध्यतां बध्यतामिति वचनं तु हिरण्यकशिपोः प्रह्लादविषये दूतान्प्रति वचनम् । **न तावदिति** । विद्यमानमपि पूर्वाचार्यवचनमनादृत्य मतान्तरमाद्रियत इत्यत इति शेषः ।

**स०व्र०—** **वेदप्रामाण्यसिद्ध्यङ्गतयेति** । अख्यातेरिति शेषः । **विद्यते भ्रम इति** । प्रयोजनमस्तीत्येवंरूपो भ्रमोऽस्तीत्यर्थः । मध्यमवृद्धव्यवहारेऽप्येकविज्ञानोपारोहिणोः संसर्गिणोरसंसर्गाग्रहादेव व्यवहारोपपत्तौ बालस्य संसर्गज्ञानानुमानानुदयात् शब्दप्रामाण्यभङ्गप्रसङ्गः । एवमनुमानाभास इव सदनुमानेऽपि असंसर्गाग्रहादेव संसर्गव्यवहारोपपत्तावनुमानोच्छेद इति भावेन भ्रम इत्युक्तम् ।

**वि०ठ०—** **प्रागुक्तदोषाणामिति** । प्राभाकरमतदूषणप्रस्तावे सर्वत्रेति पक्षदूषणत्वेन नन्वस्तु तर्हि द्वितीयः पक्ष इत्यादिनानूद्य असंसर्गाग्रहभेदाग्रहयोर्निरस्तत्वादित्यादिनोक्तानां अत्रेति पक्षदूषणत्वेनोक्तानां अनियतकारणापात इत्यादीनां चाविशेषादित्यर्थः । पक्षपातिनेत्येतत् परमतप्रमोषे अपसिद्धान्त इति ज्ञापयितुं पूर्वाचार्यवचनानादरे निमित्तमाशङ्कते **असत्ख्यातिरिति** । तदाचार्यमते ख्यायमानतादात्म्यस्य संसर्गस्य चाभावात् इति भावः । विमते स्थले प्रतीयमानो न विशिष्टप्रत्ययः इति ब्रूमः इति चेत्तर्हि संप्रतिपन्नस्थलेऽपि न विशिष्टप्रत्ययोऽविशेषादिति वक्तुं शक्यत एव । किञ्च प्रतीयमानो विमतः प्रत्ययः विशिष्टप्रकारेण प्रतीयते न वा आद्ये अन्यथाख्यात्यभ्युपगमः प्राप्तः द्वितीये प्रवृत्त्यनुपपत्तिरित्याद्यभिप्रेत्याह **अलमिति** ।

**चषकः—** **परमतप्रमोषः** गुरुमतापहारः ।





**४०० सु०— ननु विपर्ययाभ्युपगमे कथं वेदप्रामाण्यसिद्धिः । वेदजनितप्रत्ययेऽपि विपर्ययशङ्काप्रसरात् । सर्वस्यापि विज्ञानस्य याथार्थ्ये तु नेयं शङ्कावकाशमासादयतीति । मैवम् । तथा सति विवेकाग्रहस्याप्यनङ्गीकार्यत्वापातात् । तथा हि । न तावद्वेदवाक्यं पदार्थेषु प्रमाणम् । तेषामन्यतोऽधिगतत्वात् । नापि संसर्गे; विनाऽपि संसर्गग्रहमसंसर्गाग्रहेणैव व्यवहारान् पश्यतो वेदजनितविज्ञानेऽपि शङ्काप्रसरात् । अपौरुषेयत्वादिना सा निरसिष्यत इति चेत्; किं तर्हि; सकललोकावसितविपर्यासनिरासेन, तच्छङ्काया अपि तत एव निराकर्तुं शक्यत्वात्; इति सिद्धमेतच्छुक्ती रजतत्वेनावभासत इति ।**

**परि०**— प्राभाकराणां वेदप्रामाण्यसिद्ध्यङ्गतयाऽस्त्यख्यातिस्वीकारे प्रयोजनमिति विद्यते भ्रम इति प्रांगुक्तं शङ्कोत्तराभ्यां व्यनक्ति **नन्वित्यादिना शक्यत्वादितीत्यन्तेन** । **अन्यत इति** । प्रत्यक्षादितोऽधिगतत्वादित्यर्थः । इह खलु केचिद्यथार्थं सर्वं विज्ञानमिति मन्यमाना नान्यथाख्यातिं सहन्त इत्यादिनैतावत्पर्यन्तेन ग्रन्थेन सिद्धार्थमनुवदति **सिद्धमेतमिति** । किं तदित्यत आह **शुक्तिरिति** । अन्यदन्यात्मना अवभासत इत्यस्योपलक्षणमेतत् । उक्तं प्रमेयं क्वचित्स्थलविशेषे प्रतिपादयितुं शुक्ती रजतत्वेनेति विशिष्योक्तिः ।

**वं०प०— पदार्थेष्विति** । पदार्थविषयकप्रमाजनकमित्यर्थः । अन्यतः प्रत्यक्षादनुमानाच्च । तथा चानधिगतार्थगन्तृत्वाभावादप्रामाण्यमिति भावः । संसर्गे संसर्गविषयकप्रमाजनकमित्यर्थः । व्यवहारान् इदंरजतमित्यादीन् । **शङ्केति** । वेदजन्यज्ञानात्प्रवृत्तिस्तावद्भवति । सा प्रवृत्तिरपि भ्रमस्थल इवासंसर्गाग्रहादेव भवतु । न विशिष्टज्ञानादित्येवं तत्रापि शङ्का स्यादित्यर्थः । **सेति** । वेदजन्यज्ञानादपि प्रवृत्तिरसंसर्गाग्रहादेव भवतु न विशिष्टज्ञानादिति शङ्केत्यर्थः । **तच्छङ्काया अपीति** । विपर्ययाङ्गीकारपक्षेऽपि वेदजनितविज्ञाने विपर्ययशङ्काया अपौरुषेयत्वेन निराकर्तुं शक्यत्वादिति भावः । **रजतत्वेनेति** । अत्यन्तासद्रजतात्मकत्वेनेत्यर्थः ।

**आनन्दः**— अख्यातिस्वीकारे वेदप्रामाण्यसिद्धिः प्रयोजनमस्तीत्ययं भ्रम इत्युक्तम् । तदुपपादयितुं शङ्कते **ननु विपर्ययेति** । अस्मिन्सति वेदजन्ये ज्ञाने अप्रामाण्यशङ्का स्यादिति भावः । नन्वयथार्थज्ञानजनकत्वं ह्यप्रामाण्यम् । न हि विवेकाग्रहे अयथार्थज्ञानजनकत्वं भवतीत्याशङ्क्य प्रामाण्यं द्विविधम् अयथार्थज्ञानजनकत्वं प्रमित्यनुत्पादकत्वं च तत्रायथार्थज्ञानजनकत्वासंभवेऽपि प्रमित्यनुत्पादकत्वमस्यैवेत्याह **तथा हीति** । ननु विपर्यासस्याप्रामाणिकत्वात् । कथं तच्छङ्क्या अपौरुषेयागमेन निरास इत्युक्तं **सकललोकेति** । तथाच सकल-लोकानुभवेनैव निश्चितमिति भावः । न च मुखतोऽन्यथाख्यातिवादिनां मतमनिराकृत्यादावेव तदेकदेशिमतापाकरण-मयुक्तमिति वाच्यम् । अस्याख्यातिपक्षतुल्यत्वेन तद्दोषाणामत्रातिदेष्टुं शक्यत्वेन चास्यात्र निराकरणमिति भावः ।





**कं०रा०**— **तेषामिति** । पदार्थानां मानान्तरेणानधिगतत्वे तेषु पदसङ्गतिग्रहणानुपपत्त्या तेषामन्यतोऽधिगतत्वमिति भावः । **शङ्केति** । अगृहीतासंसर्गज्ञानद्वयत्वशङ्काप्रसङ्गादित्यर्थः । **अपौरुषेयत्वादिनेति** । अपौरुषेयत्वमादिः प्रयोजकं यस्य तेन निर्दोषत्वेनेत्यर्थः । **तदिति** । वेदजनितज्ञाने विपर्ययरूपत्वशङ्काया अप्यपौरुषेयत्वादिनैव निराकर्तुं शक्यत्वादित्यर्थः ।

**श्रीनिधि०**— **वेदजनितविज्ञानेऽपि शङ्काप्रसरादिति** । किमयं व्यवहारः असंसर्गाग्रहेणैव उत व्यवहर्तव्यविशिष्टज्ञानेनेति शङ्काप्रसरेणान्विते शक्तिग्रहो न स्यादिति भावः ।

**वा०चं०**— नापि बाधकसद्भावात् तदनादरस्तदभावादित्याशयेन बाधकं शङ्कते **नन्विति** । अख्यातिमतत्रयेऽप्यस्यान्यथाख्यातिबाधकत्वेनाभिमतत्वात्सर्वशेषताज्ञापनाय मतत्रयनिरासान्ते तदभिमतं बाधकमाशङ्क्य निराकृतमिति ध्येयम् । एवञ्च पक्षद्वये सत्यपि साम्येऽर्धजरतीयं कुर्वता न केवलं पूर्वाचार्यवचनविरोधः सकलोकानुभवविरोधश्चाधिकः संपादितो न तु लाघवमित्याशयेनोक्तं **सकलेति** । आरोप्यमाणसत्त्वासत्त्वविचारस्यारोपसिद्ध्यधीनत्वादवसरसङ्गत्योत्तरविचारारम्भ इत्याशयेनाख्यातिमतत्रयनिराससिद्धं फलमाह **सिद्धमिति** ।

**वा०र०**— **अवसरेति** । प्रतिबन्धकजिज्ञासात्वेनाख्यात्यादिमतानुसारेणारोपाभावसिद्धेः कथमारोप इति जिज्ञासा अभूत् । तन्मतनिराकरणेन तस्य जिज्ञासायां निवृत्तायां प्रतिबन्धकजिज्ञासापगमरूपावसरसङ्गत्येत्यर्थः । **इत्याशयेनेति** । तदभावं वक्तुमिति शेषः । ननु वेदप्रामाण्यानुपपत्तिरूपं बाधकं विपर्ययाङ्गीकारे प्राभाकरेण रामानुजेन च वक्तुं शक्यमिति तन्मतयोरेतच्छङ्कातत्परिहारौ मूले कुतो न प्रवर्तितावित्यत आह **अख्यातिमतत्रयेऽपीति** । एवंप्रकारेण दूषणदानस्य तत्रतत्रोपलम्भात् । अत एवानेकविकल्पनिराकरणस्थले चरमविकल्पनिराकरणावसरे सर्वपक्षसाधारणदूषणदानं कुर्वन्ति । ...................................दृष्टत्वात् ।

**विठ्ठ०**— नासत्ख्यातिपरिहारार्थं आचार्यवचनानादरः येनोक्तदोषः किन्तु विपर्ययाभ्युपगमे बाधकसद्भावादित्याशयेन शङ्कते **नन्विति** । **अन्यतः** प्रत्यक्षादितः । **शङ्काप्रसरादिति** । यागादौ प्रवृत्तिजनकं इदं स्वर्गकामो यजेतेत्यादिवेदजनितं विज्ञानं किं संसर्गग्रहरूपं उतागृहीतासंसर्गपदार्थज्ञानमात्रमिति शङ्काप्रसरात् संसर्गेऽपि न प्रमाणमित्यर्थः । न केवलं स्वाचार्यवचनविरोधः किन्तु सकललोकानुभवविरोधश्चेत्याशयेनोक्तं **सकलेति** ।

**चषकः**— **अन्यतोधिगतत्वात्** । यथायथं प्रत्यक्षादिजनितज्ञानविषयत्वात् । **सकललोकव्यवसितेति** । निश्चितेत्यर्थः । **शुक्ती रजतत्वेनेति** । द्रलोप इत्यनेनात्र दीर्घः ।

**प्रदीपः**— एवमख्यातिमतमपास्यान्यथाख्यातिं विभजते **सिद्धमेतदित्यादिना** ।





प्राचीनतार्किक-अख्याति-अनुवादः तन्निरासश्च—

**४०१ सु०— तत्र 'आरोप्यमाणं रजतं सदेवे'ति केचिदातिष्ठन्ते ॥ तथा हि । यद्धि यथावभासते तत्तथेत्यौत्सर्गिको न्यायः । अपवादस्तु बलवद्बाधकोपनिपातात् । तथा चेदं च रजतं च तत्तादात्म्यं चेति त्रितयमिहावभासते । इदं च रजतत्वं च तत्संसर्गश्चेति वा । तत्र रजतरजतत्वयोरिदङ्कारास्पदस्य च बाधकाभावान्नासत्त्वमुपपद्यते, संवादसद्भावाच्च । तत्तादात्म्यस्य संसर्गस्य वा बाधकाद्विसंवादाच्चासत्त्वमस्तु । यथोक्तम् 'असंभवि च यावत्तु तावत्संपरिहीयतामि'ति । न च 'नेदं रजतमि'ति बाधबोधो रजतस्याप्यसत्त्वमावेदयतीति वाच्यम्; तस्य तादात्म्यमात्रगोचरत्वेनोपपत्तौ रजतगोचरत्वकल्पनायां गौरवप्रसङ्गात् । यथाहुः 'एकदेशापवादेन कल्प्यमाने च बाधके । न सर्वबाधनं युक्तमिति न्यायविदः स्थिताः' इति ॥ किञ्च रजतस्यात्यन्तासत्त्वे प्रतिभासो नोपपद्यते । स्थिते चैवं सत्त्वे बाधसमये पुरोऽदर्शनाद् देशान्तरे सत्त्वमास्थीयते । दोषदूषितं चक्षुः शुक्तिशकलमात्रसन्निकृष्टमपि विप्रकृष्टरजतात्मना तदा दर्शयतीति को दोष इति ॥**

**बिन्दुः**— तार्किकमतमुपन्यस्यति **तत्रारोप्यमाणमित्यादिना** ।

**परि०— तत्रेति** । एवं सिद्धे सतीत्यर्थः । **केचित्** प्राचीनतार्किकाः । **इदंकारेति** । इदंत्वास्पदस्येत्यर्थः । **परिहीयतां** परित्यज्यताम् । सत्त्वेन नाङ्गीकार्यमित्यर्थः । न केवलं बाधस्यान्यथोपपत्त्या रजतासत्त्वे मानाभावात्सत्त्वमुपेयम् । किन्तु प्रतीत्यन्यथोपपत्त्या चेत्याह **किञ्चेति** । तावता देशान्तरे सदिति कुत इत्यत आह **स्थिते चैवमिति** । अदर्शनादिति भावः । **तदिति** । शुक्तिशकलमादर्शयतीत्यर्थः ।

**यादु०**— आरोप्यस्य रजतादेरन्यत्र सत्त्वे पुरोदेशेऽसत्त्वे सति सत्त्वादिति परिशेषं प्रमाणं विवक्षुस्तत्र विशेष्यासिद्धिवारणाय तस्य सत्त्वं तावत्साधयति **यद्धि यथेत्यादिना** । **संवादसद्भावाच्चेति** । रजतमिति सामान्याकारेण प्रतीत्यन्तरसद्भावादित्यर्थः । देशान्तरे रजतप्राप्तिरूपसंवादसद्भावादित्यर्थ इत्यप्याहुः । आरोप्यस्य सत्त्वेऽर्थापत्तिमप्याह **किं चेति** ।

**वं०प०— असंभवि च यावत्त्विति** । रजततादात्म्यस्य रजतत्वसंसर्गस्य च सत्त्वं न संभवतीति । तावत्तावतः । सत्त्वं संपरिहीयतां त्यज्यतामित्यर्थः । **एकदेशेति** । तादात्म्यमात्रेत्यर्थः ।





**आनन्दः**— इदानीमन्यथाख्यातिं दूषयितुं तन्मतमुत्थापयति **तत्रेति**। ननु यद्धि तथावभासते तत्तथैवेति नियमाच्छुक्ती रजतत्वेनावभासत इति सा रजतं भवत्वेवेति। न तस्यारोप्यमाणत्वं युक्तमित्यत आह **तथा हीति**। ननु रजतरजतत्वयोरपि बलवद्बाधकेनापवादात्तयोरप्यसत्त्वमापन्नमित्यत आह **तथा चेति**। असत्त्वाभावे हेत्वन्तरमाह **संवादेति**। क्वचित्सत्त्व इति शेषः। तथाच रजतादेरापणरूपदेशान्तरे सजातीय-विजातीयसंवादात्। इदंपदार्थस्य च पुरोवर्तिनि संभवान्न सत्त्वमित्यर्थः। एवमसत्त्वे बाधकाभावमुक्त्वा बाधक-मप्याह **किञ्चेति**। ननु रजतसत्त्वे पुरोवर्तिन्येव तदस्त्वित्यत आह **स्थित इति**। ननु तर्हि चक्षुषो विप्रकृष्टेन संयोगाभावात्कथं तदवभासत इत्यत आह **दोषेति**। किं प्रमाणाभावादेः सत्त्वानङ्गीकार उत बाधकसत्त्वात्।

**कं०रा०**— **पुर इति**। पुरोदेशे रजतस्यादर्शनादित्यर्थः। तत् अन्यत्र सत्त्वम्।

**श्रीनिधि०**— केचिन्नैयायिकाः आतिष्ठन्ते प्रतिजानते। तत्तादात्म्यं चेति तादात्म्यारोपपक्षे **तत्संसर्ग-श्चेति**। संसर्गारोपपक्षे। ननु बाधाभावो असञ्जातबाधभ्रमेऽप्यस्तीत्यत आह **संवादेति**। ननु बाधकप्रत्ययस्यापि क्वचित् भ्रमत्वं दृष्टमित्यत आह **विसंवादादिति**। **संपरिहीयतां** सम्यक् त्यज्यताम्। कल्प्यमाने बाधने एकदेशापवादेन एकदेशनिषेधेन उपपन्ने सतीति शेषः। सर्वबाधनं तु न युक्तमिति न्यायविदः स्थिताः आस्थिताः। न्यायविदामेवं वाद इति यावत्।

**वा०चं०**— तत्रासतः सज्ज्ञानाधीनत्वात्सत्पक्षस्य तत्रापि बहिःसत्त्वनिरासाधीनतयाऽन्तःसत्त्वसिद्धे-र्हैतुकपरिगृहीततया च बलवत्त्वाद्बहिःसत्त्वपक्षस्य प्रथमोपस्थिततया प्रथमनिरसनं युक्तमित्याशयेनाह **तत्रेति**। ननु न तावद्रजतं पुरोदेशे सत्। अदर्शनात्। नापि देशान्तरे। प्रमाणाभावादित्यतो विमतं रजतं देशान्तरे सत्पुरोऽसत्त्वे सति सत्त्वात्संमतवदिति विवक्षितं परिशेषानुमानं स्थिते चैवमित्यादिना वक्तुं तत्र विशेष्यासिद्धिशङ्कायां विमतं सत्तथा प्रतीयमानत्वादिति विवक्षितानुमाने शुक्तिरजततादात्म्यादौ व्यभिचारशङ्कायामुत्सर्गापवादविषये व्यभिचारचोदन-मतिप्रसङ्गकरमित्युपोद्घातेनाह **यद्धीति**। यद्वा प्रमाणाभावात्कथं सत्त्वमित्यतो विमतं सत्तथा प्रतीयमानत्वादिति विवक्षितानुमाने उक्तरीत्या व्यभिचारशङ्कानिरासकत्वेन यद्धीत्यादिग्रन्थं योजयित्वा तर्हि प्रवृत्तस्य कथं रजताप्राप्तिः कथं वा भ्रमत्वाद्युपपत्तिरित्याशङ्कानिरासकत्वेन स्थिते चेत्यादिग्रन्थो योजनीयः। ननु तर्हि बाधकसद्भावाद्रजत-मप्यपवादविषय एवास्त्वित्यतो बाधकस्य तादात्म्यसंसर्गविषयकत्वेनान्यथासिद्धिं वक्तुं तादात्म्यसंसर्गारोपभेदेन भ्रमविषयं तावन्निरूपयति **तथा चेति**। नन्वेवं विषयव्यवस्था न युक्ता नियामकाभावादित्यतो नियामकोक्तिपूर्वं तामाह **तत्रेति**। इदंकारास्पदस्य चेति दृष्टान्ततयोपात्तं **संवादेति**। बाधोत्तरमपि पुरोवर्तिप्राप्तेरिव देशान्तरे रजतस्यापि प्राप्तेरित्यर्थः। **विसंवादाच्चेति**। शुक्तिरजततादात्म्यसंसर्गयोः कदाऽपि कुत्राप्यप्राप्तेरित्यर्थः। बाधकसत्त्वासत्त्वयोर्विषयसत्त्वासत्त्वप्रयोजकत्वे संमतिमाह **यथोक्तमिति**। यावत्तावदित्यवधारणे। ननु बाधाभावोऽसिद्धो नेदं रजतमित्यस्यैव रजतबाधत्वादित्याशङ्कते **न चेति**। तादात्म्येत्यतःपूर्वमसत्त्वेनोभय-संमतेति शेषः। बाधकस्यैकदेशविषयत्वकल्पना युक्तेत्यत्राभियुक्तसंमतिमाह **यथाऽऽहुरिति**। न्यायविदो





लाघवगौरवन्यायविदः । न चैवं बाधकस्य रजतमात्रविषयकत्वमस्तु लाघवस्यैवमप्यनुग्रहादिति वाच्यम् । रजतस्य सत्त्वे तत्तादात्म्यासत्त्वोपपत्तावपि रजतस्यैवासत्त्वे तत्तादात्म्यसत्त्वस्य कथमप्यनुपपत्त्या बाधकस्योभयविषयकत्वावश्यंभावेन गौरवापरिहारात् । संवादविसंवादसद्भावस्योक्तत्वाच्च । अत्रैव युक्त्यन्तरमप्याह **किञ्चेति** । रजतस्य सत्त्वे तद्धर्मभूतस्यासतोऽपि तादात्म्यस्य सदुपरक्ततया भानोपपत्तावपि धर्मिभूतरजतस्यैवासत्त्वे न कथमपि प्रतिभासोपपत्तिरिति भावः । ननु तर्हि यथाप्रतिभासं पुरोदेश एव रजतस्य सत्त्वापत्त्या बाधाद्यनुपपत्तिरित्यत आह **स्थिते चैवमिति** । नन्वेवं रजतज्ञानस्यापरोक्षत्वानुपपत्तिः । विप्रकृष्टेन सन्निकर्षासंभवेन रजतसन्निकर्षाजन्यत्वात् । न च शुक्तिसन्निकर्षजन्यतया तस्यापरोक्षत्वमिति वाच्यम् । तथा सति तज्ज्ञाने रजतप्रतिभासानुपपत्तेरित्यत आह **दोषेति** । भाष्यकारेण स्थलान्तरे स्फुटोदितम् ।

**वा०र०**— तत्रेत्यस्य शुक्ते रजतत्वेनावभासवादिष्वपीत्यर्थं मनसि कृत्वा केचिदारोप्यमाणं रजतं सदेवातिष्ठन्त इत्युक्ते तेष्वित्यनेन वक्ष्यमाणमतद्वयस्यापि समुपस्थिततत्वात् तेषु मध्ये सत्त्वपक्षस्यैव प्रथमतो निराकरणं कुतः इत्याशङ्केदेति तां परिहर्तुं समत्वपक्षात्सत्त्वपक्षस्य प्राथम्ये हेतुं वदन् प्रसङ्गाल्लाघवाय च सत्त्वमतद्वयेऽपि पूर्वानन्तर्ये हेतुं वदन्नवतारयति **तत्रेति** । सदसत्पक्षद्वयमध्य इत्यर्थः । **अधीनेति** । अभावस्य भावनिरूप्यत्वादिति भावः । सत्पक्षस्येत्यस्य प्रथमोपस्थिततया प्रथमं निरसनं युक्तमित्युत्तरेण संबन्धः । अनेनैवोभयविधसत्त्वपक्षनिरासानन्तर्यवक्ष्यमाणासत्त्वपक्षनिरासस्योपपादितं भवति । अत एवोत्तरत्र सत्पक्षनिरासानन्तरमित्येव तृतीयमतनिरासोपक्रमेऽवतारयिष्यति । एवमसत्त्वपक्षापेक्षया सत्त्वपक्षद्वयस्य प्रथमोपस्थितिमुपपाद्य सत्त्वपक्षद्वयेऽपि बहिःसत्त्वपक्षस्य प्रथमोपस्थितत्वे हेतुद्वयमाह **तत्रापीति** । **निरसनं युक्तमिति** । अन्तःसत्त्वपक्षापेक्षया बहिःसत्त्वपक्षस्य प्रथमोपस्थितत्वादित्यादिनैव बहिःसत्त्वनिराकरणानन्तरमन्तःसत्त्वनिराकरणं तदनन्तरं चासत्त्वपक्षनिराकरणमिति क्रमश्च सूचित इति ज्ञेयम् । **संमतवदिति** । देशान्तरस्थघटादिवदित्यर्थः । **सत्तथेति** । अनेन यथेत्यस्य सत्त्वेनेत्यर्थः सूचितः । शङ्कायां तत्परिहाराय विवक्षितं वक्तुमिष्टं यदनुमानं सत्त्वरूपविशेष्यसाधकं तत्रानुमान इति योज्यम् । **उपोद्घातेनेति** । अनेन तदनुमानानन्तरमेव तादात्म्यादौ व्यभिचारशङ्कायाः परिहर्तव्यतेति शङ्का निराकृता भवति । स्थिते चेत्यादिग्रन्थस्य बाधकान्तरपरिहारपरत्वेन योजनायां स्वारस्यमिति मत्वा यद्धीत्यादिग्रन्थोक्तानुमानमेव सत्त्वसाधकत्वेन प्रवर्तयन् बाधकान्तरानुवादपूर्वकं तन्निरासार्थत्वमुत्तरग्रन्थस्येति योजनीयमित्याह **यद्धेति** । अनेन रजतस्य सत्त्वं कुत इत्याशङ्कापरिहारकमनुमानं बहिरेव विवक्षितम् । तत्र व्यभिचारपरिहाराय यद्धीत्यादिग्रन्थ इति योजितं भवति । एवमुत्तरग्रन्थयोजनापि द्रष्टव्या । **तादात्म्यसंसर्गेति** । तादात्म्यं च संसर्गश्च तादात्म्यसंसर्गौ तयोरन्यतरविषयत्वेनेत्यर्थः । **तादात्म्यसंसर्गारोपेति** । तादात्म्यारोपः संसर्गारोपश्चेत्यारोपभेदानुसारेण द्विप्रकारतया प्राप्तं भ्रमविषयमित्यर्थः । **एवमिति** । भ्रमविषयेषु मध्ये तादात्म्यसंसर्गयोरेवापवादविषयत्वं रजतरजतत्वेदंकारास्पदानां तु न तदित्येवं वक्ष्यमाणतया बुद्धिस्था व्यवस्थेत्यर्थः । तां विषयव्यवस्थाम् । इदंकारास्पदस्य सत्त्वं सर्वसंमतत्वान्नोपपादनमर्हतीत्यत आह **इदंकारेति** । संवादस्याप्रतीतेस्तं





व्याचष्टे **बाधोत्तरमपीति** । यथा सत्यरजतस्थले इदं रजतमिति ज्ञानस्य पुरोवर्तिरजतप्राप्तिरूपः संवादोऽस्ति तथा अत्र प्रतीतस्य रजतस्य देशान्तरस्थतया तत्र रजते तद्देशान्तरे प्रवृत्तिरूपो विजातीयः संवादोऽस्तीत्यर्थः । विसंवादो नाम संवादाभावः । संवादश्च पुरोवर्तिदेशे वा देशान्तरे वा नोभयथापि तादात्म्यसंसर्गयोः सोऽस्तीत्याह **शुक्तिरजतेति** । **अवधारण इति** । यावदेवासंभवि तावदेव परिहीयतामिति योज्यम् । एतच्च यावदित्यवधारण-कात्स्न्यार्थमित्याद्यत्त्वनिर्वचनस्थलीयोक्तिव्याख्यावसरे प्रागेवोपपादितमस्माभिः । प्रकृतानुगुणतया कारिकास्थं न्यायविद इत्येतदनूद्य व्याचष्टे **न्यायविद इति** । लाघवमूलकन्यायबलेन रजतं विहाय तत्तादात्म्यमात्रविषयक-बाधकप्रत्ययस्येत्यङ्गीकारे लाघवस्यैवमपि संभवाद्रजतमात्रविषयकत्वं बाधकप्रत्ययस्येत्यङ्गीकृत्य तत्तादात्म्य-विषयकत्वं नेत्यपि स्वीक्रियतामित्याशङ्कते **न चैवमिति** । **रजतस्येति** । अयमर्थः । तादात्म्यमात्रासत्त्ववादिना मम मते युक्तं लाघवम् । तादात्म्यासत्त्वस्य रजतसत्त्वेऽप्युपपत्त्या तदसत्त्वार्थं रजतासत्त्वस्यानपेक्षणात् । रजतमात्रा-सत्त्वपक्षे तु न लाघवम् । रजतस्यैवासत्त्वे तत्तादात्म्यस्यासत्त्वानुपपत्त्योभयोरपि सत्त्वप्राप्त्या गौरवप्राप्तेरिति । **संवादेति** । रजतांशे देशान्तरीयतत्प्राप्तिरूपविजातीयसंवादसत्त्वेन तदंशे भ्रमत्वानुपपत्त्या विजातीयसंवादशून्य-तादात्म्यसंसर्गांश एव भ्रमत्वमित्युक्तत्वादित्यर्थः । **अत्रैवेति** । रजततादात्म्यमात्रस्यासत्त्व एवेत्यर्थः । प्रतिभासो नामासतः सदुपरक्ततया भानं विवक्षितम् । तच्चासतस्तादात्म्यस्य रजतरूपसदुपरक्ततया वाच्यम् । तच्च रजतस्य सत्त्वपक्ष एव संभवति । धर्मिणः । सत्त्वे सति धर्मस्यासतोऽपि कथञ्चिद्भानसंभवात् । धर्मिणस्त्वसतो भानमेव न संभवति । धर्मित्वादेवासदन्तराभावेन तदुपरक्ततया भानायोगाच्चेत्याशयमाह **रजतस्येति** । **स्थलान्तर इति** । असदेव रजतं प्रत्यभादित्यनुभवादिति तत्त्वनिर्णय इत्यर्थः ।

**स०व्र०— संवादसद्भावाच्चेति** । यद्यपि पुरोवर्तिसंसृष्टतया प्रतीते रजते न संवादस्तथापि रजतमिति प्रतीतिविषये रजतमात्रांशे संवादोऽस्ति । क्वचिद्रजतमिति सामान्याकारेण प्रतीत्यन्तरसंभवादिति भावः ।

**विठ्ठ०—** एतच्छङ्कासमाधानं चाख्यातिपक्षत्रयेऽपि समाधानमिति सूचयितुं अख्यातिमतत्रयनिरास-लब्धफलं दर्शयति **तत्रेति** । **एवं सिद्धे** अन्यथाख्यातिस्वरूप इत्यर्थः । **केचित्** प्राचीनास्तार्किकाः । प्रमाणाभावात्कथं सदित्यतो विमतं सत् सत्त्वेन प्रतीयमानत्वात् इति विवक्षितानुमाने तादात्म्यादौ व्यभिचारशङ्कानिरासायाह **यद्धीत्यादिना** । **संवादेति** । रजतप्रतीतिविषये रजतमात्रांशे देशान्तरे सामान्याकारतत्प्रतीतितत्प्राप्त्योः संभवेन संवादसद्भावादित्यर्थः । **संपरिहीयतां** सत्त्वेन त्यज्यतामित्यर्थः । **प्रतिभासो नोपपद्यत इति** । प्रतिभासते चात्र रजतं अतस्तत्प्रतीत्यन्यथानुपपत्त्याऽप्यन्यत्र सत्त्वमङ्गीकार्यमिति भावः । ननु यद्यथा भासते तत्तथैवेत्यङ्गीकारे पुरोदेश एव सत्त्वापात इत्यत आह **स्थिते चैवमिति** । यथावभासते तथैवेत्येव स्थितेऽपि बाधसमये पुरोदेशेऽनवभासात्तदविरोधाय देशान्तरे सत्त्वमास्थीयत इत्यर्थः । देशान्तरीयरजतेन चक्षुःसन्निकर्षायोगात् कथं तद्दर्शनमित्यत आह **दोषदूषितमिति** ।





**४०२ सु०— एतदप्ययुक्तम् ॥ सत्त्वेऽपि रजतस्य 'असदेव रजतं प्रत्यभात्' इत्यनुभवविरोधात् । अत्रासत्त्वेऽप्यन्यत्र सत्त्वमङ्गीक्रियत इति चेन्न । अत्र प्रतीतस्यैवान्यत्र सत्त्वे मानाभावात् ।**

**यादु०— अनुभवविरोधादिति** । तथा च सत्त्वसाधकानुमानार्थापत्त्योर्बाधितविषयत्वमिति भावः । **मानाभावादिति** । तथा च नासत्त्वप्रतीतेः सङ्कोचो युक्त इति भावः ।

**वं०प०—** अनुभवस्य सङ्कोचमाशङ्कते **अत्रेति** । पुरोदेश इत्यर्थः ।

**आनन्दः—** नाद्य इत्याह **सत्त्वेऽपीति** । **अत्रेति** । तथाचानुभवस्य पुरोवर्तिन्यसत्त्वविषयकत्वान्न विरोध इति भावः ।

**श्रीनिधि०— अत्रासत्त्व इत्यादि** । एवं चानुभवोऽत्रासत्त्वमात्रमादाय सावकाश इति भावः । सत्त्वेऽपीत्यतः पूर्वं भ्रान्तिकाले पुरोदेशे असत्त्व इति शेषः । अत एवाह । नह्यत्र सत्त्वमित्यादिसंस्कारसिद्ध्यर्थमित्यतःपूर्वं विशेषणज्ञानरूपरजतादिस्मृतिकारणीभूतेति शेषः । यथार्था रजतसत्त्वमिति एवं संस्कारकारणीभूतानुभवो यदा ज्ञायते तदैव यत्किञ्चित् रजतसत्त्वं सिद्ध्येदिति भावः । अत एवाह **अत्र प्रतीतस्यैवेति** ।

**वा०चं०—** अन्यथाविज्ञानमित्यत्रापि सूचितं दोषं रजतस्य सत्त्वाङ्गीकारे दर्शयति **सत्त्वेऽपीति** । अनुभवेऽन्यथासिद्धिमाशङ्कते **अत्रेति** । **मानाभावादिति** । न च पुरोदेशेऽसत्त्वे सति सत्त्वं तस्यान्यत्र सत्त्वे प्रमाणमुपन्यस्तमिति वाच्यम् । तत्रैव हेतुविशेष्यासिद्ध्यर्थमनुभवविरोधोपन्यासात् । तद्बलेनानुभवसङ्कोचे च सिद्धे विरोधाभावात्पुरोऽसत्त्वेनान्यत्र सत्त्वसिद्धिस्तत्सिद्धौ चैतत्सङ्कोचसिद्धिरिति परस्पराश्रयापत्त्याऽनुभवसङ्कोचाय प्रमाणान्तरमेव वक्तव्यम् । तच्च नोपपद्यत इति भावः । अत एव प्रमाणान्तरनिरासानन्तरमनुभवविरोधेन तदप्यतिदेशेन निरस्यतीति द्रष्टव्यम् ।

**वा०र०— अन्यथासिद्धिमिति** । अन्यथाघटनामित्यर्थः । **उपन्यस्तमिति** । तन्मतोपन्यासावसरे स्थिते चैवमित्यनेनेत्यर्थः । **विशेष्येति** । सत्त्वरूपेति योज्यम् । **अनुभवः** सदेव रजतमित्येवंरूपः । उक्तानुमानविरोधेन नानुभवसङ्कोचः पुरोदेशेऽसदिति स्वीक्रियतेऽतो न तद्विरोध इत्यत आह **तद्बलेनेति** । अनेनोक्तानुमानातिरिक्तप्रमाणाभावादिति मूलं व्याख्यातं भवति । उक्तानुमानस्यानुभवविरोधेन दूषणं मूलसंमतमित्याह **अत एवेति** । **प्रमाणान्तरं** भ्रान्त्यनुभवादिरूपम् । **तदपीति** । देशान्तरे सत्त्वसाधकमनुमानमपि विशेष्यासिध्यैतेन यद्यथावभासत इत्यादिना निरसिष्यतीत्यर्थः ।

**विठ्ठ०—** अनुभवानुसारेणात्रासत्त्वेऽपि अन्यत्र सत्त्वं स्यादिति शङ्कते **अत्रासत्त्वेऽपीति** ।





**४०३ सु०— तथा हि । भ्रान्त्यनुभवो वा तत्र प्रमाणम्, बाधानुभवो वा, भ्रान्त्यनुपपत्तिः, बाधानुपपत्तिर्वा ॥**

**नाद्यः तस्याप्रमाणत्वात्, अत्रैव सत्त्वावेदकत्वाच्च ॥**

**न द्वितीयः तस्येह रजतनिषेधात्मनोऽन्यत्र सत्त्वासत्त्वयोरौदासीन्यात् ॥**

**न तृतीयः । भ्रान्तेः पुरोवर्तीन्द्रियदोषादिभिर्विना अनुपपद्यमानायास्तन्मात्राक्षेपहेतुत्वात् । असत्त्वे कथं प्रतीतिरिति चेत्; सत्त्वेऽपि कथम् । न ह्यन्यत्र सत्त्वमत्र प्रतीतेरुपकारि । इन्द्रियसन्निकर्षार्थं वा तदास्थेयम्, संस्कारसिद्ध्यर्थं वा । नाद्यः । विप्रकृष्टेन सन्निकर्षाभावात्, पुरोवर्तिसन्निकर्षमात्रेणैव भ्रान्त्युत्पादाङ्गीकाराच्च । न द्वितीयः । संस्कारो हि रजतानुभवमाक्षिपेत्, अनुभवश्च यथार्थो रजतसत्ताम्, अत्र प्रतीतस्यैवान्यत्र सत्ता कुतः कल्प्या ॥ किञ्च घटान्तरं विनष्टोत्पत्स्यमानघटान्तरतया यदा प्रत्येति, तदा कथम् । न हि विनष्टोत्पत्स्यमानयोरन्यत्र सत्ताऽस्ति । कालान्तरेऽस्तीति चेत्सत्यम्; न तस्या भ्रान्तावुपयोगं साक्षात्पश्यामः । संस्कारादिना हि तदुपयोगः । स च रजतान्तरानुभवमात्रेण भविष्यतीति व्यर्था तस्यैवान्यत्र सत्त्वकल्पना । एतेन प्रवृत्त्यनुपपत्तिरपि परास्ता ॥ किञ्चासतः प्रतिभासासंभवे तादात्म्यमपि न प्रतिभासेत; तस्य कुत्राप्यभावात् । धर्मधर्मिभावस्तु वैधर्म्यमात्रम् ॥**

**बिन्दुः**— ननु रजतस्य धर्मिणोऽसतः प्रतीतिर्न संभवति तादात्म्यं त्वसदपि प्रत्येष्यते तस्य तद्धर्मत्वादित्यत आह **धर्मधर्मिभावस्तु वैधर्म्यमात्रमिति** । तथा चेदं वैषम्यमप्रयोजकं वैपरीत्यस्यापि सुवचत्वादिति भावः । अत्राहुर्नवीनाः । स्यादेतत् असतोऽपि भानापादनं यदि शुक्तौ भासमानं रजततादात्म्यं रजतत्वसंसर्गो वा असन्निति वदामः । न चैवम् । किन्तु तदपि रजते सदेव । न हि रजते तत्तादात्म्यं तत्संसर्गो वा नास्ति येनासत्त्वमापादनीयं स्यात् । न चैवमिदं रजतमिति ज्ञानस्य कथं भ्रमत्वं कथं वा पुरोवर्तिनि प्रवृत्तिजनकत्वमिति वाच्यम् । व्यधिकरणप्रकारकत्वेन भ्रमत्वात् । पुरोवर्तिविशेष्यकत्वेन च प्रवृत्त्युपपत्तेरिति । तदप्यनेनैव परास्तम् । न्यायसाम्यात् । तथाहि भ्रमप्रतीयमानप्रकारसंसर्गयोरन्यत्र सद्भावमातिष्ठन् प्रष्टव्यः किं अन्यत्र सत्त्वे साधकं प्रमाणमस्तीति तथात्वमास्थीयते किंवा अन्यत्र सत्त्वानभ्युपगमे बलवद्बाधकमस्तीति अथवा असत्त्वाभ्युपगमे साधकं नास्तीति आहोस्विदसत्त्वानभ्युपगमेऽपि बाधकं नास्तीति । तत्र न तावदाद्यः तदभावात् । तथाहि





भ्रान्त्यनुभवो वा तत्र प्रमाणं बाधानुभवो वा भ्रान्त्यनुपपत्तिर्वा बाधानुपपत्तिर्वा। नाद्यः तस्याप्रमात्वात्। अत्रैव सत्त्वावेदकत्वाच्च । न द्वितीयः । तस्येह रजतनिषेधात्मनोऽन्यत्र सत्त्वासत्त्वयोरौदासीन्यात् । न तृतीयः । भ्रान्तेः पुरोवर्तीन्द्रियदोषादिभिर्विनानुपपद्यमानायास्तन्मात्राक्षेपकत्वात् । नापि चतुर्थः । बाधस्यान्यत्र सत्तया विनाऽप्यनुपपत्त्यभावात् । एतेनैव अन्यत्र सत्त्वानभ्युपगमे बलवद्बाधकमस्तीति द्वितीयोऽपि परास्तः । भ्रमबाधानुपपत्तिरूपबाधकस्य परिहृतत्वात् । ननु कथमन्यत्र सत्त्वानभ्युपगमे तत्प्रतीतिः स्यात् । तत्प्रतीतिरिति कोऽर्थः । भ्रान्तिप्रतिपन्नस्यैव रजतस्यैव प्रतीतिरिति वा रजतस्य प्रतीतिरिति वा । नाद्यः । दोषादिनैव तदुपपत्तेः । विशिष्टज्ञानं विशेषणज्ञानाभावे कथमुदेत्विति चेत् । निर्विकल्पकमनभ्युपगच्छतां तादृशकार्यकारणभावस्यैवासंप्रतिपत्तेः। अगृहीतरजतस्यापि रजतभ्रमस्तथा सति स्यादिति चेत् । न । रजतभ्रमत्वावच्छिन्नं प्रति रजतज्ञानस्य वा तत्संस्कारस्यापि वा कारणत्वाभ्युपगमात् । ननु भिन्नविषयज्ञानाद्भिन्नविषयभ्रमाभ्युपगमे घटज्ञानेन पटभ्रमस्याप्यापत्त्या समानविषयकत्वमवश्यमभ्युपेयम् । तत्कथं सद्रजतज्ञानमसद्विषयं भ्रममुत्पादयेत् । तस्मात् भ्रान्ति-प्रतिपन्नमन्यत्र सदेवेत्यापन्नमिति चेन्न । क्षोदाक्षमत्वात् । तथाहि समानविषयज्ञानत्वेन विशिष्टज्ञानं प्रति कारणत्वाभ्युपगमे महानसीयवह्निज्ञानात् पर्वतीयवह्न्यनुमितिर्न स्यात् । सामान्यलक्षणायाश्चा-प्रामाणिकत्वात् अनुगतसामान्यस्य निरस्तत्वान्निरसिष्यमाणत्वाच्च समानप्रकारत्वादेरपि वक्तुमशक्य-त्वात्। किञ्चैवं सति प्रमेयवत् इति ज्ञानादपि वह्निमानित्याद्याकारकज्ञानस्य रजतादिभ्रमस्य वा उत्पत्तिः स्यात्। त्वद्रीत्या समानविषयत्वस्य समानप्रकारकत्वस्यापि संभवात् । न च सामान्यधर्माप्रकारकं वह्नित्वप्रकारकं ज्ञानं कारणमिति वाच्यम् । प्रमेयो वह्निरिति वा प्रमेयवह्निमानिति वा ज्ञाने सति विशिष्टज्ञानासंभवापातात् । वह्नित्वांशे सामान्यधर्माप्रकारकत्वविवक्षायां तु प्रमेयवह्नित्ववानिति-ज्ञानानन्तरं तदभावापत्तेः । मत्पक्षेऽपि तावता बाधकाभावेन भ्रान्तिप्रतिपन्नस्यान्यत्र सत्त्वानापत्तेश्च । तस्मात् त्वयापि विशिष्यैव ज्ञानव्यक्तीर्धृत्वा अनन्तकार्यकारणभावा अवश्यं वाच्याः । दण्डीति ज्ञानव्यक्तिं प्रति दण्डः इति विलक्षणप्रकारताशालिज्ञानं वह्निमानित्यादिज्ञाने वह्निरिति ज्ञानं तच्च भिन्नविषयप्रकारकं वा समानविषयप्रकारकं वेति विचारं विनैव कार्यकारणभावनिर्वाहात् । तथाच रजतमिति ज्ञानत्वावच्छिन्नं प्रति रजतमिति ज्ञानत्वेन कारणत्वेऽनवस्थाद्यापत्त्या तादृशभ्रमत्वमेव कार्यतावच्छेदकमित्यास्थेयम्। तच्चात्राप्यक्षतमेव। यत्तु कश्चित् तत्कोटिकसंशयविरोधिविशेषणज्ञानत्वेन तद्विशिष्टज्ञानत्वेन च कार्यकारणभावस्तथा च प्रमेयमिति ज्ञाने नातिप्रसङ्ग इत्याह । तत्तुच्छम् । संशयविरोधितापि केन रूपेणेति पर्यनुयोगे उक्तमार्गस्यैवानुसरणीयत्वात् । मत्पक्षसमभावाच्च । नापि तृतीयः। बाधप्रतीतेरेव साधकत्वात्। अत एव नान्त्योऽपीति दिक्।





**परि०— सत्त्वेऽपीति**। अन्यत्र सत्त्वेऽपीत्यर्थः। कुतो नोपकारीत्यतः प्रसक्तपक्षद्वयमाशङ्क्य उपकाराभावं व्यनक्ति **इन्द्रियेति** । **तदिति** । अन्यत्र सत्त्वमित्यर्थः । ननु भ्रान्तिहेतुसंस्कारः स्वजनकानुभवविषयमेवान्यत्रावभासयतीत्यतो नायं नियम इति भावेनाह **किञ्च घटान्तरमिति** । गेहे घटो मया निहितः तं त्वं गृहाणेति चैत्रेणोक्तो मैत्रः श्वो ग्रहीतास्मीत्यवदत् । तन्मध्ये स घटो नष्टोऽन्यस्तु तत्स्थाने केनचिन्निहितः। मैत्रश्च परेद्युस्तत्र गत्वा तमेव घटं चैत्रेणोक्तघटत्वेन भ्राम्यति चेत्तदा कथमित्यर्थः । एवमुत्पत्स्यमानघटे तथा भ्रान्तिरप्युपपाद्या । **एतेनेति** । अन्यत्र सत्त्वस्य पुरोवर्तिनि प्रतीतावनुपयोगकथनेनेत्यर्थः । तेनैव प्रवृत्त्यनुपयोगस्यापि सिद्धेरिति भावः । यद्वा भ्रान्त्यनुपपत्ति-निरासेनेत्यर्थः । ननु धर्मत्वात्तादात्म्यमसदपि भासितुमर्हति न तु रजतम् तस्य धर्मित्वादित्यत आह **धर्मधर्मिभावस्त्विति** । धर्मत्वं धर्मित्वमित्यर्थः ।

**गु०दी०— रजतसत्ताम्** इत्यत्र संस्कारजन्यभ्रमात्प्रागेव स्वगृहादावनुभूतरजतसत्तामित्यर्थः । ननु कथमन्यविषयसंस्कारस्यान्यभ्रमोपयोगित्वं तर्हि प्रत्यभिज्ञादावपीन्द्रियस्य स्वायोग्यतत्तामात्रग्रहणे सहकारी संस्कारः कथमत्र वस्तुभ्रममप्युपजनयेत् । दोषसहितेन्द्रियाद्वस्तुभ्रमश्चेन्न तर्हि साक्षात् संस्कारस्य वस्तुभ्रमे उपयोगः येन समानविषयता आशङ्क्येत । किन्तु अविदितरजतजातेर्बालस्य रजतभ्रमादर्शनात् क्वचिद्रजतानुभवो वक्तव्यः । अनुभूयमानरजतारोपेऽनुभवेनैव चरितार्थता न पुनः संस्कारापेक्षा । चिरनष्टानुभवस्य तु जातिस्मरणाय तदनुभवजन्यस्तद्विषयकश्च संस्कारोऽपेक्ष्यते । अतस्तस्य आरोप्यमाणविषयकत्वशङ्का अविचारितरमणीयैवेति द्रष्टव्यम् । वस्तुगत्या विनष्टे घटे तद्विनाशमजानानश्च तद्घटात्मकतया घटान्तरे भ्रमो जायते । श्वो घटं करिष्यामी-त्युक्त्वा विस्मृततत्करणस्य कुलालस्य शालायां प्राग्विद्यमान एव घटे करिष्यामीत्युक्तो घटोऽयमिति भ्रमो जायत इति भावेनोक्तं **किञ्चेति** ।

**यादु०—** अन्योन्याश्रयायुक्तपरिशेषस्योक्तबाधप्रतीतिसङ्कोचकत्वस्य वक्तुमशक्यत्वेन संभावितं तत्सङ्कोचकं प्रमाणान्तरं विकल्प्य दूषयति **भ्रान्त्यनुभवो वेत्यादिना** । दोषदूषितं चक्षुः शुक्तिकामात्रसन्निकृष्टमपि विप्रकृष्टरजतात्मना दर्शयतीति भ्रान्त्यनुभवस्यान्यत्रविद्यमानरजतविषयकत्वमुपपादितमस्तीति विकल्पकोटिता । बाधानुभवस्य त्वभावज्ञानरूपतया तत्र चान्यत्र सत एव प्रतियोगिन उपनीतस्य भानाङ्गीकारात्तत्कोटिता । **भ्रान्त्यनुपपत्तिर्वेति** । अत्र प्रतीतस्य रजतस्यान्यत्राप्यसत्त्वे प्रतीतेरसंभवेन संस्काराभावे भ्रमानुपपत्तिरित्यर्थः । **बाधानुपपत्तिर्वेति** । बाधानुभवस्यात्र सत्तानवगाहित्वेऽपि तदन्यथाऽनुपपत्त्याऽन्यत्र रजतस्य सत्त्वं सिध्यति । अत्र रजतं नास्तीति निषेधस्यान्यत्र सत्त्वं विनाऽनुपपत्तेः सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति तत्सिद्धान्तादिति भावः । ननु भ्रान्त्यनुभवस्य रजतसत्तांऽशे बाधाभावात्कथमप्रमात्वमित्यत आह **अत्रैवेति** । स्यादेतदेवं यदि रजतं सदित्येव भ्रमाकारः स्यान्न ह्येवं किं त्वत्रैव सदिति । न ह्ययमबाधितो नाप्यन्यत्र सत्तामवगाहते





येन तत्सिद्धिर्भ्रान्त्यनुभवो न स्यात् । तथाच दोषदूषितं चक्षुरित्यादित्वदीयमुपपादनमप्रामाणिकमिति भावः । **अत्र प्रतीतस्यैवेति** । न चात्र प्रतीतस्यान्यत्रासत्त्वे विशेषणज्ञानासंभवात्कथं तद्विशिष्टज्ञानमिति वाच्यम् । प्रमेयत्वेन दण्डज्ञाने तद्विशिष्टप्रत्ययादर्शनिन विशेषणतावच्छेदकप्रकारेण विशेषणज्ञानं हेतुरिति वक्तव्यम् । न च तत्संभवति गौरवात् । लाघवेन विशेषणतावच्छेदकप्रकारकज्ञानस्यैव विशिष्टज्ञानहेतुत्वात् । तदिहाप्यस्ति । यत्किञ्चिद्रजते रजतत्वप्रकारकज्ञानस्य संभवादित्याशयात् । अत्र प्रतीतस्यैवान्यत्र सत्ता कुतः कल्प्येत्यत उक्तम् **एतद्रजतस्येति** । अन्यत्राप्यसत्त्वे तदनुभवासंभवेन संस्कारस्याप्यसंभवादित्यत आह **स च रजतान्तरेति** । ततश्चानुभवस्य समानप्रकारकतयैव संस्कारजनकत्वं न तु समानविशेष्यकत्वेनापि गौरवादिति भावः । **एतेनेति** । असतः प्रवृत्त्ययोग्यत्वेनात्र प्रतीतस्यान्यत्राप्यसत्त्वे प्रवृत्तेरनुपपत्तेरित्येतदपि 'न ह्यन्यत्र सत्त्वस्य साक्षात्प्रवृत्तावुपयोगं पश्यामः । संस्कारादिना हि तदुपयोग' इत्युक्तरीत्या परास्तमित्यर्थः । असत्त्वे कथं प्रतीतिरित्यत्रैव दूषणान्तरमाह **किञ्चासतः प्रतिभासासंभव इति** । नन्वसतो धर्मिण एव प्रतीतिस्तादात्म्यस्य तु धर्मत्वादसतोऽपि प्रतीतिः किं न स्यादित्यत आह **धर्मधर्मिभावस्त्विति** । वैधर्म्यमात्रमेतन्नोक्ताप्रतीतिप्रतीत्योरुपपादकमप्रयोजकत्वादिति भावः ।

**वं०प०— अप्रमाणत्वादिति** । तथाच भ्रान्त्यनुभवः प्रमाणमिति व्याहतमिति भावः । रजतस्य सत्त्वमङ्गीकृत्याप्याह **अत्रेवेति** । इदं रजतमिति भ्रान्त्यनुभवेन पुरोदेश एव रजतस्य सत्त्वमावेद्यते नान्यत्रेति भ्रान्त्यनुभवो रजतस्यान्यत्र सत्त्वे न मानमित्यर्थः । **तन्मात्रेति** । पुरोवर्तीन्द्रियदोषादिमात्रेत्यर्थः । तथाच नान्यत्र रजतसत्ताक्षेपकत्वमिति भावः । **कथमिति** । रजतस्यासत्यत्वे तद्विषयिणी भ्रमरूपा प्रतीतिरेव नोपपद्यते । असतः प्रतीत्यभावादतस्तदन्यथाऽनुपपत्त्याऽन्यत्र सत्त्वमङ्गीकर्तव्यमित्यर्थः । तत् अन्यत्र सत्त्वम् । ननु भवत्पक्षेऽपि कथं भ्रमरूपज्ञानोत्पत्तिः संभवति । असता रजतेन सन्निकर्षायोगादिति साम्यमेवेत्यत आह **पुरोवर्तीति** । तथाच रजतेन सन्निकर्षो नापेक्षित इति भावः । **यथार्थो** यथार्थश्चेत् । **घटान्तरं** वर्तमानम् । **विनष्टोत्पत्स्यमानयोः** आरोप्यभूतयोः । **तस्य** कालान्तरे सत्त्वस्य । तदुपपादयति **संस्कारादिना हीति** । **वैधर्म्यमात्रमिति** । वैलक्षण्यमात्रमेवेदं धर्मित्वं प्रतीत्युपपादकं न भवत्यप्रयोजकत्वादेवमेव धर्मत्वमपि न प्रतीत्युपपादकमित्याशयः । **तस्य** रजतसत्त्वस्य । **अत्रैव** पुरोदेश एव । **उपपत्ते** रजतसत्तानिषेधस्योपपत्तेरित्यर्थः ।

**आनन्दः**— नन्वनुभवादेरेव मानत्वसंभवान्मानाभावोऽसिद्ध इत्यत आह **तथा हीति** । भ्रान्त्यनुभवः भ्रान्तिरूपोऽनुभवः । **बाधानुभवः** बाधरूपोऽनुभवः । **दोषादिभिः** इत्यत्र आदिशब्देन रूप्यसंस्कारपरिग्रहः । द्वितीयं शङ्कते **असत्त्व इति** । नन्वन्यत्र सत्त्वादेवं प्रतीतिरित्यत आह **न हीति** । **अत्र प्रतीतस्यैवेति** । ननु रजतान्तरसंस्कारो वा कारणं आरोप्यसंस्कारो वा । नाद्यः । अन्यसंस्कारस्यान्यत्रोपयोगे घटसंस्कारेणापि पटभ्रमापत्तेः । न द्वितीयः । तदनुभवस्यैवाभावेन तत्संस्कारायोगादिति चेन्न । आरोप्यतावच्छेदकावच्छिन्नसंस्कारस्यैव कारणत्वं न त्वारोप्यतावच्छेदकावच्छिन्नारोप्यमाणसंस्कारस्य कारणत्वं गौरवादिति न कश्चिद्दोषः । किञ्चारोप्यमाणस्यान्यत्र सत्त्वमारोप्यकाले वा कालान्तरे वा नाद्य इत्याह **घटान्तरमिति** । द्वितीयं दूषयति **कालान्तर इति** । प्रतीयमान-





रजतस्यासत्त्वे प्रवृत्तिरेव न स्यादित्यत आह **एतेनेति** । इष्टसाधनताज्ञाने साध्ये साध्यप्रयत्नसाध्यत्वात्प्रवृत्तेः इष्टसाधनताज्ञानस्य च प्रकृते सत्त्वेन प्रवृत्तिः स्यादित्यतो नेत्यर्थः । ननु रजतस्यासत्त्वे प्रतिभासानुपपत्त्यसत्त्वविषयप्रत्ययोऽन्यथा योजनीय इत्यत आह **किञ्चेति** । ननु तादात्म्यस्य धर्मत्वाद्रजतस्य च धर्मित्वादसतस्तादात्म्यस्य भानसंभवेऽपि असतो धर्मिणो न भानमित्यत आह **धर्मधर्मीति** । कारणाभावादिति भावः ।

**कं०रा०— कालान्तर इति** । विनष्टोत्पत्स्यमानघटान्तरयोरपि कालान्तरे सत्ताऽस्ति । अतोऽत्र प्रतीयमानरजतस्यान्यत्र सत्ता कल्प्यत इति शङ्कितुरभिप्रायः । विनष्टोत्पत्स्यमानयोः कालान्तरे सत्ताऽस्तीत्येतदङ्गीक्रियते । अत्र प्रतीतरजतस्यान्यत्र सत्ता कल्प्यत इति तु नाङ्गीक्रियते इत्याशयेन परिहरति **सत्यमिति** । अत्र प्रतीयमानरजतस्यान्यत्र सत्ताकल्पनं कुतो नाङ्गीक्रियत इत्याशङ्क्यान्यत्र सत्तायाः साक्षात्परम्परया वा भ्रान्तावुपयोगाभावादित्याह **न तस्या इत्यादिना** । **एतेनेति** । अत्र प्रतीतरजतस्यान्यत्र सत्तायाः प्रवृत्तावनुपयोगितया तां विना प्रवृत्त्यनुपपत्त्यभावेन प्रवृत्त्यनुपपत्तिस्तत्र मानमित्यपि परास्तमित्यर्थः । **तादात्म्यमिति** । शुक्तिरजततादात्म्यमित्यर्थः । असतोऽपि तादात्म्यस्य प्रतिभासः संभवति । धर्मत्वात् । रजतस्य तु स न संभवति । धर्मित्वादित्यत आह **धर्मेति** । मात्रशब्देन धर्मधर्मिभावस्य प्रतिभासाप्रतिभासप्रयोजकत्वं व्यावर्त्यते ।

**श्रीनिधि०—** अन्यत्र सत्त्वं च किं भ्रमकाले उत यदाकदाचिदिति विकल्प्याद्य आह **किञ्चेति** । द्वितीयमाशङ्क्य निषेधति **कालान्तर इत्यादिना** । **संस्कारादिनेति** । आदिपदेन स्मृतिरूपं विशेषणज्ञानं गृह्यते । **एतेनेति** । अन्यत्र सत्त्वस्य इदानीं प्रवृत्तावनुपयोगित्वेनेत्यर्थः । ननु धर्मत्वात्तादात्म्यसंसर्गयोरसतोरपि प्रतीतिर्युज्यते न तु रूप्यस्य धर्मित्वादित्यत आह **धर्मधर्मीति** । **वैधर्म्यमात्रं** वैलक्षण्यमात्रम् । न नियामकमिति भावः ।

**वा०चं०—** ननु कथं मानाभाव इत्यतः प्रकृते संभावितप्रमाणानि निराकर्तुं विकल्पयति **तथा हीति** । प्रत्यक्षमर्थापत्तिर्वा मानं तदुभयमपि द्विरूपमिति पक्षचतुष्टयोक्तिरिति ध्येयम् । भ्रान्तेरप्रमाणत्वेनोपन्यासानर्हत्वमुक्तम् । अङ्गीकृत्यापि भ्रान्तिप्रमाणत्वमन्यत्र सत्त्वाविषयकत्वात्तत्र तदुपन्यासानौचित्यमाह **अत्रैवेति** । अन्यत्र सत्त्वाद्यौदासीन्यमुपपादयितुं बाधविषयप्रदर्शनम् **इह रजतेति** । यद्धि प्रमितं स्वयमनुपपद्यमानं स्वोपपादनाय यदपेक्षते तत्तदाक्षिपतीति व्याप्तेर्भ्रान्तेश्च स्वकारणेन विनाऽनुपपद्यमानायास्तदाक्षेपकत्वेऽपि न देशान्तरे रजतादिसत्त्वाक्षेपकत्वमित्याह **भ्रान्तेरिति** । आदिपदेनेन्द्रियसन्निकर्षसंस्कारादिपरिग्रहः । पुरोवर्त्यादिवद्रजतादिसत्त्वस्यापि प्रतीतिप्रयोजकतया तदभावेन भ्रान्तिरित्याशङ्कते **असत्त्व इति** । **सत्त्वे कथमिति** । प्रतीतिरित्यनुवर्तते । सत्त्वस्य प्रतीत्युपयोगो न तावत्साक्षात्तददर्शनादपि तु सन्निकर्षादिसिद्धिद्वारा परम्परयैव । एवं च पुरोदेशसत्तायाः सन्निकर्षप्रयोजकत्वेन यस्यकस्यचिद्रजतस्य सत्तायाः संस्कारप्रयोजकत्वेन तत्र तत्प्रतीत्युपयोगेऽपि नान्यत्र तत्सत्तायाः पुरोदेशतत्प्रतीत्युपयोग इत्याह **न हीति** । एतदेव विशदयति **इन्द्रियेति** । नन्वेवं तत्प्रतीतेरपरोक्षत्वानुपपत्तिरित्यत आह **पुरोवर्तीति** । मात्रपदेन रजतसन्निकर्षमात्रं व्यावर्त्यते । न तु दोषसंस्कारादिकम् ।





**संस्कारो हीति** । रजतत्वप्रकारकसंस्कार एव हि भ्रान्तिहेतुः । स च रजतत्वप्रकारकानुभवेन विनाऽनुपपद्यमानस्तमेवाक्षिपति । रजतत्वप्रकारकानुभवोऽपि यथार्थ एव स्वविषयरजतसत्ताक्षेपकोऽयथार्थस्यैतद्वदेव स्वविषयसत्तानाक्षेपकत्वात् । एवं च यत्किञ्चिद्रजतानुभवजन्यसंस्कारमात्रेण जायमानाया भ्रान्तेर्नैतत्प्रतीतरजतस्यान्यत्र सत्ताक्षेपकत्वम् । न चैतत्प्रतीतरजतानुभवजन्यसंस्कारजन्यत्वात् भ्रान्तेस्तस्या अभ्रान्तिपूर्वकत्वाच्च भ्रान्तिमूलानुभवस्य याथार्थ्यात्तदनुभवविषयस्यान्यत्र सत्त्वे अवश्यं कल्पनीयेऽत्र प्रतीतस्य देशान्तरे सत्त्वं सिद्धमेवेति वाच्यम् । यत्किञ्चिद्रजतानुभवजन्यसंस्कारेणैव भ्रान्तिसंभवेनैतद्रजतानुभवजन्यसंस्कारस्यैव भ्रान्तिहेतुत्वे कल्पकाभावेन गौरवापत्त्याऽनुभवविरोधाच्च नैव तत्कल्पना युक्ता । न च विशिष्टज्ञानस्य विशेषणतावच्छेदकप्रकारकविशेषणज्ञानसाध्यतानियम एव तत्कल्पक इति वाच्यम् । लाघवेन विशेषणतावच्छेदकप्रकारकज्ञानस्यैव तत्र कारणत्वेन त्वदुक्तनियमस्यैवासिद्धेरिति भावः । अन्यत्र सत्ताया भान्त्युपयोगं वदतोऽपि भ्रान्तिसमानकालीनदेशान्तरसत्ता तदुपयोगिनीत्यभिमतमुत यदा कदाचित् । नाद्यः । घटान्तरं विनष्टोत्पत्स्यमानघटान्तरात्मतया यदा प्रत्येति तत्रारोपकाले आरोप्यस्यान्यत्र सत्ताया अभावाद्व्यभिचारः । यदाकदाचिदिति द्वितीयेऽपि यदाकदाचित्सत्तायाः साक्षाद् भ्रान्त्युपयोगादर्शनात्तज्ज्ञानजन्यसंस्कारतज्जन्यस्मरणादिद्वारेणैव उपयोग इत्यकामेनापि स्वीकर्तव्यम् । तस्य च संस्कारादे रजतारोपस्थले उक्तरीत्याऽन्यथासिद्धौ व्यर्था रजतस्यान्यत्र सत्ताकल्पनेत्याह **किञ्चेति** । ननु रजतार्थिप्रवृत्ते रजतज्ञानसाध्यत्वाद्रजतस्यात्यन्तासत्त्वे तज्ज्ञानासंभवेन तत्साध्यप्रवृत्त्यनुपपत्तिरिति दूषणं च प्रतीतेर्यत्किञ्चिद्रजतानुभवजन्यसंस्कारमात्रेणोपपन्नाया देशान्तरेऽपि तत्सत्तानपेक्षत्वेनात्यन्तासत्त्वेऽप्युपपत्तेस्तत्साध्यप्रवृत्तेरपि नानुपपत्तिरित्युक्तन्यायेनैव परिहृतमवगन्तव्यमित्याह **एतेनेति** । यद्वा इष्टाभेदज्ञानस्यैव प्रवर्तकत्वाद्रजतस्यात्यन्तासतोऽनिष्टत्वात् कारणाभावेन प्रवृत्त्यनुपपत्तिदूषणं च इष्टतावच्छेदकप्रकारकाभेदज्ञानस्य प्रवर्तकत्वात्तस्य चोक्तरीत्या रजतत्वप्रकारकानुभवजन्यसंस्कारमात्रेण संभवान्न प्रवृत्त्यनुपपत्तिरिति समाहितमवगन्तव्यमित्याह **एतेनेति** । रजतस्यासत्त्वेऽपि तत्प्रतीतिं तादात्म्यप्रतिबन्धाऽपि घटयति **किञ्चेति** । ननूक्तमत्र रजतस्य सत्त्वे सदुपरक्ततादात्म्यरूपतद्धर्मस्य प्रतिभानसंभवेऽपि न धर्मीभूतरजतस्यासतः प्रतिभानसंभव इति तत्राह **धर्मेति** । पुरोवर्तीन्द्रियसन्निकर्षदोषारोप्यसंस्कारादिसामग्रीसद्भावे धर्मिणोऽप्यसतः प्रतिभासेऽनुपपत्तेरभावात् सामग्र्यभावे च धर्मस्याप्यसतः प्रतिभासानुपपत्तेर्धर्मधर्मिभावसदुपरक्तत्वोपन्यासस्य व्यर्थत्वादिति भावः ।

**वा०र०— प्रत्यक्षमर्थापत्तिर्वेति** । अनेन प्रत्यक्षार्थापत्तिरूपप्रमाणविकल्पानन्तरं प्रत्यक्षमपि भ्रान्त्यनुभवो वा बाधानुभवो वा । अर्थापत्तिरपि भ्रान्त्यनुपपत्तिर्वा बाधानुपपत्तिर्वेति विकल्पनीयमिति सूचयति । मूले भ्रान्तिरूपोऽनुभवः बाधरूपोऽनुभव इति योज्यम् । भ्रान्तेरप्रमाणत्वेनेति टीकयापीदमेव सूचितम् । **अङ्गीकृत्येति** । अनेन पूर्वोत्तरवाक्यविरोधः परिहृतः । **तत्र** अन्यत्र सत्त्वे । अनौचित्यमित्यनेन मूलगतपञ्चमीद्वयफलं दर्शितम् । **बाधविषयेति** । अनेन कुतस्तस्य तदौदासीन्यमित्यत उक्तमिहेत्यादीति हेतुगर्भविशेषणमित्युक्तं भवति । भ्रान्तिरिति मूलोक्ते नियामिकां व्याप्तिं बन्धमिथ्यात्वं नैवेत्येतदनुव्याख्यानमूलोक्तं दर्शयन्नपेक्षितं च पूरयन्नवतारयति **यद्वीति** । कथं प्रतीतिरित्यत्रत्यकथमित्येतदाक्षेपार्थतया व्याकुर्वंस्तत्प्रकारं च दर्शयन्नवतारयति





**पुरोवर्तीति**। प्रयोजकत्वेनेत्याद्यस्य तत्र तत्प्रतीत्युपयोगेऽपीति संबन्धः। तत्र पुरोदेशे रजतप्रतीत्युपयोगेऽपीत्यर्थः। पुरोदेशे प्रतीतिर्नाम पुरोदेशे रजतप्रतीतिः। **नन्विति**। तेनेन्द्रियदोषादिभिरिति पूर्वग्रन्थविरोधेनेति भावः। **एतद्वदेवेति**। भ्रान्तित्वेन सम्मतानुभववदेवेत्यर्थः। अस्तु तर्हि संस्कारो हीत्येतत्प्रमादिकयैवैतद्रजतस्य सत्तासिद्धिरिति शङ्कते **न चेति**। अनुभवयाथार्थ्योपपादनं तस्या इत्यादि। भ्रान्तेर्भ्रान्तिपूर्वकत्वे तया आक्षिप्यानुभवस्यायथार्थत्वापत्त्या रजतसत्ताक्षेपकत्वायोगेऽपि उपेक्षाभिन्नयथार्थानुभवस्यैव संस्कारद्वारा भ्रमोपयोगेन तस्याः भ्रान्तिपूर्वकत्वाभावेन तन्मूलभूतानुभवस्य यथार्थत्वादित्यर्थः। **एतद्रजतेति**। अत्र प्रतीतरजतेत्यर्थः। उक्तहेतुत्वे कल्पकाभावादिहेतुत्रयम्। अन्यत्र रजतसत्तासाधकं ......................अत्रोक्तं प्रकारान्तरमाशङ्कते **न चेति**। विशेषणज्ञानकारणत्वे तु विशेषणस्य स्थलान्तरे सत्त्वं प्राप्तमेव। रजततादात्म्यारोपे रजतं विशेषणम्। तद्विशेषणतावच्छेदकप्रकारकज्ञानं वा मात्रविशेषणीभूतरजतस्य सप्रकारकं ज्ञानं यत्किञ्चिद्रजतस्य तु न विशेषणता। तथा च तस्याङ्गीकारे कथं न तत्प्राप्तिरिति भावः। अविशेषणस्यापि विशेषणतावच्छेदक-प्रकारकज्ञानमात्रादेव विशिष्टज्ञानोपपत्तौ तत्प्रमात्वोपयोगिविशेषणज्ञानत्वस्यापि विवक्षणे गौरवमिति त्वदुक्त-नियमाभाव एवेत्याह **लाघवेनेति**। **घटान्तरमिति**। विनष्टश्च उत्पत्स्यमानश्च यो घटस्तदात्मकतया घटान्तरशब्दोक्तम्। विद्यमानं घटं प्रत्येतीत्यर्थः। **उक्तरीत्येति**। यत्किञ्चिद्रजतानुभवेनापि तस्य संभवादित्युक्त-रीत्येत्यर्थः। स रजतान्तरेति मूलार्थकथनमेतत्। **प्रवृत्त्यनुपपत्तिरपीति** मूले भ्रान्तिबाधानुपपत्तिवत्प्रवृत्त्यनुप-पत्तिरपि प्रतीयमानरजतस्यान्यत्र सत्त्वे प्रमाणत्वेनाशङ्केतेति प्रतीयतेति चायुक्तमित्यतो दूषणमिति पूरयं-स्तन्निषेधोपयोगितया तद्व्यावर्त्यशङ्कारूपं प्रसञ्जकं च कथयन् व्याख्याति **ननु रजतार्थीत्यादिना**। रजतज्ञान-मात्रस्य न तत्त्वेन प्रवर्तकत्वं किन्तूपस्थितेष्टाभेदज्ञानत्वेनैवेति विशेषविवक्षयाऽपि प्रवृत्त्यनुपपत्तिशङ्कामुत्थाप्य तन्निरासकतयोक्तमूलमेवावतारयति **यद्वेति**। दूषणमित्येतत्पूरणस्य पूर्वमुक्तमेव निमित्तम्। **प्रतिबन्द्यापीति**। अनेनाभावादित्यनन्तरं यदि च प्रतिभासते तादात्म्यमित्यङ्गीकारः तर्हि तथैवासतो रजतस्य प्रतिभासोऽप्यङ्गीकार्य इत्युपस्करणीयमिति सूचितं भवति। **तद्धर्मस्येति**। धर्मस्यासतोऽपि भानं धर्मिणः सत्त्वे सदुपरक्ततया संभवति। धर्मिणस्तु धर्मित्वात्सदन्तराभावेन तदुपरक्ततया भानासंभवाच्चेत्याशयः। सत्यां सामग्र्यां धर्मवद्धर्मिणोऽपि प्रतिभासो युक्त एव। सामग्र्यभावे तु धर्मस्यापि तदयोगः। एवं च धर्मधर्मित्वोक्तिः सदुपरक्तत्वोक्तिश्च वैधर्म्य-मात्रमिति वृथा तदुपन्यास इत्याह **पुरोवर्तीति**।

**स०व्र०— भ्रान्त्यनुभवो वेति**। भ्रान्त्यनुभवस्य रजतमात्रावगाहित्वादन्यत्र सत्त्वविषयकत्वं संभावितमिति विकल्पकोटिता। बाधानुभवस्य तु अत्र रजतनिषेधात्मनोऽन्यत्र सत्त्वावगाहित्वं संभावितमिति तत्कोटिता। **भ्रान्त्यनुपपत्तिर्वेति**। रजतस्यान्यत्राप्यसत्त्वे प्रतीतेरसंभवेन संस्काराभावेन संस्काराभावे भ्रमानुप-पत्तिरित्यर्थः। यद्वा रजतस्यासत्त्वे असतोऽप्रतीत्या भ्रान्तिरूपप्रतीतिरपि नोपपद्यत इत्यर्थः। बाधानुभवस्य अन्यत्र सत्तानवगाहित्वेऽपि तदन्यथाऽनुपपत्त्या रजतस्यान्यत्र सत्त्वं सिद्ध्यति। अत्र रजतं नास्ति इति निषेधस्य अन्यत्र सत्त्वं विनाऽनुपपत्तेः। सद्व्यामभावो निरूप्यत इति तत्सिद्धान्तादिति भावः। अथवा तद्विषयकस्यैव तत्र

प्रामाण्याद्रजतस्यान्यत्र सत्त्वेऽपि रजतविषयकमेव प्रमाणं वाच्यम् । रजतविषयत्वं च भ्रान्तेर्बाधस्य वेत्यादि संभावितप्रमाणानि विकल्प्य दूषयति **तथा हीति** । प्रत्यक्षमर्थापत्तिर्वेत्यर्थः । नन्विदं रजतमिति ज्ञानस्य विशिष्टज्ञानत्वाद्विशिष्टज्ञानस्य च विशेषणज्ञानजन्यत्वादेतद्रजतरूपविशेषणज्ञानत्वेन रजतस्मरणस्य रजतारोपं प्रति हेतुत्वादेतद्रजतस्मरणस्य चैतद्रजतसंस्कारसाध्यत्वात्तस्य च तदनुभवसाध्यत्वात्तस्य च तदिन्द्रिय-सन्निकर्षसाध्यत्वात्तस्य च विषयासत्त्वे असंभवात्तदन्यथाऽनुपपत्त्याऽन्यत्र सत्त्वमिति द्वितीयोऽस्त्विति चेत्तत्राह **न द्वितीयः संस्कारो हीति** । विशेषणज्ञानमात्रस्य कारणत्वे प्रमेयमिति ज्ञानादपि विशिष्टप्रत्ययापत्त्या विशेषणतावच्छेदकप्रकारकविशेषणज्ञानस्यैव कारणत्वं वाच्यम् । तथा च लाघवाद्विशेषणतावच्छेदक-प्रकारकज्ञानमात्रस्यैव तद्धेतुत्वम् । न तु तत्प्रकारकविशेषणज्ञानस्य गौरवात् । अतिप्रसङ्गपरिहारस्यैतावन्मात्रेण संभवात् । तथा च रजतारोपार्थं रजतत्त्वप्रकारकज्ञानस्यैव हेतुत्वेनापेक्षितत्वेन तद्रजतस्मरणस्यानपेक्षितत्वात् तत्प्रकारकस्मरणस्य च रजतान्तरानुभवजन्यसंस्कारेणापि संभवान्नान्यत्र सत्त्वसिद्धिरिति भावः । देशान्तरे सत्त्वं प्रदूष्य कालान्तरेऽपि तद् दूषयति **किं चेति** । **एतेनेति** । रजतसत्ताया रजतारोपं प्रति संस्कारद्वारोपयोगेन साक्षादुपयोगाभावोपपादनेन प्रतीतिद्वारकप्रवृत्तौ सत्तायाः साक्षादनुपयोगादसत्त्वेऽपि प्रवृत्तिरित्यर्थः । ननु धर्मिणोऽसत्त्वे प्रतीतिर्नोपपद्यते । तादात्म्यस्य तु धर्मत्वादसतोऽपि प्रतीतिः संभवतीत्यत आह **धर्मधर्मि-भावस्त्विति** । वैलक्षण्यमात्रमेतन्न प्रयोजकम् । अपरं तु विनिगमकं न किमप्यस्तीत्यर्थः ।

**विठ्ठ०**— भवत्वन्यत्र यस्य कस्यचिद्रजतस्य सत्त्वं अत्र प्रतीतं त्वसदेव अस्यैवान्यत्र सत्त्वे मानाभावात् इति समाधत्ते **भ्रान्त्यनुभवो वेति** । भ्रान्त्यनुभवस्य रजतसत्तावगाहित्वात् पुरोदेशे सत्त्वानुपपत्तेरन्यत्र सत्त्वविषयकत्वं संभावितमिति विकल्पकोटिता । **बाधानुभव इति** । इह रजतं नेत्यनुभवस्यान्यत्रास्तीत्यनुभवाविनाभूतत्वादिति भावः । **भ्रान्त्यनुपपत्तिर्वेति** । रजतस्यासत्त्वे प्रतीत्यसंभवेन भ्रान्तिप्रतिभासानुपपत्तेरिति भावः । **बाधानुपपत्तिर्वेति** । इदं रजतं नेति प्रतिषेधस्य प्रतियोगिनिरूप्यत्वेन प्रतियोगिनो रजतस्यान्यत्र सत्त्वं लब्धमेव । सद्भ्यामधिकरण-प्रतियोगिभ्यां अभावो निरूप्यत इति तत्सिद्धान्तादिति भावः । **अप्रमाणत्वादिति** । न ह्यप्रमयार्थव्यवस्थोपपद्यते इति भावः । व्यवस्थापकत्वाङ्गीकारेऽत्रैव रजतसत्त्वं स्यादित्याह **अत्रैवेति** । **भ्रान्तेरिति** । भ्रान्तिर्यावता विना नोपपद्यते तावन्मात्रमाक्षिपति । सा च पुरोवर्तीन्द्रियार्थदोषादिकं विना नोपपद्यत इति **तन्मात्रमाक्षिपेदिति** । न तु रजतस्य देशान्तरे सत्त्वमिति भावः । रजतस्यासत्त्वे प्रतीत्यनुपपत्तेः । पुरोदेशे सत्त्वायोगाद्देशान्तरे सत्त्वमाक्षिपतीति शङ्कते **असत्त्वे इति** । देशान्तरे सत्त्वेऽपि अत्रासतः कथमत्र प्रतीतिः । अतो सतोऽपि प्रतीतिरङ्गीकार्येति भावेन परिहरति **सत्त्वेऽपीति** । भवत्येव यत्र कुत्रचित्सत्त्वं प्रतीतेरुपकारीत्यतो विकल्पं दूषयति **इन्द्रियसन्निकर्षेति** । तदित्यन्यत्र सत्त्वमित्यर्थः । ननु विप्रकृष्टरजतेन सन्निकर्षासंभवे रजतापरोक्षप्रतीतिविरोधः । असन्निकृष्टस्य चक्षुषो प्रतीत्य-जनकत्वादित्यतः पुरोवृत्तिशुक्तिसन्निकर्षेण दोषवशाद्रजतप्रतीतिरुपपद्यत इत्याह **पुरोवर्तीति** । **न द्वितीय इति** । रजतसंस्कारदोषसचिवं चक्षुरिन्द्रियं शुक्तिशकलसन्निकृष्टं रजतप्रतीतिं जनयति । स च संस्कारः रजतानुभवेन विना नोपपद्यत इति तदनुभवसिद्ध्ये रजतस्यान्यत्र सत्त्वमास्थेयमिति द्वितीयः पक्षो नेत्यर्थः । संस्कारजनकानुभवस्य





यथार्थत्वेनार्थसत्तासापेक्षत्वेऽपि शुक्त्यात्मना प्रतीतरजतस्यैवान्यत्र सत्त्वं कुतोऽङ्गीकार्यम् । यत्किञ्चिद्रजतानुभवेनापि संस्कारोपपत्तेरिति भावः । रजतसत्तामित्यस्य यस्य कस्यचिद्रजतस्य यत्रकुत्रचित्सत्तामित्यर्थः । अनुपपन्नं च प्रतीतस्यान्यत्र सत्तानैयत्यं एकस्य घटस्य विनष्टोत्पत्स्यमानघटात्मतया भ्रमविषयस्य विनष्टादिघटस्यान्यत्र सत्तानुपपत्तेरित्याह **किञ्चेति** । प्रतीतस्य न देशान्तरे सत्त्वनियमः क्वचित्कालान्तरे सत्त्वाङ्गीकारादिति शङ्कते **कालान्तर इति** । कालान्तरसत्त्वस्य सन्निकर्षाघटकत्वात् **साक्षात्** इत्युक्तम् । **संस्कारादिना** इत्यादिशब्देन सादृश्यनिरूपकत्वग्रहणम् । ननु रजतार्थिप्रवृत्तेः रजतसत्त्वप्रतीतिसाध्यत्वाद्रजते सत्त्वाभावे तत्प्रतीत्यनुदयात् रजतार्थिनस्तत्र प्रवृत्त्यनुपपत्तिरित्यत आह **एतेनेति** । यत्र कुत्रचित् सद्रजतानुभवजनितरजतसंस्कारसहकृतेन शुक्तिसन्निकृष्टेन्द्रियेण रजतसत्ताप्रतीत्युपपत्तिकथनेनेत्यर्थः । **तस्येति** । पुरोवृत्तिरजततादात्म्यस्येत्यर्थः । असतो धर्मिणः प्रतीतिर्नोपपद्यते । तादात्म्यस्यासत्त्वेऽपि धर्मित्वादुपपद्यते प्रतीतिरित्यत आह **धर्मधर्मीति** । असत्त्वाविशेषाद्विनिगमनविरहादुक्तवैधर्म्यमात्रमप्रयोजकमिति भावः ।

**चषकः**— कल्पचतुष्टयमभिप्रेत्य क्रमेण प्रतिविधत्ते **भ्रान्त्यनुभवो वेत्यादि** ।

**प्रदीपः**— धर्मिणोऽसत्त्वे प्रतीतिर्नास्ति धर्मस्यापीति नेत्याह **धर्मधर्मिभावस्त्विति** । वैलक्षण्यमात्रमेतद्विनिगमकं नास्तीत्यर्थः ।

**४०४ सु०— न चतुर्थः । बाधस्यान्यत्र सत्तया विनाऽनुपपत्त्यभावात् । अत्रैव रजतसत्तानिषेधानुपपत्त्याऽन्यत्र सत्त्वसिद्धिरिति चेन्न; तस्यात्रैव प्राप्तत्वेनैवोपपत्तेः ।**

**एतेन 'यद्यथावभासते तत्तथैवे'त्यादि परास्तम् । 'असदेव रजतं प्रत्यभादि'ति रजतासत्त्वप्रमाणस्योपन्यस्तत्वात् । तद्विषयसङ्कोचप्रमाणस्य निरस्तत्वात् ॥**

**तत्किं सर्वत्रारोप्यमत्यन्तासदेव । उच्यते । यत्रारोप्यमधिष्ठानसन्निहितं तत्र तत्तादात्म्यमात्रमसत्, यथा दूरस्थयोश्चूतपनसयोः 'एक एवायं चूत' इति, बाधोत्तरकालमपि स्वरूपद्वयानुवृत्तेः । यत्र पुनरसन्निहितमारोप्यं तत्र तत्तादात्म्यं चोभयमप्यसत्, उक्तन्यायेनेति ॥ तदेवं नैवंविधान्यथाख्यातिवादोऽप्युपपन्नः ॥ ३ ॥**

**परि०**— बाधानुपपत्तिर्वेति पक्षं निराह **न चतुर्थ इति** । ननूक्तमसत्त्वग्राहिप्रमाणं तादात्म्यतत्संसर्गयोरेवासत्त्वग्राहि, न तु रजतस्यापि; तथात्वे रजतप्रतिभासानुपपत्तेरित्यत आह **तद्विषयेति** । प्रतिभासानुपपत्तिरूपसङ्कोचकप्रमाणस्य न तृतीय इत्यादिना वैधर्म्यमात्रमित्यन्तेन निरस्तत्वादित्यर्थः ।





**दूरस्थयोरिति ।** द्रष्ट्रपेक्षया दूरदेशस्थयोरेकदेशे सतोश्चूतपनसयोः दूरस्थत्वदोषेण पनसे चूततादात्म्यमारोप्यते एक एवायं चूतवृक्ष इति । चूत इतीतिशब्दस्य यत्रारोप्यमित्यादिपूर्ववाक्येनान्वयः । कुत एवं तत्रापि स्मर्यमाणारोपस्थल इवारोप्यस्य स्वरूपमप्यसत्स्यात्किं तादात्म्यमात्रासत्त्वोपगमेनेत्यत आह **बाधेति ।** नायं चूत एव किन्तु चूतपनसाविति बाधोत्तरकालमित्यर्थः । **उक्तन्यायेनेति ।** असदेव रजतं प्रत्यभादित्यनुभवविरोधादित्यादिनोक्तन्यायेनेत्यर्थः । **एवंविधेति ।** तादात्म्यमात्रं गृह्यमाणारोपे स्मर्यमाणारोपे च सर्वत्रासदित्येवंरूपान्यथाख्यातिवादः प्राचीननैयायिकोक्त इत्यर्थः ।

**गु०दी०— रजतासत्त्वप्रमाणस्योपन्यस्तत्वात्** इत्यत्र न चानुभवे विवादः आवयोः समयाभिमानरहितानामाविपालगोपालादीनां च रजतभ्रमात्प्रवृत्तानां बाधोदये सति शुक्तिरेवात्रास्ति रजतं नास्त्येवेत्यभिलापरूपो व्यवहारः सर्वैरपि श्रूयते। "यद्धि मनसा ध्यायति तद्वाचा वदति" इति श्रुतेरीदृशाभिलापमूलानुभवेऽपि न तावद्विवादः। अत्र च अकारस्य नञर्थतया, सत्त्वस्य चास्तीत्यनेन समानार्थतया, एवकारस्य चोभयत्र साम्येन नास्त्येवेत्यनुभवोऽस्ति असदेवेत्यनुभवो नास्तीत्यस्य व्याहतत्वात्। इदं चोपलक्षणम्। "यद्धि यथाऽवभासते तत्तथा" इति वदताऽप्यत्र रजतमस्तीति प्रतीतस्य रजतस्यात्रैव सत्ता वक्तव्या । न त्वन्यत्रेति त्वदुक्तन्यायस्यैव विरुद्धत्वादित्यपि द्रष्टव्यम् । **यथा दूरस्थयोश्चूतपनसयोः** इत्यत्र दूरस्थत्वदोषाच्चूतान्तरे विलीनस्यात एव चूतात्पृथगदृश्यमानस्य, एकश्चूत एवायमिति दृश्यमानचूतैक्येन भ्राम्यमाणपनसस्य चूतस्य चेत्यर्थः । इदं चोपलक्षणम् । क्षीरतयैव प्रतीयमानक्षीरान्तर्गतनीरस्य क्षीरस्य चेत्यपि द्रष्टव्यम् ।

**यादु०—** एवं विमतं सत् तथा प्रतीतत्वादित्यस्य बाधितविषयत्वमभिधायाधुना व्यभिचारमप्याह **एतेन यद्यथेति ।** तादात्म्ये व्यभिचारेणेत्यर्थः । ननु हेतौ बाधकाभावे सतीति विवक्षितमग्रेऽतो न व्यभिचार इत्यत आह **असदेव रजतमिति ।** तथा चासिद्धिरिति भावः । दूरस्थयोश्चूतपनसयोस्तादात्म्यमात्रमसदिति पूर्वेणान्वयः । कुत इत्यत आह **एक एवायमिति ।** बाधाकारप्रदर्शनमिदम् । भ्रमस्तु इमौ चूतावित्येवमाकारो द्रष्टव्यः । एक एवायं चूत इत्यनन्तरमपरस्तु पनस इति शेषः । तथाच पनसरूपाधिष्ठानवदारोप्यस्य चूतस्याप्यबाधेन पुरोदेशे सत्यतया विषयीकरणान्नासत्त्वम् । रजतादिभ्रमे तु रजतादेः पुरोदेशे बाधेनासत्त्वस्यैव विषयीकरणादसत्त्वमेव तस्याङ्गीकार्यमिति भावः ।

**वं०प०—** नन्वसदेव रजतं प्रत्यभादित्यनुभवादित्यनुभवरूपप्रमाणस्य पुरोदेश एव रजतासत्त्वावगाहित्वं नान्यत्र देशान्तरेऽपीति विषयसङ्कोचः क्रियत इत्यत आह **तद्विषयसङ्कोचप्रमाणस्येति ।** अन्यत्र सत्त्वसाधकस्य भ्रान्त्यनुभवादिरूपप्रमाणचतुष्टयस्येत्यर्थः । **निरस्तत्वादिति ।** 'अत्र प्रतीतस्यैवान्यत्र सत्त्वे मानाभावात् । तथा ही'त्यादिना निरस्तत्वादित्यर्थः । **यत्र** इदंरजतमित्यादिस्थले । **उक्तन्यायेनेति ।** नेदंरजतमिति बाधोत्तरकालं स्वरूपद्वयानुवृत्त्यभावाद्रजतं तत्तादात्म्यं चेत्युभयमप्यसदिति भावः ।





**आनन्दः**— शङ्कते **अत्रैवेति**। विशेषनिषेधस्य शेषनिधीनान्तरीयकत्वादिति भावः। ननु यद्यथानुभासते तत्तथैवेति नियमाद्रजतस्य सत्त्वेन भावे तस्य सस्यादेवेत्यत आह **एतेनेति**। एतेनेत्यस्यार्थमाह **असदेवेति**। ननु तस्य पुरोदेशे सत्त्वे भावविषयत्वेन सङ्कोच इत्यत आह **तद्विषयेति**। तत्किं सर्वत्रेत्यादि। इह केचिदेतद्ग्रन्थानुसारेणारोप्यमाणस्यान्यत्र सत्त्वमङ्गीकुर्वते तदनुपपन्नम्। आरोप्यस्यान्यत्र सत्त्वे किं भ्रान्त्यनुभवो बाधानुभवो वेत्यादिपूर्वोक्तविकल्पदोषाणामप्यावृत्तेरपरिहारात्। किञ्चैवं संगृह्यमाणारोपस्थले आरोप्यमाणस्यान्यत्र सत्त्वे इदं रजतं इति भ्रमेऽपि तथैवाङ्गीकर्तव्यमित्यर्धजरतीयानुपपत्तिः। न च गृह्यमाणस्थले सन्निहितस्यैवारोपे लाघवादारोपो नाभ्युपगम्यत इति वाच्यम्। तर्हि रजतभ्रमस्थलेऽपि संस्कारसामर्थ्यात् आपणस्थरजतस्यैव भानाङ्गीकारे लाघवेनासदारोपकल्पनाया अत्यन्तायोगात्। न चासदेव रजतं प्रत्यभादित्यनुभवानुरोधेन तत्रासदारोप इति वाच्यम्। पनसे सदेव चूतत्वं मम प्रतिभातमिति अनुभवस्यात्रापि साम्यात्। तस्मादेकत्रारोप्यमाणस्य सत्त्वे सर्वत्रारोप्यमाणस्य सत्त्वापत्ते नैयायिकमतप्रवेशः स्यादिति सर्वत्रारोप्यमाणस्य सत्त्वमेव स्वीकर्तव्यमिति। न च ग्रन्थादयमर्थो न प्रतीयत इति वाच्यम्। तस्य प्रकारान्तरेणैव योजनीयत्वात्। तथाहि शङ्कते **तत्किमिति**। **सर्वत्रारोप्यमत्यन्तासदेवेति**। यद्यत्र रजतं तादात्म्यं चोभयमपि असदेव तर्हि सर्वत्रारोपे भासमानं सर्वमपि किमसदेवेत्यर्थः। परिहरति **उच्यत इत्यादि**। आरोप्यमारोपे भासमानं अधिष्ठानसन्निहितं अधिष्ठानकोटिनिविष्टं यत्र तत्र तादात्म्यमात्रमेवासदित्यर्थः। तादात्म्यमात्रमसदित्यत्र उदाहरणमाह **यथेति**। ननु तादात्म्यमात्रस्यासत्त्वं कुतः आरोप्यविषयीभूतस्य चूतस्यापि असत्त्वं किं न स्यादत्राह **बाधोत्तरकालमिति**। तथाच चूतस्याधिष्ठानकोटिनिविष्टत्वात्तस्य नारोपः। किन्तु तादात्म्यस्यैव। तथाच तदेवासत् न चूत इति भावः। चूतस्याधिष्ठानकोटिनिवेशमेव दर्शयितुं दूरस्थयोश्चूतपनसयोरित्युक्तम्। अन्यथा पनसं चूत इत्यवक्ष्यत्। तथाच नारोप्यासत्त्वमिति भावः। **असन्निहितमारोप्यमिति**। आरोपे भासमानं यत्राधिष्ठानकोट्यनिविष्टं तत्रेत्यर्थः। यद्वा यत्र तादात्म्यमात्रमारोप्यते। तत्रापि रजततादात्म्ययोरुभयोरप्यत्र सत्त्वं किमिति शङ्काग्रन्थार्थः। परिहारग्रन्थस्तु यत्र तादात्म्यं प्रकारत्वेन भासते तत्र तन्मात्रस्यैवासत्त्वं यत्र तत्संसर्गमर्यादया भासते तादात्म्यस्य तत्प्रतियोगिनश्चासत्त्वम्। तथाचारोप्यमारोप्यमाणप्रतियोगिभूतं यन्नाधिष्ठानसन्निहितं तत्रेत्यर्थः। अत एवाह **एक एवायं चूत इति**। तथाच तादात्म्यस्यैव प्रकारत्वेन भानात्तस्यैवारोपो न सतः। अन्यथाऽयं चूत इत्येवोदाहरिष्यत्। नन्वारोप्यमाणतादात्म्यप्रतियोगिनोऽपि असत्त्वं किन्न स्यादत्राह **बाधेति**। यत्र तादात्म्यप्रतियोग्यधिष्ठानसन्निहितं तत्र तूभयमप्यसदेवेति तस्मादेवं ग्रन्थस्य योजयितुं शक्यत्वात्कुत्रापि भ्रमेनारोपस्यान्यत्र सत्त्वमङ्गीकरणीयमिति।

**कं०रा०**— **तस्येति**। अत्रैव रजतसत्तानिषेधस्यात्रैव रजतस्य प्रसक्तत्वेनोपपत्तेर्न तदनुपपत्त्याऽन्यत्र सत्त्वसिद्धिरित्यर्थः। **तद्विषयेति**। असदेव रजतं प्रत्यभादिति रजतासत्त्वप्रमाणस्यात्रासत्त्वं विषय इति विषयसङ्कोचे नियामकस्यान्यत्र सत्त्वकल्पकप्रमाणस्य निरस्तत्वादित्यर्थः। **तदिति**। तत् आरोप्यम्। आरोप्यतादात्म्यं चेत्युभयमसत्। असदेव रजतं प्रत्यभादित्याद्यनुसन्धानादित्यर्थः।





**श्रीनिधि०**— ननु रजतासत्त्वप्रमाणस्य पुरोदेशे रजतासत्त्वविषयकत्वं भवत्वित्यत आह **तद्विषयसङ्कोचेति** । प्रमाणस्य तत्त्वेनाभिमतस्य भ्रान्त्यनुभवादेः । **स्वरूपद्वयानुवृत्तेरिति** । पनसवत्स्मृतस्यारोप्यस्यानुवृत्तेरिति भावः । अत्राप्यारोपः असत एव किं न स्यादिति चेन्न सति संभवे त्यागायोगात् ।

**वा०चं०**— इह सत्तानिषेधमात्रस्यान्यत्र तत्सत्ताक्षेपकत्वं वाऽन्यत्रापि तस्यासत्त्वे इहैव तन्निषेधानुपपत्त्येहैव तन्निषेधस्य वा । नाद्य इत्याह **बाधस्येति** । द्वितीयं शङ्कते **अत्रैवेति** । **तस्येति** । प्रसक्तप्रतिषेधात्मकत्वाद्बाधस्य सर्वत्रासतोऽपि रजतस्यान्यत्राप्रसक्त्याऽत्रैव च प्रसक्त्येहैव निषेधोऽन्यथासिद्ध इत्यर्थः । रजतस्य सत्त्वाङ्गीकारे बाधकतयोक्तमनुभवं परोपन्यस्तप्रमाणनिरासेऽपि व्यापारयति **एतेनेति** । **असदेवेति** । तथा चायमप्यपवादविषय एवेति भावः । अपवादकान्यथासिद्धिनिरासमुक्तं स्मारयति **तद्विषयेति** । नन्वेवमारोप्यतादात्म्ययोरुभयोरसत्त्वम्, आरोपमात्रे वा क्वचिदेव वा । नाद्यः । दूरस्थचूतपनसयोश्चूततादात्म्यारोपस्थले आरोप्यचूतसत्त्वस्य प्रमाणसिद्धतया तत्र तादात्म्यमात्रासत्त्वस्यैव वक्तव्यत्वात् । न द्वितीयः । उभयासत्त्वतादात्म्यमात्रासत्त्वप्रयोजकारोपोपाधिविशेषस्य दुरवधारणत्वान्नियामकविशेषादर्शनाच्चेत्याशयेन गूढाभिसन्धिः शङ्कते **तत्किमिति** । आरोप्यसन्निहिताधिष्ठानकारोपत्वतदसन्निहिताधिष्ठानकारोपत्वयोरुपाधित्वाद्बाधोत्तरकालीनारोप्यस्वरूपानुवृत्तितदभावयोरेव नियामकत्वान्न द्वितीयपक्षेऽनुपपत्तिरित्याशयेन परिहरति **उच्यत इति** । एक एवायमिति तादात्म्यारोपत्वप्रदर्शनम् । चूत इति चूतस्यारोप्यत्वप्रदर्शनम् । चूतयोरेव तादात्म्यारोपस्थले चूतस्यारोप्यत्वासंभवादन्यग्रहणम् । आरोपोपपादनाय दूरस्थत्वग्रहणम् । **बाधोत्तरमिति** । चूतपनसाविमौ न त्वेक एवायं चूत इति बाधोत्तरमित्यर्थः । **यत्र पुनरिति** । नन्वारोप्यस्यासन्निहितत्वेऽपि रजते वा शुक्तिकायामेव वा गृहस्थरजतमिदमित्याद्यारोपस्थले तादात्म्यमात्रस्यासत्त्वं वक्तव्यम् । बाधोत्तरं स्वरूपद्वयानुवृत्तेस्तत्कथमेतदिति चेन्न । आरोप्यासन्निहिताधिष्ठानकारोपस्थले प्रायेणोभयारोपाभिप्रायेणैतद्ग्रन्थप्रवर्तनात् । अतः पूर्वमाकर एवाधिष्ठानासन्निहितविनष्टोत्पत्स्यमानघटयोः सतोरप्यारोप्यत्वमुक्तमिति ध्येयम् । यद्वेदं तद्रजतमित्यादौ विनष्टोत्पत्स्यमानघटादिस्थले च तादात्म्यमात्रस्यैवारोप्यत्वं यत्र चोभयारोपोऽधिष्ठानासन्निधानं चारोप्यस्य तदभिप्रायेणैतद्ग्रन्थप्रवृत्तिः । न चैवं रजतारोपेऽप्येवमेवास्त्विति वाच्यम् । बाधोत्तरं विनष्टः सन् उत्पत्स्यमानः च नायं स इति तद्रजतं गेहेऽस्ति नेदं तदिति स्वरूपद्वयानुवृत्तिवदत्रारोपितमन्यत्रास्ति नात्रेति प्रत्ययाभावात् । प्रत्युत नास्ति नासीन्न भविष्यतीति रजते सर्वदेशकालासंबन्धप्रत्ययेन वैषम्यात् । तदिदमुक्तमुक्तन्यायेनेति रजतासत्त्वग्राहकप्रमाणसद्भावेन तत्सङ्कोचकप्रमाणनिराकरणेन चेत्यर्थः । यद्वा गेहस्थरजतविनष्टघटादेः सत्यरजतस्य च प्रधानत्वात्तज्ज्ञानजन्यसंस्कारे सति शुक्त्यादिसन्निकृष्टेन्द्रियेण सद्रजततादात्म्यवदेतद्देशसंबन्ध्यसद्गेहस्थरजतैतत्कालसंबन्ध्यसद्विनष्टघटादिततादात्म्ययोरुभयोरप्यारोप उभयोरप्यसत्त्वं चेत्यारोप्यासन्निहिताधिष्ठानकारोपस्थल उभयोरप्यसत्त्वमिति यथाश्रुत एव ग्रन्थः साधुः । पूर्वग्रन्थस्याप्ययमेवाशयः । रजतं गेह एवास्ति नेदं तदित्यादिव्यवहारा अपि न सन्त्येव । सत्त्वे वा प्रधानसत्त्वाश्रयणेनौपचारिका इति द्रष्टव्यम् ।





**वा०र०— प्रमाणेति** । पुरोदेशेऽसत्त्वे सति सत्त्वरूपप्रमाणेत्यर्थः । **अयमपीति** । रजतानुभवोऽपीत्यर्थः । **स्मारयतीति** । ततो न पुनरुक्तिरिति भावः । **एवमिति** । इदं रजतमित्यादिभ्रमे रजतादेस्तत्तादात्म्यस्य चासत्त्वम् । न तादात्म्यमात्रमसत् । रजतादि तु सदेवेति परोक्तरीत्या स्वीकार्यमित्युपपादनानुसारेण प्राप्तं यदारोप्यतत्तादात्म्ययोरुभयोरसत्त्वं तत्सर्वारोपेषु वा आरोपविशेषे वेति विकल्पार्थः । **प्रमाणेति** । तथा चाप्रामाणिकरजतसत्त्ववैषम्यादङ्गीकार्यत्वमित्याशयः । वक्तव्यत्वात् । तथा चोभयसत्त्वं तत्र नेत्युपस्कर्तव्यम् । **उभयासत्त्वेति** । क्वचिदारोपे उभयासत्त्वं क्वचिच्च तादात्म्यमात्रासत्त्वमित्येवंरूपो यो विशेषस्तत्प्रयोजको य आरोपेषु उपाधिविशेषः । एवंविधारोपे उभयासत्त्वं एवंविधे च तस्मिंस्तादात्म्यमात्रासत्त्वमित्येवंरूप आरोपभेदकधर्मविशेष इति यावत् । तस्येत्यर्थः । अधिष्ठानसन्निहितारोप्यकारोपत्वे तादात्म्यमात्रमसत् । तदसन्निहितारोप्यकारो यत्त्वेतदुभयमसदित्युपाधिभेदावधारणं संभवतीत्यत आह **नियामकेति** । सन्निधानासन्निधानमात्रस्याप्रयोजकत्वादिति भावः । **गूढेति** । अत्र **तत्किमिति** मूले आशङ्क्य प्रकारविशेषानुपादानाद्गूढाभिसन्धिरित्युक्तम् । कोऽसौ गूढाभिसन्धिरित्यतस्तत्प्रदर्शनमेवमारोप्येत्यादीत्याशयेनेत्यन्तेन कृतमिति विवेकः । **द्वितीयेति** । अनेन सर्वत्र तदुभयमसदिति पक्षानङ्गीकारात्तत्पक्षोक्तदूषणं गर्भस्रावेणैव परिहृतमिति सूचितम् । दूरस्थेत्यादिपदोपादानप्रयोजनमाह **एक एवायमितीति** । **चूतयोरेवेति** । दूरस्थयोश्चूतयोरेक एवायं चूत इत्यन्योन्यतादात्म्यारोपस्थल इत्यर्थः । **असंभवादिति** । उभयत्रापि चूतत्वस्य प्रामाणिकत्वेन तत्र तदारोपासंभवात् । एतच्चूते तच्चूतारोपाङ्गीकारे तु तादात्म्यारोप एव पर्यवसानादिति भावः । **उपपादनायेति** । समीपवर्तिनोर्विशेषदर्शनसद्भावेनारोपासंभवात्तदुपपादनाय दूरस्थग्रहणमित्यर्थः । **रजत इति** । पुरोवर्तिनि रजते यत्र गृहस्थं रजतमिदमित्यारोपः । शुक्तिकायां वा गेहस्थं रजतमित्यारोपः । आदिपदेनापणस्थं रजतमित्यस्य वा शुक्तिकायां गेहस्थशुक्तिकेयमिति वा आरोपस्य ग्रहणम् । तथाच तत्रारोप्यसन्निहिताधिष्ठानाकारारोपत्वस्य व्यभिचार इति भावः । कुतो वक्तव्यमित्यतो भवदुक्तनियामकसत्त्वादेवेत्याह **बाधेति** । **आरोप्येति** । उक्तोपाधेरुभयासत्त्वप्रयोजकत्वं प्रायेणेत्यभिप्रायेण मूले तदुपाधेरुक्ततया क्वचिद्व्यभिचारेऽपि न दोष इत्याशयः । अस्य प्रायिकत्वं मूलसंमतमित्याह **अत एवेति** । घटान्तरं विनष्टेत्यस्य मानघटान्तरतयेति पूर्वोक्तातिप्रसङ्गपर्यालोचनया कालान्तरसतोऽप्यारोप्यत्वमुक्तं भवतीति तादृशस्थले नोभयमसदिति प्रसिद्धमिति भावः । एवं प्रायिकत्वेनारोपोपाधेर्व्यभिचारं परिहृत्योभयारोपे सत्यारोप्यासन्निहिताधिष्ठानकत्वं यत्र तत्र तदुभयमसदिति प्रयोज्यप्रयोजकभावविवक्षणेनोक्तस्थले च तत्प्रयोजकाभावेन तादात्म्यमात्रस्यासत्त्वेऽपि न व्यभिचार इति प्रकारान्तरेण परिहरति **यद्वेदमिति** । यद्येवमुभयारोपे सत्यारोप्येत्यादिरूपं प्रयोजकमङ्गीकृत्योक्तस्थले तादात्म्यमात्रमसदित्यङ्गीक्रियते तर्हि तत्प्रयोजकस्य रजतारोपेऽप्यभावान्नोभयासत्त्वमिति प्राप्तेः सिद्धं रजतस्यान्यसत्त्वमित्याशङ्कते **न चैवमिति** । नोक्तप्रयोजकमात्रेणोभयासत्त्वमङ्गीकृतमपि तु बाधोत्तरं स्वरूपद्वयाननुवृत्त्यापि । तथा तादात्म्यमात्रासत्त्वमपि बाधोत्तरं स्वरूपद्वयानुवृत्त्या स्वीकृतम् । एवं च शुक्त्यादौ रजतारोपस्थले तद्रजतमित्यादाविव उभयस्वरूपानुवृत्तेरभावाद्युक्तमुभयसत्त्वमित्याद्याह **बाधोत्तरमिति** । अस्मिन् पक्षे **उभयारोपे संतीति** । विवक्षां कृत्वाऽप्यतिप्रसङ्गपरिहाराय नियामकानुसरणं कार्यम् ।





अत्यन्तासत एवारोप्यतया रजतभ्रमे क्लृप्तत्वेऽपि सतोऽप्यारोपे प्रामाणिकप्रतियोगिकात्यन्ताभावस्वीकारः प्रसज्यत इत्याद्यपरितोषादप्रामाणिकस्यैवारोप इत्याश्रित्य गेहस्थं रजतमिदं उत्पत्स्यमानो विनष्टो वाऽयं घट इति प्रत्ययसद्भावात्कथं तत्रारोप्यासत्त्वमित्यतस्तद्गतिं दर्शयति **यद्वा गेहस्थेति** । यथा सत्यं रजतं रजतारोपे प्रधानमेवं गेहस्थरजतं विनष्टोत्पत्स्यमानघटावपि च प्रधानमेवेति दृष्टान्तदार्ष्टान्तिकभावेनेदं योज्यम् । अत एव सत्यरजत-ज्ञानजन्यसंस्कारे सति शुक्तिसन्निकृष्टेन्द्रियेणासद्रजततत्तादात्म्ययोरिवेति तादात्म्यवदिति षष्ठ्यर्थे वतिरिति योजनां सूचयति । आरोपेत्युत्तरेण संबन्धः । रजततत्तादात्म्येति मूलकोशाद्युक्तेश्च पाठः । शुक्त्यादीत्यादिपदेन सत्यरजतविद्यमानघटपरिग्रहः । आदिपदोपात्तं तु दार्ष्टान्तिकम् । गेहस्थरजतस्यासत्त्वोपपादितमेतद्देशेति । एतद्देश-संबन्धियदसद्गृहस्थं रजतम् । एतत्कालसंबन्धिपदसद्विनष्टचन्द्रादितदुभयं स्यात्तत्तादात्म्यस्य वेत्युभयोरपीति योज्यम् । गेहस्थं रजतं गेहे सदप्येतद्देशे नास्त्येवेत्यतस्तत्तद्देशसंबन्धि एतद्देशे प्रतीयमानमिति यावत् । असदेव गेहस्थं रजतम् । एवमेतत्कालसंबन्धि एतत्काले प्रतीयमानमिति यावत् असदेव विनष्टघटादित्यर्थः । एवं गेहस्थं रजतविनष्ट-घटाद्यारोपस्थले उभयासत्त्वोपपादनफलमाह **आरोप्येति** । **यथाश्रुत एवेति** । प्रायिकत्वाश्रयणाभावः । उभयारोप इति विवक्षणेऽपि शुक्तिकायां रजतारोपेऽपि विशिष्टप्रयोजकाभावशङ्कापरिहाराय नियामकानुसरणायासश्च नास्तीत्याशयः । पूर्वग्रन्थस्याप्ययमेवेत्येतत् योज्यमस्ति । ननु गेहस्थं रजतमित्यादिभ्रमे तद्रजतस्य नासत्त्वमङ्गीकर्तुं युक्तम् । रजतं गेह एवास्ति नेदं तदिति व्यवहारसत्त्वेन स्वरूपद्वयानुवृत्तिसद्भावादेवं घटो विनष्टः पूर्वमेवासीत् । उत्पत्स्यमानस्तूत्तरत्र भविष्यति । विद्यमानस्तु न तदुभयरूप इति व्यवहारेण स्वरूपद्वयानुवृत्तिसद्भावो नारोप्य-सन्निहिताधिष्ठानाकारो यद्वारोप्यसत्त्वमेवास्थेयमित्यत आह **रजतं गेह एवेति** । व्यवहाराः सन्तीति विवदमानं प्रत्याह **सत्त्वे वेति** । उक्तं तावत् गेहस्थरजतविनष्टघटादेः **प्रधानत्वादित्यादि** । तथा च गेहस्थरजतादेः प्रधान-त्वाद्यथा सत्यरजतानुभवजन्यसंस्कारजन्यशुक्तिकायां रजतमिति ज्ञानानन्तरं नेदं कान्ताकङ्कणस्थं रजतमिति व्यवहारस्तत्प्रधानकत्वाश्रयणेनौपचारिकः एवं गेह एवेत्यादिनिषेधव्यवहारोऽप्यौपचारिक इत्यर्थः । नन्वेतावता-रोप्यासन्निधानस्थले उभयारोपादुभयासत्त्वं तत्सन्निधानस्थले तु तादात्म्यमात्रमसदिति व्यवस्था निर्णीता । न चेयं युक्ता शुक्तिकासन्निकृष्टं दुष्टमिन्द्रियं तामेवात्यन्तासद्रजतात्मनाऽवगाहमानं ज्ञानं जनयतीत्यङ्गीकारादिति प्रथमाख्यातिनिरासावसरे मूले उक्तेः । एवं पद्धत्यादिष्वपि । तथाच अत्यन्तासद्रजतात्मना शुक्तिकाप्रतिभासस्य ग्रन्थकारादिभिरुक्ततयाऽत्यन्ताभावप्रतियोगित्वेनारोप्यस्वीकारस्य सर्वत्र सिद्धेः तथा स्वीकार एवाधिष्ठानसन्निधान-स्थलेऽपि उदाहृतस्थलद्वयवच्चूतस्यैवारोपाङ्गीकारे उभयासत्त्वोपपत्तेरर्धजरतीयं प्रसज्यते । अन्यथा अप्रामाणिक-प्रतियोगिकात्यन्ताभावप्रक्रियापरित्यागप्रसङ्गः । वक्ष्यति च मूलकारो अनिर्वचनीयख्यातिनिरासावसरे । यद्धि सकलदेशकालासत्तदत्यन्ताभावप्रतियोगीत्युच्यते । यथा शशविषाणादिकमित्यादिसन्निधानस्थल इवासन्निधान-स्थलेऽपि तादात्म्यमात्रारोप एवाङ्गीक्रियते; तद्वदिहापि प्रधानत्वमात्रेण स्वरूपद्वयानुवृत्तिव्यवहारमङ्गीक्रियताम् । अत एवादृश्यत्वाधिकरणे गोत्रादिसंसर्गाभावः अप्रामाणिकप्रतियोगिक एव व्याख्येयः । भूतले घटो नास्तीत्यत्र तु प्रामाणिकघटाभावस्य विषयत्वानुपपत्त्या तत्संसर्गाभाव इति प्रागभावसमर्थनावसरे टीकापि कथम् । घटस्येव





तत्संसर्गस्यापि प्रामाणिकत्वात् । अत एव तन्तुषु पटो नास्तीति प्रतीतेर्भूतत्वभावित्वसर्वथाभावाश्रयणेनोपपादनमपि विचार्यमेव । तत्कथमयं मूलग्रन्थस्तट्टीका चेति चेत् । इहोपयुक्तो विचारः प्रायोऽदृश्यत्वाधिकरणे अस्माभिः करिष्यते । आरोप्यसन्निधानाश्रयणेन विशेषविचारः कर्तव्योऽस्ति । तथोभयाधिष्ठानकचूत एवायमित्यारोप इति कथम् । चूते चूतारोपाभावात् । बाधाभावाच्च । तस्मात्पनस एवारोप इति वाच्यम् । तथात्व एवारोप्यसन्निधानमधिष्ठानस्येत्युक्तिर्युज्यते । यदि चोभयाधिष्ठानकारोपस्तदोक्तसन्निधानोक्त्ययोगः । उभयोरधिष्ठानत्वात् इत्येतदपि समाधेयम् । पूर्वग्रन्थस्याप्ययमेवाशय इति टीकार्थतया सर्वत्रोभयारोप इति प्राप्तं चेन्नानुपपत्तिरिति तथा तदर्थो विचार्योऽस्ति । अप्रामाणिकदोषात्यन्ताभाव ईश्वर इव जीवेऽपीति शङ्काविरोधिदोषाणां जीवे सत्त्वान्न तदभाव इति परिहरणीया । तदर्थं च जीवगतदोषाणां पारिभाषिकविरोधोऽपि वाच्यः । अत एव विरोधोपपादनं टीकाकृता करिष्यते । तदप्येवं सति दुर्घटं स्यात् । अज्ञाननिराकरणस्थलप्रागभावसमर्थनस्थलटीका चानुगुणा कथम् । स्थलान्तरानुसारेणालेख्यमत्रास्ति ।

**स०व्र०— अत्रैवेति** । बाधाभावस्त्वन्यथासिद्ध इत्यर्थः । **यत्रारोप्यमिति** । अत्र सन्निहितत्वमसन्निहितत्वस्यापि उपलक्षणम् । न चैवमुत्तरत्रासन्निहितत्वे उभयोरसत्त्वोक्तिविरोधः । बाधोत्तरकालं स्वरूपद्वयानुवृत्त्यभावे उभयोरसत्त्वाभिधानादित्याहुः । दूरस्थयोश्चूतपनसयोस्तादात्म्यमात्रमसदिति पूर्वेणान्वयः । कुत इत्यत आह **एक एवायं चूत इति । बाधोत्तरकालमिति** । एवं चेमौ चूताविति भ्रमाकारो द्रष्टव्यः । एक एवायं चूत इत्यनन्तरमपरस्तु पनस इति शेषः । तथा च पनसरूपाधिष्ठानवदारोप्यस्य चूतस्याबाधेन पुरोदेशे सत्यतया विषयीकरणान्नासत्त्वम् । रजतादिभ्रमे रजतादेः पुरोदेशे बाधेनासत्त्वस्यैव विषयीकरणादसत्त्वमेव तस्याङ्गीकार्यमिति भावः ।

**वि०ठ०— न चतुर्थ इति** । इदं रजतं नेत्यस्य शशविषाणं नास्तीति प्रतिषेधतुल्यत्वेन निषेधस्यान्यत्र सत्त्वानाक्षेपकत्वादिति भावः । **तस्यात्रैवेति** । अप्रसक्तप्रतिषेधानुपपत्त्या रजतसत्ताप्रसक्तिमात्रमपेक्षितं तथाच तस्यात्रैव विपर्ययबुद्ध्या प्राप्तत्वेनैवोपपत्तेरत्र प्रतिषेधेनान्यत्र सत्त्वसिद्धिरिति भावः । एतेनेत्युक्तं विशदयति **असदेवेति** । उक्तानुभवप्रमाणस्य तादात्म्याद्यसत्त्वग्राहित्वेनान्यथासिद्धिरुक्तेत्यत आह **तद्विषयेति** । गूढाभिसन्धिः शङ्कते **तत्किमिति** । विदिताभिसन्धिरुत्तरमाह **उच्यत इति** । आरोप्यसन्निधाने तादात्म्यमात्रमसदित्यभिसन्धिः । **दूरस्थयोरिति** । द्रष्ट्रपेक्षया दूरस्थयोर्मिश्रितयोः चूतपनसयोरेक एवायं चूत इति पनसेऽपि चूततादात्म्यमात्रमारोप्यत इत्यर्थः । **बाधोत्तरमिति** । चूतपनसाविमौ नत्वेक एवायं चूत इति बाधोत्तरमित्यर्थः । **उक्तन्यायेनेति** । असदेव रजतं प्रत्यभादित्युक्तविरोधादित्युक्तन्यायेनेत्यर्थः ।

**चषकः— तद्विषयसङ्कोचकप्रमाणस्येति** । असत्पदस्य पुरोदेशमात्रासत्त्वकल्पकप्रमाणस्येत्यर्थः ।





॥ बौद्ध-अख्याति-वादः ॥

विज्ञानबौद्ध-अख्याति-अनुवादः तन्निरासश्च—

**४०५ सु०— अपरे पुना रजतं सदेव किन्त्वन्तरेवेति मन्यन्ते। तथा हि। न तावदसदेव रजतं, प्रतीत्यनुपपत्तेः। नापि पुरत एव सत्; भ्रान्त्यनुपपत्तेः, बाधविरोधाच्च। न च देशान्तरे सत्, प्रमाणाभावात्। अतः परिशेषाज्ज्ञानाकारमेवावतिष्ठते ॥ किञ्चेदं ज्ञानरूपम् इन्द्रियसंप्रयोगे असति अपरोक्षत्वाज्ज्ञानवत्। न च सत्यत्वे भ्रान्त्यनुपपत्तिः, आन्तरस्यैव बाह्यतयाऽवभासो भ्रम इत्यङ्गीकारात्। तस्य 'नेदमि'ति बाह्यतानिषेधेनैव बाधकस्य बाधकत्वोपपत्तिरिति ॥**

**परि०— अपर इति**। बौद्धैकदेशिनो विज्ञानात्मतत्त्ववादिन इत्यर्थः। परिशेषमुक्त्वाऽनुमानं चाह **किञ्चेति**। इदमितिपक्षः शुक्तौ प्रतीयमानं रजतमित्यर्थः। ज्ञानरूपमिति साध्यम्। **इन्द्रिय-संप्रयोगेऽसति अपरोक्षत्वादिति**। प्रतीयमानरजतस्येन्द्रियसन्निकर्षाजन्यप्रत्यक्षविषयत्वादित्यर्थः।

**वं०प०— किं चेदमिति**। रजतमित्यर्थः। **ज्ञानवदिति**। ज्ञानेऽनुव्यवसायरूपापरोक्षज्ञानविषयत्व-मस्तीति द्रष्टव्यम्। **आन्तरस्येति**। ज्ञानरूपत्वेनान्तरपदार्थस्येत्यर्थः। ननु बाह्यतावभासस्य भ्रमत्वे नेदंरजतमिति बाधकज्ञानस्य रजतनिषेधरूपत्वेन बाह्यतानिषेधरूपत्वाभावाद्बाधकत्वं नोपपद्यते। तथात्वे नेदं बाह्यमिति बाधोदयः स्यादिति चेत्तत्राह **तस्येति**। तस्य बाधकस्येत्यन्वयः। तथाच नेदमिति रजतस्य बाह्यत्वमेव निषेध्यतया अभिप्रेतमिति नोक्तदोष इति भावः।

**आनन्दः**— अन्यथा आत्मख्यातिवादिमतं निराकर्तुं तन्मतमुपन्यस्यति **अपर इति**। परिशेष-मुक्त्वानुमानमप्याह **किञ्चेति**।

**कं०रा०— इन्द्रियेति**। इन्द्रियसंप्रयोगेऽसत्यपरोक्षत्वादित्यर्थः। 'अपरोक्षत्वमात्रमिन्द्रियसंयोगादपरोक्षे शुक्त्यादावनैकान्तिकमिति तन्निरासायेन्द्रियसंयोगेऽसतीत्युक्तम्।

**श्रीनिधि०— अपरे** विज्ञानवादिनः। अपरोक्षत्वमात्रं बाह्यघटादावनैकान्तिकम्। अतः **इन्द्रियसंप्रयोगे असतीति**। इन्द्रियसंप्रयोगे असति ज्ञायमानत्वमतीतादौ **अत अपरोक्षेति**। ज्ञानस्य ज्ञातैकसत्त्वेन इन्द्रियसंप्रयोग-जन्यत्वाभावादिति भावः। संप्रयोगपदेन प्रत्यासत्तिमात्रविवक्षायाम्। अपरोक्षपदं ज्ञायमानमात्रपरमित्यवगन्तव्यम्।

**वा०चं०**— एवं बहिस्सत्त्वपक्षं निराकृत्य तन्निरासाधीनसिद्धिकमन्तःसत्त्वपक्षं निरसितुमनुवदति **अपर इति**। प्रभाणाभावात्तदसंभव इत्यतः प्रमाणं वक्तुं प्रतिजानीते **तथा हीति**। **देशान्तर इति**। बहिरिति शेषः।





नन्वसत्प्रतीतेरुक्तवक्ष्यमाणन्यायसिद्धतया आन्तरत्वे प्रमाणाभावाद्बहिस्सत्त्वमेवेति देशान्तरसत्त्ववादिना परिशेषस्य कर्तुं शक्यत्वाच्च नायं प्रकारो युक्त इत्यतोऽनुमानमाह **किं चेति** । **इदमिति** । रजतमित्यर्थः । अत्र संप्रयोगः संबन्धमात्रमभिमतं न तु तद्विशेषः संयोगादिरतो रूपादिना नानैकान्त्यम् । न च विज्ञानवादिमते साध्यस्यापि तत्र सत्त्वान्नानैकान्त्यमिति वाच्यम् । प्रमाणाभावाद्बहिस्सत्त्वं नेति वदता भ्रमविषयस्यैव विज्ञानरूपताऽभ्युपगमेनैतद्विशेषणोपादानात् । अन्यतरानैकान्तिकत्वपरिहारार्थत्वाच्च । अधिष्ठानादिनाऽऽध्यासिकसंबन्धेनैवापरोक्षत्वाद्रजतस्य विशेषणासिद्धिपरिहाराय **इन्द्रियेति** । तथा चेन्द्रियसन्निकर्षानधीनापरोक्षत्वादिति हेतुशरीरं सिद्धं भवति । **ज्ञानवदिति** । तस्य स्वतःसिद्धतया तत्र हेतुसद्भाव इति भावः । **तस्येति** । इदन्तानिषेधकत्वेनैव बाधकत्वोपपत्तौ रजतनिषेधकत्वस्यापि कल्पने गौरवमित्याशयः । अत एवाह **निषेधेनैवेति** ।

**वा०र०— तन्निरासाधीनेति** । बहिःसत्त्वासंभव एवान्तःसत्त्वस्य कल्पनार्हत्वादिति भावः । यद्वा येनान्तःसत्त्वमुच्यते तेन बहिःसत्त्वं निराकृत्यैव तदुच्यते । अतस्तन्निरासाधीनसिद्धिकत्वमन्तःसत्त्वस्येत्यर्थः । तन्निराकरणं च विस्तरेण कार्यम् । तत्तु पूर्वमतनिरासे सिद्धं भवतीत्येतन्मतोपन्यासावसरे प्रमाणनिराकरणायासौ नास्तीत्येवमभिप्रेत्य मूले प्रमाणाभावादित्येवोक्तमिति ज्ञेयम् । **तदसंभव इति** । अन्तःसत्त्वे प्रमाणाभावादन्तःसत्त्वासंभव इत्यर्थः । **उक्तवक्ष्यमाणेति** । असत्ख्यातिमनङ्गीकुर्वतः प्राभाकरस्य निरासावसरे उक्तन्यायेनासदेव रजतमित्युत्तरमतोपन्यासावसरे वक्ष्यमाणेन न्यायेन च सिद्धतयेत्यर्थः । सिद्धतयाऽसत्त्वस्यैवाङ्गीकर्तुमुचितत्वेनेति पूरणीयम् । अस्य च नायं प्रकारो युक्त इत्युत्तरेण संबन्धः । उक्तप्रकारायोगे बहिःसत्त्ववादिनोद्भाव्यविपरीतोक्तिं च हेतुत्वेनाह **आन्तरत्व इति** । ननु संयोगसमवायौ हि संप्रयोगौ तथा चोक्तसंप्रयोगाभावेऽप्यपरोक्षे घटादिगतरूपादौ ज्ञानरूपत्वाभावाद्व्यभिचार इत्यत आह **अत्र संप्रयोग इति** । तथा चेन्द्रियेण संबन्धमात्राभावे सत्यपरोक्षत्वं हेतुतया प्राप्तमिति न रूपादौ व्यभिचारः । इन्द्रियार्थयोः संबन्धस्य षड्विधत्वेन तत्र संयुक्तसमवायादिरूपसंबन्धसत्त्वादिति भावः । **तत्र सत्त्वादिति** । आन्तरे विज्ञाने सर्वं कल्पितमिति वदतो मते 'असच्चेत्संविदो नीलं न तद्भासेत संविदी'त्याद्यङ्गीकारेण रूपादौ ज्ञानाभिन्नत्वसत्त्वादिति भावः । **प्रमाणेति** । अत्र भ्रमविषयविचारे प्रवृत्तेन बहिःसत्त्वे प्रमाणाभावान्न भ्रमविषयस्य बहिःसत्त्वमिति विशेषाशङ्कानुसारेण बहिःसत्त्वप्रमाणशून्यभ्रमविषय एव ज्ञानत्वाङ्गीकारप्राप्त्या तत्रोपन्यस्तानुमानेऽप्युक्तहेतुकरणेन प्रमाणोपेतपदार्थेषु ज्ञानत्वाभावाभ्युपगमस्यापि सिध्या तथाविधे रूपादावनैकान्त्योपपत्त्या तद्वारणाय संबन्धमात्रार्थकत्ववर्णनस्यावश्यकत्वादिति भावः । एतत्प्रकरणानुसारेण भ्रमविषयरजतादिमात्रविषयत्वप्राप्तावपि तन्मते सर्वस्यापि संविदन्यत्वाभावेन रूपादौ व्यभिचारानवकाश इत्यपरितोषात्पक्षान्तरमाह **अन्यतरेति** । न्यायादिमतरीत्येत्यर्थः । **अधिष्ठानादिनेति** । आदिपदेन ............... परिग्रहः । अयमर्थः । संबन्धमन्तरेणापरोक्षत्वादित्येवोक्ते यद्यपि रूपादौ न व्यभिचारस्तथापि रजतेऽसिद्धिः । रजतस्याधिष्ठानेन सहाध्यासिकसंबन्धसद्भाव एव तस्या अपरोक्षत्वेनोक्तहेतुविशेषणस्य पक्षेऽभावादिति । एवमिन्द्रियपदस्यावश्यकत्वे संप्रयोगपदस्य च संबन्धमात्रार्थत्वेतरेणेत्यस्य विवक्षितमर्थं दर्शयन् हेतुशरीरं





निष्कृष्याह **तथा चेति** । **स्वत इति** । स्वप्रकाशतयेत्यर्थः । **इदन्तेति** । बाह्यतापदार्थकथनमिदम् । एवकारार्थकथनं **रजतेत्यादि** । तदेव स्पष्टयति **अत एवेति** ।

**विठ्ठ०**— बौद्धैकदेशमपाकरोति **अपरे पुनरिति** । विज्ञानवादिन इत्यर्थः । **ज्ञानाकारमेवेति** । ज्ञानगतो रजताकारः सत्य एवेति भावः । घटादौ व्यभिचारवारणायोक्तं **इन्द्रियसंयोगे असतीति** । यद्यपि विज्ञानवादिमते घटादावपि साध्यं संमतं तथापि प्रतिवादिरीत्येदमुच्यते इति ज्ञेयम् । चक्षुर्निमीलनेऽपि मनसा रजतस्य बहिरभावेनेन्द्रियसंयोगासंभवेऽपि रजताकारस्फुरणान्न हेत्वसिद्धिरिति तस्याशयः ।

**चषकः**— विपर्यस्तस्य बहिःसत्त्वकल्पप्रतिविधानानन्तर्येणान्तःसत्त्वकल्पं प्रतिविधित्समान आत्मख्यातिकल्पमनुवदति **अपरे त्विति** ।

**प्रदीपः**— विज्ञानख्यातिमुपन्यस्य दूषयति **अपरे पुनरित्यादिना** । **किञ्चेति** । इन्द्रियसंप्रयोगमन्तरेण अपरोक्षत्वादित्यर्थः ।

**४०६ सु०— एतच्चानुपपन्नम् । सत्त्वे 'असदेव रजतमि'त्यसत्त्वावेदकप्रत्ययविरोधस्योक्तत्वात् । असतः प्रतीत्यनुपपत्तौ च बहिष्ठताया अपि प्रतीत्यनुपपत्तिप्रसङ्गात् । तत्सत्त्वे भ्रान्तित्वानुपपत्तेः । बहिस्सत्त्वमेवासत्प्रत्ययेन निषिध्यत इति चेन्न । आन्तरत्वे प्रमाणाभावात् । इन्द्रियसंप्रयोगमन्तरेणापरोक्षत्वस्य हेतोर्बाह्यतायामनैकान्त्यात् । शुक्तिसंप्रयोगेणापरोक्षतायाः स्वीकारादसिद्धेश्च । दृष्टान्तश्च साधनविकलः । ज्ञानस्यापि इन्द्रियसंप्रयोगादेवापरोक्षताऽङ्गीकारात् । किञ्च गुञ्जापुञ्जादौ दहनादिसमारोपे तस्यान्तःसत्त्वे देहदाहादिप्रसङ्गः । अन्यथा अन्तरपि तदसदित्यत्यन्तासदेवापन्नमिति नात्मख्यातिपक्षोऽप्युपपत्तिमान् ।**

**परि०**— **उक्तत्वादिति** । पूर्वमतनिरासप्रस्ताव उक्तत्वादित्यर्थः । तथा चासत्त्वेनोपपत्त्या न परिशेषावतार इति भावः । **तत्सत्त्वे** बहिष्ठतायास्सत्त्वे । असत्त्वेऽसदेव रजतमित्यादिनोक्तदोषोद्धारमाशङ्कते **बहिस्सत्त्वमेवेति** । कल्पकाभावादिति भावेनाह **आन्तरत्व इति** । अनुमानं च निरसितुं किं प्रतीयमानरजतादिसन्निकर्षमन्तरेणापरोक्षत्वमभिमतमुत सन्निकर्षमात्रं विनेति हृदि कृत्वाऽऽद्य आह **इन्द्रियेति** । अन्त्येऽसिद्धिरिति भावेनाह **शुक्तीति** । **ज्ञानस्यापीति** । स्वरूपेन्द्रियसंप्रयोगाभिव्यक्तसाक्षिरूपापरोक्षज्ञानविषयत्वस्य ज्ञानेऽपि स्वीकारादिति भावः ।





**गु०दी०**— ज्ञानसन्ततिरेवात्मेति मते ज्ञानख्यातिरप्यात्मख्यातिरिति भावेन **आत्मख्यातिपक्ष** इत्युक्तम् ।

**यादु०**— **आत्मख्यातिपक्ष** इत्यत्रात्मशब्देन स्वपर्यायेण ज्ञानं विवक्षितम् ।

**वं०प०**— **सत्त्वे** ज्ञानाकारस्य रजतस्यान्तःसत्त्वाङ्गीकारे । ननु न तावदसदेव रजतं प्रतीत्यनुपपत्तेरित्युक्तमिति चेत्तत्राह **असत इति** । रजतस्येत्यर्थः । **बहिष्ठताया अपीति** । असत्त्वाविशेषादिति भावः । बहिष्ठतायाः सत्त्वात्तत्प्रतीतिः संभवतीति चेत्तत्राह **तत्सत्त्व इति** । ननु रजतस्य सत्त्वाङ्गीकारेऽसदेव रजतं प्रत्यभादिति प्रत्ययविरोधो नास्तीति शङ्कते **बहिःसत्त्वमेवेति** । रजतस्येत्यर्थः । स्यादिदं यदि रजतस्यान्तरत्वं स्यात्तदेव न संभवतीत्याह **आन्तरत्व इति** । ज्ञानरूपत्व इत्यर्थः । शुक्तिसंप्रयोगेण शुक्तिसन्निकृष्टदुष्टेन्द्रियजन्यज्ञानविषयत्वेनैवेत्यर्थः । तदुपपादयति **ज्ञानस्येति** । इन्द्रियार्थसन्निकर्षजन्यत्वेनैव ज्ञानस्यापरोक्षत्वमित्यर्थः । तथाच विशेषणाभावप्रयुक्तविशिष्टाभावसद्भावात् साधनवैकल्यमित्यवगन्तव्यम् । **तस्य** आरोपितस्य । अन्तःसत्त्वे ज्ञानरूपत्वेनान्तरत्वादिति भावः । **अन्यथेति** । देहदाहापत्त्यान्तरत्वानङ्गीकार इत्यर्थः । **अन्तरपीति** । पुरोदेशे देशान्तरे च सत्त्वस्य भ्रान्त्यनुपपत्तिप्रमाणाभावाभ्यामुक्तरीत्याऽसंभवेन बहिः सत्त्वं नास्त्येवेति भावः । **आत्मख्यातिपक्ष इति** । आत्मज्ञानस्वरूपमेव रजतं ख्यायत इति पक्ष इत्यर्थः ।

**आनन्दः**— बाधकप्रत्ययस्य सत्त्वविषयकत्वान्न तद्विरोध इति शङ्कते **बहिःसत्त्व इति** । **अन्यथेति** । दाहकत्वानङ्गीकार इत्यर्थः ।

**कं०रा०**— नन्वसदेव रजतं प्रत्यभादित्यसत्त्वविषयकप्रत्ययेन रजतस्य बहिःसत्त्वमेव निषिध्यते । अतो ज्ञानस्वरूपस्य रजतस्य सत्त्वे तद्विरोधो नेत्याशयेन शङ्कते **बहिःसत्त्वमिति** । रजतस्य ज्ञानस्वरूपतया सत्त्वे केनचित्प्रमाणेन सिद्धेऽसदेवेति प्रत्ययस्य बहिःसत्त्वनिषेधविषयकत्वकल्पना स्यात् । तदेव तु नास्तीत्याशयेन परिहरति **आन्तरत्व इति** । **बाह्यतायामिति** । आन्तरस्य रजतस्य बाह्यतावभासो भ्रम इति वदता पूर्वपक्षिणा बाह्यताया ज्ञानरूपत्वानङ्गीकारेण तत्रानैकान्त्यमिति भावः । **अपरोक्षताया इति** । रजतस्येति शेषः । साधनवैकल्यमेवोपपादयति **ज्ञानस्येति** । ज्ञानस्य स्वरूपेन्द्रियसंयोगादेवापरोक्षताया अङ्गीकृतत्वादित्यर्थः ।

**श्रीनिधि०**— **बहिःसत्त्वमेवेति** । न तु सर्वत्र सत्त्वमित्येवार्थः । तथा च सावकाशमसदेव रजतमिति ज्ञानमिति भावः । **बाह्यतायामिति** । बाह्यत्वं व्यभिचारस्थलमित्यर्थः । **ज्ञानस्यापि** इदं नैयायिकरीत्येति ज्ञेयम् । **दाहादिप्रसङ्ग इति** । ननु दाहकत्वापादानमयुक्तं देशादिभेदेन एकस्यैव विरुद्धक्रियादर्शनादिति चेन्न यत्किञ्चिद्वह्निकार्यस्योपलक्षणत्वात् सर्वथा तद्रहितस्य तत्त्वव्यपदेशस्तु रिक्त एवेति भावात् । **आत्मख्यातीति** । विज्ञानमेवात्मेति तैरङ्गीकारादेवमुक्तम् ।

**वा०चं०**— परिशेषं विघटयितुमनुभवविरोधं स्मारयति **सत्त्व इति** । एवं परिशिष्यमाणे बाधात् परिशेषानुपपत्तिमभिधायोक्तरीत्या सत्त्वोपपत्तौ प्रसक्तप्रतिषेधासंभवेनापि तदनुपपत्तिमाह **असत इति** । अनुभवविरोधं परिहर्तुं शङ्कते **बहिरिति** । **नेति** । अन्यथाऽन्योन्याश्रयः स्यादिति भावः, स्वनिष्ठत्वेनेन्द्रियसन्निकर्षो विशिष्यते न वा । आद्य आह **इन्द्रियेति** । अन्त्य आह **शुक्तीति** । **दृष्टान्तश्चेति** । वृत्तिज्ञाने स्वप्रकाशताया निराकरिष्यमाणत्वादिति भावः । अङ्गीकारादित्यनेन साक्षिण इन्द्रियत्वानङ्गीकारिण एतद्दोषाप्रसरेऽपि मां प्रति तदप्रसर इति सूचयति । आरोपविशेषे दोषमाह **किं चेति** । अन्यथा बुद्धावपि तस्यातात्त्विकत्वादन्तरसत्त्वे । अत्र शुक्तिसंप्रयोगेणेत्युक्त्येदन्ताया अनिषेधान्न कल्पनागौरवमिति । असदेव रजतमित्यनुभवोक्त्या च रजतनिषेधकत्वमेव बाधकप्रत्ययस्य युक्तमिति सूचयति ।

**वा०र०**— **परिशेषमिति** । परिशिष्यमाणे बुद्धिरूपपरिशेषमित्यर्थः । अन्तरत्वं नामान्तःसत्त्वं वाच्यम् । तच्चासत्त्वानुभवबाधितमिति तत्परिशेषानुपपत्तिरिति भावः । एवमेवोत्तरवाक्यावतारे तात्पर्यस्याभिधानात् । अनुभवविरोधस्य बहुधोक्तत्वादुक्तपदतात्पर्यं कथितं स्मारयतीति । **अभिधायेति** । परिशेषशरीरे हि प्रसक्तप्रतिषेधः । अन्यत्राप्रसङ्गश्चेत्येतौ प्रयोजकांशौ परिशिष्यमाणे बुद्धिरिति तु फलांशः । तत्र फलांशमनुभवबाधेन निराकृत्य प्रसक्तप्रतिषेधरूपप्रयोजकांशस्यापि अनुपपत्त्या परिशेषासंभवमाहेत्यर्थः । **परिहर्तुमिति** । बहिःसत्त्वनिषेधपरत्वेनान्यथासिद्धत्वादनुभवस्य तद्विरोधो नेति परिहर्तुमित्यर्थः । **अन्योन्याश्रय इति** । सिद्धे ह्यान्तरत्वेऽनुभवस्य बहिःसत्त्वनिषेधपरत्वेनान्यथासिद्धिकल्पनम् । तत्कल्पने चानुभवविरोधाभावे अन्तःसत्त्वकल्पनमित्यन्योन्याश्रय इत्यर्थः । **स्वनिष्ठत्वेनेति** । यदपरोक्षमित्युच्यते तन्निष्ठत्वेनेत्यर्थः । इन्द्रियसन्निकर्षमन्तरेणेत्यस्यापरोक्षत्वेनाभिमतरजतस्य य इन्द्रियसन्निकर्षस्तमन्तरेणेति वा यस्य कस्यापीन्द्रियसन्निकर्षमन्तरेणेति वा अर्थ इति विकल्पार्थः । **बाह्यतयेति** मूलम् । स्वनिष्ठेन्द्रियसन्निकर्षमन्तरेणापरोक्षत्वस्य बाह्यतायां सत्त्वात् । न हि बाह्यताया इन्द्रियसन्निकर्षोऽस्तीति भावः । **अन्त्य इति** । यत्किञ्चिन्निष्ठेन्द्रियसन्निकर्षमन्तरेणेति द्वितीय इत्यर्थः । कुतो ज्ञानस्येन्द्रियसंप्रयोगादेवापरोक्षत्वम् । स्वप्रकाशत्वाभ्युपगमेन तदभावोपपत्तेरित्यत आह **वृत्तिज्ञान इति** । अनेन दृष्टान्तधर्मी व्याख्यातः । **निराकरिष्यमाणत्वादिति** । ज्ञानपादीयज्ञानदृष्टिमात्रेऽप्यप्रामाण्यं तस्येत्यनुभाष्यव्याख्यानरूपमूल इति योजना । ननु तथापि ज्ञानस्य मानसवेद्यतानङ्गीकारात्साक्षिणश्च वेदान्तिभिरिन्द्रियत्वानङ्गीकारात्कथं ज्ञाने स्वनिष्ठेन्द्रियसन्निकर्षसत्त्वमित्यतः स्वमते साक्षिण इन्द्रियत्वाद्युक्त इन्द्रियसन्निकर्ष इत्युपपादनायैवाङ्गीकारादिति मूले उक्तमित्याशयं दर्शयति **अङ्गीकारादित्यनेनेति** । **आरोपविशेष इति** । दहनरूपार्थस्यान्तःसत्त्वे वक्ष्यमाणबाधकस्येवेतररजतादिरूपार्थाङ्गीकारे तादृशबाधकस्याभावादिति भावः । मूले प्रथमादिपदेन रज्जुवल्मीकादिद्वितीयादिपदेन च भुजङ्गपुरुषादि गृह्यते । दंशनादि तु तृतीयेनेति ज्ञेयम् । नन्वन्तःसत्त्वं नाम बुद्धावारोपमात्रम् । एवं च वस्तुतोऽन्तर्दहनाद्यभावान्न दाहादिप्रसङ्ग इत्यतो मूले अन्यथेत्याद्युक्तम् । तत्रान्यथेत्यस्यार्थोऽप्रतीतेरन्यथेत्यनूद्य तदर्थमाह **अन्यथेति** । आन्तरस्य बाह्यतावभासो भ्रम इत्यङ्गीकारे बाधकस्य बाधकत्वानुपपत्तिस्तेन रजतनिषेधादित्याशङ्कापरिहाराय तस्य नेदमिति बाह्यतानिषेधेनैवेत्यादिग्रन्थेन रजतनिषेध-





कल्पनागौरवमुक्तं परेण । तन्निरासो मूले न प्रतीयतेऽतो मूलोक्तकार्यान्तरार्थोक्त्यैव तन्निरासससिद्धेर्न न्यूनतेत्याशयेन मूलकारीयोक्तिविप्रोषाश्रयणेन बाधानुपपत्तिमपि परपक्षे दर्शयति **अत्रेति** । **गौरवमितीति** शब्दस्य सूचयतीत्युत्तरेण संबन्धः ।

**स०व्र०—** ननु बहिरिन्द्रियासंप्रयोगे सतीति विवक्षितमतो न साधनशून्यतेत्यत आह **किं चेति** । **आत्मख्यातिपक्ष इति** । विज्ञानख्यातिपक्ष इत्यर्थः ।

**विठ्ठ०—** **तत्सत्त्वे** बहिष्ठतायाः सत्त्वे । असत्त्वावेदकप्रत्ययाविरोधमाशङ्कते **बहिस्सत्त्वमेवेति** । उक्तानुमानमेव तत्र प्रमाणमित्यतः इन्द्रियसंप्रयोगे असतीत्यत्र किं प्रतीयमानरजतादिसन्निकर्षमन्तरेणापरोक्षत्वे हेतुत्वेन विवक्षितं यत्किञ्चिद्वस्तुसन्निकर्षमात्रमन्तरेणेति विकल्पं मनसि निधायाह **इन्द्रियसंप्रयोगमिति** । द्वितीये त्वाह **शुक्तिसंप्रयोगेनेति** । **ज्ञानस्येति** । ज्ञानस्य घटपटादिविषयकस्य वृत्तिरूपत्वेन स्वप्रकाशत्वाभावात् । प्रत्युत स्वरूपेन्द्रियसंप्रयोगाभिव्यक्तसाक्षिरूपज्ञानविषयताङ्गीकारादिति भावः । **आत्मख्यातीति** । परेण विज्ञानस्यैव आत्मत्वाङ्गीकारादित्थमुक्तिः ।

**चषकः—** **दृष्टान्तश्च साधनविकल इति** । वृत्तिज्ञाने स्वप्रकाशतायाः प्रतिविधास्यमानत्वादिति भावः । **ज्ञानस्येन्द्रियसंयोगादिति** । साक्षिरूपेन्द्रियसंयोगादित्यर्थः ।

बौद्धैकदेशि-अख्याति-अनुवादः तन्निरासश्च—

**४०७ सु०— अन्ये पुनः 'इदं रजतमि'ति प्रतीतिरसदालम्बनैवेत्यास्थिताः ॥ तथा हि । न तावदिदं सदेव, बाधबोधविरोधात् । नापि सदसत्, तत्रैव तदैव तस्यैव सदसत्त्वविरोधात् । देशकालप्रकारव्यवस्थया सदसत्त्वाङ्गीकारे घटादितुल्यतापातात् । किञ्चैवं सति 'सदिदं रजतमि'ति ज्ञानं भ्रान्तिर्नैव भवेत्, सत्त्वस्य विद्यमानत्वात् । सदसदात्मकं सत्त्वेन विषयीकुर्वत्कथं न भ्रान्तिरिति चेत्, तत्किमेकदेशादर्शनं भ्रान्तिः । तथा च बाधकप्रत्ययोऽप्यसत्त्वमात्रावलम्बी न कथं भ्रान्तिः । 'सदेवे'त्यसत्त्वनिषेधाद् भ्रान्तित्वमिति चेत् तर्हि 'असदेवे'ति सत्त्वप्रतिषेधाद् बाधस्यापि भ्रान्तिताऽनिस्तारः । तस्मादसदेव विभ्रमालम्बनम् । न चासतोऽवभासानुपपत्तिः विवेकाग्रहवादस्य निरस्तत्वात् । अन्यथाख्यातिवादिभिरसत एव तादात्म्यस्य संसर्गस्य वा प्रतिभासाभ्युपगमात् । विज्ञानख्यातिवादिभिरप्यसत्याया एव बाह्यतायाः प्रतीत्यङ्गीकारात् । 'सत एव प्रतीतिरि'ति पक्षे न भ्रान्तिर्नापि बाध इति ॥**





**परि०**— बौद्धैकदेशिनामसत्ख्यातिवादिनां मतं निरसितुमनुवदति **अन्ये पुनरि**त्यादिना **न भ्रान्तिर्नापि बाध** इत्यन्तेन । कुतोऽसद्विषयैव धीरित्यतः परिशेषादिति भावेन प्रसक्तं सत्त्वपक्षं सदसत्त्वपक्षं च क्रमेण निराह **न तावदि**त्यादिना **तस्मादसदेवेत्य**न्तेन । **इदमिति** । इदं रजतमितिप्रतीयमानम् । **बाधेति** । भ्रान्तित्वायोगाच्चेत्यपि ध्येयम् । **तस्यैवेति** । येन धर्मेण विशिष्टस्य सत्त्वं तेन विशिष्टस्यैवासत्त्वमेवेत्येतद्विरोधान्नेत्यर्थः । **घटादीति** । घटादेरपि देशभेदेन कालभेदेन घटत्वपटत्वादिप्रकारभेदेन च सत्त्वासत्त्वयोर्भावात् । तथा चेयं भ्रान्तिः । घटादिधीस्तु प्रमेति न स्यादिति भावः । अस्त्वित्यतो दोषमाह **तथा चेति** । **असत्त्वमात्रेति** । सदसदात्मके रजते सत्त्वमात्रावगाहिनो भ्रमत्वेऽसदेवेदं रजतमभादित्यसत्त्वमात्रग्राहिणः कथं न भ्रमत्वमतो नैकदेशविषयकत्वेन भ्रमत्वमिति भावः । सदसदात्मकमितिपक्षे इदं रूप्यमिति धियो भ्रमत्वं प्रकारान्तरेणाशङ्क्य निराह **सदेवेति** । परिशेषादसद्धीरुपेयेत्याह **विवेकेति** । अन्यथाख्यातिवादिनाऽप्युपगतेरसद्धीरुपेयेत्याह **अन्यथा-ख्यातीति** । भ्रान्तिबाधान्यथानुपपत्त्या चासतो धीरुपेयेत्याह **सत एवेति** । पूर्वं रजतस्य सन्मात्रत्वे बाधाद्ययोग उक्तोऽत्र तु सत एव प्रतीताविति भेदः ।

**यादु०**— **विवेकाग्रहवादस्येति** । तथाच न तद्रीत्येदंरजतमिति ज्ञानस्य सन्मात्रविषयकत्वमित्यसतो-ऽप्यवभासो युक्त इति भावः ।

**वं०प०**— **देशकालेत्यादि** । कस्मिंश्चिद्देशे कस्मिंश्चित्काले केनचित्प्रकारेण सत् । देशान्तरे कालान्तरे प्रकारान्तरेणासदित्येवं व्यवस्थया सदसत्त्वाङ्गीकारान्न विरोध इत्यर्थः । **घटादीति** । रजतस्य घटादितुल्यतापत्त्या तत्प्रतीतेर्न भ्रमत्वप्रसिद्धिरित्यर्थः । **सत्त्वेन** केवलं सत्त्वेन । **सदेवेति** । सदसदात्मकस्य रजतस्येति शेषः । असदेवेत्यत्राप्ययं शेषः कार्यः । अन्यत्र सदेवात्र प्रतीयत इति पक्षे बाधकमाह **सत एवेति** ।

**आनन्दः**— असत्ख्यातिं दूषयितुमाह **अन्य इति** ।

**कं०रा०**— **एवं सति** रजतस्य सदसत्त्वे सति । असतोऽवभासानुपपत्तिरिति किं विवेकाग्रहवादि-मतावलम्बनेनोच्यत उतान्यथाख्यातिवादिमतावलम्बनेनाहोस्विद्विज्ञानख्यातिवादिमतावलंबनेनाथवा सत एव रजतस्य प्रतीतिरिति पक्षावलम्बनेनेति विकल्प्य । नाद्य इत्याह **विवेकेति** । विवेकाग्रहवादस्यैव निरस्तत्वात्तदवलम्बनेनासतो-ऽवभासानुपपत्तिरिति वक्तुमशक्यमिति भावः । द्वितीयं निराह **अन्यथाख्यातिरिति** । तृतीयं निराचष्टे **विज्ञानेति** । चतुर्थं निराह **सत एवेति** । तथा च भ्रान्तिबाधान्यथानुपपत्त्या तैरप्यसदवभासस्याङ्गीकर्तव्यतयाऽसतोऽवभासा-नुपपत्तिरिति वक्तुमशक्यमिति भावः ।

**श्रीनिधि०**— **अन्ये** शून्यवादिनः । **एवं सतीति** । सदसत्त्वाङ्गीकार इत्यर्थः ।





**वा०चं०**— सत्पक्षनिरासानन्तरमसत्पक्षं निरसितुमनुवदति **अन्य इति** । **एवेति** । स्वपक्षाद्वैलक्षण्यं प्रदर्शयति । सदेवेत्यन्तर्बहिःपुरोदेशदेशान्तरसत्त्वोक्तिः । 'स्वरूपपररूपाभ्यां नित्यं सदसदात्मके । वस्तुनि ज्ञायते किञ्चिद्रूपं कैश्चित्कदाचने'ति रजतं स्वरूपेण सत् शुक्तिरूपेणासत् तत्र कस्यचित्सद्रूपप्रतीतिरपरस्यासद्रूप-प्रतीतिरिति कस्यचित्पक्षमाशङ्क्य निषेधति **नापीति** । भेदाभेदवत्सत्त्वासत्त्वयोर्विरोध एव नास्तीति वदन्तं प्रत्याह **किञ्चेति** । ननु तथाऽपि परिशिष्यमाणेऽप्यनुपपत्तिरित्याशङ्क्ते **न चेति** । प्रसक्तैर्वादिभिस्तदनुपपत्तेरनुद्भावनीयत्वमाह **विवेकेत्यादिना** ।

**वा०र०**— **सत्पक्षेति** । बहिःसत्त्वनिरासोपक्रमे तत्रासतः सज्ज्ञानाधीनज्ञानत्वात्सत्पक्षस्य प्रथमोप-स्थिततयेति हेतोरभिधानादत्र सत्पक्षनिरासानन्तरमित्येवोक्तम् । असन्निरूपकसत्पक्षनिरासानन्तरमित्यर्थः । **स्वपक्षादिति** । एतन्मतनिरासावसरे यदि सदेव शुक्तिकाशकलमित्यादिवक्ष्यमाणस्वपक्षादित्यर्थः । **अन्तर्बहिरिति** । अन्तःसत्त्वं बहिःसत्त्वरूपपक्षद्वयमध्य एव बहिःसत्त्वस्य पुरस्सत्त्वदेशान्तरे सत्त्वरूपत्वेन द्वैविध्याश्रयणेन पक्षचतुष्टयोक्तिः । अन्तःसत्त्वबहिःसत्त्वपुरोदेशसत्त्वेऽपि संबन्धः । बहिःसत्त्ववादिमते पुरोदर्शनाभावेन पुरःसत्त्वं निषिध्य देशान्तरसत्तास्वीकारस्य प्रागुपपादितत्वात्पुरःसत्त्वनिराकरणलाभ इति ज्ञेयम् । **किञ्चिद्रूपमिति** । उक्तविधवस्तुनि कैश्चित्कदाचन कस्मिंश्चित्काले स्वरूपं ज्ञायते । कैश्चिच्च कदाचन पररूपं ज्ञायत इति योजना । अत एव तत्र कस्यचिदित्यादि वक्ष्यति । **कस्यचित्पक्षमिति** ।.................. । **भेदाभेदवदिति** । भेदाभेदयोरिवेति षष्ठ्यर्थे वतिः । गुणगुण्यादिष्वयावद्द्रव्यभाविष्वेकदेशकालयोरेव भेदाभेदयोर्दर्शनात्तयोर्विरोध एव यथा नास्ति तथेत्यर्थः । भेदाभेदयोर्यथा विरोधस्तथा सत्त्वासत्त्वयोरस्स नास्तीति व्यतिरेकदृष्टान्त इत्यप्याहुः । विरोध एवेत्येव-कारो देशकालादिभेदेन व्यवस्थाकल्पनं त्वप्रसक्तमिति सूचनार्थः । **तथापीति** । प्रसक्तसदादिप्रकारेऽनुपपत्ति-सद्भावेऽपीत्यर्थः । **अनुपपत्तिरिति** । तथा च साम्यादसदेवेति परिशेषानुपपत्तिरिति पूरणीयम् । **प्रसक्तैरिति** । असत्ख्यातिबहिःसत्त्वान्तःसत्त्ववादिभिस्त्वित्यर्थः । **आहेति** । क्रमेणेति शेषः । इत्यादिनेत्युक्तिरपि क्रमाभि-प्रायेणेति स्पष्टम् । मूले **सत एवेति** । विषयासत्त्वस्य भ्रममूलत्वेन विषयस्य सत्त्वेऽपि भ्रमत्वे घटादिप्रतीतिमात्रस्य भ्रमत्वापत्तिः । यदा भ्रान्तेरेवाभावस्तदा तन्मूलको बाधकप्रत्ययः सुतरामनुपपन्न इति भावः । यद्वा सत एव प्रतीतौ बाधोऽपि न । यथा वस्तुप्रतीतिरूपा भ्रान्तिरन्यथाकारावगाहिप्रत्यये बाध इति प्राप्त्या भ्रान्तिबाधस्वरूप-विनिमयापत्तिरित्यर्थः ।

**स०व्र०**— **विवेकाग्रहवादस्येति** । तथाच न तद्रीत्येदंरजतमिति ज्ञानस्य सन्मात्रविषयकत्वमिति भावः ।

**विठ्ठ०**— बौद्धैकदेशिनामसत्ख्यातिवादिनां मतं दूषयितुमनुवदति **अन्ये पुनरिति** । यद्यपि प्रतीतस्य रजतस्यासत्त्वमस्मत्संमतमेव । तथापि ज्ञानविषयस्य शुक्तिशकलादेरधिष्ठानस्य प्रधानस्य च सत्त्वमङ्गीक्रियत इति तद्वैलक्षण्यप्रदर्शनायासदालम्बनैवेत्युक्तमिति बोध्यम् । असदालम्बनैव प्रतीतिरिति कुत इत्यतः परिशेषादिति भावेन प्रसक्तं सत्त्वपक्षं चापाकरोति **न तावदित्यादिना** । यथा धर्मधर्मिणोः खण्डितस्थले भेदाभेदाङ्गीकारे न

विरोधस्तथास्मन्मते सत्त्वासत्त्वयोरप्यविशेष इत्यत आह **किञ्चेति । तथा चेति** । एकदेशदर्शनस्य भ्रान्तित्वाङ्गीकार इत्यर्थः । परिशिष्यमाणासत्त्वपक्षेऽप्यनुपपत्तिमाशङ्क्य निराकरोति **न चेति** । प्राभाकरमते विवेकाग्रहवादस्य निरस्तत्वेनासत एवाभेदस्य संसर्गस्य प्रतिभासस्यावश्याभ्युपगन्तव्यत्वादित्याह **विवेकेति** । अभ्युपगतश्च तार्किकादिभिरसत्प्रतिभास इत्याह **अन्यथाख्यातिवादिभिरित्यादिना** । परिशेषमुक्त्वान्यथानुपपत्तिमपीदं रजतमिति प्रतीतेरसदालम्बनत्वे प्रमाणयन्ति **सत एवेति** । पूर्वं रजतस्य सत्त्वपक्षे बाधाद्ययोग उक्तः । अत्र तु सत एव प्रतीत्यङ्गीकार इति भेदः ।

**प्रदीपः**— असत्ख्यातिमुपस्थाप्यापवदति **अन्ये पुनरिति** ।

**४०८ सु०— अत्रेदं विवेचनीयम् । केयमसत्ख्यातिरिति ॥ यदि सदेव शुक्तिकाशकलं सकलदेशकालासद्रजतात्मनाऽवगाहमानं ज्ञानमिति, तदाऽनुज्ञया वर्तामहे । यथोक्तम् । 'तस्माद्यदन्यथासन्तमन्यथा प्रतिपद्यते । तन्निरालम्बनं ज्ञानमसदालम्बनं च तदि'ति ॥ यदि पुनः 'इदं रजतमि'त्यवभासे चकासत् 'असदेवाखिलमि'ति, तदसत्; इदङ्कारास्पदस्य शुक्तिकाशकलस्य प्रागूर्ध्वं सत्त्वावगमात् । यदि च न तदिदङ्कारास्पदं तदा न भ्रान्ति-बाधयोरङ्गुल्यग्रेण निर्दिशेन्नोपादद्यान्न परित्यजेत् ॥**

**परि०**— एवंरूपख्यातिः तैरुपेतेत्यत्र किं ज्ञापकं येन भवतां तत्रानुमतिः स्यादित्यतः तदीयसंमतिमाह **यथोक्तमिति । चकासत्** भासमानम् । **नोपादद्यात्** भ्रान्तिकाले । **न परित्यजेत्** बाधोत्तरकाल इति भावः ।

**वं०प०**— **अन्यथासन्तम्** प्रतीयमानरजतापेक्षया शुक्तित्वेन सन्तम् । **अन्यथा** रजतत्वेन । अखिलमधिष्ठानमपीति भावः । **तत्** शुक्तिकाशकलम् ।

**आनन्दः**— शुक्तिशकलं नेदंकारास्पदमित्यत्राह **यदि चेति** ।

**श्रीनिधि०**— वाचस्पतिश्लोकं संवादयति **यथोक्तमिति** । निरालम्बनमित्यस्यार्थः असदालम्बनमिति । **न च परित्यजेत्** इत्युपलक्षणमेतत् । रूप्यांशे बाधवत् इदमंशे इदमिदं नेति बाधाभावादिति ज्ञेयम् ।

**वा०चं०**— एवमनूदितं पक्षं निरसितुं स्वपक्षाद्विवेचयति **अत्रेदमिति** । सकलकालदेशेत्यन्यथा-ख्यात्यन्तरपक्षाद्विवेचनम् । अविरुद्धत्वात्कस्यचिदन्यथाख्यातिवादिन उक्तं संवादयति **यथोक्तमिति** ।





**वा०र०—** **स्वपक्षादिति** । अनेन विवेचनीयमिति स्वपक्षस्येति मूले यदि सदेवेत्यादिक्रमेण स्वपक्षाद्विवेचनीयमित्यर्थः सूचितः । **विवेचनमिति** । स्वपक्षस्येति पूरणीयम् । ......................... वाद्यन्तरोक्तिः स्वाभिमतान्यथाख्यातिस्वरूपे कथं संमतितयोदाह्रियत इत्यत आह **अविरुद्धत्वादिति** । स्वमतानुसारित्वादित्यर्थः ।

**स०व्र०—** अत्र परेषां वाक्यं संमतित्वेनाह **यथोक्तमितीति** । तन्निरालम्बनमित्यस्यैव विवरण-मसदालम्बनमिति । **प्रागूर्ध्वं चेति** । भ्रमादिति शेषः ।

**वि्ठ०—** एवमनूदितपक्षं निरसितुं असत्ख्यातेरस्माभिरप्यङ्गीकाराद्विवेचयति **अत्रेदमिति** । तार्किकपक्षा-द्भेदसिद्धये सकलदेशकालेत्याद्युक्तं अन्यथाख्यातित्वेऽप्यसत्ख्यातिरुपपद्यत इत्यत्र वृद्धसंमतिमाह **यथोक्तमिति** । निरालम्बनमित्यस्यैव विवरणम् **असदालम्बनमिति** । **अखिलमिति** । इदङ्कारास्पदं शुक्तिकाशकलं रजतं तादात्म्यं रजतत्वं संसर्गश्चेत्येतदखिलमित्यर्थः । **न परित्यजेत्** । बाधानन्तरमिति ज्ञेयम् ।

**प्रदीपः—** **यथोक्तमिति** । यत् ज्ञानमन्यथास्थितमर्थमन्यथावभासयति ।

**४०९ सु०— किञ्चास्य ज्ञानस्य कारणं वक्तव्यम् । दुष्टेन्द्रियादिकमिति चेन्न तस्य सन्निकर्षाद्यनपेक्षस्य कारणतायामतिप्रसङ्गात्, असता च सन्निकर्षायोगात् । शुक्त्यादिना सन्निकर्षोऽस्तीति चेन्न तथा सति तज्ज्ञानस्यावर्जनीयत्वात् । अथ संवृतिरेव रजतादि-प्रतिभासकारणं तदा अन्धस्याप्यसन्निहिते शुक्तिशकले किं न स्यात् । अथ काचादिव-च्छुक्तीन्द्रियसन्निकर्षोऽपि संवृतेः सहकारीति चेन्न तथात्वे भूतलवच्छुक्तेरपि शुक्तित्वेनाव-भासप्रसङ्गात् । दोषनिमित्तः शुक्तित्वानवगमोऽपि कारणमिति चेन्न अधिष्ठानत्वानभ्युपगमे भूतलशुक्तिशकलयोरविशेषेण कस्यानवगमः कारणमिति विवेक्तुमशक्यत्वात् ॥**

**बिन्दुः—** **अथ संवृतिरेवेति** । शून्याद्वैतवादिना व्यवहारोपपादनार्थं मायावाद्यभ्युपगत-मायासमानयोगक्षेमः संवृत्त्याख्यः पदार्थः स्वीकृतोऽस्ति । तदेव वियदादे रजतादेश्च प्रतिभासे कारणमित्यर्थः । **अधिष्ठानत्वानभ्युपगम इति** ।

**परि०—** **अस्येति** । असन्मात्रविषयकस्येत्यर्थः । **तज्ज्ञानस्येति** । एवं चेदं रूप्यमिति ज्ञानं शुक्तिविषयकमप्यासीदित्यसन्मात्रविषयकमित्युक्तिभङ्ग इति भावः ।

**यादु०—** **शुक्त्यादिनेति** । तन्मते प्रागूर्ध्वं च सत्यं शुक्तिकाशकलमिदंकारास्पदात् भिन्नमेवेति भावः ।





**वं०प०— शुक्त्यादिनेति** । मन्मते इदंकारास्पदमेवाधिष्ठानं तच्चासदेव । शुक्तिशकलं चाधिष्ठान-भूतेदङ्कारास्पदाद्भिन्नं प्रागूर्ध्वं च विद्यमानं सदेव । तथाच तेन सन्निकर्षो युक्त इत्यर्थः । **तज्ज्ञानस्येति** । इदङ्कारास्पदभिन्नस्य शुक्तिशकलस्येन्द्रियसन्निकृष्टत्वेनेयंशुक्तिरिति ज्ञानस्याप्यवर्जनीयत्वेनेदंरजतमिति भ्रमानुप-पत्तिरिति भावः । **संवृतिरेवेति** । अविद्यैव रजतादिप्रतिभासे कारणं न शुक्तीन्द्रियसन्निकर्षो येनोक्तदोषः स्यादित्याशयः । किं न स्यात् रजतादिप्रतिभासः । इन्द्रियसन्निकर्षस्य कारणत्वानङ्गीकारात्कारणीभूतायाश्च संवृतेरन्धस्यापि सत्त्वाच्चक्षुष्मतोऽप्यसन्निहिते शुक्तिशकले रजतप्रतीतिः स्यादिति भावः । **सन्निकर्षोऽपीति** । नान्धचक्षुष्मतोः सन्निहितासन्निहितशुक्तिसन्निकर्षोऽस्तीति भावः । **भूतलवदिति** । इदंरजतमिति ज्ञानसमये यथा भूतलं भूतलत्वेन प्रतीयते तथेत्यर्थः । कारणं रजतप्रतिभास इति शेषः । **कस्यानवगम इति** । किं शुक्तित्वानवगमो भ्रमकारणं भूतलत्वानवगमो वेति विवेक्तुमशक्यत्वाद्विनिगमनाविरहादिति भावः ।

**आनन्दः— तथा सतीति** । एवं च पुरोदेशे तस्य सत्त्वापत्त्या सर्वासत्त्वाभ्युपगमासंभव इति भावः । संवृतिरविद्या न स्यात् रजतप्रतिभास इति शेषः । **अथेति** । तथाच नान्धस्य तदवभास इति भावः ।

**कं०रा०— तथा सतीति** । शुक्तिसन्निकर्षस्य सत्त्वे इदंरजतमिति ज्ञानस्य शुक्तिविषयकत्वावश्यंभावात् तत्र भासमानं सर्वमसदित्येतद्गतमिति भावः । **संवृतिरेवेति** । एवशब्देन शुक्तिसन्निकर्षो व्यावर्त्यते । तथा च न तज्ज्ञानावश्यंभाव इति भावः । **अन्धस्येति** । तदा संवृतेरेव कारणत्वेऽन्धस्यापि रजतादिप्रतिभासः स्यात् । अनन्धस्याप्यसन्निहितेऽपि शुक्तिकाशकले रजतादिप्रतिभासः स्यादित्यापादनद्वये तात्पर्यम् । **सहकारीति** । तथा चापादनद्वयं न प्रसज्यत इति भावः ।

**श्रीनिधि०— भूतलवदिति** । इह भूतले रूप्यमित्यत्र यथा भूतलं भूतलत्वेन प्रतीयते तथा शुक्तिरपि शुक्तित्वेन प्रतीयते इत्यर्थः ।

**वा०चं०**— नन्वयं घट इत्यत्रानिदङ्कारास्पदस्य भूतलस्येवानिदङ्कारास्पदशुक्तेरप्यङ्गुल्यादिनिर्देशः किं न स्यादित्यत आह **किञ्चेति** । **अधिष्ठानत्वानभ्युपगम इति** । यत्र शुक्तित्वानवगमः कारणतया तवाभिमतस्तत्र दोषनिमित्तकभूतलानवगमः कारणमित्यपि वक्तुं शक्यतया शुक्तित्वानवगमकारणतानिर्धारणानुपपत्त्या तदर्थं भूतलाद्विशेषेऽवश्याङ्गीकर्तव्ये तत एव शुक्तेरिदङ्कारास्पदतासिद्धिरिति भावः ।

**वा०र०**— अङ्गुल्या निर्देश इति पाठः । **अङ्गुल्यादिनिर्देश** इति पाठे आदिपदेन तदग्रं गृह्यते । अग्रस्य व्युत्क्रमेणादित्वात् । संन्यासिनां न्यासकाले अग्रस्यादितादर्शनादित्यप्याहुः । निर्देशादय इत्युत्तरमूलानुसार्यङ्गुल्या निर्देशादिरिति पाठस्तु स्वरस एव । आदिपदेनोपपादनादिपरिग्रहः । तत्र पक्षेऽयं घट इत्युपलक्षणम् । इदं जलं इदं घृतमित्यादिप्रत्यये अनिदंकारास्पदस्यापि पात्रादेरङ्गुल्या निर्देशतदुपादानादेरिवेति दृष्टान्तो व्याख्येय इति ज्ञेयम् ।





**स०व्र०— शुक्त्यादिनेति**। तन्मते प्रागूर्ध्वं च सत्यं शुक्तिकाशकलमिदंकारास्पदात् भिन्नमेवेति भावः। अन्धस्यापीत्यनन्तरं चक्षुष्मतोऽपि वेति शेषः।

**वि०— कारणं वक्तव्यमिति**। किं तत्कारणं दुष्टेन्द्रियादिकं वा संसृतिर्वा तत्राद्यमाशङ्कते **दुष्टेन्द्रियादिकमिति**। दुष्टेन्द्रियादिकं च सन्निकर्षाद्यनपेक्षं कारणमुत तदपेक्षमिति विकल्पं मनसि निधायाद्ये दूषणमाह **तस्येति**। द्वितीये कथं सन्निकर्षः त्वया रजतादेरसत्त्वस्वीकारादित्याशयेनाह **असतेति**। शुक्तिसन्निकृष्टेन्द्रियेण भ्रान्त्युत्पत्तिरिति शङ्कते **शुक्त्यादिनेति**। **तथा सतीति**। सन्निकृष्टेन दुष्टेन्द्रियेण ज्ञानोत्पादाङ्गीकारे शुक्तिकाविषयत्वापत्त्या तस्याश्च सत्यत्वान्नासन्मात्रख्यातित्वमिति भावः। संवृतिरज्ञानकारणमिति पक्षं दूषयति **अथेति**। **अन्धस्येति**। अन्धस्य शुक्तिशकलासन्निहितदेशवर्तिनः पुरुषस्यासंवृतिमत्वादिति भावः। **तथात्व इति**। काचादेः दोषस्य भ्रान्तिजनने सहकारित्ववच्छुक्तिकेन्द्रियसन्निकर्षस्यापि सहकारित्वाङ्गीकारे चक्षुस्सन्निकृष्टभूतलवच्छुक्ते शुक्तित्वप्रकारेण प्रतीतिः स्यादित्यर्थः। न भूतलवच्छुक्तित्वप्रतिभासः शङ्कनीयः। तदनवभासस्यापि कारणत्वादिति शङ्कते **दोषनिमित्त इति**। अत्र वक्तव्यं किं शुक्तिशकलस्यारोपाधिष्ठानत्वमङ्गीक्रियते नेति। नाद्यः शुक्तिशकलस्य अधिष्ठानत्वे सत्यत्वप्रसङ्गेन चकासदसदेवाखिलमित्यस्य भङ्गप्रसङ्गात्। द्वितीये त्वाह **अधिष्ठानत्वानभ्युपगम इति**। भूतलेन्द्रियसन्निकर्षवदस्यापि सन्निकर्षस्यावर्जनीयसन्निहितत्वापत्त्या कारणतैव अनुपपन्ना। अन्यथा तस्यापि कारणत्वं स्यादिति भावः।

**४१० सु०— अपि चासदेव रजतमवभासमानं न तावदसत्तयैवावभासते। अर्थक्रियाऽनर्हे प्रवृत्त्यनुपपत्तेः। सत्तया प्रतिभासे त्वन्यथाख्यातिरङ्गीकृतेति 'शुक्तिरेव रूप्यतयाऽवभासत' इति कुतो नाङ्गीकरणीयम्। तथा सत्यङ्गुल्यग्रनिर्देशादयोऽप्यनुकूलिताः स्युः। केशोण्ड्रकादिभ्रमस्तर्हि कथमिति चेत् सोऽपि तेजःप्रभृतिद्रव्यमालम्ब्यैवेति वदामः॥ तस्मान्नैवंविधासत्ख्यातिपक्षोऽपि साधीयान्॥ ४॥**

**बिन्दुः— ननु** यथैव त्वयाधिष्ठानत्वे विनिगमकं वाच्यं तथैव मयाऽप्यनवगतविशेषस्य निमित्तत्वेऽपि। भूतलत्वप्रतिभासेऽपि भ्रमदर्शनान्न तदधिष्ठानमिति यदि तत एव तदनवगमोऽप्यस्तु निमित्तमित्यतो दूषणान्तरमाह **अपि चेति**।

**परि०—** भ्रमस्य साधिष्ठानत्वे बाधकमाशङ्क्य निराह **केशोण्ड्रकादीति**। **एवंविधेति**। सदविषयकेत्यर्थः।

**यादु०— केशोण्ड्रकादीति**। तत्राधिष्ठानाभावादिति भावः।





**वं०प०— कुतो नाङ्गीकरणीयमिति** । असतः सत्त्वेन प्रतीत्यङ्गीकारे सतोऽप्यसत्त्वेन प्रतीतिरङ्गीक्रियतामित्यर्थः । **तथा सति** शुक्तिरेव रूप्यतयाऽवभासत इत्यङ्गीकृते सति । **निर्देशादय** इत्यत्रादिपदेनोपादानपरित्यागौ ग्राह्यौ । **कथमिति** । तत्राधिष्ठानाभावादिति भावः । **तेजःप्रभृतीति** । आलोकमण्डलेत्यर्थः । तथाच तदेवाधिष्ठानमिति भावः ।

**वा०चं०**— ननु भूतलाद्यधिष्ठानत्वादिरूपो विशेषोऽस्तु शुक्तेरिदङ्कारास्पदता तु रजतस्यैवास्त्वित्यत आह **अपि चेति** । नन्वेतावताऽपि पक्षद्वयसाम्यान्न शुक्तेरिदङ्कारास्पदतानिश्चय इत्यतः स्वपक्षे उपोद्बलकमाह **तथा सतीति** । **सोऽपीति** । अन्यत्र तदभावादिति भावः ।

**वा०र०— सिद्धिरितीति** । इदंकारास्पदत्वस्याधिष्ठानगतत्वादिति भावः । **अन्यत्रेति** । तेजसोऽन्यत्र केशोण्ड्रकादिभ्रमाभावादित्यर्थः ।

**स०व्र०— सोऽपि तेजःप्रभृतीति** । अत एव निबिडान्धकारे न तथा भ्रम इति भावः । आदिपदगृहीते कोलाहलदशायामपि शान्तः कोलाहल इति विभ्रमे काललक्षणाधिकरणसङ्ग्रहाय प्रभृतिपदम् ।

**वि०ट०**— न च विनिगमनाविरह इत्यत आह **तथा सतीति** । अधिष्ठानमेवात्यन्तासदारोप्यात्मना प्रतीयत इत्यङ्गीकारे व्यभिचारः । केशोण्ड्रकादिभ्रमे अधिष्ठानादर्शनादित्याशङ्क्य समाधत्ते **केशोण्ड्रकेति** ।

**॥ मायावादि-अख्याति-वादः ॥**

**मायावादि-अख्याति-अनुवादः—**

**४११ सु०— मायावादिनो वदन्ति; अनिर्वचनीयमेव शुक्तिकादौ प्रतीयमानं रजतादिकमिति ॥**

**यादु०**— एवमारोप्यस्य सत्त्वासत्त्वसदसत्त्वपक्षान्निरस्याथ सदसद्वैलक्षण्यपक्षमपि प्रतिक्षेप्तुमाह **मायावादिन इति** ।

**आनन्दः**— अनिर्वचनीयख्यातिं दूषयितुमनुवदति **मायावादिन इति** ।

**वा०चं०**— सदसत्सदसत्पक्षान्निरस्य तन्निरूप्यतयाऽधुनाऽनिर्वचनीयख्यातिं निराकरोति **मायेति** ।





**वा०र०— सदसत्सदसत्पक्षानिति** । आरोप्यमाणं सदित्येकः पक्षः असदित्यपरः । सदसदित्यन्य इत्येतान्निरस्येत्यर्थः । **तन्निरूप्यतयेति** । अनिर्वचनीयत्वस्य तत्त्वप्रदीपिकोक्तवक्ष्यमाणलक्षणानुसारेण यन्न सन्नाप्यसदित्यादिरूपेण सत्त्वादिप्रतिषेधरूपत्वादिति भावः ।

**विठ्ठ०**— अनिर्वचनीयख्यातिमतमपाकर्तुमाह **मायावादिन इति** ।

**चषकः**— अनिर्वचनीयत्वज्ञानौपयिकज्ञानविषयीभूतान् सत्त्वासत्त्वसदसत्त्वकल्पान्निरस्य संप्रति-तत्प्रतिपत्त्यधीनप्रतिपत्तिकानिर्वचनीयत्वकल्पं प्रत्याचिख्यासुरनुवदति **मायावादिनो वदन्तीत्यादिना** ।

**प्रदीपः**— अनिर्वचनीयख्यातिमनूद्य निराचष्टे **मायावादिन इति** ।

मायावादि-अख्याति-निरासः—

**४१२ सु०— तदनुपपन्नं प्रमाणाभावात् । 'शुक्तिरजतादिकमनिर्वाच्यं दोषप्रयुक्तभानत्वाद् भ्रान्तिसिद्धतादात्म्यवदित्यनुमानं मानम्' अत्रेति चेत् ।**

**किमिदमनिर्वाच्यत्वं नाम । यन्न सन्नासन्नापि सदसत्तदनिर्वाच्यं तस्य भावस्तत्त्वमिति चेन्न । शुक्तिरजतादेस्सत्त्वस्य सदसत्त्वस्य चास्माभिरनङ्गीकृतत्वेन सिद्धसाधनत्वात् ॥ अथासत्त्वाभावमात्रं साध्यम्; तथाऽपि 'असदेव रजतं प्रत्यभादि'त्यनुभवविरोधः ।**

**परि०— दोषप्रयुक्तभानत्वाद्** इति बहुव्रीहिः । सद्वैलक्षण्यादिधर्माणां त्रयाणां प्रत्येकं साध्यत्वमित्युपेत्यांशतः सिद्धसाधनमिति भावेनाह **शुक्तिरजतादेरित्यादिना** ।

**यादु०— तादात्म्यवदिति** । दृष्टान्ताभिधानं स्वरीत्यैव । अत एव दूषणावसरेऽस्माभिरसत्त्वेनाङ्गी-कृतत्वादिति वदिष्यति । असत इत्युपलक्षणम् । सत इत्यपि ग्राह्यम् ।

**आनन्दः**— वादे प्रत्यक्षस्योपन्यासानर्हत्वादनुमानं शङ्कते **शुक्तीति** । **किमिदमिति** । सर्वथा निर्वचनानर्हत्वे मूकीभावप्रसङ्गात्प्रकारान्तरेण चानिर्वाच्यत्वस्य वक्तुमशक्यत्वात्प्रश्न इति भावः । किमत्र सत्त्वासत्त्वसदसत्त्वाभावानां प्रत्येकं साध्यता उतासत्त्वाभावमात्रस्यार्थविशिष्टस्य तत्राद्यमंशतः सिद्धसाधनतया दूषयति **शुक्तिरजतादेरिति** । द्वितीयं शङ्कते **अथेति** । न तृतीयो सिद्धविशेषणत्वात् ।

**कं०रा०— दोषेति** । दोषप्रयुक्तं भानं यस्य तद्दोषप्रयुक्तभानम्, तस्य भावस्तत्त्वं तस्मादित्यर्थः ।





**श्रीनिधि०**— यन्न सन्नाप्यसदिति किमत्र प्रत्येकं साध्यत्वं विवक्षितं उत विशिष्टमिति विकल्पं मनसि निधायाद्य आह **सिद्धसाधनत्वादिति**। द्वितीये अप्रसिद्धविशेषणतेति हृदयम्।

**वा०चं०**— न्यायरत्नदीपावल्युक्तमनुमानं शङ्कते **शुक्तीति**। शुक्तिरजतस्येव तत्तादात्म्यस्यान्यत्र सत्त्वस्य कैरप्यनभ्युपगमात्प्रतीतिमात्रेणासद्वैलक्षण्ये सधिते युक्तं दृष्टान्तत्वमित्याशयेन तादात्म्यवदित्युक्तम्। सत्त्वादिना विचारासहत्वमनिर्वचनीयत्वमिति तत्त्वप्रदीपिकायामुक्तं सिद्धान्तलक्षणमाशङ्कते **यन्नेति**। सद्विलक्षणत्वादीनां प्रत्येकसाधने मिलितानां साधनेऽप्युक्तरीत्या सिद्धसाधनमित्याह **शुक्तीति**। उपलक्षणं चैतत्। विशिष्टसाधने वैयर्थमुद्देश्यसिद्ध्यर्थत्वादेरगतिकागतित्वादित्यपि द्रष्टव्यम्। **तथाऽपीति**। विशिष्टसाधनेऽपीदं द्रष्टव्यम्। अनिर्वाच्यस्य प्रकारान्तरेण निर्वचनेनैतद्दोषाप्रसर इत्यतोऽस्तु यत्किञ्चित्तत्।

**वा०र०**— **न्यायरत्नदीपावल्युक्तमिति**। यद्यपि तत्त्वप्रदीपिकायां अस्तु तर्हि अनुमानं विवादपदमनिर्वचनीयं भ्रमविषयत्वादित्यादिनैतदनुमानमनिर्वचनीयत्वप्रमाणतयाऽऽशङ्क्य अप्रसिद्धविशेषणत्वविरुद्धत्वाभ्यां पराकृत्य अथैतद्दोषपरिजिहीर्षया विमतं सदसद्विलक्षणं दोषप्रयुक्तभानत्वादित्यनुमानमप्याशङ्क्य दृष्टान्ते साध्यवैकल्येन निराकृतम्। तथा चैतदनुमाने अनिर्वाच्यत्वसाध्यकानुमानीयाप्रसिद्धविशेषणतादोषोद्धारेण सदसद्विलक्षणत्वं साध्यतयोपात्तमस्तीति सदसद्विलक्षणमित्येव साध्यनिर्देशस्य मूलेऽपि कर्तव्यत्वप्राप्त्या अनिर्वाच्यमिति साध्यनिर्देशस्यायोगः। तत एव किमिदमनिर्वाच्यत्वमित्यादि तद्दूषणानवकाशश्च अत एवाप्रसिद्धविशेषणतापरिहारायान्वयव्यतिरेक्यनुमानं न्यायदीपावलीस्थं शङ्कते। तद्दोषेतीति नयनप्रसादिनीकारोऽवतारयामास। तत्कथमनिर्वाच्यत्वसाध्यकरणादिकमित्याभाति। तथापि न्यायदीपावलीस्थानिर्वचनीयमित्यस्यैव सदसद्विलक्षणमिति व्याख्यानेनानुवादस्य तत्त्वप्रदीपिकायां कृतत्वेनाप्रसिद्धविशेषणत्वेन भ्रमविषयत्वानुमानस्य च मूलकृतोत्तरत्र निराकरिष्यमाणत्वेनानिर्वचनीयत्वे प्रमाणाभावप्रतिज्ञानन्तरं तत्साधकत्वेन शङ्कनीयप्रथमानुमाने अनिर्वचनीयमित्येव साध्यनिर्देशस्य कर्तुमुचितत्वम्। न्यायामृते तु प्रत्येकं सदसत्त्वाभ्यां विचारेति तत्त्वप्रदीपिकास्थसिद्धान्तलक्षणमेवानूद्य तादृशानिर्वचनीयत्वसाधकतया तेन सिद्धान्ते साधकत्वेनोपन्यस्तं बाध्यत्वं पूर्वपक्षे तत्साधकत्वेनाशङ्क्य निराकृतम्। दोषप्रयुक्तभानत्वं च समानदूषणत्वाभिप्रायेण बाध्यत्वात् दोषप्रयुक्तभानत्वादित्यादिव्यतिरेकीति मेलनेनैव व्यवहृतम्। तत्त्वप्रदीपिकामूलयोरन्वयव्यतिरेकित्वाभिप्रायेऽपि दृष्टान्तसाध्यवैकल्यदूषणेन फलतो व्यतिरेकित्वपर्यवसानमभिप्रेत्य व्यतिरेकीति चोक्तम्। एवमादिस्तत्रतत्रोक्तिविशेषनिमित्तभूतोऽभिप्रायविशेषोऽस्तीति न ग्रन्थानां विसंवादः शङ्कनीय इति द्रष्टव्यम्। शुक्तिरजततादात्म्यं सदेव वाऽसदेव वा किं न स्यात् तथा च तत्रानिर्वचनयीत्वसाध्यवैकल्यमित्यत आह **शुक्तिरजतस्येवेति**। अनभ्युपगमात्। ततश्च तत्र सत्त्वं शङ्कानर्हमिति भावः। **प्रतीतिमात्रेणेति**। विमतं तादात्म्यं नासत् प्रतीतत्वादित्यनुमानेनेत्यर्थः। **युक्तमिति**। तत्र सदसद्वैलक्षण्यस्याप्राप्तत्वादित्याशयः। **विचारासहत्वमिति**। अत्र च टीकायां सत्त्वासत्त्वानधिकरणत्वस्य ब्रह्मण्यपि निर्धर्मके सत्त्वेन तत्रानतिव्याप्तये प्रत्येकं सदसत्त्वाभ्यां विचारेत्यादितत्त्वप्रदीपिकानुसारेण





विचारासहत्वपर्यन्तगमनम् । मूले तु ब्रह्मव्यावृत्त्यविवक्षायां सत्त्वासत्त्वानधिकरणत्वमात्रमेव लक्षणमायातीति भावेन यन्न सदित्याद्येवोक्तमिति न कश्चिद्दोष इति ज्ञेयम् । **उक्तरीत्येति** । वैलक्षण्यं सतश्चापीत्येतद्व्याख्यानोक्तरीत्येत्यर्थः । विशिष्टसाधने सिद्धसाधनत्वप्रसक्तिर्नास्तीत्यत आह **उपलक्षणं चैतदिति** । अनुभवविरोधस्य यन्न सदित्युक्तपक्षे प्रतिपादनाभावभ्रान्तिवारणाय मूलाभिप्रायमाह **विशिष्टेऽपीति** । असत्त्वाभावमात्रमित्युक्ताद्भिन्नं विशिष्टं यन्न सदित्यादि प्रागुक्तम् । तत्र च प्रत्येकसाधनपक्षे सत्त्वाभावसाधनमात्रेऽनुभवविरोधाप्रसरेऽपि सत्त्वाभावमात्रसाधनपक्षे सत्त्वाभावासत्त्वाभावयोर्मिलितयोः साधनपक्षे सत्त्वाभावांशे सदसत्त्वाभावेन सह मिलितत्रयसाधनपक्षेऽप्युक्तांश एवानुभवविरोधः स्यादेवेति भावः । **प्रकारान्तरेणेति** । ज्ञानबाध्यत्वादिरूपेणेत्यर्थः । निर्वचनेनैतदित्यत्र निर्वचने क्रियमाण इति सप्तमी । दोषप्रसरो नेत्यन्वयः । दोषाप्रसर इति क्वाचित्कपाठे निर्वचनेनेति तृतीयान्तच्छेद इति ज्ञेयम् ।

**स०व्र०— भ्रान्तिसिद्धेति** । तद्विषयीभूतेत्यर्थः । अत्र च तादात्म्ये सत्त्वाभावस्य सदसत्त्वाभावस्य च सर्वसंमतत्त्वादसत्त्वाभावस्यापि केनचिदभ्युपगमेन वक्ष्यमाणनिर्वचनीयत्वस्य तत्र सिद्धत्वाद् दृष्टान्तत्वेनोपादानम् । युक्त्यन्तरेण स्थापितानिर्वचनीयत्वसाधनाभिप्रायेण वा ।

**विठ्ठ०— दोषप्रयुक्तभानत्वात्** इत्यत्र बहुव्रीहिः । सद्वैलक्षण्यादित्रयं साध्यमित्युपेत्यांशतः सिद्धसाधनमिति भावेनाह **शुक्तिरजतादेरित्यादिना** ।

**चषकः—** न्यायरत्नदीपावल्युक्तमनुमानं दुदूषयिषुराशङ्कते **शुक्तीति** । **दोषेति** । बहुव्रीहिप्रकृतिको भावप्रत्ययः । निदर्शनं त्वद्वैतिदिशैव । ग्रन्थकृतैव दृष्टान्तश्च साध्यविकलः भ्रान्तिप्रतिपन्नतादात्म्यस्यास्माभिरसत्त्वेनाङ्गीकारादित्यभिधास्यमानत्वात् । **सिद्धसाधनत्वादिति** । प्रत्येकं तत्तत्साध्यसाधने मिलितसाधने चेति भावः । प्रपञ्चितं चैतदधस्तात् । चक्षुषा घटो भातीत्यादौ भ्रान्तेर्ज्ञानार्थकत्वस्य ज्ञाने घटो भातीत्यादौ विषयतार्थकत्वस्य च दर्शनेन प्रकृते विकल्पोपपत्तिः । व्यवहारे भट्टनय इति परिभाषाश्रयणात्प्राकट्येति ज्ञातताभिधायकपदनिर्देशः ।

**४१३ सु०— किञ्चेदं दोषप्रयुक्तभानत्वं किं दोषजन्यज्ञानविषयत्वं किंवा दोषजन्यप्राकट्याश्रयत्वम् ॥ नाद्यः । दोषजन्येतिविशेषणवैयर्थ्यात् । असतो ज्ञानविषयत्वानङ्गीकारेण व्यावर्त्याभावात् ॥ किञ्च मायावादिमतेऽधिष्ठानज्ञानस्यान्तःकरणवृत्तित्वेन सत्यत्वान्न दोषजन्यत्वम् । भ्रमस्य दोषजन्यत्वेऽप्यविद्यापरिणामतया न ज्ञानत्वम् । साक्षिणस्तु जन्यत्वमेव नास्तीत्यसिद्धो हेतुः ॥ अपि चास्माकं ज्ञानस्यैकत्वेन तज्ज्ञानविषयता अधिष्ठानस्याप्यस्तीति व्यभिचारः ॥ न द्वितीयः असिद्धेः । न चान्यद्दोषप्रयुक्तभानत्वं निरूपयितुं शक्यम् ॥**

**दृष्टान्तश्च साध्यविकलः, भ्रान्तिप्रतिपन्नतादात्म्यस्यास्माभिरसत्त्वेनाङ्गीकृतत्वात् ।**





**बिन्दुः— प्राकट्याश्रयत्वमिति** । व्यवहारे भट्टनयेन प्राकट्यं ज्ञाततेत्यर्थः । जन्यत्वं च ज्ञानद्वारेति न दोषः ।

**परि०—** प्रतिज्ञां निरस्य हेतुं च निराह **किञ्चेति** । व्यर्थविशेषणत्वमुक्त्वाऽसिद्धिं चाह **किञ्च मायावादिमत इति** । इदमंशे चेन्द्रियजन्यान्तःकरणवृत्तिरध्यस्तांशे तदजन्याविद्यावृत्तिरिति ज्ञानद्वयम् । तादात्म्यस्यापि तत्र भानाङ्गीकारान्नाख्यातित्वमिति हि तत्सिद्धान्तः । तत्राद्ये कस्य दोषजन्यज्ञानत्वमादाय रजतस्य तद्विषयत्वेन हेतुनाऽनिर्वाच्यत्वं साध्यते । किं शुक्तिरूपाधिष्ठानज्ञानमादाय । रजतभानमादाय वा । आद्ये दोषोऽधिष्ठानेत्यादि । **सत्यत्वात्** यथार्थत्वात् । ब्रह्मज्ञानेतराबाध्यत्वादिति यावत् । **भ्रमस्येति** । रजतावभासस्येत्यर्थः । **दोषजन्यत्वेऽपि** । अविद्यादिरूपदोषकार्यत्वेऽपीत्यर्थः । ननु रजतावभासरूपो भ्रमोऽत्र नाविद्यावृत्तिः । किन्त्वविद्यावृत्त्यभिव्यक्तशुक्त्यवच्छिन्नाधिष्ठानचैतन्यज्ञानरूपः साक्षिरूप एवेत्यत आह **साक्षिणस्त्विति** । **व्यभिचार इति** । तत्रासन्न सदसन्नेति साध्यांशस्य सत्त्वेऽपि सन्नेति साध्यांशस्याभावाद्व्यभिचार इत्यर्थः । प्राकट्याश्रयत्वमिति पक्षं निराह **न द्वितीय इति** । ज्ञाततायास्तत्राभावादिति भावः ।

**गु०दी०— दोषजन्येति विशेषणवैयर्थ्यात्** इत्यत्र ब्रह्मणि क्षणिकत्वादिविभ्रमविषये दोषजन्यज्ञानविषयत्वस्य परमतेऽपि सत्त्वेन सर्वथा भ्रमागोचरमसदेव व्यावर्त्यं वक्तव्यम् । तस्य ज्ञानविषयत्वाभावमते विशेष्येणैव व्यावर्तितत्वाद्विशेषणस्य व्यावर्त्यं नास्तीत्यर्थः । अधुना किमिदं दोषजन्यं ज्ञानं वृत्तिरूपज्ञानं वा, अर्थोऽप्यध्यासः ज्ञानमप्यध्यास इति पक्षे अविद्याविलसितं किञ्चिद्भ्रमज्ञानं वा चिद्रूपज्ञानं वा इति विकल्पं मनसि निधाय क्रमेण दूषयति **किञ्चेत्यादिना** । **सत्यत्वात्** अप्रातिभासिकत्वादित्यर्थः । **अविद्यापरिणामतया** केवलाविद्यापरिणामतया । अन्तःकरणवृत्तिरूपत्वस्य चिद्रूपत्वस्य चाभावेन ज्ञानत्वस्याप्यभावादित्यर्थः । **व्यभिचार** इत्यत्र परीत्या व्यभिचार इत्यर्थः । शुक्तिरजतवद्दोषजन्यज्ञानविषयत्वघटकप्रातिभासिकत्वरूपानिर्वचनीयत्वसाधने स्वमतेऽपि व्यभिचारः । अनिर्वचनीयत्वमात्रसाधने घटादौ सपक्षे हेतोरवर्तमानत्वेनासाधारण्यं च स्यात् । अविद्याख्यदोषजन्यज्ञानविषयत्वपक्षेऽन्यतरासिद्धो हेतुरिति द्रष्टव्यम् ।

**यादु०— अविद्यापरिणामितयेति** । अविद्याया अप्रकाशरूपत्वेन तत्परिणामस्यापि भ्रमस्य नार्थप्रकाशात्मज्ञानत्वं युक्तमिति भावः । **असिद्धेरिति** । प्राकट्यापरपर्यायज्ञाततताया दूष्यत्वादिति भावः ।

**वं०प०—** ननु ज्ञानविषयत्वमात्रस्य हेतुत्वेनासति ब्रह्मणि वाऽनिर्वचनीये व्यभिचारः स्यादतो दोषजन्यत्वविशेषणं सार्थकमिति चेत्तत्राह **असत इति** । सतो ब्रह्मणश्चेति द्रष्टव्यम् । हेतोः स्वरूपासिद्धिं वक्तुमाह **किं चेति** । **अधिष्ठानज्ञानस्येति** । इदंरजतमिति ज्ञानस्याधिष्ठानांशेऽन्तःकरणवृत्तित्वेनेत्यर्थः । **भ्रमस्येति** ।





रजतांशे दोषजन्यत्वेऽपीत्यर्थः । **अविद्यापरिणामतयेति** । अविद्याया अप्रकाशरूपत्वेन तत्परिणामस्य भ्रमस्य नार्थप्रकाशात्मकज्ञानत्वमित्यर्थः । ननु साक्षिणश्चैतन्यरूपत्वेन ज्ञानत्वात्तद्विषयत्वं विवक्षितमिति चेत्तत्राह **साक्षिणस्त्विति** । **जन्यत्वमेवेति** । दोषजन्यत्वं तु दूरतोपास्तमित्यर्थः । अस्माकं मते ।

**आनन्दः**— ननु वैयर्थ्यम् असति व्यभिचारकत्वेन सार्थकत्वात् इत्यत आह **असत इति** । न च ब्रह्मणि व्यभिचारवारणार्थं तत् इति वाच्यम् । तस्यावेद्यत्वाङ्गीकारेण ज्ञानविषयत्वाभावात् । व्यवहारस्तु तत्प्रकाशेनैवोपपन्नः । इदंरजतमित्यत्र हि परमते अधिष्ठानांशे अन्तःकरणवृत्तिरूपं रजतांशे अविद्यापरिणामस्तत्प्रतिबिम्बितः साक्षी च तत्र प्रकृते ज्ञानशब्देनान्तःकरणवृत्तिर्वा अविद्यापरिणामो वा साक्षी वा नाद्य इत्याह । **अधिष्ठानज्ञानस्य** । न द्वितीय इत्याह **भ्रमस्येति** । तृतीयं दूषयति **साक्षिणस्त्विति** । **असिद्धेरिति** । प्राकट्यं हि व्यवहारो वा स्यात् । ज्ञातता वा स्यात् । चैतन्यं वा । नाद्यः व्यवहारस्य व्यवहर्तव्ये ज्ञानसाध्यत्वेन दोषजन्यत्वाभावात् । न द्वितीयः । ज्ञातताया अनङ्गीकारात् । न तृतीयः । चैतन्यस्य नित्यत्वेन दोषजन्यत्वाभावादित्यर्थः ।

**कं०रा०**— **विशेषणेति** । न च वाच्यमसतो ज्ञानविषयत्वाभावेन तत्र व्यभिचारवारणार्थत्वाभावेऽपि दोषजन्यत्वविशेषणस्य ब्रह्मणि तद्वारणार्थत्वेन सार्थक्यमिति । तत्रासत्त्वाभावरूपसाध्यस्यापि सत्त्वेन व्यभिचाराप्रसक्तेः । न च सद्विलक्षणत्वविशेषितानिर्वाच्यत्वसाधने ब्रह्मणि व्यभिचारनिरासाय दोषजन्यत्वविशेषणोपादानं कृतमिति वाच्यम् । अनाधेयातिशयस्य ब्रह्मणो वेदान्तजन्यवृत्तिव्याप्यत्वेऽपि त्वन्मते ज्ञानविषयत्वाभावेनाविशेषितसाध्येऽपि व्यभिचाराप्रसक्त्या विशेषणोपादानवैयर्थ्यानिस्तारात् । **असिद्धेरिति** । ज्ञातततापरपर्यायप्राकट्यस्यैवाभावादिति भावः ।

**श्रीनिधि०**— **दोषप्रयुक्तभानत्वं** च किमिति संबन्धः । नन्वसति व्यभिचारवारणाय दोषेति विशेषणं सार्थकं दोषजन्यज्ञानविषयस्य प्रातिभासिकत्वनेमादित्यत आह **असत इति** । हेत्वभावादेवाव्यभिचारसंभवे विशेषणं व्यर्थमिति भावः । अस्तु तर्हि तावदेवेत्यत आह **किञ्चेति** । **भ्रमस्येति** । अर्थज्ञानस्य वाध्यास इति पक्षानुसारेणेयमुक्तिः अधिष्ठानस्याप्यस्तीति व्यभिचार इति न च तत्रापि साध्यसत्त्वान्न व्यभिचार इति वाच्यम् । रूप्यादेरनिर्वाच्यत्वसिद्ध्युत्तरकालमेव खल्वेतद्दृष्टान्तेन तत्रानिर्वाच्यत्वस्य साध्यत्वान्न तु तत्र मानान्तरेण तत्सिद्धम् । तृतीयः कल्पो भविष्यतीत्यत आह **न चान्यदिति** ।

**वा०चं०**— उक्तवक्ष्यमाणरीत्या दूषणसौलभ्याद्धेतुदूषणमात्रेणाप्यनुमानं दुष्यतीत्याशयेन हेतुं दूषयति **किं चेति** । भानं ज्ञानम् । बहुव्रीहिलब्धसंबन्धो विषयत्वमिति वा भानं प्राकट्यं स संबन्धस्त्वाश्रयत्वमिति वेति विकल्पाशयः । **असत इति** । ब्रह्मणस्तु ज्ञानविषयत्वस्यैवाभावाद्भावे वाऽधिष्ठानत्वादिना दोषजन्यज्ञानविषयत्वस्यापि सत्त्वान्न व्यावर्त्यमित्याशयः । नन्वसतोऽपरोक्षज्ञानविषयत्वाभावेऽपि ज्ञानविषयत्वाद्व्यावर्त्यत्वमित्यरुचेराह **किञ्चेति** । प्रकृते यज्ज्ञानं न तद्दोषजन्यं यच्च दोषजन्यं न तज्ज्ञानमित्याशयः । अवच्छिन्नसाक्षिणो यथाकथञ्चिद्दोष-





जन्यत्वाभ्युगमेऽपि व्यभिचारो दुरुद्धर इत्याह **अपि चेति** । **असिद्धेरिति** । प्राकट्यस्याप्रामाणिकत्वादसच्छुक्तिरजतादेस्तदाश्रयत्वानुपपत्तेश्चेति भावः । भानशब्दस्य सौरालोकादौ प्रसिद्धत्वेऽपि प्रकृते तस्य न शङ्कार्हत्वमपीत्याशयेनाह **न चेति** । असतोऽपि प्रतीतिविषयतामुपपादयिष्यामीत्याशयेन साध्यवैकल्यमुपपादयति **भ्रान्तीति** ।

**वा०र०**— दोषप्रयुक्तेत्यस्य दोषजन्येत्यर्थस्य सिद्धत्वमभिप्रेत्य बहुव्रीहिलब्धसंबन्धभानपदार्थौ पक्षभेदघटकावाह **भानं ज्ञानमित्यादिना** । स संबन्ध इत्यत्र स इत्यनेन बहुव्रीहिलब्धसंबन्धपरामर्शः । **असत इतीति** । अनिर्वचनीयत्वनियतधर्मस्याप्यसत्यनङ्गीकारेण दोषेत्यादिविशिष्टहेतोस्तत्रासत्त्वसंभवेऽपि व्यभिचारप्रसक्तेरेवाभावेन तत्र विशिष्टाभावमादाय तत्परिहारस्य वक्तुमशक्यतया विशेषणवैयर्थ्यादिति मूलाशयः । ननु ब्रह्मण एव व्यावर्त्यत्वमस्त्वित्यत आह **ब्रह्मणस्त्विति** । **अभावादिति** । अवेद्यत्वाङ्गीकारादिति भावः । वृत्तिव्याप्यत्वाङ्गीकारेऽप्याह **भावे वेति** । **ज्ञानविषयत्वादिति** । परोक्षज्ञानविषयतया तद्विषयत्वसामान्यस्य तत्र भावादित्यर्थः । **यज्ज्ञानं न तद्दोषेति** । अधिष्ठानज्ञानजन्यमपि न दोषजन्यम् । साक्षिरूपज्ञानं तु जन्यमेव नेत्येवमनेन मूलोक्तोभयसङ्ग्रहात्त्रितयस्यापि सङ्ग्रह इति ज्ञेयम् । **अविद्यापरिणामतयेति** मूलम् । बुद्धिर्वृत्तिज्ञानमित्येकोऽर्थः । वृत्तिश्चान्तःकरणपरिणामः । अत एव शुक्तिरजतादेः प्रतिभासमात्रशरीरस्य दृश्यत्वाभावाद्रजतं दृष्टमिति भ्रममात्रत्वादित्युक्तमिति भावः । पूर्वत्रारुचिं सूचयन्नुत्तरवाक्यमवतारयति **अवच्छिन्नेति** । तथा च यज्ज्ञानं न तदित्यस्य भङ्ग इत्याशयः । **यथाकथञ्चिदिति** । सर्वं वस्तु ज्ञाततयाऽज्ञाततया वा साक्षिविषयो भवत्येवेति भ्रमविषयाविद्यापरिणामविषयकसाक्षिणोऽपि भ्रमद्वारकं दोषजन्यत्वं शुद्धव्यावर्तकमायातीति भावः । **प्राकट्यस्येति** । ज्ञातताया निराकरिष्यमाणत्वादिति भावः । **भानशब्दस्येति** । अनेन दोषप्रयुक्तसौरालोकाश्रयत्वमित्येतदन्यपदार्थ इत्युक्तं भवति । **न शङ्कार्हत्वमिति** । तस्य मिथ्यात्वेन संबन्धस्याभावात् सौरालोकस्य दोषजन्यत्वाभावाच्चेत्याशयः । असत्त्वाङ्गीकारे कथं तादात्म्यस्य प्रतीतिरित्यतोऽभिप्रायकथनम् **असतोऽपीति** ।

**स०व्र०**— **व्यावर्त्याभावादिति** । न च ब्रह्मणि व्यभिचारपरिहारार्थं तदिति वाच्यम् । परेण तत्र ज्ञानविषयत्वानङ्गीकारेण तन्न्यायेन व्यभिचाराभावात् । मद्रीत्या विशिष्टस्यापि सत्त्वेन व्यभिचारतादवस्थ्यादिति भावः । **अविद्यापरिणामतया न ज्ञानत्वमिति** । अविद्याया अप्रकाशरूपत्वेन तत्परिणामस्यापि भ्रमस्य नार्थप्रकाशात्मकज्ञानत्वं युक्तमिति भावः ।

**वि०ट०**— प्रतिज्ञां निरस्य हेतुं निराह **किञ्चेति** । असत इत्युपलक्षणम् । ब्रह्मण इत्यपि ग्राह्यम् । व्यर्थविशेषणत्वमुक्त्वा असिद्धिं चाह **किञ्चेति** । इदं रजतमित्यत्र इदमंशे इन्द्रियजन्यान्तःकरणवृत्तिः । अध्यासांशे तदन्याविद्यावृत्तिरिति ज्ञानद्वयम् । तत्र तादात्म्यस्यापि भानाङ्गीकारात् भ्रमत्वमिति मायिसिद्धान्तः । तत्र कस्य दोषजन्यज्ञानत्वमादाय शुक्तिरजतस्य तद्विषयत्वेन हेतुना निर्वचनीयत्वं साध्यते । किं शुक्तिरूपाधिष्ठानज्ञानमादाय उत रजतज्ञानमादाय । आद्ये दोषमाह **अधिष्ठानज्ञानस्येति** । **यथार्थत्वात्** व्यावहारिकविषयत्वादिति यावत् । द्वितीये





दोषमाह **भ्रमस्येति** । रजतावभासस्येत्यर्थः । **दोषजन्यत्वेऽपि** अविद्यारूपदोषकार्यत्वेऽपि । ननु रजतावभासरूपो भ्रमो न वृत्तिः । किन्त्वविद्यावृत्त्यभिव्यक्तः साक्ष्येवेत्यत आह **साक्षिणस्त्विति** । तथाच यज्ज्ञानं न तद्दोषजन्यं यच्च दोषजन्यं न तज्ज्ञानमिति दोषजन्यज्ञानत्वमसिद्धमित्याह **इत्यसिद्धो हेतुरिति** । इतिशब्दः प्रकारवचनः । **व्यभिचार इति** । अस्मद्रीत्याधिष्ठानभूतशुक्त्यंशे सन्नेति साध्यांशासंभवात्परीत्या प्रातिभासकतारूपा-निर्वचनीयत्वस्यैव साध्यतया विवक्षितत्वाद्व्यभिचार इत्यर्थः । **असिद्धेरिति** । ज्ञातताया अप्रामाणिकत्वादिति भावः । दूषितोभयपक्षव्यतिरेकेण हेतोर्निरूपयितुमशक्यत्वाच्चायुक्तोऽयं हेतुरित्याह **न चान्यदिति** ।

**चषकः**— **वैयर्थ्यादिति** । ज्ञानान्तस्य हेतुशरीरनिवेशे प्रयोजनाभावादित्यर्थः । **असत इति** । सत इत्यपि ग्राह्यं व्यावर्त्याभावात् । ज्ञानान्तर्व्यावर्त्याभावात् । **किं चेति** । अद्वैतवादिनोऽपि भ्रमस्थले प्राभाकरवज्ज्ञानद्वित्व-मुपगच्छन्ति । तत्राधिष्ठानं चक्षुरादिवेद्यं विपर्यस्तं तु साक्षिवेद्यमिति । तत्राधिष्ठानगोचरान्तःकरणवृत्तिरूपज्ञाने प्रातिभासिकाध्यस्तगोचरसाक्षिरूपज्ञाने च दोषजन्यत्वाभावेनाविद्यावृत्तिविवक्षायाश्च तस्या अप्रकाशरूपतयार्थ-प्रकाशात्मकज्ञानत्वायोगेन कर्तुमशक्यत्वादिति भावः । **व्यभिचार इति** । उत्तरवादिमते तस्य सत्त्वादिति भावः । **असिद्धेरिति** । भाट्टान्यैर्ज्ञाततानुपगमादिति भावः ।

**प्रदीपः**— न चासद्व्यावृत्यर्थं विशेषणमित्याह **असत इति** । किमिदं ज्ञानमधिष्ठानज्ञानमुतारोप्यज्ञानं तत्रापि किं वृत्तिरथ साक्षी विवक्षित इति विकल्प्य दूषयति **किञ्चेति** । **असिद्धेः** प्राकट्यापरपर्यायज्ञातताया दूष्यत्वादित्यर्थः ।

**४१४ सु०— 'विवादपदमनिर्वचनीयं भ्रमविषयत्वात्, यन्नैवं तन्नैवम्, यथात्मे'त्यनुमान-मस्त्विति चेन्न । अत्रापि सिद्धसाधनत्वाद्यपरिहारात् ॥ अप्रसिद्धविशेषणश्च पक्षः ॥ शुक्त्यादावात्मनि च वर्तमानतया विरुद्धश्च हेतुः ॥**

**'विमतमनिर्वचनीयं, बाध्यत्वाद् व्यतिरेकेणात्मवदि'त्यनुमानं भवत्विति चेन्न । सिद्धसाधनताबाधाप्रसिद्धविशेषणत्वानामपरिहारात् ।**

**बिन्दुः**— **विरुद्धश्च हेतुरिति** । अनिर्वचनीयत्वरूपसाध्यस्य गगनकुसुमायमानत्वेन तदभावस्य केवलान्वयित्वाद् भ्रमविषयत्वरूपहेतोः साध्यविपर्ययव्याप्तत्वरूपं विरुद्धत्वमिति भावः । **सिद्धसाधनतेति** । अनिर्वचनीयत्वं नाम सद्विलक्षणत्वं चेत्सिद्धसाधनता असद्विलक्षणत्वे बाधः असदेव प्रत्यभादित्युत्तरानुभवात् । उभयविलक्षणत्वे साध्याप्रसिद्धिरित्यर्थः ।





**परि०— अत्रापीति** । न सन्नाप्यसन्न च सदसदित्युक्तदिशाऽनिर्वाच्यत्वस्य त्वया वक्तव्यत्वात्तत्र च सिद्धसाधनत्वबाधव्यभिचाररूपदोषाणामपरिहारादित्यर्थः । ननु प्रत्येकं साध्यत्रयं न विवक्षितं येनांशे सिद्धसाधनत्वादिकम् । किन्तु सद्विलक्षणत्वासद्विलक्षणत्वविशिष्टं सदसद्विलक्षणत्वं साध्यते । विशिष्टं च न भवतां सिद्धम् अतो न सिद्धसाध्यत्वदोष इत्यतो दोषान्तरमाह **अप्रसिद्धेति** । सिद्धान्तदिशा साध्याभावमुपेत्याह **शुक्त्यादाविति** । उभयवादिसंमत्याऽऽह **आत्मनीति** । तस्यापि मायिमतेऽधिष्ठानत्वेन भ्रमविषयत्वात् । सिद्धान्ते च निर्गुणत्वादिभ्रमविषयत्वोपगमादिति भावः ।

**गु०दी०— शुक्त्यादावात्मनि च** इत्यत्र रजतभ्रमाधिष्ठानभूतशुक्त्यादौ क्षणिकत्वादिभ्रमाधिष्ठानभूतात्मनि च हेतोर्वृत्त्या प्रातिभासिकानिर्वचनीयसाक्षिवेद्यरजतादौ तदभावेन साध्यविपर्ययव्याप्तत्वाद्विरुद्ध इत्यर्थः ।

**यादु०— बाध्यत्वादिति** । अत्र च न पूर्वहेतुवद्विरुद्धत्वमिति भावः ।

**वं०प०— अत्रापीति** । किमिदमनिर्वाच्यत्वं नामेत्युक्तरीत्येत्यर्थः । **शुक्त्यादाविति** । अधिष्ठानत्वेन सत्यतयाऽनिर्वाच्यताशून्य इत्यर्थः । **वर्तमानतयेति** । अधिष्ठानत्वेन भ्रमविषयत्वादिति भावः ।

**आनन्दः—** सिद्धसाध्यत्वादीत्यत्र आदिशब्देनानुभवविरोधपरिग्रहः । ननु सत्त्वाभावे सत्यसत्त्वाभावे सति सदसत्त्वाभाव इति विशिष्टसाधनान्न सिद्धसाध्यत्वादीत्यत आह **असिद्धेति** । **शुक्त्यादाविति** । न च साध्याभावव्याप्यत्वाभावान्न विरुद्धत्वमिति वाच्यम् । पक्षातिरिक्ते शुक्त्यादौ आत्मनि च भ्रमविषयत्वसत्त्वेऽपि अनिर्वचनीयत्वाभावाहेतोः । साध्याभावव्याप्यत्वात् । विरुद्धत्वं परिहर्तुं शङ्कते **विमतमिति** ।

**कं०रा०— सिद्धसाध्यत्वादीति** । सत्त्वाभावासत्त्वाभावरूपनिर्वाच्यत्वस्य साध्यत्वे सत्त्वाभावस्यास्माभिरप्यङ्गीकृतत्वेन सिद्धसाध्यत्वमसत्त्वाभावमात्रसाधनेऽसदेव रजतं प्रत्यभादित्यसत्त्वावेदकप्रमाणेन बाध इत्यादिदूषणस्यापरिहारादित्यर्थः । **अप्रसिद्धेति** । अनिर्वाच्यत्वरूपसाध्यस्य क्वाप्यप्रसिद्धेरप्रसिद्धविशेषणकः पक्ष इत्यर्थः । **शुक्तीति** । अनिर्वाच्यत्वरूपसाध्यरहिते शुक्त्यादावात्मनि च वर्तमानतया सपक्षावृत्तित्वेन च भ्रमविषयत्वरूपहेतुर्विरुद्धश्चेत्यर्थः । यद्वा साध्यरहिते शुक्त्यादावात्मनि च वर्तमानतया भ्रमविषयत्वरूपहेतुरव्याप्तश्चेत्यर्थः ।

**श्रीनिधि०—** प्रागुक्तहेतुदोषोऽत्र नास्तीति भावेन पक्षान्तरं शङ्कते **विवादपदमिति** । **सिद्धसाध्यत्वादीति** । सत्त्वाभावस्य सदसत्त्वाभावस्य च साधने सिद्धसाधनता । असत्त्वाभावसाधने बाध इत्यर्थः । ननु विशिष्टं साध्यं भविष्यतीत्यत आह **अप्रसिद्धविशेषण इति** । शुक्तादाविति तत्रानिर्वचनीयत्वस्यापि अनुमानात्प्रागसिद्ध्या साध्यविपर्ययव्याप्तत्वेन विरुद्ध इत्यर्थः । क्षणिकत्वादिभ्रमविषयत्वेऽप्यात्मनः साध्यत्वं नास्तीति नोक्तदोष इति शङ्कते **विमतमिति** । **अपरिहारादिति** । सत्त्वाभावस्येत्यादि पक्षभेदेनेति भावः ।





**वा०चं०— अत्रापीति** । हेतुभेदेऽपि साध्यनिर्देशस्यैकप्रकारत्वादिति भावः । अन्वयव्यतिरेकित्वाभिमानेन प्रवृत्ते पूर्वानुमानेऽप्रसिद्धविशेषणतामनुद्भाव्य केवलव्यतिरेकित्वेन परस्यापि संप्रतिपन्नेऽस्मिन्ननुमाने तामाह **अप्रसिद्धेति** । अधिष्ठानतया भ्रमविषये शुक्त्यादौ नाद्याप्यनिर्वचनीयतासिद्धिरित्याशयेनाह **शुक्त्यादाविति** । तत्त्वप्रदीपिकोक्तमनुमानं शङ्कते **विमतमिति** ।

**वा०र०— साध्यनिर्देशस्येति** । अनिर्वचनीयमिति साध्यनिर्देशस्य पूर्वानुमानसाध्येनैकप्रकारत्वात् तदर्थभूतयन्न सन्नाप्यसदित्यादेश्च साम्यादित्यर्थः । पूर्वत्र समानन्यायतयाऽप्रसिद्धविशेषणत्वस्य प्राप्तेः कुतस्तदनभिधानमित्यतो निमित्तं वदन्नवतारयति **अन्वयव्यतिरेकित्वेति** । नयनप्रसादिन्यामन्वयव्यतिरेक्यनुमानं न्यायदीपावलीस्थं शङ्कत इत्यवतारस्य कृतत्वादिति भावः । ननु मया शुक्त्यादेरप्यनिर्वचनीयत्वाङ्गीकारान्न बाध्यत्वस्य साध्याभावमात्रसंबन्ध इत्यतस्तात्पर्यमाह **अधिष्ठानतयेति** । पूर्वग्रन्थभेदमाह **तत्त्वप्रदीपिकेति** । सिद्धान्तग्रन्थ इति शेषः ।

**स०व्र०— सिद्धसाधनत्वानिस्तारादिति** । शुक्तिरूप्यादौ सद्विलक्षणत्वसदसद्विलक्षणत्वयोः साधने सिद्धसाधनता । असद्विलक्षणत्वसाधने बाध इति भावः । **अप्रसिद्धविशेषणश्चेति** । न चेच्छादीनामष्टद्रव्यातिरिक्ताश्रितत्वानुमानवत्सामान्यतः प्रसिद्धिपरिशेषाभ्यां तत्प्रसिद्ध्युपपत्तेर्नाप्रसिद्धविशेषणतेति वाच्यम् । तत्र गुणत्वेन सामान्यतः क्वचिदाश्रितत्वसाधनवन्नानिर्वाच्यत्वस्य सामान्येन साधने लिङ्गमस्तीति वैषम्यादिति भावः । **शुक्त्यादाविति** । न च शुक्तेरप्यनिर्वचनीयत्वात्कथं तत्र विरुद्धत्वमिति वाच्यम् । तदनिर्वचनीयत्वस्य रजतानिर्वचनीयत्वसिद्ध्युत्तरकालीनत्वेन ततः प्राग्रजतानिर्वचनीयत्वे साध्ये तदसिद्ध्या विरुद्धत्वोपपत्तेः । **बाध्यत्वादिति** । अत्र च न पूर्वहेतुवद्विरुद्धत्वमिति भावः ।

**विठ्ठ०— अत्रापीति** । हेतुभेदेऽपि साध्यभेदाभावेन प्रागुक्तसाध्यदूषणस्य तदवस्थत्वादिति भावः । न प्रत्येकं साध्यत्रयं विवक्षितं येनांशे सिद्धसाधनत्वादिदोषः । किन्तु सदसद्वैलक्षण्यरूपं विशिष्टमेव न च तद्भवतां सिद्धमिति न सिद्धसाध्यत्वं नाप्यसदेव रजतं प्रत्यभादित्यनुभवविरोधः । तस्य सद्वैलक्षण्यपर्यवसायित्वादित्यतो दोषान्तरमाह **अप्रसिद्धेति** । अनिर्वचनीयस्योक्तरूपस्य सर्वत्राप्रसिद्धत्वादेवेत्यर्थः । **शुक्त्यादाविति** । अधिष्ठानतया भ्रमविषये अप्रातिभासिके शुक्त्यादौ तदवच्छिन्नात्मनि च वर्तमानतयेत्यर्थः । **सिद्धसाधनतेति** । वैलक्षण्यं सतश्चापीत्युक्तरीत्या सिद्धसाधनतादि द्रष्टव्यम् ।

**चषकः— बाध्यत्वादिति** । प्रकृतसाध्याभावनिरूपितव्याप्तिविशेषिततताराहित्येन न बाध्यत्वहेतोः पूर्ववद्विरुद्धतेति भावः ।





**४१५ सु०— 'सदसत्त्वे एकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी धर्मत्वाद्रूपरसवदि'त्यनिर्धारितधर्मिनिष्ठतया सामान्यतः सिद्धस्य सदसद्वैलक्षण्यस्य केवलव्यतिरेकिणा रजतधर्मिनिष्ठतयोपसंहारान्नाप्रसिद्धविशेषणतेति चेन्न । सत्त्वासत्त्वयोरत्यन्ताभावप्रतियोगितासाधने घटादावपि सत्ताऽद्यभावप्रसङ्गेन बाधितविषयत्वात् । यद्धि सकलदेशकालासत्तदत्यन्ताभावप्रतियोगीत्युच्यते, यथा शशविषाणादिकम्, घटादौ च सत्त्वमभावप्रतियोगित्वलक्षणमसत्त्वं च प्रत्यक्षादिसिद्धमिति कथं न बाधितविषयत्वम् ।**

**बिन्दुः**— यथा पृथिवी इतरेभ्यो भिद्यते पृथिवीत्वादित्यत्र जलतेजःप्रभृतिद्वादशभिन्ननिष्ठभेदं प्रतियोगिद्रव्यत्वादित्यादिना साध्यप्रसिद्धौ जातायां नाप्रसिद्धविशेषणता अधिकरणौदासीन्येन च सिद्धत्वान्नान्वयित्वासाधारण्येनाप्यनुमितिवैकल्यम् । एवमेव प्रकृतेऽपि सदसद्विलक्षणत्वरूपानिर्वचनीयत्वरूपसाध्यप्रसिध्यर्थमनुमानमारचयति **सदसत्त्वे इति** । अत्रात्यन्ताभावप्रतियोगितामात्रसाधने सिद्धसाधनता स्यादत एकधर्मिनिष्ठेत्यत्यन्ताभावविशेषणम् । नन्वेवमपि पुनः सिद्धसाधनत्वमेव । अत्यन्ताभावाधिकरणानां प्रत्येकमेकत्वादिति चेत् न । नायमेकशब्द एकत्वसंख्यार्थकः । किं नाम अभेदार्थकः । अभेदस्य च ससंबन्धिकत्वात्समभिव्याहृतधर्मिपदार्थ एव तत्रान्वेति । ततश्च अत्यन्ताभाववद्धर्म्यभिन्नाधिकरणनिष्ठात्यन्ताभाव इति लभ्यते । अत्यन्ताभावोऽपि समभिव्याहारमहिम्ना सत्त्वासत्त्वप्रतियोगिक एव लभ्यते । ततश्चायमर्थः । सत्त्वासत्त्वे परस्परात्यन्ताभावाधिकरणाभिन्नधर्मिनिष्ठात्यन्ताभावप्रतियोगिनी इति । द्वित्वावच्छिन्नप्रतियोगिकात्यन्ताभावाधिकरणप्रतियोगिकान्योन्याभावाधिकरणत्वात्यन्ताभावाधिकरणनिष्ठात्यन्ताभावप्रतियोगितावच्छेदकद्वित्वपर्याप्त्यधिकरणे इति तु निष्कर्षः । तेन द्रव्यत्वसत्त्वात्यन्ताभावप्रतियोगितादिसिद्ध्यादिनापि नार्थान्तरतापत्तिः । रूपरसवदिति धर्मिद्वयरूपदृष्टान्तोपादानं च किमर्थमित्याशङ्कापि गर्भस्रावेणैव परास्तेति वेदितव्यम् । **धर्मत्वादिति** । द्वित्वपर्याप्त्यधिकरणव्यतिरेकिधर्मत्वादित्यर्थः । तेन प्रमेयत्वादौ घटत्वादौ च न व्यभिचार इति ध्येयम् । अत्र सर्वत्र तार्किकरीत्यैव परेणानुमानप्रयोगादत्यन्ताभावः कथं प्रामाणिकप्रतियोगिक इति शङ्कानवकाशः । अत एव द्वित्वादिपदमपि त्रयोदशान्योन्याभावा इत्यादाविवापेक्षा बुद्धिपरमिति मन्तव्यम् । स्वमते प्रामाणिकप्रतियोगिकात्यन्ताभावाभावमभिप्रेत्य दूषयति **सत्त्वासत्त्वयोरिति** ।

**परि०**— अप्रसिद्धतां परिहर्तुं सामान्यप्रसिद्धिं साधयति **सदसत्त्वे इति** । सत्त्वासत्त्वे इत्यर्थः । सिद्धान्तिना सदसदात्मकत्वस्य क्वाप्यनङ्गीकारात् । सदात्मकमसदात्मकं चेति द्वैविध्यस्योपगमेन तं





प्रत्येकस्मिन्वस्तुनि सत्त्वासत्त्वरूपधर्मराहित्यरूपमेवानिर्वाच्यत्वमिति भावेन धर्मद्वयमेव पक्षत्वेनोपात्तम्। न तु सदसदात्मकत्वरूपधर्मोऽपि। यद्वा सत्त्वासत्त्वराहित्यस्य क्वचिद्धर्मिणि साधने सदसत्त्वराहित्यमपि स्वत एव सेत्स्यतीतिभावेन द्वयोरेवोपपादनमिति ध्येयम्। **एकेति**। एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी इत्यर्थः। सत्त्वं विद्यमानत्वं असत्त्वमभावप्रतियोगित्वमित्यर्थमुपेत्य दोषमाह **घटादावपि सत्त्वाद्यभावप्रसङ्गेनेति**। कुत एवमित्यतः एवं साधने सत्त्वासत्त्वयोरलीकतापत्तेरिति भावेन तद्वचनक्ति **यद्धीति**। नन्वत्यन्ताभावप्रतियोगिनी इत्यत्रात्यन्तपदं परित्यज्यत इत्यत आह **अभावप्रतियोगितामात्रेति**। सत्त्वासत्त्ववत्यपि वस्तुनि तदन्योन्याभावसंभवेन त्वदभिमतोभयराहित्यसिद्धेरर्थान्तरतेत्यर्थः।

**गु०दी०**— सत्त्वासत्त्वे इत्यनुमाने यादृशतादृशसत्त्वासत्त्वपक्षीकारो वा, पारमार्थिकत्वरूपसत्त्वात्यन्तासत्त्वयोः पक्षीकारो वा इति विकल्पं मनसि निधाय द्वितीयपक्षे धर्मत्वहेतोः वक्ष्यमाणसत्त्वासत्त्वयोर्व्यभिचारस्यांशतः सिद्धसाधनत्वस्य गोत्वाश्वत्वे एकत्र स्तः धर्मत्वात् मूकत्ववाग्मित्वे एकत्र स्तः धर्मत्वादित्यादिरूपेण व्याघातमात्रोच्छेदकानुमानपरम्परया, आभाससाम्यस्य च स्पष्टत्वात्प्रथमपक्षे दूषणमाह **सत्त्वासत्त्वयोरिति**। एवं च विकल्पमुखेन प्रवर्तनान्न छलादिदोष इति द्रष्टव्यम्। **असत्त्वं च प्रत्यक्षादिसिद्धम्** इत्यत्र पूर्वोत्तरकालयोरसत्त्वस्य वर्तमानकाले सत्त्वस्य च प्रत्यक्षसिद्धत्वात्सकलदेशकालासत्त्वरूपात्यन्ताभावप्रतियोगित्वं बाधितमेवेति भावः।

**यादु०**— **सदसत्त्वे इति**। धर्मद्वयस्य पक्षतयोक्तत्वाद्रूपरसवदिति धर्मद्वयं दृष्टान्ततयोक्तमिति मन्तव्यम्। एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी इति द्वित्वावच्छिन्नाभावप्रतियोगित्वं साध्यतया विवक्षितम्। धर्मद्वयनिष्ठं धर्मत्वमेव हेतुतया विवक्षितम्। अन्यथैकस्मिन्व्यभिचारापत्तेः। तत्र च दृष्टान्ततया धर्मद्वयप्रदर्शनं युक्तमेवेत्याहुः। भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वस्यास्माकं सिद्धतया सिद्धसाधनतावारणायैकधर्मीति साध्ये विशेषणमिति ज्ञातव्यम्। साध्येऽत्यन्तपदस्य विवक्षायां बाधः। अविवक्षायामर्थान्तरतेत्याह **सत्त्वासत्त्वयोरित्यादिना**। **घटादाविति**। अत्रादिपदेन शशशृङ्गादिकं ग्राह्यम्। एवमग्रेऽपि। नन्वसत्त्वस्य धर्म्यभावात्कुत्र प्रत्यक्षादिसिद्धत्वमित्यत उक्तम् **अभावप्रतियोगित्वलक्षणमिति**। तथाच प्रतियोगित्वस्य रूपादिवद्धर्मिसत्तासापेक्षत्वाभावेन धर्म्यभावेऽपि प्रत्यक्षादिसिद्धत्वमिति भावः।

**वं०प०**— **रूपरसवदिति**। अत्र सत्त्वासत्त्वयोरुभयोः पक्षत्वात्तदनुसारेण दृष्टान्तद्वयमित्येतन्न स्वरसम्। तथात्वेऽनित्ये वाङ्मनसे मूर्तत्वाद्घटवदित्यत्रापि दृष्टान्तद्वयं वाच्यं स्यात्। तस्मात् दृष्टान्तद्वयस्य प्रयोजनमिदं द्रष्टव्यम्। तथाहि। अत्रैकधर्मिनिष्ठो योऽत्यन्ताभावस्तत्प्रतियोगित्वे साध्ये पक्षीभूतयोः सत्त्वासत्त्वयोरेकात्यन्ताभावप्रतियोगित्वाभावेन बाधापत्त्याऽत्यन्ताभावद्वयप्रतियोगित्वे साध्यतयावश्यं वक्तव्ये तत्र रूपस्यैकस्यैव दृष्टान्तत्वे तत्रात्यन्ताभावद्वयप्रतियोगित्वाभावेन साध्यवैकल्यापत्त्या दृष्टान्तद्वयग्रहणमिति द्रष्टव्यम्। **केवल-**





**व्यतिरेकिणेति** । विमतमनिर्वचनीयं बाध्यत्वाद्व्यतिरेकेणात्मवदित्यनुमानेनेत्यर्थः । तदुपपादयति **यद्धीति** । घटादावित्यादिपदेन शशविषाणं ग्राह्यम् । **कथं नेति** । तथाच घटाद्येकधर्मिनिष्ठात्यन्ताभावप्रतियोगित्वाभावाद्बाधितविषयत्वमित्यर्थः ।

**आनन्दः**— सामान्यतः प्रसिद्धिं शङ्कते **सदसत्त्व इति** । अत्यन्ताभावप्रतियोगिनीत्युक्ते भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितया सिद्धसाधनत्वं स्यात्तन्मा भूदित्येकधर्मीति विशेषणं तथाच यत्र धर्मिणि सत्त्वासत्त्वयोर्निवृत्तिस्तदनिर्वचनीयमिति सामान्यतः सिद्ध्यतीत्यर्थः ।

**कं०रा०— घटादाविति** । देशकालव्यवस्थया सत्त्वमसत्त्वं च घटादौ प्रत्यक्षादिसिद्धमिति सत्त्वासत्त्वयोः सार्वकालिकसार्वदेशिकनिषेधरूपात्यन्ताभावप्रतियोगित्वसाधने बाधितविषयत्वमेवेत्यर्थः ।

**श्रीनिधि०**— अप्रसिद्धविशेषणतापरिहारार्थं यतते **सदसत्त्वे इति** । ननु साध्यप्रसिद्धिः किं पक्षे संपाद्यते उतान्यत्र । नाद्यः पूर्वानुमानवैयर्थ्यापत्तेः । न द्वितीयः केवलव्यतिरेकित्वभङ्गापत्तेः इत्यत उक्तम् **अनिर्धारितेति** । पक्षतावच्छेदकावच्छिन्नेऽपि साध्यप्रसिद्धिर्न संपाद्यते । एनानुमानवैयर्थ्यं स्यात् नापि पक्षतावच्छेदकविरुद्धधर्मावच्छिन्ने । येन सपक्षे साध्यसिद्ध्या केवलव्यतिरेकित्वभङ्गः किं नामानिर्धारितधर्मिनिष्ठत्वेनेति भावः । ननु रूपरसवदिति दृष्टान्तद्वयोपादानं किमर्थम् । अभावद्वयस्य साध्यत्वात् एकस्य चाभावद्वयप्रतियोगित्वाभावदृष्टान्ते साध्यवैकल्यपरिहारार्थमिति चेत् तर्हि रूपे रसे च प्रत्येकं प्रत्येकं व्यभिचारप्रसङ्गः इति चेन्न।

**वा०चं०**— तदुक्तमप्रसिद्धविशेषणतापरिहारं शङ्कते **सदसत्त्वे इति** । अत्र च भावत्वाभावत्वे सत्त्वासत्त्वे सदसत्त्वे एकधर्मिनिष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनी धर्मत्वाद्यौ धर्मौ तावेकधर्मिनिष्ठात्यन्ताभावप्रतियोगिनौ यथा रूपरसौ । भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितयाऽर्थान्तरनिरासाय **एकधर्मीति** । न चैवं बाध्यत्वानुमानवैयर्थ्यमित्यतोऽनिर्धारितेत्याद्युक्तम् । ननु घटादौ सत्त्वाद्यभावो न ममानिष्ट इत्यतो घटादेरनिर्वचनीयताया अद्याप्यसिद्ध्या तत्र सत्त्वाद्यभावाभ्युपगमः प्रमाणविरुद्ध एवेत्याशयेनाह **घटादाविति** । असत्त्वस्य धर्मिसत्तानिरपेक्षतासाधनसापेक्षेण शशशृङ्गाद्यसत्त्वप्रामाणिकत्वोदाहरणेन किं फलम् । घटादावेव तदुदाहरणेन प्रकृतसिद्धेरित्याशयेनाभावप्रतियोगित्वलक्षणमित्युक्तम् । यद्वा सत्त्वासत्त्वयोः स्वरूपेण प्रामाणिकत्वेऽप्येकस्मिन्धर्मिण्यप्रामाणिकत्वादेकधर्मिनिष्ठात्यन्ताभावप्रतियोगितासाधने न बाध इत्यत एकस्मिन्नपि तयोः प्रामाणिकत्वं दर्शयितुमभावप्रतियोगित्वलक्षणमित्युक्तम् ।

**वा०र०— तदुक्तमिति** । तत्त्वप्रदीपिकोक्तमित्यर्थः । **अत्र चेति** । द्वन्द्वान्ते श्रूयमाणत्वप्रत्ययः प्रत्येकमभिसंबध्यत इत्याशयेन सदसत्त्व इत्येतत् व्याख्यातं **भावत्वाभावत्व इत्यादिना** । अत्र च वैलक्षण्यं सतश्चेत्येतन्मूलस्थकिमत्र सदसच्छब्दौ भावाभाववचनावित्याद्युक्तिमनुसृत्य यौगिकार्थविद्यमानाविद्यमानयोरिव भावाभावयोरप्यर्थता अभिप्रेता मूल इति दर्शयितुं भावत्वाभावत्व इत्यप्युक्तम् । अत एवात्र टीकायां सत्त्वासत्त्वेति





चेच्चशब्दयुक्तपाठः स्वरसः । चशब्दाभावे वा तदर्थान्तर्भावेन व्याख्येयम् । यद्यप्यभावप्रतियोगित्वेत्याद्युत्तरानुसारेण विद्यमानत्वाविद्यमानत्वपक्षनिरासपरमेवोत्तरमूलमिति प्रतीयते । तथाप्युपलक्षणया भावाभावत्वपक्षनिराकरणमपि व्याख्यातव्यमेव । अत एव बाधितविषयत्वप्रतिज्ञात्वमुभयसाधारणम् । भावाभावविलक्षणमिति तत्त्वोद्योतटीका-ऽप्यनुकूलिता स्यादिति भावः । योऽत्यन्ताभाव इत्युक्ते एकमभावं प्रत्युभयोः प्रतियोगित्वाभाव इत्याद्यनुपपत्तिं मनसि कृत्वा व्याख्याति **एकधर्मिनिष्ठाविति** । साध्येऽभावद्वयविवक्षणादेवाभावद्वयं प्रत्येकस्य रूपस्य रसस्य वा प्रतियोगित्वायोगेन दृष्टान्ततयोभयोपादानम् । वक्ष्यति च द्वयोः पक्षत्वे रूपरसयोरुभयोरपि दृष्टान्तत्वेन निर्देष्टव्यतया गौरवेत्यादीति ज्ञेयम् । अत्रानुमाने विशेषविचारः तत्त्वोद्योतटीकाव्याख्याने गुरुराजकृतस्तत्प्रपञ्चेऽस्माभिः वृ तश्च द्रष्टव्यः । अत्रोपयुक्तं लेख्यमस्ति । **वैयर्थ्यमिति** । एतदनुमानेनैव सत्त्वासत्त्वाभावाधिकरणत्वसिद्धेरिति भावः । **घटादौ चेतीति** प्रतीकोपादानम् । असत्त्वस्य धर्मिसत्तेत्याद्यनिर्वाच्यत्वसाधकनिषेधप्रतियोगित्वान्यथानुपपत्ति-भङ्गीयन्यायामृतानुसारेणैतत्प्रमेयमुपपाद्यम् ।

**स०व्र०—— सदसत्त्वे इति** । एकधर्मिनिष्ठौ यावत्यत्यन्ताभावौ तत्प्रतियोगिनी । धर्मत्वात् रूपरसवदिति प्रयोगः ।

**विठ्ठ०——** अप्रसिद्धविशेषणतापरिहारमाशङ्कते **सत्त्वासत्त्व इति** । एकस्मिन्धर्मिणि निष्ठौ यावत्यन्ताभावौ तत्प्रतियोगिनीत्यर्थः । भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगितया सत्त्वमेकत्रापरत्रासत्त्वमिति प्रकृतानुपयुक्तार्थ सिध्यार्थान्तरता । तन्निरासाय **एकधर्मीति** उक्तम् । एकस्मिन्धर्मिणि सत्त्वासत्त्वराहित्यसिद्धौ तस्य सदसत्त्व-विरहरूपानिर्वचनीयत्वस्य स्वत एव लाभेन साध्यानिर्वचनीयप्रसिद्धिर्भवतीति भावः । सत्त्वाद्यभावेत्यत्रादिपदेन असत्त्वाभावो ग्राह्यः । घटादावपि वक्ष्यमाणरीत्या असत्त्वस्य विद्यमानत्वात् । ननु सत्त्वासत्त्वयोरत्यन्ता-भावप्रतियोगितामात्रेण कथं सत्त्वाद्यभावापातः । येन बाधितविषयत्वमित्यतोऽत्यन्ताभावप्रतियोगित्वस्य सकलदेशकालासत्त्वव्याप्तत्वेन तयोरत्यन्ताभावप्रतियोगित्वे सर्वथा सत्त्वापत्त्या घटादौ तदभावप्रसङ्गो युक्त एवेत्याशयेनाह **यद्यीति** । ननु घटादौ सत्त्वाद्यभावप्रसङ्गो न ममानिष्टः सत्त्वादिप्रापकप्रमाणाभावादतो न बाधितविषयत्वमित्यत आह **घटादौ चेति** । घटादौ कथमसत्त्वमित्यत अभावप्रतियोगित्वलक्षणमित्युक्तम् । प्रागभावादिप्रतियोगितालक्षणासत्त्वस्य तत्र विवक्षितत्वादिति भावः ।

**चषकः——** अप्रसिद्धविशेषणतापरिजिहीर्षया शङ्कते **सदसत्त्वे इति** । वाङ्मनसे अनित्ये इत्यादाविव प्रकृते साध्यनिष्ठनानाविधेयतानिरूपिततत्तद्वृत्तिप्रातिस्विकधर्मावच्छिन्ननानाविशेष्यताकसमूहालम्बनानुमितिरेवो-द्देश्या । न तु व्यासज्यवृत्तिधर्मावच्छिन्नैकोद्देश्यताका । तथा सति पक्षतावच्छेदकीभूतव्यासज्यवृत्तिधर्मावच्छिन्ने एकसत्त्वेऽपि द्वयं नास्तीति दिशा सद्व्यक्तिवृत्तित्वावच्छिन्नाभावप्रतियोगिताया असद्व्यक्तिवृत्तितादृशाभाव-प्रतियोगिताया वा सिद्ध्या सिद्धसाधनताद्यापत्तेः एकधर्मिनिष्ठात्यन्ताभावनिरूपितव्यासज्यवृत्तिधर्मावच्छिन्न-प्रातिस्विकप्रयोगिताद्वयस्य च तादृशधर्मावच्छेदेन दुःस्थतया तादृशप्रतियोगिताद्वयसाधनस्यासंभवदुक्तिकत्वात् ।





तादृशव्यासज्यवृत्तिधर्मसामानाधिकरण्येन तादृशात्यन्ताभावनिरूपितप्रतियोगिताकद्वित्वावच्छिन्नस्य बाधिततया दुःसाधत्वात् । तत्सामानाधिकरण्येन तादृशात्यन्ताभावनिरूपितव्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगितात्वावच्छिन्न-साधनस्य चासत्त्वे सिद्धसाधनत्वापादकत्वात् सत्त्वासत्त्ववृत्तितत्तद्व्यक्तित्वावच्छेदेन साधने तूक्तक्षत्यवतारेण साध्यीभूतप्रतियोगितायां व्यासज्यवृत्तिधर्मावच्छिन्नत्वं निवेशनीयम् । इत्थं चैकधर्मिपदेन ब्रह्मालीकान्या व्यक्तिरेवोपादेयेत्यभिप्रेततया ब्रह्मवृत्त्यभावप्रतियोगित्वस्यासत्त्वे अलीकवृत्त्यभावप्रतियोगित्वस्य च सत्त्वे सिद्धावपि न क्षतिः । अत एव निदर्शनीकृतरूपरसाख्यव्यक्तिद्वयवृत्तितत्तद्धर्मावच्छिन्नाभावप्रतियोगिताद्वयप्रकारिकैव संप्रतिपत्तिः प्रकृतौपयिकीति ध्वनयितुमेव तयोर्निदर्शनीकरणं सङ्गच्छत इति विभावनीयम् । प्रतिज्ञावाक्य-घटकसाध्योपस्थापकपदघटकतयात्यन्तपदनिवेशे बाधस्तदनिवेशे चार्थान्तरतेत्याह **सत्त्वासत्त्वयोरित्यादि** । घटादावपीत्यादिपदेनालीकमुपादेयम् । सत्त्वादीत्यादिपदेनासत्त्वम् । घटादौ चेत्यत्राप्यादिपदेन तदुपादेयम् । **अभावप्रतियोगित्वलक्षणमिति** । अत्यन्ताभावप्रतियोगित्वलक्षणमसत्त्वं धर्मिसत्तानिरपेक्षमलीके प्रामाणिक-मित्यर्थः । प्रत्यक्षादीत्यादिपदमलीकपदाभिधेयम् । अत्यन्ताभावप्रतियोगीत्यादिवाक्यसङ्ग्राहकम् । तथाच प्रत्यक्षेण घटे सत्त्वमलीके वाक्येनासत्त्वं च सिद्धमिति बाधितविषयत्वमित्यर्थः ।

**प्रदीपः— सदसत्त्वे इति** । अत्यन्ताभावप्रतियोगिनीत्युक्ते भिन्नाधिकरणनिष्ठात्यन्ताभावप्रतियोगिकया सिद्धसाधनत्वं स्यात्तन्मा भूदित्येकधर्मीति विशेषणं तथा यथा यत्र धर्मिणि सत्त्वासत्त्वयोर्निवृत्तिः तदनिर्वचनीय-मिति सामान्यतः सिद्ध्यतीत्यर्थः । साध्येऽत्यन्तपदविवक्षायां कालात्ययापदिष्टत्वमविवक्षायान्त्वर्थान्तरतेत्याह **न सत्त्वेत्यादिना** ।

**४१६ सु०— अभावप्रतियोगितामात्रसाधनेऽप्यन्योन्याभावमुपादायार्थान्तरत्वापातः ॥ 'एकस्मिन्न स्त' इति साध्यत इति चेत् । किमिदं सत्त्वं नाम । सत्तासामान्यं वा, स्वरूप-सत्त्वं वा ॥ नाद्यः आश्रयासिद्धेः । अस्माभिरप्यनुगतसत्ताया अनभ्युपगमात् । तदभ्युप-गमवादिनां च सामान्यादित्रये सत्त्वासत्त्वयोरभावादर्थान्तरतादवस्थ्यात् ॥ न द्वितीयः यत्किञ्चित्स्वरूपसत्त्वपक्षीकारे घटादौ पटादिस्वरूपसत्त्वस्यासत्त्वविशेषस्य चाभावेन आर्थान्तरताऽनिस्तारात् ॥ 'सर्वाणि स्वरूपसत्त्वानि सर्वाणि चासत्त्वान्येकधर्मिनिष्ठ-संसर्गाभावप्रतियोगीनी'ति साधनेऽपि स्वरूपसत्त्वस्य धर्मत्वाभावेनासिद्धिः स्यात् ।**

**बिन्दुः— एकस्मिन्न स्त इति** । एकधर्मिनिष्ठसंसर्गाभावप्रतियोगितावच्छेदकद्वित्वपर्या-प्त्यधिकरणतासाधन इत्यर्थः । **सर्वाणि सत्त्वानीति** । सत्त्वानां सत्त्वप्रतियोगिकसंसर्गाभावाधिकरण-प्रतियोगिकान्योन्याभावानधिकरणवृत्तिसंसर्गाभावप्रतियोगितासाधन इत्यर्थः । एवं सत्त्वानामसत्त्व-





प्रतियोगिकेत्यादिसमानमूह्यम् । तेन एकत्वसंख्यादिकमादाय न पूर्वोक्तवत्सिद्धसाधनत्वादीति ध्येयम् । **स्वरूपसत्त्वस्य धर्मत्वाभावेनेति** । धर्मत्वहेतोः पक्षे सद्भावाङ्गीकारे तमेव हेतुमादाय पक्षस्य धर्मित्वापत्त्या धर्मत्वमेव न स्यात् । न हि एकस्यैव धर्मित्वं धर्मत्वं च संभवति । अन्यथा स्वस्कन्धारोहणमपि प्रसज्येतेति भावः । ननु विषमोऽयमुपन्यासः । न हि वयं स्वस्यैव स्वधर्मत्वं धर्मित्वं चास्थिताः येन स्वस्कन्धारोहणाद्यापाद्येत किं नाम सत्त्वादीनां स्वाश्रयं प्रति धर्मित्वम् ।

**परि०**— नन्वत्यन्ताभावप्रतियोगिनी इत्येव साध्यार्थः । न चैवमुक्तरूपसत्त्वासत्त्वयोर्नृशृङ्गवदलीकता । यथा गोत्वमश्वे नास्तीत्युक्तौ गोत्वस्य नालीकत्वमपि तु गोत्वाश्वसंसर्गस्यैवात्यन्ताभावप्राप्त्या संसर्गस्यालीकत्वम् । एवं सत्त्वासत्त्वयोरेकधर्मिसंसर्गस्यैव निषेधो न सत्त्वासत्त्वयोर्येन तयोरलीकत्वप्राप्त्या घटादौ तद्ग्राहकप्रत्यक्षबाध इति भावेन शङ्कते **एकस्मिन्न स्त इति साध्यत इति चेदिति** । इयता ग्रन्थेन 'वैलक्षण्यं सतश्चापी'तिश्लोकस्य जगतोऽनिर्वाच्यत्वानुमानदूषणपरतयोक्तयोजनारीत्या शुक्तिरूप्यानिर्वाच्यत्वानुमानदूषणेऽपि योजना सूचिता । एवं 'यद्युच्यतेऽपि सर्वस्मादि'त्यादेरपि शुक्तिरूप्यादेरनिर्वाच्यत्वसाधकदूषणपरतयाऽपि योजनां सूचयन्पक्षीकृतसत्त्वं विकल्प्य निराह **किमिदमिति** । असत्त्वं च निःस्वरूपत्वमिति भावः । **आश्रयेति** । एकांश इति ध्येयम् । 'वैलक्षण्यं सतश्चापी'त्यत्र सदसच्छब्दयोः स्वरूपसत्त्वासत्त्वविशेषपरत्वं मत्वा तस्यार्थान्तरपरत्वपरयोजनां सूचयन्नाह **यत्किञ्चिदिति** । असत्त्वविशेषस्य निःस्वरूपत्वरूपस्येत्यर्थः । 'यद्युच्यतेऽपी'त्यर्धस्य योजनान्तरं सूचयन्नाह **सर्वाणीत्यादिना** ।

**गु०दी०**— **एकस्मिन्न स्त इति साध्यत** इत्यत्र ईदृशप्रतीतेः संसर्गाभावमात्रविषयत्वेनान्योन्याभावमादाय नार्थान्तरतेति भावः ।

**यादु०**— ननु नात्यन्ताभावप्रतियोगित्वं साध्यते येन बाधो नाप्यन्योन्याभावप्रतियोगित्वं येनार्थान्तरता । किं त्वेकधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वमेवातो नोक्तदोष इत्याशयेन शङ्कते **एकस्मिन्न स्त इतीति** ।

**वं०प०**— ननु नात्यन्ताभावप्रतियोगत्वं साध्यते । येन सत्त्वासत्त्वयोरप्रामाणिकत्वापत्त्याऽनुमानस्य प्रत्यक्षबाधः स्यात् । किं नामात्यन्तपदपरित्यागेनाभावप्रतियोगित्वमात्रमेवातो नोक्तदोष इति चेत्तत्राह **अभावेति** । **सामान्यादित्रय इति** । तथा चैकस्मिन्सामान्यादित्रये न स्त इत्यपि प्राप्त्याऽर्थान्तरतेत्यर्थः । जातिश्चैतत्त्रयाश्रयेति वचनात्सामान्यादित्रये सत्तासामान्यं नास्तीति द्रष्टव्यम् । **असत्त्वविशेषस्य** निःस्वरूपत्वस्य ।





**आनन्दः**— नन्वेवमपि अनेनानुमानेनानिर्वचनीयत्वासिद्धेर्बाध्यत्वेनानिर्वचनीयत्वसाधनं सिद्धसाधनताग्रस्तमत आह **सामान्यत इति**। नन्वत्यन्ताभावप्रतियोगित्वेऽप्यसत्त्वं कुत इत्यत आह **यद्धीति**। **एकस्मिन्नस्त इति चेदिति**। न चैतावताप्येकस्मिन्नभावप्रतियोगित्वं साध्यमुक्तं भवति। तच्च पूर्वदूषितमेवेति पुनः शङ्काकरणमयुक्तमिति वाच्यम्। अत्र हि संसर्गाभावप्रतियोगित्वमेव साध्यं तत्र पूर्वोक्तदोषानुवृत्तावपि दूषणान्तरं वक्तुं पुनः शङ्काकरणमिति भावः। द्वितीयेऽपि यत्किञ्चित्स्वरूपसत्त्वं पक्षीक्रियते सर्वाणि स्वरूपसत्त्वानि वा नाद्य इत्याह **यत्किञ्चिदिति**। न द्वितीय इत्याह **सर्वाणीति**।

**श्रीनिधि०**— सदसत्त्वे इति निर्देशानुसारेण दृष्टान्तद्वयोपादानात् बाधितविषयत्वपरिहारार्थमाशङ्क्ते **अभावप्रतियोगितामात्रेति**। अर्थान्तरतापरिहारार्थमाशङ्क्ते **एकस्मिन्नस्त इति**। **असत्त्वविशेषस्येति**। अभावविशेषस्येत्यर्थः। धर्मत्वाभावेनासिद्धिः स्यादिति उपलक्षणमिदम्। अस्माभिः एकस्मिन् सति असति सर्वसत्त्वानां सर्वसत्त्वानामनङ्गीकृतत्वेन सिद्धसाधनतेत्यपि द्रष्टव्यम्।

**वा०चं०**— अत्यन्तपदपरित्यागेन साध्यनिर्देशे दूषणमाह **अभावेति**। **एकस्मिन्निति**। एवं च संसर्गाभावसाधनान्न सत्त्वाभावप्रसङ्ग इति भावः। अभ्युच्चयेन सत्ताऽभ्युपगमवादिमतेनापि दूषणमाह **तदिति**। उभयथाऽपि सत्त्वासत्त्वे इति निर्देशसंभवाद्विकल्पं मनसि निधाय क्रमेण दूषयति **यत्किञ्चिदित्यादिना**।

**वा०र०**— **परित्यागेनेति**। बाधितविषयत्वपरिहारायेति शेषः। **संसर्गाभावेति**। सत्त्वसंसर्गाभावेत्यर्थः। **न सत्त्वाभावेति**। सत्त्वान्योन्याभावेत्यर्थः। संसर्गावच्छिन्नप्रतियोगिकाभावस्यान्योन्याभावभिन्नत्वादिति भावः। सत्ताभ्युपगमवादिरीत्या दूषणकथनं सङ्गमयति **अभ्युच्चयेनेति**। **उभयथापीति**। सत्त्वासत्त्वयोर्यत्किञ्चित्त्वेन सर्वत्वेन च संभवः। सामान्योक्तेरुभयथाप्युपपत्तेरित्याशयः। **विकल्पमिति**। सत्त्वासत्त्वे इत्यत्र यत्किञ्चित्सत्त्वं यत्किञ्चिदसत्त्वं च पक्षो वा सत्त्वासत्त्वशब्दयोः सत्त्वावच्छिन्नादिपरतया सर्वाणि सत्त्वानि सर्वाण्यसत्त्वानि च पक्षो वेति विकल्पमित्यर्थः।

**स०व्र०**— ननु नात्यन्ताभावप्रतियोगित्वं साध्यते येन बाधः नाप्यन्योन्याभावप्रतियोगित्वं येनार्थान्तरता किन्त्वेकधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वमेवातो नोक्तदोष इत्याशयेन शङ्क्ते **एकस्मिन्नस्त इतीति**।

**विठ्ठ०**— नात्यन्ताभावप्रतियोगित्वं केवलमभावमात्रप्रतियोगित्वं वा साध्यते येन बाधितविषयत्वं वार्थान्तरता वा। किन्तु संसर्गाभावप्रतियोगित्वम्। अतो न बाधितविषयत्वं नाप्यर्थान्तरतेत्याशयेन शङ्क्ते **एकस्मिन्निति**। **किमिदमिति**। सत्त्वासत्त्वे इत्यत्र सत्त्वं नाम किमित्यर्थः। **आश्रयासिद्धेरिति**। आश्रयैकदेशासिद्धेरित्यर्थः। **असत्त्वविशेषस्येति**। घटवद्देशकालयोर्घटासत्त्वस्याभावादिति भावः। **स्वरूपसत्त्वस्येति**। तस्य स्वरूपतन्मात्रत्वान्न धर्मत्वमिति भावः।





**चषकः**— ननु ह्रदे वह्निर्नास्तीत्यादाविव पक्षीकृतव्यक्तिद्वये स्वप्रतियोगिकैकव्यक्त्यनुयोगिकसंसर्गरूपं यदलीकं तदभावस्यैव सिषाधयिषिततया नोक्तक्षत्यवकाश इत्याशङ्क्ते **एकस्मिन्नस्त इति** । **तथा सतीति** । धर्मधर्मिसाधारणविशेषणतामात्रविवक्षायामित्यर्थः ।

**प्रदीपः**— **एकस्मिन्निति** । तथा च भावाश्रयदूषणाभावः विशेषणत्वमिति स्वरूपस्यापि व्यावर्तकत्वेन विशेषणत्वात् ।

**४१७ सु०— विशेषणत्वं धर्मत्वम् । तच्च वस्त्वन्तरापेक्षया सर्वस्याप्यस्तीति चेत् । तथा सति वस्तुत्वमात्रं हेतुरित्युक्तं स्यात् । तच्चात्मन्यभावप्रतियोगित्वरहितेऽप्यस्तीति व्यभिचारः ॥ अपि च प्रमेयत्वादिना अनैकान्तिकं धर्मत्वम् । प्रमेयत्वादीनामपि सकलधर्मरहिते ब्रह्मण्यवृत्तेः सपक्षतैवेति चेत्तर्हि तस्मिन्नेव सत्वासत्त्वयोरभावेन प्रकृतप्रतिज्ञातार्थपर्यवसानादर्थान्तरता स्यात् ॥ एकशब्देनैकत्वगुणवतो विवक्षितत्वाद् ब्रह्मणो गुणाभावान्नेति चेत् । तथाऽप्येकत्वगुणवद्भिन्नाधिकरणसंसर्गराहित्येन प्रतिज्ञातार्थसंभवादर्थान्तरताऽपरिहारात् । सत्त्वमसत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगीति प्रतिज्ञाने न दोष इति चेन्न । प्रमेयत्वादिषु व्यभिचारात् ।**

**'असत्त्वं सत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगि अनात्मनिष्ठसंसर्गाभावप्रतियोगिधर्मत्वाद् रूपवदि'त्यनुमीयत इति चेत् । किमिदमसत्त्वं नाम ॥ अभावप्रतियोगित्वमात्रं चेत् ॥ तदनात्मनि सर्वत्रास्तीति परेणाङ्गीकृतत्वादसिद्धो हेतुः ॥ अत्यन्ताभावप्रतियोगित्वं चेत् । तदाऽपि वक्तव्यम् । किं प्रतिज्ञाहेत्वोरनात्मपदेनात्मव्यतिरिक्तमात्रं विवक्षितम् उतात्मव्यतिरिक्तं वस्तु । आद्ये शशविषाणादावनात्मनि निर्धर्मके सत्त्वासत्त्वयोरभावेनार्थान्तरत्वापातः । द्वितीये दृष्टान्तस्य साध्यविकलता । रूपादीनां सत्त्वानधिकरणानात्मवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वस्य असंप्रतिपत्तेः ॥ स्यादेतत् । सद्विलक्षणत्वमसत्यसद्विलक्षणत्वं च सति प्रसिद्धमेव, अतः कथमप्रसिद्धविशेषणतेति । मैवम् । विशिष्टस्याप्रसिद्धत्वात् । अन्यथा 'शशविषाणोल्लेखिता भूरि'त्याद्यप्रसिद्धविशेषणोदाहरणेऽप्येकैकदेशप्रसिद्धिव्युत्पादनसंभवेन तदभावप्रसङ्गात् ।**

**सद्विलक्षणत्वासद्विलक्षणत्वे स्वतन्त्रे साध्ये इति चेन्न सिद्धसाधनस्योक्तत्वात् । तर्ह्यसद्वैलक्षण्यमात्रं साध्यमस्त्विति चेन्न जगद्ब्रह्मणोरसद्विलक्षणयोरवृत्तेर्बाध्यत्वस्य असाधारण्यापातात् । प्रतीतत्वस्य चासत्यपि वृत्तेर्वक्ष्यमाणत्वात् ।**







**बिन्दुः**— यथा दण्डीत्यादौ दण्डादीनां देवदत्तादिं प्रति धर्मत्वेऽपि दण्डत्वादिकं प्रति धर्मित्वं, तथाच न काऽप्यनुपपत्तिरित्यत आह **विशेषणत्वमिति**। अभ्युपेत्य चेदमुदितम्। वस्तुतस्तु परेण दण्डिदृष्टान्तन्यायो दुरुपपाद एव। परस्यैव दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्। सर्वेषां सत्त्वानां यदि धर्मत्वहेतुं प्रति धर्मित्वमभ्युपेयं तर्हि सर्वाणि सत्त्वान्यवश्यं कस्यचिद्धर्मा इत्यनभ्युपगच्छतोऽपि बलाद्गले पतेदेव। ततश्च यस्यैव तानि धर्माः स्युस्तदेव सदित्यापन्नम्। न हि एकस्यैव सर्वसत्त्वाधिकरणत्वं संभवति बाधादनभ्युपगमाच्चेति स्वस्ववृत्तिसत्त्वाधिकरणत्वं तस्य तस्यैवेति वक्तव्यम्। ततश्च सर्वोऽपि प्रपञ्चः सन्नेवापद्येतेति मिथ्यात्वसाधनार्थं प्रवृत्तेन धर्मत्वेन तत्त्ववादिनामेवोपकारः कृतः स्यान्न तु मिथ्यावादिनः। तस्मात् सत्त्वं कस्यापि धर्मो न भवत्येवेत्येव परेण वक्तव्यम्। तथाच कथं न धर्मत्वं स्वरूपासिद्धम्। तस्मादेकतः कूपे पातः एकतश्च वाप्यां पात इति महत्सङ्कटम्। तथाच पूर्वोक्तमपि दूषणमतिद्रढीय एवेति ध्येयम्। **प्रमेयत्वादिनेति**। परमते प्रमेयत्वस्य केवलान्वयित्वेनात्यन्ताभावाप्रतियोगित्वमिति भावः। **एकशब्देनेति**। शङ्कामात्रमेतत् न त्वेकशब्दस्यायं तदभिप्रेतो वास्तवार्थः। तथात्वे निर्गुणगुणकर्मादीनां मिथ्यात्वसिद्धिप्रसङ्गात्। अपेक्षाबुद्धिशेषविषयत्वमेवैकशब्देनोच्यते यथा पृथिवी त्रयोदशान्योन्याभाववती चतुर्विंशतिर्गुणाः पञ्च कर्माणीत्यादिवदिति चेत् न। तर्हि व्यावर्त्याभावादेकशब्दवैयर्थ्यापत्तेः। किन्तु एकशब्दोऽत्राभेदवाची। अभेदश्च प्रतियोग्यधिकरणापेक्षः ससंबन्धिकपदार्थत्वात्। तत्र च सत्त्वासत्त्वरूपपक्षवाचकपदसमभिव्याहारात्तदाश्रययोः परस्परं प्रति योग्याधिकरणभावोपलभ्यते। यथा धूमवह्नी एकधर्मिनिष्ठौ इत्युक्ते धूमाश्रयाभिन्नाधिकरणवृत्तिर्वह्निरिति लभ्यते तथैव व्युत्पत्तेः। तत्राप्येकत्वसंख्याप्रतीतौ च नित्यत्वकृतकत्वे एकधर्मिनिष्ठे इत्यपि व्यवह्रियते। परस्परविरुद्धयोरप्येकत्वसंख्यावद्वृत्तित्वस्याक्षतेः। अत एव साध्यपदव्याख्यानावसरे तथैव निष्कृष्टार्थावपनं कृतम्। दृष्टान्तद्वयोपादानमप्येवमावश्यकमिति तत्त्वम्। **तथापीति**। अयमर्थः। एकशब्देनैकत्वगुणवत्त्वविवक्षणे धर्मत्वहेतोरेकत्वगुण एव व्यभिचारः स्यात्। तत्परिहारार्थं साध्यगर्भप्रविष्टाभावपदेन विशेषाभावविवक्षावश्यमाश्रयणीया। ततश्च घटवृत्त्येकत्वगुणस्य स्वाश्रयभिन्नाधिकरणपटादिनिष्ठसंसर्गाभावप्रतियोगित्वात्। पटादिनिष्ठैकत्वानां च घटनिष्ठसंसर्गराहित्यान्न तत्र व्यभिचार इत्यवश्यं वाच्यम्। एवमेव सत्त्वासत्त्वानामपि सर्वेषां स्वस्वानधिकरणवृत्तिसंसर्गाभावप्रतियोगित्वमादाय प्रतिज्ञापर्यवसानमस्तु। ततश्च त्वदभिप्रेतमिथ्यात्वासिध्या अर्थान्तरमेवेति। यद्वा एकत्वगुणवन्तो विभिन्नाः अनेके पदार्थाः तन्निष्ठात्यन्ताभावप्रतियोगित्वं स्वस्वानधिकरणावच्छेदेन सत्त्वासत्त्वयोरस्त्येवेति सिद्धसाधनत्वादर्थान्तरमेवेति। **सत्त्वमिति**। अत्र साध्ये प्रपञ्चस्य सदसद्विलक्षणत्वरूपोद्देश्यसिद्धये विशेषणानि।





शशशृङ्गादौ सत्त्वाभावात्सिद्धसाधनपरिहारार्थमाद्यं विशेषणम्। सति आत्मनि बाधपरिहाराय द्वितीयमिति वा। अत्र प्रतिज्ञायामेकशब्दाप्रवेशान्न तन्निबन्धनः पूर्वोक्तो दोषः तथाच तत्परिहारार्थमेकशब्दस्याभिन्नार्थत्वाश्रयणादिः क्लेशोऽपि नानुसरणीयः। तत्प्रवेशमन्तरेणापि प्रतिज्ञानिर्वाहादिति भावः। **व्यभिचारादिति**। प्रपञ्चसत्यत्ववादिनो मते सत्त्वस्यापि केवलान्वयित्वाद्व्यतिरेकित्वेन हेतुविशेषणे स्वरूपासिद्धिरिति भावः। एतेन सिद्धसाधनत्वपरिहारार्थं साध्ये प्रथमविशेषणमप्यसङ्गतमेवेति सूचयति। अत एवासत्त्वपक्षकम् अग्रिमानुमानं रचयति। तत्र च संसर्गाभावप्रतियोगित्वरूपव्यतिरेकित्वप्रवेशोऽपि स्वरूपासिद्धेरसंभवात्। **असत्त्वमिति**। अत्र संसर्गाभावप्रतियोगितामात्रसाधने आत्मनोऽसत्त्वानधिकरणतया सिद्धसाधनत्वमतोऽनात्मनिष्ठेति। तावतापि परमते प्रपञ्चस्यासत्त्वाभावात्सिद्धसाधनमेवेत्यत उद्देश्यसिद्ध्यर्थं च सत्त्वानधिकरणेत्यपि इत्यापातत उक्तिसंभवः। हेतावनात्मनिष्ठेति विशेषणं तु जडत्वादौ व्यभिचारवारणाय। **रूपवदिति**। रूपस्य शशशृङ्गरूपानात्मन्यवृत्त्या हेतुसाध्ययोः संभवाद् दृष्टान्तत्वोपपत्तिः। **सत्त्वासत्त्वयोरभावेनेति**। असत्त्वस्य धर्मिसत्तानिरपेक्षत्वेनैव स्वरूपसिद्धेरिति भावः।

परि०— **वस्त्वन्तरापेक्षयेति**। घटसत्त्वस्य धीरित्यादिप्रयोगे सत्त्वस्य विशेषणत्वादिति भावः। 'सन्मात्रत्वं ब्रह्मणोऽपी'त्यस्य वस्तुत्वमात्रत्वमित्यर्थान्तरं सूचयन्नाह **तच्चात्मनीत्यादिना**। **प्रमेयत्वादिनेति**। तस्य केवलान्वयिधर्मत्वेनाभावाप्रतियोगित्वादिति परैरुपगमादिति भावः। **एकत्वगुणेति**। एकधर्मिनिष्ठेत्यादेर्हि एकत्वगुणयुक्तधर्मिनिष्ठेत्यादिरर्थः। तथाच एकत्वगुणवती एकत्वगुणयुक्ते ये अन्योन्यभिन्ने अधिकरणे तन्निष्ठौ यावत्यन्ताभावौ एकत्र सत्त्वसंसर्गाभावो परत्रासत्त्वसंसर्गाभाव इत्येवंरूपौ तत्प्रतियोगिनी इत्यर्थसंभवेन त्वदभिमतोभयराहित्यस्यैकत्रासिद्ध्याऽर्थान्तरतेत्यर्थः। अत्यन्ताभावेत्यस्य एकस्मिन्नस्त इति साध्यत इति पूर्वग्रन्थे अप्रामाणिकसंसर्गप्रतियोगिकाभावपरत्वस्योक्ततया संसर्गराहित्येनेत्युक्तम्। **नत्वत्यन्ताभावेनेति**। **असत्त्वेति**। असत्त्वानधिकरणं यदनात्म तन्निष्ठेत्यर्थः। **न दोष इति**। अर्थान्तरतादोषो नेत्यर्थः। प्रमेयत्वादावव्यभिचाराय असत्त्वपक्षकं प्रयोगमाह **असत्त्वमिति**। शशनृभृङ्गनिष्ठाभावप्रतियोगित्वेन प्रमेयत्वादौ साध्यमस्तीति भावः। हेत्वभावाच्च न व्यभिचार इति भावेन हेतुं विशिनष्टि। अनात्मनिष्ठसंसर्गाभावप्रतियोगिधर्मत्वादिति। सत्त्वपक्षके असत्त्वपक्षके चोभयत्र दोषमाह **आद्य इति**। **असंप्रतिपत्तेरिति**। अनात्मवस्तुमात्रस्य सत्त्वाधिकरणत्वादिति भावः। अप्रसिद्धिवारकसामान्यानुमानस्य खण्डितत्वात्। विमतमनिर्वचनीयं बाध्यत्वादित्यत्राप्रसिद्धिनिवारणाय प्रकारान्तरेण साध्यमाशङ्कते **स्यादेतदित्यादिना**। **सिद्धसाधन-**





**स्येति** । सद्वैलक्षण्याद्यंशे सिद्धसाधनस्य शुक्तिरजतादेः सत्त्वस्य सदसत्त्वस्य चास्माभिरनङ्गीकृतत्वेन सिद्धसाधनत्वादितिग्रन्थेनोक्तत्वादिति भावः । **बाध्यत्वस्येति** । ब्रह्मज्ञानेतरनिवर्त्यत्वरूपस्येत्यर्थः । नन्वेवं प्रतीतत्वं हेतुरस्तु । जगद्ब्रह्मणोश्च दृश्यत्वेन नासाधारण्यमित्यत आह **प्रतीतत्वस्य चेति** । **वक्ष्यमाणत्वादिति** । असद्विलक्षणेत्याद्युत्तरग्रन्थ इति भावः । असतीत्युपलक्षणम् । ईक्षतिनयादौ ब्रह्मणोऽपीति ज्ञेयम् । तथाच तत्र व्यभिचार इत्याकूतम् ।

**गु०दी०— तथाऽप्येकत्वगुणवद्भिन्नाधिकरणे**त्यत्र एकत्वगुणवद्भिन्नं निर्गुणं गुणक्रियादिकं तत्र सत्त्वासत्त्वसंसर्गस्य विद्यमानत्वेऽप्येकत्वगुणवदधिकरणकसंसर्गाभावप्रतियोगित्वस्य वक्तुं शक्यत्वेनास्याः प्रतिज्ञायाः सर्वत्र त्वदभिलषितसदसद्वैलक्षण्यसाधकत्वासिद्ध्या अर्थान्तरता, तद्वच्छुक्तिरजतादेरपि निर्गुणत्वात्तन्मात्रेण साध्यसिद्धिसंभवे त्वदभिमतसदसद्विलक्षणत्वासिद्ध्या अर्थान्तरता । घटादौ च गुणमात्रप्रतिषेधेनापि साध्यसिद्ध्या अर्थान्तरता चेति भावः । गुणनिषेधो बाधितश्चेत्सत्त्वनिषेधः सुतरां बाधित इति ज्ञेयम् । वस्तुपदादाने तु सत्त्वानधिकरणे शशविषाणादौ रूपस्याभावेन स्यात् कथञ्चिद् दृष्टान्तता । वस्तुपददाने तु सत्तासामान्यविधुरसामान्यादिष्ववर्तनादेव रूपस्य दृष्टान्तता वाच्या । जातिमनङ्गीकुर्वतामस्माकं सामान्यादिकमपि सत्त्वाधिकरणमेवेति भावेनाह **दृष्टान्तस्य साध्यविकलतेति** ।

**यादु०— तथा सतीति** । विशेषणत्वरूपधर्मत्वस्य धर्मिसाधारणत्वे धर्मधर्मिसाधारणं वस्तुत्वमेव धर्मत्वमित्युक्तं स्यादित्यर्थः । **अभावप्रतियोगित्वरहित इति** । तस्य पारमार्थिकत्वान्निर्धर्मकत्वाच्चेति भावः । ननु निर्विशेषे वस्तुत्वमपि नेति कथं व्यभिचार इत्यरुचेराह **अपि चेति** । **तथाऽप्येकत्वेति** । एकत्वगुणवन्ति यानि भिन्नानि घटपटादीनि तत्र प्रत्येकं सत्त्वासत्त्वयोः संसर्गनिषेधेत्यर्थः । निषेधाधिकरणयोर्भिन्नत्वेऽपि प्रत्येकमेकत्वगुणवत्त्वसंभवेन त्वदभिलषितमुभयनिषेधधर्म्यैक्यं न सिध्यतीति भावः । **सत्त्वमिति** । अत्रात्मभिन्नशशविषाणाद्यसन्निकृष्टसंसर्गाभावप्रतियोगित्वेनार्थान्तरत्ववारणायासत्त्वानधिकरणेत्यनात्मविशेषणम् । निर्धर्मकात्मनिष्ठसंसर्गाभावप्रतियोगित्वेन अर्थान्तरत्वपरिहाराय **अनात्मेति** । **असत्त्वमिति** । अत्राप्यनात्मपदकृत्यं पूर्ववदेव सिद्धसाधनतावारणाय सत्त्वानधिकरणेत्यनात्मविशेषणम् । हेतौ च प्रमेयत्वादौ व्यभिचारवारणायानात्मनिष्ठसंसर्गाभावप्रतियोगीति धर्मविशेषणम् । तथाच व्यतिरेकिधर्मत्वं हेतुरित्युक्तं भवति । **परेणेति** । त्वत्प्रतिवादिनेत्यर्थः । **शशविषाणादाविति** । यथा सद्रूपेऽपि ब्रह्मणि निर्धर्मकत्वेन सत्त्वासत्त्वाभाव एवमसद्रूपेऽपि शशविषाणादौ निर्धर्मकत्वेनासत्त्वाभाव इत्यर्थः । **रूपादीनामिति** । रूपादिप्रतियोगिकसंसर्गाभावाधिकरणस्यानात्मनो गुणक्रिययोः सत्त्वाधिकरणत्वादिति भावः । किं विशिष्टस्य साध्यत्वमङ्गीकृत्य तस्यैव विशकलितप्रसिद्धिरुच्यते उत स्वतन्त्रं साध्यद्वयमिति विकल्पं मनसि निधायाद्यं दूषयति **विशिष्टस्येति** । द्वितीयं शङ्कते **सद्विलक्षणत्वेति** । **सिद्धसाधनत्वस्येति** । सद्वैलक्षण्यलक्षणसाध्य इति शेषः । **बाध्यत्वस्येति** । पराभिप्रेतस्य प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपस्येति शेषः ।





**वं०प०— अनैकान्तिकमिति ।** केवलान्वयित्वेनात्यन्ताभावप्रतियोगित्वाभावादिति भावः । साध्यस्यापि सत्त्वान्न व्यभिचार इत्याशङ्कते **प्रमेयत्वादेरपीति । तस्मिन्नेवेति ।** सकलधर्मरहिते ब्रह्मण्येवेत्यर्थः । **भिन्नाधिकरणेति ।** प्रत्येकं सदसद्रूपभिन्नाधिकरणेत्यर्थः। तथा चैकत्वगुणवत्सद्रूपधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वस्यासत्त्वे सद्भावात्तथैकत्वगुणवदसद्रूपधर्मिनिष्ठसंसर्गाभावप्रतियोगित्वस्य सत्त्वे सद्भावेनार्थान्तरतेति भावः । एकत्वस्य प्रतियोगित्वादिवदसत्यपि सद्भावाङ्गीकारेणेदमुक्तमित्यवगन्तव्यम् । **सत्त्वमिति ।** अत्रानुमाने धर्मत्वमेव हेतुरिति भावः । असत्त्वानधिकरणेनात्मनि सत्त्वं नास्तीत्युक्त्या तस्यानात्मनः सदसत्त्वानधिकरणत्वं प्राप्तमिति ज्ञातव्यम् । एवमेवोत्तरानुमानेऽपि बोध्यम् । **रूपवदिति ।** अनात्मभूतगुणकर्मवाय्वादिनिष्ठत्वाभावात् दृष्टान्ते हेतुर्द्रष्टव्यः । सत्त्वानधिकरणानात्मभूतशशविषाणादिनिष्ठत्वाभावेन रूपादौ साध्यं चास्तीति द्रष्टव्यम् । अनात्मनि घटादावभावात्पक्षे हेतुरस्तीति द्रष्टव्यम् । **असिद्धो हेतुरिति ।** पक्षीभूतेऽभावप्रतियोगित्वरूपेऽसत्त्वेऽनात्मनिष्ठसंसर्गाभावप्रतियोगित्वरूपो हेतुर्नास्ति । अनात्मन्यविद्यमानत्वं तदर्थः । अभावप्रतियोगित्वस्य चानात्मनि घटादौ सत्त्वादिति भावः । वस्त्विति शशविषाणादिव्यावृत्तिः । **शशविषाणादाविति ।** पक्षीभूतेऽत्यन्ताभावप्रतियोगित्वरूपासत्त्वे सत्त्वानधिकरणमात्मभिन्नं यत् शशविषाणादिकं तन्निष्ठसंसर्गाभावप्रतियोगित्वमस्ति । अत्यन्ताभावप्रतियोगित्वरूपमसत्त्वं निर्धर्मके शशविषाणादौ नास्तीति सत्त्वासत्त्वानधिकरणत्वं शशविषाणादावेव प्राप्तं न रजते इत्यर्थान्तरतेत्यर्थः । तामुपपादयति **रूपादीनामिति ।** रूपे आत्मभिन्नगुणकर्मादिनिष्ठसंसर्गाभावप्रतियोगित्वे सत्यपि रूपादिप्रतियोगिकसंसर्गाभावाधिकरणस्यात्मभिन्नस्य गुणकर्मादिर्वस्तुनः सत्त्वेन सत्त्वानधिकरणत्वाभावात्सत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगित्वं नास्तीति साध्यवैकल्यमित्यर्थः । **अतः कथमिति ।** विमतमनिर्वचनीयं बाध्यत्वादित्यनुमान इत्यर्थः । नन्वसद्विलक्षणत्वं बाध्यत्वहेतुना न साध्यते । येनासाधारण्यं स्यात् । किं नाम प्रतीतत्वहेतुनैवातो नोक्तदोष इत्यत आह **प्रतीतत्वस्य चेति । वृत्तेरिति ।** तथा चासति व्यभिचार इति भावः ।

**आनन्दः**— ननु वृत्तित्वमेव हि धर्मत्वं तच्च स्वरूपसत्त्वेऽप्यस्तीति कथमसिद्धो हेतुरिति चेन्न । तद्भिन्नत्वे सति तद्वृत्तित्वमेव धर्मत्वं न च तत्स्वरूपसत्त्वेऽप्यस्तीति कथं नासिद्धो हेतुरिति । **एकत्वगुणवद्भिन्नाधिकरणसंसर्गराहित्येनेति ।** एकत्वगुणवन्ति यानि भिन्नान्यधिकरणानि तेषु यः संसर्गस्तद्राहित्येनेत्यर्थः । एवञ्चानेकसत्त्वानां पक्षीकारात्तेषां चैकत्वगुणवत्स्वधिकरणेषु संसर्गाभावसत्येनार्थान्तरं स्यादित्यर्थः । सत्त्वासत्त्वयोरभावे वेत्यत्र हेतुर्निर्धर्मक इति । साध्यविकलतामेव दर्शयति **रूपादीनामिति ।** गुणादेर्द्रव्याभेदाङ्गीकारेण सत्त्वानधिकरणस्यात्मव्यतिरिक्तवस्तुन एवाभावेन तन्निष्ठासंसर्गाभावे प्रतियोगित्वस्वरूपादावभावेन दृष्टान्तस्य साध्यवैकल्यमित्यर्थः । **अन्यथेति ।** प्रत्येकप्रसिद्ध्यैव विशिष्टप्रसिद्ध्यङ्गीकारे इत्यर्थः । नासाधारण्यं प्रतीतत्वेन हेतुना असद्वैलक्षण्यसाधनात् । तस्य च सपक्षे सत्त्वादीत्यत आह **प्रतीतत्वस्य चेति ।**

**कं०रा०— अभावप्रतियोगित्वरहित इति ।** आत्मनः पारमार्थिकत्वान्निर्धर्मकत्वादिति भावः । ननु निर्विशेषे वस्तुत्वमपि कथमस्तीत्यत आह **अपि चेति । तस्मिन्निति ।** ब्रह्मण्येव सत्त्वासत्त्वयोरभावेनैकधर्मिनिष्ठ-





संसर्गाभावप्रतियोगित्वरूपसाध्यपर्यवसानादनिर्वाच्यसिद्ध्यभावेनार्थान्तरता स्यादित्यर्थः । **एकत्वेति** । एकत्वगुणवति विभिन्नेऽधिकरणे तत्संसर्गराहित्येनेत्यर्थः । तथा चैकत्वगुणवन्निष्ठसंसर्गाभावप्रतियोगित्वं सत्त्वासत्त्वयोः साध्यमानमेकत्वगुणवति कस्मिंश्चित्पदार्थे सत्त्वाभावमेकत्वगुणवत्यन्यस्मिंश्चासत्त्वाभावमादाय पर्यवस्यतीत्येव त्रैव सत्त्वासत्त्वोभयराहित्यासिद्ध्या अर्थान्तरं तदवस्थमेवेति भावः । **सत्त्वमिति** । सत्त्वमसत्त्वानधिकरणं योऽनात्मा तन्निष्ठसंसर्गाभावप्रतियोगि भवितुमर्हतीति प्रतिज्ञातेऽसत्त्वानधिकरणानात्मन्येव सत्त्वसंसर्गाभावस्यापि सिध्या न पूर्वोक्तार्थान्तरतेत्यर्थः । अत्र चानात्मपदं सत्त्वस्य निर्धर्मकात्मनिष्ठसंसर्गाभावप्रतियोगित्वमादाय प्रतिज्ञापर्यवसानादर्थान्तरतानिरासाय । तावत्युक्ते सत्त्वस्यानात्मशशविषाणादिनिष्ठसंसर्गाभावप्रतियोगित्वमादाय प्रतिज्ञापर्यवसानादर्थान्तरता स्यात्तन्निरासार्थमसत्त्वानधिकरणेत्युक्तम् । **अनात्मेति** । प्रमेयत्वादौ व्यभिचारपरिहाराय संसर्गाभावप्रतियोगीति विशेषणम् । तावत्युक्तेऽनात्मत्वे व्यभिचारस्तन्निरासायानात्मनिष्ठेत्युक्तम् । **असिद्ध इति** । अनात्मनिष्ठसंसर्गाभावप्रतियोगित्वरूपविशेषणासिध्या विशिष्टो हेतुरसिद्ध इत्यर्थः । **वस्तु** सस्वरूपम् । **रूपादीनामिति** । रूपादीनां सत्त्वानधिकरणानात्मशशविषाणादिनिष्ठसंसर्गाभावप्रतियोगितया यथाश्रुतसाध्यस्य तत्र संप्रतिपन्नत्वेऽपि सस्वरूपस्य सर्वस्य सत्त्वाधिकरणत्वेन सत्त्वानधिकरणानात्मवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वस्यासंप्रतिपत्तेरित्यर्थः । यद्यपि सिद्धान्ते शशविषाणादौ सत्त्वाभाववत्सत्त्वानधिकरणानात्मवस्तुनोऽसत्त्वेऽपि तत्र रूपाद्यभावस्य सत्त्वात्सत्त्वानधिकरणानात्मवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वरूपसाध्यं रूपादावस्तीति न साध्यवैकल्यं दृष्टान्तस्येति वक्तुं शक्यम् । तथाऽप्यनयैव रीत्या सत्त्वानधिकरणानात्मनो वस्तुन एवाभावात्तन्निष्ठसंसर्गाभावप्रतियोगित्वमसत्त्वरूपपक्षे पर्यवस्यतीत्यनिर्वाच्यसिध्यभावादर्थान्तरत्वं वज्रलेपायितमित्यत्र तात्पर्यम् । ननु विमतं सद्विलक्षणत्वे सति असद्विलक्षणमिति सद्वैलक्षण्यविशिष्टासद्वैलक्षण्यं न साध्यम् । येन विशिष्टाप्रसिध्याऽप्रसिद्धविशेषणता स्यात् । किं नाम विमतं सद्विलक्षणमसद्विलक्षणं चेति प्रधानभूते सद्विलक्षणत्वासद्विलक्षणत्वे साध्ये । तत्र च विशकलितप्रसिध्या साध्याप्रसिद्धिः परिहर्तुं शक्यैवेत्याशयेन शङ्कते **सद्विलक्षणत्वेति** । **सिद्धेति** । सद्विलक्षणत्वांशे सिद्धसाधनस्योक्तत्वादित्यर्थः । **जगदिति** । असद्वैलक्षण्यरूपसाध्यवत्तया निश्चितयोर्जगद्ब्रह्मणोर्बाध्यत्वरूपहेतोरवृत्तेः सकलसपक्षव्यावृत्तत्वेनासाधारण्यापातादित्यर्थः । ननु शुक्तिरजतस्यासद्वैलक्षण्यमात्रे साध्यमाने प्रतीतत्वं हेतूकुर्मः । अतो नासाधारण्यमित्यत आह **प्रतीतत्वस्येति** । 'असद्विलक्षणत्वज्ञप्त्यै ज्ञातव्यमसदेव ही'त्युत्तरत्रासत्यपि प्रतीतत्वस्य वृत्तेर्वक्ष्यमाणतया तत्र चासद्वैलक्षण्यरूपसाध्याभावाद्व्यभिचार इति भावः ।

**श्रीनिधि०— वस्तुत्वमात्रं हेतुरित्युक्तं स्यादिति** । सर्ववस्तुनिष्ठत्वेन केवलान्वयित्वाद्वस्तुभिन्नत्वाच्च विशेषणत्वस्येति भावः । धर्मत्वमनैकान्तिकमिति संबन्धः तस्य केवलान्वयित्वादिति भावः । केवलान्वयित्वं नेति भावेन शङ्कते **प्रमेयत्वादेरपीति** । **तस्मिन्नेवेति** । ब्रह्मण्येवेत्यर्थः । **एकत्वगुणवदिति** । एकत्वगुणवन्ति यानि परस्परं भिन्नान्यधिकरणानि तानि । तत्र सर्वत्र सत्त्वसंसर्गाभावः अपरत्र असत्त्वसंसर्गाभाव इत्येवमित्यर्थः । केचित्तु एकत्वगुणवद्भिन्नं निर्गुणत्वं गुणक्रियादि तत्र सत्त्वासत्त्वसंसर्गस्य विद्यमानत्वेऽपि एकत्वगुणवदधिकरणव -





संसर्गाभावप्रतियोगित्वस्य वक्तुं शक्यत्वेनास्याः प्रतिज्ञायाः सर्वत्र त्वदभिलषितसदसद्वैलक्षण्यसाधकत्वासिद्ध्या अर्थान्तरता तद्वच्छुक्तिरजतादेरपि निर्गुणत्वमात्रेण साध्यसिद्धिसंभवेन त्वदभिलषितसदसद्विलक्षणत्वासिद्ध्या अर्थान्तरता घटादौ च गुणमात्रप्रतिषेधेनापि साध्यसिद्ध्या अर्थान्तरता इति भावः । गुणनिषेधो बाधितश्चे-त्सत्त्वनिषेधस्सुतरां बाधित इत्याहुः । **असत्त्वानधिकरणेति** । ब्रह्मादायार्थान्तरतापरिहाराय उक्तम् **अनात्मेति** । सदसद्वैलक्षण्यस्यापि सिद्ध्यर्थम् **असत्त्वानधिकरणेति** । अत्रानात्मनिष्ठसंसर्गाभावप्रतियोगीति हेतौ विशेषिते त्वस्य सत्त्वानधिकरणे अनात्मनि सर्वत्राभ्युपगमेन विशेषणासंभवेन हेतोरसिद्धिः स्यात् अत असत्त्वपक्षीकारेण विशिष्टहेतुकमुत्तरमनुमानमिति ज्ञेयम् । **असत्त्वमिति** । निर्धर्मकब्रह्मणि साध्यपर्यवसानेनार्थान्तरतापरिहाराय अनात्मनिष्ठेति आत्मनिष्ठसंसर्गाभावप्रतियोगिनि जडत्वादौ व्यभिचारवारणायानात्मेति हेतौ विशेषणम् । शषविषाणादौ सत्त्वाभावेन हेतोरसिद्धिप्रसिद्धिप्रसङ्ग इति चेन्न अनात्मवस्तुनो विवक्षितत्वादिति । असिद्धो हेतुरिति परेण ब्रह्मातिरिक्तसर्वप्रपञ्चस्य ज्ञाननिवर्त्यत्वाङ्गीकारेण प्रध्वंसप्रतियोगित्वात् अस्मन्मतानुसारेण तु अन्योन्या-भावप्रतियोगित्वस्य सर्वत्र सत्त्वेन हेतुविशेषणासंभवेन असिद्धिप्रसङ्ग इति द्रष्टव्यम् । **दृष्टान्तस्य साध्यविकलतेति** । रूपादेरनात्मवाच्यादिसत्त्वाधिकरणवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वेन सत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रति-योगित्वाभावादिति भावः । **अन्यथेति** । विषकलितप्रसिद्ध्या अप्रसिद्धविशेषणतापरिहार इत्यर्थः । **एकैकदेशेति** । शेषस्य विज्ञानस्य उल्लिखितत्वस्य चेत्यर्थः । **स्वातन्त्र्येणेति** । समुदितम् । साध्य इत्यर्थः । सिद्धसाधन-त्वस्योक्तत्वादिति अंशे सिद्धसाधनस्य त्वोक्तत्वादित्यर्थः । शुक्तिरूप्यादेरसद्विलक्षणत्वाभावात् । तर्हि प्रतीतत्वं हेतुरस्तीत्यत आह **प्रतीतत्वस्य चेति** ।

**वा०चं०**— ननु धर्मत्वं विशेषणताविशेषोऽनुभवैकवेद्योऽतो नासिद्धिर्नापि वस्तुत्वतुल्यतेत्यत आह **अपि चेति** । **तर्हीति** । न च निर्धर्मकत्वादेव सत्त्वासत्त्ववत्तदभावोऽपि ब्रह्मणि नास्तीति वाच्यम् । सत्त्वाद्यभावाभावे सत्त्वाद्यापातेनोभयाभावस्य विरुद्धत्वाच्छ्रुतिप्रतिपन्ने न विरोधशङ्केत्यस्य निर्धर्मकत्वस्य श्रुत्यर्थतासिद्ध्यधीनतया अन्योन्याश्रयापातेनावक्तव्यत्वात् । अन्यथा मीमांसाऽनवतारप्रसङ्गात् । सत्त्वादितदभावयोरिव प्रमेयत्वादि-तदभावयोरुभयोरपि ब्रह्मण्यभावापत्त्या प्रमेयत्वादेरन्यनिष्ठाभावप्रतियोगित्वाभावात् । ब्रह्मनिष्ठाभावप्रतियोगित्व-स्याप्यभावे प्रमेयत्वादौ धर्मे साध्याभावेनानैकान्त्यतादवस्थ्याच्च । न चात्माश्रयात्प्रमेयत्वादेः स्वनिष्ठाभाव-प्रतियोगित्वमेवेति वाच्यम् । सद्वैलक्षण्यमिथ्यात्वदृश्यत्वादिवदनन्यथासिद्धप्रतीतिबलेन स्ववृत्तितायास्तस्या-वश्याङ्गीकार्यत्वादिति भावः । **तथाऽपीति** । एकशब्दस्यैक्यार्थकत्वे एकस्मिन्नुभयाभावसिद्धावपि सङ्ख्यार्थकत्वे-ऽभावद्वयस्य भिन्नाधिकरणनिष्ठतयोभयाभावसिद्ध्याऽपि साध्योपपत्तेरित्याशयः । यद्यप्यत्र वक्ष्यमाणानुमान एव पूर्वानुमान एवैकशब्दस्यैक्यैकत्वसङ्ख्यावत्त्वरूपार्थद्वयस्वीकारेऽप्यव्यवहितपूर्वदोषनिवृत्तेः प्रमेयत्वादौ व्यभिचारस्य च वक्ष्यमाणप्रयोगेऽप्यनिवृत्तेः प्रयोगान्तरोपादानं नावश्यकं तथाऽपि सत्त्वासत्त्वयोर्द्वयोः पक्षत्वे रूपरसयोरुभयोरपि दृष्टान्तत्वेन निर्देष्टव्यतया गौरवापातेन यत्परेण लघुप्रयोगशरीरं प्रदर्शितं तन्निरासस्यापि सूचनाय तदनुवदति **सत्त्वमिति** । भिन्नाधिकरणनिष्ठतया ब्रह्मनिष्ठतया वा भावद्वयसिद्ध्याऽर्थान्तरवारणाय क्रमेणासत्त्वानधिकरणानात्मेति





साध्यविशेषणे । प्रमेयत्वाद्यव्यभिचाराय वक्ष्यमाणहेतुविशेषणस्य सत्त्वपक्षकानुमाने हेत्वसिद्ध्यापादकत्वेनानुपपत्त्याऽसत्त्वपक्षकानुमानमाह **असत्त्वमिति** । दूषणानां व्यवस्थितत्वात्पक्षं विकल्पयति **किमिदमिति** । द्वितीयेऽपि व्यवस्थितदूषणं वक्तुं विकल्पयति **किमिति** । **असंप्रतिपत्तेरिति** । रूपादिसंसर्गाभावाधिकरणानात्मवस्तुनः सत्त्वानधिकरणत्वस्य तदनिवर्चनीयतासिद्ध्यधीनत्वादिति भावः । अप्रसिद्धविशेषणश्च पक्ष इति सामान्येनोक्तत्वाद्विशिष्टस्य साध्यत्वेऽप्रसिद्धविशेषणतोक्तेत्यजानानो वैकदेशप्रसिद्धिमात्रेण विशिष्टस्याप्रसिद्धत्वेऽपि तत्साधनेन तस्यादोषत्वमित्यभिमानेन वा शङ्कते **स्यादेतदिति** । एवं प्रसिद्धिमुपपादयतो विशिष्टस्य साध्यत्वमभिप्रेतं स्वतन्त्रयोर्वा । नाद्य इत्याह **विशिष्टस्येति** । द्वितीयं शङ्कते **सदिति** । **जगदिति** । जगतो बाध्यत्वस्याद्याप्यसिद्धेरिति भावः । माऽस्तु बाध्यत्वं हेतुः प्रतीतत्वमेव हेतुर्भविष्यतीत्यत आह **प्रतीतत्वं चेति** ।

**वा०२०— विशेषणत्वमिति** मूले विशेषणत्वं व्यावर्तकत्वं वस्त्वन्तरापेक्षया विशेषणत्वं सर्वस्याप्यस्तीति वाक्यार्थस्तथा सति वस्तुत्वमात्रमित्युत्तरं चानुभवारूढं कार्यम् । व्याख्येयमस्ति । न्यायामृताद्यनुसारेणाह । न च निर्धर्मकत्वादेवेत्यादि भाव इत्यन्तं व्याख्येयमस्ति । तत्र **निर्धर्मकत्वस्य श्रुत्यर्थतेति** । अङ्गीकृत्य चैतदुक्तं व्याघातेन धर्ममात्रनिषेधायोगादिति ज्ञेयम् । **सङ्ख्यार्थत्व इति** । एकत्वसङ्ख्यारूपगुणविशिष्टपरत्व इत्यर्थः । **भिन्नाधिकरणेति** । एकत्वसङ्ख्यायाः सर्वत्रेदमेकमित्यनुगतप्रत्ययसिद्धत्वात् तद्विशिष्टधर्मिपदेनानेकतत्तद्धर्मिणोः प्राप्तौ सत्त्वमसद्रूपैकधर्मिणि नास्तीति असत्त्वं च सद्रूपैकधर्मिणि नास्तीत्येवं सत्त्वासत्त्वाभावयोर्भिन्नाधिकरणनिष्ठतामादायापि सत्त्वासत्त्वे एकस्मिन्न स्त इति प्रतिज्ञातार्थोपपत्त्यैकव्यक्तावुभयाभावप्राप्त्यभावादित्यर्थः । ननु सत्त्वासत्त्वानधिकरणेत्युत्तरानुमानशङ्कनमयुक्तम् । तद्धि सत्त्वासत्त्वे एकस्मिन्न स्त इत्येतत्साधनपक्षे प्राप्तानुपपत्तिप्रसक्तिशून्यतया कृतमिति वाच्यम् । अन्यथा तच्छङ्कनस्यासङ्गतत्वप्रसङ्गात् । न चास्मिन् पूर्वानुमानीयार्थान्तरताया वा प्रमेयत्वादिना व्यभिचारस्य वा प्रसक्तिर्नेत्यस्ति । तदुभयाविशेषात् । अतः कुतोऽनुमानान्तरं प्रवर्तितम् । ततश्च तन्निरासोऽप्ययुक्त इत्याशङ्क्यानुमानान्तरप्रवृत्त्युपपादनेनोत्तरग्रन्थसार्थक्यमाह **यद्यप्यत्रेत्यादिना** । **वक्ष्यमाणेति** । सत्त्वमसत्त्वानधिकरणेति वक्ष्यमाणेत्यर्थः । उत्तरानुमान इवेति तात्पर्यात् पूर्वपदार्थः स्वरस इति ज्ञेयम् । एवमुत्तरत्रापि । **पूर्वेति** । सत्त्वासत्त्वे । एकस्मिन्न स्त इति पूर्वानुमान इत्यर्थः । उत्तरानुमानेऽव्यवहितपूर्वदोषनिवृत्तिवत् पूर्वानुमानेऽपि तन्निवृत्तिरिति संबन्धः । ननु सत्त्वमात्रपक्षीकारेण प्रवृत्तेऽसत्त्वानधिकरणेत्यादिसाध्यकरणादुत्तरानुमानेऽभावद्वयस्य भिन्नाधिकरणनिष्ठतयाऽर्थान्तरताया अप्रसरेऽपि पूर्वानुमाने तत्प्रसरोऽवर्जनीय इति कथं तन्निवृत्तिरित्यत उक्तम् **एवैकशब्दस्येत्यादि** । अव्यवहितदोषनिवृत्त्यर्थं किल प्रयोगान्तरम् । तन्निवृत्तिश्च पूर्वानुमान एवैकशब्दस्यैक्यमेकत्वसंख्यावत्त्वं चेत्येवमर्थद्वयस्वीकारेऽपि भवति । एकत्वसंख्यावत्त्वेन ब्रह्मव्यावृत्तौ सिद्धायां भिन्नाधिकरणव्यावृत्त्यर्थमैक्यस्याप्युपादानेन ब्रह्माधिकरणतया वा भिन्नाधिकरणतया वा अर्थान्तराप्रसरात् । ततश्चैकपदार्थान्तराश्रयणमात्रेण पूर्वदोषनिवृत्त्युपपत्तावसत्त्वानधिकरणानात्मेति विशेषणद्वयकप्रयोगान्तराश्रयणं व्यर्थम् । अत एव न साम्यं प्रयोगद्वयस्य । पूर्वस्मिन्नुपपन्ने सति पश्चात्तनस्य प्रयोजनेन विना स्वीकारायोगात् । तदेतदाह **पूर्वानुमान एवेति** । अनेनैव पूर्वानुमानेऽर्थान्तर-





तैकशब्दार्थान्तरेण निरसितुं शक्येति सूचितम् । यस्तु प्रमेयत्वादौ व्यभिचारः पूर्वानुमाने प्रागुक्तः स चात्रापि समानः । अत एव मूले तद्व्यभिचारेणैवानुमानदूषणम् । तथा च तत्प्रसक्तिशून्यत्वरूपात्पूर्वापेक्षया विशेषादनुमानान्तरप्रवृत्तिरित्यपि न वक्तुं शक्यते । तस्मात्पूर्वानुमानसमानमुत्तरानुमानं वृथा प्रवर्तितमित्यर्थः । अनेन पूर्वानुमानीयव्यभिचाररूपदूषणं त्वनुद्धार्यमेवेति सूचयति । पूर्वानुमानेऽव्यवहितार्थान्तरतारूपदोषपरिहारासंभावाद्वा व्यभिचारस्योत्तरानुमानेऽभावाद्वा तदनुमानं प्रवर्तितमिति न ब्रूमः । किन्तु यत्परेण स्वयमेव लाघवन्यायमनुसरताऽनुमानान्तरमुक्तं तददूषणे तददुष्टमेवेति भ्रान्तिर्मन्दानां स्यात्तामपाकर्तुं तदनुमानमपि दूष्यत इत्याह **तथापीति** । **सत्त्वमितीति** । अत्र च मूले सर्वस्वरूपसत्त्वानां प्रकृतत्त्वासत्त्वमित्यस्य सर्वस्वरूपसत्त्वानीत्यर्थः । एकवचनं च जाताविति ज्ञेयम् । नन्वनात्मनिष्ठसंसर्गाभावप्रतियोगीति हेतुविशेषणं कृत्वा प्रमेयत्वादौ व्यभिचारपरिहारमभिप्रेत्य न दोषसत्त्वपक्षकानुमानं प्रवर्त्यते । तत्कुतः साध्ये विशेषाभावात् । सत्त्वपक्षकानुमानोक्त - व्यभिचारपरिहारोपायस्य चासत्त्वपक्षकानुमान इव सत्त्वपक्षकेऽप्याश्रयितुं शक्यत्वादित्याशङ्कां परिहर्तुं वैषम्यं वदन्नुत्तरानुमानमवतारयति **प्रमेयत्वादीति** । **हेत्वसिद्धीति** । असत्त्वस्य शशविषाणादावनात्मनि निर्धर्मक इति वक्ष्यमाणमूलानुसारेणानात्मनि कुत्राप्यभावेनानात्मेति हेतुविशेषणस्यासिध्यप्राप्तावपि सत्त्वस्यानात्मवियदादिगततयाऽनात्मनिष्ठसंसर्गाभावप्रतियोगित्वविशेषणस्यासिद्धिस्तु प्राप्नोति । तथा चोक्तासिध्यापादकतया तद्विशेषणस्य प्रमेयत्वाद्यव्यभिचाराय पूर्वानुमाने विवक्षाया अनुपपत्त्या तद्विवक्षया प्रमेयत्वादिव्यभिचारपरिहारोपपत्तिमदसत्त्वपक्षकानुमानमाहेत्यर्थः । **व्यवस्थितत्वादिति** । पक्षभेदेनैव प्राप्तुं योग्यत्वादित्यर्थः । व्यवस्थितेत्यस्यापि पक्षभेदेन प्राप्तुं योग्येत्यर्थः । विवादपदमनिर्वचनीयं बाध्यत्वादिति तत्त्वप्रदीपिकोक्तानुमानेऽप्रसिद्धविशेषणतायामुक्तायां तत्राशङ्कारूपस्य स्यादेतदिति ग्रन्थस्याप्रवृत्तिशङ्कां सूचयंस्तत्परिहारपूर्वकं तत्प्रवृत्तिमाह **अप्रसिद्धेति** । **तस्या इति** । अप्रसिद्धविशेषणताया इत्यर्थः । **स्वतन्त्रयोर्वेति** । तथा च साध्यतावच्छेदकनानात्वेन तत्तदवच्छिन्नसाध्यस्य प्रत्येकं प्रसिद्धेर्नाप्रसिद्धविशेषणत्वमित्याशयः । **विशिष्टस्येतीति** । सद्विलक्षणत्वे सत्यसद्विलक्षणत्वरूपविशिष्टस्यैकाधिकरणे प्रसिध्यभावादिति मूलार्थः । यद्येकैकदेशप्रसिद्धिमात्रेण विशिष्टस्य अप्रसिद्धविशेषणता न दूषणमिति ब्रूयात्तत्राह मूले **अन्यथेति** । **उक्तत्वादिति** मूलम् । सत्त्वस्यास्माभिरनङ्गीकृतत्वेन सिद्धसाधनत्वादित्यनेन सद्विलक्षणत्वांशे सिद्धसाधनत्वस्योक्तप्रायत्वादित्यर्थः । मूले **तर्हीति** । यदि सद्विलक्षणत्वांशे सिद्धसाधनतोक्ता तर्हि तदंशस्य साध्यत्वायोगेऽप्यसद्विलक्षणत्वांशस्य साध्यता तु युक्तैव । तत्र दोषानुक्तेरित्यर्थः । तथा च तत्त्वप्रदीपिकोक्तानुमानेऽनिर्वचनीयत्वं नामासद्विलक्षणत्वमात्रं विवक्षितमित्याशयः । जगतो बाध्यत्वाङ्गीकारात्तत्र प्रवेशेनासाधारण्याभाव इत्याह **जगत इति** । प्रतीतत्वस्य चेतीति प्रतीकोपादानपाठः । प्रतीतत्वमिति प्रथमान्तं लेखकागतम् । **वक्ष्यमाणत्वादिति** मूलम् । अनुपदमेव वक्ष्यमाणतया तत्र प्रतीतत्वस्य व्यभिचार इति भावः ।

**स०व्र०— तच्चात्मन्यभावप्रतियोगित्वरहित इति** । आत्मनः सत्यत्वादिति भावः । **तथाप्येकत्वगुणवद्भिन्नाधिकरणेति** । एकत्वगुणवत्त्वे सति भिन्नं यदधिकरणं तत्संसर्गराहित्येनेत्यर्थः । एकत्र सत्त्वसंसर्गाभावोपरत्रासत्त्वसंसर्गाभाव इति सिद्ध्येदिति भावः । **प्रमेयत्वादिषु व्यभिचारादिति** । न च केषामपि





किञ्चिन्निष्ठाभावप्रतियोगिता साध्यत इति वाच्यम् । केवलान्वयिधर्माणामप्युक्तरूपतासाधने व्यतिरेकिधर्माणां तथात्वस्य सुतरां सिद्धत्वात्सर्वे धर्माः किञ्चिन्निष्ठात्यन्ताभावप्रतियोगिन इति साधितं स्यात्तथा च सर्वधर्मात्यन्ताभावाधिकरणत्वे व्यभिचारः । नन्वस्यापि धर्मस्य पक्षनिक्षिप्तत्वान्न दोष इति चेन्न । तर्हि कस्यचित्सकलधर्मवत्त्वं विरुद्धमापद्येत । ननु व्यतिरेकिधर्मत्वं हेतुरतो न प्रमेयत्वादिष्वनैकान्तिकतेति चेन्न । अविरुद्धत्वस्योपाधित्वात् । तच्च परस्परप्रतिषेधद्वयप्रतिषेधानात्मकत्वम् । प्रतिषेधश्चात्यन्ताभाव इति न कश्चित् क्षुद्रोपद्रव इत्यपि द्रष्टव्यम् । **असत्त्वं सत्त्वानधिकरणेति** । सत्त्वपक्षीकारे स्वरूपसत्त्वरूपस्य तस्यात्मभिन्न-सकलवस्तुनिष्ठत्वेन बाधासिद्धी स्यातामतोऽसत्त्वं पक्षीकृतमिति ज्ञेयम् । **निर्धर्मक इति** । यथा सद्रूपेऽपि ब्रह्मणि निर्धर्मकत्वेन सत्त्वाभाव एवमसद्रूपेऽपि शशविषाणादौ निर्धर्मकत्वेनासत्त्वाभाव इत्यर्थः । **रूपादीनां सत्त्वानधिकरणेति** । सामान्यानङ्गीकारेणात्मभिन्नवस्तुमात्रस्य स्वरूपसत्त्वाधिकरणत्वादिति भावः । **सिद्ध-साधनस्योक्तत्वादिति** । सद्वैलक्षण्यरूपसाध्य इति शेषः । **बाध्यत्वस्येति** । बाधकज्ञानविषयत्वमात्रस्य जगद्ब्रह्मणोः सत्त्वेऽपि तस्य परानभिप्रेतत्वात्पराभिप्रेतस्य च ज्ञानत्वेन ज्ञाननिवर्त्यत्वादिरूपस्य जगद्ब्रह्मणो-रप्रवेशेनासाधारण्यमित्यर्थः । तर्हि प्रतीतत्वं हेतुरस्त्वित्यत आह **प्रतीतत्वस्य चेति** । असद्विलक्षणज्ञप्त्यै इत्यादिनेति शेषः । तथा च तत्र व्यभिचार इति भावः ।

**विठ्ठ०**— व्यावर्तकं विशेषणं तत्त्वमेव धर्मत्वं स्वरूपसत्त्वस्यापि वस्त्वन्तरापेक्षया व्यावर्तकत्वमस्ति अतः स्वरूपसत्त्वस्यापि धर्मत्वमस्तीति शङ्कते **विशेषणत्वमिति** । **वस्तुत्वमात्रमिति** । वस्तुस्वरूपत्वयोरभिन्नत्वादिति भावः । **आत्मनीति** । तन्मते आत्मनो निर्धर्मकत्वादिति भावः । **तथापीति** । एकत्वगुणवन्निष्ठात्यन्ताभाव-प्रतियोगिसत्त्वासत्त्वसाधनेऽपि प्रत्येकं गुणवन्ति यानि विभिन्नान्यधिकरणानि घटपटादीनि तेषु प्रातिस्विकतया नियतयोरन्यगतयोः सत्त्वासत्त्वयोस्संसर्गराहित्येनेत्यर्थः । उक्तदोषपरिहाराय अनुमानान्तरमाह **सत्त्वमिति** । असत्त्वानधिकरणं यदनात्मतन्निष्ठेत्यर्थः । असत्त्वानधिकरणानात्मनि सत्त्वसंसर्गाभावे उभयाभावसिद्ध्या अनिर्वचनीयलाभ इति भावः । **व्यभिचारादिति** । धर्मत्वहेतुमत्सु प्रमेयत्वादिषु केवलान्वयिधर्मेषु साध्याभावादिति भावः । उक्तव्यभिचारपरिहाराय अनुमानान्तरमाह **असत्त्वमिति** । स्वरूपसत्त्वस्यात्मातिरिक्तसकलवस्तुनिष्ठत्वेन बाधासिद्धी स्याताम् । अतो सत्त्वं पक्षीकृतम् । निर्धर्मकात्मनिष्ठाभावप्रतियोगित्वमादायार्थान्तरतावारणाय अनात्मनिष्ठेति साध्ये हेतावपि आत्मनि संसर्गरहिते प्रमेयत्वादौ व्यभिचारवारणायानात्मनिष्ठेति विशेषणम् । तदनात्मनि सर्वत्रेति पटादौ चाभावत्वप्रतियोगित्वलक्षणमस्तीत्युपपादितत्वादिति भावः । **असंप्रतिपत्तेरिति** । उपाधीनां वाय्वादिलक्षणानात्मवस्तुनिष्ठसंसर्गाभावप्रतियोगित्वेऽपि वाय्वादेः सत्त्वाधिकरणत्वस्यैवास्मदभिमतत्वेन सत्त्वानधिकरणानात्मनिष्ठसंसर्गाभावप्रतियोगित्वस्यासंप्रतिपत्तेः । वाय्वादेरनिर्वचनीयत्वस्याद्याप्यसिद्धत्वादिति भावः । एकैकदेशप्रसिद्धिमात्रेणापि साध्यप्रसिद्धिसंभवान्नाप्रसिद्धविशेषणतेति शङ्कते **स्यादेतदिति** । **जगद्ब्रह्मणो-रिति** । सत्त्वेनाभ्युपगतयोरिति शेषः । असद्विलक्षणयोरिति सिद्धत्वेन सपक्षत्वोपपादनम् । मास्तु बाध्यत्वं हेतुः प्रतीतत्वमेव हेतुर्भविष्यति । तस्य सपक्षे सत्त्वान्नासाधारण्यमित्यतः प्रतीतत्वस्यासत्यपि वृत्तेः तत्र असद्वैलक्षण्यरूपसाध्याभावाद्व्यभिचार इति भावेनाह **प्रतीतत्वस्येति** ।





**चषकः**— आत्मनो निर्धर्मतया हेतोरनागमनान्नानैकान्त्यमित्यरुचेराह **अपि चेति**। **तस्मिन्नेव** ब्रह्मण्येव। **तथाप्येकत्ववदिति** । स्वसमभिव्याहृतपदार्थसंसर्गित्वविशिष्टप्रकृत्यर्थतावच्छेदकरूपेण स्वसजातीयद्वितीय-रहितत्वरूपपारिभाषिकैकत्वस्याविवक्षिततया संख्यारूपस्यैव तस्याभिप्रेततया तस्य च व्यक्त्यानन्त्यस्थलेऽपि प्रत्येकमक्षतत्वादिति भावः। **सत्त्वमिति**। **संसर्गाभावप्रतियोगीति**। उक्तदिशा स्वप्रतियोगिकतादृशानात्मानु-योगिकालीकसंसर्गस्याभावे सत्त्वे साधनीय इत्यर्थः। प्रामाणिकप्रतियोगिकात्यन्ताभावानुपगमेन प्रागभावप्रध्वंसा-भावयोश्चायोगेन यथाश्रुतार्थादरस्यासंभवात् । अत्रात्मभिन्नालीकानुयोगिकसंसर्गाभावमादायार्थान्तरत्वादि-व्युदासायासत्त्वानधिकरणेत्यनात्मविशेषणमुपात्तम् । निर्धर्मकात्मानुयोगिकसंसर्गाभावमादाय तद्वारणायानात्मे-त्यस्योपादानम् । **असत्त्वमिति** । स्वप्रतियोगिकात्मानुयोगिकसंसर्गाभावमादायार्थान्तरताव्युदासायानात्म-पदोपादानम् । सत्त्वाधिकरणीभूतात्मानुयोगिकसंसर्गाभावमादायोक्तक्षतेरनात्मपदेनैवापहस्तिततया सत्त्वानधि-करणांशप्रयोजनमुपरञ्जकतयोपपादनीयम् । व्यतिरेकिधर्मत्वस्य हेतुत्वोरीकारात्केवलान्वयिनि च हेतुतावच्छेदक-विशेषितस्याभावेन द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वादित्यत्रानैकान्त्यलक्षणातिप्रसङ्गवारणाय साध्याभाववन्निरूपित-प्रकृतहेतुतावच्छेदकावच्छिन्नाधेयताकत्वरूपविवक्षणीयानैकान्त्यलक्षणाभावान्नानैकान्त्यमिति भावः ।

**प्रदीपः**— **धर्मत्वमिति**। तथा सतीति स्वरूपत्वं धर्मत्वं वस्तुत्वमित्येकार्थः स्यादित्यर्थः। सत्त्वमित्य-सत्त्वेनार्थान्तरत्वव्यवच्छेदायानात्मेति । आत्मप्रमेयत्वादिव्यावृत्त्यर्थमनात्मेत्यादिविशेषणद्वयं तदनात्मनीति । अनात्मनि विद्यमानस्याभावप्रतियोगित्वस्य नाभावप्रतियोगित्वं येनानात्मनो भावप्रतियोगित्वाभावेनासत्त्वं न स्यादित्यर्थः । **रूपादीनामिति** । रूपप्रतियोगिकसंसर्गाभावस्य सत्त्वानधिकरणानात्मवस्तुनिष्ठत्वं नास्ति किन्तु सत्त्वाधिकरणनिष्ठत्वमेवेत्यर्थः । **न सिद्धेति** । रजतादेरुभयरूपतानभ्युपगमादित्यर्थः । असद्वैलक्षण्ये बाध्यत्वस्य हेतुत्वाभावेऽपि प्रतीतत्वे हेतुः स्यादित्याशङ्क्याप्रयोजकत्वं व्यभिचारं चाह **प्रतीतत्वस्येति** ।

**४१८ सु०— बाध्यंत्वविकल्पदूषणानि चोक्तवक्ष्यमाणान्यनुसन्धेयानीति नानुमाना-च्छुक्तिरजतादेरनिर्वाच्यतासिद्धिः ।**

**ख्यातिबाधान्यथाऽनुपपत्तिश्चानेनैव निराकृता वेदितव्या ॥**

**बिन्दुः**— **अनेनैव निराकृतेति**। ख्यातिः प्रतीतिः सा च सतो ब्रह्मणोऽसतश्च नृशृङ्गादे-रप्यस्तीति सत्त्वमसत्त्वं वा आदायार्थापत्तिपर्यवसानात्। अन्यथाविज्ञातस्य सम्यग्विज्ञानरूपबाध्यत्वं च ब्रह्मणोऽप्यस्तीति सत्त्वमेवापद्येतेति नार्थापत्तिरपि समीहितसाधनायालमित्यर्थः।

**परि०**— नन्वेवं बाध्यत्वमेव हेतुरस्तु । न चासाधारण्यम् । तस्य दशाविशेष एव दोषत्वेनानुकूलतर्के सत्यदोषत्वादित्यत आह **बाध्यत्वेति**। 'ज्ञानबाध्यत्वमपि त्वि'त्यत्रोक्तानि, 'कश्चायं





बाध उद्दिष्टो न हि नाशोऽसतो भवेदि'त्यादिना द्वितीये 'पृथगुपदेशादि'त्येतदनुव्याख्यानादौ वक्ष्यमाणानीत्यर्थः । विवृतानि चानिर्वाच्यत्वानुमानदूषणानि न्यायामृते प्रथमपरिच्छेदेऽनिर्वाच्यत्वानुमानभङ्गे तदर्थापत्तिभङ्गे च । **ख्यातीति** । असच्चेन्न ख्यायेत सच्चेन्न बाध्येत ख्यायते च शुक्तिरूप्यं बाध्यते च तेन तदुभयान्यथानुपपत्तिश्च शुक्तिरूप्यादेः सदसद्विलक्षणत्वे मानमिति निरस्तमित्यर्थः । **अनेनेति** । असतोऽपि ख्यातेर्वक्ष्यमाणत्वात् । सतोऽपि ब्रह्मणो विज्ञातस्यान्यथासम्यगित्युक्तबाध्यत्वसत्त्वेन व्यभिचारः कश्चायं बाध इत्यादिवक्ष्यमाणदिशा ज्ञाननिवर्त्यत्वरूपबाधस्य शुक्तिरूप्यादावभावात् त्रैकालिकनिषेधप्रतियोगित्वेऽसत्त्वापत्त्या असद्विलक्षणत्वपक्षे बाध्यते चेति विपर्ययपर्यवसानायोगादित्याद्युक्तवक्ष्यमाणबाध्यत्वादिदूषणगणेनेत्यर्थः ॥

**आनन्दः**— बाध्यत्वरूपो हेतुर्न दूषितः, कुत इत्यत आह **बाध्यत्वेति** । **अनेनैवेति** । असत्त्वसाधकप्रमाणोपन्यासेनैवेत्यर्थः ।

**कं०रा०— ख्यातीति** । असतोऽपि प्रतीतेर्वक्ष्यमाणत्वेनासद्वैलक्षण्यं विना ख्यात्यनुपपत्तेरभावाद्बाध्यत्वस्य ज्ञाननिवर्त्यत्वरूपत्वे तस्य शुक्तिरजतादावसिद्धेरन्यथाविज्ञातस्य सम्यग्विज्ञातत्वरूपत्वे तस्यात्मन्यपि सत्त्वेन सद्वैलक्षण्यं विनाऽनुपपत्त्यभावादित्यनेन प्रकारेणानिर्वाच्यत्वे मानतया परोक्ता ख्यातिबाध्यत्वान्यथाऽनुपपत्तिरपि निराकृता वेदितव्येत्यर्थः ।

**श्रीनिधि०— अनेनैव निराकृतेति** । असतः ख्यायमानत्वस्य सतोऽपि बाध्यत्वस्योक्तत्वेनेत्यर्थः ।

**वा०चं०**— ख्यातिबाधान्यथाऽनुपपत्तेर्भाष्यकारेणैवोत्तरत्रातिविशदं निराकरिष्यमाणत्वात्प्रतीतेरसत्यपि वक्ष्यमाणत्वादित्यादिदूषणान्येव सामान्येन तत्रातिदिशति **ख्यातीति** । नन्वस्तु सदन्यत्वमनिर्वचनीयत्वं तत्र प्रमाणं तु रजतं सदिति प्रत्यक्षम् । तथा हि । रजतमेव सद्बुद्धिविषयो वा सत्तारूपस्तद्धर्मो वा । नाद्यः । तथात्वे सद्रजतशब्दयोः पर्यायत्वापत्त्या सहप्रयोगानुपपत्तेः । प्रपञ्चमात्रानुगतसद्बुद्धे रजतमात्रविषयकत्वानुपपत्तेश्च । नापि द्वितीयः । सर्वत्र सद्बुद्धेरधिष्ठानचैतन्यविषयत्वेनोपपत्त्याऽतिरिक्तसत्तारूपधर्मे प्रमाणाभावात् । धर्मोऽपि भवन्सत्ताजातिरूपो वा बाधायोग्यत्वं वा । नाद्यः । सामान्यादौ तदसंभवात् । नान्त्यः । उक्तरीत्या प्रपञ्चे सद्बुद्धेरधिष्ठानचैतन्यविषयत्वेन लाघवेनैकविषयत्वसंभवेऽनेकविषयत्वकल्पनाऽयोगेनान्यत्र बाधायोग्यत्वाभावात् । तस्मादधिष्ठानसद्व्यक्तितादात्म्यविषयत्वमेव सद्बुद्धेर्वक्तव्यम् । तादात्म्यं च भिन्नत्वे सत्यभिन्नसत्ताकत्वमेव । गुणगुण्यादावप्येवंभावस्यैव युक्तत्वात् । एवं च तादात्म्यस्य भेदघटिततया सदधिष्ठानतादात्म्यविषयकप्रत्यक्षेण सदन्यत्वरूपानिर्वचनीयत्वसिद्धिः । अनुमानं चात्र मानम् । विमतं सदन्यद्बाध्यत्वाद्यन्नैवं तन्नैवं यथाऽऽत्मेति । यद्वा । एकावच्छेदेन स्वसंसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वमनिर्वचनीयत्वम् । तत्रानुमानं तु अव्याप्य-





वृत्त्यत्यन्ताभावप्रतियोगिशुक्तिरजतं स्वसमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगि दृश्यत्वात्संयोगवदिति । अत्र चोक्तविशेषणवति रजते स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसिद्धावेकावच्छेदेन स्वसंसृज्यमानाधिकरणा-वृत्त्यत्यन्ताभावप्रतियोगित्वरूपविशिष्टसाध्यसिद्धिः । यद्वा । न प्रपञ्चाभावो ब्रह्मातिरिक्तः । एवं च स्वानधि-करणानधिकरणात्यन्ताभावप्रतियोगित्वमनिर्वचनीयत्वम् । तत्रानुमानं तु । स्वसमानाधिकरणात्यन्ताभावाप्रतियोगि शुक्तिरजतं स्वानधिकरणमात्रावृत्त्यन्ताभावप्रतियोगि दृश्यत्वात्संयोगादिवदिति । अत्रापि विशिष्टसाध्यसिद्धिः पूर्ववदेव । अत्यन्ताभावस्य स्वानधिकरणमात्रावृत्तित्वं च स्वाधिकरणवृत्तित्वेन वा सर्वत्रावृत्तित्वेन वा । तत्र संयोगात्यन्ताभावस्य प्रतियोग्यधिकरणवृत्तित्वात्संयोगे साध्यपर्यवसानम् । स्वसमानाधिकरणात्यन्ताभावा-प्रतियोगित्वेन पक्षविशेषणात्स्वाधिकरणवृत्तित्वेन पक्षे साध्यपर्यवसानस्य बाधितत्वात्सर्वत्रावृत्तित्वेन सिद्ध्यत्स्वाभिमतं साध्यमादाय सिद्ध्यतीति । साध्ये मात्रपदं विना साध्याप्रसिद्धेर्न विवक्षितसाध्यसिद्धिरिति तदुपादानम् । व्यधिकरणप्रकारकत्वादेरसंभवात् । अनिर्वचनीयार्थविषयकत्वेनैव भ्रान्तिज्ञानत्वस्य वक्तव्यतया भ्रान्तिज्ञानत्वप्रसिद्ध्यन्यथाऽनुपपत्तिरपि तदनिर्वचनीयत्वे मानम् । एवं ख्यातिबाधान्यथाऽनुपपत्तिरपीत्याह । तत्सर्वमनेनैवापहस्तितं भवति । तथा हि । सदिति प्रत्यक्षस्य सदन्यत्वविषयकत्वं तावद्विरुद्धम् । सद्बुद्धे रजतमात्रविषयकत्वसत्ताजातिविषयत्वासंभवेऽपि बाधायोग्यत्वविषयकत्वसंभवात् । तत्प्रपञ्चप्रतीतिविषयभूतं सच्छुक्तिरजतादिप्रतीतिविषयीभूतं त्वसदित्येव विशेषः न च तत्प्रतीतेश्चैतन्यविषयकत्वोपपत्तौ ब्रह्मणोऽन्यत्र न तदित्युक्तमिति वाच्यम् । तर्हि नीलो घट इत्यादौ प्रतीयमाननैल्यादेरपि ब्रह्मरूपत्वापत्त्या घटादौ नैल्याद्यपि न स्यात् । घटादौ नैल्याद्यस्ति सत्त्वं तु नेत्यस्यारोपितत्वसिद्ध्यधीनतयाऽन्योन्याश्रयात् । अन्यथा ब्रह्मैव सदन्यदसदित्य-स्याद्याप्यसिद्ध्या सत्यं ज्ञानमित्यत्राप्यधिष्ठानपरत्वाभ्युपगमप्रसङ्गात् । अधिष्ठानसत्ताया एव प्रपञ्चादिनिष्ठत्वे प्रपञ्चादेः पारमार्थिकत्वापत्तेश्च । आरोपितत्वे च नाधिष्ठाननिष्ठत्वं कल्प्यम् । न ह्यन्यथाख्यातिवादिवदनिर्वचनीय-ख्यातिवादिनोऽप्यारोपितस्यान्यत्र सत्त्वमावश्यकमिति वक्ष्यमाणत्वात्पारमार्थिकसत्ताया अपि प्रतीतिः पारमार्थिकत्वेन वा व्यावहारिकत्वेन वेत्याद्यनुपदवक्ष्यमाणदूषणग्रासाच्च । तादात्म्यविषयकत्वेऽपि तस्याभेदरूपत्वेन भेदघटितत्वाभावाद्गुणादावप्यभेदस्य वैशेषिकपरीक्षायामुपपादयिष्यमाणत्वाच्च । तस्मान्न प्रत्यक्षं तत्र मानम् । अनुमानेऽपि सदन्यत्वं सत्त्वाभावमात्रं साध्यमुत सत्प्रतियोगिकान्योन्याभाववत्त्वम् । नोभयमपि । उक्तरीत्या सिद्धसाधनत्वात् । द्वितीये बाध्यत्वं हेतूकृतं किमन्यथाविज्ञातस्येत्याद्यस्मदुक्तरूपमुत विनाश्यत्वमाहोस्वित् त्रैकालिकनिषेधप्रतियोगित्वरूपम् । आद्ये आत्मनि व्यतिरेकदृष्टान्ते साधनाव्यावृत्तिः । द्वितीये तु न हि नाशोऽसतो भवेदिति वक्ष्यमाणरीत्या नाश्यत्वस्य सत्त्वव्याप्ततया विरुद्धत्वम् । तृतीये तु तादृशबाध्यत्वस्यासत्यपि सत्त्वादसतो निःस्वरूपत्वेन सदन्योन्याभावाद्यभावस्य त्वयैवोपपादनादनैकान्त्यापत्तेः । अन्यथा सदन्यत्वरूपानिर्वाच्यत्व-लक्षणस्य तत्रैवातिव्याप्त्यापत्तेः । द्वितीयानुमानेऽसदेवेदं रजतमित्याद्यनुभवेन रजतस्यासत्त्वेन निरधिकरणत्वात् स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वसाधने बाधः । हेतूकृतं दृश्यत्वं च वृत्तिविषयत्वं चेत् ब्रह्मण्यनैका-न्तिकत्वम् । चैतन्यविषयत्वं चेत् शुक्तिरजतादेरपि वृत्तिविषयत्वस्यैवोपपादयिष्यमाणत्वादसिद्धिः । संयोग-तदत्यन्ताभावयोरपि भिन्नाधिकरणनिष्ठतया दृष्टान्ते साध्यवैकल्यं च । दृश्यत्वेनैव संयोगवदेव साध्याभावस्यापि





सुसाधत्वात्प्रतिपक्षश्च । एवमन्यदप्यूह्यम् । तृतीयानुमानेऽपि ब्रह्मणोऽत्यन्ताभावरूपत्वासंभवेन बाधितत्वम् । हेतुदृष्टान्तदूषणं च पूर्ववज्ज्ञेयम् । भ्रान्तिज्ञानत्वासिद्धेश्चासद्विषयकत्वेनाप्युपपत्तेः । सतो बाधस्यासतोऽपि प्रतीतेश्चोपपादयिष्यमाणत्वान्नार्थापत्तिरपि अनिर्वचनीयतायां प्रमाणमिति युक्तमुक्तं प्रमाणाभावादिति । यद्वा । अनिर्वचनीयं चेत्कथं सदिति प्रतीतिः । अनिर्वचनीयमित्येव प्रतीतिः स्यादिति वक्ष्यमाणतर्के सदिति प्रतीतेरेवानिर्वचनीयप्रतीतित्वादितीष्टापादनशङ्काप्रापकतया परोदीरितप्रत्यक्षोपपादनप्रकारमुपन्यस्यानिर्वचनीयमिति कोऽर्थो व्यावहारिकमिति वा प्रातिभासिकमिति वेति विकल्पपूर्वकवक्ष्यमाणदूषणैरनुपदमस्मदुक्तदूषणैश्च तन्निरासो बोद्धव्यः।

**वा०र०**— ख्यातिबाधान्यथानुपपत्तेर्विस्तरेण निराकर्तव्यायाः सामान्येन दूषणातिदेशमात्रेण निराकरणायोग इत्यतस्तत्र निमित्तं वदन्नुत्तरवाक्यमवतारयति **ख्यातिबाधेति** । अनेनैवेत्येतद्विवरणं **प्रतीतेरसत्यपीति** । नृसिंहाश्रमेण तत्त्वविवेकेऽथवा सदन्यत्वमनिर्वचनीयत्वम् । न चासत्यतिव्याप्तिः । अन्यत्वादिधर्मयोग्या-सद्रूपाङ्गीकारे तस्य प्रपञ्चान्तःप्रतीतत्वात् । बाह्याभ्युपेतासतो निःस्वरूपत्वादित्यादिना सदन्यत्वलक्षणमुपपाद्य प्रामाण्यं चेत्यादिना प्रत्यक्षादिप्रमाणमभिधायाथवेति ग्रन्थात्पूर्वग्रन्थेनापि मिथ्यात्वस्य निरुक्तिरित्यादिना निरूपितैकावच्छेदेन स्वसंसृज्यमानेत्यादिरूपानिर्वचनीयत्वद्वयेऽव्याप्यवृत्त्यत्यन्ताभावेत्यादिना प्रमाणमुक्तम् । तत्सर्वं सङ्गृह्य तत्तद्रूपनिरुक्तिपूर्वकं तत्र तत्र प्रमाणमभिधाय तन्मतमनुवदति **न चास्त्वित्यादिनेति कश्चिदाहेत्यन्तेन** । उत्तरत्रेहेत्येव पाठे तु प्रागनेकविधानिरस्ततया नृसिंहाश्रमस्य प्रकृतत्वात्तद्विज्ञानं सुलभमेवेति कश्चिदिति शेषः पूरणीयः । ननु सदिदंरजतमिति प्रत्यक्षस्य मिथ्यात्वपरत्वं विरुद्धमित्यतः तत्र न तावद्रजतं सदित्यादि तद्ग्रन्थं शिष्यबोधाय विवृण्वन् क्वचित्क्वचित्तदीयामेव तट्टीकां चानुसृत्य विकल्पादिमुखेन योजयति **तथाहि रजतमेवेति** । **पर्यायत्वेति** । रजतस्वरूपमेव सद्बुद्धिविषय इति वदता रजतसच्छब्दयोरेकार्थता वक्तव्या सा चानुपपन्ना । तथात्वेतयोः सहप्रयोगायोगप्रसङ्गादित्यर्थः । उपलक्षणं चैतत् । सद्बुद्धे रजतबुध्यवैलक्षण्यप्रसङ्गा-च्चेत्यपि ज्ञेयम् । अतिरिक्तसत्ताया अभावे सार्वत्रिकसद्बुध्ययोगादुक्तबुद्धिरेवातिरिक्तसत्तायां प्रमाणमिति कथं तदभाव इत्यतस्तदुपपादनं **सर्वत्रेति** । **सामान्यादाविति** । सत्ताजातेर्घटादौ संभवेऽपि सामान्यादेर्निःसामान्यतया तत्र असंभवेन तया सार्वत्रिकसद्बुद्धिनिर्वाहासंभवः । न च परम्परासंबन्धस्यापि पुरस्कारे साक्षात्परम्परासंबन्धाभ्यां सर्वत्र सत्तया सद्बुद्धिनिर्वाह इति वाच्यम् । प्रत्यक्षविशिष्टबुद्धौ तत्संबन्धपुरस्कारेऽतिप्रसङ्गात् । प्रमाप्रमेयबुद्ध्योराकार-भेदवत्तद्भेदशून्यसार्वत्रिकैकाकारानुगतसद्बुद्धेरेकसंबन्धविषयताया एव वक्तुमुचितत्वाच्चेति भावः । **उक्तरीत्येति** । सर्वत्र सद्बुद्धेरधिष्ठानचैतन्यविषयत्वोपपत्त्युक्तरीत्येत्यर्थः । ननु ग्रन्थाप्रमाणमात्मनोऽन्यस्यापि बाधायोग्यत्वमस्तु किमधिष्ठानचैतन्यविषयत्वकल्पनयेत्यत उक्तं **लाघवेनेत्यादि** । देहादावात्मबुद्धेरधिष्ठानचैतन्यविषयतया-ऽन्यथासिद्धिवदस्यानुभवस्याप्यन्यथासिद्धतया लाघवस्य नियामकतया सद्वैविध्याश्रयणायोगात् । ब्रह्मणः प्रपञ्चोत्पत्तेः प्रागपि सदेव सोम्येत्यादिना सद्रूपत्वावधारणेन विपरीतलाघवोत्त्ययोगाच्चेति भावः । उक्तं चाद्वैतदीपिकायाम् । न च प्रपञ्च एव बाधायोग्यः ब्रह्मतत्तादात्म्यादेव सद्बुद्धिविषय इति वाच्यम् । मुक्तिकालेऽपि





ब्रह्मणः सद्रूपत्वादित्यादीति ज्ञेयम् । कस्तर्हि मृद्घट इत्यादिसामानाधिकरण्यानुभवविषयः, तादात्म्यमेव । किं तत् उच्यते । भिन्नत्वे सत्यभिन्नसत्ताकत्वम् । अस्ति हि मृद्घटयोरेतत्तादात्म्यम् । उपादानोपादेययोः सत्त्वभेदाभावादित्यादिप्रतिपाद्यपटरूपयोस्तु समानकालीनयोरपि तादात्म्यं प्रमाणसिद्धमित्यादि निरूपितं तदनुसन्धायाह **गुणगुण्यादावपीति** । इतःपरमसद्विलक्षणज्ञात्या इत्यतः व्याख्यानं शुक्तिरजतादावित्येतन्मूलव्याख्यानभूतननूत्तरभाष्यमसङ्गतमित्येतत्पर्यन्तो ग्रन्थो व्याकर्तव्योऽस्ति ॥ अनिर्वचनीयतासाधकेत्यादियोजनाया अनुपपत्त्येति संबन्धः । तत्र हेतुद्वयम् । **सतो बाधस्येत्यादि** ।

**विठ्ठ०**— तर्हि बाध्यत्वमेव हेतुरस्तु अनुकूलतर्कादिसद्भावे तद्दोषोऽकिञ्चित्कर इत्यत आह **बाध्यत्वेति** । ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन इत्यत्रोक्तानि चतुर्थपादे वक्ष्यमाणानि च अनुसन्धेयानीत्यर्थः । **ख्यातीति** । असच्चेन्न प्रतीयेत सच्चेन्न बाध्येत अतस्तदुभयान्यथानुपपत्त्या सदसद्विलक्षणत्वसिद्धिरिति चासतोऽपि ख्यातेर्वक्ष्यमाणत्वेन सतोऽपि ब्रह्मणोऽन्यथाविज्ञातस्य सम्यग्विज्ञानगोचरत्वरूपबाध्यत्वकथनेन च निराकृतेत्यर्थः ।

**४१९ सु०— किञ्चानिर्वचनीयं चेद्रजतं, कथं तर्हि प्रतीतिसमये सदित्युत्तरकालं चासदिति प्रतीयते । 'अनिर्वचनीयमि'त्येव प्रतीतिः कुतो न भवेत् । 'अधिष्ठानेदन्तासंसर्गवत्तत्सत्तासंसर्गस्यारोपात्, प्रातीतिकसत्त्वस्य रजतेऽपि विद्यमानत्वाद्वा, न सत्प्रत्ययविरोध' इत्येतदनन्तरमेव निराकरिष्यते ।**

**'असदि'त्यर्थक्रियासामर्थ्यलक्षणमेव सत्त्वं निराक्रियते, नात्यन्तासत्त्वं गृह्यत, इति चेन्न । अर्थक्रियासामर्थ्यस्य तवाप्रसक्तत्वात् । प्रसक्तौ चान्यथाख्यातिस्वीकारप्रसक्तेश्च । वक्ष्यते चैतत् ।**

**बिन्दुः— किञ्चानिर्वचनीयं चेद्रजतमिति** । अत्र नरसिंहाश्रमः । यत एव प्रतीतिकाले सदिति प्रतीयते बाधकाले चासदिति । अत एव हि मिथ्यात्वं तस्य यत्प्रतीतिकाले सत्त्वं उत्तरकालं चासत्त्वमिति स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वस्यैव मिथ्यात्वात् । विरुद्धप्रतीतिबलेन ह्युभयविधत्वं सिध्यति । वस्तुसद्भावो हि सदिति प्रतीतिनिबन्धनः तादृशप्रतीतावपि यदि न तत्सद्भावस्तर्हि का प्रत्याशा घटादिसत्तायामपि । प्रमाणेन प्रमेयसिद्धिरिति चेत् रजतेऽपि तथास्तु । असदिति बाधकप्रतीत्या पूर्वगृहीतसत्तावेदकस्याप्रामाण्यमिति चेत् । वैपरीत्यस्यापि सुवचत्वात् । घटस्थितिकाले अस्तीतिप्रतीतेस्तदभावकालीननास्तीतिप्रतीत्या बाधापत्तेश्च । अस्तीतिप्रतीतिर्घटसत्तामावेदयतीति तत्स्थितिकाले घटः सन् नास्तीति प्रतीत्या च उत्तरकाले तदभावोऽपि सन्निति चेत् । तर्हि रजतेऽपि तथास्तु । एतेन





अर्थक्रियाऽभावात्प्रागपि न तत्सदिति परास्तम् । घटध्वंसकालेऽपि जलाहरणरूपार्थक्रियाभावात् घटस्यापि प्रतीतिकाले सत्त्वानापत्तेः । ध्वंसात् प्रागर्थक्रियास्थितेति चेत् । अचिरोत्पन्नविनष्टघटस्य सत्त्वाभावापत्तेः । तत्र योग्यतास्तीति चेत् । रजतेऽपि समम् । तदपि यद्यनुवर्त्तेत साधयेदेव कटकादिकम् । ननु तज्जातीये कुत्रापि क्रियानुपलम्भात् कथं योग्यतापि सिध्येदिति चेत् । तादृशघटजातीयेऽपि तदनुपलम्भान्न तत्सिध्येत् । स्थायिघटे दृष्टत्वात्तस्यापि तथात्वमनुमीयते चेत् स्थायिरजतदृष्टान्तेन तद्रजतस्यापि प्रतीतिकालीनं सत्त्वं स्वनुमेयमेव । अत एव प्राचां दृष्टिसृष्टिपक्षः सङ्गच्छते । न चैवं घटादेर्व्यावहारिकत्वं रजतादेश्च प्रातिभासिकत्वं ब्रह्मणस्तु पारमार्थिकत्वमिति सिद्धान्तहानिः । इष्टापत्तेः । एतन्मते सत्ताद्वैविध्यस्यैव सिद्धान्तत्वात् । अत एवाहुः । 'यया यया भवेत्पुंसो व्युत्पत्तिः प्रत्यगात्मनि । सा सेह प्रक्रिया साध्वी ज्ञेया सा चानवस्थिता' इति ॥ तस्मात्सदिति प्रतिपन्नस्यैव रजतस्य वियदादेश्च उत्तरकालम् असत्त्वेनापि प्रतीयमानत्वात्प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं मिथ्यात्वं सिध्यतीति । तदेतत्सर्वं बालव्यामोहनमात्रम् । क्षोदाक्षमत्वात् । तथाहि । यदि सत्त्वासत्त्वावगाहिप्रतीतिद्वयबलात् रजतादेरुक्तरूपमिथ्यात्वं स्यात्तर्हि चार्वाकसिद्धान्तेनोपनिषद्भिश्च देहातिरिक्तात्मनः सत्त्वासत्त्वाभ्यां प्रतीयमानत्वाद्ब्रह्मणोऽपि मिथ्यात्वापत्तिः । न च तथापि ब्रह्मणः पारमार्थिकं सत्त्वमक्षतमेव । नास्तिकदर्शनप्रतिपन्नासत्त्वस्य प्रातीतिकत्वादिति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् । त्वत्सिद्धान्तप्रतिपन्नमिथ्यात्वकस्यापि जगतः पारमार्थिकसत्त्वाव्याकोपाच्च । न च नास्तिकदर्शनेनात्मासत्त्वं पूर्वं प्रतीतं तच्च पुनरपौरुषेयवेदान्तपर्यालोचनोत्तरकालं सत्त्वनिर्णयेन बाधितम्, अतः सदेव ब्रह्मरजतादेर्वियदादेश्च । पूर्वं सत्त्वप्रतिपन्नोत्तरकालीनासत्त्वज्ञानेन बाध्यत इति न तस्य पारमार्थिकं सत्त्वमिति वाच्यम् । वेदान्तशास्त्रश्रवणोत्तरकालं नास्तिकमतप्रविष्टस्य पतितस्यात्मसत्त्वज्ञानोत्तरकालमुत्पन्नासत्त्वज्ञानेन बाधितत्वादात्मनो मिथ्यात्वानिस्तारात् । तार्किकमतपर्यालोचनया वेदापौरुषेयत्वमपि प्रातिभासिकमिति सुवचत्वाच्च । न च बाधकप्रतीतिभूयस्त्वेन वस्तुनिर्णयः । अनाद्यनन्तसंसारे आस्तिकनास्तिकेयत्ताया निर्णेतुमशक्यत्वात् । प्रायः परिदृश्यमानेष्वास्तिकानामेव विरलत्वाच्च । आस्तिकदर्शनेष्वपि त्वद्व्यतिरिक्तैः सर्वैर्जीवेश्वरभेदस्य प्रपञ्चसत्यतायाश्च स्वीकृतत्वाच्च । अपौरुषेयवेदेऽपि आपातत ऐक्यविश्वमिथ्यात्वप्रतिपादकवाक्यापेक्षया भेदसत्यत्वप्रतिपादकानां तदाश्रितकर्मसृष्ट्यादिप्रतिपादकानां च वाक्यानां भूयस्त्वात् इतिहासपुराणादीनां सर्वेषां तन्मयत्वाच्च सर्वाप्रामाण्यापत्त्या बहुविप्लवापत्तेः । नन्वस्माभिर्यथाश्रुतार्थेऽपि द्वा सुपर्णेत्यादिवाक्यानां प्रामाण्यमाश्रीयत एव प्रमाणेनावेदितत्वान्मिथ्याभूतभेदस्यापि स्वीकारात् । यथा इदं रजतमिति प्रतीत्या रजतं मिथ्याभूत-





मङ्गीक्रियते तद्वदत्रापि । तत्त्वमस्यादिवाक्यबलाच्चैक्यमपि स्वीक्रियते, यथा नेदं रजतमिति प्रतीत्या तदभावोऽपि । विषमसत्ताकत्वाच्च न विरोधः । परस्य तु तत्त्वमस्यादिवाक्ये एकीभवन्तीत्यादिवाक्ये च तत्सादृश्याद्यर्थकल्पनया स्थानैक्यमत्यैक्यादिपरगौणव्यपदेशत्वाद्याश्रयणेन श्रुतिस्वरसभङ्गः, तथा नास्माकमिति चेत् । न । अर्भकध(ब)न्धनमात्रत्वात् । मन्मतेऽप्येवमेव वाक्यद्वयप्रामाण्यस्वीकारात् । किन्तु त्वदभ्युपगमापेक्षया व्यत्यासमात्रमधिकम् । तत्त्वमस्यादिवाक्यस्यापि यथाश्रुतार्थे इदं रजतमिति ज्ञानवन्मिथ्याभूतार्थविषयत्वेनातत्त्वावेदकप्रमाणत्वम् । द्वा सुपर्णेत्यादेश्च तद्विपरीतमित्येव । न चैवमपसिद्धान्तः । जीवब्रह्मणोर्मिथ्याभूतैक्यस्यैव मत्सिद्धान्तत्वात् । इयान् परं विशेषः । मिथ्याशब्दार्थो मन्मते असदेव रजतं प्रत्यभादित्यनुभवबलादसत्त्वार्थकः । त्वया तु स्वेच्छामात्रेणानिर्वचनीयत्वार्थकः स्वीक्रियते इति शब्दार्थे विप्रतिपत्तिरास्तां तावत् । उभयथापि वेदार्थस्य शुक्तिरजततुल्ययोगक्षेमत्वमाश्रित्य प्रामाण्यपरिभाषामात्रमपि प्रलप्यते । तत्र यन्मते यादृशं शुक्तिरजतं तन्मते तादृश एव तद्वेदभागस्यार्थ इति निष्कर्षेण फलितम् । तथाच कथमपसिद्धान्तः । प्रपञ्चमिथ्यात्वस्य जीवब्रह्मैक्यस्य च मयाऽप्यसत्त्वेनैव स्वीकारात् । अत एव मन्मतेऽपि त्वन्मतवदेव विषमसत्ताकत्वमाश्रित्य वाक्यानां विरोधपरिहारोऽपि सूपपाद एव । मयापि जीवब्रह्मणोरैक्यस्य भेदस्य च बाधितत्वाबाधितत्वरूपविशेषमाश्रित्य विषमसत्ताकत्वस्य स्वीकारात् । अभेदस्य प्रतिभासमात्रशरीरत्वात् । भेदस्य च पारमार्थिकत्वात् । किन्त्वेतादृशकुत्सितभाषामवलम्ब्य नास्माभिः प्रच्छन्नबौद्धत्वमुररीकर्तुमुचितमिति तत्त्वमस्यादिवाक्यानां सादृश्यादिरूपो वास्तवोऽर्थः प्रतिपाद्यते । न हि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादिवाक्यानां बौद्धेनातत्त्वावेदकत्वं वा मिथ्याभूतार्थविषयकत्वं वा बाधितार्थप्रतिपादकत्वलक्षणं वा त्वदभिप्रेतं प्रामाण्यं नाङ्गीक्रियते । ननु तेन स्वकीयागमबाध्यत्वमुच्यते, मया तु ब्रह्मज्ञानबाध्यत्वमिति चेत् । किं तावता, न हि भ्रमत्वमेतावतापगच्छति । तदिदमाभाणकं नातिवर्तते व्याघ्रेणोरणे नीते का हानिर्वृकेण नीते को लाभ इति । तस्मादेतत्सर्वमपि पाण्डित्यमस्पृष्ट्वा वेश्यागमनमिव न कथञ्चिदप्यास्तिकसभायामुपन्यासार्हमित्यलं पल्लवेन ।

**परि०— अनन्तरमेवेति** । तस्यानिर्वचनीयत्व इत्येतद्व्याख्यानावसर इत्यर्थः । उत्तरकालमसदिति कथं प्रतीयत इत्यस्योत्तरमाशङ्कते **असदित्यर्थक्रियेति** । ननु प्रसक्तमप्यर्थक्रियासामर्थ्यमनिर्वचनीयमेवातो नान्यथाख्यातिदोषो नाप्यप्रसक्तनिषेधो नैव च सत्त्वधीविरोध इत्यत आह **वक्ष्यते चेति** । 'तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरि'त्यत्रास्य पक्षस्य दूषणमित्यर्थः ।





**गु०दी०**— **प्रसक्तौ वाऽन्यथाख्यातिस्वीकारप्रसक्तेः** इत्यत्र अन्यत्राविद्यमानस्यार्थक्रियाकारित्वस्येहैव प्रसक्तौ तन्निषेधोऽपि रजतनिषेधवत्सार्वत्रिकसार्वकालिकनिषेध एव स्यात् । एवं च कदापि कुत्राप्यर्थक्रियानर्हस्य असत्त्वापरिहारान्नात्यन्तासत्त्वं गृह्यत इत्यस्य अलग्नकत्वापातात् अन्यत्र विद्यमानस्यैवार्थक्रियाकारित्वस्य अत्र प्रसक्तिरिति वक्तव्यम् । तथा चान्यथाख्यातिरपरिहरणीयैवेति गूढाभिसन्धेरुत्तरम् ।

**यादु०**— **अनन्तरमेवेति** । 'तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरि'त्यत्रेति शेषः । **अन्यथाख्यातीति** । अर्थक्रियाऽनर्हेऽपि प्रातिभासिकरजते व्यावहारिकरजतधर्मभूतार्थक्रियासामर्थ्यप्रतीतावन्यथाख्यातिप्रसङ्गः । अन्यत्रान्यधर्मसंसर्ग(र्गा)ख्यातेरेवान्यथाख्यातित्वादिति भावः । ननु नान्यथाख्यातिस्वीकारप्रसङ्गः । तत्र प्रतीतस्याप्यर्थक्रियासामर्थ्यस्यानिर्वचनीयत्वादित्यत आह **वक्ष्यते चैतदिति** । तस्यानिर्वचनीयत्व इत्यत्रेति शेषः ।

**वं०प०**— प्रतीतिसमये तदिति प्रतीतिमात्रेण रजते सत्त्वं न सत्यं किं नामेत्यत आह **अधिष्ठानेति** । अधिष्ठानगता या इदन्ता तत्संसर्गो यथा रजते आरोपितः सन्प्रतीयते इदंरजतमिति एवमधिष्ठानगता या सत्ता तत्संसर्गोऽप्यारोपित एव प्रतीयतेऽतः सदिदंरजतमिति प्रतीयत इत्यर्थः । **प्रातीतिकस्येति** । प्रातिभासिकस्येत्यर्थः । सत्त्वेन प्रतीतिरेव सत्त्वं रजतादेर्नार्थगतं सत्त्वमस्तीति मताभिप्रायेणाधिष्ठानेत्याद्युक्तम् । अर्थगतं प्रातिभासिकं सत्त्वमस्ति । सत्त्रैविध्याङ्गीकारादिति मतानुसारेणेदमिति द्रष्टव्यम् । प्रतीत्युत्तरकालं चासदिति कथं प्रतीयत इत्युक्तं तदुपरि शङ्कते **असदितीति** । **तदेति** । भ्रमसमय इत्यर्थः ।

**आनन्दः**— अनिर्वचनीयत्वे साधकाभावमुक्त्वा बाधकमप्याह **किञ्चेति** । शङ्कते **अधिष्ठानेति** । तथाचाधिष्ठानगतसत्तारोपात्सदिति प्रतीतिरिति भावः । **अनन्तरमेव हीति** । सत्त्वस्यासत एव हीत्यत्रेति शेषः । असत्प्रत्ययविरोधश्चापरिहृत एवेति भावः । तत्परिहारं शङ्कते **असदितीति** । **अर्थक्रियेति** । प्रसक्तस्यैव प्रतिषेद्धव्यत्वात् । अर्थक्रियासामर्थ्यस्य चाप्रसक्तत्वात्तन्निषेधो च युज्यत इति भावः । न त्वन्यगतस्य तस्यारोपान्नाप्रसक्तिरित्यत आह **प्रसक्तौ वेति** ।

**कं०रा०**— नन्वसदेव रजतं प्रत्यभादिति प्रत्ययेन रजतस्यार्थक्रियासामर्थ्यलक्षणसत्त्वाभाव एव गृह्यते नात्यन्तासत्त्वम् । अतोऽनिर्वचनीयत्वे न तत्प्रत्ययविरोध इत्याशयेन शङ्कते **असदिति** ।

**श्रीनिधि०**— बाधकज्ञानविरोधेनेत्याह **असदित्यर्थक्रियेति** । तवाप्रसक्तत्वादिति तात्कालिकमुत्पन्नं रजतं प्रतीयते न तु व्यावहारिकतादात्म्यं व्यावहारिकरजतत्वसंसर्गो वा प्रतीयत इति त्वयाभ्युपगमादिति भावः । प्रतीतमर्थक्रियाकारित्वं प्रातिभासिकमेव न तु व्यावहारिकं येनान्यथाख्यातिः स्यादित्यत आह **वक्ष्यते चैतदिति** । तस्यानिर्वचनीयत्व इत्यादिनेति भावः ।





**वा०चं०**— किञ्च यदुपपादनायानिर्वचनीयत्वमाद्रियते ताभ्यामेव भ्रान्तिबाधाभ्यां विरोधोऽनुमानस्येत्याह **किञ्चेति** । रजतस्यानिर्वचनीयत्वे घटादिवत्तत्स्वप्रतीत्या विषयीकर्तव्यम् । तस्याभ्रान्तित्वेन तदप्रतीतौ च बाधप्रतीत्या वा विषयीकर्तव्यम् । न चोभयेनाप्यनिर्वचनीयत्वं विषयीक्रियते । प्रत्युत तद्विरुद्धे सत्त्वासत्त्वे एवेति तद्विरोध इति भावः । ननु यथा ह्यपुरोवर्तिनो रजतस्य पुरोवर्त्यधिष्ठानारोपात्पुरोवर्तित्वप्रतिभासस्तथा सद्विलक्षणरजतस्य सदधिष्ठाने समारोपात्सद्बुद्धिबोध्यत्वं न पुनः सत्त्वादिति नानुभवविरोधः । अथवा सदिदमिति प्रातिभासिकसत्त्वमनुभूयते । पारमार्थिकव्यावहारिकवैलक्षण्यं च साध्यते इति भिन्नविषयत्वान्न तद्विरोध इत्याशङ्कते **अधिष्ठानेति** । **निराकरिष्यत इति** । तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरित्यनुव्याख्यानस्य त्वदुक्तप्रकारद्वयनिरासार्थत्वेन व्याख्यास्यमानत्वादिति भावः । एवं सदिति प्रत्ययविरोधमुपपाद्यासदिति प्रत्ययविरोधं चोपपादयितुं परोक्तसमाधानाभासं शङ्कते **असदितीति** । तथा च नानिर्वचनीयत्वाङ्गीकारे तद्विरोध इति भावः । **तवेति** । अविद्यापरिणामरूपप्रातिभासिकाभिनवरजतोत्पत्तिवादिन इत्यर्थः । नन्वभिनवरजतोत्पत्तिमभ्युपगच्छताऽपि मयाऽर्थक्रियासामर्थ्यस्य तत्प्रतीतिविषयता स्वीक्रियत एवेत्यत आह **प्रसक्तौ वेति** । ननु स्यादपसिद्धान्तो यदि प्रातिभासिकं व्यावहारिकार्थक्रियासमर्थत्वेन प्रतीयत इत्यभ्युपगम्येत । किन्तु रूप्यवदर्थक्रियासामर्थ्यस्यापि प्रतिभासिकस्यैवारोपाभ्युपगमादित्यतस्तस्याऽनिर्वचनीयत्व इत्यनुव्याख्यान एव व्यवहारिकत्वं कथं प्रतीयत इत्यादिविकल्पनिरासेनैतद्दूषणं वक्ष्यतीत्याह **वक्ष्यति चेति** ।

**स०व्र०**— ननु यथा ह्यपुरोवर्तिनो रजतस्य पुरोवर्त्यधिष्ठाने समारोपात् पुरोवर्तित्वप्रतिभासस्तथा सद्विलक्षणरजतस्य सदधिष्ठाने समारोपात्सद्बुद्धिबोध्यत्वं न पुनः सत्त्वात् किञ्च रजतमिति प्रातिभासिकत्वमनुभूयते । पारमार्थिकव्यावहारिकसद्वैलक्षण्यं चानिर्वचनीयत्वं साध्यते । अतो न सत्प्रत्ययविरोध इत्यत आह **अधिष्ठानेदंतासंसर्गवदिति** । तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरित्यत्रेति शेषः । प्रतीतमर्थक्रियाकारित्वं प्रातिभासिकमित्यत आह **वक्ष्यते चैतदिति** । तस्यानिर्वचनीयत्व इत्यत्रेति शेषः ।

**वि०ठ०**— ननु भ्रमस्यानिर्वचनीयख्यातित्वाङ्गीकारेऽपि भ्रान्तिकाले सत्त्वेन प्रतीतिरुपपद्यते तथाहि यथाधिष्ठानगतेदन्तासंसर्गस्य रजते आरोप्यमाणत्वे नेदं रजतमिति प्रतीतिः । तथाधिष्ठानगतसत्तासंसर्गस्यापि तत्रारोपिततया सदिदं रजतमिति भानमुपपद्यते । किञ्च सत्त्रैविध्याङ्गीकारेण रजते प्रातिभासिकत्वस्य विद्यमानत्वेन सत्त्वेन प्रतीत्युपपत्तिरित्यत आह **अधिष्ठानेति** । उत्तरकालमसदिति कथं प्रतीयत इत्यस्योत्तरमाशङ्कते **असदित्यर्थक्रियेति** । प्रातिभासिकानिर्वचनीयख्यातिमते व्यावहारिकतारूपार्थक्रियासामर्थ्यस्याप्रसक्तत्वेन तन्निषेधायोगात् । अर्थक्रियानर्हप्रातिभासिकमपि रजतं व्यावहारिकतया प्रतीयत इत्यस्ति प्रसक्तिरिति चेत्तर्हि अन्यथाख्यातिस्वीकारप्रसङ्गः । अन्यस्यान्यात्मनाख्यातेरेव अन्यथाख्यातित्वात् प्रतीतस्याप्यर्थक्रियासामर्थ्यस्य अनिर्वचनीयत्वाङ्गीकारान्नान्यथाख्यातिस्वीकारप्रसङ्ग इति चेन्न । तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरित्युत्तरत्र दूषणस्य वक्ष्यमाणत्वादित्याशयेनाह **अर्थक्रियासामर्थ्यस्येति** ।





**चषकः— वक्ष्यते चैतदिति** । 'तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिरि'त्यत्रैतत्कल्पस्य दूषणमभिधास्यत इत्यर्थः ।

**प्रदीपः**— नार्थक्रिये न हि प्रातिभासिके रजतादावर्थक्रिया प्रसक्ता । प्रसक्तौ वार्थक्रियां प्रत्यव्यवहारासामर्थ्ये प्रवृत्तौ अन्यथाख्यातिः स्यादित्यर्थः ? ।

**४२० सु०— किञ्चेदं रजतं नित्यमनित्यं वा । आद्ये सर्वदोपलम्भप्रसङ्गः । द्वितीये कारणं वाच्यम् । अविद्येति चेन्न, तस्यास्त्वन्मतेऽनुपपत्तेर्वक्ष्यमाणत्वात् ॥ किञ्चाविद्याया आत्मनिष्ठत्वात्तत्परिणामभूतं रजतमपि प्रत्यक् प्रकाशेत ॥ आत्मनः सर्वगतत्वाच्छुक्त्यवच्छिन्नचैतन्यस्थाविद्याविवर्तभूतं तत्संभिन्नतया प्रतीयत इति चेन्न । तथा सति सर्वोपलब्धिप्रसङ्गात् ।**

**बिन्दुः— त्वन्मते अनुपपत्तेरिति** । मन्मते तु जीवानां अज्ञत्वादल्पशक्तित्वाच्च स्वस्वरूपाधारस्वरूपावरकभावरूपाज्ञानापरपर्यायाविद्यायाः प्रामाणिकत्वात् । ब्रह्मणश्च नित्यसर्वज्ञस्याज्ञानावरणासंभवान्न त्वन्मते साङ्गीकर्तुमुचितेति भावः । **सर्वोपलब्धिप्रसङ्गादिति** । प्रतिपुरुषं भिन्नाविद्यास्वीकारात् तस्याश्च तं तं प्रत्येव रजतारम्भकत्वात् सुखादिवत् न सर्वेषामपि एक एवाविद्येत्यस्याः कल्पनाया अप्रामाणिकत्वादिति भावः । न च वाच्यं फलमेव कल्पकमिति । तस्य दोषादिनैवोपपत्तेः ।

**परि०— वक्ष्यमाणत्वादिति** । 'निर्विशेषे स्वयंभात' इत्यादिनेति भावः । **प्रत्यगिति** । अन्तःप्रकाशेत न बहिरित्यर्थः । **विवर्तभूतं** परिणामभूतम् । **तत्संभिन्नतया** शुक्तिसंभिन्नतया ।

**यादु०— वक्ष्यमाणत्वादिति** । 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि'त्यादाविति शेषः । **तत्सम्भिन्नतयेति** । तदनुविद्धतयेत्यर्थः । **सर्वोपलब्धीति** । शुक्तिवदेव रजतस्यापि परात्त्वात्सर्वेषामुपलब्धिप्रसङ्ग इत्यर्थः ।

**वं०प०— इदंरजतमिति** । शुक्तौ प्रतीयमानमित्यर्थः । **प्रत्यगिति** । आन्तरत्वेन प्रकाशेतेत्यर्थः । तथाच शुक्तिसंभिन्नतया पराक्त्वेन प्रतीतिर्न संभवतीति भावः ।

**आनन्दः— वक्ष्यमाणत्वादिति** । निर्विशेष इत्यत्रेति शेषः । प्रत्यक् प्रत्यगात्मनि **आत्मन इति** । तथाच शुक्तिसंभिन्नत्वेन भावे तदवच्छिन्नचैतन्यस्थाविद्याविवर्तत्वं तन्त्रमिति भावः । ननु शुक्तौ चैतन्यमसंभावितं,





तस्यासर्वगतत्वादित्यत आह **आत्मन इति** । **सर्वोपलब्धिप्रसङ्गादिति** । शुक्त्यवच्छिन्नचैतन्यस्थाविद्याविवर्तत्वे सर्वेषां पुंसां शुक्तिसंभिन्नत्वेनैव प्रतीतिः स्यादित्यर्थः । यद्वा सर्वोपलब्धिप्रसङ्गात् । चैतन्यस्थविवर्तत्वरूपत्वात्सर्वस्य जगतोऽधिष्ठानसंभिन्नत्वेनैव प्रवृत्तिः स्यादित्यर्थः ।

**कं०रा०— प्रत्यगिति** । अहंपदार्थसंभिन्नतया प्रकाशेतेत्यर्थः । **सर्वेति** । सर्वस्यापि पुरुषस्य तादृग्रजतोपलब्धिप्रसङ्गादित्यर्थः । न च वाच्यं शुक्त्यवच्छिन्नचैतन्यस्थाविद्यायाः पुरुषविशेषं प्रत्याच्छादकत्वात्तद्विवर्तभूतं रजतं तं प्रत्येव प्रकाशत इति । आच्छादकाज्ञानस्याच्छाद्यशुक्त्यवच्छिन्नचैतन्यस्थत्वे सर्वं प्रत्याच्छादकत्वावश्यंभावात् । न ह्याच्छाद्यस्थं तमः पुरुषविशेषं प्रत्येव घटमाच्छादयति ।

**श्रीनिधि०—** धर्मिविषमसत्ताको अन्यथाभावो विवर्तः । **सर्वोपलब्धीति** । सर्वेषां पुरुषाणामित्यर्थः । प्रतिकर्मव्यवस्थाया निराकरिष्यमाणत्वादिति भावः ।

**वा०चं०—** ननु रजतस्य सत्स्वरूपत्वादसदित्यादिप्रत्ययस्य गत्यन्तरं कल्प्यमेवेत्यतः सत्स्वरूपत्वमेवासिद्धमित्याशयेनानुमाने प्रतिकूलतर्कपराहतिमाह **किञ्चेति** । ननु मन्मतेऽविद्याऽनुपपत्तावपि तदुपपत्तिपक्षे तदुपादानकत्वे रजतस्य नानुपपत्तिरित्यतस्तत्पक्षेऽपि तदनुपपत्तिमाह **किञ्चेति** । ननु देहावच्छिन्नात्माऽविद्याविवर्तभूतं न रजतं किन्तु शुक्त्यवच्छिन्नात्माऽविद्याविवर्तभूतम् । न च स एवासिद्ध इति वाच्यम् । आत्मनः सर्वगतत्वेन शुक्त्यवच्छिन्नत्वस्यापि संभवात् । अतो न बहिःप्रकाशानुपपत्तिरित्याशङ्कते **आत्मन इति** । अत्र बहिष्ठेति वक्तव्ये शुक्त्यवच्छिन्नेति वचनं रजतस्य शुक्तिसामानाधिकरण्योपपादनायेति बोध्यम् । नन्विदं नित्यत्वानित्यत्वनिराकरणं तदुभयविलक्षणत्वरूपानिर्वचनीयत्वपर्यवसायितया न ममानिष्टमिति चेन्न । असत्त्वेनाप्युपपत्तेः । न च प्रतीत्यनुपपत्तिः । उपपादयिष्यमाणत्वात् ।

**स०व्र०— सर्वोपलब्धिप्रसङ्गादिति** । शुक्तिवदेव सर्वेषामधिष्ठानतयोपलब्धिप्रसङ्ग इत्यर्थः । इन्द्रियसन्निकर्षस्तु रजतप्रतीतौ नोपयुज्यत इति वक्ष्यत इति भावः ।

**विठ्ठ०—** भ्रान्तिप्रतिपन्नरजतस्य प्रातिभासिकतयापि सत्त्वाङ्गीकारे बाधकान्तरमाह **किञ्चेति** । शङ्कते **आत्मन इति** । **तत्संभिन्नतयेति** । शुक्तितादात्म्येनेत्यर्थः । **सर्वोपलब्धीति** । शुक्तिवदेव सर्वैरपि दृश्येतेति भावः ।

**चषकः— वक्ष्यमाणत्वादिति** । निर्विशेषे स्वयं भात इत्यत्रेति पूरणीयम् । **प्रत्यगिति** । अन्तः प्रकाशेत न बहिरित्यर्थः । **विवर्तभूतं** परिणामभूतम् । **तत्संभिन्नतया** शुक्त्यनुविद्धतया । **सर्वोपलब्धीति** । शुक्तेरिव रजतस्यापि परात्त्वात्सर्वेषामुपलब्ध्यापत्तिरित्यर्थः ।

४२३ **प्रदीपः—** रजतस्य शुक्तिकासामानाधिकरण्योपपादनाय **शुक्त्यवच्छिन्नेत्युक्तं** प्रतीतिसन्निकर्षानन्तरमित्युत्पद्यमानेन सन्निकर्ष इत्यर्थः ।





**४२१ सु०— अपि चेदमिन्द्रियसन्निकर्षादुपलभ्यते घटादिवत्, संस्काराद्वा अतीत-घटादिवत्, साक्षिणा वा सुखादिवत् ॥ नाद्यः प्रतीतिसमय एव रजतजन्माङ्गीकारात् । न द्वितीयः अननुभूतत्वात् । न तृतीयः इन्द्रियव्यापारान्वयव्यतिरेकानुविधानविरोधात् ।**

**परि०**— एवं रजतस्याविद्यकत्वं निरस्य तत्प्रतीतिं च निराह **अपि चेति** । **प्रतीतिसमय एवेति** । दुष्टेन्द्रिययोगाच्छुक्त्यवच्छिन्नचैतन्यस्थमज्ञानं रूप्यात्मना तत्प्रतीत्यात्मना च परिणमत इति स्वीकारादिति भावः ।

**वं०प०**— **अपि चेदमिति** । रजतमित्यर्थः ।

**आनन्दः**— नन्वधिष्ठानसन्निकर्षस्य नियामकत्वान्न सर्वोपलब्धिरित्यत आह **अपि चेति** । **अननुभूतत्वादिति** । न च भवतां यथाननुभूतस्यासत एव रजतस्य संस्कारादुपलब्धिवत्प्रकृतेऽप्यननुभूतस्यापि संस्कारादुपलब्धिः किन्न स्यादिति वाच्यम् । स्यादेतत् । यद्यनिर्वचनीयत्वं सिद्धं स्यान्न चैतदस्ति तत्र प्रमाणा-भावादिति भावः । **रजत इति** । पक्षज्ञानस्यानुमितिकारणत्वेन तज्जनकस्येन्द्रियस्यान्यथासिद्धित्ववत्प्रकृतेऽप्यधि-करणग्रहस्य रजतज्ञानकारणत्वे हि सति तज्जनकत्वे नान्यथासिद्धत्वं वक्तव्यम् । न च तदस्तीत्यर्थः ।

**वा०चं०**— अनिर्वचनीयत्वेऽपि तदनुपपत्तिरित्याह **अपि चेति** । यद्वा तत्स्वरूपस्य प्रतीति-सिद्धत्वादुक्तप्रकारयोरन्यतरद्वा प्रकारान्तरं वा कल्पनीयमेवेत्यतः सैवासिध्येत्याशयेन तत्स्वरूपं निरस्य तदुप-लब्धिमपि निरस्यति **अपि चेति** । यद्वा सर्वदोपलब्धिकारणाभावान्न सर्वदोपलब्धिरित्यतस्तत्कारणमेवासिद्धमित्याह **अपि चेति** । घटादिवदित्यादिदृष्टान्तकथनं कल्पनाप्रसक्तिसंपादनायेति द्रष्टव्यम् । यद्वा परिहारे तद्वैषम्य-प्रतिपादनेन दूषणसौकर्याय पूर्वदृष्टान्ततया तदुपादानमिति ज्ञेयम् । **प्रतीतीति** । प्रतीतिजनकसंन्निकर्षाय तत्पूर्वं सत्त्वस्यावश्यकत्वादिति भावः । **अननुभूतत्वादिति** । प्रतीतिमात्रसमयस्य पूर्वानुभवाभावेन संस्कारासंभवादिति भावः ।

**विठ०**— इन्द्रियसन्निकर्षाभावान्न सर्वैर्दृश्यत इति चेन्न प्रातीतिकतया इन्द्रियसन्निकर्षाभावस्य वक्ष्यमाणत्वात् । रजतस्य आविद्यकत्वं निरस्य प्रतीतिश्च न संभवतीत्याह **अपि चेति** । **प्रतीतिसमयेति** । तथाच प्रतीतिसमयमात्रभाविनि रजते प्रतीतिजनकेन्द्रियसन्निकर्षायोगादिति भावः । **अनुभूतत्वादिति** । प्रतीतिसमय-मात्रवर्तिनो रजतस्य प्रतीतेः पूर्वमविद्यमानत्वेन प्राक्तदनुभवायोगात्संस्कारस्यैवासंभवादिति भावः ।

**चषकः**— रजतस्याविद्यकतामपास्य तत्प्रतीत्युपपादनविधात्रयं क्रमेण प्रत्यस्यति **अपि चेति** । **प्रतीतिसमय एवेति** । शुक्त्यवच्छिन्नचैतन्यावरकमज्ञानं दुष्टेन्द्रियसंयोगाद्रूप्यात्मना तत्प्रतीत्यात्मना च परिणमत इत्युपगमादिति भावः ।





**४२२ सु०— अधिकरणग्रहणे तदुपक्षयान्नेति चेन्न । रजतग्रहेऽधिकरणग्रहस्योपयोगाभावात् ॥ रजतं गृह्यमाणं साक्षिणा शुक्तिसंभिन्नं गृह्यते । न हि शुक्तिः साक्षात्साक्षिवेद्या व्यावहारिकत्वात्, किन्तु इन्द्रियव्यवधानेन । रजतं तु प्रातिभासिकं नेन्द्रियव्यवधानमपेक्षते । अतोऽस्ति रजतप्रतीताविन्द्रियोपयोग इति चेन्न । शुक्तिसंभेदप्रतीतिनियमे नियामकाभावात् ॥**

**किञ्चेन्द्रियेणाधिकरणग्रहणं रजतग्रहणं च साक्षिणेत्यङ्गीकारेऽख्यातिमतानुमतिप्रसङ्गेन प्रवृत्त्याद्यनुपपत्तिः । शुक्तितादात्म्यमपि रजतस्य साक्षिणा गृह्यते अतो नैवमिति चेन्न, तथाऽपि ज्ञानद्वयाङ्गीकारेणानुभवविरोधापरिहारात् । इन्द्रियजन्यवृत्तेरपि साक्षिचैतन्यमेव फलमिति फलैक्यान्नेति चेन्न, अस्याः प्रक्रियाया निरसिष्यमाणत्वात् ।**

**बिन्दुः— शुक्तिसंभेदप्रतीतिनियमे नियामकाभावादिति** । यद्यपि शुक्तिकामेवाऽहं रजतत्वेनाज्ञासिषमित्यादिर्यत्र परामर्शस्तत्र तादृशप्रतीतिबलाच्छुक्तिसंभेदप्रतीतिरिति वक्तुं शक्यं तथापि यत्र न तादृशः परामर्शः किन्तु अहमत्र रजतमद्राक्षं वस्तुतस्तदसदेव समीपमागतेनापि मया निपुणतरमन्वेषितत्वेऽपि अलाभादित्येव यत्र विमर्शस्तत्र शुक्तिकासंभेदेन ज्ञातमिति निर्णेतुमशक्यत्वादिति भावः । अथवा रजतोत्पत्तिमते सत्यरजतवद्भूतलासंभिन्नत्वेन प्रतीतिवदस्यापि शुक्त्यसंभेदेनैव प्रतीतिरिति भावः । **ज्ञानद्वयाङ्गीकारेणेति** । साक्षिणो नित्यत्वादिन्द्रियजस्य च जन्यत्वान्न विशिष्टमेकं ज्ञानमङ्गीकर्तुमुचितमिति भावः । **फलैक्यादिति** । प्रतिकर्मव्यवस्थायां परेण । घटोऽयमित्यादिज्ञानोत्पत्तये काचित्प्रक्रिया उत्प्रेक्षिता । घटेन्द्रियसन्निकर्षेण किल मनसो घटाकारः अन्तर्वर्ती वृत्याख्यः कश्चित् परिणामविशेषो जायते । स च बाह्येन्द्रियद्वारा बहिर्निःसरन्ती येन येन यथा विषयपर्यन्तं गच्छति तत्तत्पथस्थं तत्तद्विषयावच्छिन्नचैतन्यावरकीभूतमज्ञानमपसारयति । ततश्चाज्ञाने अपगते वृत्तिप्रतिबिम्बितं चैतन्यं स्वयमेव स्फुरति । ततश्च तस्मिन्नध्यस्तो घटादिरर्थोऽपि स्फुरतीति वृत्तिप्रतिबिम्बितचैतन्यरूपफलैक्यमित्यर्थः । अस्याः प्रक्रियायाः निराकरिष्यमाणत्वादित्यर्थः ।

**परि०— इन्द्रियव्यवधानेनेति** । यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान्प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति तथा सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारेण निर्गत्य शुक्त्यादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्य तदाकारं भवति । सेयं वृत्तिरित्युच्यते । तथाच शुक्तिग्रहणरूपवृत्त्यवच्छिन्नशुक्त्यधिष्ठानचैतन्यमन्तःकरणावच्छिन्नजीवचैतन्येनैकोपाध्यवच्छिन्नतयैकीभूतम् । तेन चाधिष्ठानचैतन्येन जीवचैतन्येनैकीभूतेन साक्षिशब्दितेन शुक्तिसंभिन्नतया रूप्यं भासत इति





वक्तव्यत्वादिति भावः । **नियामकाभावादिति** । शुक्त्याकारान्तःकरणवृत्त्याऽभिव्यक्तेन वा तत्र प्रतिफलितेन वा शुक्त्याधिष्ठानचैतन्येन शुक्तिरवभासते । शुक्त्यधिष्ठानचैतन्यस्थाविद्यापरिणतिरूपया रूप्याकारवृत्त्याऽभिव्यक्तेन वा तत्प्रतिफलितेन वा रूप्यं भासत इति हि तव प्रक्रिया । तस्मिन्पक्षे शुक्तिसंभेदप्रतीतिनियमे न नियामकमस्तीति भावः । ननु शुक्त्याकारपरिणतान्तःकरणवृत्त्युपहित-मेवाधिष्ठानचैतन्यमविद्यावृत्तिप्रतिबिम्बितं सत् रूप्यावभासकमिति सिद्धान्तोपगतिरेव शुक्तिसंभेदप्रतीति-नियामिकेति वदन्तं प्रत्याह **किञ्चेति** । **इन्द्रियेणेति** । इन्द्रियजन्येदमंशवृत्त्यभिव्यक्ताधिष्ठानचैतन्येने-त्यर्थः । अन्यथा इदमंशस्यानपरोक्षतापत्तेः । चैतन्यस्यैव तन्मतेऽपरोक्षत्वादिति ज्ञेयम् । **साक्षिणेति** । अविद्यावृत्त्युपहिताधिष्ठानचैतन्यरूपेण साक्षिणेत्यर्थः । **अनुभवविरोधेति** । ज्ञानैकत्वसमर्थन-प्रस्तावोक्तरीत्येति भावः । **इन्द्रियजन्यवृत्तेरपीति** । इन्द्रियजन्येदमंशाकारवृत्त्या सादृश्यादिदोष-सहितया अधिष्ठानचैतन्यस्थाविद्यापरिणतिद्वारा अविद्यावृत्तिप्रतिफलितरूपसाक्षिचैतन्यमेव फलम् । तस्य चैकत्वादैक्यानुभवविरोधो नेत्यर्थः । **निरसिष्यमाणत्वादिति** । अध्यासकार्यानुपपत्तिरूपा-विद्याप्रमाणनिरासप्रस्तावे ।

**गु०दी०— रजतग्रहणे** इत्यस्याविद्योपादानकचिदधिकरणकरजतग्रहण इत्यर्थः । **अधिकरणग्रहणस्य** इत्यस्य शुक्तिरूपाधिकरणग्रहणस्येत्यर्थः । **व्यावहारिकत्वात्** इत्यत्र बाह्यव्यावहारिकत्वादित्यर्थः । आन्तर-व्यावहारिकसुखादीनां साक्षिवेद्यत्वात् । **शुक्तिसंभेदप्रतीतिनियम** इत्यत्र त्वन्मते चिदधिकरणकाऽऽविद्यकरजतस्य शुक्त्यधिकरणत्वाभावादित्युपस्कर्तव्यम् । **इन्द्रियजन्यवृत्तेरपि** इत्यत्र इन्द्रियजन्यघटादिवृत्तेरप्यज्ञाननिवृत्तिद्वारा घटोल्लेख एव फलम् । साक्षिणोऽपि वृत्तिद्वाराऽधिष्ठानचैतन्येनैकीभूतस्य घटोल्लेख एव फलमिति फलैक्यादित्यर्थः ।

**यादु०—** गूढाभिसन्धिराह **रजतग्रहणेऽधिकरणग्रहणस्येति** । आशयमविद्वान् शङ्कते **रजतं गृह्यमाणमिति** । आशयमुद्घाटयति **शुक्तिसंभेदेति** । येनाधिकरणग्रहणे इन्द्रियोपयोगः स्यादित्यर्थः । त्वया रजतस्य पदार्थान्तरत्वाङ्गीकारात् । अन्यथा घटोऽपि नियमेन शुक्तिसम्भिन्नतया प्रतीयेत । शुक्त्यवच्छिन्न-चैतन्याविद्यानिवर्तकत्वान्नियमेन तत्सम्भिन्नतया प्रतीयत इति तु निरस्तमिति भावः । **प्रवृत्त्याद्यनुपपत्तिरिति** । रजतत्वविशिष्टपुरोवर्तिज्ञानस्यैकस्यैव प्रवृत्त्यादिजनकत्वस्य समर्थितत्वादिति भावः । ज्ञानैक्यानुभवानुप-पत्तिरादिशब्दार्थः । **फलैक्यादिति** । इदमंशावच्छिन्नचैतन्यस्यैवेदंवृत्तौ रूप्यवृत्तौ च प्रतिफलनादिति भावः । **निराकरिष्यमाणत्वादिति** । 'यत्किञ्चिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यत्र शुक्तिरजतादिज्ञानं न साक्षिरूपं किन्तु चक्षुरादिकरणकं मनःपरिणतिरूपमेवेति अस्याः प्रक्रियाया निराकरिष्यमाणत्वादित्यर्थः ।

**वं०प०— उपयोगाभावादिति** । तथा चाधिकरणभूतशुक्तिग्रहणेन नेन्द्रियव्यापारस्योपक्षय इत्यर्थः । **रजतप्रतीताविति** । शुक्तिसंभिन्नतया प्रतीतावित्यर्थः । **इन्द्रियोपयोग इति** । अधिकरणभूतशुक्तिग्रहणे





इन्द्रियस्योपयोग इत्यर्थः । **नियामकाभावादिति** । त्वन्मतेऽविद्योपादानकप्रातिभासिकरजतस्यान्तरपदार्थत्वेन तस्य शुक्तिसंभिन्नतया प्रतीतिनियमाभावेनाधिकरणग्रहणापेक्षाया एवाभावेन न तद्ग्रहणे इन्द्रियव्यापारोपयोग इति भावः । न च वाच्यमात्मनः सर्वगतत्वाच्छुक्त्यवच्छिन्नचैतन्यस्थाविद्याविवर्तत्वाच्छुक्तिसंभिन्नतया प्रतीयत इति । तथा सति शुक्तिवदेव रजतस्यापि पराक्त्वात्सर्वेषामप्युपलब्धिप्रसङ्ग इत्युक्तमिति भावः । **अख्यातिमतेति** । ज्ञानद्वयाङ्गीकारप्रास्येत्यर्थः । **प्रवृत्तीति** । विशिष्टज्ञानस्यैकस्यैव प्रवर्तकतायाः प्राक् समर्थितत्वादिति भावः । **नैवमिति** । प्रवृत्त्याद्यनुपपत्तिर्नास्तीत्यर्थः । **अनुभवेति** । विशिष्टज्ञानैक्यावगाह्यनुभवेत्यर्थः । **फलैक्यादिति** । रजताकाराविद्यावृत्तिप्रतिफलितमेव साक्षिचैतन्यमिदमाकारेन्द्रियजन्यवृत्तावपि प्रतिफलति । तदेव च फलं तदेव ज्ञप्तिरूपं ज्ञानम् । तथा चाविद्यावृत्त्यन्तःकरणवृत्त्योर्भेदेऽपि तत्प्रतिबिम्बितचैतन्ययोरेकत्वेन फलैक्यान्न ज्ञानैक्यावगाह्यनुभवविरोध इत्यर्थः । फलैक्यनिबन्धनं ज्ञानैक्यमौपचारिकमित्याशयः ।

**आनन्दः**— ननु नियामकाभावोऽसिद्धः शुक्त्यवच्छिन्नचैतन्यस्थाविद्याविवर्तस्यैव नियामकत्वादित्यत आह **किञ्चेति** । **प्रवृत्त्यादीत्यत्र आदिशब्देन** सामानाधिकरण्यादिव्यवहारपरिग्रहः । **तथापि** ज्ञानद्वयेऽपि । यद्यपि शुक्तितादात्म्यविशिष्टं च रजतं साक्षिणा गृह्यत इति परेणोक्तत्वात् तस्य च विशिष्टैकज्ञानत्वान्नानुभवविरोधः । संस्कारोद्बोधकत्वेन वैकविद्यादिदर्शनरूपं ज्ञानं तु भवद्भिरप्यङ्गीक्रियत एवेति नानुभवविरोधवचनमुक्तम् । तथापि साक्षिणा शुक्तितादात्म्यविशिष्टरजतग्रहस्यैव परेणानङ्गीकारात् । तथाङ्गीकारेऽपसिद्धान्तः स्यादित्यत्र तात्पर्यं इन्द्रियजन्यवृत्तेरपीत्यत्रापिशब्देनाविद्यावृत्तेः परिग्रहः । तथाच नानुभवविरोध इति भावः ।

**कं०रा०**— **शुक्तिसंभेदेति** । रजतस्य शुक्तिसंभेदप्रतीतिनियमहेतोः शुक्त्यवच्छिन्नचैतन्यस्थाविद्या-परिणामरूपत्वस्य दूषितत्वादिति भावः । **अनुभवेति** । ज्ञानैक्यानुभवविरोधापरिहारादित्यर्थः । **फलैक्यादिति** । इदमंशावच्छिन्नचैतन्यस्यैवेदंवृत्तौ रूप्यवृत्तौ च प्रतिफलनादिति भावः ।

**श्रीनिधि०**— **शुक्तिसंभिन्नं** शुक्तिसंमिश्रम् । **व्यावहारिकत्वादिति** । बाध्यत्वे सतीति शेषः । अन्यथा साक्षिवेद्ये सुखादौ व्यभिचारादिति । **नियामकाभावादिति** । अन्यस्यान्यात्मना प्रतीतिः खलु शुक्तिसंभिन्नतया प्रतीतिर्नियामिका न तत्कालोत्पन्नस्य रजतस्य स्वतन्त्रस्य प्रवृत्तौ तु नियामकं नास्तीति भावः । अन्यथाख्यातिदोषे सत्येव दोषान्तरमाह **तथापि ज्ञानद्वयेति** । **फलैक्यादिति** । घटाद्याकारेण वृत्तौ परिणतायां तदवच्छिन्नचैतन्याज्ञाने विनष्टे तस्य चैतन्यस्य साक्षिणैक्यं भवतीति फलैक्यादित्यर्थः । एवं हि तत्प्रक्रियेति ज्ञेयम् । रजतज्ञानस्यापि साक्षिरूपत्वादिति भावः ।

**वा०चं०**— **रजतेति** । तस्य घटादितुल्यतयाऽधिकरणग्रहानपेक्षणादिति भावः । **न हीति** । शुक्तेः साक्षात्साक्षिवेद्यत्वे साक्षिणः सर्वदा सत्त्वाद्यावत्स्वसत्त्वमविद्यादिवत्प्रतिभासेन प्रातिभासिकत्वापातेन व्यावहारि-







कत्वानुपपत्तेरिति भावः । **शुक्तीति** । न च शुक्त्यवच्छिन्नचैतन्यस्थाविद्याविवर्तत्वमेव शुक्तिसंभेदप्रतीतिनियमे नियामकमिति वाच्यम् । आत्मनः सर्वगतत्वाद् भूतलविशेषाद्यवच्छिन्नचैतन्यस्थमृदादिपरिणामघटादेः स्वोपादानमृदाद्यधिकरणभूतलविशेषसंभेदप्रतीतिनियमाभाववद्रजतस्य स्वोपादानभूताविद्यासंभेदप्रतीतिनियमावश्यंभावेऽपि भूतलादितुल्यशुक्तिसंभेदप्रतीतिनियमे कारणाभावादिति भावः । अत एवासत्ख्यातिनिरासावसरे शुक्तिभूतलयोरविशेषेणेत्युक्तम् । शुक्तेरारोपाधिष्ठानत्वाभावस्य मतद्वयेऽपि साम्यादिति । ननु रजतोपादानाविद्यायाः शुक्त्यवच्छिन्नचैतन्याधिकरणताकत्वनियमान्न शुक्तेर्घटाद्युपादानमृदाद्यनियताधिकरणभूतलादितुल्यतेति चेन्न । रङ्गादावपि रजतारोपसंभवेन तत्रापि नियमाभावात्कार्योपादानानियताधिकरणविशेषतुल्यताया अपरिहाराच्च । अस्तु वा यत्किञ्चिन्नियामकं तथाऽप्यधिकरणग्रहे उपक्षयकल्पनाऽनुपपन्नैवेत्याशयेनाह **किञ्चेति** । प्रवृत्त्यादीत्यादिपदेन ज्ञानैक्यानुभवग्रहणम् । **तथाऽपीति** । तादात्म्यावभासाभ्युपगमेनाख्यातिमतप्राप्तप्रवृत्त्यनुपपत्त्यभावेऽपि तन्मतप्राप्तज्ञानैक्यानुभवविरोधोऽपरिहार्य एवेत्यर्थः । नन्वविद्यावृत्त्यन्तःकरणवृत्त्योर्भेदेऽप्यविद्यावृत्तेर्ज्ञानत्वाभावाद्रूप्याकाराविद्यावृत्तिप्रतिबिम्बितेन तदभिव्यक्तेन वेदमंशावच्छिन्नरूप्याधिष्ठानसाक्षिचैतन्येनैव रूप्यप्रकाशाभ्युपगमादन्तःकरणवृत्तेरप्यज्ञानत्वाज्ज्ञानत्वेऽपि वा तस्या अप्रकाशकत्वेनेदमाकारान्तःकरणवृत्तिप्रतिफलितेदमंशावच्छिन्नसाक्षिचैतन्यस्यैवेदमंशप्रकाशकत्वादविद्यावृत्तिफलभूतरूप्यप्रकाशकसाक्षिचैतन्यस्यैवान्तःकरणवृत्तिफलत्वेन न ज्ञानैक्यानुभवविरोधः । इदमंशरूप्योभयप्रकाशकेदमंशावच्छिन्नसाक्षिरूपज्ञानस्यैकत्वाद्भिन्नयोर्वृत्त्योश्च ज्ञानत्वाभावादित्याशङ्कते **इन्द्रियेति** । यद्वाऽन्तःकरणवृत्तिफलीभूतेदमंशावच्छिन्नसाक्षिचैतन्यस्यैव स्वमायाविवर्तरजतादिसिद्धित्वेनोभयोरपीदमंशावच्छिन्नैकसाक्षिवेद्यत्वेन फलभेदाभावान्नानुभवविरोध इत्याशङ्कते **इन्द्रियेति** । संभावितदोषेन्द्रियजन्यवृत्तेरेव रूप्यप्रकाशकत्वस्यान्यथाख्यातेः समर्थनेनोपपन्नत्वेनावश्याङ्गीकर्तव्ययाथार्थ्यनियमस्य साक्षिचैतन्यस्याविद्यमानरूप्यप्रकाशकत्वं न संभवतीत्यर्थस्य यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदित्यादिना व्युत्पादयिष्यमाणतया वृत्तिप्रतिफलनादिकल्पनाया अप्रामाणिकत्वेन प्रक्रियामात्रत्वमित्याशयेनाह **अस्या इति** । यद्यपीदमंशस्येदमाकारान्तःकरणवृत्तिप्रतिबिम्बितेन वा तदभिव्यक्तेनेदमंशानवच्छिन्नेनेदमंशाधिष्ठानचैतन्येन वा वेद्यतया रूप्यस्य च रूप्याकाराविद्यावृत्तिप्रतिबिम्बितेन वा तदभिव्यक्तेनेदमंशावच्छिन्नरूप्याधिष्ठानचैतन्येन वा वेद्यतयाऽवच्छिन्नफलं तन्मतेऽपि भिन्नमेव । न हि रूप्यं प्रतीवेदमंशं प्रत्यपीदमंशावच्छिन्नमधिष्ठानम् । आत्माश्रयापातात् । नापीदमंशं प्रतीव रूप्यं प्रत्यपीदमंशानवच्छिन्नमधिष्ठानम् इदं रूप्यमिति धीविरोधात् । अफलचिन्मात्राभिदस्तु सर्वत्राविशिष्ट इति ज्ञानैक्यानुभवविरोधस्तवदस्थ इत्यपि वक्तुं युक्तम् । तथाऽपि प्रतिफलनकल्पनाया अप्रामाणिकत्वेनैव तदुक्तनिरासोपपत्तौ तदङ्गीकारेण दूषणाभिधाने न प्रयोजनमित्याशयात् । इदमंशावच्छिन्नचैतन्यस्यैवेदंवृत्तौ रूप्यवृत्तौ च प्रतिफलनाज्ज्ञानैक्यमिति तु तस्यासदाकाररूप्यवृत्तौ प्रतिफलनायोगेन निरस्तम् । एतेन विषययोरैक्यापन्नतया ज्ञानैक्यमुपचरितमिति । (उपचरितमिति भातीति च विवरणोक्तमित्यन्वयः) । यथेदमंशावच्छिन्नचैतन्याविद्याविवर्तत्वाद्रूप्यमिदन्तत्वेन भाति तथेदंवृत्त्यवच्छिन्नचैतन्याविद्याविवर्तत्वाद्रूप्यज्ञानमिदंज्ञानत्वेन भातीति च विवरणोक्तं निरस्तम् ।





**स०व्र०— रजतग्रहे अधिकरणग्रहस्येति** । रजतस्यापि पृथक्पदार्थत्वाङ्गीकारादिति भावः । **शुक्तिसंभेदेति** । रजतारोपस्य शुक्त्यधिष्ठानकत्वे आरोप्यस्य सर्वत्राधिष्ठानसंभेदेनैव प्रतीयमानत्वेन शुक्तिसंभेदेनैव प्रतीतेरावश्यकत्वेऽपि त्वया तदनभ्युपगमान्न शुक्तिसंभेदेन प्रतीतिरिति भावः । केचित्तु । रजतस्य पदार्थान्तरत्वाङ्गीकारात् न शुक्तिसंभेदेनैव प्रतीतिनियमः । अन्यथा घटोऽपि शुक्तिसंभिन्नतया प्रतीयेत । शुक्त्यवच्छिन्नचैतन्याविद्याविवर्तत्वनियमेन तत्संभिन्नतया प्रतीयत इति तु निरस्तमिति भावः इत्याहुः । 'अङ्गीकारे ख्याती'त्यत्राख्यातीत्यकारप्रश्लेषः कार्यः । **प्रवृत्त्याद्यनुपपत्तिरिति** । रजतविशिष्टपुरोवर्तिज्ञानस्यैकस्यैव प्रवृत्त्यादिजनकत्वस्य समर्थितत्वादिति भावः । **फलैक्यादिति** । उभयोरप्यन्तःकरणवृत्त्यविद्यावृत्तिफलितेदमंशावच्छिन्नैकसाक्षिवेद्यत्वेन फलभेदाभावादिति भाव इत्याहुः । **अस्याः प्रक्रियाया निराकरिष्यमाणत्वादिति** । 'यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यत्र शुक्तिरूप्यादेर्मानसदर्शनविषयत्वोपपादनेन साक्षिविषयत्वस्य निराकरिष्यमाणत्वादित्यर्थः ।

**विठ्ठ०— अधिकरणग्रहण इति** । अधिष्ठानभूतशुक्तिकाग्रहण इत्यर्थः । शुक्तिग्रहणस्योपयोगमाशङ्कते **रजतमिति** । **संभेदेति** । रजतस्य प्रतीतिसमये जन्यतया पृथग्घटादिवत्पदार्थान्तरत्वाङ्गीकारवच्छुक्तावनारोपितत्वेन शुक्तिसंभेदेन प्रतीतिनियामकाभावात् । अन्यथा घटोऽपि शुक्तिसंभिन्नतया प्रतीयेत । अविशेषात् । शुक्त्यवच्छिन्नचैतन्याश्रिताविद्याविवर्तत्वान्नियमेन शुक्तिसंभिन्नतया प्रतीयत इति निरस्तमिति भावः । **साक्षिणेति** । अविद्यावृत्त्यभिव्यक्तसाक्षिणेत्यर्थः । **प्रवृत्त्यादीति** । पुरोवृत्तिरजतानुभवस्यैव प्रवर्तकत्वेन ज्ञानद्वित्वाङ्गीकारे प्रवृत्त्यनुपपत्तिः । इदंरजतमित्येकत्वानुभवविरोधश्चेत्यर्थः । **तथापीति** । प्रवृत्त्यनुपपत्तिपरिहारेऽपि अन्तःकरणवृत्तिरूपमिदमिति ज्ञानमेकं रजतस्य शुक्तितादात्म्यावगाह्यविद्याकृत्युपहितं साक्षिज्ञानपरमिति ज्ञानद्वयाङ्गीकारेणेदं रजतमिति ज्ञानस्यैकज्ञानत्वानुभवविरोधानिवृत्तेरित्यर्थः । ननु तथापि न ज्ञानैक्यानुभवविरोधः इन्द्रियजन्येदन्ताकारास्पदान्तःकरणवृत्तेरपि स्वतोऽप्रकाशत्वेन तत्प्रतिफलितेदमंशावच्छिन्नसाक्षिचैतन्यस्यैवेदमंशप्रकाशत्वेन वक्तव्यतया साक्षिचैतन्यमेव ज्ञानरूपं फलम् । तथा रजताकाराविद्यावृत्त्यभिव्यक्तसाक्षिचैतन्येनैव रजतप्रकाशाभ्युपगमेन साक्षिचैतन्यमेव फलतया पर्यवसितमिति साक्षिज्ञानरूपफलस्यैकत्वान्नोक्तदोष इत्याशयेन शङ्कते **इन्द्रियेति** । **निराकरिष्यमाणत्वादिति** । 'यत्क्वचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'त्यादावविद्यानिराकरणप्रस्तावे च निराकरिष्यमाणत्वादित्यर्थः ।

**चषकः—** अभिसन्धिमनाविर्भावयन्नाह **रजतग्रहण इति** । आशयमजानानः शङ्कते **रजतं गृह्यमाणमिति** । **इन्द्रियव्यवधानेनेति** । यथा तटाकोदकं छिद्रान्निर्गत्य कुल्याद्वारा केदारान् प्रविश्य चतुष्कोणाद्याकारं भवति, तथा सावयवं तैजसमन्तःकरणं चक्षुरादिद्वारा निर्गत्य ध्रुवादिविषयपर्यन्तं दीर्घप्रभाकारेण परिणम्य विषयं व्याप्य तदाकारं भवति सेयं वृत्तिरित्युच्यते । तथाच शुक्तिग्रहणरूपवृत्त्यवच्छिन्नशुक्त्यधिष्ठानचैतन्यमन्तःकरणावच्छिन्नजीवचैतन्येनैकोपाध्यवच्छिन्नतयैकीभूतेन चाधिष्ठानचैतन्ये नैकीभूतेन साक्षिशब्दाभिधेयेन





शुक्तिसंभिन्नतया रूप्यं भासत इत्युपेयमिति भावः । आशयमाविष्करोति **शुक्तिसंभिन्नप्रतीताविति** । शुक्त्याकारान्तःकरणवृत्त्यभिव्यक्तेन वा तत्प्रतिबिम्बितेन वा शुक्त्यवच्छिन्नचैतन्येन शुक्तिरेव भासते । शुक्त्यवच्छिन्नचैतन्यावरकाविद्यापरिणतिरूपरूप्याकारवृत्त्यभिव्यक्तेन वा तत्प्रतिबिम्बितेन वा तेन रूप्यं भासत इति प्रक्रियायास्तदुपगततया तस्मिन्कल्पे शुक्तिसंभेदभाननियमे न नियामकमस्तीति भावः । ननु शुक्त्याकार-परिणतान्तःकरणवृत्त्युपहितचैतन्यमविद्यावृत्तिप्रतिबिम्बितं सद्रूप्यावभासकमिति सिद्धान्तोपगतिरेव शुक्तिसंभेद-प्रतीतिनियामिकेत्यभिदधानं प्रति क्षत्यन्तरमभिधत्ते **किं चेति** । **इन्द्रियेणेति** । इन्द्रियजन्येदमंशाभिव्यक्ता-धिष्ठानावच्छिन्नचैतन्येनेत्यर्थः । अन्यथा चैतन्यस्यैव तन्मते आपरोक्ष्येणेदमंशस्यापरोक्षत्वायोगात् । **साक्षिणेति** । अविद्यावृत्त्युपहिताधिष्ठानावच्छिन्नचैतन्यरूपसाक्षिणेत्यर्थः । **अनुभवविरोधेति** । विशिष्टगोचरज्ञानैकत्वाव-गाह्यनुभवस्य समर्थितत्वादिति भावः । **इन्द्रियजन्येति** । सादृश्यादिदोषसहितेन्द्रियजन्येदमंशाकारवृत्तेरधि-ष्ठानावच्छिन्नावरकाविद्यापरिणतिद्वारा अविद्यावृत्तिप्रतिबिम्बितरूपसाक्षिचैतन्यमेव फलम् । तस्य चैक्यान्न तदनुभवविरोध इत्यर्थः । **निरसिष्यमाणत्वादिति** । 'यत्कचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तदि'ति प्रतीक-व्याख्यावसरे रजतज्ञानं चक्षुरादिकरणकमनःपरिणतिरूपमेव न साक्षिरूपमिति प्रत्याख्यास्यमानत्वादित्यर्थः ।

**प्रदीपः— किञ्चेति** । ज्ञानद्वयाङ्गीकारादिन्द्रियेति शुक्तिरजतोभयस्फुरणात्मकचैतन्यमेकमित्यर्थः ।

**४२३ सु०— अनिर्वचनीयनिराकरणं च तत्र तत्र आचार्यः स्वयमेव करिष्यति इति अलं पल्लवेन ॥ ५ ॥**

**तस्मात्साधूक्तं 'विज्ञातस्यान्यथा सम्यग्विज्ञानं ह्येव तन्मतमि'ति ॥ ॥**

**॥ इति पञ्चाख्यातिवादः समाप्तः ॥**

**परि०— तत्र तत्रेति** । 'पृथगुपदेशात्' 'संध्ये सृष्टिराह ही'त्यादौ तत्रतत्रेत्यर्थः ॥ ॥

**वं०प०**— उपसंहरति **तस्मादिति** । 'विज्ञातस्यान्यथासम्यग्विज्ञानं ह्येव तन्मतमि'त्यत्रान्यथाज्ञानमेव भ्रान्तिस्तत्प्रसञ्जितान्यथाकारलोडनमेव ज्ञानं बाध इत्यवधारयता आचार्येण मतान्तराणां निरस्तत्वादित्यर्थः ।

**आनन्दः**— नन्वनिर्वचनीयबलादेतत्प्रक्रियापरिकल्पनमित्यत आह **अनिर्वचनीयेति** ।

**वा०चं०**— अबाधितज्ञानैक्यानुभवविरोधापरिहारादित्याशयेनोक्तम् **अलं पल्लवेनेति** । यद्वाऽख्या-त्यादिमतदूषणानामतिबहुत्वेऽपि ग्रन्थगौरवभयादत्राकथनमित्याशयेनाह **अलं पल्लवेनेति** । अख्यातिमतनिरास-फलमाह **तस्मादिति** ॥ ५ ॥ इति पञ्चाख्यातिवादः समाप्तः ॥





**वा०र०**— **अख्यात्यादीति**। आदिपदेन बाध्यत्वहेतुकानुमाने जगद्ब्रह्मणोरसद्विलक्षणत्वरूपसाध्यवतोरपि बाध्यत्वाभावादसाधारण्ये उक्ते तत्परिहाराय परेण प्रतीतत्त्वहेत्वाश्रयणेन शङ्का या कृता तस्याः असति व्यभिचारवारणेन निरासायाग्रहणम्। अपेक्ष्यत्वाच्चेति हेतुद्वयानन्तरं तथा योजनां परित्यज्येति शेषः। भाष्यस्य या दृष्टान्तदूषणपरतया योजना तथा सङ्गतत्वेनेत्यर्थः। उक्तभाष्यस्य ............................................परतया प्रागुक्तयोजनान्तरे तदसंभवात् योजनाविशेषोपादानम्। **एतेनोक्तमिति** मूलं ज्ञानबाध्यत्वमपीति भाष्ये उक्तमिति व्याख्यातं भवति। अनेनैवं योजनां सूचयति। ननूत्तरभाष्यमसङ्गतम्। न चानिर्वचनीयतासाधकख्याति-बाधान्यथानुपपत्तिनिरासोपयोग्यसत्प्रतीतिप्रतिपादनार्थं तदिति वाच्यम्। उत्तरभाष्येऽसतः प्रतीतिमात्रप्रतिपादनेऽपि सतो बाधस्याप्रतिपादनेनोक्तान्यथानुपपत्तेरत्र निरासाप्रतीत्या तन्निरासपरतया भाष्ययोजनानुपपत्तेः। उपलक्षणया सतो बाधप्रतिपादनाभिप्रायस्य चान्यत्र तन्निराकरणाभावे कल्पयितुं शक्यत्वेऽपि पृथगधिकरणे तन्निरासस्य स्पष्टप्रतिभासतयाऽत्र तथा कल्पनानुपपत्तेः। किञ्चाख्यात्यादिमतनिरासाय सतः प्रतीतिमात्रमेवोपपादनापेक्षमिति तदुपपादनमात्रमेवावश्यापेक्षितमिति तावन्मात्रस्यैव कर्तव्यत्वम्। तस्मान्न तन्निरासार्थत्वमुत्तरभाष्यस्य युक्त-मित्यतः ज्ञानबाध्यत्वमपीति पूर्वभाष्यस्य दृष्टान्तेत्यादीति।

**विट्ठ०**— अत्राख्यात्यन्यथाख्यातिविज्ञानख्यात्यसत्ख्यात्यनिर्वचनीयख्यातिमतदूषणानि बहूनि सन्ति तथापि ग्रन्थगौरवभयादुपरम्यत इत्याशयेनाह **अलं पल्लवेनेति**। फलितमाह **तस्मादिति**।

**चषकः**— **तत्रतत्रेति**। पृथगुपदेशात् 'सन्ध्ये सृष्टेराह ही'त्यादाविति पूरणीयम्।

**प्रदीपः**— एवं पराभिमतख्यातिमपाकृत्य स्वाभिमतां ख्यातिमुपसंहरति **तस्मादिति**।

**॥ इति पञ्चाख्यातिवादः समाप्तः ॥**

**॥ असतः प्रतीतिसद्भावः ॥**

**मायावादिना तन्निषेद्धुमशक्यत्वम्**—

**४२४ सु०— 'शुक्तिरजतादौ सदसद्विलक्षणत्वं ज्ञाननिवर्त्यत्वं च न विद्यते असत्त्वात्' इत्युक्तम्। तदयुक्तम्। असतः प्रतीत्यभावात्। अस्य च प्रतीतत्वादित्यत आह असद्विलक्षणेति।**

**अनु०— असद्विलक्षणज्ञस्यै ज्ञातव्यमसदेव हि ॥**
**तस्मादसत्प्रतीतिश्च कथं तेन निवार्यते ॥**





**हिशब्दो हेतौ । यस्मात् असद्विलक्षणत्वज्ञप्त्यै असज्ज्ञातव्यमेव तस्मादसत्प्रतीतिश्च कथं तेन** 'असद्विलक्षणं शुक्तिरजतादिकमि'ति जानता, **निवार्यते । कथंतरां च तया रजतादेरसत्त्वं निवार्यत इति चशब्दार्थः ।**

**वं०प०— इत्युक्तमिति** । 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन' इत्यनेनोक्तमित्यर्थः ।

**आनन्दः—** नन्वसद्विलक्षणज्ञप्त्या इत्यत्रासत्प्रतीतिः, तस्याः यथार्थता इति यदुक्तं तस्याः तदयुक्तं प्रवृत्तावनुपयोगादित्यतः तन्निवर्त्याशङ्कां दर्शयति **शुक्तीति** । उक्तज्ञानबाध्यत्वमित्यत्रेति शेषः । नन्वत्र कारिकायां यच्छब्दाभावात् तस्मादित्यनुपपन्नमिति प्रतीयते । समुच्चेयाभावेन तदर्थकः चशब्दोऽपि व्यर्थः । तेनेत्यस्यापि हेत्वर्थकत्वेन तस्मादित्यनेन पुनरुक्तिश्चेत्यतो यथावद्व्याचष्टे **हिशब्द इत्यादिना । तयेति** । प्रतीत्येत्यर्थः ।

**कं०रा०— तया** प्रतीत्या ।

**वा०चं०—** ननूत्तरभाष्यमसङ्गतमित्यतोऽनिर्वचनीयतासाधकख्यातिबाधान्यथाऽनुपपत्तिनिरासोपयोग्य-सत्प्रतीतिप्रतिपादनपरतया योजनायाः सतो बाधस्याप्रतिपादनेन पृथगधिकरणे स्पष्टप्रतिपादनेन चानुपपत्त्या असत्प्रतीतिमात्रोपपादनस्याख्यात्यादिनिरासायावश्यापेक्षत्वाच्च ज्ञानबाध्यत्वमपीति पूर्वभाष्यस्य दृष्टान्तदूषण-परतायोजनया सङ्गततयोत्तरभाष्यं योजयति **शुक्तीति** । प्रकृतार्थसिद्धेरभावेन प्रसिद्ध्यर्थकत्वासंभवादुत्तरार्धेन पूर्वार्धस्यैकवाक्यतायै हिशब्दार्थमाह **हीति** । पूर्वार्धोक्तहेतोः पक्षधर्मतासमर्पणपरतया तेनेति व्याख्याति **तेनेति** । चशब्दस्योक्तसमुच्चायकत्वासंभवात्पूर्वसङ्गतिसूचनाय फलसमुच्चयपरतया व्याख्याति **कथन्तरां चेति** ।

**वा०र०— एकवाक्यताया इति** । अनेन पूर्वार्धोक्तस्योत्तरार्धोक्तार्थे हेतुत्वद्योतको हिशब्द इति व्याख्यातं भवति । एवकारस्योपयोगानुसारेण भिन्नक्रमतया तं योजयति **ज्ञातव्यमेवेति** मूलम् । **उक्तेति** । अन्यस्य निवार्यतया प्रागप्रसक्तेरिति भावः । **पूर्वसङ्गतीति** । ख्यात्यनुपपत्तिनिराससङ्गतीत्यर्थः । **फलेति** । असत्त्वाभावसाधनानुप-पत्तिरूपफलेत्यर्थः ।

**विठ्ठ०—** विवादपदं सदसद्विलक्षणं ज्ञानबाध्यत्वाच्छुक्तिरजतादिवदिति प्रागाशङ्कितानुमानस्य दृष्टान्त-दूषणपरे 'ज्ञानबाध्यत्वमपि तु न सिद्धं प्रतिवादिन' इति भाष्ये न केवलं शुक्तिरजतादेरनिर्वचनीयत्वमसिद्धं असदेवेत्यनुभवविरोधात् । किन्तु ज्ञानबाध्यत्वमपि न सिद्धमित्युक्तम् । तत्र प्राप्तानुपपत्तिपरिहारत्वेनोत्तर-श्लोकं सङ्गमयितुं शङ्कामुत्थापयति **शुक्तीति** । चशब्दस्य समुच्चेयान्तरासंभवात्फलसमुच्चयपरतया व्याख्याति **कथन्तरामिति** ।





**४२५ सु०— इदमुक्तं भवति । स्यादिदं प्रतीतत्वहेतुना शुक्तिरजतादेरसत्त्वाभावानुमानम् यदि 'यदसत्तन्न प्रतीयत' इति व्याप्तिः स्यात् । न चैवम् । परस्यैवासत्प्रतीतिमत्त्वेन व्याप्ति-भङ्गात् । विप्रतिपन्नोऽसत्प्रतीतिमान्, असद्विलक्षणमिति प्रतीतिमत्त्वात्, यो यद्विलक्षणं प्रत्येति स तत्प्रतीतिमान्, यथा 'घटविलक्षणः पट' इति प्रतीतिमान् देवदत्तो, घटप्रतीतिमान्; इत्यनुमानात् ।**

**परि०**— ननु शुक्तिरूप्यमसन्न प्रतीतत्वादित्यनुमानस्य किं दूषणमनेनोक्तमित्यत आह **इदमुक्तमिति** ।

**आनन्दः**— नन्वेवमपि प्रतीतत्वेन हेतुना असत्त्वाभावसाधकानुमानस्य को दोष उक्त इत्यत आह **इदमुक्तं भवतीति** । अत्र यदीति व्यतिरेकप्रदर्शनं तस्यान्वयव्याप्तिग्राहकत्वादप्रयोजकत्वनिरासार्थत्वाच्चेति । ननु मया असत्प्रतीतिर्नाङ्गीक्रियत इत्यत आह **विप्रतिपन्न इति** ।

**वा०चं०**— नन्वसत्त्वाभावसाधकप्रतीतत्वानुमाने न किमप्यनेन दूषणं सिद्धं प्रत्युत विमतं नासत्प्रतीत-त्वादित्युक्तेऽसद्विलक्षणत्वप्रतीतिमत्त्वाद्विमतोऽसत्प्रतीतिमानिति साधनं व्यधिकरणं चेत्यतस्तद्दर्शयन् भाष्याभि-मतानुमानप्रकारं तद्बाधकपरिहारं च दर्शयति **इदमुक्तं भवतीति** । **व्याप्तिभङ्गादिति** । असत्येवेति शेषः ।

**वा०र०— न किमपीति** । व्यभिचारादिकं दूषणमित्यर्थः । मुखतस्तस्याप्रतीतेरिति भावः । यच्चानुमानं प्रतीयते तस्य पुरुषनिष्ठतया विमतिविषयपक्षीकारेण प्रवृत्तपरकीयानुमानेन समानाधिकरणत्वं नास्ति । तथा चेदमनुमानप्रकारनिरूपणं न केवलं व्याप्तिभङ्गादिदूषणसमर्पकं नेत्येव । अपि तु स्वयं व्यधिकरणतया आत्मलाभवच्च नेत्याशयेनाह **प्रत्युतेति** । **तद्दर्शयन्** अनुमाने साक्षाद्दूषणं दर्शयन् । **भाष्याभिमतेति** । अनेन विषयपक्षके साक्षाद्दूषणभूतव्याप्तिभङ्गोपपादनायैतदनुमानप्रवृत्तिर्न तु पुरुषपक्षीकारेणानुमानमेव । तदनुमानस्य साक्षाद्दूषणाय प्रवृत्तमिति ब्रूमः । येन मुखतो व्याप्तिभङ्गादेः समर्पणाभावो व्यधिकरणत्वं चोद्धाव्यं स्यादित्युक्तं भवति । **तद्बाधकेति** । विशेषव्याप्तौ दृष्टान्ताभावेन व्याप्त्ययोगरूपं बाधकं सामान्यव्याप्त्याश्रयणेन परिहरतीत्यर्थः ।

**४२६ सु०— ननु भवतु 'असद्विलक्षणं रजतमि'ति ज्ञानं, मा भूच्चासज्ज्ञानम्; न च बाधकं किञ्चिदिति चेन्न । वैलक्षण्यज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वात् । कारणाभावे च कार्योत्पत्तौ नियामकाभावेन कादाचित्कत्वानुपपत्तिप्रसङ्गात् । कारणत्वं चान्वयव्यतिरेकाभ्यां गम्यते । तदिदमुक्तम् असद्विलक्षणज्ञस्यै इति चतुर्थीप्रयोगेण । अन्यथाऽसद्विलक्षणज्ञेने-त्यवक्ष्यत् ।**





**बिन्दुः— चतुर्थीप्रयोगेणेति** तादर्थ्ये चतुर्थीति भावः। ज्ञाने इति सप्तमीनिर्देशे हि घटज्ञाने घटत्वं भासत इतिवत् तद्विशिष्टबोधे तस्यापि विषयतेत्येतावन्मात्रमेव सिध्येदिति भावः।

**परि०—** हेतोरप्रयोजकत्वमाशङ्क्य निराह **ननु भवत्वित्यादिना । कारणत्वं चेति ।** प्रतियोगिज्ञानस्येत्यनुकर्षः। चतुर्थीप्रयोगेणेत्युपलक्षणम्। ज्ञातव्यमेवेत्यन्वितैवकारेणेत्यपि ध्येयम्।

**वं०प०— कार्योत्पत्ताविति ।** अङ्गीक्रियमाणायामिति शेषः । **कादाचित्कत्वेति ।** कार्योत्पत्तेरिति शेषः । प्रतियोगिज्ञानस्य कथं वैलक्षण्यज्ञाने कारणत्वमित्यत आह **कारणत्वं चेति । चतुर्थीप्रयोगेणेति ।** तादर्थ्ये हीयं चतुर्थी । तथाच तत्प्रयोगेणासद्रूपप्रतियोगिज्ञानस्यासद्वैलक्षण्यज्ञाने कारणत्वमुक्तमित्यर्थः । अन्यथा कारणत्वाविवक्षायाम्।

**आनन्दः—** अप्रयोजकत्वं शङ्कते **ननु भवत्विति**।

**कं०रा०— चतुर्थीति ।** असद्विलक्षणज्ञप्त्यै इति तादर्थ्यार्थकचतुर्थीप्रयोगेण वैलक्षण्यज्ञानं प्रति प्रतियोगिज्ञानस्य कारणत्वमुक्तमिति भावः।

**श्रीनिधि०— चतुर्थीप्रयोगेणेति ।** तादर्थ्यं चतुर्थ्यर्थ इति भावः । ननु प्रकारान्तरेण रचनासंभवात् कथमेवमुक्तमित्यत आह **अन्यथेति ।** वैलक्षण्यज्ञाने प्रतियोगिज्ञानस्य कारणत्वात् कारणाभावे कार्योत्पत्तेरयोगादित्यभिप्रायेण तादर्थ्यार्थकचतुर्थीप्रयोगे एवमेव प्रयोग इति भावः।

**वा०चं०—** चतुर्थीप्रयोगसूचितकार्यकारणभावानुपपत्तिरूपं विपक्षे बाधकं दर्शयितुं तन्निवर्त्याशङ्कामुत्थापयति **नन्विति ।** श्लोकपूरणार्थतया प्राप्तां तदन्यथासिद्धिं परिहरति **अन्यथेति ।**

**वा०र०—** यद्वा अप्रयोजकत्वरूपबाधकस्य **नन्वित्यादिना** आशङ्कापूर्वकं परिहारं दर्शयतीत्यर्थः । **तन्निवर्त्यामिति ।** अनेन नन्वित्यादिनाप्रयोजकता शङ्का कृता । वैलक्षण्यज्ञानं प्रतीत्यादिना तत्परिहारः कृत इति योजना सूचिता । **श्लोकपूरणेति ।** ज्ञप्त्या इति चतुर्थीप्रयोगः श्लोकपूरणार्थः । असद्विलक्षणज्ञप्तिमितेत्यादिप्रकारान्तरेण प्रयोगे तत्पूरणानुपपत्तेरित्येवं प्राप्तां चतुर्थीप्रयोगस्यान्यथासिद्धिमित्यर्थः । **परिहरति** उक्तप्रकारातिरिक्तप्रकारेण श्लोकपूरणसंभवान्न चतुर्थीप्रयोगस्यान्यथासिद्धिरिति परिहरतीत्यर्थः । अत्र मूले इत्यवक्ष्यदित्यनन्तरमितिशब्दोऽध्याहार्यः । तेन चेदमुक्तं भवतीत्यस्य संबन्धः । अत एव किञ्चेत्युत्तरत्र योजनान्तरकथनम् । टीकाकृतापि दूषणान्तरपरतयापि तद्योजयतीति किञ्चेत्यादेरवतारकरणेन तत्संमतेरिति ज्ञेयम् ।





**४२७ सु०— किञ्चास्तां तावदन्यो व्यवहारः । असतोऽप्रतीतौ असत्प्रतीतिश्च कथं तेन मायावादिना निवार्यते । न हि यो यन्न जानाति स तत्संबन्धितया किञ्चिन्निषेधति ॥ अयमत्र प्रयोगः । विमतोऽसत्प्रतीतिमान्, तत्संबन्धिधर्मनिषेधकत्वात्, यो यत्संबन्धितया किञ्चिन्निषेधति स तत्प्रतीतिमान्, यथा 'घटस्य नास्ति शौक्ल्यमि'ति निषेधको घटप्रतीतिमानिति ।**

**परि०—** चतुर्थ्या कार्यकारणभावसूचनेऽपि कारणाभावे कार्योत्पत्तौ चेत्युक्तबाधकस्यैवकारलब्धत्वादसत्प्रतीतिश्चेत्याद्यंशं प्रकारान्तरेण योजयति **किञ्चेति** । **अन्य इति** । असद्वैलक्षण्यव्यवहारोऽसत्प्रतीतौ कारणमिति तावदास्तामित्यर्थः ।

**वं०प०—** सद्भ्यामधिकरणप्रतियोगिभ्यामभावो निरूप्यत इति वचनात्पूर्वं प्रतियोगितयाऽसज्ज्ञानमपेक्षितमित्युक्तम् । इदानीं त्वधिकरणतया तज्ज्ञानमपेक्षितमित्याह **किञ्चेति** । **तत्संबन्धीति** । असत्संबन्ध्यसदधिकरणक इति यावत् । यो धर्मः प्रतीतिविषयत्वं तन्निषेधकर्तृत्वादित्यर्थः ।

**आनन्दः—** प्रकारान्तरेणासत्प्रतीतिं साधयति **किञ्चेति** ।

**श्रीनिधि०— अन्यो व्यवहारः** असद्विलक्षणमिति व्यवहारः । ननु तस्मादसत्प्रतीतिमानिति वक्तव्ये व्यतिरेककथनं किमर्थमित्यत आह **असत्प्रतीतिश्चेति** ।

**वा०चं०—** अत्र पूर्वार्धोक्तहेतोरुत्तरार्धोपादान इव तदनुपादानेऽपि योग्यतयाऽसत्त्वाभावसाधनमनुपपन्नमिति फलेन संबन्धस्य सुज्ञानत्वादुत्तरार्धस्य न विशेषप्रयोजनमित्याशयेन प्रतीतिर्निरासत इति वदन्नङ्गीकरोति तामिति वक्ष्यमाणदूषणान्तरपरतया तद्योजयति **किं चेति** । अनेन चशब्दस्यावृत्त्याऽप्यर्थ इत्युक्तं भवति । अत्र हेतोः पक्षधर्मताया वाक्यार्थबलेनैव लाभात्तेनेति मायावादिस्वरूपमात्रपरतया योजयति **तेनेति** । नन्वेवमभिप्रायेऽसत्प्रतीतिश्च तेन निवार्यत इति ऋजूक्तिः स्यादित्यत आह **असदिति** ।

**वा०र०— पूर्वार्धेति** । असद्विलक्षणेति पूर्वार्धेत्यर्थः । हेतोरित्यस्य फलेन संबन्धेत्युत्तरेण संबन्धः । **उत्तरार्धेति** । तस्मादसदित्युत्तरार्धेत्यर्थः । फलसंबन्धप्रत्यायकाभावे कथं स इत्यत उक्तं **योग्यतयेति** । विशेषेत्यनेन योग्यतानुसन्धानेन फलसंबन्धकल्पनापेक्षया स्वयमेव तदुक्तौ लाघवेऽपीति सूचयति । सति विशेषप्रयोजनेन उक्तप्रयोजनमात्रकल्पनायोगादिति भावः । **वक्ष्यमाणेति** । पृथगधिकरणे वक्ष्यमाणेत्यर्थः । **चशब्दस्येति** । असत्प्रतीतिश्चेति चशब्दस्येत्यर्थः । प्रतीतिश्च कथं तेनेति चशब्दयोजनासत्त्वादावृत्त्येत्युक्तम् । **किञ्चेत्यपीति** । न केवलं प्रतीतिश्च प्रतीतिरपि कथमित्येवमपिशब्दार्थकत्वमिति योज्यम् । तेन शुक्तिरजतादिकं जानतेति पूर्वत्रैवात्र





हेतोः पक्षधर्मतासमर्पणपरतया तेनेत्यस्य योजनाभावादाह **अत्र हेतोरिति** । मूले **तत्प्रतीतिमानिति** । यद्यपि तत्तथापीत्येतद्गीतातात्पर्यटीकायां प्रतीत एव धर्मिणि धर्मनिषेधस्य दृष्टत्वादसत्ताप्रतीतौ न तत्प्रतीतत्वरूपधर्मो निषेद्धुं शक्यत इत्युक्तेर्निषेधं प्रति तत्प्रतीतेः प्रयोजकत्वादिति भावः । एवमिति दूषणान्तराभावाभिप्राय इत्यर्थः । **ऋजूक्तिरिति** । साधनस्य पक्षधर्मतालाभेन तस्मादसत्प्रतीतिमानिति साध्यसंबन्धस्य सुज्ञानत्वेन च तथान्वयस्यैवोक्तिः स्यादित्यर्थः । सामान्यव्याप्तिस्तु मूल एवोक्तेति न तदनुपपत्तिरिति भावः ।

**प्रदीपः**— **किञ्चेति** । यथोक्तम्— ''प्रतीतिर्नासत इति वदन्नङ्गीकरोति ताम् । निषेधो ह्यप्रतीतस्य कथञ्चिन्नोपपद्यते ॥'' इति ।

**४२८ सु०— असत्प्रतीतिश्च कथं तेन निवार्यत** इति व्यतिरेकप्रदर्शनं चान्वयावधारणार्थम् । असत्प्रतीतिनिषेधसामर्थ्यात् तस्यासत्प्रतीत्यभावावधारणाद् बाधितविषयतेति चेत् । तर्हि 'मूकोऽहमि'ति वचननिषेधसामर्थ्यात्तस्य वचनाभावावधारणाद्वचनप्रतीतेरपि बाधितत्वं स्यात् । स्वक्रियाविरोधात्प्रतिषेध एवायुक्त इति चेत् समं प्रकृतेऽपि ।

**बिन्दुः**— **व्यतिरेककथनमन्वयावधारणार्थमिति** । कथमित्याक्षेपस्य न कथञ्चिदित्यर्थपर्यवसानान्न निवार्यत इत्यनेनापि .........स्य कथनात् द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायात् परस्यासत्प्रतीतिरस्त्येवेति पदे साध्यसंबन्धरूपान्वयावधारणं कृतं भवतीत्यर्थः ।

**परि०**— अयं प्रयोगोऽनेन कथं लब्ध इत्यत आह **इति व्यतिरेकेत्यादि** । **अन्वयेति** । विमतोऽसत्प्रतीतिमानित्याद्युक्तान्वयेत्यर्थः ।

**वं०प०**— **अन्यथेति** । उक्तानुमाने व्यभिचारपरिहारेणान्वयव्याप्त्यवधारणार्थमित्यर्थः । **सममिति** । अत्रापि स्वक्रियाविरोधादसत्प्रतीतिनिषेध एवायुक्त इत्यर्थः ।

**आनन्दः**— बाधितविषये किं मानमिति शङ्कते **असत्प्रतीतीति** । **समं प्रकृतेऽपीति** । असत्प्रतीतिर्नास्तीति वदतस्तत्प्रतीतेरावश्यकत्वात्तत्प्रतीत्यभावावधारणं त्वक्रियाविरुद्धमिति तथा प्रतिषेध एवायुक्त इत्यर्थः ।

**कं०रा०**— **तस्य** परस्य **मूको**ऽहमिति प्रयोक्तुः ।

**श्रीनिधि०**— **अन्वयावधारणार्थमिति** । असत्प्रतीतिमानित्युक्ते तद्वत्वमात्रं प्रतीतं स्यात् । उक्तव्यतिरेककथने तु कथं निवार्यते न कथञ्चिदिति व्यतिरेकस्य सर्वथा निषेधे असत्प्रतीतिमत्त्वमवधृतं भवतीति भावः । **व्यतिरेककथनं** व्यतिरेकमुखेन कथनम् ।





**वा०चं०**— नन्वसत्प्रतीतौ तन्निषेधानुपपत्त्या विमतो नासत्प्रतीतिमांस्तन्निषेधकत्वादिति निषेधेनैव असत्प्रतीत्यभावावधारणात्तद्बाधोऽनुमानस्येत्याशङ्कते **असदिति** । तर्हि मूकोऽहमिति निषेधस्य वचनवत्वेऽनुपपत्त्या नायं वक्ता तत्प्रतिषेधकत्वादिति वचनप्रतिषेधेनैव वचनाभावावधारणात् तद्बाधो वचनप्रतीतेरपीति स्वक्रियाविरोधवार्तैवोच्छिद्येतेत्याह **तर्हीति** । ननु वचनक्रियाविरोधेन वचनप्रतिपाद्यवचननिषेधस्यैवानुपपत्तौ कस्य सामर्थ्याद्वचनाभावावधारणमिति न बाध इति चेत् । तर्ह्यसन्न प्रतीयत इति प्रतिषेधप्रतिपादनक्रियाया असत्प्रतीतिप्रापकतया तत्क्रियाविरोधेन प्रतिपादयिषिताऽसत्प्रतीतिनिषेधस्यैवानुपपत्त्या कस्य सामर्थ्यादसत्प्रतीत्यभावावधारणमिति न बाध इति प्रकृतेऽपि तुल्यमित्याशयेनाह **स्वक्रियेति** ।

**वा०र०**— **तन्निषेधानुपपत्त्येति**। अनेन सामर्थ्यं व्याख्यातम्। **कस्य सामर्थ्यादिति**। न कस्यापीति न बाध इति योजनीयम्।

**विठ्ठ०**— ननु यः विमतः शुक्तिरूप्याद्यसत्प्रतीतिं निवारयिता सोऽसज्ज्ञानवानित्यन्वयो वक्तव्यः कथं निवार्यत इत्याक्षेपमुखेन व्यतिरेकप्रदर्शनं कुत इत्यत आह **सदिति** । (असदिति पाठेन भाव्यम्) । अन्वयव्याप्त्यवधारणार्थमित्यर्थः । नन्वसत्प्रतीतिनिषेधकत्वादिति हेतोरसिद्धौ नानुमानप्रवृत्तिस्तत्सिद्धौ तत्सामर्थ्यादिवासत्प्रतीत्यभावनिश्चयाद्बाधौ अनुमानस्येति शङ्कते **असत्प्रतीतिनिषेधेति** । विमतो वक्ता । अहं मूक इति वचनप्रतिषेधकत्वादित्यत्राप्युक्तहेतुसामर्थ्येन वचनाभावावधारणाद्बाधितविषयत्वापत्त्या स्वक्रियाविरोध एवोच्छिद्येतेति भावेनोत्तरमाह **तर्हीति** । **मूकोऽहमिति** । वचनप्रतिषेधरूपहेतोरेवानुपपन्नत्वेन तत्सामर्थ्येन वचनप्रतीतेर्बाध इत्याशङ्क्य समः समाधिरित्याह **स्वक्रियेति**।

## ४२९ सु०— किञ्च 'नरशिरसि विषाणमस्ती'ति वाक्यं बोधकं न वा।

**परि०**— असत्प्रतीतिश्चेत्यादेः शब्दाज्जायमाननृशिरोविषाणादिरूपासत्प्रतीतिश्च कथं मायावादिना निवार्यत इत्यर्थान्तरं च वक्तुमाह **किञ्च नरेति**।

**श्रीनिधि०**— चशब्दसूचितमर्थान्तरं चाह **किञ्च नरशिरसीति**।

**वा०चं०**— एवमसत्प्रतीतिश्चेत्यनुव्याख्यानमसत्प्रतीतिनिषेधेन हेतुनाऽसत्प्रतीतिसाधनपरमिति व्याख्यायाधुना नरशिरसि विषाणमस्तीत्यादिवाक्याज्जायमानाऽसत्प्रतीतिश्च कथं तेन निवार्यते न कथमपि तद्वाक्यो बोधकत्वाभावस्य तद्बोधेऽसद्विषयकत्वाभावस्य चानुपपन्नत्वादिति तदर्थमभिप्रेत्योपपादयति **किञ्चेति**।

**वा०र०**— एवमुत्तरत्रापि पूर्वयोजनानिष्कर्षप्रदर्शनेन प्रकरणभेदं दर्शयन् किञ्च नरशिरसीत्यादिग्रन्थस्योद्भाष्यत्वशङ्कावारणाय तद्ग्रन्थसूचितभाष्ययोजनां दर्शयन्नवतारयति **एवमिति**।





**विठ्ठ०**— असत्प्रतीतिश्चेत्यादेर्नरशिरसि विषाणमस्तीत्यादिवाक्याज्जायमानासत्प्रतीतिश्च कथं निवार्यत इत्यर्थान्तरं वक्तुमाह **किञ्चेति**।

**४३० सु०— आद्ये स बोधः सद्विषयोऽसद्विषयो वा । नाद्यः बाधाभावप्रसङ्गात् । द्वितीये कथमसतः प्रतीत्यभावः । अनिर्वचनीयार्थप्रतीतिरसाविति चेन्न । निराकृतत्वात् ।। अपि च शशविषाणादिकमपि चेन्नासत् तदा कुतो वैलक्षण्यं शुक्तिरजतादेराशास्यते । निरुपाख्यादिति चेत् । तर्हि तद्वैलक्षण्यं नाम सोपाख्यत्वमेव । न च तत्र कश्चिद्विप्रतिपद्यते येनायं परस्य प्रयासः सार्थकः स्यात् ।**

**कश्चिदाह । नास्माद्वाक्यान्नरशिरसि विषाणबोधो जायते किन्नाम विकल्पमात्रम्, यथोक्तम् 'शब्दज्ञानानुपाती वस्तुशून्यो विकल्प' इति । स प्रष्टव्यः कोऽयं विकल्पः । ज्ञान-मन्यद्वा ।। द्वितीयो द्वितीये अन्तर्भवति ।। आद्ये वस्तुशून्य इति कोऽर्थः । किं किमप्यनुल्लिखन्, असदेवोल्लिखन्वा । आद्येऽनुभवविरोधः । न हि विषयानुपरक्तो घटादिवदसावनुभूयते । यो हि शशविषाणं नास्तीति न प्रतीतवान् तस्य शशविषाणशब्दाज्जायमानं ज्ञानं न गोविषाणज्ञानाद्विशिष्यते ।। द्वितीये सिद्धं नस्समीहितम् ।**

**बिन्दुः**— **निरुपाख्यादिति**। अज्ञेयादित्यर्थः। शशविषाणादेस्तु शब्दादिनापि ज्ञानसंभवान्न तन्निरुपाख्यमित्यर्थः। **शब्दज्ञानानुपातीति**। शब्दविषयकज्ञानजन्य इत्यर्थः। **द्वितीयेऽन्तर्भवतीति**। बोधकं न वेत्याद्यविकल्पद्वयान्तर्गतद्वितीये इत्यर्थः।

**परि०**— मूलस्य फलितार्थमाह **कथमसत इति**। **द्वितीयो द्वितीय इति**। अन्यद्वेति विकल्पो बोधकं न वेति प्राग्विकल्पितद्वितीयविकल्पेऽन्तर्भवतीत्यर्थः। तद्दोषेणैव दूषितो भविष्यतीति भावः। **असाविति**। नरशिरसि विषाणमितिवाक्याज्जायमानो विकल्प इत्यर्थः। **द्वितीय इति**। असदेवोल्लिखन्निितिपक्षेऽसतो ज्ञानमस्तीत्यस्माकमिष्टं सिद्धमित्यर्थः।

**यादु०**— **द्वितीयेऽन्तर्भवतीति**। बोधकं नेतीति द्वितीयकल्पेऽन्तर्भवतीत्यर्थः।

**वं०प०**— **अनिर्वचनीयार्थप्रतीतिरसाविति**। नरशिरसि विषाणमस्तीति वाक्यजन्याप्रतीतिरित्यर्थः। तथा च नरविषाणादिकमनिर्वचनीयमेव नासदिति नासतः प्रतीतिप्रसङ्ग इति भावः। **निराकृतत्वादिति**।





अनिर्वचनीयवस्तुन एवाप्रामाणिकत्वादिति भावः । **नासदिति** । अनिर्वचनीयत्वेनाङ्गीकारादिति भावः । निरुपाख्यात्प्रतीत्यविषयात् । **तत्रेति** । शुक्तिरजतादेः प्रतीतिविषयत्व इत्यर्थः । शब्दज्ञानानुपाती शब्दजन्यज्ञानसदृशः । **द्वितीये इति** । नरशिरसि विषाणमस्तीति वाक्याद्विकल्पमात्रं जायते । स च विकल्पो न ज्ञानमित्युच्यते । तथा च नरशिरसि विषाणमस्तीति वाक्यं बोधकं नेति प्राग्विकल्पितद्वितीयपक्षेऽन्तर्भवतीत्यर्थः । **असाविति** । नरशिरसि विषाणमस्तीति वाक्याज्जायमानो विकल्प इत्यर्थः । घटायःशलाकादिवद्विषयासंबन्धो बाधो नानुभूयत इत्येतदुपपादयति **यो हीति** । अयोग्यताज्ञानाभावदशायामित्यर्थः । **द्वितीये** सदेवोल्लिखन्निति पक्षे ।

**आनन्दः— निराकृतत्वादिति** । साधकाभावादिनेति शेषः । **द्वितीयो द्वितीयेऽन्तर्भवतीति** । विकल्पो अन्यदिति द्वितीयो न बाधकमिति पूर्वोक्तद्वितीयेऽन्तर्भवतीत्यर्थः । विषयोपरागमेव दर्शयति **यो हीति** ।

**कं०रा०— निरुपाख्यादिति** । निर्गतोपाख्या ख्यातिर्यस्मात् तन्निरुपाख्यम् । निष्प्रतीतिकमिति यावत् । तस्मादित्यर्थः । **तदिति** । तस्मान्निरुपाख्यात् वैलक्षण्यं नाम शुक्तिरजतादेः सप्रतीतिकत्वमेव । न चैवंरूपवैलक्षण्ये कश्चिद्विप्रतिपद्यते । येनासद्वैलक्षण्यसाधनाय परस्यायं प्रयासः सार्थकः स्यादित्यर्थः । **द्वितीय इति** । नरशिरसि विषाणमस्तीति वाक्याज्जायमानं ज्ञानादन्यदिति द्वितीयः इदं वाक्यं बोधकं न वेति प्राग्विकल्पिताबोधकत्वपक्षेऽन्तर्भवति । तथा च तत्र वक्ष्यमाणमनुभवविरोधादि दूषणमत्रापीति भावः ।

**श्रीनिधि०—** अनिर्वचनीयार्थप्रतीतिरिति पक्षे दूषणान्तरमाह **अपि च शषविषाणादिकमिति** । **निरूपाख्यात्** अज्ञायमानात् । **सोपाख्यत्वं** ज्ञायमानत्वम् । **अनुपातीति** । शब्दज्ञानानन्तरभावीत्यर्थः । **द्वितीय इति** । न बोधकमिति द्वितीय इत्यर्थः ।

**वा०चं०—** प्रमाणाभावेनानिर्वचनीयस्य निरस्तत्वान्नापि तद्विषयकत्वं युक्तमित्याह **निराकृतत्वादिति** । अस्तु वा विमतं सदसद्विलक्षणं बाध्यत्वादित्यादि तत्र प्रमाणम् । शशविषाणादेरप्यनिर्वचनीयत्वे तदपि नोपपद्यत इत्याशयेनाह **अपि चेति** । **तर्हीति** । सद्वैलक्षण्यमिति सतो ब्रह्मणो वैलक्षण्यमितिवच्छशविषाणादेरप्यनिर्वचनीयत्वे निरुपाख्यादेतस्माद्विलक्षणमिति निर्देष्टुमशक्यत्वान्निरुपाख्यवैलक्षण्यशब्दस्य सोपाख्यत्वमित्येवार्थो वक्तव्य इति सिद्धार्थता स्यादिति भावः । विकल्पशब्दार्थं संमत्यैवाह **यथोक्तमिति** । विकल्पमात्रमित्यस्य बोधरूपो विकल्पो जायते न तु विशिष्टो नरशिरसि विषाणबोध इति विकल्प एव जायते न तु बोध इत्यपि तात्पर्यसंभवेन साधारणत्वाद्विकल्पयति **स इति** । **अन्यद्वेति** । इच्छादिवच्चेतोवृत्त्यन्तरं वेत्यर्थः । **द्वितीय इति** । चेतोवृत्त्यन्तरं जायत इत्युक्त्याऽर्थबोधो न जायत इत्युक्तं स्यात् । तथा च न बोधकमिति द्वितीयपक्षान्तर्भावात्तद्दूषणेनैव दुष्टतेत्यर्थः । वस्तुशब्दस्य विषयमात्रपरत्वमसद्विषयपरत्वं च संभवतीत्यभिप्रेत्य विकल्पयति **किमपीति** । विषयानुपरक्तो नानुभूयत इत्युक्त्या विषयोपरक्त एवानुभूयत इति लब्धमनुभवमभिनयेन दर्शयति **यो हीति** । यद्वा न तथाऽनुभव इत्येव न किन्तु विपरीतश्चेत्याह **यो हीति** । अनुभवविरोधादित्युपलक्षणम् । प्रवृत्त्यनुपपत्ते-





श्चेत्यपि द्रष्टव्यम् । विमतान्याकाङ्क्षासन्निधिमात्रवन्तीति सिद्धसाधनतानिरासाय पदानां वक्तृविशेषानुमापकतया-ऽप्यन्वयप्रतीतिजनकत्वेन सिद्धसाधनतानिरासाय स्वार्थेति । उरगस्तुरगः खदिर इत्यादिष्वनैकान्तिकताव्युदासाय आकाङ्क्षेति । गामानय प्रासादं पश्येत्यत्र साकाङ्क्षयोः परस्परान्वयप्रतीत्यजनकयोर्गां पश्येत्यनयोस्तद्व्युदासाय सन्निधिमदिति । अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र राज्ञ इति पुरुष इति च पदयोः सन्निहितत्वेऽपि पुरुषपदनैराकांक्ष्येणान्वयप्रतीत्यजनकयोस्तद्व्युदासायाकाङ्क्षेति ।

**वा०र०**— व्याख्यानपूर्वकं निराकृतत्वादित्येतदवतारयति **प्रमाणेति** । **अस्तु वेति** । अनेन ननु कथं प्रमाणाभावः । विमतं सदसद्विलक्षणमित्यादि प्रमाणसत्त्वादित्यतोऽस्तु नाम तत्प्रमाणं शशविषाणादेरिति योजना सूचिता । निरुपाख्याद्वैलक्षण्यं नाम सोपाख्यत्वमेवेति कथं लभ्यत इत्यतो निरुपाख्यमुक्तं तस्माद्विलक्षणत्वमिति निर्देष्टुमशक्यत्वादेव तदर्थे पर्यवसानम् । तथा निर्देशस्तु सद्वैलक्षण्यमित्युक्ते सतो ब्रह्मणो वैलक्षण्यमिति निर्देशवदावश्यकः । न च निरुपाख्यं शशविषाणादिकमेव निर्देष्टुं शक्यमिति वाच्यम् । तस्यानिर्वचनीयत्वेन त्वयाऽङ्गीकारेण तथा तस्य निर्देशानुपपत्तेरित्यभिप्रायमाह **सद्वैलक्षण्यमितीति** । **विकल्पशब्दार्थमिति** । विकल्पपदार्थः । क इत्याशङ्कानिरासायेति शेषः । कोऽयमित्यादिविकल्पोत्थानाय प्रसञ्जकं विवेकेनाह **विकल्पमात्रमित्यस्येति** । बोध इतीत्यस्य तात्पर्यं संभवेनेत्युत्तरेण संबन्धः । **द्वितीय इति** मूलम् । चेतोवृत्त्य-न्तरमिति द्वितीयो नरशिरसि विषाणमस्तीति वाक्यं न बोधकमिति द्वितीयेऽन्तर्भवतीत्यर्थः । द्वितीये-ऽन्तर्भावप्रकाराप्रतीतेस्तं दर्शयन्नस्तु नाम तदन्तर्भावः । किं तावतेत्यतस्तद्दूषणेनैव दुष्टत्वं वक्ष्यमाणरीत्या प्राप्तमिति पृथक् तन्निरासापत्त्या नेत्याह **चेतोवृत्त्यन्तरमिति** । किमपीत्येतद्विकल्पोत्थानमुपपादयति **वस्तुशब्द-स्येति** । **सिद्धं न इति** मूलम् । असदुल्लेखित्वेऽसतः प्रतीतिविषयत्वप्राप्तेरिति भावः । **नापि द्वितीय इति** । नरशिरसि विषाणमस्तीति वाक्यं न बोधकमिति द्वितीयो नापीत्यर्थः । **अनुभवविरोधादिति** मूलं नरशिरसि विषाणं जानामीत्यनुभवविरोधादित्यर्थः । गामानयेत्यादिपदेषु स्वार्थान्वयप्रतीतिजनकेषु सिद्धसाधनतापरिहाराय विमतानीत्युक्तमित्याशयेन विमतानीत्यनूद्य कथं तेन गामानयेत्यादेर्व्यावृत्तिरित्यतस्तद्विवक्षितमर्थं च दर्शयति **विमतानीति** । **मात्रवन्तीति** । मात्रपदेन योग्यतामावर्तयता नरशिरसीत्यादेरयोग्यस्यापि पक्षत्वोपपादनाद्योग्यताया अपि पक्षतावच्छेदककोटौ विवक्षा चेत्तर्हि आश्रयासिद्धिरिति शङ्का निरस्ता भवति । योग्यतावद्गामानयेत्यादेर्व्यावृत्तिश्च स्पष्टीकृता भवतीति ज्ञेयम् । **वक्तृविशेषेति** । देवदत्तोऽयमधीत इति वक्तृविशेषानुमापकतया देवदत्ते-ऽध्ययनान्वयप्रतीतिजनकत्वेनेत्यर्थः । साकाङ्क्षयोरिति हेतूपपादनं साध्याभावोपपादनं **परस्परेति** । असन्निधानेन तदजनकत्वमिति ज्ञेयम् । पदकदम्बकत्वादित्येतावत एवोरगस्तुरग इत्यत्र व्यभिचारवारणायाकाङ्क्षेत्युक्तमिति प्राग्वर्णितम् । इदानीं तु गामानय प्रासादं पश्येत्यादौ प्राप्तव्यभिचारपरिहारायोपात्तसन्निधिमत्त्विति विशेषण-सहितपदकदम्बकत्वस्यापि प्राप्तव्यभिचारपरिहारायाकाङ्क्षाग्रहणमिति प्रकारान्तरेणाकाङ्क्षापदकृत्यमाह **अयमेतीति** । यद्यप्युरगस्तुरग इत्युदाहृतेऽपि सन्निधिमत्पदत्वरूपविशिष्टस्य व्यभिचारः शक्यते वक्तुम् । तथापि सर्वथाऽनाकाङ्क्ष इव साकाङ्क्षेऽपि तात्पर्यगर्भाकाङ्क्षारहिते स्थलेऽप्यनेन व्यभिचारपरिहारो भवतीत्याशयेनाकाङ्क्षापदस्य तात्पर्यगर्भत्व-

मभिप्रेत्य तत्र तेन तन्निरासाभिधानमिति ज्ञेयम् । अत एवोक्तं **पुरुषपदनैराकांक्ष्येणेति** । अत्राधिकं नयनप्रसादिनीशशधरशेषीशब्दमणिसारमधुरानाथीयादिषूपयुक्तमालोच्य लेखनीयमस्ति । ....................... । न चानेनैव हेतुना गामानयेत्यादिदृष्टान्तेनान्वयप्रमितिजनकानीत्यपि साधयितुं शक्यम्; वह्निना सिञ्चतीत्यत्र व्यभिचारेण कालात्ययापदिष्टत्वेन च तदसंभवादिति मूलस्थप्रतिपत्तीतिपदप्रयोगाभिप्रायः । न विलक्षणत्वाधिकरणे प्रमितिघटितानुमाननिराकरणं तु शब्दस्यानुमानान्तर्भावसाधकतया परोपन्यासप्रसङ्गानुसारेणेति विषयभेद इति ज्ञेयम् ।

**स०व्र०— निराकृतत्वादिति** । भ्रान्तौ प्रतीयमानस्यानिर्वचनीयत्वसाधकदोषप्रयुक्तभानत्वादिप्रमाण-निरासेन भ्रमस्यानिर्वचनीयार्थप्रतीतत्वस्य निराकृतत्वादित्यर्थः । बोधो न जायत इत्यत्र किं विशिष्टबोधो न जायत इत्यभिप्रेत्य विकल्पपदेन ज्ञानसामान्यमुच्यते उत बोधपदेन ज्ञानसामान्यं निषिद्धय विकल्पपदेनान्यत्किञ्चिदुच्यत इत्यभिप्रेत्य विकल्पयति **कोऽयं विकल्पो नामेति** ।

**विठ्ठ०—** नरशिरसि विषाणमित्यादिवाक्याज्जायमानप्रतीतेरनिर्वचनीयार्थपरत्वेन शशविषाणादिक-मनिर्वचनीयं स्यात् । तथाच निरूपकाभावान्नासद्वैलक्षण्यं शुक्तिरजतादेः युज्यत इत्याह **अपि चेति** । अनुपाती अनुसारी तद्विद्यमान इति यावत् । **अन्यद्वेति** । इच्छावच्चेतोवृत्त्यन्तरं वेत्यर्थः । **द्वितीय इति** । चेतोवृत्त्यन्तरमिति द्वितीयः पक्षो नरशिरसीति वाक्यं न बोधकमिति द्वितीयपक्षेऽन्तर्भवति । विकल्पस्य बोधत्वानङ्गीकारात् । तथाच तस्य दूषयिष्यमाणत्वात्तद्दूषणेनैव दुष्टे इति भावः । **असाविति** । नरशिरसीतिवाक्याज्जायमानो विकल्प इत्यर्थः । प्रत्युत विषयोपरक्त एवानुभूयत इत्याह **यो हीति** ।

**चषकः— अन्यद्वेति** । इच्छादिवच्चेतोवृत्त्यन्तरं वेत्यर्थः । **द्वितीयो द्वितीयेऽन्तर्भवतीति** । ज्ञानरूपचेतोवृत्तिभिन्नतद्वृत्तिरूपतोपगतौ बोधकं नेति प्राक्तनद्वितीयकल्पान्तर्भावापत्त्या तद्दूषणेनैवेत्यस्यापि दुष्टता सेधिष्यतीत्यर्थः । वस्तुशब्दस्य सदसदात्मकविषयमात्रसाधारणप्रमेयत्वावच्छिन्ननिरूपितशक्तिकतया स्वनिरूपितविषयितासंसर्गावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकाभावरूपाद्यकल्पस्य तत्पदस्य सद्रूपत्वाव-च्छिन्नलक्षकतामुपेत्य तत्संसर्गावच्छिन्नतद्धर्मावच्छिन्नप्रतियोगिताकाभावरूपकल्पान्तरस्य चोत्थितिरवसेया । **विषयानुपरक्त इति** । स्वनिरूपितविषयितासंसर्गेण विषयाविशेषित इत्यर्थः । **असौ** विकल्पः । **अनुभूयते** अनुव्यवस्यते । तथा च तादृशसंसर्गावच्छिन्नकिञ्चिद्वृत्तिप्रकारतानिरूपितविकल्पवृत्तिविशेष्यताशाल्यनुव्यवसाय-स्यैवोदयेन दर्शितप्रत्यासत्त्या किञ्चिद्विशेषितत्वं तस्यासैत्सीदित्यर्थः ।

**प्रदीपः— शब्दज्ञानानुपातीति** । वस्तुशून्यत्वेऽपि शब्दप्रमाणोपारोहिशब्दज्ञानमाहात्म्यनिषेधनं ज्ञानं दृश्यते शशविषाणमिति । तथा व्यवहारोऽपि चैतन्यं पुरुषस्य स्वरूपमिति षष्ठ्यर्थसंबन्धाभावेऽपीत्यर्थः ।





**४३१ सु०— नापि द्वितीयः । अनुभवविरोधात्, 'विमतानि पदानि स्वार्थान्वयप्रतिपत्तिजनकानि आकाङ्क्षासन्निधिमत्पदत्वात् गामानयेत्यादिपदवदि'त्यनुमानविरोधाच्च । न च योग्यतावत्त्वमुपाधिः । प्रतिवादिप्रयुक्तपदेषु साध्याव्यापकत्वात् । तेषां च स्वार्थसंसर्गाबोधकत्वे बधिरविवादवद्वादिवचनस्य निर्विषयत्वापत्तेः । अत एव योग्यताराहित्येन प्रतिपक्षोऽपि परास्तः ॥ ननु कथमसतो भाति भास्यत इति कर्तृत्वं कर्मत्वं वा समस्तसामर्थ्यविरहितत्वादिति । अथ समस्तसामर्थ्यरहितत्वमपि कथम् । भाववदभावस्यापि सद्धर्मत्वदर्शनात् । बौद्धमेवाभावाश्रयत्वं न वस्तुकृतम् अतो न विरोध इति चेत् । समं कर्तृत्वकर्मत्वयोरपि । अन्यथा 'जायते घट' इत्यादि न स्यात् ।**

**परि०—** न बोधकमितिपक्षं निराह **नापि द्वितीय इति** । **विमतानीति** । नरशिरसि विषाणमस्तीत्यादिपदानीत्यर्थः । **प्रतिवादीति** । तस्यानाप्तत्वेन तदुक्तवाक्ये बोधकत्वसत्त्वेऽपि योग्यताविरहादिति भावः । **अत एवेति** । साध्याव्यापकत्वेन प्रतिवादिवाक्ये व्यभिचारापातादेवेत्यर्थः । अभावरूपधर्मो नाश्रयसत्त्वमपेक्षत इत्यत आह **भाववदित्यादि** ।

**यादु०— अनुभवविरोधादिति** । नरशिरसि विषाणं जानामीत्यनुभवविरोधादित्यर्थः । **अत एवेति** । प्रतिवादिप्रयुक्तपदेषु व्यभिचारादेवेत्यर्थः । **अन्यथेति** । इदं च तार्किकरीत्योक्तम् । स्वमते घटस्य कारणात्मना पूर्वं सत्त्वाद्घटो जायत इत्यत्र मृद्घटीभवतीत्यर्थकत्वस्य वक्ष्यमाणत्वाच्च नेदमापादनं संभवतीति ध्येयम् ।

**वं०प०— नापि द्वितीय इति** । नरशिरसि विषाणमस्तीति वाक्यं बोधकं नेति द्वितीयः पक्ष इत्यर्थः । **विमतानि पदानीति** । सदिदं रजतमित्यादीनि पदानीत्यर्थः । निर्विषयत्वं निरर्थकत्वम् । **कथमिति** । न संभवतीत्यर्थः । कुतो न संभवतीत्यतस्तदुपपादयति **भाववदिति** । भावधर्मवदित्यर्थः । **अभावस्यापि** अभावरूपधर्मस्यापि । सद्धर्मत्वं सतो धर्मत्वम् । सत्पदार्थधर्मिकत्वम् । तथा च यथा भावधर्माणां सद्धर्मिकत्वमेवमभावरूपस्य सकलसामर्थ्यविरहितत्वस्यापि सद्धर्मिकत्वादसति तन्न संभवतीत्यर्थः । शङ्कते **बौद्धमेवेति** । सकलसामर्थ्यविरहितत्वरूपमभावाश्रयत्वमसतो बौद्धमेव । बुद्ध्यैवास्तीति विषयीक्रियते । न वस्तुकृतं वास्तवमित्यर्थः । कुतो न वस्तुकृतमित्यतस्तदुपपादनायापि भाववदिति पूर्ववाक्यमेतच्छेषत्वेन योज्यम् । भावधर्मस्यापि सद्धर्मिकत्वेनासति वास्तवस्य तस्यायोगादित्यर्थः । **सममिति** । भातीत्यादौ कर्तृत्वादिकमप्यसति बौद्धमेव न वस्तुकृतमित्यर्थः । **न स्यादिति** । तदानीं घटस्याभावेन जायत इति जनिकर्तृत्वव्यवहारः सर्वजनसिद्धो न स्यादित्यर्थः । तत्र च तद्बौद्धमेवेति समाधानं वाच्यम् । तदसत्यपि समानमिति । कालान्तरे सत्त्वं तु नेदानीं प्रतीतेरुपकारि । तदानीमसत्त्वस्योभयत्रापि साम्यादित्याशयः ।





**आनन्दः— अनुभविरोधादिति** । बोधकत्वस्यानुभवसिद्धत्वेन तदभावोऽनुभवविरुद्ध इत्यर्थः । अनुभवविरोधमुक्त्वानुमानविरोधमप्याह **विमताननिति** । अत्र चायोग्यवाक्यस्य पक्षतुल्यत्वान्न तत्र व्यभिचार इति बोद्धव्यम् । **अत एवेति** । वादिवचनस्य निर्विषयत्वापत्तेरित्यर्थः । ननु समस्तसामर्थ्यरहितत्वस्याभावरूपत्वादसत्यं धर्म उपपद्यत इत्यत आह **भाववदिति** । **बौद्धमिति** । अभावाश्रयत्वेन बुद्धिविषयत्वमात्रमित्यर्थः । **अन्यथेति** । बौद्धकर्तृत्वाद्यनङ्गीकारे इत्यर्थः । घटादेस्तदा नष्टत्वादिति भावः ।

**कं०रा०— अत एवेति** । योग्यताराहित्येऽपि प्रतिवादिप्रयुक्तपदेषु संसर्गबोधकत्वस्य सत्वेन व्यभिचारादेवेत्यर्थः । **अन्यथेति** । अविद्यमानस्य सर्वात्मना कर्तृत्वकर्मत्वायोगे घटो जायते घटः क्रियत इत्यादि न स्यात् । जनेः पूर्वमविद्यमानस्य घटस्य सकलसामर्थ्यरहितत्वेन कर्तृत्वाद्ययोगादित्यर्थः । **अन्यथेति** । इदं च तार्किकरीत्यैव । स्वमते घटस्य कारणात्मना पूर्वं सत्त्वात् । घटो जायत इत्यस्य मृद् घटो भवतीत्यर्थकत्वस्य वक्ष्यमाणत्वात् ।

**श्रीनिधि०— नापि द्वितीय इति** । अन्यदबोधकमिति द्वितीयः । शब्देन जायमानं ज्ञानान्यदित्युक्ते शब्दस्याबोधकत्वमुक्तं भवतीति द्वितीयेऽन्तर्भवतीत्युक्तम् । क्रियायां स्वतन्त्रत्वं कर्तृत्वं परसमवेतक्रियाफलशालित्वं कर्मत्वम् । **सद्धर्मत्वदर्शनात्** विद्यमानधर्मत्वदर्शनात् । **बौद्धं** बुद्धिकृतम् । **अन्यथेति** । अभावाश्रयत्वं बौद्धं कर्तृत्वादिकं तु सर्वत्र वस्तुकृतमेवेत्यङ्गीकारे । **जायते घट इति** । जननं नामाद्यसमयसत्तासंबन्धः । **नेति** । घटस्य तत्कर्तृत्वं बोध्यते । कर्ता च कारकविशेषः । तथा च घटस्य स्वजननापेक्षया पूर्वभावित्वापत्त्या ईदृशप्रयोगो न स्यादिति भावः ।

**वा०चं०— अत एवेति** । वादिप्रयुक्तपदेष्वनैकान्त्यादेवेत्यर्थः । **बौद्धमेवेति** । बुद्धिहेतुकृतं न तु घटत्वादिवद्विषयहेतुकृतं नापि पाकजरूपादिवद्बुद्धिहेतुभिन्नागन्तुकस्वहेतुकृतमित्यर्थः । कर्तृत्वकर्मत्वयोर्बुद्धिहेतु-कृतत्वे उपोद्बलकमाह **अन्यथेति** ।

**वा०र०—** ननु प्रतिवादिप्रयुक्तेषु पदेषु साध्यस्यैवाभावान्न तत्र साध्याव्यापकत्वमित्यत आह **तेषां चेति** मूलम् । **ननु कथमिति** मूलम् । कर्तृत्वं कर्मत्वं च कारकविशेषत्वे । कारकत्वं च क्रियानिवर्तकत्वम् । तच्च क्रियानुकूलसामर्थ्यवत्वम् । न च तत्तुच्छस्य संभवतीति न कर्तृत्वादिकमिति भावः । बुध्या कृतं बौद्धमिति प्रतीतिनिरासाय ......................अनुसारेण व्याख्याति **बुद्धिहेतुकृतमित्यादि** । बुद्धेर्हेतुना कृतम् । वस्तुनो-ऽभावेऽपि तद्विषयिणी बुद्धिर्जन्यत इति यावत् । रजताभावेऽपि करणसामर्थ्याद्रजतोल्लेखिज्ञानवदित्यर्थः । **न वस्त्विति** मूलम् । तद्यदि वस्तुकृतं न तर्हि ज्ञानेन निबर्हणीयमिति पञ्चपादिकाविधाधर्या वस्तुना परमार्थेन कृतं वस्तु यथा भवति तथेत्युक्तेः परमार्थेन विषयेण न कृतमित्यर्थः । प्राभाकरमतनिरासावसरेऽथ नातीतादिरर्थः स्वसामर्थ्येनानुमित्यादिकं व्यावर्तयति । येन तत्सत्तापेक्षिता स्यात् । किन्तु सहेतुसामर्थ्यादिवार्थव्यावृत्तं ज्ञान-





मुत्पद्यत इत्येतन्मूलटीकयोरप्युक्तमेतत् । अदृश्यत्वाधिकरणस्थधर्मित्वं च भूतलादेः प्रातीतिकं न वस्तुकृतमित्येतदुपपादनं तु तन्नय एव करिष्यते **अन्यथेतीति**।

**स०व्र०— ननु कथमिति** । कर्तृत्वं कर्मत्वं च कारकविशेषः । कारकत्वं च क्रियानिवर्तकत्वम् । तदेतत्तुच्छस्य न संभवतीत्यर्थः । **भाववदभावस्यापीति** । सकलसामर्थ्यरहितत्वलक्षणाभावरूपधर्मस्यापि भावरूपधर्मवत्सद्धर्मत्वदर्शनादित्यर्थः । **बौद्धमेवेति** । बुद्धिकृतमेवासत्त्वादिधर्माश्रयत्वमसतो न वास्तवमित्यर्थः । तर्हि बुद्धिकृतमेव क्रियानुकूलव्यापारवत्त्वमसतो न वास्तवमिति तुल्यमित्याह **सममिति** । असतो बुद्धिकृतक्रियानुकूलव्यापारानङ्गीकारे अनिष्टमाह **अन्यथेति** ।

**विट्ठ०—** द्वितीये सदेवोल्लिखन्निति पक्षे बोधकं नेत्युक्तपक्षं निराह **नापीति** । **प्रतिवादीति** । प्रतिवादिनोऽनाप्तत्वेन तदुक्तवाक्ये संसर्गयोग्यताभावादिति भावः । **अत एवेति** । प्रतिवादिप्रयुक्तवाक्येऽनैकान्तिकत्वादेवेत्यर्थः । समाधत्ते **अथेति** । असति धर्मासंभवे सामर्थ्यरहितत्वस्यापि तत्राङ्गीकर्तुमशक्यत्वादिति भावः । सामर्थ्यराहित्यस्याभावरूपत्वादयं धर्मो नाश्रयसत्त्वमुपेक्षते इत्यत आह **भाववदिति** । भावरूपधर्मवदित्यर्थः । असत्यभावाश्रयत्वं बुद्ध्या प्रयुक्तमेव न तु वस्तुघटरूपादिवदाश्रयाश्रयिभावोपेतमिति शङ्कते **बौद्धमिति** । कर्तृत्वादिधर्मस्य भावरूपत्वान्न बौद्धत्वं युज्यत इत्यत आह **अन्यथेति** । कर्तृत्वकर्मत्वयोरपि बौद्धत्वानङ्गीकारे जायमानजनिष्यमाणघटादेर्घटो जायते जनिष्यते च घटः क्रियतेत्यादि न स्यादित्यर्थः ।

**चषकः—** प्राग्विकल्पितं न बोधकमिति द्वितीयकल्पं निराह **नापीति** । **अनुभवविरोधादिति** । सामानाधिकरण्यप्रत्यासत्त्या नरशिरोनिरूपितवृत्तित्वप्रकारताकत्वविशिष्टविषाणवृत्तिविशेष्यताकत्वोपरागेण नरशिरसि विषाणमस्तीति वाक्यजनितान्वयधीविषयकानुव्यवसायविरोधादित्यर्थः । विमतानि पदानि विषयताप्रत्यासत्त्या प्रकृतसाध्यतदभावकोटिकविमतिविशेषितानि नरशिरसि विषाणमस्तीति वाक्यघटकानि । **स्वार्थेति** । एकतरार्थानुयोगिकापरार्थप्रतियोगिकान्वयगोचरप्रतिपत्तिजनकानीत्यर्थः । **प्रतिवादीति** । तत्राश्वासाभावेन तदीयवाक्ये बोधकतासत्त्वेऽपि योग्यताराहित्येन साध्याव्यापकत्वादित्यर्थः । **अत एव** साध्यव्यापकताराहित्यनियन्त्रितोपाधित्ववैधुर्यदिव । **इतीति** । भातीत्यादिकर्तृकर्मलकारजनितोपस्थितिविषयतावच्छेदकीभूतं कर्तृत्वं कर्मत्वं चेत्यर्थः । **समस्तेति** । निःस्वरूपस्य क्रियास्वातन्त्र्यरूपकर्तृत्वस्य प्रकृतधातूपस्थाप्यज्ञाननिरूपितविषयत्वरूपकर्मत्वस्य च धर्मिसत्तासापेक्षस्यायोगादिति भावः । **भाववदिति** । षष्ठ्यन्ताद्वतिरुपमेये षष्ठीदर्शनात् । **बौद्धमेवेति** । ययोराश्रयाश्रयिभावः । बुद्ध्यसमवधानदशायामपि वर्तते स वस्तुकृतः । ययोस्तु बुद्धिदशायामेव स बौद्ध एवेत्युच्यते । इत्थं चाद्यस्थले धर्मिसत्ताया आवश्यकत्वेऽपि नान्त्ये तदावश्यकतेति भावः । **अन्यथेति** । इदं च न्यायनयभङ्गीमनुरुन्धानेनोक्तम् । सिद्धान्ते कारणात्मना कार्यस्य सत्तोपगतेर्घटो जायत इत्यस्य मृद्घटीभवतीत्यर्थकताया अभिधास्यमानतया च नायं प्रसङ्गः सङ्गच्छत इत्यवसेयम् ।





**प्रदीपः**— **ननु कथमिति**। कर्तृत्वं कर्मत्वं च कारकविशेषः। कारकत्वं च क्रियानिवर्तकत्वं तदेतच्छून्यस्य न संभवतीत्यर्थः। अथेत्यस्त्यभावोऽस्ति च ध्वंस इत्यादिदर्शनाद्बौद्धमेवेति बुद्धिकृतमेव सत्त्वादिधर्माश्रयत्वमसतो वास्तवं तर्हि बुद्धिकृतमेव क्रियानुकूलव्यापारत्वमसतो न वास्तवमिति तुल्यमित्याह **सममिति**। असतोऽपि बुद्धिकृतक्रियानुकूलव्यापाराभावेऽनिष्टमाह **अन्यथेति**।

**४३२ सु०— सत्कार्यवादं त्वारम्भणाधिकरणे निराकरिष्यामः।**

**अतोऽसतः प्रतीत्युपपत्तेः प्रतीतत्वान्नासच्छुक्तिरजतादिकमित्ययुक्तम्।**

**परि०**— ननु घटस्यापि कारणे मृदि सत्त्वाद्घटो जायत इत्युक्तिर्युक्तेत्यत आह **सत्कार्येति**। 'तदनन्यत्वमारम्भणशब्दादिभ्य' इति द्वितीयाद्यपादीयाधिकरणे।

**यादु०**— ननु घटः प्राक् सन्नेव कुलालव्यापारादभिव्यज्यतेऽतो नेदमापादनं युक्तमित्यत आह **सत्कार्यवादं त्विति**।

**आनन्दः**— ननु पूर्वं सत एव घटादेरुत्पत्त्यङ्गीकारेण सत्कार्यवादाङ्गीकारादुपपन्नं कर्तृत्वादिकमित्यत आह **सत्कार्येति**।

**कं०रा०**— ननु सदेव कार्यमुत्पद्यत इति सत्कार्यवादाश्रयणेन जनेः पूर्वं घटस्य सत्त्वात्कर्तृत्वादिसंभवेन घटो जायत इत्यादिकं युज्यत इत्यत आह **सत्कार्यवादमिति**।

**श्रीनिधि०**— नन्वसतः सत्तासंबन्धाङ्गीकारे ईदृशः प्रयोगो नोपपद्येत। विद्यमानस्यैव घटादेः व्यक्तिरित्यङ्गीकारे तु नानुपपत्तिरित्यत आह **सत्कार्यवादं त्विति**। सत एव कार्यस्य व्यक्तिरिति वादः। **निराकरिष्याम इति**। व्यक्तिः सती उत्पद्यते उतासती। आद्ये सामग्रीवैयर्थ्यं द्वितीये असतो घटस्यैव उत्पत्तिर्भवतु। किं सत्कार्यवादेनेतीत्येवमिति भावः।

**वा०चं०**— ननु पूर्वं सत एव कार्यस्य कारकव्यापारादिना अभिव्यक्त्यङ्गीकाराद्घटो जायत इत्यादौ नानुपपत्तिरित्यत आह **सदिति**। सदित्यतः पूर्वमत्यन्तेति शेषः। नन्वत्यन्तसत्कार्यवाद्यभिमतासदकरणादिहेतु-निरासावसरे नन्वसतः कथं कर्मत्वम्? सतः कार्यत्वमपि कथमिति समानम्। अनेन घटो जायत इत्यपि प्रत्युक्तम्। तर्हि घटं करोतीत्यादेः कोऽर्थः। मृत्तिकां घटीकरोतीति मृत्तिका घटीभवतीति ग्रन्थेन घटो जायत इत्यादीना-मर्थान्तराभ्युपगमेनोपपत्तिर्वक्ष्यते। तस्मात्प्रध्वस्तभेदादीति वाक्यव्याख्यावसरे घटो जायते घटं जनयती-त्यनुत्पन्नस्यापि कर्तृत्वं कर्मत्वं च तस्मात्कार्यस्य कारणाभेदात्प्रागुत्पत्तेर्विनाशोत्तरं च सत्त्वादेव हि युज्यते





नाप्यत्यन्तासतः कारकत्वमित्यादिग्रन्थेन घटादीनां पूर्वसत्त्वेन घटो जायत इत्यादेरुपपत्तिर्वक्ष्यते । अत्र तु कर्तृत्वादेर्बौद्धत्वानभ्युपगमे घटो जायत इत्यादि न स्यादिति । तथा च कथमेषां परस्परं न विरोध इति चेत् । न तावद्वक्ष्यमाणग्रन्थयोः परस्परविरोधः । अत्यन्तसत्कार्यानभ्युपगमेऽपि कारणात्मना सत्ताऽभ्युपगमात्कारकव्यापारात्प्रागकार्यात्मकस्य कारणस्य कारकव्यापारेण कार्यरूपतापत्तेः सदसत्कार्यमते जनित्वा मृत्तिका घटीभवतीत्यादिर्घटो जायत इत्यादेरर्थ इति न कर्तृत्वाद्यनुपपत्तिरित्यसदकरणादिहेतुनिराकरणग्रन्थाशयः । तस्मात्प्रध्वस्तभेदादीति व्याख्याग्रन्थस्य त्वात्यन्तिकसत्त्वस्योक्तरीत्याऽनेकानुपपत्तिग्रस्तत्वात्कार्यस्य कारणात्मनाऽपि सत्त्वानंभ्युपगम उक्तजनिपदार्थासंभवाद्घटो जायत इति कर्तृत्वाद्यनुपपत्तिरेव । न चात्रोक्तप्रकारेण बौद्धकर्तृत्वाद्यभ्युपगमेनोपपत्तौ कारणात्मना कार्यसत्त्वासाधकतया कर्तृत्वाद्युक्तिरयुक्तेति वाच्यम् । प्रतीतिसिद्धप्रध्वस्तभेदसत्त्वस्य प्रकारान्तरेणानुपपत्त्या तदर्थतया कारणात्मना सत्त्वस्य तत एव तादृशजनिपदार्थस्य चावश्याङ्गीकार्यत्वे सिद्धे कर्तृत्वादेरपि निर्वाह इत्याशयेनाभ्युच्चययुक्तितया कर्तृत्वादेरुपन्यासात् । अत एव भाष्ये स्वशब्देन भेदग्रहणम् । आदिपदेन च कर्तृत्वादेरुपादानं न तु कर्तृत्वादेरन्यथानिर्वाहाभावाभिप्रायेण । अथवा भातीत्यादिभानादिक्रियाकर्तृत्वस्य बौद्धस्यासति व्यवहारवद्बौद्धस्य जनिकर्तृत्वस्य नात्यन्तासति व्यवहार इत्याशयेनास्यापि साधकतयोपन्यास इत्याशयः । एवञ्च वक्ष्यमाणग्रन्थयोरेकवाक्यतायां नानुपपत्तिः । अत एव सत्त्वमात्रे साध्ये सिद्धसाधनमिति पूर्वग्रन्थेनाप्यत्यन्तासतः कारकत्वमित्यत्यन्तपदमुत्तरग्रन्थेनापि वक्ष्यमाणग्रन्थाभ्यामस्य विरोधः । अत्र परं प्रति प्रतिबन्दीमुखेन च प्रवृत्त्या पराङ्गीकृतात्यन्तासत्कार्यवादस्यानुपपन्नतया वक्ष्यमाणत्वात्सदसत्कार्यवादस्य च परेणानभ्युपगमादभावाश्रयत्वादिवत्कर्तृत्वादेर्बौद्धत्वानङ्गीकारे तव घटो जायत इत्यादेरनुपपत्तिरेवेत्याशयात्तस्मान्न कुत्रापि विरोध इति ।

**वा०र०**— बौद्धकर्तृत्वादेरनङ्गीकारे घटो जायत इत्यादि न स्यात् । असतो घटादेर्वस्तुकृतकर्तृत्वादिसंभवादिति मूलार्थः । कारणाकारेण सत्त्वस्य स्वमते सद्भावादाह **अत्यन्तेति शेष इति** । अत्र मूले बौद्धकर्तृत्वाद्याश्रयणेनासतो भाति भास्यत इत्युक्तकर्तृत्वकर्मत्वे अभावाश्रयत्वप्रतिबन्द्या संभवत इत्यभिधाय अन्यथा जायते घट इति न स्यादिति बाधकमुक्तं तदेतन्मूलग्रन्थस्योत्तरग्रन्थद्वयस्य चेत्येतेषां परस्परविरोधमाशङ्कते **नन्वत्यन्तेति** । अत्रापि स्वाभिमतसदसत्कार्यवादव्यावृत्यै अत्यन्तपदम् । निरासावसर इति रचनानुपपत्तेरित्यधिकरणीयमूलेऽसदकरणादित्यादिभिश्च किं कार्यस्य प्राक् कारणव्यापारात्सत्त्वमात्रं साध्यमुतात्यन्तसत्त्वम् । आद्ये सिद्धसाधनम् । सदसत्त्वाभ्युपगमात् । द्वितीये त्वसदकरणादितिवत्सदकरणादित्यपि समानम् । न हि सन्नात्मा केनचित्क्रियते इत्येवं घटो जायत इत्यादीनामित्यादिपदेन घटं करोतीत्यस्येव निरासावसर इत्यर्थः । नन्वत इत्याद्युत्तरमूलार्थस्तट्टीकायां ज्ञेयः । घटं जनयति घट उत्पद्यत इत्यादेः सङ्ग्रहः । ग्रन्थान्तरेत्यनेन प्रतीतार्थभूतं यद्घटस्य कर्तृत्वं कर्मत्वं वा तत्परित्यज्येति सूचयति । वाक्यव्याख्यावसरे इति वैशेषिकाधिकरणीयवाक्येति योज्यम् । न स्यादितीत्यनन्तरमुच्यत इति पूरणीयम् । **कथमेषामिति** । रचनाधिकरणीयम् । सदकरणादिनिरासस्थले घटो जायत इत्यादिप्रतीतिप्राप्तं कर्तृत्वं कर्मत्वं वा सतो घटस्य न संभवतीत्यङ्गीकृत्य प्रतीतार्थं परित्यज्य च मृत्तिका





घटीभवतीत्यादिरर्थ उक्तः । तेनासतो घटस्य कर्तृत्वादिकं नास्तीत्यत्यन्तसत्कार्यवादः प्राप्नोति । वैशेषिकाधिकरणीयप्रध्वस्तभेदादीत्येतद्व्याख्यानग्रन्थेऽत्यन्तासतः कारकत्वासंभवात्कार्यकारणयोरभेदात्कार्यस्योत्पत्तेः प्राक् विनाशोत्तरं च कारणात्मना सत्त्वादेव कर्तृत्वादिकं संभवतीत्युक्तेरविद्यमानेऽपि घटे कर्तृत्वादिकं घटो जायत इत्यादि प्रतीतिसिद्धं स्वीकृतं प्राप्नोति । तथा चोत्तरग्रन्थयोः परस्परविरोधस्तावत्प्राप्तः । असत्प्रतीत्युपपादनपरे तद्ग्रन्थे त्वसतो वस्तुकृतकर्तृत्वाद्यभावेऽपि तत्र कर्तृत्वादिकं प्रतीतिहेतुकृतमस्ति । असन्निष्ठतया कर्तृत्वादेः प्रतीतिहेतुवशेन तथा प्रतीतिमात्रमिति यावत् । शुक्ताविदं रजतमिति ज्ञानसिद्धं रजतस्य विषयत्वं न रजतसन्निकर्षसाध्यमपि तूक्तज्ञानहेतुसामर्थ्यादत्यन्तासद्रजतावगाहिज्ञानोत्पत्तेस्तद्धेतुकृतं विषयत्वं प्रतीतिमात्रमिति यथा तथा चैतत्पक्षेऽसतो बौद्धकर्तृत्वाद्यनङ्गीकारे घटो जायत इत्यादि न स्यादित्युक्त्या जायते घट इत्यादौ घटादेः प्रातीतिकमेव कर्तृत्वा दिकमिति त्वपक्षप्राप्त्याऽत्यन्तसत्कार्याश्रयणेन प्राप्तमृत्तिका घटीभवतीत्यादिव्याख्यानपरग्रन्थेन कारणात्मना सत्त्वाभ्युपगमसाधकतया कर्तृत्वाद्यङ्गीकारपरग्रन्थेन चास्य विरोधोऽपि प्राप्त एवेत्यर्थः । वक्ष्यमाणाद्यपक्षेऽत्यन्तसत्कार्यवादाभ्युपगमो मृत्तिका घटीभवतीत्यादिव्याख्यानेन प्राप्नोतीति किलोक्तम् । न च तद्व्याख्यानेन तथा लभ्यते । तद्व्याख्यानस्य घटस्यासतोऽपि कारणात्मना सताऽङ्गीकारेण कर्तृत्वाद्युपपत्तिरित्येतत्परतया सदसत्कार्यवादाश्रयणेन प्रवृत्तिसिद्धेरित्याह **अत्यन्तसत्कार्यानभ्युपगमेऽपीति** । अपिपदेनात्यन्तसत्कार्यवादस्यापातत एव प्रतीति रिति सूचयति । कारणात्मना कार्यस्य सत्त्वाभ्युपगमादित्येतदुत्तरोक्तजनिपदार्थोपपादनम् । वक्ष्यति च तत एव तादृशजनिपदार्थस्य चेति । उक्तजनिपदार्थसिद्धौ घटो जायत इत्यस्य मृत्तिका घटीभवतीत्यर्थलाभः संभवतीत्याह **मृत्तिकेति** । **न कर्तृत्वेति** । मृत्तिकारूपेण सत्त्वात्सतः कर्तृत्वादेः संभवान्न तदनुपपत्तिरित्यर्थः । भेदादीति वाक्यव्याख्याग्रन्थस्येति पाठः । वाक्यव्याख्यावसर इति प्रागुक्तत्वात् । इति व्याख्येति पाठेऽपि इत्यनयोः व्याख्याग्रन्थ इति योज्यम् । **उक्तरीत्येति** । आरम्भणाधिकरणस्थ-"असद्यत्कार्यरूपेण कारणात्मतयाऽस्ति हि । अनवस्थाऽन्यथा हि स्यात्सर्वत्रोत्पत्तिनाशयोरि"त्यनुव्याख्यानव्याख्यानमूलोक्तरीत्योत्पत्तिनाशयोरनवस्थादिरूपानेकाऽनुपपत्तिग्रस्तत्वादित्यर्थः । **उक्तजनीति** । सदसत्कार्यवादिसंमतकारकव्यापारात्प्रागकार्यात्मकस्येत्युक्तेरर्थः । अनेन सत्त्वादेव युज्यत इत्येतन्मूलग्रन्थस्य सत्त्वाभावेन युज्यत इति व्याख्यानं कृतं भवति । उक्तसत्त्वाभावेऽपि कर्तृत्वाद्युपपत्तेरवधारणानुपपत्तिरित्याशङ्कते **न चात्रेति** । उपपत्तौ कर्तृत्वादेरिति शेषः । **उक्तिरयुक्ता** । कार्यस्य कारणात्मना सत्त्वाभावे कर्तृत्वाद्यनुपपत्तिरिति च तद्व्यावर्तत्वादेरुक्तसत्त्वासाधकतयोक्तिर्युक्ता भवेत् । न चैवम् । अभावाश्रयत्वप्रतिबन्द्येहग्रन्थे कर्तृत्वादेर्बोध्यत्वस्योक्तत्वेन तन्न्यायेन कारणात्मना कार्यसत्त्वाभावेऽपि कर्तृत्वादेरुपपन्नत्वादित्यर्थः । **प्रतीतिसिद्धेति** । प्रध्वस्तो यो घटादिस्तत्र यो भेदस्तस्य यत्सत्त्वं तत्तथोक्तम् । प्रतीतिसिद्धत्ववत्प्रध्वस्तं भेदसत्त्वं तस्येति योज्यम् । प्रध्वस्तभेदसत्त्वं च नष्टानामपि वस्तूनां भेदो नैव विनश्यतीत्येतद्वाक्योदाहरणेन तद्गतिप्रदर्शनपरप्रपञ्चो भेदपञ्चक इत्येतद्विचारपरप्रकृत्यधिकरणीयटीकाकारोपपादनानुसारेणावधेयम् । **प्रकारान्तरेणेति** । धर्मिनाशे धर्मानाशायोगेन धर्मनाशमङ्गीकृत्येत्यर्थः । तदर्थतया प्रध्वस्तघटादिति धर्मिकभेदसत्त्वार्थतयेत्यर्थः । कारणात्मना कार्यसत्त्वस्याङ्गीकार्यत्व इत्युत्तरेणान्वयः । **कर्तृत्वादेरपीति** । तत एवेत्युपस्कर्तव्यम् । यत्प्रध्वस्तभेदसत्त्वोपपत्त्यर्थमवश्याङ्गीकार्यतया प्राप्तं कार्यस्य कारणात्मकतया सत्त्वादिकं तत एव





कर्तृत्वादेरप्युपपत्तिरित्याशयेनेत्यर्थः । अनेन सत्त्वादेवेत्येवकारो मूले नान्ययोगव्यवच्छेदार्थः । अपि तु तथात्वं कार्यान्तरार्थतया कृतमिति सूचनायेति सूचितं भवति । तथाच तत्र कर्तृत्वादिनिर्वाहार्थमेव कारणात्मना सत्त्वमभ्युपेयमित्यस्याविवक्षितत्वादत्रोक्तबौद्धकर्तृत्वादिकमङ्गीकृत्यैव कर्तृत्वाद्युपपत्तावप्यधिकयुक्तितया कार्यान्त-रार्थाङ्गीकृतकारणात्मना सत्त्वस्योपन्यासकरणाद्ग्रन्थयोर्विरोधो नेत्याशयः । यथा प्रध्वस्तभेदसत्त्वं कारणात्मना कार्यसत्त्वाभावेऽनुपपन्नं तथा कर्तृत्वादिकमपीति साम्यं न भाष्यकाराभिमतमित्यत्र ज्ञापकमाह **अत एवेति** । स्वशब्देन भेदवाचकपदेन भेदग्रहणमित्यर्थः । आदिपदेनेत्यनेनैव तत्रादिपदार्थः । कर्तृत्वादिरूपो विवक्षित इति सूचितं भवति । **अभिप्रायेणेति** । कर्तृत्वादेरुपन्यास इति प्रथमान्ततया संबन्धः । अत्र पक्षे अभ्युच्चययुक्तित्वेन कर्तृत्वादेः कारणात्मना कार्यसत्त्वसिध्यर्थतयोपन्यासो न तु मुख्ययुक्तितयेति स्वीकर्तव्यं भवतीत्यपरितोषा-द्बौद्धकर्तृत्वाद्यसंभवोपपादनेन पक्षान्तरमाह **अथवेति** । युक्तं जनिकर्तृत्वाद्यन्यथानुपपत्त्या कार्यस्य कारणात्मतया सत्त्वकल्पनम् । उक्तसत्त्वाभावे कारकव्यापारात्प्रागित्युक्तजनिपदार्थस्यैवासंभवात् । न चात्रोक्तरीत्या बौद्धकर्तृत्वा-द्यङ्गीकारेणोपपत्तिरिति वाच्यम् । अत्र ग्रन्थेऽसति भानादिक्रियाकर्तृत्वस्यैव बौद्धस्य भातीत्यादिव्यवहारसिद्धत्वा-दङ्गीकारेणात्यन्तासति च जनिकर्तृत्वादिसाधकव्यवहाराभावेन जन्यादिकर्तृतादेर्बौद्धस्यात्रोक्तरीत्याऽङ्गीकारायोगात् । तथा च कर्तृत्वादेरत्यन्तासत्यनुपपन्नत्वेन तदन्यथानुपपत्त्या कार्यस्य कारणात्मना सत्त्वमपि सिध्यत्येवेति । तत्साधकतया कर्तृत्वाद्युक्तिर्युक्तैवेति भावः । **एवं चेति** । उभयत्रापि कार्यस्य कारणात्मना सत्त्वाङ्गीकारेणैव प्रवृत्तिपर्यवसानादिति भावः । सदसत्कार्यवादस्य स्थलद्वयेऽपि मूलकारसंमतत्वे तदीयज्ञापकमाह **अत एवेति** । पूर्वग्रन्थ इत्यतःपरं मात्रपदमिति पूरणीयम् । कार्यकरत्वमितीत्यतःपरं चशब्दः पूरणीयः । मात्रपदेनात्यन्तिकसत्त्व-व्यावर्तनेन सदसत्कार्यवादसूचनात् । अत्यन्तेतिपदेन कारणात्मना सत्त्वे कार्यत्वोपपत्तिरिति सूचनेन च तद्वादस्यैव स्वीकारप्राप्तेरिति ज्ञेयम् । परं प्रति प्रवृत्त्येति संबन्धः । **प्रतिबन्दी** । अभावाश्रयत्वप्रतिबन्दी । इदमुक्तं भवति । अवश्यं त्वया अभावाश्रयत्वादिवत्कर्तृत्वादेर्बौद्धत्वमङ्गीकार्यम् । अन्यथा त्वदभिमतात्यन्तासत्कार्यवादस्यानुपपन्नतया रचनाधिकरणे वक्ष्यमाणत्वान्मदभिमतसदसत्कार्यवादस्य च त्वयाऽनङ्गीकारात्तव पटो जायत इत्यादेरनुपपत्ति-प्रसङ्गादित्यर्थोऽत्र प्रतिपाद्यत इति । तथा च स्वरीतिप्रवृत्तोत्तरग्रन्थयोः परं प्रति प्रतिबन्दीमुखेन प्रवृत्तैतद्ग्रन्थस्य च न विरोध इति लब्धम् । **तस्मादिति** । वक्ष्यमाणग्रन्थद्वयेऽपि सदसत्कार्यवादाश्रयणान्न परस्परविरोधः । अत्रत्यग्रन्थस्य परं प्रति यद्यभावाश्रयत्वं कथञ्चिदुपपाद्यताम् । तर्ह्यसति भानादिकर्तृत्वमप्यस्तु । अन्यथा बौद्धकर्तृत्वाङ्गीकारेण घटो जायत इत्यादिकं त्वन्मते यदस्ति तन्न स्यादित्यर्थपरत्वेन घटो जायत इत्यादौ बौद्धमेव कर्तृत्वम् । ननु कार्यस्य कारणात्मना सत्त्वेन तदित्यङ्गीकाराभावान्नात्रत्यग्रन्थस्योत्तरग्रन्थविरोधोऽपीत्यर्थः ।

**स०व्र०**— ननूत्पत्तेः प्रागपि घटस्याव्यक्ततयाऽनुपलम्भेऽपि मृदात्मना सत्त्वमस्त्येवेत्यत आह **सत्कार्येति** ।

**विठ्ठ०**— ननु प्राक् सन्नेव घटः कारणकलापेनाभिव्यज्यते तेनेदमुदाहरणमित्यत आह **सत्कार्यवादं त्विति** ।





**चषकः**— ननु प्राक्कारकव्यापाराद्घटोऽत्यन्तं सन्नेव तादृशव्यापारादभिव्यज्यत इत्युक्तापत्त्यनवकाश इत्यत आह **सत्कार्यवादं त्विति** । अत्यन्तेत्यादिः । अविरोधलक्षणीयाद्यचरणनये तदनन्यत्वमित्यत्रात्यन्त-सत्कार्यवादस्यापाकरिष्यमाणत्वादित्यर्थः ।

**प्रदीपः**— ननु उत्पत्तेः प्राक्कार्यरूपतया घटस्यासत्त्वेऽपि मृदात्मना सत्त्वमस्त्येवेत्यत आह **सत्कार्येति** ।

भ्रान्तौ तस्य प्रतीयमानत्वम्—

**४३३ सु०— स्यादेतत् । न ब्रूमो वयमसतः प्रतीतिरेव नास्तीति किन्नामापरोक्षतया सत्त्वेन च । यथोक्तम् । न हि 'नरि शृङ्गं भाति गवीवे'ति । शुक्तिरजतादिकं चापरोक्षतया सत्त्वेनावभासते । अतः कथमसदित्यत आह अन्यथात्वमिति ।**

## अनु०— अन्यथात्वमसत्

**रजतादिकमनिर्वचनीयं प्रतिपद्यमानेनापीदंरजतयोस्तादात्म्यावभासोऽङ्गीक्रियत एव । यथोक्तम् 'अध्यासो नामातस्मिंस्तदिति प्रत्यय' इति । न चैवमन्यथाख्यातिप्रसङ्गः, 'अधिष्ठानस्य संसृष्टरूपेण मिथ्यात्वेऽपि स्वरूपेण सत्यत्वम्, अध्यस्तस्य संसृष्ट-रूपेण स्वरूपेण च मिथ्यात्वमि'ति मायावादिभिरङ्गीकृतत्वात् । तथा चोक्तम् 'सत्यानृते मिथुनीकृत्य लोकव्यवहार' इति । अन्यथाख्यातिवादिभिः 'अधिष्ठानारोप्ययोरुभयोरपि संसृष्टरूपेणैव असत्त्वं स्वरूपेण तु सत्त्वमेवे'त्यङ्गीकृतम् । इदंरजतयोस्तादात्म्यानवभासे प्रवृत्त्याद्यसंभवश्च । तत्र यदन्यथात्वं शुक्तिकेदमंशस्य रजतत्वसंसर्गो रजतस्येदन्तासंसर्गः तत्तावदसदेव । प्रतीयते चापरोक्षतया, सत्त्वेन च । अपरोक्षावभासस्यानुभवसिद्धत्वात् । सत्त्वेनाप्रतीतौ प्रवृत्त्यनुपपत्तेश्च । न हि प्राग्बाधात्सत्यरजतेदन्तासंसर्गादयं संसर्गो मात्रयाऽपि विलक्षणोऽनुभूयते । तथा चासदपरोक्षतया सत्त्वेन च नावभासत इति व्याप्तेरन्यथात्वे भग्नत्वान्नानेन हेतुनाऽसत्त्वाभावोऽनुमातुं शक्यत इति ।**

**परि०**— मूले भ्रान्तावन्यथात्वस्य प्रतीतिमुपेत्य तस्यासत्त्वोक्तिरयुक्ता । भ्रान्तावन्यथात्व-प्रतीतेरनिर्वचनीयख्यातिवादिनोऽसंमतेरित्यतस्तत्र यदित्यादिना श्लोकं व्याख्यातुमुपोद्घातमाह **रजता-दिकमित्यादिना** । **प्रतिपद्यमानेन** मन्यमानेन । **अन्यथाख्यातिवादिभिः** प्राचीनतार्किकैः ।





**तत्तावदिति** । उक्तद्विरूपमन्यथात्वमित्यर्थः । एवेत्यस्यान्वयोक्तिः **असदेवेति** । **अन्यथात्वे भग्नत्वादिति** । उक्तद्विरूपसंसर्गस्थले त्वदुक्तव्याप्तेर्भग्नत्वादित्यर्थः ।

**गु०दी०— शुक्तिकेदमंशस्य** इत्यत्र शुक्तिकारूपेदमंशस्येत्यर्थः ।

**यादु०— अन्यथाख्यातिवादिभिस्त्विति** । वस्तुनो वस्त्वन्तरात्मनाऽवभासस्यैवान्यथाख्यातिरूपत्वादिति भावः ।

**वं०प०— मिथुनीकृत्य** संसृष्टं कृत्वा । **उभयोरपीति** । अधिष्ठानं स्वरूपेण सर्ववादिमते सत्यमेव अन्यत्र विद्यमानस्यैवान्यत्रारोपाङ्गीकारादारोप्यमपि स्वरूपेण सत्यमेवेत्यर्थः । मूलं योजयति **तत्रेत्यादिना** । **तत्र** प्रतीयमानपदार्थानां मध्ये । सत्ये शुक्त्यादिवदभ्रान्तौ प्रतीतिः कुत इत्यत आह **न हीति** । **कारणसामग्र्ये** कारणसाकल्ये ।

**आनन्दः— न ब्रूम इति** । शुक्तिरजतं नासत् अपरोक्षत्वेन प्रतीतत्वादित्यनुमानं फलितमिति भावः । ननु मया तादात्म्यावभासो नाङ्गीक्रियत इत्यत्राह **इदमिति** । आदिशब्देन समानाधिकरणव्यवहारपरिग्रहः । प्रवर्तकज्ञानसादृश्याच्च सत्त्वेन प्रतीतिरित्याह **न हीति**।

**श्रीनिधि०— इदन्तासंसर्ग इति** । उपलक्षणमेतत् । परस्परं तादात्म्यं चेति ज्ञेयम् । नन्वन्यथात्वस्य असत्त्वम् उत इत्यतः तस्मादिति असत्त्वं हेतूकृत्य यत्किञ्चित् साध्यते तदसङ्गतमित्यत उक्तमेवेति । तस्मादित्यनेनापि संबन्ध्यत इति । एवं च वह्निमत्वादेव धूमवत्वमित्यत्र यथा साध्यसाधनभावः तथात्रापि इति न दोषः ।

**वा०चं०—** नन्वन्यथात्वमसदित्यादिग्रन्थो व्यर्थः । न च यदसत्तन्न प्रतीयत इति व्याप्तेर्भङ्गाय स्थानान्तरप्रदर्शकोऽयमिति वाच्यम् । उभयसिद्धासति व्यप्तिभङ्गं प्रदर्श्य प्रसाध्यासत्त्वेऽन्यथात्वादौ तत्प्रदर्शनस्यानुचितत्वादित्यतोऽन्यथात्वसत्त्वयोरपरोक्षतया सत्त्वेन च प्रतीयमानयोरुदाहरणेन भ्रान्तावित्याद्युपपादने च पराभिमतापरोक्षत्वादिविशिष्टहेतोरपि व्याप्तिभङ्गाय भाष्यकारीयोऽयं यत्न इत्यवगमाद्विशिष्टहेतुव्याप्तिभङ्गस्य चोभयसिद्धासत्यनुपपत्त्या स्थलान्तरप्रदर्शकभाष्यसार्थक्यमेवेत्याशयेन भाष्यमवतारयति **स्यादेतदिति** । नन्वनिर्वचनीयवादिना मयाऽन्यथाख्यातिवादिवदन्यथात्वमानानभ्युपगमात्कथमेतदित्यत आह **रजतादिकमिति** । ननु तादात्म्यावभासाभ्युपगमेऽप्यन्यथाख्यातिवादापत्त्योक्तवचनमन्यार्थमित्याशङ्क्ते **न चेति** । अधिष्ठानस्य संसृष्टरूपेणैव मिथ्यात्वमध्यस्तस्य तु स्वरूपेणापि मिथ्यात्वमित्यभ्युपगमे संसृष्टरूपेणारोपितेऽप्यात्मनि सत्यपदम्, अध्यस्ते च अनृतपदं ज्ञापकमित्याशयेन तत्संमतिमाह **तथा चोक्तमिति** । एवं च तादात्म्यावभासस्योभयेषामविशेषेऽप्यन्यथाख्यातिवादिभी रजतादेरध्यस्तस्य देशान्तरे सत्त्वाभ्युपगमेनान्यस्य वस्तुनो





वस्त्वन्तरात्मना भानाभ्युपगमादन्यथाख्यातावप्यनिर्वचनीयत्वस्य मायावादिभिरभ्युपगमेन वस्त्वन्तरात्मना भानानभ्युपगमादन्यथाख्यात्यप्रसक्तिरिति भावः । न केवलं तद्वाक्यादिना तादात्म्यावभासाङ्गीकारो मायावादिना-मवगम्यते किन्त्वावश्यकश्च तेषामपि तादात्म्यावभास इत्याह **इदमिति** । ननु परस्परधर्मसंसर्गाध्यासस्यैव मयाऽङ्गीकारात्प्रवृत्त्यादेश्च तावन्मात्रेणोपपत्त्या न तादात्म्यावभासो मया स्वीकार्य इत्यतस्तादात्म्यशब्देन मयाऽपि स धर्मसंसर्ग एव व्यवहृत इत्याशयेन भाष्यं योजयति **तत्रेति** । अत्रान्यथात्वशब्देन संसर्गोऽपि व्याख्यातव्य इत्येव तात्पर्यं न तु परेण तादात्म्याध्यासानङ्गीकारादत्रानुपपत्तेर्वा तादात्म्यं नान्यथात्वशब्दार्थ इत्यत्र । अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति तद्भाष्यात्किञ्चेत्याद्युत्तरग्रन्थेऽन्योन्यस्मिन्नन्योन्यात्मक-मित्यादिव्यवहाराच्चेति द्रष्टव्यम् । यद्वाऽध्यासभाष्ये विवरणकारेण तादात्म्याध्यासप्रतिषेधेन संसर्गाध्यास-स्यैवोपपादनात्तदनुसारेणेदं व्याख्यानम् । किञ्चेत्युत्तरग्रन्थेऽपि तादात्म्यशब्दस्य संसर्गपरतया व्याख्यातत्वाल्लाघवेन तथैव व्यवहारः । अत एव पूर्वमन्यथात्वस्य पराङ्गीकारप्रतिपादनावसरे तादात्म्यशब्देनैव तद्व्यवहार इति द्रष्टव्यम् ।

**वा०र०— उभयसिद्धासतीति** । उभयोरसत्त्वेन सिद्धं संप्रतिपन्नं यदसत्तत्रेत्यर्थः । **प्रसाध्येति** । प्रसाध्य-मसत्त्वं यत्र तथाविध इत्यर्थः । उदाहरणेनेत्यादौ भाष्य इति शेषः । **उभयसिद्धासत्त्व इति** । उभयसिद्धमसत्त्वं यत्र तत्रेत्यर्थः । संमतग्रन्थभावं वदन्नवतारयति **संसृष्टेति** । **अन्यथाख्यातावपीति** । अन्यथाख्यातिप्रसङ्गेऽपीत्यर्थः । **अनिर्वचनीयत्वस्येति** । रजतादेरध्यस्तस्येति वर्तते । **तद्वाक्येति** । मायावादिवाक्येत्यर्थः । आदिपदेन तदुक्तोपपादनपरिग्रहः । **स धर्मसंसर्ग इति** । परस्परधर्मसंसर्ग इत्यर्थः । अत्र मूलग्रन्थे तादात्म्यपदं प्रथमतः प्रयुक्तम् । पश्चात्संसर्गपदप्रयोगः प्राचुर्येण । मध्ये तादात्म्यपदप्रयोगोऽपि । तत्कथं निर्धारणमित्यत आह **अत्रेति** । **संसर्गोऽपीति** । तादात्म्यवत्संसर्गोऽपीत्यर्थः । **इत्यत्रेति** । तात्पर्यमिति वर्तते । **उत्तरग्रन्थ इति** । तस्माद्भ्रान्तावेवेतीतरव्याख्यानरूपाव्यवहितोत्तरग्रन्थ इत्यर्थः । **संसर्गाध्यासस्यैवोपपादनादिति** । ........... ...................... इत्यादिनोपपादनादित्यर्थः । कथं तर्हि तादात्म्यव्यवहारः । किञ्चेत्युत्तरग्रन्थ इत्यत आह **किञ्चेत्युत्तरेति** । तादात्म्यपदं हि संसर्गाध्यासस्यैव मयाऽङ्गीकारादित्यादि शङ्कावारणाय तत्र यदन्यथात्वमित्यादिना संसर्गार्थतया प्राक् व्याख्यातम् । तथाच तत एव यत्र तादात्म्यपदप्रयोगः स्यात्तत्र सर्वत्रापि संसर्ग एव व्याख्यातव्य इति सूचनाच्छुक्तिकेदमंशस्येत्यादिरूपेण संसर्गव्यवहारे गौरवमायातीति लाघवेनान्योन्यस्मिन्नन्योन्यात्मकत्वमिति व्यवहारस्योत्तरग्रन्थे करणेऽपि न दोषः । अन्यथा स्वस्योत्तरत्र व्याख्यास्यमानत्वाभिप्रायेणैव संसर्गरूपस्य तस्य पराङ्गीकारोपपादनावसरे इदंरजतयोस्तादात्म्यावभासोऽङ्गीक्रियत एवेति शुक्तिकेदमंशस्येत्यादिनोक्तसंसर्गस्य तादात्म्यपदेनैव व्यवहारः प्रकृत इति तद्विरोधोऽपि नास्तीत्याशयेनाह **अत एवेति**।

**विठ्ठ०— गवीवेति** । गवि यथा अपरोक्षतया सत्त्वेन शृङ्गं दृश्यते तथेत्यर्थः । नन्वनिर्वचनीयवादिना भ्रान्तावन्यथात्वभानस्यैवानभ्युपगमात्कथमसदेवान्यथात्वमपरोक्षतया सत्त्वेन भ्रान्तौ प्रतीयत इत्युच्यत इत्याशङ्कां परिहरन् व्याचष्टे **रजतादिकमनिर्वचनीयमिति** । नन्वेतस्मिन् अरजते अधिष्ठाने रजतत्वप्रत्ययाङ्गीकारेऽन्यस्य





अन्यात्मनावभासप्राप्त्यान्यथाख्यातिप्रसङ्ग इत्यत आह **न चैवमिति**। संसृष्टरूपेण रजततादात्म्यरूपेणासत्यत्वम्। **सत्यानृते इति**। अत्र जगदारोपाधिष्ठाने अत एव संसृष्टरूपेण मिथ्याभूते आत्मनि सत्यपदं अध्यस्ते प्रपञ्चे अनृतपदं च विवरणकारेण प्रयुक्तमिति ज्ञेयम्। न केवलं मायिनस्तादात्म्यावभासस्तद्वाक्यादवगम्यते। किन्त्वावश्यकश्चेत्याह **इदंरजतयोरिति**। नन्वेतस्मिन्नित्यादिना परस्परधर्मसंसर्गाध्यासस्यैव मयाङ्गीकारात्प्रवृत्त्यादेश्च तावन्मात्रेणोपपत्त्या क्वचिदुक्ततादात्म्यपदेनापि उक्तरूपसंसर्गस्यैवाभिप्रेतत्वात्कथं तादात्म्यरूपान्यथात्वमसदित्युच्यत इत्यतो मयापि त्वदभ्युपगततादात्म्यशब्देनैवं संसर्गो व्यवह्रियत इत्याशयेनेदानीं मूलं योजयति **तत्र यदन्यथात्वमिति**। सत्त्वेन प्रतीत्यनुभवाच्चेत्याह **न हीति**। सत्यरजते अस्तीदं रजतमिति सत्त्वप्रतीतिवदत्राप्यनुभवादिति भावः। **अन्यथात्वे भग्नत्वादिति**। उक्तद्विरूपसंसर्गस्थले भग्नत्वादित्यर्थः।

**चषकः— अन्यथाख्यातिप्रसङ्ग इति**। अर्थस्यार्थान्तरात्मनावभासस्यैवान्यथाख्यातित्वादिति भावः।

**४३४ सु०— स्यादेवं यद्यन्यथात्वमसत्स्यात्। तत्कुत इति चेत्। शुक्तिकेदन्तारजतादि संसर्गरूपस्यान्यथात्वस्यासत्त्वमनभ्युपगच्छतः कोऽभिप्रायः। किं तदन्यथात्वं सदिति उतानिर्वचनीयमिति। 'द्वितीये वक्ष्याम' इत्याशयेनाद्यं दूषयति तस्मादिति।**

**अनु०— तस्माद् भ्रान्तावेव प्रतीयते।**

**'एवे'ति 'तस्मादि'त्यनेनापि संबध्यते। असत्त्वादेव हि तत् भ्रान्तावेव प्रतीयते। यदि सत्स्यात्तर्हि शुक्तिकादिवदभ्रान्तावपि प्रतीयेत। न चैवम्। तस्मान्न सत्। न हि कारणसामग्र्ये सति कार्यानुत्पत्तिर्युक्तेति॥ किञ्च अन्योन्यस्मिन्नन्योन्यात्मकत्वमपि चेत् सत् स्यात्तदा अतस्मिंस्तदिति न भवेत्, किन्तु तस्मिंस्तदिति। तथा च न तत्प्रत्ययस्य भ्रान्तित्वं स्यात् सत्यरजतप्रत्ययवत्। तदिदमुक्तम् 'अन्यथात्वमि'ति 'भ्रान्तावि'ति च। उपलक्षणं चैतत्। अन्योन्यसंसर्गस्य सत्त्वे बाधोऽपि 'नेदं रजतमि'ति न स्यादित्यपि द्रष्टव्यम्।**

**परि०**— ननु सत्त्वेऽप्यभ्रान्तावपि कुतः प्रतीयेतेत्यत आह **न हि कारणसामग्र्य इति**। कादाचित्कस्य चिदिन्द्रियसन्निकर्षादेः संभवादिति भावः।

**यादु०— न हि कारणसामग्र्ये सतीति**। यदि रजतेदमंशयोरन्यथात्वं सत्स्यात्तर्हि ततः प्रमारूपकार्यं स्यादेव। समनस्केन्द्रियसन्निकर्षादिरूपज्ञानजनकसामग्र्याः सत्त्वात्। अन्यथा भ्रमस्यैवानुपपत्तेः। केवलं तत्रान्यथात्वरूपविषयविलम्बेन प्रमाविलम्बस्तत्र वाच्यः। सोऽपि चेदस्तीत्युच्यते तर्हि प्रमा स्यादेव। सामग्र्याः प्राप्तत्वादिति भावः।





**वं०प०— तदिदमुक्तमिति** । अन्यथात्वमित्युक्त्या तदाऽतस्मिंस्तदिति न भवेदित्यापादनं सूचितम् । भ्रान्तावित्युक्त्या च सत्त्वे तत्प्रत्ययस्य भ्रान्तित्वं न स्यादित्यापादनं सूचितमिति द्रष्टव्यम् ।

**आनन्दः— द्वितीये वक्ष्याम इति** । आह इत्यादि ग्रन्थ इति शेषः । अभ्रान्तावप्रतीयमानत्वेऽपि कुतो न सत्त्वमित्यत आह **न हीति** ।

**कं०रा०— न हीति** । कारणानां सामग्र्ये साकल्ये सति कार्यानुत्पत्तिर्न हि युक्तेत्यर्थः । एककारणसत्त्वे कार्यानुत्पत्तेः संभवात्कारणसामग्र्ये सतीत्युक्तम् ।

**श्रीनिधि०—** अभ्रान्तावपि प्रतीयमानत्वं मास्तु सत्त्वं चास्तु इत्यप्रयोजकत्वमित्यत आह **न हि कारणेति** । **सामग्र्ये** पौष्कल्ये । ज्ञानसामग्र्यां विषयसत्त्वस्य अनुप्रवेशो हि सा सामग्री अभ्रान्तिसामग्री । एवमेवेति निर्धारणेन । अन्यथा भ्रान्तित्वं न स्यादिति सूचितम् । अन्यथात्वमित्यनेन अन्यथा अन्यथात्वं न, किन्तु तत्त्वमेवेति प्रथममापाद्यं सूचितम् ।

**वा०चं०—** ननु तस्मादित्युत्तरवाक्येऽन्यथात्वासत्त्वस्य भ्रान्तावेव प्रतीयमानत्वे हेतुततयोपन्यासोऽनुपपन्नः । अन्यथात्वेऽसत्त्वस्यासिद्धत्वाद्भ्रान्तावेव प्रतीयमानत्वस्य सिद्धत्वाच्च । न च विपरीतो हेतुहेतुमद्भावोऽत्र विवक्षित इति वाच्यम् । तथात्वेऽपि प्रातिभासिकत्वेनाप्युपपत्त्या भ्रान्तावेव प्रतीयमानत्वस्यासत्त्वासाधकत्वादित्यतो विपरीत एव हेतुहेतुमद्भावोऽत्र विवक्षितो वक्ष्यमाणप्रकारेणानिर्वचनीयत्वाभावसिद्धौ सत्त्वाभावे चानेन हेतुना सिद्धे सुलभाऽसत्त्वसिद्धिरित्याशयेनोत्तरवाक्यमवतारयति **स्यादेवमिति** । विवक्षितहेतुहेतुमद्भावं भाष्यारूढं करोति **एवेतीति** । हेतूच्छित्तिरूपं विपक्षे बाधकं कथयन्नुक्तमेव विवृणोति **असत्त्वादेव हीति** । एवं भ्रान्तित्वमभ्युपगम्य भ्रान्तावेव प्रतीत्या सत्त्वं निराकृतम् । अधुनाऽन्यथात्वस्य सत्त्वे भ्रान्तित्वमेवानुपपन्नमित्याह **किं चेति** । **तदिदमिति** । किञ्चेत्युक्ताभिप्रायाभावे तादात्म्यमिति स्पष्टोक्त्यैव विवक्षितार्थलाभादन्यथात्वमिति निर्देशो न स्यात् । सति च तस्मिन्नतस्मिंस्तदित्यर्थसूचनेनायमभिप्रायो ज्ञायत इति भावः । **उपलक्षणं चेति** । भ्रान्तावेव प्रतीयमानत्वं बाधस्याप्युपलक्षणमिति भावः ।

**वा०र०— भ्रान्तावेवेति** । अन्यथात्वस्य भ्रान्ताविति बुध्या विवेकेन योज्यम् । द्वितीयभ्रान्तावेवेत्यत्रासत्त्व इति वर्तते । **सिद्धत्वाच्चेति** । ततश्च सिद्धसाधनप्रसङ्ग इति भावः । साध्यासिद्धत्वादेर्गुणत्वेनासिद्धत्वसिद्धार्थत्वरूपदोषद्वयोद्धारमाशङ्क्य तेन च विपरीत इति । **उपपत्त्येति** । साध्यं विना प्रकारान्तरेणोपपन्नस्य हेतोरप्रयोजकत्वादिति भावः । अत्र वक्ष्यमाणरीत्या व्यावहारिकत्वरूपतानङ्गीकारात्प्रातिभासिकतारूपत्वमेवानिर्वचनीयत्वस्य प्राप्तमिति मनसि कृत्वाऽनिर्वचनीयत्वेनापीत्यनुक्त्वा प्रातिभासिकत्वेनापीत्येवोक्तम् । उपलक्षणं चेदं सत्त्वेनापीत्यस्य । एतस्याप्युत्तरवाक्ये निराकरणादिति ज्ञेयम् । **वक्ष्यमाणेति** । तस्यानिर्वचनीयत्व इत्येतद्व्याख्यानरूपानिर्वचनीयमिति कोऽर्थ इत्यादि वक्ष्यमाणेत्यर्थः । **अनेनेति** । भ्रान्तावेव प्रतीयमानत्वहेतुना विमतं





सन्नेति सत्त्वाभावे च सिद्ध इत्यर्थः । **सुलभेति** । परिशेषेणेति शेषः । **विवक्षितेति** । यद्भ्रान्तावेव प्रतीयमानं तदसदित्येवं हेतुहेतुमद्भावविपर्ययमित्यर्थः । **हेत्विति** । एवकारस्य प्रयोगेण वा सूचनदर्शनाद् वह्निमानेव धूमवानित्यत्र व्यभिचारपरिहारे इहापि पक्षे साध्याभावेऽपि हेतुसद्भावो न मन्तव्य इति सूचनायैवकारप्रयोगं कुर्वता भ्रान्तावेव प्रतीयमानत्वमसत्त्वं प्रति हेतुरिति ज्ञापितमित्यर्थः । **कारणसामग्र्ये** इति मूलम् । समग्रस्य भावः सामग्र्यं साकल्यमित्यर्थः । ब्राह्मणादित्वात् ष्यञिति ज्ञेयम् । पूर्वत्र भ्रान्तावेव प्रतीयमानत्वस्य हेतूकरणात्कथं किञ्चेत्युत्तरग्रन्थे भ्रान्तित्वाभाववर्णनमित्यङ्गीकारवादेन भ्रान्तावेव प्रतीयमानत्वेन सत्त्वाभाव उक्तः । वस्तुतस्त्वन्यथात्वस्य सत्त्वे भ्रान्तित्वमेवायुक्तमित्युत्तरग्रन्थे प्रतिपादनान्न दोष इति पूर्वोत्तरग्रन्थविषयं दर्शयन्नवतारयति **एवं भ्रान्तित्वेति** । **सति च तस्मिन्निति** । अन्यथात्वमिति निर्देशे च सतीत्यर्थः । अनेनोक्तनिर्देशस्योक्ताभिप्रायज्ञापकत्वमुपपादितं भवति ।

**सं०व्र०— न हि कारणसामग्र्ये सतीति** । अन्यथात्वं यदि रजतेदमंशयोः सत्स्यात्तर्हि तत्प्रमारूपं कार्यं स्यादेव समनस्केन्द्रसन्निकर्षादिरूपज्ञानसामग्र्याः सत्त्वात् । अन्यथा भ्रमानुत्पत्तिप्रसङ्गात् । केवलं तत्रान्यथात्व-रूपविषयविलम्बेन प्रमाविलम्बो वक्तव्यः । सोऽपि चेदस्तीत्युच्यते तर्हि प्रमा स्यादेव । सामग्र्याः प्राप्तत्वादिति भावः ।

**विठ्ठ०— तत्कुत इति** । तत् असत्त्वं असत्त्वे नियामकाभावादिति शङ्काभिप्रायः । परिशेषो नियामक इत्याशयेन परिहरति **शुक्तिकेति** । अन्यथात्वस्य सत्त्वेऽप्यभ्रान्तौ प्रतीतिः कुत इत्यत आह **न हीति** । सत्त्वे बाधानन्तरमपि विद्यमानत्वेनेन्द्रियसन्निकर्षरूपकारणकलापस्य सत्त्वादिति भावः । **तदिदमुक्तमिति** । तादात्म्य-मिति स्फुटोक्तिपरित्यागेनान्यथात्वमिति निर्देशात् किञ्चेत्युक्तार्थो ज्ञायते । भ्रान्तावित्यस्य बाधोपलक्षणत्वाद्यदि सत्स्यादित्युक्तार्थो ज्ञायत इति भावः ।

**चषकः— कारणसामग्र्ये सतीति** । शुक्तीन्द्रियसन्निकर्षादिघटितशुक्तिप्रमोत्पादकसामग्रीसमवधान-दशायां यथा शुक्तिप्रमोत्पादो नियतस्तद्वदन्यथात्वरूपविषयाबाधतदिन्द्रियसन्निकर्षादिघटितान्यथात्वप्रमारूपफलोप-धायकसामग्र्यां सत्यां तदुत्पादापत्तेर्दुर्वारत्वादिति भावः ।

**४३५ सु०— 'असदपरोक्षतया सत्त्वेन च नावभासत' इति व्याप्तेः स्थानान्तरेऽपि व्यभिचारं दर्शयति सत्त्वस्येति ।**

## अनु०— सत्त्वस्यासत एवं हि स्वीकार्यैव प्रतीतता ॥

**एवंशब्दः** समुच्चये उपमार्थो वा । **हिशब्दो** अनुभवप्रसिद्धिद्योतनार्थः । **स्वीकार्यैवेति** । युक्त्युपेततामाह । **प्रतीतता** अपरोक्षतया, 'सत्त्वेन चे'ति शेषः ।





**परि०— समुच्चय इति** । सत्त्वस्य चेति समुच्चय इत्यर्थः । **उपमार्थो वेति** । यथा अन्यथात्वस्यासत्त्वं तथा सत्त्वस्याप्यसत्त्वमित्युपमार्थ इत्यर्थः ।

**आनन्दः—** ननु प्रतीतिमात्रस्य मयाऽप्यङ्गीकारान्नेदमनिष्टमित्यत आह **अपरोक्षतयेति** ।

**वा०चं०—** सत्त्वस्यासत इत्युत्तरवाक्यस्य पूर्वोक्तार्थफलप्रतिपादकत्वं वा कस्मिंश्चिदर्थेऽनिष्टापादनपरत्वं वा प्रतीयते । तदुभयमप्यनुपपन्नमित्यतस्तदभिप्रायमाह **असदिति** । स्थानान्तरे व्यभिचारप्रदर्शनं मूलारूढं कर्तुमाह **एवंशब्द इति** । समुच्चयार्थत्वेऽन्यथात्वसत्त्वयोः समकक्षता प्रतीयेत न त्वन्यथात्वप्रतीतेस्तदङ्गीकृतत्वम् । सत्त्वप्रतीतेरङ्गीकरणीयत्वं च तदुभयमपि मूलारूढं कर्तुमेवंशब्दमन्यथा व्याख्याति **उपमेति** । अत एव तादात्म्याव-भासोऽङ्गीक्रियत एवेत्युक्त्वा तद्वाक्यमुदाहृतम् । अत्र तु कल्पान्तरनिरासेन सत्त्वप्रतीतिं परिशेषयिष्यतीति ध्येयम् । **अनुभवेति** । सत्त्वानुभवप्रसिद्धीत्यर्थो न तु सत्त्वप्रतीत्यनुभवेति । अनुभवशब्दप्रायपाठबाधापत्तेः । अत एव तथा चेदित्यादिना तथैव वक्ष्यत इति ध्येयम् । **युक्तीति** । सत्त्वप्रतीतेः प्रवृत्त्यन्यथाऽनुपपत्तिरूपयुक्तिसिद्धत्वादिति भावः । विशिष्टहेतोर्व्यभिचारस्य भाष्यारूढतायै शेषं पूरयति **अपरोक्षतयेत्यादि** ।

**वा०र०—** **फलप्रतिपादकत्वमिति** । प्रतीयत इत्युत्तरेणान्वयः । एवं हीत्यस्यैवं यतस्तस्मादित्यर्था-नुसारेणायमाद्यः कल्पः । एवमङ्गीकार इत्यर्थानुसारेण द्वितीयः पक्ष इति विवेको बोद्धव्यः । **अनुपपन्नमिति** । सत्त्वस्यासत्त्वप्रतिपादनं न प्रकृतमिति तत्फलत्वायोगात् प्रकृतमन्यथात्वस्यासत एव यज्ज्ञानोपपादनं तत्प्रति चास्य फलत्वायोगादनुपपन्नमिति भावः । **स्थानान्तर इति** । सत्त्वस्येत्यनेन स्थानान्तरे व्यभिचारः प्रदर्शित इत्यत्र ज्ञापकाभाव इत्युक्ते एवं शब्द एव तत्र ज्ञापक इत्युक्तिलाभादिति भावः । **अन्यथाख्यातीति** । उपमार्थत्वेन व्याख्याने तु निश्चितस्यैव दृष्टान्तत्वात् प्रज्ञापनीयस्यैव च दार्ष्टान्तिकत्वादन्यथात्वप्रतीतिसत्त्वप्रतीत्योरङ्गीकृतत्वाङ्गीकरणीयत्वे क्रमेण मूलारूढे भवत इति भावः । एवमेवंशब्दस्योपमार्थत्वोक्तितात्पर्यतयाऽन्यथात्वप्रतीतेऽङ्गीकृतत्वं सत्त्व-प्रतीतेश्चाङ्गीकरणीयत्वमिति यदुक्तं तन्मूलात्प्रतीयते चेति भावेन तदुभयत्र मूलकारीयं ज्ञापकमाह **अत एवेति** । **उदाहृतमिति** । अतस्मिंस्तदिति वाक्यं प्रागुदाहृतमित्यर्थः । कल्पान्तरेति अनिर्वचनीयतयाऽसत्त्वेन वा प्रतीतिरूप-कल्पान्तरेत्यर्थः । **परिशेषयिष्यति** । तस्मात्सत्त्वेनैव प्रतीयत इत्येव स्वीकार्यमित्यनेनेति पूरणीयम् । **सत्त्वानु-भवेति** । सदिदं रजतमिति गीतातात्पर्योदाहृतात्राप्युपदर्शयिष्यमाणसत्त्वानुभवेत्यर्थः । **प्रतीतता हीति** । संबन्धे प्रतीतिरनुभवसिद्धेत्यर्थको हिशब्द इति प्रतीयते । तथा चानुभवप्रसिद्धीत्यस्य सत्त्वप्रतीत्यनुभवप्रसिद्धीति मूलार्थः प्राप्नोति तथा नार्थोऽभिप्रेत इत्याह **न त्विति** । इतीत्यनन्तरं ग्रन्थ इति वर्तते । कुतो नेत्यत आह **अनुभवशब्देति** । सत्त्वानुभवस्यैवेह प्रकरणेऽनुभवशब्देन व्यवहारबाहुल्येनोत्तरत्र सत्त्वानुभवार्थकत्वेन प्रयुज्यमानानुभवपदपाय-पाठानुपपत्तेरित्यर्थः । यदीदमनुभवपदं प्रतीत्यनुभवपरं तर्ह्युत्तरत्र सत्त्वानुभवे प्रयुज्यमानानुभवपदस्यैतस्य च भिन्नार्थतया तत्प्रायपाठबाधः स्यादिति भावः । कुत्रोत्तरत्र सत्त्वानुभवेऽनुभवपदप्रयोगो ज्ञायते इत्यतस्तत्स्थलं दर्शयति **अत एवेति** । इत्यादिनेत्यत्रादिपदेनानुभवः सदिदं रजतमितीत्यस्येवोक्तानुभवविरोधादित्यस्यापि सङ्ग्रहः ।

तेनानुभवप्रायः प्रदर्शित इति ज्ञातव्यम् । युक्त्युपेततेत्यत्र सत्त्वप्रतीतेरिति पूरणीयम् । युक्तिश्च प्रवृत्त्यन्यथानुपपत्तिरूपा तयोपेततामाह एवकारेणेति व्याख्येयमित्याशयेनाह **सत्त्वप्रतीतेरिति**।

**विठ्ठ०— अनुभवप्रसिद्धीति**। सत्त्वानुभवप्रसिद्धीत्यर्थः। अत एव तथा चानुभव इति वक्ष्यति **युक्तीति**। सत्त्वप्रतीतेः प्रवृत्त्यन्यथानुपपत्तिरूपयुक्त्युपेततामित्यर्थः।

**४३६ सु०— अयमर्थः । रजतमनिर्वचनीयं मन्यमानस्यापि मते तत्किमनिर्वचनीयतया प्रतीयते, उतासत्त्वेन, अथवा सत्त्वेन ॥ न प्रथमद्वितीयौ तथाप्रतीत्यनुपलम्भात्, तथाप्रतीतौ प्रवृत्त्यभावप्रसङ्गाच्च । न ह्यसत्प्रातिभासिकं वा कदाचिदनेनार्थक्रियासूपयुज्यमानं दृष्टम् येनास्यासत्त्वादिकं प्रतीत्यापि प्रवर्तेत ॥ तस्मात्सत्त्वेनैव प्रतीयत इत्येव स्वीकार्यम् । तथा चानुभवः 'सदिदं रजतमि'ति । प्रवृत्तिश्चैवमुपपद्यते ॥ रजतप्रतीतिमात्रात्प्रवृत्तिरिति चेन्न । उक्तानुभवविरोधात्, विधिनिषेधाववधूय प्रत्ययायोगाच्च ।**

**परि०— अनिर्वचनीयमिति** । प्रातिभासिकरूपानिर्वचनीयं मन्यमानस्यापीत्यर्थः । **अनिर्वचनीयतया** प्रातिभासिकतया । व्यावहारिकरूपानिर्वचनीयमर्थक्रियाकारि दृष्टमिति मायी वदिष्यतीत्यतो अनिर्वचनीयशब्दार्थः प्रातिभासिकं वेति विवृतः ।

**यादु०— तत्किमनिर्वचनीयतयेति** । अत्र सर्वत्रानिर्वचनीयत्वपदेन प्रातिभासिकत्वमेव विवक्षितमिति द्रष्टव्यम्।

**वं०प०— अनिर्वचनीयतया** प्रातिभासिकतया । **सत्त्वेनैवेति** । तृतीयः पक्ष इत्यर्थः । **प्रतीतिमात्रादिति** । न सत्त्वेनेत्यर्थः । **उक्तानुभवेति** । सदिदं रजतमित्युक्तानुभवेत्यर्थः । सत्त्वोल्लेखमन्तरेण प्रतीतिमात्रात्प्रवृत्तिरित्यङ्गीकारे सत्यमवर्जनीयमेवेत्याह **विधीति**।

**आनन्दः—** नन्वेवमपि कथं व्यभिचारः प्रदर्शित इत्यत आह **अयमर्थ इति**। **उक्तानुभवेति**। सदिदं रजतमित्युक्तेत्यर्थः। नन्विदं रजतमित्यनुभवोऽस्तीत्यत आह **विधीति**। तथाच तत्र भावस्यापि सत्त्वस्य नोल्लेख इत्यर्थः।

**कं०रा०— प्रातिभासिकमिति**। यद्यपि किमनिर्वचनीयतया प्रतीयत इति विकल्पितत्वादनिर्वचनीयं वेति वक्तुमुचितम् । तथाऽप्यनिर्वचनीयतया प्रतीतिस्वीकारपक्षेऽनिर्वचनीयस्य व्यावहारिकप्रातिभासिकभेदेन द्वैविध्याद्व्यावहारिकतया रजतस्य प्रतीत्यङ्गीकारेऽसत्या व्यावहारिकताया अपरोक्षप्रतीतिस्वीकारापत्त्या तस्य प्रातिभासिकतयैव प्रतीतेः स्वीकर्तव्यत्वादेवमुक्तमिति ध्येयम्।

**श्रीनिधि०—** हिशब्दसूचितमनुभवं दर्शयति **तथा चानुभव इति**। **उक्तानुभवः** सदिदं रजतमित्यनुभवः।





**वा०चं०**— ननु रजतानिर्वचनीयत्ववादिमते सत्त्वस्य प्रतीतेरेवाभावाद्दूरे विशिष्टप्रतीतिः । तत्सद्भावेऽपि न सत्त्वस्यासत्त्वमिति नेदं व्यभिचारस्थलमित्यतस्तदुभयमुपपादयति **अयमर्थ इति** । अत्र हि-एवशब्दाभ्यां सत्त्वस्यानुभवसिद्धतायास्तत्प्रतीतेश्च युक्त्युपेततायाः कथनेन कल्पान्तरेऽनुभवाभावस्य युक्तिविरोधस्य च सूचनात्कल्पान्तरनिरासेन सत्त्वप्रतीतिपक्षपरिशेषाय कल्पान्तरनिरासे तौ व्यापारयितुं विकल्पयति **रजतमिति** । हि-एवशब्दसूचितं साधकमाह **तथा चेति** । युक्तेरन्यथासिद्धिं शङ्कते **रजतेति** । कल्पान्तरनिरासे व्यापारितमनुभवविरोधमत्रापि व्यापारयति **उक्तेति** । उपलक्षणं चैतत् । वक्ष्यमाणरीत्या प्राभाकरमतप्रवेशः स्यादिति द्रष्टव्यम् । ननु नास्त्येव सदिदं रजतमित्यनुभवोऽपि त्विदं रजतमित्येव । स च स्वरूपमात्रविषयक एवेति कथमनुभवविरोध इति चेन्न । अनुभवापलापापातात् । अस्तु वा रजतमिदमित्येवानुभवः । तथाऽपि तद्विरोधः स्यादेवेत्याह **विधीति** । तथा चेदं रजतमिति विधिप्रत्ययस्यैव सत्त्वविषयकत्वमिति सत्त्वाविषयकत्वे विधिप्रत्ययत्वमेव न स्यादिति भावः ।

**वा०र०**— **विशिष्टेति** । अपरोक्षतया सत्त्वेन च प्रतीतत्वादिति विशिष्टहेतोरित्यर्थः । **नेदमिति** । प्रतीतिमात्राभावे विशेष्यस्यैवाभावेन विशिष्टप्रतीत्यभावे च विशिष्टहेतोरभावापत्तेस्तत्र हेत्वभावादेव न व्यभिचारः । तथा हेतुसत्त्वेऽपि तस्यासत्त्वाभावे तत्र साध्यस्यैव प्राप्त्या साध्याभाववृत्तिहेत्वप्राप्तेर्न व्यभिचारस्थलमित्यर्थः । **तदुभयमिति** । सत्त्वे विशिष्टप्रतीतिमसत्त्वं चेत्यर्थः । **ह्येवशब्दाभ्यामिति** । हिशब्देनानुभव सिद्धतायाः एवशब्देन युक्त्युपेतताया इति क्रमेण संबन्धः । कथनेन सूचनादित्यनेनानिर्वचनीयत्वासत्त्वपक्षदूषणमप्युद्भाव्यं न भवतीति दर्शितम् । कल्पान्तरनिरासकरणं तु तस्मात्सत्त्वेनैवेति परिशेषार्थमिति न तस्य वैयर्थ्यम् । अन्यथाऽसतः सत्त्वस्य सत्त्वेन प्रतीतिपक्षनियमालाभापत्त्या व्यभिचारप्रसञ्जनानुपपत्तिरित्याशयेनोक्तं **कल्पान्तरनिरासेन सत्त्वप्रतीतिपक्षपरिशेषायेति** । **ताविति** । अनुभवाभावयुक्तिविरोधावित्यर्थः । तत्र तथाप्रतीत्यनुपलम्भादिति मूलेनानुभवाभावस्यानिर्वचनीयत्वेनासत्त्वेन वा प्रतीयत इत्येतत्पक्षद्वयेऽभिधानम् । तथा प्रतीतावित्युत्तरमूलेन तु युक्तिविरोधाभिधानमिति मूलयोजना चानेन सूचिता । **ह्येवशब्देति** । हिशब्दसूचितं सत्त्वानुभवप्रसिद्धिरूपमेव शब्दसूचितं युक्त्युपेतत्वरूपं साधकमित्यर्थः । तत्रेतीत्यन्तेनाद्यसाधककथनं प्रवृत्तिश्चेत्यनेन तु द्वितीयमिति विवेकः । **अन्यथासिद्धिमिति** । प्रकारान्तरेण घटनामित्यर्थः । नासतो विद्यते भाव इत्येतद्गीतातात्पर्यनिर्णयस्येदं तु वाक्यमन्यथासिद्धमिति वाक्यगतसिद्धमित्येतदनूद्य घटितमिति तट्टीकायां व्याख्यानात् । एवमेवंजातीयके ज्ञेयम् । अत्रापि व्यापारयतीत्यनेनैतत्पक्षदूषणमपि भाष्यारूढमिति सूचितम् । **वक्ष्यमाणेति** । अन्यथा रजतावभासादेव प्रवृत्त्युपपत्तौ किं संसर्गेत्यादिवक्ष्यमाणेत्यर्थः । सदिदं रजतमित्यनुभवप्रसिध्युक्तेस्तस्य सिद्धत्वे सति रजतमिदमित्येव प्रतीतिमङ्गीकृत्य तस्या अपि सत्त्वविषयकत्वमस्त्येवेत्युपपादनपरविधिनिषेधावित्युत्तरमूलासङ्गतिरित्यतस्तथानुभवे विप्रतिपद्यमानं प्रति अङ्गीकारवादेन तत्प्रवृत्तेर्न दोष इति भावेनावतारयति **ननु नास्त्येवेति** । **तथा चेदमिति** वाक्ये सत्त्वविषयकत्वमित्यनन्तरमितिशब्दोऽधिकः । सत्त्वविषयकत्वमित्यन्तेन विधिप्रत्ययत्वात्सत्त्वविषयकत्वमित्यनुमाय सत्त्वाविषयकत्व इत्युत्तरेण विपक्षे बाधकप्रदर्शनेन मध्ये तस्यानावश्यकत्वात् । कुतस्तस्य मध्ये





प्रसक्तिरिति चेत्। न। इति भाव इति लिखनायोद्युक्तेनेतिशब्दं प्रयुज्य विपक्षे बाधककथनाय प्रवृत्तेन भाव इत्यनुक्त्वा तत्कथनानन्तरमेवेति भाव इति लिखितवान्। इतिशब्दश्च पूर्वलिखितोऽनवधानान्न नाशित इति न दोषः। अत्र यद्यपि स्तम्भोऽयमित्यादिप्रतीतिर्न सदित्येवमाकारा तथापि स्तम्भादीनां सद्विशेषत्वान्न सत्ता व्यभिचरतीति तत्त्वोद्योतटीका। सत्यः सोऽस्य महिमेत्युपाधिखण्डनटीकायां वस्तुतस्तु वस्तुविषयकमेव ज्ञानं तत्सत्यत्वे प्रमाणं नत्वित्यादि-रूपोक्तिश्चैकवाक्यतया योज्या। मिथ्यात्वमपि बन्धस्येत्यत्रत्यमूले उभयोदासीनस्येति वाक्येऽप्युक्तानुगुण्यं योज्यम्। सत्त्वे सदसदनिर्वचनीयत्वविकल्पस्य तत्तद्वादिरीत्या प्रवर्तनादेकवादिरीत्या तदप्रवृत्तावपि न दोष इति भावेनाह **सत्त्वस्येति** । अत्रारोपिततयाऽङ्गीकृतस्य रजतस्यानिर्वचनीयत्वाङ्गीकारेण तत्सत्त्वस्यान्यत्र दृष्टत्वायोगादाह **नैयायिकादिभिरिति**। नेयं प्रसक्तिः संपूर्णा। नैयायिकमतानुसारेणेति विवक्षितम्। अनिर्वचनीयतयाऽङ्गीकृतरजते प्रतीयमानसत्त्वस्य तदन्यत्र दृष्टत्वमित्यस्य न्यायामृतेऽप्यभावात्। अपि त्वनिर्वचनीयतयाङ्गीकृतरजते प्रतीयमानं यत्सत्त्वं तस्मिन्नारोप्यापातसत्त्वत्वरूपेणारोप्यगतं सत्त्वमन्यत्रास्तीति नैयायिकाङ्गीकारात् तद्रीत्याऽन्यत्र विद्यमानतया प्रसक्तिरित्येव विवक्षितमिति न कश्चिद्दोषः। एवं पराभिमतरजते प्रतीयमानसत्त्वे आरोप्यगतसत्त्वत्व-रूपेणेवास्मद्रीत्या सत्त्वाप्रसक्तिरिति न दोषः। मायिमतेनानिर्वचनीयत्वस्योक्तरजतगतसत्त्वे यथास्थितैव प्रसक्तिरिति ज्ञेयम् । अन्यथात्वं कुतोऽसदित्याशङ्कापरिहाराय प्रवृत्तभ्रान्तावेव प्रतीयत इत्यनुव्याख्यानव्याख्यानानुसारेण प्रकृतरजतसत्त्वं सत्यं न भवति । भ्रान्तावेव प्रतीयमानत्वादित्येवमुक्तसत्त्वस्य सत्त्वनिराकरणसंभवे किमिति दूषणान्तराश्रयणमिति शङ्कानिरासाय सत्यपि तद्दूषणे स्पष्टत्वाच्छिष्यैरेव तदूह्यत्वाभिप्रायेण दूषणान्तरदान-मित्यवतारयति **रजतसत्त्वस्येति**। अत्र टीकायां रजतसत्त्वस्य भ्रान्तावेव प्रतीयमानत्वादिति साधयितुं शक्यत्वे-ऽपीति च पाठः। अपिपदेन स्पष्टत्वात्तदुपेक्ष्येति लभ्यते। अत एवोक्तं **युक्त्यन्तरेणेति**। **तं** सत्त्वाभावम्। यद्यपि सत्त्वस्य सत्त्वाङ्गीकारे अनिर्वचनीयत्वानुपपत्तिरप्युक्तप्रायैव। अन्यथा भ्रान्तित्वमपि न स्यादित्यादेः प्रागभिधानात्। तथापि प्राक् भ्रान्तिबाधगतभ्रान्तित्वबाधत्वानुपपत्तिरेवोक्ता। न त्वनिर्वचनीयस्वरूपस्यैव। इह तु रजतसत्त्वस्यापि सत्त्वाङ्गीकारे अनिर्वचनीयस्वरूपस्यैवानुपपत्तिरुच्यत इति न गतार्थता। एतदप्युक्तं **युक्त्यन्तरेणेति**। यद्यपि चात्र सत्त्वं निराकरोतीति वाच्यम् । तथापि प्रागन्यथात्वेऽसत्त्वसाधनस्य मूले वर्णनात्तद्युक्तेरत्रापि प्रवृत्तिसंमतेर्युक्त्यन्तरमपि सत्त्वाभावसाधकत्वेन योजनीयतया प्राप्तमित्याशयेन साधयतीत्युक्तम् । ततश्च रजतसत्त्वस्य भ्रान्तावेव प्रतीयमानत्वात्तादात्म्यवद्भ्रान्तावेव प्रतीत्या तत्सत्त्वाभावस्य साधयितुं शक्यत्वेऽपि युक्त्यन्तरेण तं साधयतीति टीकापाठः। क्वचित्सत्त्वस्येत्यनन्तरमभ्रान्तावपीति साधयितुमित्यनन्तरमशक्यत्वादिति च पाठस्तत्र न्यायरीत्या रजतसत्त्वस्य कान्ताकङ्कणादिस्थलेऽभ्रान्तावपि प्रतीयमानतया तद्रीत्या सत्त्वप्रतीत्यङ्गीकारे उक्तरीत्या सत्त्वाभावस्य साधयितुमशक्यत्वादुक्तयुक्तिं परित्यज्य युक्त्यन्तरेण तं साधयतीति योज्यम्। न्यायरीत्या प्रसक्त्यनुसारेण तद्रीत्यैव। भ्रान्तावपि प्रतीयमानत्वस्यापि प्राप्तेर्वक्तुं शक्यत्वात्। एतेन मायिमतेऽनिर्वचनीयतया संमतरजते प्रतीतसत्त्वस्य भ्रान्तावेव प्रतीयमानत्वेनाभ्रान्तावपि प्रतीयमानत्वासिद्धिरित्यादिशङ्कानवकाशः। रजतसत्त्वस्येत्यत्रापि पूर्ववदारोप्य सत्त्वस्येत्येव विवक्षितमिति मायावाद्यभिमतानिर्वचनीयरजतसत्त्वे सत्त्वत्वरूपेणाप्रतीयमानत्वेऽपि न दोष इति सूरिभिरालोचनीयम्।

**स०व्र०— तत्किमनिर्वचनीयतया प्रतीयत इति** । अत्र सर्वत्रानिर्वचनीयपदेन प्रातिभासिकमेव विवक्षितम् । **उक्तानुभवविरोधादिति** । रजतप्रतीतिमात्रस्य प्रवर्तकत्वं नोपपन्नम् । न ह्यसत्प्रातिभासिकं वा कदाचिदनेनार्थक्रियासूपयुज्यमानं दृष्टं येनासत्त्वादिकं प्रतीत्यापि प्रवर्तेतेत्युक्तानुभवविरोधः स्यादित्यर्थः । यद्वा सदिदं रजतमित्युक्तानुभवविरोधादित्यर्थः ।

**विठ्ठ०—** ननु रजतस्यानिर्वचनीयता वादिमते सत्त्वप्रतीतिरेव नास्ति दूरे विशिष्टप्रतीतिः अस्तु वा सत्त्वप्रतीतिः तथापि न सत्त्वस्य प्रतीयमानस्यास्त्यसत्त्वं अतो न सत्त्वमुक्तव्यभिचारस्थलमित्यतस्तदुपपादयति **अयमर्थ इति** । तत्किमनिर्वचनीयतयेत्यादौ सर्वत्रानिर्वचनीयपदेन प्रातिभासिकमेव विवक्षितमिति द्रष्टव्यम् । यथा सतो अन्यथात्वस्येत्यनेन एवंशब्द उपमार्थ इत्युक्तं भवति सत्त्वस्यापीत्यनेन समुच्चय इति विवृतम् ।

**चषव :— तत्किमनिर्वचनीयतयेति** । प्रातिभासिकतयेति । एवमुत्तरत्राप्यनिर्वचनीयशब्दः प्रातिभासिकपरोऽवसेयः । अभिधास्यति चासत्प्रातिभासिकं वेति । **रजतप्रतीतिमात्रात्** सत्त्वानवगाहिरजतप्रतीतितः ।

**४३७ सु०— तथा च तत्सत्त्वं सदसदनिर्वचनीयं वा । नाद्यः अनिर्वचनीयताविरोधात् । न हि यस्य सत्त्वं सत्तदनिर्वाच्यमिति संभवति । द्वितीयस्तु स्यात् । ततश्च यथा असतो अन्यथात्वस्यापरोक्षतया सत्त्वेन च प्रतीतता स्वीकार्या, एवमसतस्सत्त्वस्यापि विशिष्टप्रतीतता स्वीकार्यैव । तथा च यदसत्तदपरोक्षतया सत्त्वेन च नावभासत इति व्याप्तेः सत्त्वे भग्नत्वात् एतेन हेतुना नासत्त्वाभावो रजतस्यानुमातुं शक्यत इति ।**

**परि०— अनिर्वचनीयताविरोधादिति** । भ्रान्तिविषयरजतस्येति योज्यम् । सत्यभूतसत्त्वाश्रयस्य सद्विलक्षणत्वायोगेन सदसद्विलक्षणत्वरूपानिर्वचनीयतानुपपत्तेरितिभावेन व्यनक्ति **न हीति** । यथाऽसतोऽन्यथात्वस्येत्युक्त्या एवंशब्द उपमार्थ इत्युक्तं विवृतम् । सत्त्वस्यापीत्यनेन समुच्चयार्थ इति विवृतम् । **विशिष्टेति** । सत्त्वेनापरोक्षतया प्रतीततेत्यर्थः । सत्त्वे सत्त्वरूपपदार्थस्थले इति व्याप्तेर्भग्नत्वादित्यर्थः । **एतेनेति** । सत्त्वेनापरोक्षतया प्रतीतत्वहेतुनेत्यर्थः ।

**यादु०— विशिष्टप्रतीततेति** । अपरोक्षतया सत्त्वेन च प्रतीततेत्यर्थः ।

**वं०प०— अनिर्वचनीयतेति** । रजतस्येति शेषः । तदुपपादयति **न हीति** ।

**आनन्दः— अनिर्वचनीयतयेति** । प्रातिभासिकस्येति शेषः ।

**कं०रा०— विशिष्टेति** । अपरोक्षतया सत्त्वेन च प्रतीततेत्यर्थः ।





**वा०चं०**— सत्त्वस्यान्यत्र दृष्टत्वान्नैयायिकादिभिरङ्गीकृतत्वाद्वाऽसत्त्वस्य च स्वमतेनानिर्वनीयत्वस्य च मायिमतेन प्रसक्तेस्तथैव विकल्पयति **तथा चेति**। रजतसत्त्वस्याभ्रान्तावपि प्रतीयमानत्वात्तादात्म्यवद्भ्रान्तावेव प्रतीत्या तत्सत्त्वाभावस्य साधयितुमशक्यत्वाद्युक्त्यन्तरेण तं साधयति **अनिर्वचनीयतेति**।

**वा०र०**— मूले **द्वितीयस्तु स्यादिति**। अङ्गीकर्तुं युक्त इत्यर्थः। तत्पक्षेऽनिर्वचनीयत्वानुपपत्तेरभावादिति भावः। न तावता रजतमनिर्वचनीयं मन्यमानस्य कोऽपि दोषो नेति मन्तव्यम्। प्रकृतस्यासत एवापरोक्षत्वादिना ज्ञानस्य प्राप्तेरित्याशयेन सत्त्वमसदिति परिशिष्टपक्षदूषणपरतया सत्त्वस्येत्यादि संपूर्णभाष्यं योजयति मूले **ततश्च यथेति**। **विशिष्टप्रतीततेति** मूलम्। अपरोक्षतया सत्त्वेन च प्रतीततेत्यर्थः।

**विट्ठ०**— **विशिष्टप्रतीतता** अपरोक्षतया सत्त्वेन च प्रतीततेत्यर्थः।

**४३८ सु०— आह। 'अपरोक्षतया सत्त्वेन च प्रतीतत्वमसत्यप्यन्यथात्वे वर्तमानमनैकान्तिकमि'ति यदुक्तं तदयुक्तम्। अन्यथात्वस्यासत्त्वाभावात्। शुक्तौ तावदिदन्ता सत्यैव। तत्संसर्गश्च रजते रजत(त्व)वदनिर्वचनीय एवारोपितः। एवं रजतत्वं च रजतेऽनिर्वचनीयं, तत्संसर्गश्चेदमास्पदे अनिर्वचनीय एवारोपितः।**

**परि०— आहेति** उक्तदोषपरिहारमाह। मायीत्यर्थः। तमनुवदति **अपरोक्षतयेति**। **अन्यथात्व इति**। शुक्तिकेदमंशस्य यो रजतत्वसंसर्गः यश्च रजते इदंतासंसर्गः तदुभयरूपान्यथात्व इत्यर्थः।

**वं०प०**— **तत्संसर्गश्चेति**। शुक्तिगतेदन्तासंसर्गश्च रजतेऽनिर्वचनीय एवारोपित इत्यन्वयः। तत्र दृष्टान्तो **रजतवदिति**। यथा शुक्तौ रजतमनिर्वचनीयमारोपितं तद्वदित्यर्थः।

**श्रीनिधि०**— **अनिर्वचनीय एव** प्रातिभासिक एव। एवमुत्तरत्रापि।

**वा०चं०**— अनिर्वचनीयत्वे पराभिमतां युक्तिं सूचयन्नेव तं पक्षमुत्थापयति **आहेति**। अन्यथात्वशब्दबोधितस्येदन्तारजतत्वसंसर्गस्य तथा सत्त्वसंसर्गस्यासत्त्वं किमिदन्तारजतत्त्वसत्त्वानामसत्त्वादभ्युपगम्यते आहोस्वित्तेषां सत्त्वेऽपि संसर्गाणामारोपितत्वमात्रेण। नाद्यः। सत्त्वेदन्त्वयोः शुक्तिकायां सत्त्वाद्रजतत्वस्य च रजते प्रातिभासिकत्वादसत्त्वाभावात्। न द्वितीयः। प्रातिभासिकत्वेनैवारोपितत्वोपपत्तेरित्याशयेनाह **शुक्तौ तावदित्यादिना**। अत्रानिर्वचनीय इत्येव वक्तव्ये आरोपित इत्यप्युक्त्याऽधिष्ठानसत्तासंसर्गप्रतिभास एवात्र प्रातिभासिकत्वं न तु सत्त्वान्तरमित्येष पक्षोऽत्राशङ्क्यत इति सूचयति।

**वा०र०**— **तं पक्षमिति**। अनिर्वचनीयत्वपक्षमित्यर्थः। अन्यथात्वमनिर्वचनीयमित्यन्यथात्वे प्राग्विकल्पितं द्वितीयं पक्षमनिर्वचनीयरजतगतं सत्त्वमनिर्वचनीयमित्येतद्विकल्पीयतृतीयपक्षं चेति यावत्। उभयसङ्ग्रहाय





सामान्यतस्तं पक्षमित्येवोक्तमिति ज्ञेयम् । अन्यथात्वस्यासत्त्वाभावादिति प्रतिज्ञाय मूले शुक्तौ तावदित्यादिना तदुपपादनं कृतम् । यदपि रजत इत्यादिना सत्त्वस्यासत्त्वाभावोपपादनं च कृतं तदुभयं मिलित्वा मूलकाराभिप्रेत-विकल्पप्रदर्शनपूर्वकं तन्निरासप्रकारं च तदभिप्रेतं दर्शयति **अन्यथात्वशब्देत्यादिना** । इदन्ताया रजते यः संसर्गः रजतत्वस्य चेदंपदार्थशुक्तिकायां यः संसर्गस्तस्येति योज्यम् । **किमिदन्तेति** । तेष्विदन्तारजतत्वयोरसत्त्वा-दन्यथात्वपदोक्तस्य संसर्गद्वयस्यासत्त्वम् । सत्त्वस्यासत्त्वात्तत्संसर्गस्यासत्त्वमिति योजना । एवमुत्तरत्रापि । तत्संसर्गाणामिति मूलकोशानुसारी पाठः स्वरस एव । संसर्गाणामित्येव पाठेऽपि शुक्तिकागतेदन्तादिसंसर्गाणा-मित्यर्थः । मात्रेणेत्यनन्तरमसत्त्वमित्यनुवर्तते । **प्रातिभासिकत्वादिति** । प्रातिभासिकपदार्थं च स्वयमेव कथयिष्यति **अत्र शङ्क्यत इतीति** । प्रातिभासिकत्वं नामाविद्योपाधिकं सत्त्वान्तरमित्येतत्तु अपर आह सदिदमित्यादिना शङ्किष्यत इति भावः ।

**विठ्ठ०— रजतत्ववदनिर्वचनीय एवेति** । यथा रजतमारोपितं तथा रजतेदन्तासंसर्गोऽपि प्रातिभासिक एवारोपित इत्यर्थः ।

**तस्यानिर्वचनीयत्वे अनवस्थितिः—**

**४३९ सु०— यदपि 'रजते सत्त्वमसदेवापरोक्षतया सत्त्वेन प्रतीयत' इत्यभिहितम् । तच्चानुपपन्नम्, शुक्तिकायां सदेव सत्त्वं रजते प्रतीयते न तु रजतस्य परं सत्त्वं नामास्तीत्यङ्गीकारात् ।**

'शुक्तिकेदन्तासंसर्गवत्तत्सत्तासंसर्गस्याप्यनिर्वचनीयस्यैवारोपितस्य प्रतीयमान-त्वात्' इति प्राग्विकल्पितं पक्षमाशङ्क्य परिहरति **तस्येति** ।

## अनु०— तस्यानिर्वचनीयत्वे स्यादेव ह्यनवस्थितिः ।।

इदन्तारजतत्वयोरितरेतरसंसर्गस्य तथा रजते शुक्तिकासत्त्वसंसर्गस्य **अनिर्वच-नीयत्वे** अङ्गीक्रियमाणे **अनवस्थितिः स्याद्धि** यस्मात्तस्मात् 'उभयमसदेवाङ्गीकरणीयमि'ति पूर्वेण संबन्धः ।

**परि०— प्राग्विकल्पितमिति** । तस्मात् भ्रान्तावेवेत्येतदवतारिकायां विकल्पितं तथा तत्सत्त्वं सत् असत् अनिर्वचनीयं वेति विकल्पितं चेत्यर्थः ।

**वं०प०— इतरेतरेति** । इदन्तासंसर्गो रजते रजतत्वसंसर्गश्चेदमास्पद इत्येवमितरेतरसंसर्गस्येत्यर्थः ।





**कं०रा०**— तथाऽपि रजते शुक्तिसत्तासंसर्गस्यासत एव भानमङ्गीकर्तव्यमित्यत आह **शुक्तिकेदन्ता-संसर्गवदिति**। **इतरेतरेति**। शुक्तिकेदमंशस्य रजतत्वसंसर्गो रजतस्य चेदन्तासंसर्ग इतीतरेतरसंसर्गो बोध्यः।

**वा०र०**— मूले **इदन्तारजतत्वयोरितरेतरसंसर्गस्येति**। अत्रेतरेतरशब्दाभ्यां रजतेदंकारास्पदे गृह्येते। तथा चेदन्तायाः स्वाधारेदमास्पदापेक्षयेतरस्मिन् रजते रजतत्वस्य च स्वाधाररजतापेक्षयेतरस्मिन्निदंकारास्पदे यः संसर्गस्तस्येति योज्यम्। शुक्तिकायां रजतत्वसंसर्गो रजते च शुक्तिकागतेदन्तासत्त्वयोः संसर्गश्चारोपिततया प्रतीयत इत्यङ्गीकारेऽनवस्थोक्ता भाष्ये। न च तावन्मात्राङ्गीकारे सा प्राप्नोति। तावदङ्गीकृत्यापि तत्संसर्गद्वयं व्यावहारिकमित्यस्मिन्पक्षे प्रातिभासिकत्वेऽपि प्रातिभासिकत्वेनैव प्रतीयत इत्यस्मिन्पक्षे संसर्गद्वयं प्रातिभासिकं सद्व्यावहारिकत्वेन प्रतीयत इत्यङ्गीकारेऽपि सा प्रातिभासिकगता व्यावहारिकता सतीति पक्षे वा असतीति पक्षे वा अनवस्थाया अप्रवृत्तेः। तस्मात्प्रातिभासिकं संसर्गद्वयम्। तच्च व्यावहारिकत्वेन प्रतीयते। सा च तथाविधसंसर्ग-द्वयगता व्यावहारिकताऽनिर्वचनीयैवारोपितेति पक्षे तत्रापि तथा प्रतीतिपरम्परास्वीकार एवानवस्थेति वाच्यम्। न चोक्तपक्षान्तरेषु संभवत्सु सत्सु अनवस्थाप्रसञ्जकपक्षाङ्गीकार एव परस्य प्राप्नोति। येन तं प्रति तत्पक्षेऽनवस्थो-द्भावनं सङ्गतं स्यादित्याशङ्कापरिहाराय दूषणान्तरेण पक्षान्तरनिरासप्रातिभासिकोऽस्य स्पष्टत्वमिति भावेन।

**वि०ठ०**— (**इति प्राग्विकल्पितमिति**। पूर्वविकल्पेषु द्वितीये वक्ष्याम इत्युक्तम्। अन्यथात्वमनिर्वचनीय-मिति पक्षान्तरे सत्त्वं सदसदनिर्वचनीयं वेति विकल्पितं पक्षं इत्याहेत्युक्तप्रकारेणाशङ्क्य परिहरतीत्यर्थः।) **इतरेतर-संसर्गस्य** इत्यतःपरम् अन्यथात्वपदेनोक्तस्येति शेषः।

**४४० सु०— तथा हि। 'संसर्गद्वयमनिर्वचनीयमि'ति कोऽर्थः। किं व्यावहारिकमुत प्रातिभासिकमिति॥ नाद्यः अनङ्गीकारात्। तथात्वे वा रजतस्यापि व्यावहारिकत्वापातात्॥ द्वितीये प्रातिभासिकतयैव प्रतीयते, व्यावहारिकतया वा। नाद्यः प्रवृत्त्यभावप्रसङ्गात्। न हि प्रातिभासिकमर्थक्रियासूपयुक्तं क्वचिदुपलब्धं यतस्तद्भावं प्रतीत्यापि प्रवर्तेत। द्वितीये तु किं व्यावहारिकता सती अथासती। नाद्यः प्रातिभासिकत्वानुपपत्तेः। द्वितीयेऽपरोक्षतया सत्त्वेन चासतोऽपि प्रतीतिप्रसङ्गः॥ अथ सा व्यावहारिकताऽप्यनिर्वचनीयैवारोपितेत्युच्यते तदा 'अनिर्वचनीये'ति कोऽर्थ इत्यादेरावृत्त्याऽऽरोपपरम्पराऽपर्यवसानापत्तिः स्यात्। यत्रैवारोपपर्यवसानं तत्रैव प्रवृत्त्यभावो वाऽसतो विशिष्टप्रतीतिर्वा प्रसज्येत।**

**परि०**— **प्रातिभासिकत्वानुपपत्तेरिति**। संसर्गद्वयस्येत्यनुकर्षः। नहि यस्य व्यावहारिकता सती तस्य प्रातिभासिकत्वं संभवतीति भावः। **विशिष्टप्रतीतिरिति**। सत्त्वप्रकारकापरोक्षप्रतीति-रित्यर्थः।







**यादु०— यत्रैवारोपपर्यवसानमिति** । सत्त्वस्यारोपपर्यवसानं ह्युभयत्र वक्तव्यम् । यदा सत्त्वं प्रातिभासिकतयाऽसत्त्वेन वा प्रतीयते तदा । यदा वा तदसदेव सत्त्वेन प्रतीयते तदेति । तत्राद्ये प्रवृत्त्यभावः । द्वितीये सत्त्वेनापरोक्षतया च प्रतीतिप्रसङ्ग इत्यर्थः ।

**वं०प०— प्रातिभासिकत्वानुपपत्तेरिति** । संसर्गद्वयस्येति शेषः । न हि यस्य व्यावहारिकसत्त्वं तत्प्रातिभासिकमिति संभवतीति भावः । **परम्पराऽपर्यवसानेति** । अनवस्थेत्यर्थः । अनवस्थापरिहाराय किञ्चिद्दूरं गत्वा संसर्गद्वयं प्रातिभासिकमिति वा वक्तव्यमसदिति वा वक्तव्यम् । तत्र प्रातिभासिकत्वे दूषणमाह **प्रवृत्त्यभाव इति** । असत्त्वे दूषणमाह **असत इति** ।

**आनन्दः— प्रातिभासिकत्वानुपपत्तेरिति** । संसर्गद्वयस्येति शेषः ।

**कं०रा०— तथात्व इति** । रजतगतस्य संसर्गद्वयस्य व्यावहारिकत्वे धर्मापेक्षया धर्मिणो न्यूनसत्ताकत्वायोगेन रजतस्यापि व्यावहारिकत्वापातादित्यर्थः । ननु नास्ति नासीन्न भविष्यति रजतमिति बाधबुद्धिगोचरस्य प्रतिपन्नोपाधिस्थत्रैकालिकनिषेधप्रतियोगित्वरूपधर्मस्य व्यावहारिकत्वेऽपि धर्मिणो रजतस्य प्रातिभासिकत्वान्नोक्तनियम इति चेत् । मैवम् । धर्मिसत्ताप्रतिकूलत्वरहितधर्मापेक्षया धर्मिणो न्यूनसत्ताकत्वं नेति नियमस्य विवक्षितत्वेन प्रतिपन्नोपाधिस्थत्रैकालिकनिषेधप्रतियोगित्वरूपधर्मस्य च धर्मिसत्ताप्रतिकूलतया तद्भङ्गस्य वक्तुमशक्यत्वात् । **अनिर्वचनीयेति कोऽर्थ इति** । व्यावहारिकताऽप्यनिर्वचनीयेति कोऽर्थः । किं व्यावहारिक्युत प्रातिभासिकी । नाद्यः अनङ्गीकारात् । तथात्वे वा संसर्गद्वयस्यापि व्यावहारिकत्वापातात् । द्वितीयेऽपि प्रातिभासिकी व्यावहारिकता किं प्रातिभासिकत्वेन प्रतीयते उत व्यावहारिकतया । नाद्यः । प्रवृत्त्यभावप्रसङ्गात् । द्वितीये व्यावहारिकतायां प्रतीयमाना व्यावहारिकता किं सत्युतासती । नाद्यः । व्यावहारिकतायाः प्रातिभासिकत्वानुपपत्तेः । न हि संभवति यस्य व्यावहारिकत्वं सत्तत्प्रातिभासिकमिति । द्वितीयेऽपरोक्षतया सत्त्वेन चासतोऽपि प्रतीतिप्रसङ्गः । अथ व्यावहारिके प्रतीयमाना व्यावहारिकताऽप्यनिर्वचनीयतयैवारोपितेत्युच्यते तदाऽनिर्वचनीयेति कोऽर्थ इत्यादेस्तत्राप्यावृत्त्या व्यावहारिकतारोपपरम्पराया अपर्यवसानलक्षणानवस्थापत्तिः स्यादित्यर्थः । **तत्रैवेति** । व्यावहारिकत्वारोपपरम्परापर्यवसानं द्वेधा क्वचिद्व्यावहारिकतायाः प्रातिभासिकत्वेन भानादसत्त्या एव भानाद्वेति । तत्राद्ये प्रवृत्त्यभावः प्रसज्येत । द्वितीयेऽसतो विशिष्टप्रतीतिः प्रसज्येतेति व्यवस्थिततया योजनीयम् ।

**श्रीनिधि०— यत्रैवारोपपर्यवसानमिति** । अनवस्थाभिया यदि क्वचित्प्रातिभासिकत्वमङ्गीकृत्य तस्य च प्रातिभासिकत्वेन प्रतीतिः स्वीक्रियते तदा प्रवृत्त्यभावः यद्यारोप्यस्यासत्त्वं स्वीक्रियते तदा सत्त्वेन प्रतीतौ प्रवृत्त्यभावप्रसङ्गसत्त्वेन प्रतीयत इति वाच्यम् । तथा चासतस्सत्त्वेनापरोक्षतया च प्रतीतिः प्रसज्यत इत्यर्थः ।

**वा०चं०—** नन्वत्र संसर्गद्वयस्यानिर्वचनीयत्वेऽपि व्यावहारिकत्वेन प्रातिभासिकत्वेऽपि तथैव प्रतीत्या व्यावहारिकत्वेन प्रतीतावपि व्यावहारिकतायाः सत्त्वेनासत्त्वेन वोपपत्तौ नानवस्थाप्रसङ्ग इत्यतो दूषणान्तरेण





पक्षान्तरनिरासेन प्रातिभासिकस्य प्रातिभासिकव्यावहारिकत्वेन प्रतीतिपरंपराकल्पनेऽनवस्थाप्रसङ्गं व्युत्पादयितुमाह **तथा हीति** । अत्र संसर्गद्वयमित्युक्तिरन्यथात्वशब्दार्थतयेदन्तारजतत्वसंसर्गयोरेकत्वमित्यभिप्रेत्य । अत्र संसर्गद्वयव्यावहारिकतापक्षस्य परानभिमतत्वेऽप्यनिर्वचनीयशब्दार्थतया प्रसक्तेर्विकल्पयति **किमिति** । प्रतीतत्त्व-रूपप्रातिभासिकत्वस्य व्यावहारिकत्वस्य वाऽर्थनिबन्धनत्वाभावेन प्रतीतिमात्रनिबन्धनतया प्रातिभासिकत्वं वदता प्रतीतिविषयत्वस्यावश्यवक्तव्यत्वाद्व्यावहारिकत्वपक्षे प्रतीत्यविकल्पेन दूषणान्तरमेवोक्त्वा प्रातिभासिकत्वपक्षेऽपि स्वरूपेण प्रतीतेर्निराकरिष्यमाणत्वात्सत्त्वेन प्रतीतिपरिशेषमभिप्रेत्य तां विकल्पयति **द्वितीयेऽपीति** । **तदेति** । संसर्गद्वयव्यावहारिकताया अनिर्वचनीयत्वस्य व्यावहारिकत्वरूपस्यानङ्गीकारादङ्गीकारे वा संसर्गद्वयस्यापि व्यावहारिकत्वापत्तेः । प्रातिभासिकत्वरूपत्वे च प्रतीतेरावश्यकत्वात्प्रातिभासिकत्वेनैव प्रतीतौ प्रवृत्त्यभावप्रसङ्गेन व्यावहारिकत्वेन, प्रतीतौ च तस्या व्यावहारिकता, अव्यावहारिकतायाः सत्त्वे व्यावहारिकतायाः प्रातिभासिकत्वा-ऽनुपपत्त्याऽसत्त्वे चासतो विशिष्टप्रतीत्यापत्त्या व्यावहारिकतानिष्ठव्यावहारिकताया अनिर्वचनीयत्वे उक्तरीत्या अनवस्थेत्यर्थः । ननु संसर्गद्वयस्य व्यावहारिकतायाश्च व्यावहारिकत्वासत्त्वपक्षयोरनङ्गीकारपराहतत्वेनाशङ्क-नीयत्वेऽपि प्रातिभासिकस्य प्रातिभासिकत्वेन प्रतीतावसतोऽसत्त्वेन सत्त्वेन वा प्रतीत्यभ्युपगमे आरोप-परम्पराप्रसक्तेरभावान्नानवस्थेत्यत एतत्पक्षत्रयेऽनवस्थाऽप्रसक्तावप्याद्यद्वये प्रवृत्त्यभावापत्त्या तृतीयेऽसतोऽपि विशिष्टप्रतीत्यापत्त्यैतत्पक्षत्रयं प्रदूष्य प्रातिभासिकस्य प्रातिभासिकत्वेन व्यावहारिकत्वेन प्रतीतिपक्षं परिशेष्य अनवस्थाप्रसङ्गस्यात्राभिमतत्वान्नानुपपत्तिरित्याह **यत्रैवेति** ।

**वा०र०**— संसर्गता व्यावहारिकता प्रातिभासिकीति पक्षे भाष्यकृतानवस्थादूषणतयोच्यत इति नानुपपत्तिरिति भाष्याभिप्रायं दर्शयितुं निराकरणीयपक्षान्तरप्रदर्शनपूर्वकं तत्रानवस्थाप्रसक्त्यभावं चोपदर्श्य पक्षान्तरस्य दोषान्तरेण निरासमुपदर्शयन् परिशेष्यपक्षं च प्रदर्शयन्नेव तत्रानवस्थां मूलकार उपपादयतीत्याह **नन्वत्र संसर्गद्वयस्येत्यादिना** । **व्यावहारिकत्वेनेति** । व्यावहारिकत्वमित्यङ्गीकार इत्यर्थः । नानवस्थाप्रसङ्ग इत्युत्तरेण संबन्धः । **तथैव** प्रातिभासिकत्वेनैव । **प्रतीत्या** प्रतीत्यङ्गीकारे नावस्थेत्युत्तरेण संबन्धः । **व्यावहारिकत्वेन प्रतीतावपीति** । अनिर्वचनीयरजतगतप्रातिभासिकसंसर्गद्वयस्य व्यावहारिकत्वेन प्रतीतिपक्षेऽपीत्यर्थः । **व्यावहारिकतायाः** उक्तसंसर्गद्वयगताया इति पूरणीयम् । सत्त्वेनेत्यादेः सत्त्वेऽसत्त्वे वाऽङ्गीक्रियमाणे बाधकाभावेन सत्त्वासत्त्वयोरुपपत्तावित्यर्थः । उपपन्नत्वादेव तदङ्गीकार इति यावत् । **निरासेन** निरासपूर्वकम् । निरासेन निमित्तेनेति वा । निरासे सति परेण प्रातिभासिकस्येत्यादिकल्पने कृते सतीति यावत् । प्रातिभासिकस्यातादृशसंसर्गद्वयस्य प्रातिभासिकं यद्व्यावहारिकत्वं तेन प्रतीतीति योजना । **व्युत्पादयितुं** तत्पक्षे भाष्येऽनवस्थादूषणं दीयत इति सूचनपूर्वकं तं व्युत्पादयितुमित्यर्थः । पूर्वोक्तरीत्येदन्तारजतत्वसत्त्वानां संसर्गभेदेन संसर्गत्रयप्राप्तेः संसर्गद्वयमित्युक्तिः कथमित्यत आह **अत्रेति** । तथा चान्यथात्वपदोक्तसंसर्गो द्विविधोऽप्येकत्वेन विवक्षितः । सत्त्वसंसर्गश्च द्वितीय इत्येवं संसर्गद्वयं विवक्षितमिति भावः । संसर्गद्वयं प्रातिभासिकमेवेति पराङ्गीकारे सति व्यावहारिकताया अप्रसक्तेर्विकल्पा-नवकाश इत्यतोऽनिर्वचनीयशब्दार्थतया संभावितत्वात्तत्कोटिविकल्पो युज्यत इति मूलाभिप्रायं वदन्नवतारयति





**अत्र संसर्गेति** । पक्षस्यापरानभिमतत्वेऽपीति नञ्युक्त एव मूलकोशस्थपाठानुसारेण पाठः युक्तश्च । **प्रतीतत्व-रूपेति** । अनेन प्रातिभासिकं संसर्गद्वयमिति पक्षे प्रातिभासिकतया प्रतीयत इत्यादि विकल्पपूर्वकनिराकरणाद्व्यावहारिकं तदितिपक्षेऽपि व्यावहारिकतया वा प्रतीयत इत्यादिविकल्पनिरासः कर्तव्यः । तत्कुतस्तथा निरासमकृत्वाऽनङ्गीकारेण दूषणं व्यावहारिकतापक्षस्येत्याशङ्का निराकृता भवति । उक्तविकल्पस्य प्रतीत्यावश्यकत्वोपेतप्रातिभासिकत्वपक्ष उत्थानेऽपि व्यावहारिकत्वपक्षे तदनावश्यकतया तदनुत्थानात् । तदेवोपपादितम् । प्रतीततत्वरूपे आदिना । प्रतीत्य विकल्पेन । तद्विकल्पमकृत्वा दूषणान्तरम् । अनङ्गीकाररूपम् । अर्थनिबन्धनत्वाभावेनेत्यनेनैवासत्त्वपक्षेऽप्यर्थाभावादेवासत्त्वेन वा सत्त्वेन वा प्रतीयत इति विकल्प्य बन्धनत्वाभावेऽवकाशः संभवतीति । स च योजनादसत्यप्यसत्त्वेन सत्त्वेन वा प्रतीत्यभ्युपगम इति वक्ष्यमाणटीकोपपन्नेति ज्ञेयम् । तर्हि प्रातिभासिकत्वपक्षे स्वरूपेण प्रतीयते रूपान्तरेण वा द्वितीयेऽपि प्रातिभासिकतया वा व्यावहारिकतया वेति विकल्पनीयम् । तथा व्यावहारिकत्वादिना प्रतीतिपक्षस्येव स्वरूपेण प्रतीयत इति पक्षस्याप्यत्र मूले परिहारः कर्तव्यः स्यादित्यतस्तत्र निमित्तमुक्तं प्रातिभासिकत्वपक्षेऽपि स्वरूपेणेत्यादि निराकरिष्यमाणत्वात् । ननु च संसर्गद्वयं नेत्यादिशङ्कानिरासावसर इति शेषः । संसर्गद्वयमनिर्वचनीयमिति पक्षदूषणपरमूलानुसारेण अनिर्वचनीयरजतनिष्ठप्रातिभासिकसंसर्गद्वयनिष्ठप्रातिभासिकव्यावहारिकतायामुक्तं दोषमुपपादयति **संसर्गद्वयव्यावहारिकताया इति** । **आवश्यकत्वादिति** । प्रतीततत्वरूपप्रातिभासिकत्वे प्रतीतिनिबन्धनत्वस्य प्रागुक्तत्वादिति भावः । **व्यावहारिकता व्यावहारिकताया इति** । संसर्गद्वयनिष्ठप्रातिभासिकव्यावहारिकतागताया व्यावहारिकताया इत्यर्थः । व्यावहारिकतानिष्ठेत्यत्राप्ययमेवार्थः । **सत्त्वे व्यावहारिकताया इति** । प्रथमव्यावहारिकताया इत्यर्थः । न हि यस्य व्यावहारिकत्वं सत् तत्प्रातिभासिकमिति संभवतीति भावः । **आपत्त्येति** । ततश्च द्वितीयव्यावहारिकतायामेव व्यभिचारस्याप्यापत्त्येति पूरणीयम् । **उक्तरीत्येति** । अत्र चोक्तरीत्येत्यस्य द्वितीयव्यावहारिकताया अनिर्वचनीयत्वस्य व्यावहारिकत्वरूपस्यानङ्गीकारादङ्गीकारे वा संसर्गद्वयनिष्ठव्यावहारिकताया अपि व्यावहारिकतापत्तेः प्रातिभासिकत्वरूपत्वेनोक्तरीत्या प्रतीतेरावश्यकत्वात्प्रातिभासिकत्वेन तत्प्रतीतौ प्रवृत्त्यभावप्रसङ्गेन व्यावहारिकत्वेन प्रतीतौ वाच्यायां तस्या अपि प्रातिभासिकद्वितीयव्यावहारिकतागतायास्तृतीयव्यावहारिकतायाः सत्त्वे द्वितीयव्यावहारिकतायाः प्रातिभासिकत्वानुपपत्त्याऽसत्त्वे वा सत्यां तृतीयव्यावहारिकतायामेव विशिष्टस्य हेतोर्व्यभिचारापत्त्या तृतीयस्या अपि व्यावहारिकतायाः अनिर्वचनीयत्वेनारोपितत्वे वाच्य इत्यर्थः । तथा तृतीयव्यावहारिकताया अप्यनिर्वचनीयत्वस्य व्यावहारिकत्वरूपत्वानङ्गीकारादित्यादिक्रमेण व्यावहारिकत्वप्रातिभासिकत्वेऽपि तथैव प्रतीतिः । व्यावहारिकत्वेन प्रतीतिपक्षेऽपि सत्त्वासत्त्वपक्षाणामनुपपत्तौ प्रातिभासिकतृतीयव्यावहारिकतागतचतुर्थव्यावहारिकताया अनिर्वचनीयत्वेनारोपितत्वं वाच्यमेवं चतुर्थव्यावहारिकताया अनिर्वचनीयस्य व्यावहारिकत्वरूपत्वस्यानङ्गीकारादित्यादिक्रमेणानिर्वचनीयत्वं वाच्यमेव । तत्रापीत्यपर्यवसितारोपपरम्पराङ्गीकारा इत्यर्थः । तेन तृतीयव्यावहारिकताया अनिर्वचनीयत्वस्योक्तरीत्येत्यनेनोक्तावपि चतुर्थादिक्रमेण प्राप्तव्यावहारिकतानां तदनुक्त्याऽनवस्थोक्तिः कथमिति शङ्कानवकाशः । इत्यादेरावृत्त्येति मूलपदं चोक्तार्थं भवतीति ज्ञेयम् । नन्वेवं सति प्रातिभासिकरजतसंसर्गद्वयं प्रातिभासिकं तच्च व्यावहारिकतया प्रतीयते सा च





व्यावहारिकता प्रातिभासिकी प्रातिभासिक्या व्यावहारिकतया प्रतीयत इति परम्परास्वीकारे अनवस्थेति वक्तव्यम् । तत्कथम् । तस्यानिर्वचनीयत्वे अनवस्थितिः स्यादिति संसर्गद्वयस्यानिर्वचनीयत्वाभ्युपगममात्रेऽनवस्था-प्रतिपादनस्य भाष्ये सत्त्वेन तदभ्युपगममात्रे च पक्षान्तराणामपि सत्त्वेन तेषु चानवस्थाया अभावेन सङ्कोचकस्य चाप्रतीतेर्भाष्ये उक्ताभ्युपगममात्रे प्रसक्तयावत्पक्षसाधारण्येनानवस्थाया वक्तुमयुक्तत्वादित्याशङ्कानिरासाय यत्रैवा-रोपेति मूलं प्रवृत्तमित्याशयेन तथा शङ्कामुत्थाप्य तन्निरासकतया तद्योजयन्नेवावतारयति **ननु संसर्गद्वयस्येत्यादिना**। अयमर्थः । संसर्गद्वयमनिर्वचनीयमिति पक्षेऽपि तस्यानिर्वचनीयत्वं नाम व्यावहारिकत्वमित्येकः पक्षः । प्रातिभासिकत्वमेवानिर्वचनीयत्वम् । तच्च प्रातिभासिकं संसर्गद्वयं प्रातिभासिकत्वेनैव प्रतीयत इति द्वितीयः । प्रातिभासिकं संसर्गद्वयं व्यावहारिकतया प्रतीयते सा च व्यावहारिकता सतीति तृतीयः । साऽसति किन्त्वसत्त्वेन प्रतीयत इति चतुर्थः । सापि सत्त्वेनैव प्रतीयत इति पञ्चमः । इत्येवं पञ्च पक्षाः संभवन्ति । उक्तं च टीकायाम् । तथाहीत्येतदवतारावसरे प्राक् । संसर्गद्वयस्य निर्वचनीयत्वेऽपि व्यावहारिकत्वेन प्रातिभासिकत्वेऽपि तथैव प्रतीत्येत्यादि । तेषु संसर्गद्वयस्य व्यावहारिकत्वमिति प्रथमपक्षस्य व्यावहारिकतया प्रतीतिपक्षगतव्यावहारिकता सतीति तृतीयपक्षस्य च यद्यपि न शङ्कार्हत्वम् । तत्रानवस्थायाऽप्रसरसद्भावेऽपि तयोः परेणानङ्गीकारात् । तदेतदाह **संसर्गद्वयस्येत्याद्यनाशङ्कनीयत्वेऽपीत्यनेन** । अत्र च संसर्गद्वयस्य व्यावहारिकत्वपक्षस्य व्यावहारिकतायाश्च सत्त्वपक्षस्येत्येवं पक्षद्वयाभिप्रायेण द्विवचनम् । न तु सत्त्वस्य संसर्गद्वये अनङ्गीकारोक्तिरत्र विवक्षिता । तस्यानिर्वचनीयत्वमिति प्राग्विकल्पितवित्तीयपक्षदूषणप्रक्रमादिति ज्ञेयम् । अनेनैतदपि सूचितम् । **यत्रैवेति** मूले पक्षान्तरनिरासाय प्रवृत्त्यभावादेरिव व्यावहारिकत्वसत्त्वपक्षदूषणायाङ्गीकारस्यापि वक्तव्यतया तदनुक्त्ययोग इति न शङ्कनीयम् । तत्पक्षयोरनङ्गीकारपराहततया पक्षान्तरसाम्याभावेन तच्छङ्काया अप्रसरादेव तद्दूषणायानङ्गीकार-स्यावक्तव्यत्वादिति । तथापि पक्षान्तरशङ्का संभवतीत्याह **प्रातिभासिकस्येति** । एतत्तृतीयपक्षे आरोपपरम्परा-प्रसक्तेरभावादित्युत्तरेण संबन्धः । व्यावहारिकताऽसतीति पक्षगतासतोऽसत्त्वेन प्रतीतिः सत्त्वेन वा प्रतीतिरिति चतुर्थपञ्चमपक्षयोरनवस्थाप्रसरो नास्तीति प्रतिपादयति **असत इति** । अत्र व्यावहारिकताया इति स्त्रीलिङ्गेन प्रकृतत्वेऽपि सामान्यरूपेण परामर्शविवक्षणाद्व्यावहारिकतापदोपस्थापितव्यावहारिकत्वस्य विशेषतया विवक्षणाद्वा असत इति निर्देशोपपत्तिः । अत एव व्यावहारिकत्वेनेति वक्ष्यति । तथा चोक्तपक्षत्रये संसर्गद्वयमात्रारोपप्राप्तावपि तत्रारोपान्तराभावेन परम्परा न प्रसज्यत इति तेषु पक्षेष्वनवस्थायाऽभावादनिर्वचनीयत्वमात्राभ्युपगमेऽनव-स्थोक्तिरयुक्तेति । इदं च प्रथमारोपमात्राश्रयणेनानवस्थाभावप्रतिपादनं संसर्गद्वयस्येति । विशिष्य टीकानिर्देशानुसारेण कृतम् । यदा तु संसर्गद्वये व्यावहारिकतारोपितेति स्वीकृत्याप्यनवस्थाभावशङ्काभिप्रायस्तदा व्यावहारिकतायाश्चेत्यत्र व्यावहारिकतयोरिति विवक्षितम् । यावद्विवक्षितसङ्ग्रहाभिप्रायेणैव विशिष्य व्यावहारिकताया अनुक्तत्वात् । अन्यथा तद्व्यावहारिकतायाश्चेत्यवक्ष्यत् । तदा संसर्गद्वयगतव्यावहारिकता अनिर्वचनीयेति पक्षमालम्ब्यापि तस्या अनिर्वचनीयत्वेऽपि प्रागुक्तरीत्या पञ्चपक्षप्रसक्तौ व्यावहारिकत्वमनिर्वचनीयत्वमित्यादिपक्षदूषणमपि व्यावहारिकत्व-सत्त्वपक्षयोरित्याद्येव । तदा संसर्गद्वयारोपः संसर्गद्वये च व्यावहारिकत्वारोप इत्यारोपद्वयमात्रसद्भावेऽपि न तत्परम्पराप्रसक्तिरिति योज्यम् । यदि त्वारोपत्रयचतुष्टयं वेत्याद्यङ्गीकृत्याप्यारोपपरम्पराभावसिध्यर्थमारोपिततया





अङ्गीकृततद्वयावहारिकतायामनिर्वचनीयत्वं नाम व्यावहारिकत्वमित्यादि पञ्च पक्षान् प्रकल्प्य तत्रारोपपरम्पराभावाभिधानं विवक्षितम् । तदा व्यावहारिकताया इति सामान्योक्त्यैव तृतीयचतुर्थादिव्यावहारिकताश्रयणेनाप्यनवस्थाभावशङ्कापरोऽयमेव टीकाग्रन्थः । तेष्वपि यत्रारोपत्रयं तत्र तावन्मात्रसत्त्वेऽपि परम्परा तु नास्तीत्यादि प्रकारेण योज्यम् । एतेन यत्रैवारोपपर्यवसानमित्यनेनात्र चतुःपञ्चाद्यारोपानङ्गीकृत्यानवस्थाभावसिध्यर्थं तत्र पक्षान्तरस्वीकारे प्रवृत्त्याद्यभावादिदूषणमिति प्रतीतेः कथं संसर्गद्वयाद्याश्रयणेनैव तदभावशङ्कोत्थानमिति शङ्का गर्भस्रावेणैव परास्ता । व्यावहारिकताया इत्यनेन यावद्विवक्षितस्य सङ्ग्रहात् । व्यावहारिकत्वसत्त्वपक्षयोश्चेत्यादेः सर्वसाम्यात् । असत्त्वेन प्रतीतिपक्षस्य निराकरणं संसर्गद्वये यथोपलक्षणीयमेवं व्यावहारिकतायामपि तत्पक्षस्य प्रागदूषणेऽपि रजते तत्प्रकारवर्णनेन ज्ञातुं शक्यत्वाच्च । एतदभिप्रायेणैव संसर्गद्वयव्यावहारिकतायाः प्रातिभासिकत्वपक्षे प्रातिभासिकत्वेनैव प्रतीतौ प्रवृत्त्यभावप्रसङ्गेनेत्यादि प्रकारप्रदर्शनं कृतम् । प्रत्युत संसर्गद्वयमात्रारोपमारोपद्वयं वाऽङ्गीकृत्यानवस्थाभावशङ्कायां बद्ध्वा सेवाभावेन यत्रैवेत्यस्य तद्दूषणता न सिध्येत् । तस्माद्यत्रैवारोपपर्यवसानमेकमात्रमारोपं वा तद्द्वयं त्रयं चतुष्टयं वेत्यादि पक्षानङ्गीकृत्य भवति तत्रैव प्रवृत्त्याद्यभाव इत्यर्थकं मूलमिति न दोषः । एतेनैव सत्त्वस्यारोपपर्यवसानं ह्युभयत्र वक्तव्यम् । यदा सत्त्वं प्रातिभासिकतयाऽसत्त्वेन वा प्रतीयते तदा; यदा वा तदसदेव सत्त्वेन प्रतीयते तदेति । तत्राद्ये प्रवृत्त्यभावः । द्वितीये सत्त्वेनापरोक्षतया च प्रतीतिप्रसङ्ग इत्यन्यथाख्यातिस्थं यत्रैवेत्यस्य व्याख्यानं चापहस्तितं भवति । संसर्गद्वयमारभ्यारोपप्रसक्त्या सत्त्वस्येत्येकमात्रग्रहणायोगात् । उभयत्रेत्युक्तप्रकारातिरिक्तयोः सत्त्वं व्यावहारिकम् । सत्त्वे प्रतीयमाना व्यावहारिकता सतीति पक्षयोरपि तत्पर्यवसानसत्त्वेनोभयत्रेत्युक्तेरयोगाच्च । एतच्च दूषणग्रन्थे निक्षेप्यम् । न वयं संसर्गद्वयमनिर्वचनीयमिति पक्षे संभावितयावत्पक्षेषु भाष्यकारेणानवस्थोक्तेति ब्रूमः । येनोक्तपञ्चपक्षेषु तदभावात्कथं तदभिधानमिति शङ्कनीयं स्यात् । अपि तूक्तपञ्चपक्षातिरिक्तो यः प्रातिभासिकप्रातिभासिकेन व्यावहारिकत्वेन प्रतीयत इति पक्षस्तत्रैव । तत्र चारोपितत्वसंसर्गद्वयगतव्यावहारिकताया आरोपसद्भावेनारोपपरम्पराप्रसक्तेरित्याह **एतत्पक्षत्रय इत्यादि** । अत्र प्रातिभासिकस्येत्यादिपक्षं परिशेष्यानवस्थाप्रसङ्गस्यात्र भाष्येऽभिमतत्वान्नानुपपत्तिरित्यनेन पक्षान्तरे तत्प्रसञ्जनं भाष्येनाभिप्रेतमिति सूचयति । तर्हि पक्षान्तरे तदप्रसरशङ्कायाः कथं परिहार इत्यत उक्तम् **आद्यद्वय इत्यादि** । परिशेष्येति च । न वयं प्रथमत एव प्रातिभासिकस्येत्युक्तपक्षेऽनवस्था दीयत इति ब्रूमः । येन तद्दानानन्तरं पक्षान्तरे तदसंभवशङ्का भाष्योपरि स्यात् । तत्परिहाराय च यत्नाकरणे न्यूनता स्यात् । अपि तु प्रागुक्तरीत्या संसर्गद्वयस्यानिर्वचनीयत्वं नाम व्यावहारिकत्वं न शङ्कार्हम् । प्रातिभासिकत्वं तदिति पक्षेऽपि तस्य प्रातिभासिकस्य प्रातिभासिकत्वेन प्रतीतिपक्षे प्रकृत्त्याभावापत्तिः । व्यावहारिकतया प्रतीतिपक्षेऽपि सा व्यावहारिकता सतीति न शङ्कार्हम् । असतीति पक्षेऽप्यसत्त्वेन प्रतीतिपक्षे प्रवृत्त्यभावापत्तिः । असत्यास्तस्याः सत्त्वेन प्रतीतिपक्षे चासतो विशिष्टप्रतीत्यापत्तिरित्येवं पक्षान्तरं प्रथमतः प्रदूष्य पश्चाद्विवक्षितपरिशिष्टपक्षेऽनवस्था दीयत इत्येव ब्रूमः । न चैवं सति पुनः पक्षान्तरसद्भावतत्पक्षे दोषत्वाभावादिशङ्कावकाशमर्हति । ततो युक्तमनवस्थाप्रदानं भाष्य इति भावः । पक्षं परिशेष्येत्यनन्तरं उक्तरीत्यारोपपरम्पराङ्गीकार इति पूर्वोक्तरीत्या सिद्धत्वान्नोक्तमिति ज्ञेयम् । न चैतदयुक्तम् । तथाहीत्येतदवतारटीकायाम् । संसर्गद्वयस्यानिर्वचनीयत्वेऽपि व्यावहारिकत्वेनेत्यादिना पक्षान्तरेषु तदसंभव-





शङ्कामुत्थाप्य तन्निरासपरतया तथाहीत्यादिग्रन्थप्रवृत्तिवर्णनात्प्रातिभासिकस्य प्रातिभासिकव्यावहारिकत्वेन प्रतीतिपरम्पराकल्पनेऽनवस्थाप्रसङ्गोपपादकस्योक्तेश्चोक्तपक्षान्तरशङ्कानिरासेन विवक्षितपक्षपरिशेषस्य तथाहि संसर्गद्वयमनिर्वचनीयमिति कोऽर्थः इत्यादिग्रन्थादेव सिद्धिरिति स्पष्टं प्रतीतेर्यत्रेति वाक्येऽपि परिशेषाद्यभिप्रायकल्पने पुनरुक्तिः स्यात् । अत एवोक्तटीकाऽपि पूर्वटीकया गतार्थेति चेत्सत्यम् । तथाऽप्यस्त्यत्र पूर्वोत्तरमूलतट्टीकयोः प्रकारभेदः । पूर्वग्रन्थे हि पक्षान्तरमात्रमुपस्थाप्य तत्रानवस्थैव नास्तीति शङ्कायां तेषामसंभवं प्रदर्श्य परिशिष्टपक्षप्रदर्शनपूर्वकं तत्र दूषणत्वसंभवः प्रतिपादितः । अत एव तत्रोक्तम् **तत्र प्रतीतिपरम्पराकल्पन इति** । अत्र तु विवक्षितपक्षेऽनवस्थाया वक्तुं शक्यत्वेऽपि संसर्गद्वयानिर्वाच्यत्वेऽपि पक्षान्तराणामप्रसरादनवस्थादोषाणामपि सत्त्वेन तदङ्गीकारेऽनवस्थानुपपत्त्या निर्वचनीयत्वमात्राभ्युपगमे भाष्येऽनवस्थोक्त्ययोगे इत्येवं विवक्षितपक्षविशेषोपस्थितिमाश्रित्यानवस्थित्यनुपपत्तिशङ्कायां पक्षान्तरानुपपत्तिमभिप्रेत्यैव विवक्षितपक्षे तदभिधानस्य भाष्ये करणान्न दोष इति स्वयं तत्पक्षान्तरदूषणं स्मारितवान्यत्रैवेति मूलेनेति न पुनरुक्तिः । अत एव तट्टीकापि न प्राचीनटीकया गतार्था । प्रवृत्तिप्रकारभेदात् । पूर्वत्रानवस्थायाः संभवप्रदर्शनाय पक्षान्तरनिराकरणादिकम् । इह तूद्भाव्यमानानवस्थादृढीकरणाय पक्षान्तरनिरासादिकमिति प्रयोजनभेदाच्च । दृष्टं चाद्वैतस्य ब्रह्मस्वरूपानतिरेकपक्षदूषणपूर्वकमतिरेकपक्षपरिशेषेणायथार्थप्रतिपादकत्वमुक्त्वाऽतिरेकपक्षनिराकरणेनानतिरेकपक्षपरिशेषेण तस्य विषयत्वानुपपत्तिरिति प्रयोजनभेदेनैकप्रमेयत्वेऽपि योजनाभेदकरणम् । केचित्तु पूर्वग्रन्थे संसर्गद्वये तद्व्यावहारिकतायां वाऽनिर्वचनीयत्वपक्षेऽनवस्थोपपादकपक्षान्तरनिरासस्य मुखत उपलक्षणया वा सिद्धत्वात्पुनरत्र तत्पक्षयोः संसर्गद्वयं वा तद्व्यावहारिकताया निर्वचनीयेत्युक्तिमूलकानवस्थानुपपत्तिशङ्कापरिहारयोरसङ्गतत्वात्संसर्गद्वयनिष्ठप्रातिभासिकव्यावहारिकतागतव्यावहारिकतायाः प्रातिभासिकत्वाभ्युपगमे समानन्यायतया पक्षान्तरदूषणस्य प्रागभावेऽपि अनवस्थया निगृहीतो यदि निराकृतपक्षान्तराण्येवोपादद्यात्तर्हि प्रागुक्ततन्निरासः समानन्यायतयाऽत्रापि सिद्ध इति बोधनीय इत्याशयेनैतन्मूलटीकाग्रन्थयोः प्रवृत्तिरिति न पुनरुक्तिः । संसर्गद्वयस्य व्यावहारिकातायाश्चेत्यत्र तु संसर्गद्वयस्य वा व्यावहारिकतेति योज्यम् । व्यावहारिकतापदं चावर्तनीयम् । तथा च संसर्गद्वयव्यावहारिकता व्यावहारिकत्वस्येति पर्यवसानान्न दोषः । एवं च प्रागनिराकृतपक्षान्तरकद्वितीयव्यावहारिकताश्रयणेनानवस्थाभिधानेऽनुपपत्तिशङ्का तत्परिहारपरोऽयं टीकाग्रन्थ इति वर्णयन्तीति सकलमकलङ्कम् ।

**विठ्ठ०— तथात्व इति** । रजतेदन्तासंसर्गस्य सत्त्वं संसर्गस्य व्यावहारिकत्व इत्यर्थः । **द्वितीये त्विति** । रजते प्रतीयमानं प्रातिभासिकसंसर्गद्वयं व्यावहारिकतया प्रतीयत इति पक्ष इत्यर्थः । **द्वितीय इति** । रजते प्रतीयमानप्रातिभासिकसंसर्गद्वये सत्त्वादिना अपरोक्षतया च प्रतीयमानं यद्व्यावहारिकत्वं तस्य च सत्त्व इति पक्षे इत्यर्थः । प्रातिभासिकसंसर्गद्वये प्रतीयमाना व्यावहारिकता नासदीये नासतस्सत्त्वेन प्रतीतिप्रसङ्गः । किन्तु सापि व्यावहारिकता अनिर्वचनीयेति चेत् अनिर्वचनीयेति कोऽर्थः । किं व्यावहारिकं उत प्रातिभासिकम् । नाद्यः अनङ्गीकारात् । रजतादेर्व्यावहारिकतापाताच्च । द्वितीये प्रातिभासिकतया प्रतीतौ प्रवृत्त्यभावापत्त्या व्यावहारिकतया प्रतीयत इति वाच्यम् । तस्या व्यावहारिकतायाः सत्यत्वे प्रातिभासिकतायोगादसत्त्वं वाच्यम् । तथा





चासतोऽपरोक्षतया सत्त्वेन प्रतीतिप्रसङ्गः । अथ सापि व्यावहारिकता नासती किन्त्वनिर्वचनीयेत्युक्ते पुनरुक्तरीत्यानवस्था स्यादित्याह **अथेति** । **यत्रैवेति** । यदा प्रातिभासिकतायां सत्त्वे पर्यवसानं तदा प्रवृत्त्यभावः । यदा तु व्यावहारिकतया प्रतीतस्याप्यनिर्वचनीयत्वेऽनवस्थाभिया असत्त्वे पर्यवसानं तदा सतो अपरोक्षतया सत्त्वेन प्रतीतिः प्रसज्यत इति भावः।

**चषवः—** **अपरोक्षतयेति** । प्रतीत्यन्वयिवैशिष्ट्यप्रत्यायिका तृतीया । **सत्त्वेन चेति** । तदन्वित-प्रकारतानिरूपकत्वावगमिका सा । तथा च सत्त्वप्रकारिकापरोक्षताविशेषिता या प्रतीतिस्तद्विषयतेत्यर्थः । **विशिष्टप्रतीतता** सत्त्वप्रकारकापरोक्षप्रतीतिविषयता ।

**४४१ सु०— न चेयमपर्यवसिता परम्परा सिद्धविषया येन बीजाङ्कुरपरम्परावददूषणं स्यात् ॥ न चेयं कस्याप्यप्रतिबन्धकत्वाददोष इति वाच्यम् । पूर्वपूर्वारोपानुपपत्तावुत्तरोत्तरारोपा-नुपपत्तेः । प्रवृत्त्यनुपपत्तेश्च ॥ न च वाच्यं सर्वेऽप्यारोपा एककालमेव भवन्तीति । ज्ञानानां यौगपद्यायोगात् । अधिष्ठानसिद्ध्युत्तरकालीनत्वाच्चारोपस्य ॥ यथा विसर्पणविशिष्टः सर्पो रज्जावारोप्यते एवमेक एवायं विशिष्टारोप इति चेन्न । अनन्तानिर्वाच्यविशेषणविशिष्टार्थ-गर्भस्यारोपस्याननुभवात् । विशेषणभेदेन विशिष्टप्रत्ययभेदस्यावश्यकत्वाच्च ॥ ननु च संसर्गद्वयं न प्रातिभासिकतया प्रतीयते, नापि व्यावहारिकतया, किन्तु स्वरूपेणैव; अतो नानवस्थेति चेत् । व्यावहारिकत्वाप्रतीताविष्टाभ्युपायत्वानुमानाद्यनुपपत्तौ प्रवृत्त्यनुपपत्तेः । अन्यथा रजतावभासादेव प्रवृत्त्युपपत्तौ किं संसर्गग्रहणेनेति वदता जितं प्राभाकरेण ॥ तस्मादपरिहार्यैवेयमनवस्था । तदिदमुक्तं स्यादेवेति ।**

**बिन्दुः—** ननु तत्तद्विषयसन्निकर्षादिरूपानेकवस्तुज्ञानसामग्रीसमवधाने जायमानज्ञानानेकत्वे प्रमाणाभावेन युगपदनेकज्ञानोत्पत्त्यसंभवेऽपि घटपटस्तम्भा इति समूहालम्बनरूपैकज्ञानवदत्राप्यनेक-विषयकसमूहालम्बनरूपैकज्ञानोत्पत्तौ बाधकाभावात्समूहालम्बनमेव सर्वारोपविषयकमस्त्वित्यत आह **अधिष्ठानसिद्ध्युत्तरकालीनत्वाच्चारोपस्येति** । उत्तरोत्तरारोपं प्रति पूर्वपूर्वारोपसिद्धाधिष्ठानस्यावश्यं वाच्यत्वात् समूहालम्बनसामग्रीति भावः । अनुभवे विप्रतिपद्यमानं प्रति दूषणान्तरमाह **विशेषणभेदेन विशिष्टप्रत्ययभेदस्यावश्यकत्वादिति** । नन्विदमत्यन्तासंबद्धमिव प्रतिभाति । दण्डकुण्डलोष्णीषा-द्यनेकविशेषणभेदेऽपि दण्डकुण्डलोष्णीशवान् देवदत्त इत्येकस्य विशिष्टप्रत्ययस्य दर्शनादिति चेत् । भ्रान्तोऽसि । सर्पणविशिष्टसर्पस्य रज्ज्वारोप इवेति वदता पूर्वपक्षिणा विशिष्टवैशिष्ट्यावगाही प्रकृते आरोपः





स्वीकृतः। तं प्रतीयं पुनरनवस्थाऽनेन ग्रन्थेनोच्यते। तथाहि। विशेषणभेदेन विशिष्टरूपविशेषणानां भेदेन अनेकत्वेन अनन्तत्वेन विशिष्टप्रत्ययानामपि भेदस्य आनन्त्यस्येत्यर्थः। इदमुक्तं भवति। विशिष्ट-वैशिष्ट्यावगाही आरोप इति वदता विशिष्टरूपविशेषणज्ञानमवश्यं वक्तव्यं निर्विकल्पकमनङ्गीकुर्वाणै-र्घटोऽयमित्यादिविशिष्टज्ञानं प्रति विशेषणज्ञानस्य हेतुत्वानभ्युपगमेऽपि दण्डीत्यादिविशिष्टवैशिष्ट्याव-गाहिबोधं प्रति विशेषणतावच्छेदकप्रकारकज्ञानस्य हेतुताया अभ्युपगमात्। एवं च यथा चन्दनखण्ड-प्रभववह्निव्याप्यसौरभविशेषवद्धूमवत्पर्वतविशिष्टपृथिव्याधारशेषवान् कूर्म इति विशिष्टवैशिष्ट्यबोधे कारणीभूतविशेषणतावच्छेदकप्रकारकज्ञानस्यापि विशिष्टवैशिष्ट्यावगाहिज्ञानत्वेन तादृशज्ञानजन्यत्वं तस्याप्येवमिति पूर्वपूर्वविशिष्टवैशिष्ट्यावगाहिबोधपरम्परया चरमं महाविशिष्टज्ञानमित्येतद्विशिष्टबोधार्थं विशिष्टज्ञानान्यपेक्ष्यन्ते इति तावत्सामग्र्या तत्र संभवात् युज्यते चरमो विशिष्टबोधः। न च तथा प्रकृते संभवति। विशेषणपरम्पराया अपर्यवसानाङ्गीकारात्। तथाच विशिष्टरूपविशेषणानन्त्येन तथाविध-विशिष्टवैशिष्ट्यावगाहिप्रत्ययानामप्यानन्त्यादपर्यवसानान्मूलक्षयेण कथं नानवस्था स्यादिति भावः।

**परि०— पूर्वपूर्वेति**। उक्तसंसर्गद्वयस्यारोपे सिद्धे तत्र सत्त्वस्यारोप इति स्यात्। न चासतः सत्त्वस्य तत्र भानानङ्गीकारे स एवारोपो युक्तः। एवं च तदनुपपत्त्या तत्र सत्त्वारोपः सत्त्वे च सत्त्वान्तरारोप इत्यादि न युक्तमित्यर्थः। **प्रवृत्तीति**। सत्त्वप्रतीतिनिमित्तत्वात्प्रवृत्तेः सत्त्वप्रतीतेश्च त्वन्मतेऽयोगा-दित्युक्तत्वादिति भावः। यद्वा संसर्गद्वये भासमानं सत्त्वमनिर्वचनीयरूपमपि न सत्त्वेन भाति। किन्तु स्वरूपेणातो नानवस्थेत्यत आह **प्रवृत्तीति**। **अधिष्ठानेति**। उत्तरोत्तरारोपं प्रति पूर्वपूर्वस्याधिष्ठानत्वेन तदारोपानन्तरमेवोत्तरोत्तरारोपस्य वाच्यत्वादिति भावः।

**यादु०— पूर्वपूर्वारोपानुपपत्ताविति**। पूर्वस्य रजतानिर्वचनीयत्वस्यैवाद्याप्यसिद्ध्या तदारोपस्यासिद्धौ तस्य प्रवृत्तिजनकत्वाय कल्प्यमानोत्तरोत्तरव्यावहारिकत्वारोपाणामप्यसिद्ध्या प्रथमारोपात्प्रवृत्तिलक्षणं कार्यं त्वन्मते नोपपद्यत इत्यर्थः। **विशेषणभेदेनेति**। अत्र विशिष्टप्रत्ययशब्देनोक्ततत्तद्व्यावहारिकत्वविशिष्टप्रत्यय एव विवक्षितः। विशेषणशब्देनोक्तानि व्यावहारिकत्वान्येव विवक्षितानि। तानि च प्रातिभासिकत्वात्प्रतीतिघटितस्वरूपाण्येव नार्थगतानि। एवं चोक्तप्रतीतिगर्भव्यावहारिकत्वरूपविशेषणानां भेदेऽङ्गीक्रियमाणे तद्घटकोक्तविशिष्टप्रत्ययभेद आवश्यक इति प्रकृताभिप्रायेणैवेदमुक्तमित्यवधेयम्। अतो दण्डकुण्डलरूपविशेषणभेदेऽपि विशिष्टप्रत्ययैक्य-दर्शनात्कथमेतदिति शङ्काऽनवकाशः।

**वं०प०— यौगपद्येति**। सजातीयात्मविशेषगुणानां युगपदुत्पत्त्यभावादिति भावः। **अधिष्ठानेति**। रजतगतशुक्तिकासत्त्वसंसर्गस्य यदनिर्वचनीयत्वं तद्व्यावहारिकत्वाद्यारोपेऽधिष्ठानं तस्यैवासिद्धेरिति भावः।





**विशेषणभेदेनेति** । तथा चैक एवायं विशिष्टारोप इत्युक्तमसदिति भावः । **स्वरूपेणैवेति** । प्रातिभासिकत्व-व्यावहारिकत्वौदासीन्येनेत्यर्थः । **व्यावहारिकताप्रतीताविति** । रजतमिष्टसाधनं व्यावहारिकरजतत्वादित्यनुमानं कार्यम् । अन्यथा रजतत्वस्य प्रातिभासिकरजतेऽपि सत्त्वेन व्यभिचारापत्तेः । अतो व्यावहारिकत्वं प्रतीयत इत्यङ्गीकार्यम् । अन्यथा रजतस्येष्टसाधनताऽनुमानासंभवेन प्रवृत्तिर्न स्यादित्यर्थः । **अन्यथेति** । संसर्गद्वयं स्वरूपेणैव प्रतीयते । तन्मात्रादेव च प्रवृत्तिरित्यङ्गीकार इत्यर्थः । **रजतावभासादिति** । रजतस्वरूपमात्रावभासादित्यर्थः । **संसर्गग्रहेण** विशिष्टज्ञानेन । **तस्मादिति** । प्रवृत्तिजनकीभूतेष्टसाधनतानुमितौ हेतुत्वेन व्यावहारिकता-प्रतीतेरावश्यकत्वादित्यर्थः । **अनवस्थेति** । तद्व्यावहारिकत्वं किं प्रातिभासिकतयैव प्रतीयते व्यावहारिकतया वेत्यादिनोक्तरीत्येत्यर्थः ।

**आनन्दः— कस्यापीति** । इत्यादिरूपकार्यस्येत्यर्थः । **पूर्वेति** । तथाच प्रवृत्तिरूपकार्यप्रतिबन्धकत्वा-द्दोषत्वमिति भावः । सर्वारोपाणामेककालत्वे आरोपस्याधिष्ठानसिध्युत्तरकालीनत्वं न स्यादित्याह **अधिष्ठानेति** । **विशेषणभेदेनेति** ।

**कं०रा०— सिद्धविषया** प्रमाणसिद्धविषया । **विशेषणभेदेनेति** । अत्र विशिष्टप्रत्ययशब्देनोक्त-तद्व्यावहारिकत्वविशिष्टप्रत्यय एव विवक्षितः । विशेषणशब्देन चोक्तानि व्यावहारिकत्वान्येव विवक्षितानि । तानि च प्रातिभासिकत्वात्प्रतीतिघटितस्वरूपाण्येव नार्थगतानि । एवं चोक्तप्रतीतिगर्भव्यावहारिकत्वरूपविशेषणानां भेदेऽङ्गीक्रियमाणे तद्घटितोक्तविशिष्टप्रत्ययभेद आवश्यक इति प्रकृताभिप्रायेणैवेदमुक्तमित्यवधेयम् । अतो दण्डकुण्डलरूपविशेषणभेदेऽपि विशिष्टप्रत्ययैक्यदर्शनात्कथमेतदिति शङ्कानवकाशः । **व्यावहारिकत्वेति** । आपणस्थरजतसंसर्गद्वयस्य व्यावहारिकत्वप्रतीतावेवेष्टसाधनत्वानुमानदर्शनेनेह व्यावहारिकत्वाप्रतीत्येष्टसाधनता-नुमानायोगात्तद्योगे च तन्मूलकेच्छानुपपत्तौ प्रवृत्त्यनुपपत्तेरित्यर्थः । ननु संसर्गद्वयस्य व्यावहारिकत्वाप्रतीता-वप्युपस्थिते संसर्गद्वये व्यावहारिकत्वासंसर्गाग्रहमात्रेण प्रवृत्तिरुपपद्यत इत्यत आह **अन्यथेति** ।

**श्रीनिधि०— सिद्धविषया** प्रमितविषया । **बीजाङ्कुरपरम्परावददूषणमिति** । प्राभाकररीत्या कस्यापि उत्पत्तेर्ज्ञप्तेर्वा । **पूर्वपूर्वारोपानुपपत्ताविति** । अपर्यवसितारोपपरम्पराङ्गीकारे आरोपपरम्पराया अप्रामाणिकत्वेन एकस्मिन् व्यावहारिकत्वस्यानारोपे स्वरूपे ज्ञानस्यापि प्रवृत्त्यौपयिकत्वात् प्रातिभासिकत्वस्यासत्त्वस्य वा ज्ञाने असत्प्रातिभासिकव्यावहारिकसत्त्वाश्रयस्यापि असत्प्रातिभासिकत्वनियमात् उत्तरोत्तरस्मिन् असत्प्रातिभासिक-त्वयोः प्रतीतौ पुरोवर्तिनि च तत्प्रतीतौ प्रवृत्त्यनुपपत्तिरित्यर्थः । उत्तरोत्तरानुपपत्तेर्निनिमित्तात् । **अधिष्ठानसिद्धीति** । अधिष्ठानं पूर्वपूर्वमारोपितं प्रातिभासिकम् । व्यावहारिकत्वम् । **विशिष्टप्रत्ययभेदस्यावश्यकत्वाच्चेति** । एवं चायं सर्पोऽपि सर्पतीत्यत्रायं सर्प इत्येकं ज्ञानं विसर्पतीत्यपरमिति हृदयम् । **व्यावहारिकत्वाप्रतीतौ इति** । प्रातिभासिकस्यार्थक्रियानर्हस्यासत्त्वादिति भावः ।





**वा०चं०**— एवकारसूचितापरिहार्यत्वोपपादनाय प्रसक्तपरिहारप्रकारानाशङ्क्य निरस्यति **न चेत्यादिना** । ननूत्पत्तिज्ञप्तिप्रतिबन्धकत्वेनैवानवस्थाया दूषणत्वात्प्रकृतायाश्चातथात्वान्न दूषणत्वमित्याशयेन शङ्कते **न चेति** । यद्वा ननु मूलक्षयाभावान्नानवस्थेत्यतो मूलक्षयो नाम कल्पकाभावश्चेत्कल्पकस्य रजतानिर्वचनीयत्वस्या-प्रामाणिकतया कल्पकाभावः सिद्ध एवेत्याशयेनाह **न चेति** । प्रयोजनपरिक्षयो मूलक्षयः इत्याशयेन शङ्कते **न चेति** । घटोत्पत्त्यादेः प्रामाणिकत्वात्तस्य चाप्रामाणिके घटान्तरोत्पत्त्यादिसापेक्षत्वे तस्याप्येवमित्यनवसितपरम्परापत्त्या कारणीभूतपूर्वपूर्वोत्पत्त्यनुपपत्त्या कार्यभूतोत्तरोत्तरोत्पत्त्यनुपपत्तौ प्रामाणिकैतद्घटोत्पत्त्यभावापातेन प्रामाणिक-घटोत्पत्त्यादिपरित्यागरूपप्रयोजनपरिक्षयरूपमूलक्षयात्तदनवस्थाया दूषणत्ववत्प्रकृतेऽपि संसर्गद्वयस्य प्राति-भासिकत्वं वदता पक्षान्तरासंभवाद्व्यावहारिकत्वेनैव प्रतीतेरङ्गीकार्यत्वात्तद्व्यावहारिकत्वस्य चोक्तरीत्या सत्त्वासत्त्वव्यावहारिकत्वरूपकल्पान्तरासंभवेन प्रातिभासिकत्वे वक्तव्ये प्रतीतिविषयत्वस्यावश्यकतया स्वरूपेण प्रतीतेश्च न चैवं परस्याभ्युपगम इत्यादिवक्ष्यमाणरीत्याऽसंभवात्प्रातीतिकत्वेन प्रतीतेश्च प्रवृत्त्यनुपपत्त्याऽसंभवेन व्यावहारिकत्वेन प्रतीतत्वे वक्तव्ये व्यावहारिकत्वस्य व्यावहारिकत्वेन या प्रतीतिस्तत्सापेक्षता संसर्गद्वय-व्यावहारिकताप्रतीतेरुक्ता स्यात् । व्यावहारिकत्वस्य प्रातीतिकत्वाभावे व्यावहारिकत्वेन तत्प्रतीत्यभावे संसर्गद्वयस्य व्यावहारिकत्वेन प्रतीत्यनुपपत्तेः । एवं व्यावहारिकत्वे व्यावहारिकत्वस्यापि प्रातिभासिक-त्वात्स्वनिष्ठव्यावहारिकत्वप्रतीतिसापेक्षप्रतीतिकत्वमिति स्वोपपत्तये कल्पनीयप्रतीत्यनुपपत्तौ स्वस्याप्यनुपपत्ति-रित्यनवसितपरम्परापत्त्या संसर्गद्वयस्य प्रातिभासिकत्वानुपपत्तावप्रामाणिकप्रातिभासिकत्वसापेक्षत्वे प्रामाणिक-प्रवृत्तेः परित्यागापत्त्या प्रवृत्तिरूपप्रयोजनपरिक्षयरूपमूलक्षयादेतदनवस्थाया अपि दूषणत्वं युक्तमेव । न ह्युत्पत्तिज्ञप्तिपरित्यागरूपाया एव दूषणत्वं न तु प्रवृत्तित्यागरूपाया इत्यत्र नियामकं किञ्चित् । किं तर्हि प्रामाणिकमात्रपरित्यागरूपाया इति नानुपपत्तिरित्याशयेनाह **पूर्वपूर्वेति** । यद्यपि कल्पकस्य संसर्गप्रातिभासिक-त्वस्यासिद्ध्याऽप्रामाणिककल्पनारूपत्वं प्रकृतानवस्थाया व्युत्पादयितुं शक्यम् । अत एव समयपादे अप्रामाणिककल्पनारूपाया अपि प्रामाणिकपरित्यागवद्दूषणत्वं व्युत्पाद्य धर्मानवस्थां व्युत्पादयिष्यति । तथापि प्रकृते प्रवृत्तिरूपप्रामाणिकपरित्यागस्यापि संभवादेवमुक्तमिति ध्येयम् । यद्यपि चाधिष्ठानसिद्धिरूपप्रातिभासिक-संसर्गाद्यारोपस्याप्रामाणिकत्वात्तन्निबन्धनोत्तरोत्तरव्यावहारिकत्वाद्यारोपानुपपत्त्या प्रवृत्त्यनुपपत्तिरित्यपि वक्तुं शक्यते । तथाऽपि तथोक्तेरप्रामाणिककल्पनायां पर्यवसानात्तस्य च सिद्धविषयत्वाभावोक्त्या सिद्धत्वाद्व्याव-हारिकत्वाद्यारोपनिबन्धनत्वात्संसर्गारोपस्य तदनुपपत्तौ तदनुपपत्त्या प्रवृत्तिरूपफलक्षये प्रामाणिकपरित्यागं वक्तुमेवमुक्तमिति ध्येयम् । यद्वाऽयमेव ग्रन्थ एतदाशयेनैव वर्णनीयः । एवं चाधिष्ठानसिद्ध्युत्तरकालीनत्वा-दित्युत्तरग्रन्थस्वारस्यमिति द्रष्टव्यम् । ननु सत्यां परम्परायां सिद्धविषयत्वादिविचारः सैव नास्तीत्याशङ्कते **न चेति** । नन्वारोपाणामनेकत्वानभ्युपगमाद्रज्जोरिव शुक्तेरेवाधिष्ठानत्वाच्च नोक्तदोष इत्याशङ्कते **यथेति** । अनुभवे विप्रतिपद्यमानं प्रत्याह **विशेषणेति** । विशिष्टश्चासौ प्रत्ययश्चेति विग्रहः । प्रत्ययश्चाध्यासः । एवं चाध्यासस्य स्वरूपैणैकत्वेऽप्यनिर्वाच्यानन्तविशेषणानां भेदेन तत्तद्विशेषणविषयकत्वोपाधिना विशिष्टाध्यासस्य गगनव-द्भेदस्यैकविशेषणविशिष्टप्रतीत्यनन्तरमपरविशेषणविशिष्टाध्यासप्रतीतिरिति प्रतिपत्तितः पौर्वापर्यस्य चावश्यक-





त्वात्तन्निबन्धनानवस्था दुष्परिहरेति भावः । एतेन विशेषणभेदेन विशिष्टभेदेऽपि न विशिष्टप्रत्ययभेदः । अनेकविशेषणविशिष्टैकप्रत्ययदर्शनाद्विशिष्टवैशिष्ट्यावगाहिप्रत्ययदर्शनाच्चानेकाधिष्ठानकारोऽप्यैकाकारोपानुपपत्त्यभिप्रायस्य च शुक्तेरेकस्या एवाधिष्ठानतया परेणोक्तत्वात्तथैव निर्देशापत्त्या विशेषणभेदेनेत्यादिविन्यासायोगाच्चानुपपत्तिरिति दूषणमलग्नकं वेदितव्यम् । अत एव विवरणे सत्यानृते मिथुनीकृत्याहमिदं ममेति लोकव्यवहार इत्यत्र मिथुनीकरणलोकव्यवहारादिशब्दानध्यासपरतया व्याख्याय तर्ह्यध्यासस्यैकत्वात्पौर्वापर्यासंभवेऽत्र क्त्वाप्रत्ययानुपपत्तिमाशङ्क्यैकत्वेऽप्यध्यासस्य सत्यानृतेऽहमिदं ममेदमिति विशेषणभेदप्रयुक्तभेदाप्रतिपत्तितः पौर्वापर्याद्युक्तः क्त्वाप्रत्यय इति समाहितम् । तथा च तदभिप्रायेणेयमुक्तिरिति नानुपपत्तिरिति द्रष्टव्यम् । नन्वारोपस्यानेकविशेषणविषयकत्वमपि नाभ्युपगम्यते । अतो नोक्तदोष इत्याशङ्कते **ननु चेति** ।

**वा०र०— एवकारेति** । स्यादेवेत्येवकारसूचितं यदनवस्थाया अपरिहार्यत्वं तदुपपादनायेत्यर्थः । इत्यादिनेत्यादिपदेन तदिदमुक्तं स्यादेवेतीत्यन्तग्रन्थपरिग्रहः । **सिद्धविषयेति** मूलम् । यथाङ्कुरस्य बीजकारणकता वा बीजस्याङ्कुरकारणकता वा प्रत्यक्षादिसिद्धा । अतस्तत्कारणपरम्परा कल्प्यमाना न दूषणं सिद्धविषयत्वात् । तथा प्रकृतारोपपरम्परा न सिद्धविषया । रजतानिर्वचनीयत्वस्य प्रमाणसिद्धत्वाभावात् । तत्तावददूषणमेवेत्यर्थः । एवं प्रघट्टकमवतार्य प्रथमवाक्यस्योक्तरीत्याऽतिरोहितार्थतया वा द्वितीययोजनायां व्याख्यास्यमानत्वेन वा व्याख्यानमकृत्वा न चेयमित्युत्तरवाक्यगतकस्यापीत्येतद्विवृण्वन्नुत्तरवाक्यमवतारयति **ननूत्पत्तिज्ञप्तीति** । प्रघट्टकावतारे स्थिते सति न चेयमिति वाक्यद्वयं प्रकारान्तरेणावतारयति **यद्वेति** । मूलक्षयकरीं प्राहुरनवस्थां हि दूषणमिति अभियुक्तवचनात्तथाविधैव परम्पराऽनवस्थारूपं दूषणमिति भावः । **रजतानिर्वचनीयत्वस्येति** । अनेन तस्याप्रामाणिकतया सिद्धत्वाभावादारोपपरम्परासिद्धविषया नेति मूलार्थ उक्तो भवति । **सिद्ध एवेति** । ततश्च कल्पकाभावरूपमूलक्षयो नास्तीति न वक्तुं शक्यमिति भावः । **शङ्कत इति** । प्रयोजनपरिक्षयो मूलक्षयस्तदभावान्नेयमनवस्थादूषणमिति शङ्कत इत्यर्थः । पूर्वपूर्वेत्युत्तरवाक्यार्थं सदृष्टान्तं वदन्नवतारयति **घटोत्पत्त्यादेरिति** । प्रामाणिकत्वादित्येतत्प्रामाणिकपरित्यागरूपत्वोपपादनाय । सापेक्षत्व इत्यनन्तरमङ्गीक्रियमाण इति शेषः । घटोत्पत्तेर्घटान्तरोत्पत्तिसापेक्षत्वे घटज्ञप्तेर्घटान्तरज्ञप्तिसापेक्षत्वेऽप्रामाणिकेऽङ्गीक्रियमाण इत्यर्थः । **तस्यापीति** । द्वितीयघटोत्पत्त्यादेरपीत्यर्थः । एवं तृतीयघटोत्पत्तिज्ञप्तिसापेक्षत्वेऽप्रामाणिके स्वीकृते इति शब्दः प्रकारार्थः । तृतीयघटोत्पत्त्यादेरपि चतुर्थघटोत्पत्तिज्ञप्त्यपेक्षत्वे एवं चतुर्थतदुत्पत्त्यादेरपि पञ्चमतदुत्पत्त्यादिसापेक्षत्व इत्यादिप्रकारेणेति । **कारणीभूतपूर्वपूर्वेति** । पञ्चमचतुर्थादीनां चतुर्थतृतीयादिकारणत्वेन कारणीभूतपञ्चमघटाद्युत्पत्त्यादेरभावे कार्यभूतचतुर्थघटाद्युत्पत्त्यादेरनुपपत्तावित्यर्थः । उत्पत्त्याद्यभावेत्येव मूलकोशे सत्त्वात्तथैव पाठः । **उत्पत्त्यभावेति** । उत्पत्त्याद्यभावापातेनेत्येवार्थः । पूर्वस्थलद्वयेऽप्यादिपदं संयोज्यम् । **प्रामाणिकेति** । प्रामाणिकं यद्घटोत्पत्त्यादितत्परित्यागरूपो यः प्रयोजनपरिक्षयस्तद्रूपो यो मूलक्षयस्तस्मादिति योज्यम् । दृष्टान्ते घटोत्पत्त्यादेर्घटोत्तरोत्पत्त्यादि सापेक्षत्वमिति स्वल्पोक्त्यैकस्थापरापेक्षत्वप्रतिपादनवत्संसर्गद्वयाद्यारोपस्थले संसर्गद्वयस्य व्यावहारिकतया प्रतीतेर्व्यावहारिकत्वस्य व्यावहारिकत्वेन या प्रतीतिस्तत्सापेक्षत्वेऽङ्गीक्रियमाणे





तथोक्तद्वितीयव्यावहारिकत्वस्य स्वनिष्ठव्यावहारिकत्वप्रतीतिसापेक्षप्रतीतिकत्वेऽङ्गीक्रियमाण इत्यादिरूपेण स्वल्पोक्त्या प्रतिपादनासंभवादेकैकापेक्षामुपपादयन्नाह **प्रकृतेऽपि संसर्गेति** । **पक्षान्तरेति** । प्रातिभासिकत्वेन प्रतीतिरूपपक्षान्तरेत्यर्थः । **उक्तरीत्येति** । संसर्गद्वयनिष्ठव्यावहारिकत्वस्य सत्त्वे संसर्गद्वयस्य प्रातिभासिकत्वानुपपत्तिरित्याद्युक्तरीत्येत्यर्थः । अनिर्वचनीयत्वपक्षान्तर्गततया व्यावहारिकत्वग्रहणम् । अत एव प्रातिभासिकत्वमनिर्वचनीयत्वमिति द्वितीयपरिशेषकथनम् । आवश्यकतया प्रतीतिनिबन्धनत्वात्प्रातिभासिकत्वस्येति पूर्वमुक्तत्वादिति भावः । शिष्टमसकृदुक्तपूर्वप्रकारेण स्पष्टम् । व्यावहारिकत्वेन प्रतीतत्वे वक्तव्य इत्यन्तेन द्वितीयमप्रामाणिकं कल्प्यं दर्शितम् । तस्याप्रामाणिकं द्वितीयमपेक्ष्यं दर्शितम् । **व्यावहारिकत्वस्येति** । प्रातिभासिकेति शेषः । वक्ष्यति च **व्यावहारिकत्वस्य प्रातीतिकत्वाभाव इति** । सापेक्षतामुपपादयति **व्यावहारिकत्वस्येति** । स्वनिष्ठेत्यत्रापि प्रातिभासिकेति पूरणीयम् । प्रातीतिकत्वमितीत्यस्येति प्रकारेणानवसितेति संबन्धः । कुतो व्यावहारिकत्वे व्यावहारिकत्वस्योक्तप्रतीतिकत्वेऽप्यपर्यवसानमित्यत उक्तम् **स्वोपपत्तय इत्यादि** । अयमर्थः । द्वितीयव्यावहारिकत्वप्रतीतिस्तृतीयस्वनिष्ठव्यावहारिकत्वप्रतीतिसापेक्षा भवतु तृतीयतत्प्रतीतिस्तु चतुर्थतत्सापेक्षेति चतुर्थव्यावहारिकताप्रतीतिरप्यस्तु । पञ्चमव्यावहारिकताप्रतीतिस्तु माऽस्त्वित्यतो नानवस्थेति किल वाच्यम् । न च तद्युक्तम् । यदि पञ्चमतत्प्रतीतिर्नेष्यते तर्हि चतुर्थतत्प्रतीतेरप्यनुपपत्तिः स्यात् तथा च तृतीयतत्प्रतीत्युपपत्तये कल्पनीयचतुर्थतत्प्रतीत्यभावे तृतीयव्यावहारिकताप्रतीतिरप्यनुपपन्ना स्यात् । इति हेतोः स्वोपपत्तये कल्पनीयचतुर्थतत्प्रतीत्युपपत्त्यर्थं पञ्चमतत्प्रतीतिः कल्पनीयेत्येवं प्रकारेणानवसितेति । परम्परापत्त्येत्यनन्तरमपि स्वोपपत्तये कल्पनीयप्रतीत्त्यनुपपत्तौ स्वस्याप्यनुपपत्तिरितीत्यनुवर्तनीयम् । मध्ये दीपिकया वोत्तरत्र संबन्धः । उभयत्रसंबन्धार्थमेवेतिशब्देन व्यवधानं कृतम् । तथा च कारणीभूतपूर्वपूर्वेति दृष्टान्तस्थल इहापि तदुपपादनलाभः । उत्तरोत्तरप्रतीतीनां पूर्वपूर्वप्रतीतिसापेक्षतया पूर्वपूर्वप्रतीत्यनुपपत्तौ स्वोपपत्तये कल्पनीयप्रतीत्यनुपपत्तिक्रमेण स्वस्य संसर्गद्वयगतप्रातिभासिकत्वस्याप्यनुपपत्तिरित्यर्थः । प्रवृत्त्यनुपपत्तेरिति मूलानुसारेण प्रामाणिकपरित्यागं दर्शयति **प्रामाणिकेति** । प्रवृत्तिरूपं यत्प्रयोजनं तत्परिक्षयरूपो यो मूलक्षय इति योज्यम् । ननूत्पत्तिज्ञप्तीत्यादिशङ्कानुसारेण पूर्वयोजनायामपि परिहाराशयं दर्शयन्नेतद्योजनायामप्युक्तशङ्कायाः परिहारमाह **न हीति** । **समयपाद इति** । वैशेषिकपरीक्षायां धर्मस्य धर्मसन्तानादनवस्थेति भाष्यमूल इति योज्यम् । **एवमुक्तमिति** । पूर्वपूर्वेत्यनेन प्रामाणिकपरित्यागसूचकं प्रवृत्त्यनुपपत्तेरित्युक्तमित्यर्थः । अनेनोपलक्षणयैवंभूताप्रामाणिककल्पनारूपत्वमप्यत्र द्रष्टव्यमिति सूचितम् । एवं ग्रन्थकाराचातुरीं परिहृत्य प्रकारान्तरेणापि प्रवृत्त्यनुपपत्तिरूपप्रयोजनपरिक्षयः संसर्गाद्यारोपपक्षे संभवतीति तथा कुतो न पूर्वपूर्वेति वाक्यं व्याख्यातमिति स्वाचातुरीमाशङ्क्य निषेधति **यद्यपि चेति** । अधिष्ठानसिद्धिरूपो यः संसर्गाद्यारोप इति संबन्धः । संसर्गद्वयतद्गतव्यावहारिकत्वाद्यारोपस्येत्यर्थः । **उत्तरोत्तरेति** । पूर्वभूतसंसर्गद्वयारोपरूपाधिष्ठानसिध्यभावे तत्रोत्तरव्यावहारिकत्वारोपायोगः । एवंभूतसंसर्गद्वयगतव्यावहारिकत्वारोपरूपाधिष्ठानसिध्यभावे उक्तव्यावहारिकत्वे उत्तरभूतव्यावहारिकत्वारोपायोग इत्येवमुत्तरोत्तरव्यावहारिकत्वतद्व्यावहारिकत्वतद्व्यावहारिकत्वादिक्रमेण तेषामारोपानुपपत्त्या स्वोपपत्तये कल्पनीयस्यानुपपत्तौ स्वस्याप्यनुपपत्तिरिति क्रमेण संसर्गद्वये व्यावहारिकत्वारोपेण





प्रवृत्त्यनुपपत्तिरित्यर्थः । एवं च प्रवृत्त्युपयोग्यारोप एव पूर्वः इतरस्तूत्तर इति वैषम्यम् । **तथोक्तेरिति** । अधिष्ठानसिद्धि-रूपपूर्वारोपाभावे तत्रोत्तरारोपान्तरानुपपत्तिरित्येवमारोपपरम्परायोगोक्तेरित्यर्थः । तस्य चेत्यनेनाप्रामाणिककल्पनं कल्पनापदेनोपस्थापितं परामृश्यते । तस्याश्चेति पाठस्तु स्वरस एव । सिद्धत्वात् । ततः पृथङ्न वक्तव्यत्वमिति शेषः । कल्पकपरिक्षयरूपाप्रामाणिककल्पनाकथनपरत्वेन योजनायां पूर्वपूर्वेतिवाक्यस्य वैयर्थ्यापत्तिः । प्रयोजनपरिक्षय-प्रतिपादनानि प्रायेण प्रवृत्त्यनुपपत्तेरित्यस्योक्ततया तदनुपपत्तिश्चेति भावः । तर्हि संसर्गद्वयस्य प्रातिभासिकत्वं वदतेत्यादिपूर्वोक्तप्रकाराश्रयणेऽपि कुतः कल्पकपरिक्षयरूपाप्रामाणिककल्पनायामपर्यवसानम् । तथा च भवदुक्त-व्याख्यानेऽपि पुनरुक्तिरेवेत्यतोऽस्मदीयव्याख्याने प्रयोजनपरिक्षयस्य सद्भावान्न कल्पकपरिक्षयरूपारोपपरम्परामात्र-पर्यवसानमित्याह **व्यावहारिकत्वेति** । आदिपदेन द्वितीयव्यावहारिकत्वादिपरिग्रहः । तदनुपपत्तौ व्यावहारिकत्वा-द्यारोपानुपपत्तावित्यर्थः । तदनुपपत्त्या संसर्गद्वयारोपानुपपत्त्या अस्मदुक्तरीत्याऽऽरोपानुपपत्तिप्रतिपादने फलं तया प्रवृत्त्यनुपपत्तिरायातीति प्रयोजनपरिक्षये प्रामाणिकपरित्याग इत्येव वक्तुं शक्येऽप्रामाणिकपरम्परामात्रकल्पनोक्तिर्न स्वरसेति भावः । एवमुक्तमित्यस्य प्रवृत्त्यनुपपत्तेरित्यधिकमुक्तमित्यर्थः । ननूक्तरीत्या संसर्गद्वयारोपरूपाधिष्ठान-सिध्यभावे संसर्गद्वये व्यावहारिकत्वारोपानुपपत्तिरित्यादिक्रमेणारोपानुपपत्त्युक्तावप्रामाणिककल्पनावत्प्रामाणिक-परित्यागोऽप्यायात्येव । व्यावहारिकत्वाद्यारोपस्य प्रवृत्तिकारणत्वेन स्वीकृतसंसर्गद्वयारोपसंपादकत्वेनाधिष्ठान-सिद्धिरूपपूर्वपूर्वारोपानुपपत्त्योत्तरोत्तरारोपानुपपत्तावपि स्वोपपादकपूर्वपूर्वारोपानुपपत्तौ कारणाभावेन कार्यारोपा-नुपपत्तिरिति पूर्वयोजनारीत्यैव प्रयोजनपरिक्षयस्यापि लाभात्प्रामाणिकपरित्यागोक्तिलाभेन प्रवृत्त्यनुपपत्तिरित्यस्य स्वारस्यसंभवादधिष्ठानसिद्धिरूपप्रातिभासिकेत्यादिकैव पूर्वपूर्वेति ग्रन्थयोजनाऽस्त्वित्यतस्तर्हि तथैवाङ्गीकुर्म इत्याह **यद्वेति** । अयमेव ग्रन्थः । पूर्वपूर्वेतिवाक्यमेवेत्यर्थः । पूर्वशब्दस्याधिष्ठानसिद्धिरूपसंसर्गद्वयारोपपरत्वं उत्तरशब्दस्य तु संसर्गद्वयगतव्यावहारिकत्वारोपपरत्वमेवं व्यावहारिकत्वाद्यारोपस्थलेऽपीत्यङ्गीकृत्य पूर्वस्य कारणत्वादेव यथास्थित-व्यवहारोपपत्तिः । तथोत्तरोत्तरारोपाणां पूर्वपूर्वारोपोपपादकत्वादुत्तरेषामपि पूर्वान्प्रति कारणतया कारणभूत-पूर्वपूर्वारोपानुपपत्तौ कार्यभूतसंसर्गद्वयारोपान्तरारोपानुपपत्तिप्राप्तौ तत्साध्यप्रवृत्त्यनुपपत्तिरित्येवं पूर्वपूर्वेति वाक्य-स्याप्रामाणिककल्पनाविशेषे पर्यवसानेऽपि प्रयोजनपरिक्षयस्यापि प्राप्त्यभिप्रायेण प्रवृत्त्यनुपपत्तेरुक्ततयोभयपरत्व-संभवात्तदाशयेनैवायं ग्रन्थो व्याख्येय इत्यर्थः । **न सिद्धविषयेति** । पूर्वत्राप्रामाणिककल्पनोक्तौ तु रजता-निर्वचनीयत्वस्याप्रामाणिकतयेत्युक्तरीत्या अप्रामाणिकपरम्परामात्रकल्पने तात्पर्यमिति भावः । अवश्यं चेयमुभयसिद्धिफलिका योजना प्रयोजनपरिक्षयमात्रकथनपरघटोत्पत्त्यादेरित्यादि योजनापेक्षया स्वरसतया स्वीकार्या । अधिष्ठानेत्युत्तरग्रन्थानुगुणत्वादित्याह **एवं चेति** । पूर्वारोपस्योत्तरारोपं प्रति कारणत्वमित्यादिस्वीकारे संसर्गद्वयारोपमारभ्य कल्प्यमानारोपपरम्परायां कार्यकारणभावो विपरीत आयाति । व्यावहारिकत्वारोपाधीनः संसर्गारोप इति पक्षे तु तद्ग्रन्थास्वारस्यम् । न चैवं तद्योजनावैयर्थ्यम् । प्रयोजनपरिक्षयाभाववादिनं प्रति कथञ्चिदपि तदुपपादनेन सार्थक्याभिप्रायेण पूर्वयोजनाकरणम् । इदानीं त्वधि.......त्युत्तरग्रन्थस्वारस्यानुसारेण पूर्वोत्तरपदयोः प्रतीयमानार्थमेव स्वीकृत्य योजनान्तरं क्रियते । तत्राप्रामाणिकपरम्परावत्प्रयोजनपरिक्षयोऽपि लभ्यत एव । स्वोपपत्तये कल्पनीयारोपानुपपत्तौ इत्युक्तपूर्वयोजनास्थप्रकारेण पूर्वोत्तरपदयोरर्थस्याप्यत्रोहितुं शक्यत्वाच्च ।





तदेतदुक्तमेतदाशयेनैवेत्यलं मनोविक्षेपहेतूपपादनेन । **सिद्धविषयत्वादीति** । आदिपदेनासिद्धविषयत्वपरिग्रहः । तथोत्पत्त्यादिप्रतिबन्धकत्वादिविचारावसर इत्यपि द्रष्टव्यम् । अनेन सर्वारोपाणामेककालत्वाभ्युपगमस्य प्रयोजनं परम्पराया एवाभाव उक्तो भवति मूले **ज्ञानानामिति** । आत्मविशेषगुणानामेककालीनत्वानभ्युपगमादिति भावः । अङ्गीकृत्यापि दूषणान्तरमाह **अधिष्ठानेति** । आरोपो हि भवत्संसर्गद्वये व्यावहारिकत्वस्य व्यावहारिकत्वे च व्यावहारिकत्वान्तरस्येत्यादिरूपेण भिन्नभिन्नधर्मिको भिन्नभिन्नविशेषणकश्च । तत्र यदा संसर्गद्वयेऽनिर्वचनीय-व्यावहारिकत्वारोपस्तदधिष्ठानभूतसंसर्गद्वयज्ञानसद्भावेऽपि नारोप्यस्य व्यावहारिकत्वस्य ज्ञानम् । अधिष्ठान-ज्ञानस्यारोपं प्रति कारणतयोभयोरेककालत्वायोगात् । तथा व्यावहारिकत्वे व्यावहारिकत्वान्तरारोपात्पूर्वं व्यावहारिकत्वरूपधर्मिज्ञानं कारणभूतमङ्गीकार्यमिति तज्ज्ञानयोरप्येककालत्वायोगः । एवं तत्तदारोपाणां तत्तदधि-ष्ठानारोपरूपसिद्धिसापेक्षाणामेककालताया अयोगान्न तथाऽङ्गीकारो युक्त इत्यर्थः । **अनेकत्वाभ्युपगमादिति** । एक एवेत्यस्य फलमेतत् । अभिसर्पणादिविशिष्टसर्पारोपेऽस्त्येकमधिष्ठानम् । न च तथाविधं प्रकृत इत्यतो रजतसंसर्गद्वयव्यावहारिकत्वादीनामारोपे शुक्तिकैवाधिष्ठानमिति मूले पूरयति **शुक्तिरेवेति** । परेण तथाऽङ्गीकारादेवं पूरितम् । वक्ष्यति च शुक्तेरेकस्या एवाधिकरणतायाः परेणेति । **विप्रतिपद्यमानमिति** । तथाविधोऽप्यारोपोऽनुभूयत इति वदन्तं प्रत्यनुभवकलहायोगादिति भावः । विशेषणभेदेनेत्येतत्प्रतीतार्थं नेत्याशयेन योजयति **विशिष्ट-श्चासाविति** । न तु विशिष्टस्य प्रत्यय इति षष्ठीसमास इति भावः । अत्रोपपाद्यमानस्यैकस्मिन्नपि ज्ञाने भेदस्य न ज्ञानमात्रसाधारण्यमपि तु परोक्तरीत्याऽध्यासरूपज्ञानविशेष एवोक्तो भेद इति तदर्थकतया प्रत्ययपदं व्याचष्टे **प्रत्ययश्चाध्यास इति** । **एवं चेति** । विशिष्टप्रत्यय इत्यस्य विशिष्टो योऽध्यास इत्यर्थः । अध्यासस्य शुक्तिविशेष्यकानन्तानिर्वाच्यविशेषणं विशिष्टार्थगर्भस्यारोपस्य । यथा गगने स्वरूपेण भेदाभावेऽपि घटाद्युपाधि-भेदेन घटाकाशो मठाकाश इति भेदोऽस्ति । एवमुक्तविशिष्टाध्यासेऽपि स्वरूपेणैकत्वेऽप्यनिर्वाच्यानन्तविशेषणानां भेदेन तत्तद्विशेषणविषयकत्वोपाधिना रजताध्यासः संसर्गाध्यासो व्यावहारिकत्वाध्यासस्तद्व्यावहारिकत्वाध्यास इत्यादिरूपेण भेदस्यावश्यकत्वादिति संबन्धः । एवमध्यासे औपाधिकं भेदमुपपाद्यानवस्थायाः पौर्वापर्य-निमित्तकत्वात्तदप्युपपादयति **एकविशेषणेति** । अध्यासस्य हि तत्तद्विशेषणविषयकत्वे एकदैव विद्यमानेऽपि रजताध्यास इति प्रतीत्यनन्तरं तत्संसर्गाध्यास इति प्रतीतिं तदनन्तरं च व्यावहारिकत्वाध्यास इति प्रतीतिरित्यादिरूपेणाध्यासविषयकप्रतीतीनां क्रमभावित्वेन तन्निमित्तकस्याध्यासे पौर्वापर्यस्यावश्यकत्वादित्यर्थः । **तन्निबन्धनेति** । उक्तं विशिष्टाध्यासगतं भेदं प्रतिपत्तिनिमित्तकं क्रमं च निमित्तीकृत्यानवस्थाप्राप्तौ वा रजताध्याससंसर्गद्वयाध्यासपरम्परायां हि सोक्ता । तत्र स्वरूपतो भेदपौर्वापर्ययोरपरावप्यौपाधिकयोस्तयोः सत्त्वात् त्वयाऽङ्गीकाराच्च तदाश्रयणेनैवानवस्थाया उपपादयितुं शक्यत्वादित्यर्थः । आवश्यकत्वादित्यनन्तरं शेषपूरण-मनवस्था दुष्परिहरैवेत्येतदिति ज्ञेयम् । विशेषणभेदेनेत्यादेरर्थान्तरकथनेन प्रतीतार्थाङ्गीकारे मूले यद्दूषणं प्रतीयते तदलग्नकमित्याह **एतेनेति** । **भेदेऽपीति** । विशेषणभेदस्य विशिष्टभेदं प्रत्येव प्रयोजकत्वेन तेन तत्प्रत्ययभेदोक्ते-रयोगः । विशेषणभेदस्य विशिष्टप्रत्ययभेदकत्वे व्यभिचार उक्तः । **अनेकेति** । दण्डकुण्डलाद्यनेकविशेषणविशिष्ट-देवदत्तादिविषयकैकप्रत्ययदर्शनादित्यर्थः । अनेकविशेषणानां विशेष्यभेदे सति विशिष्टप्रत्ययभेद इत्यपि न । तत्रापि





व्यभिचारादित्याह **विशिष्टवैशिष्ट्येति** । नीलदण्डीत्यादौ नैल्यरूपविशेषणविशिष्टदण्डविशिष्टदेवदत्तबोधे विशेष्यभेदेऽपि विशिष्टप्रत्ययस्य भेदाभावेन व्यभिचारादिति भावः । विशेषणभेदे अनेकाधिष्ठानकानेकारोप्यकैकारोपानुपपत्तिरिति विवक्षितेन व्यभिचार इति चेत्तत्राह **अनेकेति** । तर्हि तादृशं विशिष्टप्रत्ययभेदप्रयोजकं प्रकृतेऽपि नास्ति । प्रकृतारोपस्यानेकारोप्यकत्वेऽपि शुक्तिरूपैकाधिष्ठानकत्वेनाधिष्ठानानेकत्वाभावात् । किञ्चिद्विशेषणभेदेनेत्याद्युक्त्या यत्रानेकविशेषणकानेकारोप्यकत्वं तत्रारोपभेद इत्येवमर्थस्य प्रतीयमानत्वाभावेन तावदर्थसमर्पणाय तथैव वक्तव्यत्वापत्त्या यथाश्रुतनिर्देशायोग एवेत्याह **तथैवेति** । **अलग्नकमिति** । उक्तदूषणापादकतयोक्तानां विशिष्टप्रत्ययभेदे विशेषणभेदस्य प्रयोजकत्वमित्यादीनामेतद्वाक्यार्थतयाऽनङ्गीकारादिति भावः । ननूक्तप्रकारातिरेकेण भवत्कल्पितप्रकारस्य काल्पनिकत्वेन कथं तदङ्गीकारेणानवस्थोपपादनमित्यतः उक्तप्रकारस्य विशिष्टारोपशङ्कित्रा परेणैव स्वीकृतत्वात्तदाश्रयणेन वाक्ययोजने काल्पनिकत्वशङ्कानवकाश इत्याह **अत एवेत्यादि** । **इत्यत्र** इत्येतद्भाष्यव्याख्यावसरे । **अनुपपत्तिमाशङ्क्य** अनुपपत्तिरित्याशङ्क्येत्यर्थः । किञ्चिद्विवरणं कार्यमस्ति । ..... । विवरणे तथोक्तिकथनप्रयोजनं **तथा चेति** । **नोक्तदोष इति** । विशेषणविषयकत्वस्यैवाभावेनानेकविशेषणविषयकत्वस्य सुतरामभावात्तत्प्रयुक्तोक्तक्रमेणानवस्थाप्रसक्तिर्नेत्यर्थः ।

**स०व्र०— पूर्वपूर्वारोपानुपपत्ताविति** । रजतानिर्वचनीयत्वस्याद्याप्यसिद्ध्या तदारोपस्यासिद्धौ तस्य प्रवृत्तिजनकत्वाय कल्प्यमानोत्तरोत्तरव्यावहारिकत्वारोपाणामप्यसिद्ध्या प्रथमारोपात्प्रवृत्तिलक्षणं कार्यं त्वन्मते न स्यादित्यर्थः । अनन्तविशेषणकोऽयमारोपः किमेकाधिष्ठानकः । उत समूहालम्बनं चेद्रजते सत्त्वारोपस्तत्सत्त्वे व्यावहारिकतायास्तद्व्यावहारिकत्वे व्यावहारिकान्तरस्येति भिन्नाधिष्ठानकः । नाद्य इत्याह **अनन्तानिर्वाच्यविशेषणेति** । नान्त्य इत्याह **विशेषणभेदेनेति** । अयं भावः आरोपस्याधिष्ठानसिद्धिसापेक्षत्वेनाधिष्ठानानां च प्रातिभासिकसत्त्वेन सत्त्वप्रतिभासस्य व्यावहारिकत्वारोपं प्रति कारणत्वेन तद्व्यावहारिकत्वप्रतिभासस्य व्यावहारिकत्वारोपं प्रति कारणत्वेन विशिष्टारोपस्यासंभवादिति । केचित्तु । **विशेषेण भेदेनेति** । क्रमिकविशेषणभेदेन विशिष्टाभिज्ञारूपप्रत्यक्षभेद आवश्यक इत्यर्थः । अतो विशेषणभेदेऽपि दण्डी देवदत्त इत्यादिप्रत्यक्षरूपस्य क्रमिकविशेषणभेदेऽपि प्रत्यभिज्ञाप्रत्यक्षरूपस्य वा विशिष्टज्ञानस्यैक्योपलम्भात् कथमेतदिति शङ्काऽनवकाशः । अत एव सर्पज्ञानमादौ भवति । तस्मिन्नधिष्ठाने सिद्धे तत्र पश्चादभिसर्पणारोप इति तत्रापि प्रत्ययभेद एवेति न दृष्टान्तः संप्रतिपन्न इति ध्येयम् । प्रकृते च व्यावहारिकत्वानि क्रमिकान्येवेति भावः इति व्याचक्षते ।

**विट्ठ०— न चेयमिति** । अनिर्वचनीयपक्षपर्यवसाने उक्तेयं परम्परेत्यर्थः । **पूर्वपूर्वेति** । रजतानिर्वचनीयत्वस्याप्यसिद्ध्या प्रथमारोपस्यैवाभावेन तन्निर्वाहाय कल्प्यस्य तदुत्तरस्याप्यभावः । तस्याप्यभावे तदर्थं चापरस्य कल्पनाभाव इत्येवमुत्तरोत्तरकल्पकपूर्वपूर्वारोपानुपपत्तौ तस्य तस्य प्रवृत्तिजनकत्वाय कल्प्यमानोत्तरोत्तरारोपाणामप्यनुपपत्तेः । ततश्च प्रवृत्तिलक्षणकार्यं च तन्मते न स्यादित्यर्थः । ननु सत्यां परम्परायां सिद्धविषयत्वादिविचारः सैव नास्तीत्याशङ्कां वारयति **न च वाच्यमिति** । **अधिष्ठानेति** । उत्तरोत्तरारोपं प्रति पूर्वपूर्वारोपस्याधिष्ठानत्वेन तदारोपानन्तरभावित्वात् उत्तरोत्तरारोपस्य एककालत्वमसंभावितं चेत्यर्थः । दृष्टान्तप्रदर्शनेन युगपत्सर्वारोपोपपत्ति-





माशङ्कते **यथेति**। वक्रतया पतितरज्जौ विशिष्टारोपोऽनुभवसिद्धः। **न चैवं प्रकृत इति**। परिहरति **अनन्तेति**। किञ्च तत्र विसर्पणरूपविशेषणस्येकतया विशिष्टप्रत्ययस्याप्येकत्वे न युज्यते तत्र विशिष्टारोपरूपः प्रत्ययः न चैवं प्रकृत इत्याह **विशेषणभेदेनेति** । अनिर्वाच्यानन्तविशेषणानां भेदेनैकविशेषणविशिष्टप्रतीत्यनन्तरमपरविशेषणविशिष्टप्रत्यय इत्युपपादितत्वेन प्रत्ययानां पौर्वापर्यस्यावश्यकतयानवस्था दुष्परिहरेति भावः । अथवाध्यासस्येकत्वाङ्गीकारेऽपि अनिर्वाच्यानन्तविशेषणानां भेदेन तद्विशेषणविषयकत्वोपाधिना गगने सोपाधिकभेदस्येव विशिष्टाध्यासेऽपि पौर्वापर्यस्यावश्यकत्वात्तन्निबन्धनानवस्था परिहार्येति भावः। एतेन पर्वतोऽग्निमानित्यत्र पर्वतज्ञानमेकं अग्निमानिति विशिष्टज्ञानमपरमिति स्यादिति शङ्कानवकाशः। नन्वारोपस्यानेकविशेषणविषयकत्वं नाभ्युपगम्यते अतो नोक्तदोष इति शङ्कते **ननु चेति**। **अन्यथेति**। स्वरूपतन्मात्रज्ञानस्य प्रवृत्तिहेतुत्व इत्यर्थः।

**४४२ सु०— ननु भवत्पक्षेऽपि रजतस्य प्रतीयमानं सत्त्वं सदसद्वा ॥ नाद्यः । रजतस्यापि सत्त्वापत्तेः ॥ द्वितीये किमसत्त्वेन प्रतीयते किंवा सत्त्वेन। नाद्यः प्रवृत्त्यभावापत्तेः । द्वितीये तदपि सदसद्वेति समानो दोषः । न समानः विधिप्रत्ययस्यैव सत्त्वविशिष्टविषयत्वाभ्युपगमात् । न च सत्त्वस्यापरं सत्त्वमस्माभिरभ्युपगम्यते । किन्तु रजतविधिप्रत्ययमात्रादेव प्रवृत्त्युपपत्तेः । न चैवं परस्याभ्युपगमः । सत्त्वेऽप्यवान्तरभेदाङ्गीकारेण तत्प्रतीतिमात्रस्य प्रवृत्त्यनुपयोगित्वादिति ।**

**बिन्दुः— विधिप्रत्ययस्यैवेति**। तथाच सत्त्वमप्यसदेव रजतत्ववत्तद्विशेषणतया प्रतीयत इति भावः।

**परि०— विधिप्रत्ययस्यैवेति** । इदं रौप्यमित्यादिप्रत्ययस्यैवेत्यर्थः । **सत्त्वेऽप्यवान्तरभेदेति** । पारमार्थिकसत्त्वं व्यावहारिकसत्त्वं प्रातिभासिकसत्त्वमिति सत्त्वेऽप्यवान्तरभेदोपगमेन तत्प्रतीतिमात्रे सत्यपि किमिदं प्रतीतं सत्त्वं प्रातिभासिकं सत्त्वमथ व्यावहारिकं सत्त्वमिति सन्देहावस्कन्दनेन निःशङ्कप्रवृत्त्यर्थं सत्त्वस्यापि सत्त्वेन भानस्यावश्यकत्वादिति भावः । न्यायामृते तु परमतेऽनिर्वाच्यस्य सत्त्वस्य सत्त्वेनाभाने प्रातिभासिकत्वासिद्धिवत् मन्मतेऽसतः सत्त्वस्य सत्त्वेनाप्रतीतौ असत्त्वासिद्धेरभावादिति प्रकारान्तरेण प्रतिबन्दी मोचिता । निपुणतरमुपपादितमेतत् असद्विलक्षणज्ञप्त्या इत्यादिनाऽनवस्थितिरित्यन्तेनोक्त प्रमेयं ख्यातिबाधान्यथानुपपत्तिभङ्गे न्यायामृते ।

**वं०प०— सत्त्वापत्तेरिति** । न हि यस्य सत्त्वं सत् तदसदिति संभवतीति भावः । **प्रवृत्त्यभावेति** । न ह्यसदर्थक्रियासूपयुज्यमानं क्वचिदनेनोपलब्धम् । येन तथात्वं प्रतीत्याऽपि प्रवर्तेतेति भावः । दोषोऽनवस्थारूपः ।





**विधिप्रत्ययस्येति** । इदंरजतमिति प्रत्ययस्यैवेत्यर्थः । **सत्त्वविशिष्टेति** । सत्त्वविशिष्टरजतविषयकत्वाभ्युपगमादित्यर्थः । **विधिप्रत्ययमात्रादिति** । तस्यैवास्मन्मते सत्त्वविशिष्टार्थविषयकत्वाभ्युपगमादिति भावः । **तत्प्रतीतिमात्रस्येति** । रजतप्रतीतिमात्रस्येत्यर्थः । अस्मन्मते सत्त्वेऽवान्तरभेदाभावे रजतविधिप्रत्ययमात्रस्यैव प्रवृत्त्युपयोगित्वमङ्गीकृतं न परमते । तेन सत्त्वे अवान्तरभेदाङ्गीकारेण रजते व्यावहारिकत्वाप्रतीताविष्टाभ्युपायत्वानुमानासंभवेन प्रवृत्तिरेव न स्यात् । अतो व्यावहारिकत्वं प्रतीत्यैव प्रवर्तत इति वाच्यम् । तथा चोक्तरीत्याऽनवस्थेति भावः ।

**आनन्दः**— यद्यपि दोषसाम्यं शङ्कते **नन्विति** । ननु विधिप्रत्यये भासमानं सत्त्वं सत्त्वेन वा असत्त्वेन वा भासत इत्यादि विकल्पानुवृत्तिः स्यादेवेत्यत आह **न चेति** । एवं विधिप्रत्ययमात्रादेव प्रवृत्तिरित्येवमित्यर्थः ।

**कं०रा०**— **रजतस्यापीति** । न हि यस्य सत्त्वं सत्तदसदिति संभवतीति भावः । **तदपीति** । सत्त्वस्य सत्त्वमपि सदसद्वेति विकल्पे तत्र च सत्त्वपक्षाङ्गीकारे रजतस्यापि सत्त्वापत्त्या रजतसत्त्वसत्त्वस्यासत्त्वेऽङ्गीकर्तव्ये तस्य तथैव प्रतीतौ प्रवृत्त्यभावापातेन तस्यापि सत्त्वेन प्रतीतेरङ्गीकार्यत्वात्सत्त्वप्रतीतिपरम्परापर्यवसानरूपानवस्थादोषो भवत्पक्षेऽपि समान इत्यर्थः । परिहरति **न समान इति** । ननु यदि सत्त्वस्यापरं सत्त्वं नास्तीति सत्त्वांशे सत्त्वविशिष्टप्रत्ययो नाङ्गीक्रियते तर्हि कथं प्रवृत्तिरिति पृच्छति **किं त्विति** । उत्तरमाह **रजतेति** । **सत्त्व इति** । परेण सत्त्वेऽप्यवान्तरभेदस्याङ्गीकृतत्वेन सत्त्वप्रतीतिमात्रस्य प्रातिभासिकसत्त्वेऽपि पर्यवसानसंभवात्प्रातिभासिकस्य चार्थक्रियास्वनुपयुक्तत्वेन तन्मात्रस्य प्रवृत्तावनुपयोगित्वादित्यर्थः ।

**वा०चं०**— परिहारान्तरासंभवात्प्रतिबन्द्याऽनवस्थां परिहर्तुं शङ्कते **नन्विति** । कुतो न समान इति चेन्न । स्वरूपेणैव सत्त्वप्रतीतेर्मयाऽभ्युपगमात् । न च विधिनिषेधाववधूय प्रत्ययाभावात्कथं स्वरूपेण तत्प्रतीतिरिति वाच्यम् । रजतविधिप्रत्ययस्यैव सत्त्वविषयत्वाङ्गीकारेण सत्त्वविषयकविधिप्रत्ययान्तरानङ्गीकारेण प्रतीतिपरम्पराभावान्नानुपपत्तिरित्याह **विधीति** । विधिप्रत्ययान्तरानभ्युपगमे निमित्तमाह **न चेति** । नन्वेवं प्रवृत्त्यनुपपत्तिरित्यत आह **रजतेति** । तथा च सत्त्वे सत्त्वान्तरानभ्युपगमात्स्वरूपेणैव सत्त्वप्रतीत्यभ्युपगमाच्च सत्त्वं सदसदिति सत्त्वेनासत्त्वेन वा प्रतीयत इति विकल्पानवकाश इति भावः । यद्वा कुतो न समान इति शङ्कापरिहारत्वेन स्वरूपेण सत्त्वप्रतीत्यभ्युपगममुक्त्वा सत्त्वं सदिति प्रतीतेः कथं स्वरूपेणैव तत्प्रतीत्यभ्युपगम इत्यतो विधिप्रत्ययस्यैव सत्त्वविषयकत्वेन सत्त्वं सदिति प्रत्ययानभ्युपगमादित्याशयेनाद्यं वाक्यं योजयित्वा सत्त्वं सदिति प्रत्ययानभ्युपगमनिमित्तत्वेन न चेति वाक्यं योजयित्वा ननु माऽस्तु सत्त्वं सदिति प्रत्ययः सत्त्वविधिप्रत्ययस्यैव सत्त्वे सत्त्वविषयकत्वान्न सत्त्वस्य स्वरूपेण भानं प्रवृत्त्यनुपपत्तिश्चेत्यतो रजतेति वाक्यं योजनीयमिति ज्ञेयम् । **सत्त्वेऽपीति** । मम च सत्त्वावान्तरभेदानभ्युपगमेन सत्त्वप्रतीतिमात्रेण प्रवृत्त्युपपत्तिरिति भावः ।

**वा०र०**— एवमनवस्थापरिहाराय संभावितप्रकाराशङ्कने तत्परिहारेणानवस्थायां स्थापितायां प्रकारान्तरेण तत्परिहारशङ्काया असंभवादेव तथा परिहारयत्नं परित्यज्य प्रतिबन्द्या तत्परिहारमाशङ्कत इत्याह **परिहारान्तरेति** । रजतसत्त्वप्रतिबन्द्याशङ्कनं हि परेण कुतः कृतम् । यथा भवता स्वरूपेण प्रतीत्यङ्गीकारान्न विशेषणप्रतीति-





परम्परयानवस्था भवत्पक्षे । एवं मत्पक्षेऽपीति प्रतिपादनार्थमिति चेन्न । मया स्वरूपेण प्रतीत्यङ्गीकारेऽपि भवता सत्त्वत्रैविध्यं वदता तदनङ्गीकारेण वैषम्यात् । तस्मान्न प्रतिबन्दीशङ्का युक्तेति मूलाशयं व्यनक्ति **स्वरूपेणैवेति** । स्वरूपेणैव सत्त्वप्रतीतिमुपन्यस्य तत्र प्राप्तशङ्कापरिहाराय रजतविधिप्रत्ययस्येति योजनाया विधीतिपदमाकाङ्क्षाक्रमेण योज्यमिति सूचयता प्रथमत एव विधिप्रत्ययपर्यन्तं धावनं मूलकारीयं कुत इत्याशङ्का निराकृता भवति । अभ्युपगमप्रयोजनकीर्तनं सत्त्वविषयकविधिप्रत्ययान्तरेति इत्यत आह **रजतेति** । इत्याशयेन कुत इति शङ्किते तत्परिहारमाह **रजतेतीति** योज्यम् । मूले किन्त्वित्यस्य पाठाभावपक्षे यथाश्रुतैव योजना । उत्तरयोजनायामपि किन्त्वित्यस्य संस्पर्शाभावेऽपि इत्यतः इत्यस्येत्याशयेन किन्त्विति शङ्कित इति व्याख्येयम् । किन्त्वित्यस्य पाठाभावे तु यथांश्रुत एव ग्रन्थः । सत्त्वस्यापरसत्त्वानङ्गीकारेण लब्धमाह **तथा चेति** । **सदसदिति** । सद्वाऽसद्वेतीत्यस्य विकल्पपदेन संबन्धः । पूर्वं स्वरूपेण सत्त्वप्रतीतिमभ्युपगम्य विधिपदानुसारेण शङ्कामुत्थाप्य तन्निवर्तकतया तत्पदं योजयित्वा सत्त्वविषयकविधिप्रत्ययान्तराभावोपपादकतया न चेत्यादिग्रन्थो योजितः । इदानीं तु विधीतिपदानुसारेण प्रथमतः स्वरूपेण सत्त्वप्रतीत्यभ्युपगमेन मत्पक्षे दोषाभाव इत्युक्त्यनन्तरं सत्त्वं सदित्येव सत्त्वनिष्ठसत्त्वविषयकप्रतीतिसत्त्वेन स्वरूपेण तत्प्रतीत्यसिद्धिरित्याशङ्कापरिहाराय सत्त्वं सदिति प्रतीतिर्नाङ्गीक्रियते किन्तु विधिप्रत्यय एव सत्त्वविषयक इत्यङ्गीक्रियत इत्याद्यवाक्यार्थः । कुतस्तथा प्रतीतिर्नाभ्युपगम्यत इत्याशङ्कापरिहाराय तदनभ्युपगमे सत्त्वे सत्त्वान्तरं नास्तीति द्वितीयवाक्येन प्रतिपाद्यते । रजतविधिप्रत्ययमात्रादेवेत्यत्र रजतविधीत्येतद्व्यावर्त्य शङ्काप्रदर्शनं **सत्त्वविधीति** । एवं प्रत्युपपत्तेरित्येतद्व्यावर्त्यशङ्कामाह सत्त्वस्येतीति योजयति **यद्वेति** । अवान्तरभेदाभ्युपगमो नास्माकमिति वैषम्यमाह **मम चेति** ।

**विट्ठ०— भवत्पक्षेऽपीति** । असदेव रजतं सत्त्वेन प्रतीयत इति वदतां पक्षेऽपीत्यर्थः । कुतो न समान इत्यत आह **विधिप्रत्ययस्यैवेति** । विपर्यये तावदस्तीदं रजतमिति विधिप्रत्ययस्यैव सत्यरजतप्रत्ययवत्सत्त्वविशिष्टप्रत्ययत्वमभ्युपगम्यते । न च विशिष्टप्रत्यये प्रतीयमानं सत्त्वं सत्त्यादिविकल्प्य दूषणं वाच्यम् । यथा सत्यरजते रजतसत्त्वमेव तत्सत्त्वस्यापि सत्त्वं न तु ततोऽतिरिक्तं सत्त्वस्य अपरं सत्त्वमस्ति तथा भ्रमेऽप्यस्तीदं रजतमिति विधिप्रत्यये प्रतीतं रजतस्य सद्रूपं सत्त्वमेव तत्सत्त्वस्यापि सत्त्वमिति विधिप्रत्ययस्यैव सत्त्वविशिष्टविषयत्वाङ्गीकारेण तन्मात्रेणैव प्रवृत्त्युपपत्त्या सत्त्वे सत्त्वप्रत्ययान्तरानभ्युपगमान्नानवस्थेति भावः । ननु प्रातिभासिके रजते प्रतीयमानं व्यावहारिकसत्त्वमपि रजतसत्तासमानसत्ताकमेव भवन्मते असति रजते प्रतीयमानसत्त्वस्यासत्त्ववदिति मयाप्यङ्गीक्रियमाणत्वादतो नास्त्यस्मन्मतेऽप्यनवस्थेत्यत आह **न चैवमिति** ।

**४४३ सु०— अपर आह । 'सदिदं रजतमि'ति प्रतीयमानं सत्त्वं नासत् । येनोक्तव्याप्तेर्भङ्गः स्यात् । किं नाम ब्रह्मणीव पारमार्थिकमम्बरादेरिव मायोपाधिकं व्यावहारिकं शुक्तिरजतादावपि अविद्योपाधिकं प्रातिभासिकं सत्त्वमस्त्येवेति ॥ तदसत् । सत्त्रैविध्यस्यैव दूषितत्वात् । दूषणान्तरं चाह तस्येति ।**





**परि०— दूषितत्वादिति**। सत्त्रैविध्यं चेत्यत्रेति भावः।

**गु०दी०— ब्रह्मणीव पारमार्थिकम्** इत्यत्र ब्रह्मणि पारमार्थिकमिवाम्बरादेर्मायोपाधिकमिवेति योजना।

**यादु०— ब्रह्मणीवेत्यत्र** ब्रह्मणि पारमार्थिकमिवाम्बरादेर्मायोपाधिकं व्यावहारिकमिवेतीव शब्दयोजना द्रष्टव्या।

**वं०प०—** शुक्तिरजतादौ सत्त्वेन प्रतीतिरेव सत्त्वं नार्थगतं सत्त्वमस्तीत्येकं मतम्। शुक्तिरजतादावविद्योपाधिकं प्रातिभासिकं सत्त्वमस्तीत्यपरं मतम्। तत्र द्वितीयमतानुसारेण शङ्कते **अपर आहेति**। अनिर्वचनीयत्व इत्यनूद्य प्रातीतिकत्व इति व्याख्यातम्।

**आनन्दः— अपर आहेति**। यद्यपि पूर्वशङ्कितमते रजतस्य प्रातिभासिकत्वाङ्गीकारादेतत्पुनरुक्तं तथापि पारमार्थिकं एवमुक्तं सदन्यत्तु सत्त्वेन व्यवहार इत्यभिप्रेत्य पूर्वं च मतमत्राङ्कितम्। सत्येवावान्तरभेद इति मतमाश्रित्याधुना शङ्केति न पुनरुक्तिः। अत एव पारमार्थिकं सत्यमेव मुख्यं सदन्यत्तु सत्त्वेन व्यवहारमात्रमिति वा सच्छब्देन विवक्षितं उत सत्येवावान्तरभेदोऽस्तीति पूर्वं विकल्पकरणमिति भावः। **सत्त्वत्रैविध्यस्येति**। उपलक्षणमेतत्। प्रातिभासिकत्वाङ्गीकारेऽपि तत्प्रातिभासिकमिति ज्ञात्वा वा प्रवर्तते व्यावहारिकमिति। ज्ञात्वा वेति पूर्वोक्तदूषणमपि द्रष्टव्यम्।

**कं०रा०— ब्रह्मणीति**। ब्रह्मणि पारमार्थिकसत्त्वमिवाम्बरादेर्मायोपाधिकं व्यावहारिकं सत्त्वमिव शुक्तिरजतादावप्यविद्योपाधिकं प्रातिभासिकं सत्त्वमस्त्येवेत्यर्थः।

**श्रीनिधि०— अपर आहेति**। पूर्वं शुक्तिनिष्ठं सत्त्वं रजते भातीति शङ्कितम्। इदानीं सत्त्वं रूप्य एवास्तीति शङ्कत इति ज्ञेयम्। बन्धस्य तदुपादानत्वं निराकरिष्याम इति तावच्छब्दार्थः। ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नातीति। अज्ञानं किञ्चिदाश्रयाश्रितम्। कुत्रचित् विषये कस्यचित् ज्ञानं प्रतिबध्नाति। तथा च प्रागाश्रयं विकल्प्येदानीं प्रतिबध्यज्ञानाश्रयविकल्पः क्रियते। ब्रह्म प्रतिबध्नातीत्यर्थः। ब्रह्मावरणस्य ब्रह्म प्रत्यावरणस्येत्यर्थः। एवमुत्तरत्रापीति ज्ञातव्यम्। प्रतिबन्धनीयज्ञानविषयः विकल्प्यते ब्रह्मगत इति अवभासन्ते अद्वितीयत्वादिधर्मा इति शेषः।

**वा०चं०—** अधिष्ठानसत्त्वसंसर्गारोपपक्षनिराकरणपरत्वेन तस्येति भाष्यं योजयित्वा प्रातीतिकसत्त्वसद्भावपक्षदूषणान्तरपरत्वेन तद्योजयितुं तं पक्षमुपन्यस्य पूर्वदूषणं च स्मारयति **अपर आहेत्यादिना**। अधिष्ठानसत्तासंसर्गस्य सदसद्विलक्षणत्वे तत्सत्त्वानुभवविरोधतादवस्थ्यमित्याशङ्कापरिहाराय सत्त्वत्रैविध्यपक्षस्य विवरणे उपन्यासात्तस्य पश्चादुपादानमिति द्रष्टव्यम्। पारमार्थिकं नाम कालत्रयबाधाभावोपलक्षितं स्वरूपं





मायाशब्देन व्यावहारिकसत्त्वसंपादिन्यविद्या अविद्याशब्देन प्रातिभासिकसत्त्वनिर्वाहकमज्ञानमुच्यते । यद्यपि तन्मतेऽपि मायाऽविद्ययोर्न भेदस्तथाऽप्येकस्मिन्नेव वस्तुनि विक्षेपजनकत्वावरकत्वोपाधिना वा स्वेच्छाधीनत्व-तन्नियमाभावोपाधिना वा तद्भेदाभ्युपगमादेवमुक्तिरिति ध्येयम् ।

**वा०र०**— अपरपक्षेऽपि रजतादौ सत्त्वारोपसाम्यात् किमिति मतान्तरत्वेन तदाशङ्कानिरासपरतया तस्येति भाष्ययोजनेत्यतः पूर्वोत्तरमतयोर्भेदं वदंस्तन्निरासकतया भाष्ययोजनासार्थक्यं प्रतिपादयन्नुत्तरग्रन्थतात्पर्यमाह **अधिष्ठानेति** । अधिष्ठानं शुक्तिः । तद्गतसत्त्वस्य संसर्गो रजते आरोप्यत इति पक्षेत्यर्थः । **प्रातीतिकेति** । सत्त्वं त्रिविधम् । पारमार्थिकं व्यावहारिकं प्रातिभासिकं चेति । तत्र रजतेऽपि स्वतन्त्रं प्रातिभासिकं सत्त्वमस्ति । नत्वन्यगतस्य तत्रारोप इति पक्षेत्यर्थः । इति पक्षे यद्दूषणान्तरं तत्परत्वेनेत्यर्थः । **पूर्वेति** । यदपेक्षया दूषणान्तरत्वं तत्पूर्वमुक्तदूषणमित्यर्थः । ननु स्वतन्त्रसत्त्वपक्षदूषणानन्तरमधिष्ठानसत्त्वसंसर्गारोपपक्षनिराकरणे कर्तव्ये कुतो व्युत्क्रम इत्यतस्तत्र निमित्तमाह **अधिष्ठानसत्तेति** । रजत इति शेषः । रजते शुक्तिगतसत्त्वसंसर्गो न सन्नाप्यसन् किन्तु सदसद्विलक्षणरूपानिर्वचनीय इत्यङ्गीकारे रजते सर्वथा सत्त्वं नेतिं वाच्यम् । तथा च रजतं सदिति तत्सत्त्वानुभवविरोध इति योज्यम् । तथा च सत्तारोपपक्षे प्राप्तानुपपत्तिपरिहारकत्वेन रजते स्वतन्त्रसत्त्वोप-पादकप्रकारस्य विवरणे उपन्यासात्तत्क्रमेणैव पक्षान्तरमिहोपन्यस्तमित्यर्थः । **ब्रह्मणीवेत्यादि** मूले ब्रह्मणि पारमार्थिकमिवाम्बरादेर्मायोपाधिकमिवेति योज्यम् । ब्रह्मणीवेत्यनेन ब्रह्मगतं सत्त्वं परेणाङ्गीकृतमिति प्रतीयते । निर्विशेषवादिना तु तथा नाङ्गीकृतमित्यत आह **पारमार्थिकं नामेति** । स्वरूपमित्युक्त्याऽतिरिक्तधर्मोक्त्य-भावान्नासदनुवाद इत्याह । मायाविद्ययोर्भेदाप्रतीतेराह **मायेति** ।

**विठ्ठ०**— स्यादस्मन्मते सत्त्वप्रतीतिमात्रेण प्रवृत्त्युपपत्तिसत्त्वस्यैकविधत्वेन कीदृशसत्त्वमिति प्रश्नानव-काशात् परमते तु पारमार्थिकव्यावहारिकप्रातिभासिकरूपेण सत्त्वेऽप्यवान्तरभेदाङ्गीकारेण सत्त्वप्रतीतिमात्रस्य प्रवृत्तावनुपयोगित्वात्प्रवृत्त्यर्थं सत्त्वविशेषजिज्ञासावश्यंभावेन रजते आरोपितं प्रतीयत इत्येतद्दूषितं अधुना शुक्त्यवच्छिन्नात्माश्रिताविद्योपाधिकं तत्र विद्यमानमेव प्रातिभासिकं सत्त्वं प्रतीयत इति मतं दूषयितुमेतदेव मूलं व्याचष्टे **अपर आहेति** ।

**४४४ सु०— तस्य सत्त्वस्य अनिर्वचनीयत्वे** प्रातीतिकत्वे तथैव प्रतीतौ स्वरूपमात्रप्रतीतौ वा **स्यादेव अनवस्थितिः** अव्यवस्थितिः । 'प्रवृत्तेरि'ति शेषः । व्यावहारिकत्वाद्याकारेण प्रतीतौ पूर्ववदनवस्थितिः स्यादेवेति ।

**तस्मान्न वियदादिप्रपञ्चस्यानिर्वचनीयत्वमिति सिद्धम् ।**





**गु०दी०— अनवस्थितिः** इत्यत्र विवादपदं शुक्तिरजतमसन्न सत्त्वेनापरोक्षतः प्रतीयमानत्वाद्धटवदिति वदतो मावादिनः हेतुरस्तु साध्यं मास्त्वित्यप्रयोजकताख्यदूषणं शशशृङ्ग एव व्यभिचाराख्यदूषणमन्योन्याश्रय-ग्रस्ततया व्याप्त्यसंभवेन व्याप्यत्वासिद्ध्याख्यदूषणं चैकस्मिन्नेव दूषणेऽवस्थितिरवसानं नेत्याद्यर्थोऽप्यनवस्थिति-पदेनैव सूचितः । तथा हि सत्त्वेनापरोक्षतः प्रतीतं शुक्तिरजतं नासदिति वदन् प्रष्टव्यः । किमपरोक्षप्रतीता-ववश्यापेक्षितसन्निकर्षासंभवात् असन्नेत्युच्यते, उतासति सत्तोल्लेखासंभवात् । नाद्यः दोषवशादसन्निकृष्टमेव रजतं प्रतीयत इति वदता त्वयैव सन्निकर्षासंभवस्य परिहृतत्वेनापरोक्षप्रतीतौ बाधकाभावात् । न द्वितीयः परोक्षरूपासत्प्रतीतावसति सत्त्वोल्लेखस्यापि त्वयैवाङ्गीकारात् । अतोऽस्तु हेतुः पक्षे साध्यस्य तु नावस्थितिरित्येकस्मिन्नपि पक्षेऽवस्थितिर्नेति चानवस्थितिपदेनैव सूचितत्वात् । अज्ञातशशविषाणाभावेन बालेन दूरमूर्ध्वभूतशशकर्णद्वये आरोप्यमाणशशविषाणयोरसतोः सत्त्वेनापरोक्षतः प्रतीयमानत्वस्य सत्त्वाद्व्यभिचारश्च । साध्यवत्येव हेतोरवस्थितिर्नेत्यनवस्थितिपदेनैव सूचितत्वात् । सत्त्वेनापरोक्षतः प्रतीत्युत्तरकालं शशशृङ्गमपि नासदिति तु पूर्वोक्तविकल्पेनैव निरस्तम् । यदपरोक्षतया प्रतीयते तन्नासदिति व्याप्तिसिद्धौ सार्वजनीनतया असत एवास्य शशशृङ्गस्यापरोक्षप्रतीत्या असत्त्वाभावसिद्धिः । असत्त्वाभावे सिद्धेऽत्र व्यभिचाराभावात् व्याप्तिसिद्धि-रिति परोक्तहेतोर्व्याप्तिविघटकान्योन्याश्रयकत्वम् । एकस्यावस्थितिं विना अन्यस्यावस्थितिर्नेत्यनवस्थितिपदेनैव सूचितत्वादिति द्रष्टव्यम् ।

**वं०प०— स्वरूपमात्रप्रतीताविति** । प्रातिभासिकत्वव्यावहारिकत्वौदासीन्येन रजतस्वरूपमात्र-प्रतीतावित्यर्थः । अत्र प्रसिद्धानवस्थाया असंभवेनानवस्थितपदं व्याचष्टे **अव्यवस्थितिरिति** । तथाच प्राति-भासिकत्वेन प्रतीतौ प्रवृत्त्यव्यवस्थितिः । रजतस्वरूपमात्रप्रतीतौ च तत्र व्यावहारिकत्वाप्रतीत्येष्टाभ्युपाय-त्वानुमानासंभवेन प्रवृत्त्यव्यवस्थितिरेवेत्यर्थः ।

**आनन्दः**— ननु **तस्येति** मूले सत्त्वस्य प्रातिभासिकत्वेऽनवस्थितिदानमयुक्तं तस्य प्रातीतिकत्वेन वा स्वरूपेण वा भासमानत्वेन तदसंभवादित्यतो व्याख्याति **तस्येति** ।

**वा०चं०**— इदं च हेयं मायामतेनैव सह शून्यमतं बुधैरित्यनुव्याख्यावसरे स्वयमेव वक्ष्यति । प्रातिभासिकत्वपक्षं मूलारूढं कृत्वोक्तविकल्पनिरासकत्वेन स्यादेव ह्यनवस्थितिरित्येतदावृत्त्या योजयति **तस्येत्यादिना** ।

**वा०र०**— उक्तभेदो नाश्रद्धेय इत्याशयेन वक्ष्यमाणमूलसंमतिमाह **इदं चेति** । **मूलारूढमिति** । अनिर्वचनीयत्वस्य व्यावहारिकत्वरूपत्वपक्षे तत्पक्षस्य मूलारूढता नायातीत्यतः प्रातीतिकत्वं इत्यनेनानिर्वच-नीयत्वं व्याख्यातमिति भावः ॥

**वि०ठ०**— वैलक्षण्यं सदसतोरित्यादिनोक्तं प्रपञ्चस्यानिर्वचनीयत्वमुपसंहरति **तस्मादिति** ।





॥ मायामते अधिकारिविषयफलयोगादिवर्जितत्वम् ॥

॥ बन्धस्य मिथ्याभूताज्ञानोपादानकत्वानुपपत्तिः ॥

॥ अज्ञानासंभवः ॥

॥ आश्रयाद्यभावः ॥

जीवाश्रयाभावः—

**४४५ सु०— एवं 'बन्धस्याध्यस्तत्ववर्णनं प्रकृतानुपयुक्तमयुक्तं चे'त्यभिधायाधुना यत्परेण 'मिथ्याज्ञाननिमित्त' इति बन्धस्य मिथ्याभूताज्ञानोपादानकत्वमुक्तं तदप्यनुपपन्न-मित्याशयवान् परमतेऽज्ञानासंभवं तावदाह निर्विशेष इत्यादिना।**

अनु०— **निर्विशेषे स्वयंभाते किमज्ञानावृतं भवेत् ॥**

**तथा हि। यत्तावत्परेण भावरूपमज्ञानमङ्गीकृतं तत्किं जीवाश्रयम्, उत जडाश्रयम्, अथ ब्रह्माश्रयम् ॥ नाद्यः। प्रकृत्यधिकरणे निराकरिष्यमाणत्वात्।**

**परि०— प्रकृत्यधिकरण इति**। 'सा मन्ददृष्टिस्तस्यैव ब्रह्मणः किं ततोऽन्यगे'त्यादिनेति भावः।

**यादु०— उक्तमिति**। स्वग्रन्थ इति शेषः। मिथ्या च तदज्ञानं च मिथ्याज्ञानम्। मिथ्येत्यनिर्वचनीय-तोच्यते। अज्ञानमिति जडात्मिकाऽविद्याशक्तिर्ज्ञानपर्युदासीनोच्यते। तन्निमित्तस्तदुपादान इति तद्वाक्यार्थः। अत्र ज्ञानाभाववारणाय मिथ्येतिपदम्। भ्रान्तिज्ञानवारणायाज्ञानेति पदमित्याहुः। **प्रकृत्यधिकरण इति**। अन्यगा चेत्स्वतोऽन्यतेत्यत्रेति शेषः।

**आनन्दः**— नन्वेतावतैव परभाष्यस्य दूषितत्वेन किमुत्तरग्रन्थेनेत्यतस्तत्सङ्गतिमाह **एवं बन्धस्येति**।

**वा०चं०**— ननु निर्विशेष इत्यादिरज्ञानानुपपत्तिप्रतिपादको ग्रन्थोऽसङ्गत इत्यतो विषयप्रयोजनोप-युक्ततया परेणोक्तस्य बन्धाध्यासवर्णनस्य तदनुपयुक्ततां बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्यनेनाभिधाय मिथ्यात्वमपि बन्धस्येत्यादिनैतत्पर्यन्तेन ग्रन्थेन तस्यायुक्ततोपपादिता। अधुनोपादानान्तरासंभवप्रतिपादन-पूर्वमज्ञानोपादानकतायास्त्वया बन्धाध्यासस्योपपादिता। तदसंभवाच्चाध्यासानुपपत्तेः विषयप्रयोजनानुपपत्तेः शास्त्रवैयर्थ्यमेवेत्यज्ञानाभावत इत्यादिना वक्तुमज्ञानानुपपत्तेरनेन प्रतिपादनान्नानुपपत्तिरित्याह **एवमिति**। निर्विशेष इत्याद्यव्यवहितग्रन्थेनैवाज्ञानोपादानकत्वानुपपत्तेः कण्ठतोऽनुक्तिरित्याशयवानित्युक्तम्। ननु तथाऽप्य-सङ्गतिरेवाज्ञानस्यानेनानिरासात्। न च वक्ष्यमाणरीत्या व्यापकीभूताश्रयादिनिरासेन तन्निरास एव सिद्ध्यतीति

वाच्यम् । तथाऽपि ब्रह्मरूपाश्रयनिरासेऽपि जीवजडरूपाश्रयसंभवेन तदनिरासान्नाज्ञानाभावसिद्धिः । न च तन्निरासोऽपि । तथात्वे किमज्ञानावृतं भवेदित्यस्यासङ्गत्यापत्तेः । न च विषयनिरासार्थं तदिति वाच्यम् । तर्हि सप्तमीनिर्देशानुपपत्तेः । न च ब्रह्माश्रितत्वपक्षे ब्रह्मविषयत्वनिराससूचनाय स इति वाच्यम् । तर्हि विशिष्य ब्रह्माश्रितत्वपक्षस्याप्यनिरासान्न्यूनतैव । न चावरणमित्युत्तरग्रन्थासङ्गतिश्चेत्यतो जीवाश्रितत्वपक्षस्योत्तरत्र निराकरिष्यमाणत्वाद्विशिष्य ब्रह्माश्रितत्वपक्षनिरासस्य तत्रैव सिद्धत्वाज्जडाश्रितत्वपक्षनिरासस्य च न चावरण-मित्युक्तरीत्या लब्धत्वादत्र कं प्रतिबध्नात्यज्ञानं ब्रह्म जीवं जडं वेति विकल्पान्तरस्याभिप्रेतत्वात्तत्र जडपक्ष-निरासाय न चावरणमित्युत्तरवाक्यस्यापि सङ्गतत्वादित्याशयेनाश्रयादिकं विकल्प्य बहिरेव किञ्चित्पक्षदूषणपूर्वकं पक्षविशेषदूषणपरतया वाक्यानि योजयति **तथा हीत्यादिना** । ज्ञानाभावे वक्ष्यमाणदूषणानुपपत्तावपि न परेणोपादानतयाऽङ्गीकृतभावरूपाज्ञान इति सूचयितुं भावरूपमित्युक्तम् । यद्वा अनेन भावरूपत्वे विवरणोक्त-युक्तिं सूचयति । तथा हि । तेन ह्यज्ञानमित्यत्र नञोऽभावविरोध्यन्यार्थकत्वेन ज्ञानाभावभ्रान्तिज्ञान-तत्संस्काराणामज्ञानशब्देनाभिधानात्तेषामेव तत्त्वावभासप्रतिबन्धेन नास्ति न प्रकाशत इति व्यवहारजनकत्व-संभवान्न भावरूपाज्ञानोपादानकाध्यासकल्पनेत्याशङ्क्योक्तं सुषुप्त्यादौ ब्रह्मस्वरूपानवभासस्यानन्यथासिद्धत्वा-त्तत्सिद्धिः । तत्र न तावद् ब्रह्मानवभासः स्वत एव तस्य स्वप्रकाशत्वात् । नापि पुरुषान्तरसंवेदनवद्द्रष्टुर्जीवाद् ब्रह्मणो भिन्नत्वात्तत्त्वमसीत्येकत्वश्रुतेः । नापि प्रतिबन्धवशात् । तद्धि भ्रान्तिज्ञानं वा स्यात्तत्संस्कारो वा ज्ञानाभावो वा कर्म वा स्यात् । न तावदाद्यः । सुषुप्त्यादौ मिथ्याज्ञानस्यापि लुप्तत्वात् । न द्वितीयः । रजतभ्रमसंस्कारस्य शुक्तितत्त्वावभासप्रतिबन्धकत्वादर्शनात् । न तृतीयः । स्वरूपज्ञानस्य नित्यत्वादन्यज्ञानाभावस्य स्वरूप-प्रकाशप्रतिबन्धाक्षमत्वात् । अन्यथा शुक्तावपि प्रतिबन्धापत्तेः । चतुर्थेऽपि कर्माणि किमखिलं चैतन्यं प्रतिबध्नन्त्युत स्वावभासकांशं विहाय । आद्ये साधकाभावात्कर्मासिद्ध्यापत्तिः । द्वितीये त्वर्धजरतीयापत्तिरिति भावरूपमज्ञानमेव प्रतिबन्धकं वाच्यमिति । अङ्गीकृतमित्युक्त्या चाङ्गीकारमात्रमेतन्न तु युक्तमिति सूचयति । तथा हि । न तावदाद्यपक्षे दोषः । स्वप्रकाशजीवस्वरूपभिन्नस्यापि स्वभावादेरिव ब्रह्मणोऽप्रकाशोपपत्तेः । श्रुतेरन्यार्थतायाः सूत्रकृतैव वक्ष्यमाणत्वान्न द्वितीयेऽपि । दृढभ्रान्तिजन्यसंस्कारस्य तत्त्वावभासप्रतिबन्धकतायास्तव देहात्मभ्रमादावेव दर्शनान्न तृतीयेऽपि । कर्मणां प्रतिबन्धकत्वेऽनुपपत्त्याभावाच्च । न चोक्तविकल्पदोषापत्तिः । भावरूपावरणपक्षेऽपि साम्यात् । न च तत्र स्वावभासकांशपरित्यागस्यार्धजरतीयस्याप्यहमज्ञ इत्यनुभवः कल्पक इति वाच्यम् । तस्य ज्ञानाभावविषयकताया वक्ष्यमाणत्वात् । कर्मविषयकपरोक्षानुभवस्य तत्रार्धजरतीयकल्पकत्वोपपत्तेश्च । न च संस्काररूपत्वान्न कर्मणां प्रतिबन्धकत्वमिति वाच्यम् । तेषां संस्काररूपत्वासिद्धेः । सिद्धौ वा संस्काररूपस्यापि प्रतिबन्धकत्वेऽनुपपत्त्यभावाच्च । न चैवं रजतभ्रमसंस्कारस्यापि शुक्तितत्त्वावभासप्रतिबन्धकत्वापत्तिः । दृढत्वादृढत्वाभ्यां विशेषोपपत्तेः । धर्मिकल्पनातो धर्मकल्पनाया लघीयस्त्वाच्च । ज्ञानमावृत्य तु तम इति स्मरणात्तमोगुणो वाऽस्तु तत्प्रतिबन्धकः । न च तस्य ज्ञानादनिवृत्तावनिर्मोक्षप्रसङ्गः । निवृत्तौ च नाममात्रेऽविवाद इति वाच्यम् । नैयायिकाद्यभिमतमनआदिवत्कार्याक्षमत्वेनाप्युपपत्तौ ज्ञानान्निवृत्तेरभावेन नाममात्रत्वाभावात् । अतो नैतद्युक्त्या भावरूपाज्ञानसिद्धिरिति दिक् । न च जीवाश्रितत्वपक्षस्य जड इत्यननुवर्त्य न चावरणमित्यनेन





निरसितुं शक्यत्वात् । जड इत्यनुवृत्तावपि जडं प्रतिबध्नातीतिवज्जडाश्रितत्वतद्विषयकत्वपक्षयोस्तेनैव निरसितुं शक्यत्वात् । तथाऽव्याख्याय बहिरेव तत्पक्षदूषणं कुत इति वाच्यम् । जीवशब्दस्य चिन्मात्रपरत्वेऽसत्य इत्याद्युक्तहेत्वयोगात् । विशिष्टपरत्वेऽपि भामत्यादौ जीवाश्रितत्वपक्षाभ्युपगमेन तेन च नेष्यत इत्युक्तहेत्वयोगाद्विवरणमतानुसारेण कथञ्चित्तदुक्तिसंभवे सकलमतानुसारेणासंभवात् । प्रकृत्यधिकरणे चान्यगा चेत्स्वतोऽन्यतेत्यादिना स्पष्टमेव जीवाश्रितत्वपक्षस्य सविस्तरं निरासान्न तथा व्याख्यातम् । नापि जडाश्रितत्वादिपक्षनिरासकतया । अप्रकाशस्वरूपस्याप्यज्ञानाश्रयविषयत्वयोरनुपपत्त्यभावेनोत्तरवाक्योक्तहेत्वनुपपत्तेः । अतस्तदुपपत्तये विकल्पान्तरमत्र विधाय तत्रत्यजडपक्षनिरासपरत्वेनैव तद्वाक्यं योजितम् । अत एवैतादृशवाक्यरहिते उपाधिखण्डनादौ कं प्रतिबध्नातीति विकल्पमकृत्वाऽऽश्रयविषयविकल्पमात्रदूषणपरतयैव व्याख्यानं कृतमिति द्रष्टव्यम् । अत्र ब्रह्माश्रितत्वस्य विवरणकारेणेव जीवाश्रितत्वस्य भामत्यामङ्गीकारेण तस्यापि प्राधान्यसूचनायादौ ग्रहणम् । यद्वा ब्रह्माश्रितत्वपक्षस्य भाष्ये निराकरणात्तं शेषयितुं प्रसक्तपक्षयोर्बहिरेव निराकरणीययोर्मध्ये पराङ्गीकृततया जीवाश्रितत्वपक्षस्य प्राधान्यादादौ ग्रहणम् । जीवाश्रितत्वं वदता जीवशब्देन चिन्मात्रमेवोच्यत उत तदन्यत् । नाद्यः । तस्य सर्वज्ञत्वेन समानविषयकज्ञानाज्ञानयोर्विरोधेनाज्ञानाश्रयत्वानुपपत्तेः । न च भ्रान्तेः प्रमातृत्वादेश्चाज्ञानमूलकत्वादसङ्गस्वरूपज्ञप्तेश्चाविद्यां विना विषयासङ्गतेर्भ्रान्त्या प्रमाणतः स्वरूपप्रज्ञया वा त्रेधाऽपि सर्वज्ञत्वमज्ञानमाक्षिपत्येव न तु प्रतिक्षिपतीति वाच्यम् । अविद्यारहिते तुरीयेऽपि तुरीयं तत्सर्वदृक् सदेति सार्वज्ञश्रुतेः स्वरूपप्रज्ञयैव सार्वज्ञोपपत्तेः । असङ्गश्रुतिस्तु पापलेपाभावविषयत्वेन सावकाशा । भ्रान्त्यादिना सार्वज्ञ्येऽपि यादृशतादृशसार्वज्ञ्यस्यापि विशेषाज्ञानविरोधित्वेन सति तस्मिन्ननुपपत्तेश्च । अन्यथा शुक्तिज्ञानवतोऽपि तदज्ञानं न विरुद्ध्येतेति भ्रमानुच्छेदप्रसङ्गः । एतेन सविशेषमेव सार्वज्ञ्यमिति निरस्तम् । द्वितीयेऽपि वस्तुतो ब्रह्मान्यस्य जीवशब्देनोक्तावपसिद्धान्तः । अविद्ययाऽऽविद्यकबुद्ध्यादिना व्यवच्छिन्नस्य तत्तत्प्रतिबिम्बितस्य वा कल्पितभेदस्य जीवशब्देनोक्तावविद्यासिद्धौ जीवसिद्धिस्तत्सिद्धौ च तदाश्रिताविद्यादिसिद्धिरित्यन्योन्याश्रयाद्यापत्तेः । न च यथा निरंशेऽप्याकाशे घटस्तटस्थ एव तमुपलक्ष्यैकदेशं संपाद्य तेन संबध्यते तद्वदविद्याऽपि तटस्थैव चिन्मात्रमुपलक्ष्यैकदेशरूपं जीवं संपाद्य तत्रावतिष्ठत इति नेतरेतराश्रय इति वाच्यम् । निराश्रयाविद्यायोगेन जीवसिद्धावविद्यासिद्धिस्तत्सिद्धौ तदुपलक्षितजीवसिद्धिरित्यन्योन्याश्रयापरिहारात् । न च बीजाङ्कुरवददोष इति वाच्यम् । वैषम्यात् । व्यक्तिभेदेन हि तत्रादोषत्वम् । न चात्र जीवाविद्याव्यक्तिभेदोऽत्रापि व्यक्तिभेदाङ्गीकारे चक्रकानवस्थापत्तेः । न च जीवाज्ञानादेरादित्वेनोत्पत्त्याद्यप्रतिबन्धकत्वादनवस्थादिरदोष इति वाच्यम् । सर्वथानपेक्षायां सत्यत्वेनापसिद्धान्तापत्त्या भ्रान्तिकल्पितत्वं वदता प्रयुक्त्यादौ परस्परापेक्षाया अवश्यवाच्यतया तत्प्रतिबन्धकत्वेनैवान्योन्याश्रयाद्यापत्तेः । उत्पत्तिज्ञप्तिप्रतिबन्धकत्वेनैव तस्य दोषत्वे चैत्रमैत्रादेरन्योन्यारोहणस्याप्यङ्गीकारप्रसङ्गः । न च प्रमेयत्वाभिधेयत्वादेरन्योन्यवृत्तिवदन्योन्यापेक्षोपपत्तिः । तद्वदस्याप्रमितत्त्वादहमज्ञ इत्यादिप्रतीतेश्च ज्ञानाभावविषयत्वेन सत्यभेदेन वोपपत्तेः । अन्यथाऽन्योन्याश्रयत्वादिः क्वापि दोषो न स्यात् । तस्मान्न जीवाश्रिताज्ञानपक्षो युक्त इति ब्रह्मणश्चेत्क्व सार्वज्ञ्यमित्यादिनोपपादयिष्यत इत्याशयेनाह **नाद्यः प्रकृत्यधिकरणे निराकरिष्यमाणत्वादिति ।**





**वा०र०— प्रकृतानुपयुक्तमित्यभिधायेति** मूलस्यार्थः। विषयप्रयोजनेत्यादिरभिधायेत्यन्तः। अयुक्तत्वं चेत्यभिधायेति मूलस्यार्थो मिथ्यात्वमपीत्यादिरुपपादितेत्यन्तः। **अध्यासस्योपपादितेति**। अध्यासभाष्यादाविति शेषः। मिथ्या च तदज्ञानं च मिथ्याज्ञानम्। मिथ्येत्यनिर्वचनीयतोच्यतेऽज्ञानमिति जडात्मिकाविद्याशक्ति-र्ज्ञानपर्युदासेनोच्यते। तन्निमित्तस्तदुपादानक इति मूलोदाहृततद्वाक्यार्थः। टीकायां त्वयेत्यस्य तु परेणेत्यर्थः। एवंविधोक्त्युपपादनं च प्रागेव कृतम्। **तदसंभवात्** अज्ञानासंभवात्। **अध्यासेति**। उपादानाभावे तदनुपपत्त्या अध्यासाधीनविषयप्रयोजनयोरनुपपत्तेरित्यर्थः। **इत्यादिना** भाष्येण। **अनेन** निर्विशेष इत्यादिभाष्येण। **कण्ठत इति**। अज्ञानस्यासंभव एव तत्र प्रतिपाद्य इति भावः। **नाज्ञानेति**। यावदाश्रयनिरासाभावे निराश्रयत्वासिद्धेरिति भावः। सिद्धिरित्यनन्तरं यत इति शेषः। अज्ञानाभावसिद्धेरभावादिति सिध्यति। तेन न वाच्यमिति प्रतिज्ञायां हेतुलाभः। **तन्निरासेऽपीति**। ब्रह्मरूपाश्रयनिरासोऽपि नापीत्यर्थः। प्राक् तदङ्गीकारेण जीवाद्याश्रयसंभवोक्तिरिति ज्ञेयम्। **असङ्गत्यापत्तेरिति**। तद्भागस्य विषयनिरासकतयाऽश्रयनिरासकत्वाभावादिति भावः। तर्हि विषय-निरासार्थमेव तद्भागोऽस्त्विति शङ्कते **न चेति**। **सप्तमीति**। तन्निर्देशेनाश्रयदूषणत्वस्यैव सिद्धेरिति भावः। उभयानुसारेणोभयदूषणत्वं तर्ह्यस्त्विति शङ्कते **न च ब्रह्मेति**। **केवलब्रह्माश्रितत्वेति**। केवलजीवाश्रितत्वपक्षस्य यथाऽन्योन्याश्रयादिना निराकरणमेवं स्वतः सर्वज्ञेऽविद्याया न योग इत्यादिरूपेण ब्रह्ममात्राश्रितत्वपक्षनिरासस्य करणानन्तरमेव विषयविकल्पसाहित्येन तत्पक्षनिरासस्य सङ्गततया तन्निरासाभावान्न्यूनतेत्यर्थः। तत्पक्षनिरासक-मन्यदिह नास्तीति भावः। **असङ्गतिश्चेति**। तस्य जडावरणत्वपक्षनिरासकत्वेन तन्निरासस्य च ब्रह्माश्रितो ज्ञानपक्ष-निरासावसरे सङ्गत्यभावादित्यर्थः। एतच्छङ्काग्रन्थे केवलब्रह्माश्रितत्वपक्षस्य निराकरणाभावशङ्का नोत्तरमूलव्यावर्त्या। अपि तु मूले तन्मात्राश्रितत्वपक्षदूषणं प्रकृत्यधिकरणोक्तरीत्योपलक्षणया बोध्यमिति प्रकृत्यधिकरण इति संपूर्णाधिकरणं कुर्वता सूचितत्वात्तदनुसारेण स्वयं करिष्यमाणतत्परिहारव्यावर्त्येति न दोषः। **तत्रैवेति**। उत्तरत्रैवेत्यर्थः। अनेन **तृतीयेऽपीति** मूले ब्रह्मणो वक्ष्यमाणरीत्याऽज्ञानाश्रयत्वायोग इति दूषणं प्रवर्त्य किञ्च तद्ब्रह्मैव प्रतिबध्नातीत्यादि योजना सूचितेति ज्ञेयम्। **इत्युक्तरीत्येति**। तदनुव्याख्यानस्य जडं प्रत्यावरणं ब्रह्माश्रितमज्ञानं इत्येतत्पक्षदूषणपरतया तदाश्रितत्वपक्षदूषणपरतया योजनाभावाद्रीत्येत्युक्तम्। जडावरणत्वं पक्षनिराकरणन्यायेनैव तदाश्रितत्वनिराकरणसौलभ्यादिति भावः। तद्वाक्यस्य जडाश्रितत्वनिरासपरत्वेन योजना कुतो न कृतेत्याशङ्कामुत्थाप्य तन्निरासं तु ग्रन्थकृदेव करिष्यतीति ज्ञेयम्। अज्ञानमित्यत्र नञः किमभावोऽर्थ इत्यादितत्त्वदीपनं न च ग्रहणमिथ्याज्ञानतत्संस्कारेभ्योऽन्यदज्ञानं नाम न पश्याम इत्यादिविवरणं तद्व्याख्येयम्। सुप्त्याऽत्रैवाहङ्कारादीत्यादिपञ्चपादिकाग्रन्थं च मनसि निधायाह **तथा हि तेन हीत्यादिना**। व्याख्येयमेतदस्ति। ................अनुसारेण पराभिमतभावरूपाज्ञानं निराकरोति तथा हि **न तावदाद्यपक्ष इत्यादिना दिगित्यन्तेन**। व्याख्येयम्। .......................... एतच्च भावरूपाज्ञाननिराकरणं न सर्वथा स्वमते तदभावाभिप्रायेण। स्वमते तदङ्गीकारात्। अनाद्यविद्येत्यादिरूपाया मूलकारीयस्थलान्तरोक्तेः सत्त्वाच्च। अपि तु परोक्तरीत्या तदभिप्रेतानिर्वच-नीयाज्ञाने मन्तव्यमित्याशयेन। अत एवाज्ञाननिरासकाज्ञानस्य च मिथ्यात्वमित्येतदनुव्याख्यानव्याख्यानान्ते मूलकारः किञ्च न वयं भावरूपाज्ञानपरिपन्थिनः। किन्नाम परपक्षे तन्न संभवतीति ब्रूम इति वक्ष्यतीति ज्ञेयम्।





मूलकाराचातुरीमाशङ्क्य परिहरति **न च जीवाश्रितत्वेत्यादिना** । **अननुवर्त्य** अनाकृष्य । **अनुवृत्तावपि** आकर्षणेऽपि । **तद्विषयकत्वेति** । न चावरणमज्ञानमित्यस्य जडावरणनिरासपरतया योजनेऽपि न जडस्य विषयतानिरासलाभस्तत्राङ्गीकृतः । अत एव ब्रह्माश्रितं तदावरणाज्ञानं ब्रह्मान्यद्वा वृणोतीति तृतीयपक्षनिराकरण-मज्ञानसिद्धिसापेक्षतयैव कृतम् । एवं चावरणं यस्य स एव विषयस्तस्येति । आवरणत्वनिराकरणमेव विषयत्वनिराकरणमिति भ्रमानवकाशः । जडाश्रितत्वतद्विषयत्वपक्षयोरित्यत्र तद्विषयत्वनिराकरणस्य सत्त्वात्तथा निरासाशक्यत्ववचनासामञ्जस्यमिति शङ्का दूरनिरस्ता । अन्यथा ब्रह्मावरणमित्युक्त्यैव ब्रह्मविषयकत्वे प्राप्ते तद्विषयकेणाज्ञानेन कथञ्चिद्धर्म आव्रियत इति पक्षप्रसक्तावपि कथं ब्रह्मान्यद्वा किञ्चिदित्यन्यपक्षावकाशः । व्याघातापत्तेः । आवरणं खलु पटलादिकं क्वचिदाश्रितम् । किञ्चिद्विषये किञ्चित्प्रतिबध्नातीत्युक्तप्रतिबद्धत्वस्य स्वपरग्रहणाभावरूपतया आवृतत्वरूपविषयत्वस्य च प्रतिबद्धपुरुषादेर्यज्ज्ञानाभावस्तत्त्वरूपतया भेदस्य स्पष्टत्वाच्च । एवं चाव्रियते आवृत्तमित्यादावावृत्तत्वं विषयत्वरूपमावरणप्रतिबद्धत्वाद्भिन्नमेव सिद्धमुत्तरमूले । ततश्च न चावरण-मित्यनेनाज्ञानस्य जडावरणत्वनिराकरणेऽपि न जडविषयतानिराकरणमिति युक्तम् । तेन तन्निरासशङ्कनम् । एवमेवाज्ञानाश्रयविषयत्वयोरित्युत्तरत्राप्यप्रकाशस्वरूपतया आवरणत्वनिरासेऽपि ब्रह्माश्रिततदावरणाज्ञानेनान्य-स्यावृतत्वपक्षवज्जडावरणत्वाभावापादकाप्रकाशस्वरूपत्वेऽपि जडानावरणाज्ञानविषयत्वं तु स्यादेवेति भाव इति द्रष्टव्यम् । **नापि जडेति** । आदिपदेन विषयकत्वपरिग्रहः । व्याख्यातमिति पूर्वेणानुवृत्तेन संबन्धः । **उत्तरवाक्येति** । अप्रकाशेत्युत्तरेत्यर्थः । **विकल्पान्तरमिति** । ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नाति उत जीवमथ वा जडमिति विकल्पमित्यर्थः । **एतादृशेति** । न चावरणमज्ञानमित्येतद्वाक्येत्यर्थः । **उपाधीति** । आदिना मायावाद-खण्डनपरिग्रहः । उपाधिखण्डनेऽज्ञताखिलसंवेत्तुरित्यादिकमाश्रयविकल्पनिराकरणमात्रपरतया मायावादखण्डने तु सिद्धत्वात्स्वरूपस्येत्यादिकं विषयविकल्पनिराकरणमात्रपरतया व्याख्यातम् । अत्रोपाधिखण्डनादिपदेन तद्व्याख्यानस्यापि तदर्थप्रतिपादकतया ग्रहणस्य विवक्षितत्वात्तत्र व्याख्यानकरणोक्तिर्युक्ता । यद्वोपाधिखण्डन-मादिर्मूलं यस्येति तट्टीकाया एव ग्रहणम् आदिपदावृत्या वोपलक्षणया वा मायावादखण्डनटीकाया ग्रहणम् । खण्डनटीकादाविति पाठस्तु स्वरस एव । **अविद्यारहिते तुरीयेऽपीति** । .............न्यायामृतानुसारेणोपपाद्यमेतत् । **आवरकेण स्वविषय इति** । अनेनावरणपदमावरकार्थम् । तत्कृत्यं चावृत्तिरूपमित्युक्तं भवति । व्याख्यास्यति च तथैव ।

**विट्ठ०— अज्ञानोपादानकम्** इत्यत्र भावरूपाज्ञानोपादानकमित्यर्थः । ज्ञानाभावस्योपादानत्वायोगात् । वक्ष्यति च **भावरूपमज्ञानमिति** । **प्रकृत्यधिकरण इति** । अन्यगा चेत्स्वतोऽन्यतेत्यत्रेत्यर्थः ।

**चषकः—** निर्विशेष इत्युत्तरग्रन्थमवतारयति **एवमिति** । मिथ्याज्ञानमित्यत्र कर्मधारयः । **उक्तमिति** । स्वग्रन्थ इति पूरणीयम् । कल्पत्रयीमभिप्रेत्य क्रमेणापनिनीषति **नाद्य इत्यादि** । **प्रकृत्यधिकरण इति** । अन्यगा चेत्स्वतोऽन्यंतेत्यत्रेत्युपस्कर्तव्यम् ।





जडाश्रयाभावः—

**४४६ सु०— न द्वितीयः । अनभ्युपगमात् । जडस्याज्ञानकल्पितत्वेनेतरेतराश्रयत्वात् । कारणस्य कार्याश्रितत्वादर्शनाच्च ।**

**परि०—** **इतरेतरेति** । अज्ञाने सिद्धे तेन कल्पितजडसिद्धिः । सिद्धे च जडे तदाश्रितत्वेनाज्ञानसिद्धिः । न हि निराश्रयमज्ञानं संभवतीति भावः ।

**वं०प०—** **इतरेतरेति** । अज्ञानसिद्धौ तत्कल्पितजडसिद्धिः । तत्सिद्धौ तदाश्रिताज्ञानसिद्धिरितीतरेतराश्रयप्रसङ्गादित्यर्थः ।

**वा०चं०—** 'मिथ्याविशेषोऽपि' 'न चावरणम्' इत्यादिवक्ष्यमाणन्यायलब्धं दूषणं जडाश्रितत्वपक्षे प्रतिपादयति **अनभ्युपगमादिति** । तत्र निमित्तं दर्शयन्नेव हेत्वन्तरमाह **जडस्येति** ।

ब्रह्माश्रयाभावः—

**४४७ सु०— तृतीयेऽपि वक्तव्यम् । किं तद् ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नाति, उत जीवम्, अथ जडम् ।**

**परि०—** **ब्रह्मैव प्रतिबध्नाति** **ब्रह्मैवावृणोति** । **ब्रह्माश्रितमज्ञानं स्वाश्रयस्यैव ब्रह्मणो ब्रह्मविषयकं ज्ञानं यथा न भवति तथा करोतीत्यर्थः । एवं जीवं जडमित्यत्रापि ज्ञेयम् ।**

**वं०प०—** **प्रतिबध्नाति** आवृणोति । **क्वचिदाश्रितं** नयनाश्रितम् । **किञ्चिद्विषये** घटादिविषये । **किञ्चित्** ज्ञानादिकम् ।

**आनन्दः—** **ब्रह्मैव प्रतिबध्नातीति** । ब्रह्मणोऽन्यविषयज्ञाने प्रतिबन्धं करोतीत्यर्थः ।

**वा०चं०—** स्वयंप्रकाशमानस्य स्वनिष्ठेन स्वात्मानं प्रत्यावरकेणावृतत्त्वानुपपत्तावप्यन्याश्रितेनान्यं प्रत्यावरकेणावृतत्वेऽनुपपत्त्यभावात् स्वयंभात इति मूलोक्तदूषणस्य पक्षान्तरेऽनुपपत्त्या ब्रह्मविषयकत्वपक्षेऽपि ब्रह्माश्रितत्वतत्प्रत्यावरणत्वपक्ष एव दूषणमित्याशयेन ब्रह्माश्रितत्वपक्षेऽपि विकल्पान्तरमापाद्य ब्रह्म प्रत्यावरणर्मित पक्षेऽपि ब्रह्मविषयकत्वपक्ष एवेदं दूषणं योजयितुमाह **तृतीयेऽपीति** । अत एव ब्रह्माश्रितत्वपक्षस्य प्रकृत्यधिकरणे निराकरणेऽप्यत्र तत्पक्षस्य ब्रह्म प्रत्यावरणमिति पक्षस्य वाऽश्रयणेनैव ब्रह्मविषयकत्वपक्षनिरासान्न तथा चोक्तमिति द्रष्टव्यम् ।

**स०व्र०— ब्रह्मैव प्रतिबध्नातीति।** ब्रह्मणो यथेतरविषयकं ज्ञानं न स्यात्तथा करोतीत्यर्थः। एवमुत्तरत्रापि।

**चषकः— प्रतिबध्नातीति।** ब्रह्मकर्तृकज्ञानानुत्पादप्रयोजकं भवतीत्यर्थः। एवमग्रेऽपि। **ब्रह्मावरणस्य** ब्रह्मकर्तृकज्ञानानुत्पादप्रयोजकस्य।

॥ आव्रियमाणविषयाभावः ॥

ब्रह्मस्वरूपस्य स्वयंभातत्वात् आव्रियमाणत्वाभावः—

**४४८ सु०— आद्ये तस्य ब्रह्माश्रितस्य ब्रह्मावरणस्याज्ञानस्य विषयो वाच्यः। आवरणं खलु पटलादिकं क्वचिदाश्रितं किञ्चिद्विषये किञ्चित्प्रतिबध्नातीत्युपलब्धम्। तत्र ब्रह्मावरणेनाज्ञानेन ब्रह्मगतः कश्चिद्धर्मो वाऽऽव्रियते, स्वरूपमेव वा, अन्यद्वा किञ्चित्। आद्यं पक्षद्वयं निराकरोति निर्विशेष इति।**

**हेत्वर्थगर्भं विशेषणद्वयम्। किम् आक्षेपे। ब्रह्मण्यावरणतया अङ्गीकृतेन अज्ञानेन किमावृतं भवेत्। न किमपि भवेत्। न तावद्धर्मः; परेण ब्रह्मणो निर्विशेषत्वाङ्गीकारात्। नापि स्वरूपम्; स्वयंप्रकाशत्वेन नित्यसिद्धत्वात्। न हि प्रकाशमानं चावृतं चेति संभवति, आवरणकृत्याभावात्।**

**बिन्दुः— हेत्वर्थगर्भमिति।** पञ्चम्यन्तं तृतीयान्तं वा लिङ्गप्रतिपादकवचनं हेतुरित्यभिप्रायेण हेत्वर्थगर्भमिति व्याख्यातम्। **स्वमत एव युक्तिरभिहितेति स्यादिति।** तथाच प्रतीतिर्हि स्वप्रकाशतया वा प्रकाशाश्रयतया वेति सिद्धान्तानभिप्रेतनियमे शिष्याणां सिद्धान्तत्वभ्रान्तिः स्यात् सा मा भूदित्येव-मर्थमित्यर्थः।

**परि०— आवरणकृत्येति।** सिद्धप्रकाशलोपरूपकृत्यस्य नित्यसिद्धप्रकाशेऽनुपपत्तेः। स्वप्रकाशे च तस्मिन्प्रकाशान्तरानपेक्षणेन प्रकाशान्तरानुपपत्तिरूपकृत्यस्याप्यभावादिति भावः। विवृतमेतन्न्यायामृतेऽविद्याविषयभङ्गे।

**यादु०— हेत्वर्थेति।** लिङ्गवचनस्य हेतुत्वाद्धेत्वर्थेति प्रयुक्तमिति ध्येयम्।

**वं०प०— आव्रियत इति।** ब्रह्माश्रितमज्ञानं ब्रह्मगतधर्मविषयकज्ञानं प्रतिबध्नातीत्यर्थः। **अन्यद्वा किञ्चिदिति।** ब्रह्मान्यद्ब्रह्मावरणाज्ञानावृतमित्यर्थः।





**आनन्दः**— विषयाभावेऽपि आवरणं किं न स्यादित्यत आह **आवरणमिति**।

**वा०चं०**— धर्मस्वरूपयोराव्रियमाणत्वाभावे हेत्वनुक्तिप्रयुक्तन्यूनतां परिहरति **हेत्विति**। तर्हि प्रश्नार्थककिंशब्दानुपपत्तिरित्यत आह **किमिति**। ननु प्रकाशमानस्याप्यावृतत्वे को विरोध इति चेत्। आवरकेण स्वविषये क्रियमाणाऽऽवृतिः किं सिद्धप्रकाशनाश उतासिद्धप्रकाशानुत्पत्तिः अथवा प्रकाशस्य विषयासंबन्धो यद्वा प्राकट्याख्यतत्कार्यप्रतिबन्धो वाऽऽहोस्विन्नास्ति न प्रकाशत इति व्यवहारोऽस्ति प्रकाशत इति व्यवहाराभावो वा तदुभयव्यवहारयोग्यत्वायोग्यत्वे वा। नाद्यौ। प्रकाशस्य नित्यसिद्धत्वात्। न तृतीयः। ज्ञानस्य विषयसंबद्धस्वभावत्वात्। नापि चतुर्थः। अपसिद्धान्तात्। नापि पञ्चमषष्ठौ। चैतन्यमस्ति प्रकाशत इति व्यवहारस्यैव सत्त्वेन विपरीतव्यवहारतदभावयोरसिद्धेः। एतेनात्मतत्त्वं नास्ति न प्रकाशत इत्यादिव्यवहार आत्मनि भावरूपावरणनिमित्तकः। अस्ति प्रकाशत इति व्यवहारपुष्कलकारणे सत्यपि तद्विपरीतव्यवहारत्वात्। यन्नैवं तन्नैवं यथाऽस्ति प्रकाशते घट इति व्यवहारः। न च कारणपौष्कल्यमसिद्धम्। नित्यसिद्धस्वप्रकाशचैतन्यातिरेकेणात्रान्यापेक्षाया अभावात्। तथा चात्मन्युक्तव्यवहारयोग्यत्वमेवावरणकृत्यमिति निरस्तम्। अस्तीत्यादिव्यवहारस्यैव सत्त्वेन विपरीतव्यवहारासिद्धेः। यदत्रोक्तं नव्येनास्ति प्रकाशते चैतन्यमिति व्यवहारसद्भावेऽपि नाहं ब्रह्मेति सर्वेषां व्यवहारोऽहं ब्रह्मेति व्यवहारभावश्चास्त्येवेति विपरीतव्यवहारदर्शनेन तद्योग्यतास्वरूपव्यवहारादर्शनेन तदयोग्यता चेति धर्मविशेषस्तदेवावरणमनवभासत इति शब्दैरभिधीयते। न च पुरुषान्तरसंवेदनवज्जीवब्रह्मणोर्भेदादेव भेदव्यवहारोऽभेदव्यवहाराभावश्चेति वाच्यम्। तस्य जीवरूपतया श्रुतिन्यायसिद्धत्वात्। न चैवं विद्यमानेऽपि तस्मिन्घटादाविव प्रमाणाभावादेव स इति वाच्यम्। तत्स्वप्रकाशताया अपि सिद्धत्वात्। तस्माद्भ्रमविषयशुक्तिकादिविशेषस्येव ब्रह्मणोऽपि स्वप्रकाशतया यावत्स्वरूपव्यवहारसामग्र्यां सत्यामपि विपरीतव्यवहारकार्यदर्शनोन्नेयतद्योग्यताविशेषः कुतश्चित्प्रतिबन्धकाद्भवतीति तदेवावरणं तत्प्रकाशप्रतिबन्धकत्वं चाज्ञानादन्यत्र न संभवतीति तदज्ञानमेवेति नानुपपत्तिरिति। तन्न। ब्रह्माभेदाद्वितीयत्वादेः प्रकाशमानब्रह्ममात्रत्वे नास्तीत्यादिव्यवहारस्यैवानुपपत्त्या तदुपपादकाज्ञानकल्पनस्यानुपपन्नत्वात्। न च तेषां प्रकाशमानात्ममात्रत्वेऽपि कल्पितभेदेनाज्ञातत्वादीति वाच्यम्। भेदकल्पनाया अज्ञानसिद्ध्यधीनत्वेन वक्ष्यमाणरीत्याऽन्योन्याश्रयापत्तेः। तथा चाद्वितीयत्वब्रह्माभेदादीनां ब्रह्मभेदे वक्तव्ये नास्तीत्यादिव्यवहारादिना तेष्वज्ञानसिद्धावपि चिन्मात्रे तादृशव्यवहारादिना नाज्ञानसिद्धिरिति चिन्मात्राज्ञानपक्षो न समर्थितः स्यात्। अद्वितीयत्वादिविशिष्टाज्ञानपक्षस्य वक्ष्यमाणरीत्याऽन्योन्याश्रयेण सुनिरस्तत्वात्। किञ्च ब्रह्माभेदादेरभावादेव तद्व्यवहाराद्यभावोपपत्तौ न तस्याज्ञानकल्पकत्वम्। यदत्रोक्तं श्रुतिन्यायसिद्धत्वात्तस्येति। तन्न। श्रुत्यन्यथासिद्धेर्न्यायानामाभासत्वस्य सविस्तरं व्युत्पादयिष्यमाणत्वात्। अस्तु वा ब्रह्मजीवाभेदादि तथाऽपि प्रमाणाभावादेव तद्व्यवहाराभावाद्युपपत्तेर्नाज्ञानसिद्धिः। न च तत्स्वप्रकाशतासिद्धेत्युक्तमिति वाच्यम्। नास्ति न प्रकाशत इति व्यवहारविषयतामङ्गीकुर्वाणेन ब्रह्मात्मत्वमस्तीत्यादिनित्यसिद्धव्यवहारानुरोधेन स्वप्रकाशताया अनङ्गीकर्तव्यत्वात्। स्वप्रकाशब्रह्मात्मकतया स्वप्रकाशत्वस्य च सप्रतियोगिकब्रह्माभेदादेर्निष्प्रतियोगिकब्रह्मणाऽभेदानुपपत्त्याऽनुपपन्नत्वात्। अस्तु वा स्वप्रकाशब्रह्माभेदेन स्वप्रकाशत्वम्। तथाऽपि स्वप्रकाशे तस्मिन्विपरीतव्यवहारयोग्यत्वादि

विरुद्धमेव । न च प्रमाणतः स्वप्रकाशतया प्रतिपन्ने तद्विपरीतव्यवहारदर्शनकल्पितयोग्यताया अप्यनीले नभसि नीलिम्न इव मिथ्यात्वान्न विरोध इति वाच्यम् । अधिष्ठानप्रकाशो तदप्रकाशाद्यारोपस्यानुपपत्तेः । न च शुक्तित्वेनेवाद्वितीयत्वादिना न तत्प्रकाश इति वाच्यम् । अद्वितीयत्वादेस्तन्मात्रत्वेऽप्रकाशानुपपत्तेः । तद्धर्मत्वे च पूर्वकल्पान्तभविन निर्विशेषत्वभङ्गापत्तेः । आविद्यकत्वे च वक्ष्यमाणान्योन्याश्रयग्रासः कल्पितयोग्यतायामप्यन्योन्याश्रय एव । न चानादित्वाददोष इति वाच्यम् । अनादिभूताया अपि तस्या जीवब्रह्मविभागादेरिवाज्ञाधीनसिद्धिकत्वात् । अन्यथाऽनादित्वाज्जीवब्रह्मविभागस्यान्योन्याश्रयपरिहारसंभवाज्जीवाज्ञानपक्षपरित्यागेन चिन्मात्राज्ञानपक्षकक्षीकरणानुपपत्तेः । तादृशव्यवहारयोग्यतायाः कल्पितत्वे कल्पितप्रकाशकार्यस्याहं ब्रह्मेति व्यवहारस्यापत्तेश्च । न चाविद्याप्रतिबन्धात्तदभावः अविद्यया क्रियमाणेन तादृशविपरीतव्यवहारयोग्यतारूपेण कल्पितेन प्रतिबन्धादकल्पितकार्यानुदयायोगात् । अन्यथा वह्नौ समारोपितगुञ्जापुञ्जेन कल्पितेन मणिना वा वास्तववह्निकार्यदाहप्रतिबन्धापत्तेः । किञ्च स्वप्रकाशचैतन्यस्थाविद्यया अन्यं प्रति तदप्रकाशेऽपि स्वात्मानं प्रति तदप्रकाशोऽनुपपन्नः । न हि घटाद्यावृतोऽपि दीपो न स्वयं प्रकाशते । न च कल्पितभेदजीवचैतन्यं प्रत्येव तदप्रकाशो ब्रह्म प्रत्यावरणमिति पक्षपरित्यागापत्तेर्जीवं प्रत्यावरणमिति पक्षस्य निराकरिष्यमाणत्वाच्च । न च चैतन्यस्य दीपस्येव स्वविषयकत्वाभावाद्वैषम्यम् । स्वविषयकत्वाभावे परविषयकत्वस्याप्यभावेन ज्ञानत्वानुपपत्तेः । तस्य स्वपरविषयकत्वाभावेनैव तादृशव्यवहाराद्यभावोपपत्तावावरणकल्पनावैयर्थ्यापत्तेः । तस्मान्नावरणकृत्यं परपक्षे युक्तमित्याशयेनाह **आवरणकृत्याभावादिति** । आवरणस्यावरकस्याज्ञानस्य कृत्यं कार्यमावृतिस्तस्या अभावादित्यर्थः । अत्र परोक्तेषु केषाञ्चित्प्रकाराणामुक्तेन निर्विशेषत्वेन केषाञ्चिद्वक्ष्यमाणान्योन्याश्रयेण निराससौलभ्यादावरणकृत्याभावादिति नित्यसिद्धत्वेन सामान्यत एव केषाञ्चिन्निरासः कृत इति द्रष्टव्यम् । ननु चावरणकृत्याभावेऽपि प्रकाशमानेऽप्यस्त्वज्ञानम् । न च वैयर्थ्यम् । अवच्छेदकविषयाज्ञाने तदवच्छिन्नाज्ञानज्ञानाद्ययोगेन त्वदुक्तमर्थं न जानामीत्यज्ञानव्यवहारान्यथाऽनुपपत्तेस्तत्र प्रमाणतया प्रमाणसिद्धार्थस्य च प्रयोजनाभावेनापह्नवेऽतिप्रसङ्गात् । न च प्रकाशाज्ञानयोर्विरोधात्तदसंभवः । साक्षिरूपज्ञानस्याज्ञानस्फोरकत्वेन विरोधाप्रसरात्कथमेतदिति चेन्न । प्रत्यक्षव्यवहारयोर्ज्ञानाभावविषयकत्वे नान्यथोपपत्तेर्वक्ष्यमाणत्वेन प्रमाणाभावात् । अवच्छिन्नज्ञानेऽवच्छेदकज्ञानहेतुताया अपि दर्शनबलकल्पनीयतया विशेषे ज्ञाते तदज्ञानधियोऽदर्शनादवच्छेदकसामान्यज्ञानस्यैवावच्छिन्नाज्ञानज्ञानादिहेतुतया यथानुभवं कल्पनीयत्वाच्च । सामान्यविशेषभावस्त्वतिप्रसङ्गभञ्जकः । यदपि सक्षिणोऽज्ञानाविरोधित्वमुक्तं तदपि न । त्वन्मते वृत्तेरज्ञप्तित्वेन साक्षिरूपज्ञानस्यैव ज्ञप्तिरूपतया न जानामीति ज्ञप्तिविरोधितयाऽनुभूयमानाज्ञानस्य साक्ष्यविरोधासिद्धेः । अन्यथा तद्वेद्यसुखादावप्यज्ञानापत्तेः । तदिदमुक्तं **न हि प्रकाशमानं चावृतं चेति संभवतीति** ।

**वा०र०— प्रकाशस्येति** । स्वरूपप्रकाशस्येत्यर्थः । तदन्यप्रकाशस्य च स्वप्रकाशे तस्मिन्ननपेक्षितत्वादिति भावः । **तदुभयव्यवहारेति** । नास्ति न प्रकाशत इति व्यवहा[illegible]मास्ति प्रकाशत इति च व्यवहारायोग्यत्वं वेत्यर्थः । एवं षट्पक्षान्निराकृत्य सप्तमाष्टमपक्षौ परोक्तरीत्यैवाशङ्कासमाधानरूपेण निराकरोति





**एतेनेत्यादिना** । वक्ष्यति चोक्तव्यवहारयोग्यत्वमेवावरणं कृत्यमिति । एवं च नास्तीत्यादिव्यवहारयोग्यत्व-कक्षीकारेणैवास्तीत्यादिव्यवहारायोग्यत्वमप्युक्तप्रायमिति तत्परित्यागायोगशङ्का न कार्या । एवमस्तीत्यादि-व्यवहारस्यैव सत्त्वेनेत्यनेनापि विपरीतव्यवहारसिध्या तद्योग्यत्वाभावप्रतिपादनवदस्तीत्यादिव्यवहारस्यैव सत्त्वेन तदयोग्यत्वमपि नेति प्रतिपादनलाभात्तदुभयनिराकरणलाभोऽपीति ज्ञेयम् । अन्यत्र त्वद्वितीयत्वादिविशिष्टे तद्भावेऽपि चिन्मात्रे नास्तीत्यादिव्यवहाराभावेन तत्कल्प्ययोर्योग्यत्वायोग्यत्वयोरनुपपत्तेरिति पक्षद्वयं निराकृतमिति ज्ञेयम् । .... एतत्प्रकरणं स्पष्टनीयमस्ति । .... ।

**विट्ठ०— नित्यसिद्धत्वात्** इत्यस्य नित्यं प्रकाशमानत्वादित्यर्थः ।

**चषकः— पटलादिकमिति** । नयनाद्याश्रितपटलादिकमनभ्यर्णवृत्तिगतरूपादिकर्मकजरत्पुरुषकर्तृक-ज्ञानानुत्पादप्रयोजकमुपलब्धमिति हृदयम् । **कश्चिद्धर्मो वाऽऽव्रियत इति** । स्वविषयकज्ञानानुत्पादप्रयोजक-तादृशाज्ञानक इत्यर्थः । पक्षद्वयनिराक्रियाहेत्वनभिहितिनियन्त्रितन्यूनतापरिजिहीर्षयाऽऽह **हेत्वर्थेति** । चतुर्णां पुरुषार्थानां दातुं शक्तश्चतुर्भुज इत्यादौ चतुर्भुज इत्यादेरिव तन्निराकृत्यौपयिकप्रकृतहेतुवाक्यद्वयोपस्थाप्यार्थद्वय-प्रत्यायकपदद्वयमित्यर्थः । **आवरणकृत्याभावादिति** । निष्पन्नप्रकाशप्रतिरोधस्य निष्पादनीयप्रकाशानुत्पादस्य चावरणप्रयोजनाभिमतस्य नित्यसिद्धप्रकाशरूपे तस्मिन् दुरुपपादत्वादित्यर्थः ।

**॥ ब्रह्मणो निर्धर्मकत्वात् तद्गतस्य धर्मस्यापि आव्रियमाणत्वाभावः ॥**

**ब्रह्मणि मिथ्याधर्मस्य च अज्ञानसिद्धिसापेक्षत्वेन अन्योन्याश्रयापत्त्या असंभवः—**

**४४९ सु०— स्यादेतत् । मा भूद् ब्रह्मावरकेणाज्ञानेन स्वरूपमावृतम्, तथाऽप्यद्वितीय-त्वादिस्तद्धर्मो भविष्यति । परमार्थतो ब्रह्मणो निर्विशेषत्वेऽपि मिथ्याधर्माङ्गीकारात् । मिथ्यात्वं चाद्वितीयत्वादीनां न स्वरूपेण किं नाम धर्मत्वेनैव । यथोक्तम् 'अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त' इति । तत्राह मिथ्याविशेषोऽपीति ।**

## अनु०— मिथ्याविशेषोऽपि

नाज्ञानावृत इति **अपेरर्थः** । कुत इत्यत आह **अज्ञानसिद्धिमेवेति** ।

## अनु०— अज्ञानसिद्धिमेव ह्यपेक्षते ॥





**परि०**— नन्वद्वितीयत्वादिधर्माणामपि चैतन्याभिन्नत्वेनाङ्गीकारात्कथं मिथ्यात्वमित्यत आह **मिथ्यात्वं चेति** ।

**यादु०**— नन्वद्वितीयत्वादिधर्माणामपि चैतन्याभिन्नत्वाङ्गीकारात्कथं मिथ्यात्वमित्यत आह **मिथ्यात्वं चेति** ।

**वं०प०**— ननु ब्रह्मणो निर्धर्मकत्वात्कथं तद्धर्माणामावृतत्वमुच्यत इत्यत आह **परमार्थत इति** । **मिथ्याधर्मेति** । मिथ्याभूतधर्मेत्यर्थः । **तस्य** ब्रह्मान्यस्य ।

**आनन्दः**— नन्वद्वितीयत्वादेः स्वरूपेण मिथ्यात्वे सत्यसद्वितीयतापात इत्यत आह **मिथ्यात्वं चेति** । नन्वद्वितीयत्वादीनां धर्मत्वेन मिथ्यात्वं सिद्धान्तविरुद्धमित्यतः संमतिमाह **यथोक्तमिति** ।

**वा०चं०**— ननूत्तरवाक्यमसङ्गतम् । न च मिथ्याविशेषस्याज्ञानावृतत्वनिरासाय तदिति वाच्यम् । क्षणिकत्वादिमिथ्याविशेषावरणतया अज्ञानस्य परेणाप्यनभ्युपगमात् । अद्वितीयत्वादीनां च मिथ्यात्वाभावाद्यादृशतादृशविशेषस्य निर्विशेषस्य निर्विशेषत्वप्रतिकूलत्वेन परेण शङ्कितुमशक्यत्वाच्चेत्यतस्तत्सङ्गमयति **स्यादेतदिति** । ननु ब्रह्मणो निर्धर्मकत्वात्कथं तद्धर्माश्चाध्यस्येत्युच्यत इत्याशङ्क्यानन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा इति पञ्चपादिकायामुक्तं तदुत्तरवाक्यमेवोपयुक्तत्वादुदाहरति **यथोक्तमिति** । ब्रह्मस्वरूपभूतानामपि तेषां पृथगवभासनाद्धर्मत्वारोप इत्यर्थः । अज्ञानसिद्धिसापेक्षताऽन्यस्य नोक्तेति समुच्चयासंभवेनैकवाक्यताऽनुपपत्त्या भिन्नवाक्यतामङ्गीकृत्यापिपदार्थमाह **नेति** ।

**वा०र०**— ननु निर्विशेषत्वाद्ब्रह्मणोऽद्वितीयत्वादिधर्माणामपि नावृतत्वं संभवतीत्यत आह **परमार्थत इति** मूलम् । अद्वितीयत्वादेश्चैतन्याभिन्नत्वात्कथं तस्य मिथ्यात्वम् उच्यत इत्यत आह **मिथ्यात्वं चेति** । **तदुत्तरवाक्यमेवेति** । सन्ति धर्मा इत्यन्तं यदुक्तं तदपेक्षया यदुत्तरं वाक्यं तदेवेत्यर्थः । तावन्मात्रोदाहरणे हेतुरुपयुक्तत्वादिति । इतःपरं न चावरणमज्ञानमित्येतन्मूलसंबन्धिटीकापर्यन्तं व्याख्येयमस्ति ।

**स०व्र०**— नन्वद्वितीयत्वादिधर्माणामपि चैतन्याभिन्नत्वेनाङ्गीकारात्कथं मिथ्यात्वमित्यत आह **मिथ्यात्वं चाद्वितीयत्वादीनामिति** ।

**विठ्ठ०**— ननु ब्रह्मैव प्रतिबध्नातीत्युपक्रमे ब्रह्मधर्माणां चैतन्याभेदोक्तेस्तथा मायिभिरङ्गीकृतत्वाच्च कथमद्वितीयत्वादीनां मिथ्यात्वमित्यत आह **मिथ्यात्वमिति** ।

**चषकः**— चैतन्याभिन्नस्याप्यद्वितीयत्वादेर्मिथ्याभावं घटयति **मिथ्यात्वं चेति** ।





**४५० सु०— हिशब्दो हेतौ । अद्वितीयत्वादिधर्मो ह्यज्ञानावृतो भवन्न तावत्स्वरूपेण, स्वरूपस्यावरणविषयताया निरस्तत्वात् । मिथ्याभूतेन धर्मत्वेनाज्ञानावरणविषयतायां तु परस्पराश्रयत्वं स्यात् । यतो मिथ्याधर्मः अज्ञानसिद्धिमपेक्षते । अज्ञानातिरिक्तस्य मिथ्याभूतस्याज्ञानकार्यत्वाभ्युपगमात् । अज्ञानं च मिथ्याभूतविशेषमपेक्षते । निर्विषयस्यावरणस्यानुपपत्तेः ।**

**यादु०— निर्विषयस्येति** । न च भाविघटविषयकज्ञानमिवाज्ञानमपि भाविमिथ्याधर्मविषयं पूर्वं निर्विषयमेवावतिष्ठत इति वाच्यम् । वैषम्यात् । अधिष्ठानावरणं विना भाविमिथ्याभूतधर्मकल्पनाया एवायोगेन मिथ्याभूतधर्मकल्पनापूर्वमज्ञानावरणत्वस्यावश्यकत्वात्तस्य च विषयाभावेऽसंभवात्तदिदमुक्तम् । **आवरणस्येति** । एवं चाज्ञानस्यावरणत्वसिद्धौ मिथ्याविशेषसिद्धिस्तत्सिद्धौ चाज्ञानस्यावरणत्वसिद्धिरित्यन्योन्याश्रयोऽभिप्रेत इति द्रष्टव्यम् ।

**आनन्दः**— ननु तर्हि अज्ञानस्यापि मिथ्यात्वादज्ञानकार्यत्वं स्यादत्राह **अज्ञानातिरिक्तस्येति** । ननु मिथ्याधर्मस्याज्ञानसिध्यपेक्षा कुत इत्यत्राह **मिथ्याभूतस्येति** ।

**कं०रा०— अज्ञानेति** । यद्यप्यज्ञानातिरिक्तस्य मिथ्याभूतस्य जीवब्रह्मविभागादेर्नाज्ञानकार्यत्वमङ्गीकृतं परेण तस्यानादित्वाभ्युपगमात् । तथाऽप्यज्ञानातिरिक्तस्य मिथ्याभूतस्याज्ञानस्थित्यधीनस्थितिकत्वरूपाज्ञानप्रयुक्तत्वाभ्युपगमादित्यर्थो द्रष्टव्यः । अन्यथा जीवब्रह्मविभागादिकं प्रत्यज्ञानस्य प्रयोजकत्वस्याप्यभावे ''यावन्मोक्षं तु भेदः स्याज्जीवस्य परमस्य च । ततःपरं न भेदोऽस्ति भेदहेतोरभावतः । विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते'' इत्यादेर्निर्विषयत्वापातात् ।

**वा०चं०**— अस्य हेतुसमर्पकत्वं द्योतयितुमाह **हिशब्द इति** । नन्वद्वितीयत्वादिधर्माणां स्वरूपेणैव आवृतत्वसंभवात्कथमज्ञानसिद्धिसापेक्षतन्मिथ्यात्वं सिद्धवत्कृत्य दूषणाभिधानमित्यत आह **अद्वितीयत्वादिधर्मो हीति** । ननु मिथ्याधर्मस्याप्यकार्यत्वात्कार्यत्वेऽपि वा स्वकारणसापेक्षत्वेनाज्ञाननिरपेक्षत्वादज्ञानस्य चानादित्वेन मिथ्याधर्मनिरपेक्षत्वात्कथमितरेतराश्रयत्वमित्यतो भाष्ये कण्ठत उक्तं मिथ्याधर्मस्याज्ञानसिद्ध्यधीनत्वमुक्तशङ्कामार्गलब्धं भाष्याभिप्रेतमज्ञानस्य मिथ्याधर्मसापेक्षत्वं चोपपादयति **यत इत्यादिना** ।

**स०व्र०— निर्विषयस्यावरणस्यानुपपत्तेरिति** । न च भाविघटविषयकज्ञानमिवाज्ञानमपि भाविमिथ्याधर्मविषयं पूर्वं निर्विषयमेवावतिष्ठत इति वाच्यम् । वैषम्यात् । अधिष्ठानावरणं विना भाविमिथ्याभूतधर्मकल्पनाया एवायोगेन मिथ्याभूतधर्मकल्पनापूर्वमप्यज्ञानावरणस्यावश्यकत्वात् । तस्य च विषयाभावे असंभवात् । तदिदमुक्तमावरणस्येति । एवं चाज्ञानस्यावरणत्वसिद्धौ मिथ्याविशेषसिद्धिस्तत्सिद्धौ चाज्ञानस्यावरणत्वसिद्धिरित्यन्योन्याश्रयोऽभिप्रेत इति ध्येयम् ।





**विठ्ठ०—** नन्वद्वितीयत्वधर्माणां स्वरूपेणैवावृतत्वोपपत्तेः कथमज्ञानसिद्धिसापेक्षं तन्मिथ्यात्वं सिद्धवत्कृत्य दूषणाभिधानमित्यत आह **अद्वितीयत्वादिधर्मो हीति** । परस्पराश्रयत्वं प्रकटयितुं समग्रमूलं योजयति **यत इति** । तथाचाज्ञानस्यावरणत्वसिद्धौ मिथ्याविशेषसिद्धिः । तत्सिद्धौ चावरणत्वसिद्धिरिति परस्पराश्रय इति भावः ।

**चषकः—** **निर्विषयस्येति** । निरादयः क्रान्ताद्यर्थे पञ्चम्येत्यनेन समासः । विषयापादानकनिष्क्रान्ति-विशेषितस्येत्यर्थः । न चोत्पत्स्यमानघटादिविषयकज्ञानमिव तादृशार्थविषयकाज्ञानमपि प्राग्विषयोत्पत्तेर्विषया-विशेषितमेव सङ्गच्छत इति वाच्यम् । सति विषये तदाच्छादकमावरणं सति च तस्मिन् मिथ्याभूतधर्मकल्पना सत्यां च तस्यामावरणसिद्धिरित्यन्योन्याश्रयात् ।

**४५१ सु०— एतेन ब्रह्मान्यद्ब्रह्मावरणाज्ञानावृतमिति तृतीयोऽपि निरस्तः । तस्य मिथ्यात्वेनाज्ञानसापेक्षतयाऽन्योन्याश्रयत्वात् ।**

**अत एव जीवं प्रतिबध्नाति अविद्येति द्वितीयो निरस्तो वेदितव्यः ।**

**परि०—** **अज्ञानावरणेति** । अज्ञानरूपावरणविषयतायामित्यर्थः । मिथ्याविशेषं मिथ्याभूत-धर्मरूपविशेषमित्यर्थः । **तृतीयोऽपीति** । अथवा जडमिति प्रागुक्ततृतीयपक्षस्याग्रे विवरणेन इति तृतीयोऽपीत्युक्तम् । **अत एवेति** । अन्योन्याश्रयत्वादेवेत्यर्थः । जीवस्याप्यज्ञानकल्पितत्वादिति भावः ।

**वं०प०—** **अज्ञानसापेक्षतयेति** । अज्ञानकल्पितत्वादिति भावः । **अन्योन्येति** । अज्ञानसिद्धौ तत्कल्पितब्रह्मान्यवस्तुसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरित्यन्योन्याश्रयादित्यर्थः । ब्रह्माश्रितमज्ञानं ब्रह्मैव प्रतिबध्नाति उत जीवमिति विकल्पितो द्वितीयः पक्षोऽप्यत एवापास्त इत्याह **अत एवेति** । जीवस्यापि मिथ्यात्वेनाज्ञानसापेक्षतया अज्ञानसिद्धौ जीवसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरित्यन्योन्याश्रयादेवेत्यर्थः ।

**आनन्दः—** एतेनेत्यस्यार्थमाह **तस्य मिथ्यात्वेनेति** । **अत एवेति** । अन्योन्याश्रयत्वादेवेत्यर्थः । अविद्यावच्छिन्नचैतन्यस्य जीवत्वेनाविद्यासिद्धौ तदवच्छिन्नजीवसिद्धिः । तत्सिद्धौ च तदाश्रयत्वेनाविद्यासिद्धिरि-त्यन्योन्याश्रय इति भावः ।

**कं०रा०—** **अत एवेति** । अज्ञाने सिद्धेऽज्ञानकल्पितजीवभावसिद्धिस्तत्सिद्धौ च जीवावरणाज्ञान-सिद्धिरित्यन्योन्याश्रयत्वादेवाविद्या जीवं प्रतिबध्नातीति द्वितीयोऽपास्तो वेदितव्य इत्यर्थः ।

**श्रीनिधि०—** **अत एव जीवं प्रतीति** । स्वरूपस्य स्वप्रकाशत्वेन धर्मस्य चाज्ञानसापेक्षत्वेनान्योन्या-श्रयत्वादेवेत्यर्थः ।





**वा०चं०— अत एवेति**। अविद्याद्यवच्छिन्नचैतन्यरूपस्य जीवस्याविद्यासापेक्षत्वादेवेत्यर्थः। यद्यप्येतत्पक्षद्वयमुत्तरवाक्योक्तदूषणातिदेशेन दूषयितुं युक्तम्। तथाऽप्युत्तरवाक्योक्तसकलदूषणातिदेशासंभवादितरेतराश्रयमात्ररूपमिथ्याविशेषदूषणातिदेशेनैव दूषितमिति द्रष्टव्यम्।

**विठ्ठ०—** एतेनेत्युक्तं विशदयति **तस्येति**। **अत एवेति**। जीवस्याप्यविद्याकल्पितत्वेन अन्योन्याश्रयत्वादेवेत्यर्थः।

**॥ ब्रह्मगतस्य जडस्यापि आव्रियमाणत्वाभावः ॥**

**असत्यत्वेन इतरेतराश्रयत्वप्रसङ्गात् आव्रियमाणत्वाभावः—**

**४५२ सु०— मा भूद्ब्रह्मणोऽज्ञानमावरणं, मा च भूज्जीवस्य, जडस्य तु भविष्यतीति तृतीयं निराचष्टे न चेति।**

## अनु०— न चावरणमज्ञानमसत्ये तेन चेष्यते ॥

**'जड' इति वक्ष्यमाणमत्रापि संबध्यते। तेनाद्यस्य चशब्दस्य संबन्धः। आवरणमिति ज्ञानाभावनिवृत्त्यर्थम्। तस्य जडेऽपि संभवात्। असत्य इति हेत्वर्थगर्भं विशेषणम्। तेन च नेष्यत इति दूषणान्तरम्।**

**परि०— इति तृतीयं निराचष्ट इति**। दोषान्तरोक्त्येति योज्यम्। **तेनेति**। तृतीयोऽपि निरस्त इति पूर्वग्रन्थेन न पौनरुक्त्यं ध्येयम्। तेन च नेष्यत इति दूषणान्तरमित्युक्तम्।

**गु०दी०— हेत्वर्थगर्भम्** इत्यत्र हेतुशब्दस्य लिङ्गवचने प्रसिद्धत्वाद्धेत्वर्थगर्भेत्युक्तम्।

**वं०प०— इति तृतीयं** ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयं पक्षम्। **ज्ञानाभावेति**। ज्ञानात्यन्ताभावेत्यर्थः।

**श्रीनिधि०— तेनाद्यस्येति**। जडे च नेति संबन्धो द्रष्टव्यः। **ज्ञानाभावेति**। अन्यथा अज्ञानमिति ज्ञानाभावः प्रतीयेतेत्यर्थः। **हेत्वर्थगर्भमिति**। हेतुशब्दस्य लिङ्गवचने प्रसिद्धत्वात् हेत्वर्थेत्युक्तमित्याहुः। **दूषणान्तरमिति**। असत्य इत्येकस्य दूषणस्योक्तत्वादिति भावः।





**वा०चं०**— उत्तरवाक्यस्य जडाश्रितत्वजीवाश्रितत्वजीवप्रतिबन्धकत्वनिरासविषयकत्वप्रतीतेस्तस्य चोक्तरीत्याऽनुपपत्तेस्तद्विषयं दर्शयति **मा भूदिति** । असत्य इत्यस्य हेतुसमर्पकत्वात्साधारण्याच्च तेन पक्षविशेषालाभात्पक्षविशेषविषयकत्वं मूलारूढं कर्तुमाह **जड इतीति** । न चेत्यस्य निपातसमुदायत्वकल्पनाऽप्रसिद्धेर्न युक्तेत्याशयेन पक्षान्तरनिरासकत्वं मूलारूढं कर्तुमाह **तेनेति** । अत्र वाक्ये आवरणमित्यस्य न हेतुसमर्पकत्वं युक्तमिति पराभिमतविषयविशेषसमर्पणं तत्प्रयोजनमाह **आवरणमितीति** । जड इत्यनेन पक्षविशेषसमर्पणासिद्धेरसत्य इति व्यर्थमित्यत आह **असत्य इतीति** ।

**वा०र०**— **पक्षविशेषेति** । जडप्रतिबन्धकत्वरूपेत्यर्थः । **विषयविशेषेति** । अज्ञानशब्दस्य भावरूपाज्ञानरूपविषयविशेषविषयकत्वमिति समर्पणायेत्यर्थः । मूले **तस्य जडेऽपीति** । जड इति सप्तमी षष्ठीत्वेन विपरिणाम्य जडस्याप्यावरणरूपमिति वक्ष्यमाणप्रथमयोजनानुसारेण जड इत्येतज्जडस्येत्यर्थकम् । ब्रह्माश्रितत्वपक्षस्यैव निरासप्रकरणात् । जडं प्रतिबध्नातीत्यर्थकजडस्य तु भविष्यतीत्यवतारे उक्तेः । मध्ये जडस्येति व्याख्यातत्वादेवोत्तरत्रापि केन हेतुना मायावादी जडेऽज्ञानं नाङ्गीकरोतीत्येवं मूलानुसारेणैव व्यवहारोपपत्तेश्च । एवं च जडस्याज्ञानं न संभवतीत्युक्ते जडस्य ज्ञानाभावो न संभवतीत्युक्तं स्यात् । तथा च जडस्य ज्ञानाभावाङ्गीकारे बाधकाभावेन तेन तदङ्गीकारात्तदनङ्गीकारवचनायोगः । अप्रकाशस्वरूपत्वादिति हेतुश्चासङ्गतः स्यादित्यर्थः । आवरणमित्युक्तौ तु जडस्यावरणमज्ञानम् । जडस्य स्वपरग्रहणप्रतिबन्धकमज्ञानमिति यावत् । नाङ्गीकरोतीत्युक्ते भावरूपमज्ञानं जडं प्रत्यावरणं नाङ्गीकार्यम् । आवरणकल्पकाभावात् । वक्ष्यमाणरीत्याऽप्रकाशरूपत्वादेव जडस्य स्वपरग्रहणाभावसंभवात् । तस्माद्ब्रह्माश्रिताज्ञानस्य जडं प्रत्यावरणत्वायोग इत्येवं परेण तन्नाङ्गीक्रियत इति लाभात्तथोक्तिर्युक्तेति भावः । सप्तम्यनुपपत्तेरिति अधिकरणत्वस्य तदर्थत्वादिति भावः । विषयत्वं तु न तदर्थः । विषयनिराकरणायोगस्य पूर्वोक्तभवद्रीत्यैव प्राप्तेरिति भावः ।

**स०व्र०**— **तृतीयं निराचष्ट इति** । ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयमित्यर्थः । उपलक्षणं चैतत् । जडाश्रितं जडं प्रतिबध्नातीति पक्षं च निराकरोतीत्यपि द्रष्टव्यम् । अत एव कारणस्य कार्याश्रितत्वादर्शनाच्चेति । अथेत्यादिश्च ग्रन्थो नानुपपन्नः । अन्यथा ब्रह्माश्रिताज्ञानस्य जडप्रतिबन्धकत्वनिराकरणावसरे तदुक्तेरसङ्गतत्वापत्तेरिति भाव इत्याहुः ।

**विट्ठ०**— **तृतीयमिति** । ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति पक्षमित्यर्थः । **न चेति** । मूले जडप्रतिबन्धकत्वपक्षनिराकरणं क्रियते जडे इति सप्तम्या जडाश्रितत्वपक्षनिरासः प्रतीयते असत्यत्वं च जडस्य न प्रतिबन्धकत्वाभावे हेतुः अप्रयोजकत्वात् ।





**४५३ सु०— तदयमर्थः । जडस्याप्यावरणरूपमज्ञानं न संभवति । तस्य मिथ्यात्वेनाज्ञानसापेक्षतया पूर्ववत् इतरेतराश्रयतापातात् । कारणस्य कार्याश्रितत्वादर्शनाच्च । मायावादिनाऽपि जडावरणाज्ञानानभ्युपगमाच्च । यदाह 'सा च न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नाती'ति ।**

**परि०—** तत्किमपेक्षयेत्यतोऽसत्यपदसूचितात्प्रागस्माभिरुक्तादन्योन्याश्रयादिति भावेन तत् व्यनक्ति **तदयमर्थ इत्यादिना** । **कारणस्येति** । कारणस्य कार्योपजीवित्वादर्शनाच्चेत्यर्थः । **जडावरणेति** । अज्ञानस्य जडं प्रत्यावरकत्वानभ्युपगमाच्चेत्यर्थः ।

**यादु०— कारणस्येति** । कारणस्य कार्योपजीवित्वादर्शनाच्चेत्यर्थः । अन्यथाज्ञानस्य ब्रह्माश्रितत्वपक्षस्यैवेदानीं दूष्यमाणत्वेनासङ्गत्यापत्तेरिति ध्येयम् । **जडावरणेति** । जडं प्रत्यावरकत्वानभ्युपगमाच्चेत्यर्थः ।

**वं०प०— जडस्येति** । आवरणरूपमज्ञानं जडस्य न संभवतीत्यन्वयः । जडं न प्रतिबध्नाति जडावरकं न भवतीति यावत् । **इतरेतरेति** । अज्ञानसिद्धौ तत्कल्पितजडसिद्धिस्तत्सिद्धौ च तदावरकाज्ञानसिद्धिरितीतरेतराश्रयापातादित्यर्थः ।

**आनन्दः—** नन्वसत्य इति हेत्वर्थगर्भं विशेषणमुक्तम् । कथमनेन हेतुरुक्तः । दूषणान्तरं च कथमनेनोक्तमित्यत आह **तदयमर्थ इति** ।

**श्रीनिधि०— कारणस्य कार्याश्रितत्वादर्शनादिति** । कारणस्य कार्ये किञ्चिदावरकत्वस्यादर्शनादित्यर्थः । न तु यथाश्रुतार्थः प्रतिबद्धचज्ञानाश्रयविकल्पदूषणप्रकरणत्वात् । **तत्स्वरूपावभासं** तत्कर्तृकम् । उपलक्षणं चेदम् । परावभासं चेत्यपि ग्राह्यम् । तदभावादेवेति भावः ।

**वा०चं०—** ननु नेदं जडप्रतिबन्धकत्वपक्षनिराकरणं किन्तु जडाश्रितत्वपक्षस्य । अन्यथा सप्तम्यनुपपत्तेः । असत्यत्वं च जडस्य न तत्प्रतिबन्धकत्वाभावे हेतुरप्रयोजकत्वापत्तेः । तेन च नेष्यत इत्यप्यसिद्धमित्यत आह **तदयमर्थ इति** । अत्र जडस्येति तत्प्रतिबन्धकत्वपक्षनिरासविषयकत्वप्रदर्शनं तस्येत्यस्य सत्यत्वस्य हेतुत्वसमर्थनम् । सप्तम्यनुपपत्तिपरिहाराय तत्सूचितयुक्तिप्रदर्शनं **कारणस्येति** । यत्प्रति प्रतिबन्धनं तस्यैवाभावे तत्प्रतिबन्धकत्वानुपपत्तेस्तेन विनाऽनुपपद्यमानत्वरूपं तदाश्रितत्वमिहाभिमतं न तु तदधिष्ठितत्वरूपम् । तादृशेऽप्याश्रितशब्दप्रयोगात्तच्च कारणस्य कार्यं प्रति न युक्तमित्याश्रितत्वसमर्थकसप्तम्या सूचितमित्याशयः । अनभ्युपगमासिद्धिपरिहाराय पञ्चपादिकावाक्यमुदाहरति **यदेति** ।





**वा०र०**— षष्ठ्या विपरिणामेनानुपपत्तिरित्यपरितोषादाह **असत्यत्वं चेति**। **असिद्धमिति**। तद्वाक्यरूपज्ञापकाभावादिति भावः।

**स०व्र०**— **पूर्ववदिति**। यतो मिथ्याभूतजडमज्ञानमपेक्षते। अज्ञानातिरिक्तस्य मिथ्याभूतस्याज्ञानकार्यत्वाभ्युपगमात्। अज्ञानं च मिथ्याभूतं जडमपेक्षते तदभावे स्वस्यानुपपत्तिरिति पूर्ववदित्यर्थः। **कारणस्य कार्याश्रितत्वादर्शनाच्चेति**। **कारणस्य** कर्मोपजीव्यत्वादर्शनाच्चेत्यर्थः। अन्यथा ज्ञानस्य ब्रह्माश्रितत्वस्यैवेदानीं दूष्यमाणत्वेनासङ्गत्यापत्तेरिति ध्येयम्। **जडावरणानभ्युपगमाच्चेति**। जडं प्रत्यावरकत्वानभ्युपगमाच्चेत्यर्थः।

**वि०ठ०**— तेन चेष्यत इत्यप्यसिद्धमित्यत आह **तदयमर्थ इति**। जडस्येति षष्ठीप्रयोगेन सप्तमी षष्ठ्यर्थ इत्युक्तं भवति। तस्य मिथ्यात्वेनेत्यप्रयोजकतापरिहारः। **कारणस्येति**। कारणस्य स्वकार्याधीनसत्ताकत्वादर्शनादित्यर्थः। असिद्धिपरिहारः **मायावादिनेति**। अस्य दूषणान्तरत्वसूचनाय चशब्दप्रयोगः।

**तन्मते जडस्य अप्रकाशस्वरूपत्वात् आव्रियमाणत्वानङ्गीकारः—**

**४५४ सु०— केन हेतुना मायावादी जडेऽज्ञानं नाङ्गीकरोतीत्यत आह अप्रकाशेति।**

## अनु०— अप्रकाशस्वरूपत्वाज्जडेऽज्ञानं न मन्यते ॥

'आवरणमि'त्यत्राप्यनुवर्तते। **न मन्यते** मायावादीति शेषः। सति पुष्कलकारणे कार्यानुदयेन खलु प्रतिबन्धकमावरणं कल्प्यम्। जडस्याप्रकाशस्वरूपत्वादेव स्वपरग्रहणासंभवे किमावरणकल्पनयेति परो मन्यते। यथाऽऽह 'प्रमाणवैकल्यादेव तदग्रहणसिद्धेरि'ति। प्रमाणवैकल्यात्प्रकाशस्वरूपत्वाभावादित्यर्थः।

**परि०**— अज्ञानमित्यस्य ज्ञानाभावार्थत्वभ्रमनिरासायाह **आवरणमित्यत्राप्यनुवर्तत इति**।

**वं०प०**— **स्वपरग्रहणेति**। स्वग्राहकत्वपरग्राहकत्व इत्यर्थः। यथा हि प्रदीपावरकं घटादिकं प्रकाशरूपस्य प्रदीपस्य यत्स्वग्राहकत्वं परग्राहकत्वं चास्ति तद्यथा न स्यात्तथा करोति। एवं जडावरकमज्ञानं जडस्य स्वपरग्राहकत्वाभावं संपादयतीति वक्तव्यम्। तन्न संभवति। दीपादिवत्प्रकाशस्वरूपत्वाभावादेवेति भावः। तथाच पुष्कलकारणमेव नास्तीति हृदयम्। **तदग्रहणसिद्धेरिति**। तेन स्वपराग्रहणसिद्धेस्तस्य जडस्य स्वपरग्राहकत्वाभावादिति यावत्।





**आनन्दः**— ननु जडविषयविषयेऽपि प्रमाणप्रवृत्तेः कथं प्रमाणवैकल्यमित्याह । ततस्तद्व्याचष्टे **प्रमाणवैकल्यादिति** ।

**श्रीनिधि०**— **अत्रापि** जडेत्यत्रापि । प्रयोजनं पूर्ववदेव । **स्वपरग्रहणासंभव इति** । स्वविषयक-परविषयकग्रहणासंभव इत्यर्थः । अप्रकाशस्वरूपत्वादित्यस्यार्थमाह **प्रमाणवैकल्यादिति । तदग्रहणसिद्धिः** । तेन तस्य ग्रहणाभावसिद्धिः । **प्रकाशस्वरूपत्वाभावादिति** । जडस्य प्रमातृत्वासंभवाच्चेति भावः ।

**वा०चं०**— मायावाद्यनभ्युपगमं मूलारूढं कर्तुं शेषं पूरयति **नेति** । अप्रकाशस्वरूपत्वस्य हेतुत्व-मुपपादयितुमनुवर्तितस्यावरणमित्यस्य तदुपपादकत्वं घटयति **सतीति** । उदाहृतप्रतिज्ञावाक्यार्थं प्रति हेतुसमर्पकं तद्वाक्यमेव संमतितयोदाहरति **यथाऽऽहेति** । नन्वस्य भवदुक्तहेतुसमर्पकत्वाभावान्न संमतित्वमित्यतस्तदर्थमाह **प्रमाणेति** । प्रमितिः प्रमाणं प्रकाश इति यावत् । तद्वैकल्यात्तद्रूपत्वाभावादित्यर्थः । यद्यप्यत्र न जडेषु वस्तुषु तत्स्वरूपावभासं प्रतिबध्नातीति वाक्येऽनात्मवस्तुप्रतिभासं प्रति प्रतिबन्धकत्वाभावरूपप्रतिज्ञातार्थे जडेष्वि-त्युक्तस्याचिद्रूपत्वस्यैव हेतुत्वमचिद्रूपे प्रकाशप्रसक्तेरभावेन सति पुष्कलकारणे कार्यानुदयप्रयोजकत्वरूपप्रति-बन्धकत्वानुपपत्तेरिति तद्वाक्यव्याख्यानम् । तर्ह्यनात्मनः स्वतोऽनावृतरूपत्वेऽज्ञात इति व्यवहारानुपपत्तिरित्यतः प्रवृत्तस्य प्रमाणवैकल्यादेव तदग्रहणसिद्धेरिति वाक्यस्यानात्मविषयान्तःकरणवृत्तिवैकल्यादज्ञातव्यवहार इति न तदनुपपत्तिरिति पूर्ववाक्योक्तप्रकाशप्रतिबन्धकत्वानुपपत्तिरयुक्ता । अचिद्रूपत्वेन स्वतःप्रकाशाप्रसक्तावपि स्वप्रकाशचैतन्यसंबन्धादस्त्येव प्रकाशप्रसक्तिरित्यतः प्रवृत्तस्य प्रमाणेति वाक्यस्य प्रमाणस्य साधकस्या-नावृतचैतन्यस्य वैकल्यात् । तथा चानावृतचैतन्यस्य विषयसाधकत्वात्तदावरणादेव विषयानवगतिसिद्धौ पृथगनात्मन्यावरणकल्पनावैयर्थ्यम् । न हि सूर्ये मेरुव्यवहिते रात्रावातपपरिहाराय छत्राद्यपेक्षितमिति व्याख्यानं विवरणाभिमतम् । तथाऽप्येवमपि कैश्चिद्व्याख्यातत्वाद्वा प्रकृतोपयुक्ततया स्वयमेव वैवं व्याख्यातम् । युक्तं चैतत् । आत्मानं प्रति तद्विषयाकावरणपक्षं परिशेषयितुं प्रसक्तप्रतिषेधाय प्रवृत्ते सा च न जडेष्विति वाक्ये जडेष्वित्यस्य पक्षविशेषसमर्पणपरत्वं तद्वाक्यप्रतिज्ञातार्थे हेतुसमर्पणाय प्रवृत्ते च द्वितीयवाक्ये प्रमाणवैकल्यादित्यस्य हेतुपरत्वम् । तत्र च प्रकाशस्वरूपत्वाभावादिति वक्तव्ये प्रमाणवैकल्यादिति या सामान्योक्तिः सा तत्प्रकाशप्रसक्तिः स्वतो वा प्रमाणबलाद्वा चैतन्यबलाद्वा । नाद्यः । प्रकाशस्वरूपत्वाभावात् । न द्वितीयः । प्रमाणनिवर्त्यस्यावरणस्य तत्प्रतिबन्धकत्वायोगात् । नापि तृतीयः । चैतन्यावरणादेव तत्सिद्धावनात्मनि पृथगावरणकल्पनावैयर्थ्यादिति प्रसञ्जकत्रयनिरासकहेतुत्रयं सङ्गृहीतुं द्रष्टव्यम् ।

**वा०र०**— जडेऽज्ञानावरणनिराकरण इति मूलस्यार्थद्वयमाश्रित्याह **प्रकाशस्वरूपत्वाभावादेवेति** । सप्तम्याः षष्ठ्या विपरिणामे जडस्यावरणभूताज्ञाननिराकरण इत्यर्थमाश्रित्य जडं प्रतिबध्नातीत्यत्रेत्यन्तम् । यथाश्रुतसप्तमीं विवक्षित्वाऽवरण इत्यस्यानुवृत्तिं चानाश्रित्य जडेऽज्ञाननिराकरण इत्यर्थमाश्रित्य सा जडाश्रिते-त्यत्रेत्युक्तमिति विवेकः । नन्वेतदयुक्तमित्येतद्योज्यमस्ति । यथायोगमित्येतदपि योज्यम् ।





**विट्ठ०**— तथा चायं मूलार्थः असत्ये अज्ञानस्य मिथ्याभूतस्यात एवाज्ञानकार्यजडस्यावरणं भावरूपं कारणभूतमज्ञानमावरकमिति न युज्यते तेन मायिना च नाङ्गीक्रियत इति जडे अज्ञानानङ्गीकारे को हेतुरनेन लब्ध इत्यतो मूलाभिप्रायमाह **सति पुष्करेति**। प्राग्जडे ज्ञानं नेत्यत्र विवरणवाक्यं संमतित्वेनोदाहृतम्। हेतुसमर्थकं च तद्वाक्यं पठति **यथाहेति**। ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयपक्षनिरासकतया व्याख्यातम्।

**४५५ सु०— अथवा। 'अप्रकाशस्वरूपत्वादि'त्यनेन जडाश्रयत्वेऽविद्यायाः प्रतीत्यभाव-प्रसङ्गमाह। प्रतीतिर्हि स्वप्रकाशतया वा, प्रकाशाश्रयतया वा। न तावदाद्यः अविद्यायाम्(याः)। अप्रकाशस्वरूपत्वात्तस्याः। नापि द्वितीयः। तदाश्रयस्य जडस्याप्रकाशस्वरूपत्वादिति।**

**परि०**— ब्रह्माश्रितमज्ञानं जडं प्रतिबध्नातीति तृतीयपक्षनिरासकतया व्याख्यातमेव वाक्यं जीवाश्रयं जडाश्रयं ब्रह्माश्रयं वेति प्राग्विकल्पितद्वितीयपक्षस्योक्तदोषाद्दोषान्तरपरतया योजयति **अथवेति**। प्रकाशाश्रयतया वेति बहुव्रीहिः। पूर्वमप्रकाशस्वरूपत्वादित्यस्य जडस्येत्यन्वयमुपेत्यार्थ उक्तः। इदानीमज्ञानस्येत्यन्वयमुपेत्याह **तस्या इति**। अज्ञानाश्रयस्य जडस्येत्यन्वयमुपेत्याह **तदा-श्रयस्य जडस्येति**। पक्षद्वयेऽपि जडपदात्पूर्वमज्ञानस्य प्रतीत्यभावप्रसङ्गो नेति शेषो मूले ध्येयः।

**यादु०**— **जडाश्रयत्व इति**। तत्किं जीवाश्रयमुत जडाश्रयमिति प्राग्विकल्पितद्वितीयपक्ष इत्यर्थः। तथा च न तत्पक्षदूषणमुक्तरीत्या बहिरेव द्रष्टव्यं किं त्वाचार्यैरेवात्र कृतमिति भावः।

**वं०प०**— **स्वप्रकाशतयेति**। यथा दीपादीनामित्यर्थः। **प्रकाशाश्रयतयेति**। प्रकाशरूपं यद्वस्तु तदाश्रयतया। यथा घटादीनामित्यर्थः। लोके घटादीनां प्रकाशरूपालोकसंबन्धेन प्रतीतिर्दृष्टा। मायिमतेऽपि घटादीनां घटाद्यवच्छिन्नस्वप्रकाशचैतन्याश्रितत्वेनैव प्रतीतिर्दृष्टेति भावः। **तदाश्रयस्य** अविद्याश्रयस्य।

**श्रीनिधि०**— **अथवेति**। प्रथमाश्रयविकल्पानुसारेण।

**वा०चं०**— अस्मिन्पक्षे जड इति सप्तम्याः विशेषतः स्वारस्यादर्शनादप्रकाशस्वरूपत्वादिति प्रकारान्तरेण व्याख्याति **अथवेति**। एवं च जडाश्रितत्वपक्षं निराचष्टे **न चेति**। इति पूर्ववाक्यमवतारितं भवति। यद्वा जडं प्रतिबध्नातीत्येतन्निरासाय पूर्ववाक्यं योजयित्वा तेन च नेष्यत इत्येतद्विवरणपरतयाऽप्रकाशस्वरूपत्वादिति वाक्यं योजितम्। अधुनाऽप्रकाशत्वस्वरूपत्वादित्येतन्न पूर्वविवरणं किन्तु जडाश्रितत्वरूपपक्षान्तरनिरासकमित्याशयेनाह **अथवेति**। तथा चात्र जडाश्रितत्वपक्षस्य मूलारूढतयैव निरासः पूर्वत्र तूपर्येवेति ध्येयम्। अज्ञानमिति जड इति प्रकृतत्वादप्रकाशस्वरूपत्वस्य क्रमेणोभयसंबन्धे कल्पद्वयनिरासः सिद्धो भवतीत्याह **न तावदित्यादिना**। एवं च जडेऽज्ञानमिति पदद्वयमावर्तनीयमर्थवशाद्विभक्तिविपरिणाम इत्युक्तं भवति।





**स०व्र०— जडाश्रयत्व इति** । तत्किं जीवाश्रयमुत जडाश्रयमिति प्राग्विकल्पितद्वितीयपक्ष इत्यर्थः । तथा च तत्पक्षदूषणमुक्तरीत्या बहिरेव द्रष्टव्यम् । किन्त्वाचार्यैरेव कृतमिति भावः ।

**विठ्ठ०**— अधुना तु जडाश्रितत्वपक्षे इतरेतराश्रितत्वादिना प्राग्बहिरेव दूषिते दूषणान्तरपरतयापि योजयति **अथवेति** ।

**४५६ सु०— अनेन परोक्तिव्याजेन जडेऽज्ञानावरणनिराकरणे युक्त्यन्तरमुक्तं भवति । यद्यप्यत्रापि 'अप्रकाशस्वरूपत्वादि'त्येवालम्, तेन 'नेष्यत' इत्यनेनान्वयोपपत्तेः । तथाऽपि 'तेन नेष्यत' इत्यनावर्त्य 'इयं स्वमतेनैव युक्तिरभिहिते'ति प्रतीतिः स्यात्तदर्थं 'जडेऽज्ञानं न मन्यत' इत्युक्तम् ।**

**परि०**— ननु जडाश्रितमज्ञानमितिपक्षस्य भवद्भिरेवानभ्युपगमादितरेतराश्रयत्वाच्चेति युक्तिद्वयेन निरस्तत्वात्पुनरत्र तन्निरासपरतया कुतो व्याक्रियत इत्यत आह **अनेनेति** । अप्रकाशेत्यर्धश्लोकेन । **युक्त्यन्तरमिति** । अज्ञानस्वरूपप्रतीत्यभावप्रसङ्गरूपयुक्त्यन्तरमित्यर्थः । **इति प्रतीतिः स्यादिति** । तथात्वे 'न चावरणमज्ञानमसत्ये तेन चेष्यत' इत्यत्र पराभिमतहेत्वनुक्त्या प्रागुक्तार्थस्यासिद्धिप्रसङ्गादिति भावः ।

**गु०दी०— युक्त्यन्तरम्** इत्यत्र प्राक् "असत्ये तेन चेष्यते" इत्यज्ञानस्य जडाश्रितत्वाङ्गीकारे अन्योन्याश्रयोऽपसिद्धान्तश्चेति दूषणद्वयं सूचितम् । अधुना जडे अज्ञानाङ्गीकारे अप्रकाशस्वरूपत्वात् अज्ञानस्यैवासिद्धिः स्यात् । अज्ञानस्य ब्रह्माश्रितत्वे हि स्वप्रकाशब्रह्मचितैव अज्ञानसिद्धिः स्यादपि जडाश्रितत्वे तु नाश्रयशक्त्या अज्ञानसिद्धिस्तस्य जडत्वात्, नाप्यज्ञानस्यैव शक्त्या तस्याप्रकाशस्वरूपत्वेन स्वयं प्रकाशत्वाभावात्, नाप्यज्ञानाश्रयप्रकाशशक्त्या अज्ञानाश्रये हि प्रकाशः ज्ञाततैव स्यात् । साऽपि जडत्वेनाप्रकाशरूपत्वान्न अज्ञानज्ञानरूपा । लिङ्गतयाऽपि सा ज्ञानमेव ज्ञापयेत् । न त्वज्ञानम् । अहमज्ञ इत्याकारकमज्ञानज्ञानम् अज्ञानस्य जडाश्रितत्वे न शक्यसंपादनम् । अतोऽज्ञानस्य जडाश्रितत्वाङ्गीकारेऽज्ञानस्यैवासिद्धिरिति युक्त्यन्तरमित्यर्थः ।

**वं०प०— अज्ञानावरणेति** । अज्ञानरूपावरणेत्यर्थः । **युक्त्यन्तरमिति** । न केवलमन्योन्याश्रयान्नेष्यते । किन्तु स्वपरग्रहणयोग्यताभावादित्युक्तरीत्याऽपि नेष्यत इत्यर्थः ।

**आनन्दः— युक्त्यन्तरमिति** । प्रतीत्यभावप्रसङ्गरूपमित्यर्थः ।

**कं०रा०— अनेनेति** । 'अप्रकाशस्वरूपत्वाज्जडे ज्ञानं न मन्यत' इत्यनेन परोक्तिव्याजेन जडावरणाज्ञान-निरासे 'चावरणमज्ञानमसत्ये तेन चेष्यत' इति पूर्ववाक्योक्तान्योन्याश्रयत्वादियुक्तितोऽन्या युक्तिरुक्ता भवतीत्यर्थः । **तथाऽपीति** । अप्रकाशस्वरूपत्वादित्येतावन्मात्रोक्तौ तेन चेष्यत इत्येतदनावर्त्य न चावरणमज्ञानमसत्य इत्येतावन्मात्रमावर्त्याप्रकाशस्वरूपत्वादसत्ये जडे ज्ञानं नास्तीतीयं युक्तिः स्वमतेनैवाभिहितेति प्रतीतिः स्यात् । तन्निरासार्थं जडे ज्ञानं न मन्यत इत्युक्तमित्यर्थः ।

**श्रीनिधि०— युक्त्यन्तरमुक्तं भवतीति** । जडावरणाज्ञानानभ्युपगमाच्चेत्यपेक्षयेत्यर्थः । एतच्चाद्य-व्याख्यानापेक्षया । **स्वमतेनैव युक्तिरभिहितेति प्रतीतिः स्यादिति** । तथा च तेन कुतो नेष्यत इति शङ्कायां नोत्तरमुक्तं स्यादिति द्रष्टव्यम् ।

**वा०चं०— युक्त्यन्तरमिति** । प्रकाशस्वरूपत्वाभावादेव स्वपरग्रहणाभावे आवरणकल्पनावैयर्थ्यरूपं जडं प्रतिबध्नातीत्यत्राविद्याप्रतीत्यभावप्रसङ्गरूपं सा जडाश्रितेत्यत्रेत्यर्थः । अन्यथा परानभ्युपगमस्य स्पष्टत्वात्तेन नेष्यत इत्येतावता पूर्वैरुत्तरवाक्यवैयर्थ्यमिति भावः ।

**विठ्ठ०— अनेनेति** । जडे प्रकाशत्वादेवाज्ञानं परो न मन्यत इति परोक्तानुवादव्याजेन न चावरणमज्ञान-मसत्य इति जडस्य मिथ्यात्वेनाज्ञानसापेक्षत्वादन्योन्याश्रयतापातात्कारणस्याज्ञानस्य स्वकार्यजडोपजीवित्वा-दर्शनाच्चेत्युक्तयुक्त्यपेक्षया प्रकाशस्वरूपजडस्य स्वत एव स्वपरग्रहणासंभवान्न तस्यावरणमज्ञानमिति युक्त्यन्तरमुक्तं भवतीत्यर्थः ।

**चषकः— अज्ञानावरणनिराकरणे** तद्रूपावरणनिराकरणे ।

**आश्रयाद्यभावेन अज्ञानासंभवात् तदधीनस्य शास्त्रीयविषयादेः अभावः—**

**४५७ सु०—** किमतो यद्येवमित्यत आह **अज्ञानाभावत इति** ।

## अनु०— अज्ञानाभावतः शास्त्रं सर्वं व्यर्थीभविष्यति ।

आवरणं हि खल्वाश्रयादिमत्तया व्याप्तमुपलब्धम् । यथा नयनपटलादि । अज्ञाना-वरणस्य चाश्रयादि उक्तविकल्पान्यतमत्वेन व्याप्तम् । अतिरिक्तस्य शङ्कितुमप्यशक्यत्वात् । व्यापकाभावे व्याप्याभावः सुलभ एव । तथा चोक्तविकल्पानुपपत्तावाश्रयाद्यभावे **अज्ञानावरणस्यापि अभावः** परमते प्रसक्तः । अज्ञानाभावे च बन्धस्य न तदुपादानत्वम् । ततश्च **सर्वं शास्त्रं** वेदतन्मीमांसात्मकं **व्यर्थीभविष्यति** ।





**बिन्दुः— अज्ञानावरणस्य चाश्रयादीति**। पृथक्पदम्। आश्रयत्वादीत्यर्थः। **उक्तविकल्पान्यतमत्वेनेति** । ब्रह्मजीवजडान्यतमत्वेनेत्यर्थः । अयमत्रापादनक्रमः । यद्यज्ञानं परेणावरणमित्यङ्गीक्रियते तत्पटलादिवत्साश्रयं वाच्यं न चैतद्युक्तमुक्तन्यायेनासंभवात् । तथाच नेदमावरणं ब्रह्मजीवजडान्यतमानाश्रितत्वात् शशशृङ्गवत् व्यतिरेकेण पटलादिवत्। वन्ध्यासुतो न वक्ताऽसत्त्वादित्यादाविवाभावयोः साध्यसाधनयोरुभयविधव्याप्तिसंभवेनाश्रयासिद्ध्यादिकं नानुमितिप्रतिबन्धकम् । न ह्याश्रयादीनां अनुमितौ स्वरूपेणोपयोगः। किं नाम तज्ज्ञानस्य। तच्च प्रकृतेऽप्यक्षतमेव पराभ्युपगतस्यैव निषेधार्थं पक्षीकरणात्। प्रत्युत तत्सिद्धिरेवेदृशानुमानप्रतिबन्धिकेति । तदुक्तम् । आश्रयव्याश्रयासिद्धी साध्यासिद्धिरदूषणमिति । **अभूततद्भावार्थस्य च्वेः प्रयोग इति** । विकृतिवाचकाच्छब्दात्प्रकृतौ वर्तमानच्विप्रत्ययानुशासनात् । शुक्लीभवति पट इत्यत्र हि च्विप्रत्ययप्रकृतिभूतस्य शुक्लशब्दस्य विकृतावस्थावाचकत्वं प्रागशुक्लस्यैव शुक्लभावनादशुक्लावस्थारूपप्रकृतौ पर्यवसानता चास्ति । अन्यथा सङ्घीभवन्ति ब्राह्मणा इत्यत्र सङ्घस्यैकत्वाद्भवन्तीति बहुवचनं न स्यात् । न स्याच्च देवदत्तस्त्वमिवाचरति त्वद्भवतीत्यत्र प्रथमपुरुषः, मद्भवसि त्वमित्यत्र मध्यमपुरुषः, त्वद्भवाम्यहमित्यत्रोत्तमपुरुषश्चेति । तस्मादच्व्यर्थवाचकः, च्व्यर्थशब्द इति तदर्थशास्त्रस्य व्यर्थतारूपावस्थाविशेषापन्नतया कर्तृत्वं संभवत्येव भवत्यादीनामसिद्धकर्तृकक्रियावाचित्वादिति भावः ।

**परि०— उक्तविकल्पेति**। जीवाश्रयं ब्रह्माश्रयं जडाश्रयं वेति। तथा ब्रह्मैव प्रतिबध्नाति जीवं जडं वेति च प्रागुक्तविकल्पेत्यर्थः।

**श्रीनिधि०— उक्तविकल्पानुपपत्तावाश्रयादभावेत्यत्र** आश्रयादीति विभागः।

**वा०चं०—** ननूत्तरवाक्येऽज्ञानासंभवाप्रतिपादनादसङ्गतिरित्यतो यदर्थमज्ञानासंभवोपपादनं तं बन्धस्य अज्ञानोपादानकत्वासंभवं तत्फलकथनपूर्वकं कथयितुमुत्तरवाक्यमित्याह **किमत इति** । नन्वेतदयुक्तम् । ब्रह्मजीवजडानामज्ञानाश्रयत्वाद्यभावप्रतिपादनेऽप्यतिरिक्ताश्रयादिनाऽप्युपपत्त्याऽज्ञानाभावासिद्धिः । ब्रह्मादीनामाश्रयादीनामभावेनाश्रयाद्यभावस्य नियामकाभावेनासिद्धेश्च । आश्रयाद्यभावेऽपि वा गगनादेरिवाश्रयविषयशून्यस्याप्यवस्थानोपपत्तेश्च परेणाप्यज्ञानाभ्युपगमादज्ञानाभावत इति सिद्धवदुक्तिश्च नोपपद्यते । अप्रयोजकतया ज्ञानाभावस्य शास्त्रवैयर्थ्यं प्रति हेतुत्वानुपपत्तिश्च । न चाज्ञातस्य विषयत्वमज्ञाननिवृत्तेश्च फलत्वमित्यज्ञानानुपपत्तौ तदनुपपत्तिरित्याशय इति वाच्यम्। अतोऽधिकारीत्युत्तरवाक्येन पौनरुक्त्यापत्तेः। अज्ञानस्य च मिथ्यात्वमित्यज्ञानासंभवस्योत्तरत्र प्रतिपादनीयतया तस्यासमाप्तत्वाच्च बन्धस्याज्ञानोपादानकत्वानुपपत्तेरत्रासूचनाच्च । सूचनेऽपि वा तस्या अपि न शास्त्रवैयर्थ्यापादकत्वम्। नियामकाभावात्। मायावादिशास्त्रवैयर्थ्यस्य प्रामाणिकत्वान्नानिष्टत्व-





मपीत्यतो वाक्याभिप्रायमाह **आवरणं हि खल्वित्यादिना** । विप्रतिपन्नं प्रत्यज्ञानस्याश्रयादिमत्त्वेन व्याप्ते-र्दृष्टान्ताभावेन विशेषरूपेण प्रदर्शयितुमशक्यत्वात्सामान्यरूपेण तां दर्शयितुमावरणमित्युक्तम् । **अतिरिक्तस्येति** । तुच्छस्येत्यर्थः । अत्रोक्तसर्वानुपपत्तिपरिहारो यथायोगं द्रष्टव्यः ।

**विट्ठ०**— अज्ञानस्य ब्रह्माश्रितत्वाभावेऽपि तदतिरिक्ताश्रयत्वमुपपद्यत इत्याशङ्काम् आश्रयत्वादे-रावश्यकत्वोपपादनपूर्वकं परिहरन् प्रकृतोपयोगितया योजयति **आवरणं हि खल्विति** । **अतिरिक्तस्येति** । ब्रह्मजीवजडातिरिक्तस्य तुच्छस्येत्यर्थः ।

**४५८ सु०— अर्थो विषयः प्रयोजनं च । प्रसङ्गस्यानिष्टत्वख्यापनायाभूततद्भावार्थस्य च्वेः प्रयोगः । मायावादिना हि शास्त्रस्य विषयप्रयोजनवत्तासिद्ध्यर्थमात्मनि मिथ्याभूता-ज्ञानोपादानको बन्धाध्यासो वर्णितः 'अज्ञानानुपपत्तौ च तदुपादानकस्यात्मनि बन्धाध्यास-स्याप्यनुपपत्तेस्तदधीना विषयप्रयोजनवत्ता च शास्त्रस्य न स्यादि'ति ।**

**परि०**— ननु व्यर्थं भविष्यतीति वाच्ये व्यर्थीतिच्विप्रत्ययान्तप्रयोगः कुत इत्यत आह **प्रसङ्गस्येति** । **अभूतेति** । अभूततद्भावे, 'कृभ्वस्तियोगे संपद्य कर्तरि च्विरि'ति पाणिनिसूत्रोक्तेः अभूततद्भावेत्युक्तम् । यन्न भूतपूर्वं तद्भाववाचिनः च्विप्रत्ययस्येत्यर्थः । व्यर्थशब्दात् भूधातुयोगे च्विप्रत्यये, 'अस्यच्वावि'ति व्यर्थशब्दस्य ईकारान्तादेशे च्वेः सर्वस्य चुटू इत्यादिना लोपे व्यर्थीभविष्यतीति रूपं ज्ञेयम् । शास्त्रस्य न स्यादितीतिशब्दस्य इत्यनिष्टत्वख्यापनायेति पूर्वेणान्वयः ।

**गु०दी०**— **प्रसङ्गस्यानिष्टत्वख्यापनाय** इत्यत्र अभूततद्भावार्थकच्विप्रत्ययबलेन प्रागव्यर्थस्यैव वेदशास्त्रादेः व्यर्थीकरणमित्यर्थलाभात् प्रामाणिकहानाख्यानिष्टत्वं ख्यायत इति भावः ।

**वं०प०**— **अभूततद्भावेति** । अव्यर्थं व्यर्थत्वायायोग्यमिति यावत् । **तद्व्यर्थं संपद्यत इति** । व्यर्थीभविष्यतीत्यर्थः । तदुपपादयति **मायावादिना हीति** ।

**आनन्दः**— ननु व्यर्थीभविष्यतीति व्यर्थत्वापादनेन मीमांसारम्भप्रयोजकस्याभाव उक्त इत्यतो विषयप्रयोजनयोरभाव उक्त इत्याशयेनार्थशब्दार्थमाह **अर्थो विषय इति**।

**श्रीनिधि०**— व्यर्थीभविष्यतीत्यत्रार्थशब्दार्थमाह **अर्थो विषय इति** । **अभूततद्भावार्थस्येति** । तथा चाव्यर्थं व्यर्थतया संपद्यते व्यर्थीभविष्यतीत्यर्थः । वस्तुतो व्यर्थस्य व्यर्थत्वमनिष्टमेवेति भावः ।

**विट्ठ०**— बन्धस्याज्ञानोपादानकत्वाभावे शास्त्रवैयर्थ्यं कुत इत्यत आह **मायावादिनेति** ।





साक्षान्मानसप्रत्यक्षविषयत्वाभावेति व्यवसायद्वारा तदवच्छेदकत्वेन परमाणुमहं जानामीति मानसप्रत्यक्षे भासते तद्वदित्याशयेन मायावादी समाधत्ते **उच्यत इति**। **ज्ञाततया** ज्ञानावच्छेदकत्वेन। **अज्ञाततया** अज्ञानावच्छेदकत्वेन। **ज्ञाततया विषयः** ज्ञानावच्छेदकीभूतो विषयः। **प्रमाणव्यवधानं** वृत्तिव्यवधानम्। ज्ञाततायाः सादित्वेन प्रमाणानां तज्जनकत्वादित्यर्थः। तथा च वृत्तिरूपज्ञानस्य साक्षिविषयत्वेन तदवच्छेदकीभूतो विषयोऽपि तद्द्वारा साक्षिभावस्य इत्याशयः। अन्योऽज्ञानावच्छेदकीभूतो विषयः। सामान्याकारेण शास्त्रार्थं न जानामीति सामान्याकारेण। विशेषाकारेण धर्मादिकं न जानामीति विशेषाकारेण। **सदेति**। प्रमाणप्रवृत्त्यभावदशायां सर्वदा साक्षिणाऽवभास्यत इत्यर्थः। अज्ञातताया अनादित्वान्न तज्जनने प्रमाणापेक्षेत्यर्थः। केचित्तु अज्ञानावच्छेदकीभूतविषयप्रतीतौ न प्रमाणापेक्षा। तथात्वेऽज्ञानस्यैवायोगात्। वृत्तेस्तद्विरोधित्वादित्यर्थ इत्याहुः।

**आनन्दः**— नन्वज्ञानस्यापि ससंबन्धिकपदार्थत्वेन संबन्धिभूताश्रयादिज्ञानसापेक्षत्वेनोक्तदोषतादवस्थ्यमित्यत आह **भावरूपेति**। नन्वाश्रयादिज्ञानस्य प्रमाणजन्यत्वेन विरोधिनि सति कथमज्ञानोपपत्तिरित्यत आह **न चाश्रयेति**। तथाच श्रवणप्रतियोगिज्ञानयोः साक्षिरूपत्वात्साक्षिणश्चाज्ञानसाधकत्वेन तद्विरोधित्वाभावादिति भावः। एतदज्ञानं नेतज्ज्ञानसमानकालम् एतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदित्याशङ्क्य साध्यहेतोर्ज्ञानशब्देन निवृत्तिर्विवक्ष्यते उत साक्षी। नाद्यः। सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीये असिद्धिमाशङ्क्याह **न चेति**। विमतं नाज्ञाननिवर्तकं तत्स्फोरकत्वाद्यद्यत्स्फोरकं न तत्तस्य निवर्तकं यथा घटज्ञानमित्यर्थः। विपक्षे बाधकमाह **न हीति**। घटज्ञानेन घटस्यापि निवृत्तिः स्यादित्यर्थः। असिद्धौ हेतुरिति शङ्कते **नन्विति**। साक्षिचैतन्यं घटविशेषितं ज्ञानं भासयति। उत केवलम्। नाद्यः विषयस्य प्रमाणगम्यत्वनियमात्। अन्यथा प्रमाणवैयर्थ्यात्। नेतरः अज्ञानमित्यप्रतीतेरित्यर्थः। केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्य साक्षिवेद्यत्वात् न स्फोरकत्वमसिद्धमित्याह **उच्यत इति**। न च प्रमाणवैयर्थ्यमपीत्याह **तत्र ज्ञानतयेति**। ज्ञानानां ज्ञातताजनकत्वान्न वैयर्थ्यमित्यर्थः। न च केवलसाक्षिवेद्यत्वाभावे विशिष्टस्यापि न साक्षिवेद्यत्वमिति वाच्यम्। केवलस्य परमाणोर्मानसप्रत्यक्षत्वाभावेऽपि परमाणुमहं जानामीति ज्ञानविशेषणतया प्रत्यक्षविषयतोपगमादित्यर्थः। ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिरभास्यत्वे विषयत्वाविशेषात्। अज्ञातताविशिष्टस्यापि व्यवहितत्वमित्याशङ्क्याह **अन्यस्त्विति**। अज्ञाततायाः अज्ञानविशेषणकत्वान्न तज्जनने प्रमाणापेक्षा नापि तद्बोधनविरोध इति साक्षात्साक्षिवेद्यत्वमित्यर्थः।

**कं०रा०— स्वज्ञानेनेति**। यद्यपि घटप्रत्यक्षानन्तरं तत्र मुद्गरादिनिपाते कृते घटध्वंसस्य दृष्टत्वात्स्वज्ञानस्य स्वनिवृत्तिहेतुत्वं नेत्यत्र तात्पर्यमवसेयम्। वस्तुतस्तु निमीलितनेत्रपुरुषप्रत्यक्षपाषाणादिसंबन्धे घटध्वंसदर्शनेन व्यभिचारान्न प्रतियोगिप्रत्यक्षं ध्वंसकारणम्। न च वाच्यं यत्र घटादिकं दृष्ट्वा मुद्गरादिकं निपात्य तन्नाशं करोति तत्र प्रतियोगिप्रत्यक्षस्य ध्वंसं प्रति कारणत्वावधारणादन्यत्रापीश्वरीयं प्रतियोगिप्रत्यक्षं तत्त्वेन कारणमिति कल्प्यत इति। निमीलितनेत्रपुरुषप्रक्षिप्तपाषाणसंबन्धनिमित्तकघटादिध्वंसस्थले प्रतियोगिप्रत्यक्षाभावेऽपि ध्वंसस्य जायमानतया व्यभिचारज्ञाने सति कारणत्वावधारणायोगात्। न चोक्तस्थले व्यभिचारसंशय एव। स च ग्राह्यसंशयरूपत्वेना-





प्रतिबन्धक इति वाच्यम् । अन्यत्र ग्राह्यसंशयस्याप्रतिबन्धकत्वेऽपि फलबलेन व्यभिचारसंशयस्य व्याप्तिनिश्चय-प्रतिबन्धकतायाः सर्वैरभ्युपगतत्वेन तस्य तद्गर्भकारणतानिश्चयेऽपि प्रतिबन्धकत्वावश्यंभावादिति द्रष्टव्यम् ।

**श्रीनिधि०**— व्यवहारमात्रत्वव्यावृत्तये तच्छ्रवणादौ प्रवर्तते इत्युक्तं **भावान्तरस्यापीति** । भावरूप-ज्ञानस्यापि नानुपपत्तिः नियन्तुं शक्यत इत्युक्तमुपपादयति **न चाश्रयप्रतियोगिज्ञानभूतमपीति** । साक्षिचैतन्येन करणेन । **प्रमाणायत्तत्वादिति** । साक्षिणोऽप्रमाणत्वादिति भावः । **ज्ञाततया विषयेति** । ज्ञानत्वेन यो विषयः सः प्रमाणव्यवधानमपेक्षते विषयत्वसिद्ध्यर्थमिति शेषः । **उपपत्तिसहितमिति** । आश्रयप्रतियोगिज्ञानभूतस्य साक्षिणः तद्विषयत्वेन तन्निवर्तकत्वाभावादित्युपपत्तिसहितम् इत्यर्थः । ज्ञानाभावप्रत्यक्षं तु प्रागुक्तरीत्या उपपत्तिविरुद्धमिति भावः ।

**वा०चं०**— ननु भावरूपाज्ञानं ज्ञानसामान्यविरुद्धं चेत् । कथं न नित्यनिवृत्तं स्यात्कथं वा तदवच्छेदकार्थविषयकचैतन्येन प्रतीयेत । तस्यैव चैतन्यस्य तज्ज्ञानसामान्यरूपत्वात् । न हि प्रकाशेन तमः प्रकाश्यत इत्यत आह **भावरूपाज्ञानेति** । आश्रयेति दृष्टान्तार्थमुक्तम् । यद्यपि ज्ञानसामान्यात्मकं चैतन्यं तदज्ञाननिवर्तकं तथाऽपि विषयापरोक्षवृत्तिप्रतिबिम्बितचैतन्यमेव ज्ञानत्वसामान्यरूपचैतन्यात्मना निवर्तकम् । अविद्यावृत्तिप्रतिबन्धकावरणाभिभवस्य तदानीमेव सत्त्वात् । अपरोक्षवृत्त्यन्वयव्यतिरेकाभ्यां न जानामीत्यज्ञानस्य ज्ञानसामान्यविरोधित्वानुभावेन च तथैव कल्प्यत्वात् । अतोऽभावस्येव भावस्यापि न स्वविषयकज्ञानेन विरोध इति भावः । किञ्चाज्ञानविषयकपरोक्षवृत्त्यनभिव्यक्तमन्तःकरणावच्छिन्नचैतन्यं नाज्ञाननिवर्तकं तत्स्फोरकत्वात् । यद्यत्साधकं न तन्मात्रं तन्निवर्तकं यथा घटज्ञानमित्यभिप्रेत्याह **न चाश्रयेति** । न चाप्रयोजकत्वम् । साधक-मात्रस्य निवर्तकत्वे पटादेरपि स्वज्ञानानिवृत्तिः स्यादित्यभिप्रेत्याह **न हीति** । यद्वा नन्वर्थज्ञानतदभावयोरिव तज्ज्ञानतदज्ञानयोरप्यसमानकालीनत्वमेव । एतदज्ञानं नैतज्ज्ञानसमानकालीनमेतज्ज्ञानत्वादेतज्ज्ञानाभाववदि-त्यनुमानादित्यतस्तत्राप्रयोजकत्वमाह **भावरूपाज्ञानेति** । भावाभावयोः खल्वेककालीनत्वं विरुद्धं न तु भावयोः । न हि घटभावे पटभावानुपपत्तिरित्यर्थः । एतदज्ञानं नैतज्ज्ञानसमानकालीनमेतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाव-वदित्यत्रापि हेतुसाध्यज्ञानशब्देन वृत्तिविवक्षायां सिद्धसाध्यतामभिप्रेत्य चैतन्यविवक्षायामसिद्धिमाह **न चेति** । विमतं नाज्ञाननिवर्तकं तत्स्फोरकत्वात् यद्यत्स्फोरकं न तन्निवर्तकं यथा घटज्ञानमित्यर्थ इति । नन्वज्ञानमित्य-प्रतीत्या साक्षिचैतन्यस्य केवलज्ञानाभासकत्वायोगेन विषयविशेषिताज्ञानभासकत्वं वक्तव्यम् । न च तद्युक्तम् । प्रमाणगम्यत्वनियमाद्विषयस्य । अन्यथा प्रमाणवैयर्थ्यापत्तेः । तथा चासिद्धिरित्याशङ्क्ते **नन्विति** । केवलस्य विषयस्य साक्षिवेद्यत्वाभावेऽप्यज्ञातताविशिष्टस्य साक्षिवेद्यत्वेन नासिद्धिरित्याह **उच्यत इति** । तत्र प्रमाणवैयर्थ्यं परिहर्तुं ज्ञाततयेत्युक्तमुपपादयति **तत्रेति** । प्रमाणानां ज्ञाततजनकत्वान्न वैयर्थ्यमिति भावः । न च केवलस्य साक्षिवेद्य-त्वाभावे विशिष्टस्यापि न तदिति वाच्यम् । अतीन्द्रियस्यापि परमाणोः परमाणुमहं जानामीति ज्ञानविशेषणतया मानसप्रत्यक्षवेद्यत्ववदुपपत्तेरिति भावः । ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वेऽज्ञातताविशिष्टस्यापि





सव्यवधानत्वं स्याद्विषयत्वाविशेषादित्यत आह **अन्यस्त्विति** । अज्ञातताया अनादित्वान्न तज्जनने प्रमाणापेक्षा नापि तद्बोधने विरोधः । तस्मात्केवलसाक्षिवेद्यत्वमिति भावः । नन्वज्ञानस्यानुमानाद्यविषयत्वे तदुक्तिवैयर्थ्यापत्त्या तद्विषयत्वे चावच्छेदकीभूतविषयस्याप्यनुमानादिविषयत्वात्प्रमाणविषये कथमज्ञानं साक्षिचैतन्यस्याज्ञाना-विरोधित्वेऽपि प्रमाणस्य तद्विरोधित्वादिति चेन्न । परोक्षवृत्तेरज्ञाननिवर्तकत्वासम्मतेः । अन्यथाऽपरोक्षीकृतवह्नेरिव पर्वते वह्निरस्तीत्याप्तवाक्यावगतवह्निसद्भावस्यापि पुंस इदानीं पर्वते वह्निरस्ति न वेति संशयाभावापत्तेः । तदभावे च तन्मूलकस्तादृशः प्रश्ने न स्यादिति । यद्वा ज्ञाततयेति ज्ञातत्वाकारेणेत्यर्थः । **प्रमाणव्यवधानमिति** । एतच्च बाह्याभिप्रायेणोक्तम् । सुखादौ प्रमाणव्यवधानाभावाच्चैतन्यविषये तस्मिन् ज्ञातत्वसंभवाच्च । अन्यथा तत्र जानामीति व्यवहाराभावप्रसङ्गादिति । उपक्रान्तमज्ञानप्रत्यक्षं निगमयति **इतीति** । धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्ज्ञानाभाव-प्रतिपत्त्यनुपपत्तिरुपपत्तिशब्दार्थः ।

**वा०र०**— तत्त्वदीपनानुसारेणाह **यद्वेति** । तज्ज्ञानतदज्ञानयोरपीति पाठः । एतदज्ञानत्वादिति च । एतदज्ञानत्वं च ज्ञानाभावाज्ञानोभयसाधारणं ज्ञानविरोधित्वरूपं विवक्षितमिति न दृष्टान्ते साधनवैकल्यम् । हेतुसाध्ययोर्ज्ञानशब्देनेति पाठः । चैतन्यमात्रविवक्षायामसिद्धिमाहेति पाठः । द्वितीय इति पाठं विनाश्य चैतन्येत्यादिशोधसत्त्वात् । यथा घटज्ञानमित्यर्थ इत्यन्तमेव वाक्यम् । तदुत्तरमितिशब्दस्तु मूले कोशे इति तद्व्याख्यानमिति पाठः । प्रथमतो वस्तुतस्तद्व्याख्यानमितीत्यंशनाशाय प्रवृत्तेन समानपंक्तिस्थं तद्व्याख्यान-मित्येतावन्नाशितम् । पंक्त्यन्तरस्थ इति शब्दस्तु न नाशित इति तथैवोर्वरितो लेखकेन लिखित इति ज्ञेयम् । **इत्यप्रतीत्येति** । इत्येवाप्रतीत्येत्यर्थः । **न बोधन इति** । प्रमाणापेक्षेति वर्तते । कुतो नेत्यत आह **विरोधादिति** । उपसंहरति **तस्मादिति** । प्रश्नो न स्यादितीत्यनन्तरं भाव इति योज्यम् । तथा प्रसङ्गादितीत्यनन्तरमपि पक्षद्वयं टीकाद्वयानुसारेण चित्सुखोक्तमिति । अत्र प्रत्यक्षान्तरोपन्यासात्किञ्चेत्युक्तम् । तत्त्वप्रदीपिकायां तु प्रागनु-मानोक्तेस्तदभिप्रायेण किञ्चेत्युक्तमस्तीति तदनुवादेऽप्ययं यथास्थित एवेति ज्ञेयम् । अनुभवोऽपीत्यपिशब्दस्तु किञ्चेत्युक्तसमुच्चयस्पष्टीकरणार्थो मूल इति ज्ञेयम् ।

**स०व्र०**— अर्थज्ञानतदभावयोर्यथा न समकालत्वं तद्वत्तदज्ञानतज्ज्ञानयोरपि । एतदज्ञानम् नैतज्ज्ञानसमानकालीनम् । एतदज्ञानत्वादेतज्ज्ञानाभाववदित्याशङ्क्याप्रयोजकत्वेन परिहरति **भावरूपाज्ञानेति** । भावाभावयोः खल्वेककालत्वं विरुद्धम् । न तु भावयोः । न हि घटभावे पटभावानुपपत्तिरित्यर्थः । एतदज्ञानं नैतज्ज्ञानसमकालीनमेतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदित्याशङ्क्य किं ज्ञानशब्देन वृत्तिर्विवक्षते । उत साक्षी । नाद्यः । सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीयेऽसिद्धिमाह **न चेति** । विमतं नाज्ञाननिवर्तकम् । तत्स्फोरकत्वात् यद्यत्स्फोरकं न तन्निवर्तकं यथा घटज्ञानमित्यर्थः । असिद्धो हेतुरिति शङ्कते **न हीति** । घटज्ञानेन घटस्यापि निवृत्तिप्रसङ्गादित्यर्थः । असिद्धो हेतुरिति शङ्कते **नन्विति** । किं साक्षिचैतन्यं घटविशेषिताज्ञानं भासयति । उत केवलम् । नाद्यः । विषयस्य प्रमाणगम्यत्वनियमात् । अन्यथा प्रमाणवैयर्थ्यात् । नेतरोऽज्ञानमिति अप्रतीते-





रित्यर्थः । केवलस्य साक्षिवेद्यत्वाभावेऽपि विशिष्टस्य साक्षिवेद्यत्वादज्ञानस्फोरकत्वं सिद्धमित्याह **उच्यत इति** । न च प्रमाणवैयर्थ्यमपीत्याह **तत्र ज्ञाततयेति** । प्रमाणानां ज्ञातताजनकत्वान्न वैयर्थ्यमित्यर्थः । न च केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि न साक्षिवेद्यत्वमिति वाच्यम् । केवलस्य परमाणोर्मानसप्रत्यक्षत्वाभावेऽपि परमाणुमहं जानामीति ज्ञानविशेषणतया प्रत्यक्षविषयत्वोपगमादित्यर्थः । ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वे विशिष्टविषयत्वाविशेषादज्ञातताविशिष्टस्यापि सव्यवधानत्वमित्याशङ्क्याह **अन्यस्त्विति** । अज्ञानव्यावर्तकतया अनादित्वान्न तज्जनने प्रमाणापेक्षा नापि तद्बोधने । विरोधात् । तस्मासाक्षात् साक्षिवेद्यत्वमित्यर्थः । अज्ञानप्रत्यक्षतां निगमयति **इतीति** । धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्न ज्ञानाभावप्रतिपत्तिरित्युपपत्तिशब्दार्थः ।

**विठ्ठ०**— आश्रयप्रतियोगिज्ञाने सति ज्ञानाभावो नास्ति । अर्थज्ञानतदभावयोर्विरुद्धत्वादित्युक्तम् । तर्हि अर्थज्ञानतदज्ञानयोरपि समानो दोष इत्यत आह **भावरूपेति** । भावाभावयोः खल्वेककालत्वं विरुद्धं न तु भावयोः न हि घटभावे पटभावानुपपत्तिरित्यर्थः । ननु तथाप्यर्थज्ञानतदज्ञानयोर्विरोध एव ज्ञानाभाववदज्ञानस्यापि निवृत्तत्वादित्यतः । किं ज्ञानशब्देन वृत्तिज्ञानं विवक्षितम् । उत साक्षी । आद्यस्यैव भावरूपाज्ञाननिवर्तकत्वमिति भावेन द्वितीयस्य निवर्तकत्वमेव नास्तीत्याह **न चेति** । **स्वज्ञानेनेति** । स्वसहकारिज्ञानेनेत्यर्थः । स्वज्ञानेनेति कुत इत्यत आह **तस्येति** । अज्ञानव्यावर्तकविषयस्फोरकत्वादित्यर्थः । विपक्षे बाधकमाह **आश्रयप्रतियोगीति** । धर्मिप्रतियोगिविषयीकारीत्यर्थः । मयि ज्ञानं नेत्यत्र मयीति धर्मिभूतात्मज्ञानं नेति निषेधप्रतियोगिभूतज्ञानविषयज्ञानं च साक्ष्येवेति भावः । **न हीति** । ज्ञानविषयास्फोरकत्वात्साक्षिणो ज्ञानकालनिवर्तकविषयावभासकत्वमसिद्धमिति शङ्कते **नन्विति** । केवलस्य विषयस्य आश्रयस्य साक्षिवेद्यत्वाभावेऽपि अज्ञातताविशिष्टस्य साक्षिवेद्यत्वेनासिद्धिरित्याशयेन परिहरति **उच्यत इति** । प्रमाणवैयर्थ्यं परिहर्तुं ज्ञाततयेत्युक्तमुपपादयति **तत्रेति** । प्रमाणानां ज्ञातताजनकत्वान्न वैयर्थ्यमिति भावः । न च केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्यापि न तदिति वाच्यम् । अतीन्द्रियस्य परमाणोः परमाणुमहं जानामीति ज्ञानविशेषणतया मानसप्रत्यक्षवेद्यत्ववदुपपत्तेरिति भावः । ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिद्भास्यत्वे विषयत्वाविशेषादज्ञातताविशिष्टस्यापि व्यवधानत्वमित्याशङ्क्य मयि ज्ञानं नास्तीति सामान्येन घटं न जानामीति विशेषाकारेण वा ज्ञानव्यावर्तकतया न सव्यवधानत्वमित्याह **अन्यस्त्विति** । अज्ञानप्रत्यक्षतां निगमयति **इत्युपपत्तीति** । धर्मिप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योर्न ज्ञानाभावप्रतिपत्तिरुपपत्तिशब्दार्थः ।

**चषकः**— ननु तद्गोचरज्ञानत्वावच्छिन्नाभावे तदवच्छिन्ननिरूपिताधिकरणता-अधिकरणतावन्निष्ठ-अधिकरणतानिरूपकता नेति यथा तद्वत्तद्गोचराज्ञानत्वावच्छिन्नेऽपि तादृशाधिकरणतानिरूपकत्वाभावोऽज्ञान-पदवाच्यत्वेन सुसाध इत्याशङ्कामप्रयोजकत्वेन प्रतिविधत्ते **भावरूपाज्ञानेति** । **भावान्तरस्यापीति** । न हि घटसत्ता पटसत्तां विरुणद्धीत्यर्थः । एतज्ज्ञानप्रागभावं निदर्शनीकृत्य एतज्ज्ञानजनितनिवृत्तिप्रतियोगित्वेन तद्धर्मावच्छिन्ने तादृशाभावसाधनमपि ज्ञानशब्देन वृत्तेर्विवक्षायां सिद्धसाधनताप्रसङ्गेन साक्षिरूपस्याभिप्रेत-





तायामसिद्ध्यापत्त्या न सङ्गच्छत इत्याह **न चेति** । व्यावर्तकः एकतराज्ञानधर्मिकाज्ञानान्तरप्रतियोगिक-व्यावृत्तिबुद्धिजनकः । सविषयकाणां विषयविनिर्मोकेण भानानुपगमेन विषयानुपहितज्ञानभानं तु दुरुपगममेव । उपाधिभूतविषयग्रहणे साक्षिणोऽनीशानतया तदुपहिततद्भानोरीकृतिरपि न सङ्गच्छत इत्याशयः । मुख्यविशेष्यतया बाह्यार्थावगाहनेऽनुव्यवसायस्य तत्स्थानाभिषिक्तसाक्षिणो वा स्वातन्त्र्याभावेऽपि तद्वेद्यज्ञानांशे विषयिता-प्रत्यासत्त्या विशेषणतयावगाहने विषयासंसर्गाग्रहव्यवसायरूपोपनायकज्ञानसाचिव्यनियन्त्रितं तदस्त्येव घटमहं जानामी-त्याकारानुरोधादिति यथा तद्वदज्ञानांशे तादृशप्रत्यासत्त्या तया विधया तदवगाहनेऽपि तदस्त्येवेति न क्षतिरिति समाधत्ते **उच्यत इति** । ज्ञाततया तादृशप्रत्त्यासत्त्या ज्ञानांशे विशेषणतया प्रमाणानां ज्ञातता-जनकत्वान्न वैय्यर्थ्यमिति स्थितम् । अज्ञाततया अज्ञानांशे तादृशप्रत्त्यासत्त्या विशेषणतया अज्ञातताया अनादित्वान्न तज्जननप्रमाणापेक्षेति स्थितम् । **प्रमाणव्यवधानं** प्रमाणजनितव्यवसायरूपोपनायकज्ञानम् । **अन्यस्तु** अज्ञानविशेषणतापन्नस्तु । सामान्याकारेण **पदार्थ**त्वाद्याकारेण विशेषाकारेण शास्त्रार्थत्वसंख्या-द्याकारेण । अज्ञानव्यावर्तकतया एकतराज्ञानधर्मिकाज्ञानान्तरप्रतियोगिकव्यावृत्तिप्रतीतिजनकतया । **अवभास्यत इति** । बिम्बस्योपनायकं प्रकृते ज्ञानमेवेति भावः । अज्ञानस्योक्तप्रत्यक्षतां निगमयति **इतीति** । **उपपत्तिसहितम्** धर्मिप्रतिपत्त्यप्रतिपत्त्योर्ज्ञानाभावप्रतिपत्त्यनुपपत्तिरूपोपपत्तिसहितम् ।

**प्रदीपः**— एतदज्ञानं नैतदज्ञानसमकालीनं एतदज्ञानत्वात् एतदज्ञानाभाववदित्याशङ्क्याप्रयोजकत्वेन परिहरति **भावरूपाज्ञानेति** । भावाभावयोः खल्वेककालत्वं विरुद्धं न तु भावयोः न हि घटाभावे पटाभावानुपपत्ति-रित्यर्थः । एतज्ज्ञानं नैतज्ज्ञानसमकालीनं एतज्ज्ञाननिवर्त्यत्वादेतज्ज्ञानप्रागभाववदित्याशङ्क्य किं ज्ञानशब्देन वृत्तिर्विवक्ष्यते उत साक्षी । नाद्यः सिद्धसाध्यत्वादित्यभिप्रेत्य द्वितीये सिद्धिमाह **न चेति** । विमतं ज्ञानानिवर्तकं तत्स्फोरकत्वात् यद्यत्स्फोरकं न तत्तस्य निवर्तकं यथा घटज्ञानमित्यर्थः । असिद्धो हेतुरिति शङ्कते **नन्विति** । साक्षिचैतन्यं घटविशेषिताज्ञानं भासयति उत केवलम् । नाद्यः विषयस्य प्रमाणगम्यत्वनियमात् । अन्यथा प्रमाणवैयर्थ्यात् नेतरदज्ञानमित्यप्रतीतेरित्यर्थः । केवलस्य साक्षिवेद्यत्वाभावे विशिष्टस्य साक्षिवेद्यत्वादज्ञानस्फोरकत्वं सिद्धमित्याह **उच्यत इति** । न च प्रमाणवैयर्थ्यमित्याह **तत्र ज्ञाततयेति** । ज्ञानानां ज्ञातताजनकत्वात् न वैयर्थ्य-मित्यर्थः । न च केवलस्य साक्षिवेद्यत्वाभावेऽपि विशिष्टस्यापि न साक्षिवेद्यत्वमिति वाच्यम् । केवलस्य परमाणोः मानसप्रत्यक्षत्वाद्यभावेऽपि परमाणुमहं न जानामीति ज्ञानविशेषणतया प्रत्यक्षोपगमादित्यर्थः । ज्ञातताविशिष्टस्य प्रमाणव्यवधानेन चिद्भावस्य सत्त्वे विषयत्वाविशेषादज्ञातताविशिष्टस्यापि सव्यवधिकत्वमित्याशङ्क्याह **अन्यस्त्विति** । अज्ञातताया अनादित्वान्न तज्ज्ञानप्रमाणापेक्षा । नापि तद्बाधने विरोधात्तस्मात् साक्षात्साक्षि-वेद्यत्वमित्यर्थः । अज्ञानप्रत्यक्षतां निगमयति **इतीति** । धर्मप्रतियोगिप्रतिपत्त्यप्रतिपत्त्योः ज्ञानाभावप्रतिपत्ति-रित्युपपत्तिशब्दार्थः ।





चित्सुखोक्तं प्रत्यक्षम्—

**४६७ सु०— किञ्च न किञ्चिदवेदिषमिति परामर्शसिद्धसौषुप्तिकानुभवोऽप्यत्र प्रमाणम् । न च ज्ञानाभावविषयोऽयमनुभवः, अभावप्रतीतेर्धर्मिप्रतियोगिबोधपराधीनतया तदभावे तस्यानुभवितुमयोग्यत्वस्योक्तत्वात् । न च नायं सुषुप्तिकालीनानुभवपरामर्शः, किन्तु तदुत्थितस्येदानीमेव सौषुप्तिकज्ञानाभावानुमानमिति वाच्यम्; तदनुमापकलिङ्गासिद्धेः । न च सामग्र्यभावो लिङ्गम्, तस्याप्यसिद्धेः । न च ज्ञानाभावेन तदनुमानम्, अन्योन्याश्रयतापत्तेः । न च स्मरणाभावो ज्ञानाभावे लिङ्गं, व्यभिचारात् ।**

**बिन्दुः— व्यभिचारादिति** । यावदनुभूतः स्मर्यत एवेत्यत्र प्रमाणाभावादिति भावः ।

**परि०— अन्योन्याश्रयतेति** । सिद्धे सौषुप्तिकज्ञानाभावे सौषुप्तिकसामग्र्यभावसिद्धिः सिद्धे च तस्मिन् तेन ज्ञानाभावसिद्धिरित्यन्योन्याश्रयतापत्तेरित्यर्थः । **व्यभिचारादिति** । पूर्वेद्युरनुभूतेषु मध्ये कस्यचिदस्मर्यमाणस्य संभवादिति भावः ।

**यादु०— न च स्मरणाभाव इति** । तथा च नान्योन्याश्रय इति भावः । **व्यभिचारादिति** । उपेक्षणीये स्मरणाभावेऽपि ज्ञानसद्भावादिति भावः ।

**वं०प०— परामर्शः** स्मृतिः । **ज्ञानाभावेति** । न भावरूपाज्ञानविषयक इत्यर्थः । **तस्य** ज्ञानाभावस्य । **नायमिति** । न किञ्चिदवेदिषमित्ययमित्यर्थः । अनुभवपरामर्शो भावरूपाज्ञानानुभवजन्यः परामर्शः स्मरणं नेत्यर्थः । येनाननुभूतस्य स्मरणयोगात्तदन्यथाऽनुपपत्त्या सुषुप्तिकाले भावरूपाज्ञानानुभवः कल्पनीयः स्यादिति भावः । **उत्थितस्येति** । सुषुप्तेः सकाशादित्यर्थः । इदानीमेव जाग्रदवस्थायामेव तथा च न सुषुप्तिकाले भावरूपाज्ञानानुभव इति भावः । **तदनुमापकेति** । ज्ञानाभावानुमापकेत्यर्थः । **सामग्र्यभाव इति** । सुषुप्तिकालीनोऽहं ज्ञानाभाववान् ज्ञानसामग्रीशून्यत्वादिति सामग्र्यभावो लिङ्गमित्यर्थः । **ज्ञानाभावेनेति** । ज्ञानरूपकार्याभावेन ज्ञानसामग्र्यभावानुमानमित्यर्थः । **अन्योन्याश्रयेति** । ज्ञानाभावेन ज्ञानसामग्र्यभावानुमानम् । तेन ज्ञानाभावानुमानमित्यन्योन्याश्रय इत्यर्थः । ननु ज्ञानाभावेन ज्ञानसामग्र्यभावानुमानमङ्गीक्रियते । न ज्ञानसामग्र्यभावेन ज्ञानाभावानुमानं येनान्योन्याश्रयः स्यात् । किन्नाम स्मरणाभावरूपलिङ्गेनैवातो नान्योन्याश्रय इति भावेन शङ्कते **न च स्मरणाभाव इति** । पदार्थः सुषुप्तौ नानुभूतः । इदानीमस्मर्यमाणत्वात् । यन्न स्मर्यते तन्नानुभूतमिति व्याप्तेरित्यर्थः । **ज्ञानाभावे** सुषुप्तौ पदार्थज्ञानाभावे । **व्यभिचारादिति** । उपेक्षणीये स्मरणाभावेऽपि ज्ञानसद्भावाद्व्यभिचार इत्यर्थः ।





**आनन्दः**— **अन्योन्याश्रयतापत्तेरिति** । ज्ञानाभावेन सामग्र्यभावेऽनुमिते तेन पुनर्ज्ञानाभावानुमानमित्यन्योन्याश्रय इत्यर्थः । **व्यभिचारादिति** । उपेक्षणीयज्ञानादाविति शेषः ।

**कं०रा०**— **सुषुप्तिकालीनेति** । सुषुप्तिकालीनानुभवजन्यपरामर्श इत्यर्थः । यद्वा सुषुप्तिकालीनोऽनुभवो यस्य तत् सुषुप्तिकालीनानुभवं, सुषुप्तिकालानुभूताज्ञानमिति यावत्, तद्विषयकपरामर्श इत्यर्थः । **अन्योन्याश्रयतेति** । ज्ञानाभावसिद्धौ तेन सामग्र्यभावसिद्धिः सामग्र्यभावसिद्धौ च तेन ज्ञानाभावसिद्धिरित्यन्योन्याश्रयापत्तेरित्यर्थः । **व्यभिचारादिति** । ज्ञानेऽपि बहुलं स्मरणाभावस्य सत्त्वेन स्मरणाभावस्य ज्ञानाभावव्यभिचारादित्यर्थः ।

**श्रीनिधि०**— **परामर्शः** । स्मृतिः । **नायमिति** । अत्र तु न पूर्वोक्तदोषः । मयि तदा ज्ञानं नास्तीति धर्मिप्रतियोगिनोरिदानीं ज्ञानेऽपि तदा तयोरज्ञानाभावस्संभवत्येवेति । **लिङ्गासिद्धेः** लिङ्गाज्ञानात् । **तदनुमानम्** सामग्र्यभावानुमानम् ।

**वा०चं०**— एवं विवरणोक्तं प्रत्यक्षमुदाहृत्य चित्सुखोक्तं तदुदाहरति **किञ्चेति** । अननुभूते स्मरणायोगात् सुप्तोत्थितस्य न किञ्चिदहमवेदिषमिति जायमानस्मरणेनोन्नीतः सुषुप्तिकालीनोऽज्ञानानुभवश्चाज्ञाने प्रमाणमित्यर्थः । सुषुप्तिकाले धर्मिप्रतियोगिज्ञानाभावेन ज्ञानाभावानुभवासंभवमाह **अभावेति** । अनुभवपरामर्शोऽनुभवजन्यस्मरणमित्यर्थः । **अन्योन्येति** । सामग्र्यभावाज्ज्ञानाभावानुमानं, तदभावाच्च सामग्र्यभावानुमानमित्यन्योन्याश्रयापत्तेरित्यर्थः । **व्यभिचारादिति** । अनुभूतानां बहूनामर्थानां स्मरणाभावस्य प्रसिद्धेर्विशेषतो व्यभिचारस्थलानुपादानमिति ज्ञेयम् ।

**वा०र०**— नयनप्रसादिन्यनुसारेण व्याचष्टे **अननुभूत इति** । ...........अनुसारेण व्याख्याति **अनुभवजन्यमिति** । अत्र प्रकरणे तत्त्वदीपनानुसारेण पाठः शोध्यः । व्याख्येयं चास्ति । ........ । व्यभिचारादितीति प्रतीकोपादानानन्तरमनुभूतानामिति वाक्यपाठः । उक्तप्रतीकोपादानाभावे तु तल्लेखः कार्यः ।

**स०व्र०**— **किं चेति** । उत्थितस्य न किञ्चिदवेदिषमिति परामर्शादुन्नीतो यः सौषुप्तिकानुभवः । सोऽपि प्रमाणमित्यर्थः । अस्ति तावत्सुप्तोत्थितस्यैतावन्तं कालं न किञ्चिदवेदिषमिति परामर्शः । स च सुषुप्तिकालीनमज्ञानानुभवं गमयति । अननुभूते परामर्शायोगात् । स चानुभवः तत्र प्रमाणमित्यर्थः । **न च स्मरणाभाव इति** । तथा च नान्योन्याश्रय इति भावः । **व्यभिचारादिति** । उपेक्षणीये स्मरणाभावेऽपि ज्ञानसद्भावादिति भावः ।

**वि०ठ०**— **व्यभिचारादिति** । पूर्वेद्युरनुभूतेषु मध्ये कस्यचिदस्मर्यमाणस्य संभवादिति भावः ।

**चषकः**— विवरणोदीरितप्रत्यक्षमुपन्यस्य चित्सुखोक्तं तदुपन्यस्यति **किञ्चेति** ।





अनुमानागमाः—

**४६८ सु०— तदेवं प्रत्यक्षसिद्धेऽज्ञानेऽनुमानमपि।**

**विवादगोचरापन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्य-स्वदेशगतवस्त्वन्तरपूर्वकम् अप्रकाशितार्थप्रकाशकत्वात् अन्धकारे प्रथमोत्पन्नप्रदीप-प्रभावदिति । ततश्च ज्ञानेन समानाश्रयविषयं भावरूपमज्ञानं सिद्धम् ।**

**अपि च न तावदज्ञानं ज्ञानाभावः अभावमानागम्यत्वात् संप्रतिपन्नवत् । अभावो ह्यभावस्य प्रत्यक्षस्य वा विषयः परेणेष्यते । अज्ञानं च न मानगम्यं माननिवर्त्यत्वात् संप्रतिपन्नवत् ।**

**बिन्दुः— विवादगोचरापन्नमिति** । भावप्रधानो निर्देशः । विवादविषयतापन्नमित्यर्थः । अत्र स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगतमज्ञातत्वं च व्युदसितुं क्रमेण साध्ये विशेषणानि। द्वितीयादिप्रकाशे व्यभिचारवारणाय हेतौ विशेषणम्। अत एव तद्दृष्टान्तं तादृशमेवोदाहरति **अन्धकार इति**। **न मानगम्यमिति**। वृत्तिविषयो न भवतीत्यर्थः। तस्य साक्षिसिद्धत्वादिति भावः।

**परि०—** विवरणोक्तमनुमानमाह **विवादेति** । स्वप्रागभावेत्यादिसाध्यगतवस्त्वन्तरविशेषण-चतुष्टयकृत्यं प्रमाणज्ञानप्रागभावेन तदुत्पादकादृष्टेन तत्प्रतिबन्धकादृष्टेन विषयगताज्ञाततत्वरूपधर्मान्तरेण चार्थान्तरतावारणमिति वादावलीन्यायामृतयोर्व्यक्तम् । दृष्टान्ते प्रदीपप्रभायां तादृशवस्त्वन्तरमन्धकारः सिद्धः । तद्दृष्टान्तेनोक्तहेतुना सिध्यद्वस्त्वन्तरं किंरूपमित्यत आह **ततश्चेति** । समानः एकः आश्रयः विषयश्च यस्य तदिति विग्रहः । **अभावमानागम्यत्वादिति** । अभावमानयोरगम्यत्वादित्यर्थः । उपलब्ध्यभावागम्यत्वात्प्रमाणागम्यत्वादिति हेतुद्वयं बोध्यम्। **अभावस्येति**। उपलब्ध्यभावस्येत्यर्थः। **परेणेति** । ज्ञानाभाववादिनेत्यर्थः । **न मानगम्यमिति** । ''अविद्याया अविद्यात्वमिदमेव हि लक्षणम् । मानाघातासहिष्णुत्वमसाधारणमिष्यत'' इति सुरेश्वरोक्तेरिति भावः । **संप्रतिपन्नवत्** । शुक्तिरूप्यादि-वदित्यर्थः ।

**गु०दी०— विवादगोचरापन्नं प्रमाणज्ञानम्** इति अज्ञानानुमाने ज्ञानप्रागभावं ज्ञानोत्पादकादृष्टं ज्ञानप्रतिबन्धकादृष्टं अर्थगताज्ञाततां च व्यावर्तयितुं साध्यगतविशेषणचतुष्टयमिति परस्याशयः । प्रमाणज्ञानस्य ज्ञातृनिष्ठत्वेन अज्ञानस्य च ज्ञेयब्रह्मनिष्ठत्वेन स्वदेशगतत्वाभावात् परीत्यैव बाध इति दूषणं द्रष्टव्यम् ।





**यादु०**— साध्यविशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तमिति द्रष्टव्यम्। वस्तुपूर्वकमित्युक्ते आत्मलक्षणवस्तुपूर्वकतयाऽर्थान्तरत्वं तदर्थं **वस्त्वन्तरेति** । आत्मभिन्नपूर्वकमित्यर्थः । चक्षुरादिव्यावृत्त्यर्थं **स्वदेशगतेति** । अदृष्टादिकं व्यावर्तयितुं **स्वनिवर्त्येति** । उत्तरज्ञाननिवर्त्यपूर्वज्ञानव्यावृत्त्यर्थं **स्वविषयावरणेति** विशेषणम् । प्रागभावव्यावृत्त्यर्थं **स्वप्रागभावेति** । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता । तदर्थं **स्वविषयावरणेति** । स्वविषयावरकान्धकारव्यावृत्त्यर्थं **स्वनिवर्त्येति** । विषयगताज्ञातताव्यावृत्त्यर्थं **स्वदेशगतेति** । मिथ्याज्ञानं व्यावर्तयितुं **वस्त्वन्तरेति** इति विवरणटीकानुसारेण पक्षविशेषणप्रयोजनानि द्रष्टव्यानि । अथवा धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराय अज्ञानानिवर्तकाया अपक्षत्वाय विवादेति विशेषणम् । रूप्यादिज्ञाने बाधवारणाय प्रमाणपदम् । स्वप्रागभावं स्वोत्पादकादृष्टं स्वप्रतिबन्धकादृष्टं विषयगतमज्ञातत्वं च व्युदसितुं साध्ये विशेषणानि । हेतौ च धारावाहिकद्वितीयादिज्ञानेषु व्यभिचारवारणाय **अप्रकाशितेति** । अर्थपदं तु स्पष्टीकरणार्थम् । दृष्टान्ते सौरालोकप्रदेशस्थदीपप्रभाव्यावृत्त्यर्थम् **अन्धकारेति** । द्वितीयादिप्रभासु साध्यसाधनवैधुर्यपरिहाराय **प्रथमेति** विशेषणम् । **अभावो ह्यभावस्येति** । अभावाख्यस्य अनुपलब्धिरूपप्रमाणस्येत्यर्थः ।

**वं०प०**— **विवादगोचरापन्नमिति** । गोचरशब्दो भावप्रधानः । विवादविषयत्वापन्नमित्यर्थः । विमतमिति यावत् । प्रमाणज्ञानं प्रमाणजन्यं वृत्तिरूपं ज्ञानमित्यर्थः । प्रमाणज्ञानमित्येवोक्तौ द्वितीयादिज्ञानमादाय बाधः स्यात् । तत्र प्रथमज्ञानरूपवस्तुपूर्वकत्वे विद्यमानेऽपि तस्य वस्तुनः स्वविषयकप्रकाशत्वेन तदावरणत्वाभावादतो विवादगोचरापन्नमित्युक्तम् । प्रथमज्ञानमित्यर्थः । स्वप्रागभावव्यतिरिक्तपदाभावे प्रागभावमादायार्थान्तरता स्यात् । स्वसत्तादशायां प्रतियोग्यजनकत्वेन स्वविषयावरणत्वस्य प्रागभावे सत्त्वात् । स्वसत्तादशायां कार्यानुत्पादकत्वमेव हि स्वविषयावरणत्वम् । स्वनिवर्त्यत्वं च स्वविरोधित्वमेव विवक्षितं न तु स्वजन्यध्वंसप्रतियोगित्वम् । येन प्रतियोग्यापत्तेरेव प्रागभावविप्रतिपत्तित्वेन प्रागभावध्वंसस्य प्रतियोगिरूपत्वात् । प्रागभावप्रतियोगिकध्वंसस्य स्वशब्दोक्तप्रतियोगिजन्यत्वाभावेन स्वजन्यध्वंसप्रतियोगित्वरूपस्वनिवर्त्यत्वस्य प्रागभावे अभावेन न तमादाय अर्थान्तरतेति शङ्का स्यादित्यवधेयम् । स्वविरोधित्वरूपं स्वनिवर्त्यत्वं च प्रागभावेऽप्यस्ति । यद्वा अभावाभावो भावव्याप्य इति मते प्रागभावनिवृत्तेः प्रतियोग्यन्यत्वात्प्रमाणज्ञानजन्यध्वंसप्रतियोगित्वं प्रमाणज्ञानप्रागभावेऽस्त्येवातस्तेनार्थानन्तरतावारणाय तद्व्यतिरिक्तपदम् । स्वविषयावरणपदत्यागे स्वोत्पादकादृष्टमादायार्थान्तरता स्यात् । तस्य फलैकनाश्यत्वेन स्वनिवर्त्यत्वघटितोक्तसाध्यसद्भावादत उक्तं **स्वविषयावरणेति** । तस्योत्पत्त्यनुकूलत्वेन विषयावरणत्वाभावात् । स्वसत्तादशायां कार्यानुत्पादप्रयोजकत्वस्यैव स्वविषयावरणपदेन विवक्षितत्वात् । तथा च न तदादायार्थान्तरता । स्वनिवर्त्यपदपरित्यागे स्वप्रतिबन्धकादृष्टमादायार्थान्तरता । तस्याप्युक्तविशेषणोपेतवस्त्वन्तरत्वात् । स्वनिवर्त्यपददाने तु नार्थान्तरता । लोके प्रतिबन्धकनिवृत्त्यनन्तरमेव कार्योत्पत्तिदर्शनेन कार्येण प्रतिबन्धकनिवृत्त्यभावेन स्वनिवर्त्यत्वाभावात् । स्वदेशपदत्यागे विषयगताज्ञातत्वमादायार्थान्तरता स्यात् । अतः स्वदेशगतपदम् । तस्य विषयगतत्वादेव प्रमाणज्ञानदेशभूतात्मगतत्वाभावात् । मिथ्याज्ञानमादायार्थान्तरतापरिहाराय





वस्तुपदम् । मिथ्याज्ञानस्यावस्तुत्वात्तेन तद्व्यावृत्तिः । अन्तरेति स्वरूपसङ्कीर्तनं नार्थान्तरादिव्यावृत्त्यर्थमिति न तत्कृत्यान्वेषणाय मनः खेदनीयमिति ज्ञेयम् । धारावाहिकद्वितीयादिज्ञानेषु व्यभिचारवारणाय हेतावाप्रकाशितार्थ-पदम् । दृष्टान्ते सौरालोकप्रदेशस्थदीपप्रभायां साध्यवैकल्यादिपरिहारायान्धकार इत्युक्तम् । द्वितीयादिप्रभायां साध्यसाधनवैकल्यपरिहाराय प्रथमेत्युक्तमिति पदानां सार्थक्यं द्रष्टव्यम् **अभावमानेति** । अनुपलब्धिरूप-षष्ठप्रमाणेत्यर्थः । **सम्प्रतिपन्नवत्** घटादिवत् । **अभावस्य** अनुपलब्धिरूपप्रमाणस्य । उक्तानुमानेऽसिद्धिं परिहरति **अज्ञानं चेति** । मानं वृत्तिः । किं नाम साक्षिणैव गम्यमिति हृदयम् । **सम्प्रतिपन्नवदिति** । यद्येन निवर्त्यं न तत्तेन गम्यं यथा प्रभानिवर्त्यान्धकारो न प्रभागम्य इत्यर्थः ।

**आनन्दः— विवादगोचरापन्नमिति** । अत्र ज्ञानमात्रस्य पक्षत्वे साक्षिरूपज्ञानमादाय बाधः स्यात् । तेन निवर्त्यस्याभावेन सनिवर्त्यवस्त्वन्तरपूर्वकत्वाभावादित्यत उक्तं **प्रमाणेति** । एवमपि द्वितीयादिज्ञानबाधवारणार्थं विवादेति साध्ये च प्रागभावं स्वोत्पादकादृष्टं विषयगतमज्ञातत्वं च व्युदसितुं क्रमेण विशेषणानि । हेतौ द्वितीयादिज्ञाने व्यभिचारवारणार्थं **अप्रकाशितेत्युक्तम्** । दृष्टान्ते साध्यवैकल्यसाधनवैकल्यपरिहारार्थं **प्रथमेत्युक्तम्** । न चान्धकार इत्युक्त्यैव तत्परिहारो लभ्यते । द्वितीयादिप्रभाया अन्धकारेऽनुत्पन्नत्वादिति वाच्यम् । तथा सत्यन्धकारेऽन्धकारवति ग्रहादावित्यर्थलाभेन पुनरप्युक्तदोषापरिहार एवेति । प्रथमेति विशेषणमावश्यकमिति । नन्वेवमप्यभिमताज्ञानसिद्धिः कथमत्राह **ततश्चेति** । अत्र स्वविषयेत्युक्त्या ज्ञानसमानविषयत्वं स्वदेशगतेत्युक्त्या ज्ञानसमानाश्रयत्वं सिध्यतीति द्रष्टव्यम् । **न तावदज्ञानमिति** । न चात्राज्ञानमिति व्यवहारविषयस्य वा पक्षत्वं भावरूपाज्ञानस्य वा । नाद्यः । तादृशव्यवहारस्य ज्ञानाभावेऽपि सत्त्वेन बाधात् । न द्वितीयः । असिद्धेरिति वाच्यम् । **अहमज्ञ इति** । प्रतीतिविषयस्य पक्षत्वात् । हेत्वसिद्धिमाशङ्क्य तं साधयितुमाह **अभावो हीति** । न च शुक्तिरजतादौ माननिवर्त्यत्वसत्त्वेऽपि मानगम्यत्वभावाद्व्यभिचार इति वाच्यम् । सत्त्वाकारेण मानगम्यत्वाभावस्य साध्यत्वात्तस्य च तत्रापि सत्त्वादिति भावः । अवश्यपदसूचितमनुमानमाह **अनुमानमपीति** । साध्यविशेषोपपादनेन सिद्धस्य धर्मिविशेषणस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्याद्युक्तमिति द्रष्टव्यम् । वस्तुपूर्वकमित्युक्ते आत्माख्यवस्तुपूर्वकतयार्थान्तरत्वं तदर्थं **वस्त्वन्तरेति** । चक्षुरादिव्यावृत्त्यर्थं **स्वदेशगतेति** । अदृष्टादिकं व्यावर्तयितुं **स्वनिवर्त्येति** । उत्तरज्ञाननिवर्त्य-पूर्वज्ञानव्यावृत्त्यर्थं **स्वविषयावरणेति** । प्रागभावव्यावृत्त्यर्थं **स्वप्रागभावेति** । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता तदर्थं **स्वविषयावरणेति** । स्वविषयावरणान्धकारनिवृत्त्यर्थं **स्वनिवर्त्येति** । विषयगताज्ञातता-व्यावृत्त्यर्थं **स्वदेशगतेति** । मिथ्याज्ञानं व्यावर्तयति **वस्त्वन्तरेति** । धारावाहिकज्ञाने व्यभिचारव्यावृत्त्यर्थं **अप्रकाशितेति** । अर्थपदं तु स्पष्टीकरणार्थम् । मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैयर्थ्यपरिहाराय **प्रथमेति** विशेषणम् । सवितृकिरणव्याप्तदेशस्थप्रदीपप्रभानिवृत्त्यर्थम् **अन्धकारेति** । किमनात्मज्ञानं धर्मि उतात्मज्ञानम् । नाद्यः । अनात्मावरकाज्ञानस्यानङ्गीकारात् । तत्साधने बाधापातात् । न द्वितीयः । अनात्मज्ञाने व्यभिचारात् । अप्रकाशितार्थप्रकाशकत्वं च किमप्रकाशितार्थप्रकाशकर्तृत्वम् उत करणत्वम् । नाद्यः साध्यसाधनवैकल्य-प्रसङ्गात् । न द्वितीयः । अत एव । अतो यत्किञ्चिदेतत् । केचिद्विप्रतिपन्नस्यात्मज्ञानस्यानात्मज्ञानस्य पक्षत्वमिति





वदन्ति । न च बाधापत्तिः । घटाद्यवच्छिन्नचैतन्यप्रत्यक्षादिवदिति विषयः नोपेयः स चाज्ञानावृत्तिरिति कथं बाधः । न च हेतोर्दुर्निरूपत्वम् । प्रकाशशब्देन हि तज्जन्यो व्यवहारो लक्ष्यते । ततश्चाप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तस्य चोभयत्रानुगतत्वान्नासिद्ध्यादिरिति । अनादिप्रमाप्रागभावनिवर्तकत्वेन सिद्धसाधनता मा भूदिति स्वप्रागभावव्यतिरिक्तेति विशेषणम् । तथापि परं प्रत्यप्रसिद्धविशेषणता प्रमाणज्ञानस्य द्रव्याभावातिरिक्तानादिनिवर्तकत्वानङ्गीकारात् ।

कं०रा०— **विवादगोचरेति** । विवादविषयतापन्नं प्रमाणज्ञानं प्रमाणज्ञानप्रागभावव्यतिरिक्तप्रमाणज्ञानविषयावरणं प्रमाणज्ञाननिवर्त्यं प्रमाणज्ञानदेशगतं यद्वस्त्वन्तरं तत्पूर्वकं भवितुमर्हतीत्यर्थः । अत्र पक्षे प्रमाणपदं भ्रान्तिज्ञानस्यापि पक्षत्वे तस्याज्ञाननिवर्तकत्वाभावेनांशतो बाधः स्यात्तन्निरासाय । वस्त्वन्तरपूर्वकमित्येतावत्युक्ते विषयगताज्ञातत्वपूर्वकत्वेनार्थान्तरता स्यात्तन्निरासाय **स्वदेशगते**त्युक्तम् । विषयगताज्ञातत्वस्य प्रमाणज्ञानदेशगतत्वाभावात्तेन तन्निरासः । तावत्युक्ते प्रमाणज्ञानप्रतिबन्धकादृष्टपूर्वकत्वेनार्थान्तरता स्यात्तन्निरासाय स्वनिवर्त्येत्युक्तम् । प्रमाणज्ञानस्य स्वप्रतिबन्धकादृष्टनिवृत्त्यनन्तरं जायमानतया तन्निवर्तकत्वाभावेन प्रतिबन्धकादृष्टस्य प्रमाणज्ञानानिवर्त्यत्वाद्भवति तेन तद्व्युदासः । तावत्युक्तेऽदृष्टस्य फलनिवर्त्यतया प्रमाणज्ञानोत्पादकादृष्टस्य प्रमाणज्ञाननिवर्त्यत्वात्तत्पूर्वकत्वेनार्थान्तरता स्यात्तन्निरासाय स्वविषयावरणेत्युक्तम् । प्रमाणज्ञानोत्पादकादृष्टस्य प्रमाणज्ञानविषयावरणत्वाभावात्तेन तन्निरासः । तावत्युक्ते प्रमाणज्ञानप्रागभावदशायां विषयाप्रकाशव्यवहारेण प्रमाणज्ञानप्रागभावस्य स्वविषयावरणत्वात्तत्पूर्वकत्वेनार्थान्तरता स्यात्तन्निरासाय स्वप्रागभावव्यतिरिक्तेत्युक्तम् । हेतावप्रकाशितपदं विहायार्थप्रकाशकत्वादित्युक्ते धारावाहिकद्वितीयादिबुद्धौ प्रथमज्ञानेनैवाज्ञानस्य निवृत्ततया साध्याभावाद्व्यभिचारः स्यात्तन्निरासायाप्रकाशितपदम् । दृष्टान्ते प्राथम्यविशेषणं द्वितीयादिप्रभायां साध्यसाधनवैकल्यदोषनिरासाय ।

श्रीनिधि०— **विवादगोचरेति** । स्वप्रागभावमादायार्थान्तरतापरिहाराय **स्वप्रागभावव्यतिरिक्तेति** । सोत्पादकादृष्टमादायार्थान्तरतावारणाय **स्वविषयावरणेति** । स्वप्रतिबन्धकादृष्टमादायार्थान्तरतानिरासाय **स्वनिवर्त्येति** । स्वविषयगताज्ञातत्वमादायार्थान्तरतावारणाय **स्वदेशगतेति** । द्वितीयादिप्रमाणज्ञाने बाधवारणाय **विवादगोचरापन्नमिति** । पक्षविशेषणम् । दृष्टान्ते साधनवैकल्यपरिहाराय ज्ञातत्वादित्यनुक्त्वा प्रकाशकत्वादित्युक्तम् । द्वितीयादिज्ञाने व्यभिचारवारणाय **अप्रकाशितार्थेति** । द्वितीयादिप्रभायां साध्यवैकल्यपरिहाराय **प्रथमोत्पन्नेति** । दृष्टान्तविशेषणमुक्तमिति ज्ञेयम् । प्रपञ्चस्तु वादावल्यामवगन्तव्यः ॥ अभावमानं किं तदवगम्यत्वं च कथमित्यत आह **अभावो हीति** । **अभावस्य** अनुपलब्धेः ।

वा०चं०— **अनुमानमपीति** । अनेनोक्तमावश्यकत्वमुपपादितं भवति । धर्म्यंशस्याज्ञाननिवर्तकत्वातद्व्यावृत्तये आद्यं विशेषणम् । साध्यविशेषोपादानसिद्धधर्मिविशेषस्पष्टीकरणाय द्वितीयम् । साध्ये आत्मपूर्वकत्वेनार्थान्तरतानिरासाय **वस्त्वन्तरेति** । चक्षुराद्यदृष्टपूर्वज्ञानस्वप्रागभावव्यावृत्तये क्रमेण पूर्वपूर्वविशेषणानि । स्वविषय-



स्वविषयावरकान्धकारविषयगताज्ञातताामिथ्याज्ञानव्यावृत्तये उत्तरोत्तरविशेषणानि । हेतौ धारावाहिकद्वितीयादिज्ञानव्यावृत्तये **अप्रकाशितेति** । अर्थपदं स्पष्टार्थम् । दृष्टान्ते सौरालोकस्थदीपप्रभाव्यावृत्तये **अन्धकारेति** । द्वितीयादिप्रभाव्यावृत्तये **प्रथमेति** । न्यायदीपावल्युक्तमनुमानमुदाहरति **अपि चेति** । उद्देश्ये ज्ञानाभावत्वाभावरूपे विशिष्टे साध्ये हेतोरप्रयोजकतानिवृत्तये हेतावभावविशेषणम् । हेत्वसिद्धिं परिहरति **अभावो हीत्यादिना** । परेणेति भाट्टतार्किकावभिमतौ । अभावप्रत्यक्षे क्रमेण तदुभयाभिप्रायेणेति द्रष्टव्यम् । सम्प्रतिपन्नवच्छुक्तिरूप्यसंसर्गादिवदित्यर्थः ।

**वा०र०— उक्तमावश्यकत्वमिति** । अवश्यं तावदिति प्रक्रमे उक्तमित्यर्थः । बहुप्रमाणसिद्धस्यावश्याङ्गीकार्यत्वादिति भावः । **धर्म्यंशस्येति** । धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया इत्यर्थः । यत्तु विवादगोचरापन्नमिति विवरणपाठानुसारेण प्रमाणज्ञानमित्येव न्यायामृते उक्तावपि विवादेति विशेषणं पठनीयमित्युक्त्वा रूप्यादिज्ञानव्यावृत्त्यर्थं प्रमाणपदमिति कृत्यकथनं तरङ्गिण्यां कृतं तत्पूर्वविशेषणेनैव तद्व्यावृत्त्या प्रमाणपदवैयर्थ्यं स्यादिति दूषणयुक्तत्वादयुक्तमेवेत्याशयेन तत्त्वदीपनानुसारेण स्वयं तत्प्रयोजनमाह **साध्यविशेषेति** । **पूर्वपूर्वेति** । वस्त्वन्तरपूर्वकम् इत्येवोक्तं चक्षुरादिपूर्वकत्वमादाय अर्थान्तरतेति तद्वारणाय स्वदेशगतेति तत्पूर्वविशेषणम् । तादृशादृष्टमादाय तन्निवृत्तये स्वनिवर्त्येति तत्पूर्वं विशेषणम् । एवं तादृशपूर्वज्ञानादिकमादाय तन्निवृत्तये स्वविषयावरणेत्यादितत्पूर्वविशेषणमित्येव पूर्वपूर्वविशेषणमित्यर्थः । **उत्तरोत्तरेति** । स्वप्रागभावव्यतिरिक्तपूर्वकमित्येवोक्ते स्वविषयमादायार्थान्तरता तन्निवृत्तये स्वविषयावरणेति विशेषणेऽपि स्वविषयावरकान्धकारमादाय सा । तन्निवृत्तये स्वनिवर्त्येति विशेषणमित्यादिप्रकारेण उत्तरोत्तरविशेषणानीत्यर्थः । वस्तुपूर्वकमित्युक्ते आत्मवस्तुपूर्वकतयेत्यादि तत्त्वदीपने आरोहावरोहाभ्यां पदकृत्यकथनानुसारेणोभयथाऽप्यत्र कृत्यकथनं तेन न्यायामृते त्वारोहक्रमेणैव कृत्यकथनं उपलक्षणमिति सूचितं भवति । ज्ञानाभावस्यापि मानगम्यत्वेन व्यभिचाराभावादभावपदकृत्याभाव इत्यतस्तत्सार्थक्यमाह **उद्देश्य इति** । अधिकं शोध्यमस्ति । **अभावप्रत्यक्ष इति** । एते प्रमाणे उभयमतानुसारेण उदाहृते इति शेषः ।

**स०व्र०—** अवश्यपदसूचितमनुमानमाह **अनुमानमपीति** । साध्यविशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तमिति द्रष्टव्यम् । वस्तुपूर्वकमित्युक्ते आत्मलक्षणवस्तुपूर्वकतयाऽर्थान्तरत्वं तदर्थं **वस्त्वन्तरेति** । चक्षुरादिव्यावृत्त्यर्थं **स्वदेशगतेति** । अदृष्टादिकं व्यावर्तयति **स्वनिवर्त्येति** । उत्तरज्ञाननिवर्त्य पूर्वज्ञानव्यावृत्त्यर्थं **स्वविषयावरणेति** । प्रागभावव्यावृत्त्यर्थं **स्वप्रागभावेति** । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता तदर्थं **स्वविषयावरणेति** । स्वविषयावरकान्धकारव्यावृत्त्यर्थं **स्वनिवर्त्येति** । विषयगताज्ञातताव्यावृत्त्यर्थं **स्वदेशगतेति** । मिथ्याज्ञानं व्यावर्तयितुं **वस्त्वन्तरेति** । अन्तरपदप्रयोजनं चिन्त्यम् । विवरणटीकानुसारेण पक्षविशेषणप्रयोजनं द्रष्टव्यम् । अथवा धर्म्यंशप्रमाणवृत्तेरिदमित्याकाराया अज्ञानानिवर्तिकाया अपक्षत्वाय विवादेति विशेषणम् । रूप्यादिज्ञाने बाधवारणाय प्रमाणपदम् । स्वप्रागभावं स्वोत्पादकादृष्ट





स्वप्रतिबन्धकादृष्टं विषयगतमज्ञातत्वं च व्युदसितुं साध्यविशेषणानि । हेतौ द्वितीयादिज्ञानेषु व्यभिचारवारणाय **अप्रकाशितेति** । अर्थपदं तु स्पष्टीकरणार्थम् । दृष्टान्ते सौरालोकप्रदेशस्य दीपप्रभाव्यावृत्त्यर्थम् **अन्धकारेति** । द्वितीयादिप्रभायां साध्यसाधनवैधर्म्यपरिहाराय **प्रथमेति** विशेषणम् । अनुमाननिगमनार्थम् **इतीति** । अनुमानसिद्धमर्थं निगमयति **ततश्चेति** । अनुमानान्तरमाह **अपि चेति** । अभावमानागम्यत्वं साधयितुमाह **अभावो ह्यभावस्येति** । अभावाख्यानुपलब्धिरूपप्रमाणस्येत्यर्थः । तथाऽप्यभावप्रमाणागम्यत्वं कथमित्याशङ्क्य मानागम्यत्वादेवाभाव-मानागम्यत्वं सिद्ध्यतीत्याह **अज्ञानं चेति** ।

**विट्ठ०— विवादगोचरापन्नमिति** । यद्यपि विवादगोचरापन्नमित्येवालं तथापि साध्यविशेषोपादानेन सिद्धं धर्मिविशेषं स्फुटीकर्तुं **प्रमाणज्ञान**मित्युक्तम् । वस्तुपूर्वकमित्येवोक्तौ आत्माख्यवस्तुपूर्वकतामादायार्थान्तरता तदर्थं **वस्त्वन्तरे**त्युक्तम् । चक्षुरादिपूर्वकतामादायार्थान्तरता । अतः **स्वदेशगतेति** । न हि चक्षुषो ज्ञानदेशगतत्वम् । अदृष्टादिकं व्यावर्तयितुं **स्वनिवर्त्येति** । पूर्वज्ञानस्योत्तरज्ञाननिवर्त्यत्वात्तत्रार्थान्तरतापरिहाराय **स्वविषयावरणे**-त्युक्तम् । प्रागभावव्यावर्तये स्वप्रागभावेऽपि । स्वप्रागभावव्यतिरिक्तपूर्वकमित्येवोक्तौ विषयपूर्वकत्ववारणाय **स्वविषयावरणेति** । स्वविषयावरकान्धकारव्यावृत्त्यर्थं **स्वनिवर्त्येति** । स्वविषयगताज्ञातताव्यावर्तये **स्वदेश-गतेति** । मिथ्याज्ञानव्यावृत्तये **वस्त्वन्तरेति** । इति विवरणटीकानुसारेण प्रयोजनानि द्रष्टव्यानि । अथवा प्रमाणज्ञानमित्येव धर्मिनिर्देशे द्वितीयादिज्ञाने साध्याभावेन बाधः । अतो विवादगोचरापन्नमिति स्वप्रागभावं स्वोत्पादकादृष्टं विषयगताज्ञाततां व्यावर्तयितुं क्रमेण साध्यविशेषणानीति द्रष्टव्यम् । दृष्टान्ते साधनवैकल्य-वारणाय हेतौ ज्ञानत्वादित्यनुक्त्वा **प्रकाशकत्वात्** इत्युक्तम् । **अप्रकाशितेति** पदं द्वितीयादिज्ञाने व्यभिचार-वारणाय । **अर्थेति**पदं स्फुटीकरणार्थम् । दृष्टान्ते सौरालोकप्रदेशस्थप्रदीपप्रभाव्यावृत्त्यर्थं **अन्धकार इति** । द्वितीयादिप्रभासु साध्यादिवैकल्पपरिहाराय **प्रथमोत्पन्नेति** विशेषणम् । **अभावो ह्यभावस्येति** । अनुपलब्धि-प्रमाणस्येत्यर्थः ।

**चषकः—** विवरणाभिहितमनुमानं दर्शयति **विवादेति** । प्रकृतसाध्यतदभावकोटिकविमतिनिरूपित-विषयतापन्नमित्यर्थः । धर्म्यंशगोचरप्रमाणमतेरिदमाकाराया अपक्षत्वाय विवादेति विशेषणम् । अत्र च विशेषादर्शनदशायामप्रमात्वावच्छिन्नधर्मिकप्रकृतसाध्यतदभावकोटिकसन्देहविषयतामादायाप्रमायां बाधवारणाय प्रकृतकोटिद्वयप्रकारतानिरूपितस्वसमानाधिकरणप्रमात्वावच्छिन्नविशेष्यताप्रत्यासत्त्या ज्ञानत्वावच्छिन्नस्य पक्षता-वच्छेदकतां ध्वनयितुं भावसाधनल्युडन्तप्रमाणपदघटितज्ञानान्तोपादानम् । तुरीयानुमाने निदर्शनबोधक-पदघटकप्रमाणपदमपि तादृशल्युडन्तम् । अत्र विवरणटीकोक्तदिशा आत्मपूर्वकतानियन्त्रितार्थान्तरतानिरसनाय **वस्त्वन्तरेति** । चक्षुरादिव्यावर्तनाय **स्वदेशगतेति** । अदृष्टमपहस्तयितुं **स्वनिवर्त्येति** । उत्तरज्ञाननिवर्त्यपूर्व-ज्ञानविधूननाय **स्वविषयावरणेति** । स्वप्रागभावव्यावृत्त्यर्थं **स्वप्रागभावव्यतिरिक्तेति** । स्वप्रागभावव्यतिरिक्त-पूर्वकमित्युक्तौ विषयेणार्थान्तरता । तदर्थं **स्वविषयावरणेति** । स्वविषयावरकान्धकारापाकरणाय **स्वनिवर्त्येति** ।





विषयगताज्ञातत‍ानिराकरणाय **स्वदेशगतेति** । मिथ्याज्ञानं व्यावर्तयितुं **वस्त्वन्तरेति** साध्यविशेषणप्रयोजनान्यवसेयानि । रूप्यादिज्ञाने बाधवारणाय प्रमाणपदम् । स्वप्रागभावं स्वोत्पादकादृष्टं विषयगतमज्ञातत्वं (च) निरसितुं साध्यविशेषणानीत्यपि कल्पान्तरं विनिबध्नन्ति । हेतुशरीरे धारावाहिकद्वितीयादिज्ञानेष्वनैकान्त्यवारणाय **अप्रकाशितेति** । निदर्शने सौरालोकसन्निकृष्टप्रदीपप्रभाव्यावर्तनाय **अन्धकारेति** । द्वितीयादिप्रभासु साध्यवैकल्यनिरासाय **प्रथमेति** विशेषणम् । **अभावो ह्यभावस्येति** । अभावग्राहकानुपलब्धिरूपप्रमाणस्येत्यर्थः । भट्टदिशेदम् । न्यायनयदिशाऽऽह **प्रत्यक्षस्येति** । मानगम्यमिति भावसाधनोऽयं ल्युट् । प्रमितिविषय इत्यर्थः । **माननिवर्त्यत्वात्** प्रमितिजन्यध्वंसप्रतियोगित्वात् । **संप्रतिपन्नवत्** शुक्तिरूप्यसंसर्गवत् ।

**प्रदीपः**— अवश्यपदसूचितमनुमानमाह **अनुमानमपीति** । साध्यविशेषोपादानेन सिद्धस्य धर्मिविशेषस्य स्पष्टीकरणार्थं प्रमाणज्ञानमित्युक्तमिति द्रष्टव्यम् । वस्तुपूर्वकमित्युक्ते आत्मवस्तुपूर्वकतयार्थान्तरत्वं तदर्थं **वस्त्वन्तरेति** । चक्षुरादिव्यावृत्त्यर्थं **स्वदेशगतेति** । अदृष्टादिकं व्यावर्तयति **स्वनिवर्त्येति** । उत्तरज्ञाननिवर्त्यपूर्वज्ञाननिवृत्त्यर्थं **स्वविषयावरणेति** । प्रागभावव्यावृत्त्यर्थं **स्वप्रागभावव्यतिरिक्तेति** । स्वप्रागभावव्यतिरिक्तपूर्वकमित्युक्तौ विषयेणार्थान्तरता । तदर्थं **स्वविषयावरणेति** । स्वविषयावरणकान्धकारव्यावृत्त्यर्थं **स्वनिवर्त्येति** । विषयगताज्ञानताव्यावृत्त्यर्थं **स्वदेशगतेति** । मिथ्याज्ञानं व्यावर्तयति **वस्त्वन्तरेति** । धारावाहिकज्ञाने व्यभिचारव्यावृत्त्यर्थम् **अप्रकाशितेति** । अर्थपदं तु स्पष्टीकरणार्थम् । मध्यवर्तिप्रदीपप्रभायां साध्यसाधनवैधुर्यपरिहारायाह **प्रथमेति** । विशेषणे सवितृकिरणव्याप्तदेशस्थप्रदीपप्रभानिवृत्त्यर्थम् **अन्धकारेति** । किमनात्मज्ञानं धर्म्युतात्मज्ञानम् । नाद्यः अनात्मावरकस्याज्ञानस्यानङ्गीकारात्तत्साधने बाधापातात् । न द्वितीयः अनात्मज्ञाने व्यभिचारात् । प्रकाशितार्थप्रकाशत्वं च किमप्रकाशितार्थे प्रकाशकर्तृत्वमुत करणत्वम् । नाद्यः साध्यसाधनवैकल्यप्रसङ्गात् । न द्वितीयः अत एव । अतो यत्किञ्चिदेतदिति केचित् । विप्रतिपन्नस्यात्मज्ञानस्यानात्मज्ञानस्य च धर्मित्वमिति ब्रूमः । न च बाध आपतति घटाद्यवच्छिन्नचैतन्यं प्रत्यक्षादिविषयत्वेनोपेयं तच्च अज्ञानावृतमिति कथं बाधः । न च हेतोर्दुर्निरूपत्वं प्रकाशशब्देन तज्जन्यो व्यवहारो लक्ष्यते । ततश्च । प्रकाशितव्यवहारहेतुत्वं हेत्वर्थः । तस्य चोभयत्रानुगतत्वान्नासिद्ध्यादिरिति । अनुमाननिगमनार्थम् इति शब्दः अनुमानसिद्धमर्थं निगमयति **ततश्चेति** । अनुमानान्तरमाह **अपि चेति** । अभावमानागम्यत्वं साधयितुमाह **अभावो हीति** । तथाप्यभावमानागम्यत्वं कथमित्याशङ्क्य मानागम्यत्वादेवाभावमानागम्यत्वं सिद्ध्यतीत्याह **अज्ञानं चेति** ।

**४६९ सु०— किञ्च विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तानादेर्निवर्तकं प्रमाणज्ञानत्वात् यज्ञदत्तगतप्रमाणज्ञानवत् ॥**

**'तम आसीत्', 'मायां तु प्रकृतिं विद्यादि'त्याद्यागमोऽत्र प्रमाणम् ।**





**बिन्दुः— देवदत्तनिष्ठप्रमाणज्ञानमिति** । यद्यपि दृष्टान्तेन यज्ञदत्तगतप्रमाणज्ञानप्रागभाव-मादाय साध्यसिद्धिस्तथापि पक्षे तमादाय न पर्यवसानं बाधात्, किन्तु अनेनैवानुमानेन ज्ञाननिवर्त्यः प्रागभावातिरिक्तः पदार्थः सिध्यति । तदेवास्माकं भावरूपाज्ञानमित्यर्थः ।

**परि०—** तत्त्वप्रदीपोक्तमाह **विगीतमिति** । देवदत्तनिष्ठो यः प्रमाप्रागभावः तदतिरिक्तानादे-र्निवर्तकमिति साध्यार्थः । चैत्रनिष्ठप्रमाप्रागभावातिरिक्तस्य देवदत्तगतप्रमाप्रागभावस्य निवर्तकत्वेन अर्थान्तरनिरासाय **देवदत्तनिष्ठे**त्युक्तिः । पूर्वज्ञाननिवर्तकत्वेनार्थान्तरनिरासाय **अनादेरिति** । भ्रान्ताव-व्यभिचाराय **प्रमाणेति** हेतुविशेषणम् । यज्ञदत्तप्रमाणज्ञाने च दृष्टान्ते देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तस्य अनादेर्यज्ञदत्तगतप्रमाप्रागभावस्य निवर्तकत्वेन साध्यं बोध्यम् । हेतोः पक्षधर्मताबलेन चानादिभावरूपं ज्ञाननिवर्त्यं किञ्चित्सिध्यति । तदेव चाज्ञानमिति भावः ।

**गु०दी०— देवदत्तनिष्ठप्रमाणज्ञानम्** इत्यनुमाने दृष्टान्तीभूतयज्ञदत्तनिष्ठप्रमाणज्ञाने देवदत्तनिष्ठप्रमा-प्रागभावातिरिक्तस्य अनादेर्यज्ञदत्तनिष्ठप्रमाप्रागभावस्यैव निवर्तकत्वात्साध्यसिद्धिरिति परस्य हृदयम् ।

**यादु०—** साध्ये **देवदत्तनिष्ठेति** प्रमाणज्ञानाभावविशेषणम् । प्रमाणज्ञानस्य तस्यान्तःकरणसमवेत-त्वेन देवदत्तसंबन्धित्वमात्रविवक्षायां तु यज्ञदत्तनिष्ठदेवदत्तविषयकप्रमाप्रागभावातिरिक्तदेवदत्तीयघटप्रमाप्रागभाव-निवर्तकत्वेन देवदत्तप्रमायां सिद्धसाधनादिति केचिदाहुः । तन्न । पक्षे देवदत्तनिष्ठेत्यस्य प्रमाणज्ञान-विशेषणत्वोक्त्ययोगात् । अतस्तार्किकरीत्यैवेदमुभयत्र प्रमाणज्ञानविशेषणमुपात्तमिति न कोऽपि दोष इति । पक्षेऽभावातिरिक्तानाद्यज्ञानमादाय साध्यसिद्धिर्दृष्टान्ते तु देवदत्तीयप्रमाप्रागभावभिन्नयज्ञदत्तप्रमाप्रागभावमादायेत द्रष्टव्यम् । अत्र पक्षगतविशेषणकृत्यं पूर्ववत् । प्रमाणज्ञानमात्रपक्षीकारे यज्ञदत्तप्रमायां सिद्धसाध्यताऽतो देवदत्तनिष्ठेतिविशेषणमिति द्रष्टव्यम् । साध्ये देवदत्तनिष्ठेतिविशेषणमप्रसिद्धिवारणाय । यज्ञदत्तप्रमायामभावाति-रिक्तानादिनिवर्तकत्वासम्मतेः । प्रमाणज्ञानप्रागभावातिरिक्तेतिविशेषणं प्रागभावमादाय सिद्धसाधनतावारणाय । पूर्वज्ञानं मिथ्याज्ञानं वाऽऽदाय सिद्धसाधनतापरिहाराय **अनादेरिति** ।

**वं०प०— विगीतमिति** । अत्र विगीतपदाभावे द्वितीयादिप्रमाणज्ञानमादाय बाधः स्यात् । देवदत्त-निष्ठद्वितीयादिप्रमाणज्ञानस्य देवदत्तनिष्ठपूर्वप्रमाणज्ञानप्रागभावातिरिक्तपूर्वप्रमाणज्ञाननिवर्तकत्वेऽपि तस्यानादि-त्वाभावात् । अतो विगीतपदम् । प्रथमं प्रमाणज्ञानमित्यर्थः । पक्षेऽनाद्यज्ञानमादाय साध्यपर्यवसानम् । दृष्टान्ते तु यज्ञदत्तप्रमाप्रागभावमादायेति विवेकः । पक्षेऽपि दृष्टान्तवदेव साध्यपर्यवसानं बाधादेव न संभवतीति मन्तव्यम् ।

**आनन्दः—** . . . . . अत उक्तं **देवदत्तेति** । अनाद्यभावनिवर्तकत्वेऽपि देवदत्तादिनिष्ठाप्रमाणज्ञानेषु देवदत्तप्रमाप्रागभावातिरिक्तानादिनिवर्तकत्वं अप्रसिद्धमेव । तेषां स्वस्वाधिकरणनिष्ठप्रमाप्रागभावनिवर्तकत्वात् तथाच





पक्षधर्मताबलात् प्रमाणज्ञाननिवृत्त्यर्थं प्रमाभावातिरिक्तमनाद्यज्ञानं देवदत्तनिष्ठां सिद्ध्यतीति भावः । **देवदत्तनिष्ठेति** । अत्र प्रमाप्रागभावातिरिक्तेत्युक्त्या स्वप्रागभावस्य, अनादेरित्युक्त्या उत्पादकादृष्टादेर्निवृत्तिरिति भावः ।

**कं०रा०— विगीतमिति** । विप्रतिपन्नमित्यर्थः । एतच्च देवदत्तनिष्ठद्वितीयादिप्रमाणज्ञाने बाधवारणाय । यज्ञदत्तनिष्ठप्रमाणज्ञाने सिद्धसाधनतानिरासाय देवदत्तनिष्ठपदम् । यद्यपि यज्ञदत्तगतप्रमाणज्ञानस्योक्तसाध्य-तदभाववत्तया विप्रतिपत्तिविषयत्वाभावेन विगीतपदेनैव तन्निरासाद्देवदत्तनिष्ठपदं व्यर्थम् । तथाऽपि विगीत-पदेन विमतिविषयतावच्छेदकं यत्स्वसामग्रीकालीनस्वसमानाधिकरणज्ञानाविषयाविषयकदेवदत्तनिष्ठप्रमाणज्ञानत्वं तदेकदेशस्य स्वसामग्रीकालीनस्वसमानाधिकरणज्ञानविषयाविषयकत्वस्य धारावाहिकद्वितीयादिबुद्धिव्यावर्तकस्य विवक्षिततया तस्य च यज्ञदत्तनिष्ठाद्यप्रमाणज्ञाने सत्त्वात्सिद्धसाधनप्रसक्तौ तन्निरासाय देवदत्तनिष्ठपदं सार्थकमेव । एवमेव पूर्वत्र विवादगोचरापन्नशब्दस्याप्यर्थोऽनुसन्धेयः । भ्रान्तिज्ञानस्य पक्षत्वेऽपि तत्र देवदत्तनिष्ठप्रमाणज्ञान-प्रागभावातिरिक्तस्वप्रागभावरूपानादिनिवर्तकत्वमादाय साध्यस्य सत्त्वे बाधाभावात् अत एव हेतोस्तत्र व्यभिचाराभावाच्च पक्षे हेतौ च प्रमाणपदं चिन्त्यम् । वस्तुतस्तु प्रमाणज्ञानपदं विहाय देवदत्तनिष्ठाभावातिरिक्ता-नादेर्निवर्तकमिति साध्यनिर्देशोऽपि भावरूपाज्ञानसिद्धेरवैकल्यात्तावदेव साध्यत्वेन विवक्षितम् । एवञ्च देवदत्तनिष्ठभ्रान्तिज्ञाने विवक्षितसाध्यस्याभावाद्बाधव्यभिचारयोः प्रसक्तौ तन्निरासाय पक्षे हेतौ च प्रमाणपदं सार्थकमिति द्रष्टव्यम् । **यज्ञदत्तेति** । यज्ञदत्तगतप्रमाणज्ञानं देवदत्तनिष्ठाभावातिरिक्तयज्ञदत्तनिष्ठस्वप्रागभाव-रूपानादेर्निवर्तकमिति तत्र साध्यमस्तीति भावः । एतच्चाभावनिवृत्तिर्भावादन्येति मते । अभावनिवृत्तिर्भावरूपेति मते तु देवदत्तनिष्ठाभावातिरिक्तयज्ञदत्तगतेच्छाप्रागभावरूपानादिनिवर्तकत्वाद्यज्ञदत्तगतप्रमाणज्ञानस्य तत्र साध्य-सत्त्वमिति द्रष्टव्यम् ।

**श्रीनिधि०— देवदत्तनिष्ठेति** । प्रमाणाभावज्ञानाभावविशेषणम् । दृष्टान्ते प्रमाणज्ञानाभावातिरिक्तानादि-निवर्तकत्वाभावेऽपि देवदत्तनिष्ठप्रमाणज्ञानाभावातिरिक्तयज्ञदत्तनिष्ठप्रमाणज्ञानाभावनिवर्तकत्वात् साध्यसद्भाव इति ज्ञेयम् । पक्षे विशेष्याभावेन साध्यपर्यवसानम् अन्यथा बाधापत्तेः इति ज्ञेयम् ।

**वा०चं०**— चित्सुखोक्तमनुमानमुदाहरति **किञ्चेति** । अत्र पक्षव्यावर्त्यकथनं पूर्ववत् । अत्र प्रागभाव-मादायार्थान्तरतानिरासाय **प्रमाप्रागभावातिरिक्तेति** । प्रमाणज्ञाननिवर्त्यस्य प्रमाप्रागभावातिरिक्तस्यानादेः परेणान-भ्युपगमादप्रसिद्धविशेषणतानिरासाय **देवदत्तनिष्ठेति** । तथा च तादृशयज्ञदत्तनिष्ठप्रमाणप्रागभावादेः प्रसिद्धत्वा-न्नाप्रसिद्धविशेषणतेति । पूर्वज्ञानसुखादिव्यवच्छेदाय **अनादेरिति** । अत्र च दृष्टान्ते देवदत्तनिष्ठत्वरूपविशेषणता-तिरिक्तत्वेन विशिष्टातिरिक्तयज्ञदत्तप्रमाप्रागभावनिवर्तकतया साध्यपर्यवसानं पक्षे चान्यप्रमाणज्ञानस्यान्यप्रमा-प्रागभावनिवर्तकत्वासंभवेन तादृशयज्ञदत्तप्रमाप्रागभावनिवर्तकतया साध्यपर्यवसानानुपपत्त्या देवदत्तप्रमा-प्रागभावस्य च तादृशविशिष्टातिरिक्तत्वायोगेन प्रागभावरूपविशेष्यातिरिक्तत्वेन तादृशविशिष्टातिरिक्तनिवर्तकतया साध्यपर्यवसाने भावरूपाज्ञानसिद्धिरिति भावः । विगीतो भ्रम एतज्जनकाबाध्यातिरिक्तोपादानको विभ्रमत्वादिति तदुक्तानुमानान्तरानुदाहरणं तु वक्ष्यमाणाध्यासान्यथाऽनुपपत्तिलब्धत्वादिति द्रष्टव्यम् ।





**वा०र०— अत्र पक्षेति** । तद्गतविशेषणेत्यर्थः । **पूर्ववदिति** । यद्यपि देवदत्तनिष्ठेति पदकृत्यं प्रागप्रसक्तमिति न तदंशेऽतिदेशः संभवी । तथापि । विगीतं प्रमाणज्ञानमिति पदद्वयकृत्यकथनमात्रेऽतिदेशः । यज्ञदत्तनिष्ठप्रमाणज्ञानमादाय सिद्धसाधनतानिवृत्त्यर्थं देवदत्तनिष्ठेति विशेषणमिति स्पष्टत्वाच्छिष्यैरेवोह्यतामित्याशयेन तदुभयकृत्यमात्रकथनं न दोषायेति ज्ञेयम् । **प्रागभावेति** । प्रमाप्रागभावेत्यर्थः । **प्रमाप्रागभावेति** । मूले प्रमाभावेत्येवोक्तेऽपि तत्त्वप्रदीपिकानुसारेण प्रागभाव एवाभावशब्दार्थ इति भावेन प्रागभावातिरिक्तेत्याद्यनुवादः कृत इति ज्ञेयम् । **तादृशेति** । तादृशस्य देवदत्तनिष्ठप्रमाप्रागभावातिरिक्तस्य यज्ञदत्तेति योज्यम् । नाप्रसिद्धविशेषणतेतीत्यत्रत्य इतिशब्दः इति परिहारप्रकार इति ज्ञेयमित्याद्यधिकपूरणेन योज्यः । विशिष्टव्यतिरेक्यनुमाने पक्षदृष्टान्तयोः साध्यपर्यवसानस्य भिन्नरूपतया तत्प्रकाराप्रतीतेस्तं दर्शयति **अत्र च दृष्टान्त इति** । विशेषणाभावेन विशिष्टातिरिक्तेति पाठः । विशेषणातिरिक्तत्वेनेति पाठेऽप्यतिरेकपदस्याभावसामान्यपरतया विशेषणाभाववत्वेनेत्यर्थः । निष्ठरूपविशेषणेति पाठे तु देवदत्तप्रमाप्रागभावरूपं यद्विशिष्टं तदतिरिक्तत्वं यज्ञदत्तप्रमाप्रागभावस्य यद्यपि प्रागभावत्वस्यैव सत्त्वेन विशेषप्रागभावातिरिक्तत्वमादाय न पर्यवसाययितुं शक्यम् । तथापि तस्य देवदत्तनिष्ठत्वाभावो न देवदत्तनिष्ठः सन् यः प्रमाप्रागभावः स न भवतीति देवदत्तनिष्ठरूपविशेषणातिरिक्तत्वेनैव विशिष्टाभाव इति यथाश्रुत एव ग्रन्थः साधुरिति ज्ञेयम् ।

**स०व्र०**— अनुमानान्तरमप्याह **किञ्चेति** । साध्ये देवदत्तनिष्ठेति प्रमाणज्ञानाभावविशेषणं न प्रमाणज्ञानस्य तस्यान्तःकरणसमवेतत्वेन देवदत्तगतत्वाभावात् । देवदत्तसंबन्धित्वमात्रविवक्षायां तु यज्ञदत्तनिष्ठदेवदत्तविषयकप्रमाप्रागभावातिरिक्तदेवदत्तीयघटप्रमाप्रागभावनिवर्तकत्वेन देवदत्तप्रमायां सिद्धसाधनत्वादिति केचिदाहुः । तन्न । पक्षे देवदत्तनिष्ठेत्यस्य प्रमाणज्ञानविशेषणत्वोक्त्ययोगात् । अतस्तार्किकरीत्यैवेदमुभयत्र प्रमाणज्ञानविशेषणमुपात्तमिति न कोऽपि दोष इति प्रतिभाति । पक्षे प्रमाप्रागभावातिरिक्तानाद्यज्ञानमादाय साध्यसिद्धिः । दृष्टान्ते तु देवदत्तीयप्रमाप्रागभावभिन्नयज्ञदत्तप्रमाप्रागभावमादायेति द्रष्टव्यम् । अत्र पक्षगतविशेषणकृत्यं पूर्ववत् । प्रमाणज्ञानमात्रपक्षीकारे यज्ञदत्तप्रमायां सिद्धसाध्यतातो देवदत्तनिष्ठेति विशेषणमिति द्रष्टव्यम् । साध्ये देवदत्तनिष्ठेति विशेषणमप्रसिद्धिवारणाय यज्ञदत्तप्रमायामभावातिरिक्तानादिनिवर्तकत्वासंमतेः । प्रमाणप्रागभावातिरिक्तेति विशेषणं प्रागभावमादाय सिद्धसाधनतावारणाय । पूर्वज्ञानं वा मिथ्याज्ञानं वाऽऽदाय सिद्धसाधनतापरिहाराय **अनादेरिति** ।

**वि०ठ०— देवदत्तनिष्ठेति** । दृष्टान्तगतयज्ञदत्तप्रमाणज्ञानस्य प्रमाणज्ञानप्रागभावनिवर्तकत्वेऽपि देवदत्तीयप्रमाणज्ञानप्रागभावनिवर्तकत्वाभावाद्विशिष्टसाध्यपर्यवसानम् । दृष्टान्तो देवदत्तनिष्ठत्वविशेषणाभावादिति यावत् । पक्षे तु देवदत्तनिष्ठत्वविशेषणस्य विद्यमानत्वेऽपि प्रमाणज्ञानप्रागभावाख्यविशेष्याभावात्तदतिरिक्तानाद्यज्ञाननिवर्तकमिति विशिष्टसाध्यसिद्धिः । **देवदत्तनिष्ठेति** प्रमाणज्ञानप्रागभावविशेषणं प्रमाणज्ञानमात्रपक्षीकारे यज्ञदत्तप्रमायां सिद्धसाधनता । अतो देवदत्तनिष्ठेति विशेषणम् । साध्यविशेषोपादानेन सिद्धधर्मिविशेषस्फुटीकरणार्थं **प्रमाणज्ञान**मित्युक्तम् । दृष्टान्ते साध्यस्य असिद्धिवारणाय **देवदत्तेति** विशेषणम् । यज्ञदत्तप्रमायां





प्रागभावातिरिक्तानादिनिवर्तकत्वासंमतेः । देवदत्तनिष्ठानादेर्निवर्तकमित्युक्ते प्रागभावनिवर्तकत्वमादाय सिद्ध-साधनता । अत उक्तं **प्रमाणज्ञानप्रागभावातिरिक्तेति** । **अनादेरिति** पदं पूर्वज्ञानं मिथ्याज्ञानं वा आदाय सिद्धसाधनतापरिहारार्थम् ।

**चषकः**— चित्सुखोक्तमनुमानमुदाहरति **किञ्चेति** । विमतिधर्मितावच्छेदकं स्फोरयितुं ज्ञानान्तोपा-दानम् । प्रागभावनिवर्तकतानियन्त्रितार्थान्तरत्वादिविधूननायातिरिक्तान्तं अतिरिक्तपदार्थतावच्छेदकीभूतभेदीय-प्रतियोगितायां व्यासज्यवृत्तिधर्मानवच्छिन्नत्वनिवेशान्न द्वित्वावच्छिन्नप्रतियोगिताकभेदमादाय सिद्धसाधनता-वकाशः । प्रतियोगिताव्यधिकरणत्वं वा भेदे निवेशनीयम् । अप्रसिद्धविशेषणतानिरासाय निष्ठान्तं प्रागभाव-विशेषणम् । यज्ञदत्तीयप्रमाप्रागभावमादाय निदर्शने साध्यस्य सूपपादत्वात् । पूर्वोत्पन्नज्ञानादिनिवर्तकत्वापादि-तार्थान्तरतावारणाय **अनादेरिति** । भ्रान्तावव्यभिचाराय प्रमाणेति हेतुविशेषणम् । अद्वैतिमते तस्याः साक्षिरूपतया अनादित्वेन तत्प्रागभावमादाय साध्यपर्यवसानासंभवादिति भावः । पक्षे साध्यपर्यवसानं त्वज्ञानेनैवेति भावः ।

**प्रदीपः**— अनुमानान्तरमाह **किञ्चेति** । अनादिप्रथमाभावनिवर्तकत्वेन सिद्धसाधनता मा भूदिति प्रमाणाभावातिरिक्तेति विशेषणम् । तथापि परं प्रत्यसिद्धविशेषणं प्रमाणज्ञानं स्यादभावातिरिक्तानादिनिवर्तव त्वा-नङ्गीकारात् । अत उक्तं **देवदत्तेति** । अनाद्यभावनिवर्तकत्वेऽपि यज्ञदत्तनिष्ठप्रमाप्रागभावनिवर्तकत्वात् तथाच पक्षधर्मताबलात् प्रमाणज्ञाननिरस्यं प्रमाभावातिरिक्तमनाद्यज्ञानं देवदत्तनिष्ठं सिद्ध्यतीति भावः ।

अन्यथानुपपत्तयः—

**४७० सु०— 'त्वदुक्तमर्थं न जानामी'ति व्यवहारान्यथाऽनुपपत्तिरपि भावरूपाज्ञान-सद्भावे मानम् । न च 'प्रमाणतो न जानामी'त्येवंपरतया व्यवहारोपपत्तिः । 'त्वदुक्तेऽर्थे प्रमाणज्ञानं मम नास्ती'त्यस्य विशिष्टविषयज्ञानस्य प्रमाणत्वात् । तद्विशेषणतयाऽर्थस्यापि प्रमाणेनाधिगमात्स्ववचनव्याघातापत्तेः । 'एतदतिरिक्तप्रमाणज्ञानं मम त्वदुक्तेऽर्थे नास्ती'ति च वदतो वचनव्याघातदोष एव । अस्यापि ज्ञानस्य पूर्ववदेव प्रमाणत्वात् । न च प्रमाणेन सामान्यतोऽर्थस्याधिगमेऽपि विशेषानधिगमाददोषः । विशेषस्याप्यधिगमानधिगमयोः पूर्वोक्तदोषानतिवृत्तेः ॥ ननु भावरूपमप्यज्ञानं ज्ञाननिरस्यमभ्युपगम्यते भवद्भिः, तत्कथं ज्ञायमानेऽर्थे न जानामीति व्यवहारः । मैवम् । अस्मन्मतेऽज्ञानस्य साक्षिवेद्यतया प्रमाणा-बोध्यत्वात् । प्रमाणज्ञानोदयात्प्राक् चाज्ञानविशेषितोऽर्थः साक्षिसिद्धोऽज्ञात इत्यनुवाद-गोचरो भवति । भवति च प्रश्नार्हः ।**

त्यर्थः । ततश्च तत्कालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्वाद्व्यतिरेकेण जाग्रदहमिवेत्यनुमानं द्रष्टव्यम् । न च ज्ञानाभावमन्तरेणान्योऽवस्थाविशेषो वक्तुमशक्य इति वाच्यम् । श्रुतिसिद्धप्राज्ञपरिष्वङ्गरूपस्य वेदानींतनेन्द्रिय-प्रसादानुमितेन्द्रियोपरमरूपस्य वा तस्य सुवचत्वात् । यदा चोक्तरीत्याऽनुमितकालविशेषस्यैव पक्षत्वं तदाऽवस्थाविशेषत्वस्यैव हेतुत्वमिति द्रष्टव्यम् ।

**वं०प०**— **तस्यापीति** । पक्षस्यापीत्यर्थः । सुषुप्तिप्राक्काल उदयकालत्वेन विवक्षितस्तदनन्तरकालोऽस्तमयत्वेन विवक्षितः । तथा चोदयास्तमयकालौ आन्तरालिककालोपेतौ । उदयास्तमयकालत्वात्संप्रतिपन्न-सूर्योदयास्तमयकालवदित्येवान्तरालिकं कालं सुषुप्तिकालं सुषुप्तिरूपमनुमाय स काल आत्मवान् भवितुमर्हति कालत्वादितरकालवदित्यनुमानोपपत्तेरित्यर्थः ।

**आनन्दः**— अज्ञाने प्रमाणत्वेनोपन्यस्तं सौषुप्तिकानुभवं प्रत्याख्याति **सौषुप्तिकेति** । **तस्यापीति** । पक्षस्यापीत्यर्थः । अहं जाग्रत्स्वप्नावस्थातिरिक्तावस्थावान् पुरुषत्वादित्यनुमानोपपत्तेरित्यर्थः । **अवस्थेति** । अवस्थाविशेषः ज्ञानाभाववान् अवस्थाविशेषत्वादित्येवेत्यर्थः । विस्तरस्त्वन्यत्र द्रष्टव्यः । असिद्ध्यादीत्यादि-शब्देन व्याप्त्यभावपरिग्रहः ।

**श्रीनिधि०**— **तस्याप्यनुमानोपपत्तेरिति** । एतावत्कालमहं बाह्येन्द्रियोपरमवान् व्यज्यमानस्वरूप-सुखानुभववत्त्वात् दुःखामिश्रसुखानुभववत्त्वात् वेति व्यतिरेकिणा तदनुमानोपपत्तेरित्यर्थः । **अवस्थाविशेषत्व-स्यैवेति** । एतावत्कालमहं ज्ञानाभाववान् बाह्येन्द्रियोपरत्यवस्थावत्त्वात् इति व्यतिरेकीति भावः ।

**वा०चं०**— एवं विवरणोक्तप्रत्यक्षं निराकृत्य चित्सुखोक्तमपि तन्निराकरोति **सौषुप्तिकेति** । यद्यपि न किञ्चिदित्यस्य परामर्शत्वमेवाभ्युपेत्य धर्म्यादिज्ञानभावाभावप्रयुक्तानुपपत्तिर्विषयसामान्यविशेषितज्ञानस्य सुषुप्तावज्ञाननिरूपकत्वस्य त्वयेव मयाऽपि तादृशज्ञानस्यैव ज्ञानाभावनिरूपकत्वाभ्युपगमादिति समाधातुं शक्यते । अत एव 'मिथ्यात्वं यदि दुःखादेरि'तिवाक्यव्याख्यावसरेऽहंप्रत्ययस्यात्मविषयकत्वोपपादनायैतत्समानन्यायस्य 'सुखमहमस्वाप्समि'त्यस्य परामर्शत्वमेवोक्तम् । तथाऽपि मम साक्षिणेत्याद्युक्तरीत्यैवास्य प्रकारस्य सुज्ञानत्वा-त्परेणातियत्ननिरस्तानुमानप्रकार एव सूपपाद इत्याशयेनेदमिति द्रष्टव्यम् । ननु सुषुप्तिकालीन आत्मा ज्ञानाभाववानित्यनुमाने पक्षाप्रतीतेर्नानुमानसंभव इत्याशङ्कते **पक्षेति** । अनिद्राणस्योदयास्तमययोरन्तराल-कालानुभवात् तद्दृष्टान्तेन निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोरपि तत्कालत्वेन हेतुनाऽन्तरालकालवत्त्वमनुमाय तस्याप्यात्मवत्त्वं कालत्वेनेतरकालवदनुमातुं शक्यत एवेत्यनुमानेन सुषुप्तिकालीनात्मरूपधर्मिप्रतीतिर्युक्तेत्याह **तस्यापीति** । **अवस्थाविशेषस्यैवेति** । अन्यथा साक्षिवेद्येच्छादावज्ञानासंभवेनाज्ञानरूपलिङ्गेन सुप्तिकाले इच्छादि-ज्ञानाभावानुमानासंभवाल्लिङ्गान्तरस्य चासंभवात्सुषुप्ताविच्छादिज्ञानाभावानुमानं न स्यादिति भावः ।





**वा०र०**— सौषुप्तिकानुभवसाधकपरामर्शत्वत्यागेनानुमानत्वाङ्गीकारः परामर्शत्वाङ्गीकारे अभावप्रतीते- र्धर्मिप्रतियोगिपराधीनतयेत्युक्तदोषस्योद्धारासंभवेनेति प्रतीयते । तत्तथा न प्रत्येतव्यम् । तत्परिहारस्य सुज्ञान- त्वाभिप्रायेण परामर्शत्वमङ्गीकृत्यैव परेण ज्ञानाभावानुमानपक्षनिराकरणमतियत्नतः कृतमस्तीति तदनुमानपक्ष एव समर्थ्यत इत्याह **यद्यपि न किञ्चिदित्यस्येति** ।

**स०व्र०**— ननु भवत्वस्मत्पक्षेऽन्यथासिद्धिस्त्वत्पक्षे तु कथमनुमानगम्यत्वमस्य सौषुप्तिकात्मनस्तदा- ऽननुभवात् । तस्मिन्धर्मिणि ज्ञानाभावानुमानायोगात् । यथा हि प्रातश्चत्वरे गजो नासीदित्यत्र प्रातःकालीन- चत्वरानधिगमे गजाभावानुमानाभाव इति शङ्कते **पक्षाप्रतीतेरिति** । सुषुप्त्यवच्छिन्नात्मरूपपक्षाप्रतीतेरित्यर्थः । **तस्याप्यनुमानेति** । संप्रतिपन्नोदयास्तमयकालवद्विवादपदयोरप्युदयास्तमयकालयोरुदयास्तमयकालत्वेनान्तराल- कालमनुमाय तत्र चात्मवत्त्वस्येतरकालवत्कालत्वेनानुमानोपपत्तेरित्यर्थः । **अवस्थाविशेषत्वस्यैवेति** । बहुव्रीहितयाऽवस्थाविशेषवत्त्वस्येत्यर्थः । ततश्च तत्कालीनोऽहं ज्ञानाभाववान् अवस्थाविशेषवत्वात् व्यतिरेकेण जाग्रदहमिवेत्यनुमानप्रयोगो द्रष्टव्यः । न च ज्ञानाभावमन्तरेणावस्थाविशेषो वक्तुमशक्य इति वाच्यम् । श्रुतिप्रसिद्धप्राज्ञपरिष्वङ्गरूपस्य वा इदानींतनेन्द्रियसंप्रसादानुमितेन्द्रियोपरमरूपस्य वा तस्य सुवचत्वात् । यदा चोक्तरीत्याऽनुमितकालविशेषस्यैव पक्षत्वं तदावस्थाविशेषत्वस्यैव हेतुत्वमिति द्रष्टव्यम् ।

**विट्ठ०**— पश्चात्परामर्शसिद्धसौषुप्तिकानुभवोऽपि भावरूपाज्ञाने प्रमाणमित्युक्तम् । तद्दूषयति **सौषुप्तिकेति** । **पक्षाप्रतीतेरिति** । सुप्त्यवस्थारूपपक्षाप्रतीतेरित्यर्थः । **तस्यापीति** । जाग्रदवस्था अवस्थान्तरपूर्विका अवस्थात्वात् स्वप्नावस्थावदित्यनुमानोपपत्तेरित्यर्थः । अतः स्वप्नाद्यपूर्वकजाग्रत्पक्षीकारान्नात्र क्षुद्रोपद्रवः । **अवस्थाविशेष- त्वस्येति** । सर्वेन्द्रियोपरमावस्थाविशेषस्येत्यर्थः ।

**चषकः**— **पक्षाप्रतीतेरिति** । सुषुप्त्यवच्छिन्नात्मरूपपक्षाप्रतीतेरित्यर्थः । **तस्याप्यनुमानेनेति** । अनिद्राणस्योदयास्तमययोरन्तरालकालानुभवात्तद्दृष्टान्तेन निद्राकालात्पूर्वोत्तरास्तमयोदयकालयोरपि तत्कालत्वेन हेतुनान्तरकालवत्त्वमनुमाय तस्याप्यात्मवत्त्वं कालत्वेनोत्तरकालवदनुमातुं शक्यत एवेत्यनुमानेन सुषुप्ति- कालीनात्मरूपधर्मिप्रतीत्युपपत्तेरिति भावः ।

**प्रदीपः**— न किञ्चिदवेदिषमिति सुषुप्तिकालीनज्ञानाभावानुमानमेवानुपपत्त्यभावान्नानुभवपरामर्शः यस्य भावरूपाज्ञानविषयत्वं स्यादित्याह **सौषुप्तिकेति** । सर्वेन्द्रियोपरमावस्था विशेषशब्दार्थः ।





अनुमाननिरासः—

**४७७ सु०— अनुमानं त्वसंबद्धमेव ॥ प्रकाशकत्वस्य ज्ञाने प्रदीपप्रभायां चैकस्याभावेन असिद्ध्यादिप्रसङ्गात् । शब्दसाम्यमात्रेणानुमाने तु गोत्वेन वागादीनामपि शृङ्गित्वादिप्रसङ्गः । तमोविरोधित्वमेकमुभयत्रास्तीति चेन्न । तमोऽप्यविद्यान्धकारो वा । नाद्यः । दृष्टान्तस्य साधनविकलत्वात् । न द्वितीयः । असिद्धेः ॥ अभावमानागम्यत्वं त्वसिद्धमेव । अज्ञानं न मानगम्यं माननिवर्त्यत्वादिति चेन्न । तथा सति तत्र प्रमाणोपन्यासवैयर्थ्यापातात् । तदभावो व्यावर्त्यत इति चेन्न । अभावव्यावर्तनं भावसाधनमित्येकार्थत्वात् ॥ तृतीयानुमानं तु घटादेरपि तत्साधनसौलभ्येन परास्तम् ।**

**बिन्दुः— अनुमानं त्वसंबद्धमेवेति ।** एवकारेणात्रानुक्तान्यपि बहूनि दूषणानि सन्ति, स्वयं तु दिङ्मात्रं प्रदर्शितमित्यभिप्रैति । तथाहि । किमत्र प्रमाणज्ञानमात्रं पक्षः, आहोस्वित् वृत्तिमात्रं अथवा अपरोक्षवृत्तिरिति । नाद्यः । साक्षिरूपत्वेनाज्ञानानिवर्तिकायां सुखप्रमायां बाधात् । ज्ञातैकसत्सुखादौ परेण भावरूपाज्ञानानङ्गीकारात् । न द्वितीयः । परोक्षवृत्तौ बाधात् । तस्याः स्वविषयेऽज्ञाननिवर्तकत्वे तद्विषयस्याभिव्यक्तापरोक्षैकरसचैतन्यसंभेदेनापरोक्षत्वापातात् । उक्तं च विवरणे विषयत्वं नामानुमेयादौ सुषुप्तिव्याप्तिरिति । नापि तृतीयः । धारावाहिकद्वितीयादिवृत्तिषु बाधात् । असिद्धेश्चेत्त्वन्मते अज्ञाना-वरणानुवृत्त्युपगमेन घटोऽयमित्याद्यपरोक्षवृत्तौ बाधाच्च । आत्मविषयापरोक्षवृत्तित्वस्य पक्षतावच्छेदक-त्वेऽप्युक्तज्ञाने व्यभिचारापरिहारः । आत्मविषयत्वेन हेतुविशेषणे तु दृष्टान्ते साधनवैकल्यमिति दिक् । साध्येऽप्याद्यविशेषणं व्यर्थम् । यतो ज्ञानमज्ञानस्यैव निवर्तकमिति त्वन्मते अभावनिवृत्तिरेव भाव इति, मन्मते च स्वनिवर्त्यविशेषणेनैव प्रागभावव्यावृत्तिसिद्धेः । प्रतियोगी प्रागभावनिवर्तक इति मतेऽपि प्राक्पदवैयर्थ्यमेव । द्वितीयमप्ययुक्तम् । विषयो हि द्विविधः । चिद्रूपोऽचिद्रूपश्च । नाद्यः, तस्य 'निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदि'त्युक्तरीत्या स्वप्रकाशत्वाच्चावरणासंभवात् । न द्वितीयः । अनङ्गीकारात् । स्वोत्पादकादृष्टस्यावरणपदेनैव वारणे स्वविषयपदवैयर्थ्याच्च । तृतीयं चायुक्तम् । बाधात् । तथाहि । घटोऽयमित्यादिज्ञानस्य घटाज्ञाननिवर्तकत्वं खलु त्वदभिप्रेतम् । तत्तु त्वदभ्युपगतरीत्यैवानुपपन्नम् । चैतन्येऽध्यस्तो घटश्चैतन्येनैव प्रकाशते । तस्य भासा सर्वमिदं विभातीति श्रुतेः । तत्र चासङ्गो ह्ययं पुरुष इति श्रुतेः शुद्धचैतन्यस्य घटाद्यसंबन्धात्प्रकाशकत्वं न संभवतीति चिदुपरागार्था वृत्तिः समाश्रीयत इति त्वदीयमतेऽज्ञाननिवृत्तिवार्तया असंबद्धत्वात् । वृत्तिप्रतिबिम्बितचैतन्याभिव्यक्तं घटाधिष्ठानचैतन्यं घटप्रकाशकमिति मते च सुतरां तदयोगः । प्रतिबन्धकादृष्टनिवारणार्थमुपात्तस्यास्य विशेषणस्य तदादायैव





पर्यवसानाच्च। तस्यापि चरमवृत्तिनिवर्त्यत्वात्। अन्यथा तन्मिथ्यात्वासिद्धिप्रसङ्गात्। चतुर्थं चासंबद्धम्। प्रमाणज्ञानाश्रयत्वहीने चिन्मात्रे त्वयाऽज्ञानाङ्गीकारात्। वस्तुतस्तु ज्ञानमज्ञानस्यैव निवर्तकमित्यभ्युपगच्छतः परस्य सर्वाण्यपि विशेषणानि व्यर्थान्येव। स्वप्रागभावस्वोत्पादकादृष्टस्वप्रतिबन्धकादृष्टविषयगताज्ञातत्वानां क्रमेण विशेषणव्यावर्त्यत्वेनाभ्युपगतानां ज्ञाननिवर्त्यत्वासंभवादिति यत्किञ्चिदेतत्।

**परि०— अनुमानं त्विति**। अप्रकाशितार्थप्रकाशकत्वादित्यनुमानमित्यर्थः। **असिध्यादीति**। ज्ञापकाप्यायकत्वरूपत्वेऽसिद्धिः। ज्ञापकत्वरूपत्वे चक्षुरादौ व्यभिचारः। ज्ञानत्वरूपत्वे साधनवैकल्यं दृष्टान्तस्येति भावः। प्रागुक्तानुमानान्तरं च निराह **अभावेति**। **घटादेरिति**। घटोऽयमेतद्घटप्रागभावातिरिक्तानादेर्निवर्तको घटत्वाद्घटान्तरवदिति वादावल्युक्तदिशेति भावः।

**यादु०— प्रकाशकत्वस्येति**। अत्र कश्चित्। प्रकाशशब्देन तज्जन्यव्यवहारलक्षणयाऽप्रकाशितव्यवहारहेतुत्वं हेत्वर्थः। तच्चोभयत्रानुगतमिति नासिद्धिरित्याह तत्तुच्छम्। साक्षाद्धेतुत्वविवक्षायां ज्ञानस्यैव तथा व्यवहारहेतुत्वेन साधनवैकल्यात्। प्रयोजकत्वविवक्षायां तु चक्षुरादौ व्यभिचारादिति। **तृतीयानुमानं त्विति**। देवदत्तघटो देवदत्तघटाभावातिरिक्तानादेर्निवर्तको घटत्वाद्यज्ञदत्तघटवदित्यनुमानेन घटाभावातिरिक्तं किञ्चिदनादिभावरूपं घटनिवर्त्यमपि सिद्ध्येदित्यतिप्रसङ्गपराहतमित्यर्थः।

**वं०प०— असिध्यादीति**। पक्षीभूते ज्ञानेऽर्थप्रकाशकत्वं नामार्थप्रकाशात्मकबुद्धित्वमेव नान्यत्। प्रदीपप्रभायां चार्थप्रकाशकत्वं नामार्थप्रकाशजनकत्वमेव। एवं चार्थप्रकाशजनकत्वविवक्षायामसिद्धिः। अर्थप्रकाशात्मकबुद्धित्वविवक्षायां दृष्टान्ते साधनवैकल्यमित्यर्थः। पक्षदृष्टान्तानुगतं प्रकाशकत्वं न विद्यते। शब्दसाम्येन चेद्वाचो गोत्वाच्छृङ्गं समापतेदित्याह **शब्दसाम्यमात्रेणेति**। **तत्रेति**। अज्ञान इत्यर्थः। **वैयर्थ्येति**। तस्य साध्यज्ञस्यर्थत्वादिति भावः। अतद्व्यावृत्तिपक्षाङ्गीकारेण शङ्कते **तदभाव इति**। पूर्वोक्तप्रमाणैरिति शेषः।

**आनन्दः— तथापि** उभयत्र प्रकाशकत्वसाम्यादेव साध्यत इत्यत आह **शब्देति**। **घटादेरपीति**। घटश्च प्रागभावातिरिक्तानादेर्निवर्तकः। कार्यद्रव्यत्वात्पटवदित्याभाससाम्यमित्यर्थः।

**कं०रा०— असिद्ध्यादीति**। ज्ञानहेतुत्वं प्रकाशकत्वं चेत्पक्षेऽसिद्धिप्रसङ्गः। ज्ञानत्वं चेत्प्रदीपप्रभारूपदृष्टान्ते साधनवैकल्यप्रसङ्ग इति भावः। **तमोऽपीति**। अज्ञानान्धकारानुगततमस्त्वाभावेन तमःसामान्यं विवक्षितमिति वक्तुमशक्यत्वादिति भावः। न च वाच्यमज्ञानान्धकारान्यतरविरोधित्वरूपं प्रकाशकत्वं पक्षदृष्टान्तानुगतमस्तीति। धारावाहिकद्वितीयादिबुद्धौ विवक्षितप्रकाशत्वाभावेन व्यभिचाराप्रसक्त्या हेतावप्रकाशितपदस्य वैयर्थ्यापत्तेः। साध्यावैशिष्ट्याच्च। ननु प्रमाणेन नाज्ञानं साध्यते येन तस्य मानगम्यत्वं स्यात्।





किं त्वज्ञानाभावव्यावृत्तिबोधनमेव तेन क्रियत इत्याशङ्कते **तदभाव इति** । **अभावव्यावर्तनमिति** । अभावव्यावृत्तेर्भावरूपत्वेनाभावव्यावृत्तिबोधनं भावसाधनमित्यनयोरेकार्थत्वादज्ञानाभावः प्रमाणेन व्यावर्त्यत इति वदता तेनाज्ञानसाधनं क्रियत इत्युक्तं स्यात् । तथा च मानागम्यत्वमसिद्धमेवेति भावः । **तृतीयेति** । विगीतं देवदत्तनिष्ठप्रमाणज्ञानं देवदत्तनिष्ठप्रमाणज्ञानाभावातिरिक्तानादेर्निवर्तकं प्रमाणज्ञानत्वाद्यज्ञदत्तगतप्रमाणज्ञानवदिति तृतीयानुमानं त्वेतत्कपालनिष्ठघट एतत्कपालनिष्ठघटाभावातिरिक्तानादेर्निवर्तको घटत्वात्कपालान्तरगतघटवदिति घटादेरपि स्वाभावातिरिक्तानादिसाधनसौलभ्येनाभाससमानयोगक्षेमवत्वात्परास्तमित्यर्थः ।

**श्रीनिधि०— ज्ञाने प्रदीपप्रभायां चैकस्याभावेनेति** । ज्ञाने अर्थप्रकाशकत्वं नामार्थविषयकज्ञानत्वम् । प्रदीपप्रभायां तु अर्थसंयोगेनार्थज्ञानजनकालोकत्वमिति भेदादित्यर्थः । **असिद्ध्यादीति** । आलोकगतप्रकाशकत्वस्य विवक्षायां असिद्धिः पक्षे ज्ञानगतस्य विवक्षायां तु दृष्टान्ते साधनवैकल्यमिति द्रष्टव्यम् । **अभावमानागम्यत्वम्** अभावविषयकमानागम्यत्वम् । **प्रमाणोपन्यासवैयर्थ्यापातादिति** । माननिवर्त्यत्वं मानप्रागभावे वर्तते मानागम्यत्वं नास्ति । अलीकत्वापातादिति मानप्रागभावे व्यभिचारः । अज्ञानं नैतन्मानगम्यमेतन्माननिवर्त्यत्वादिति साधने अनुपलब्ध्यादिगम्यत्वाद्विरोध इति स्फुटत्वादुपेक्ष्य इदं दूषणमुक्तमिति ज्ञेयम् । **तदभावः** मानाभावगम्यत्वाभावः । **व्यावर्त्यते** प्रमाणोपन्यासैरिति शेषः । **तत्साधनसौलभ्यप्रसङ्गेनेति** । घटः पटप्रागभावातिरिक्तानादिनिवर्तकः कार्यत्वात् पटवदित्यादिप्रयोगेनेति भावः ।

**वा०चं०— अनुमानं त्विति** । अत्रैवशब्देन बाधादेः स्पष्टतामाचष्टे । तथा हि । अत्र यथार्थज्ञानमात्रस्य पक्षत्वे साक्षिरूपसुखादिज्ञानस्याज्ञानानिवर्तकत्वेन तत्र बाधः । वृत्तेः पक्षत्वे च त्वन्मते परोक्षवृत्तौ बाध एव । अपरोक्षवृत्तेः पक्षत्वे च तत्रैव व्यभिचारः । परोक्षज्ञानान्यत्वेन हेतुविशेषणे चाप्रयोजकत्वं धारावाहिकद्वितीयादिप्रमायां बाधोऽसिद्धिश्च । न चोत्तरोत्तरक्षणावच्छिन्नतद्विषयाज्ञानं तत्रापि निवर्तत इति वाच्यम् । क्षणानामप्रत्यक्षत्वात् । तदन्यत्वेन पक्षविशेषणे वाऽऽत्मज्ञानस्य पक्षत्वेऽनात्मज्ञाने व्यभिचारः । तस्यापि पक्षत्वे त्वन्मते जडावरकाज्ञानाभावाद्बाध एव । न च तत्रापि तदवच्छिन्नचैतन्यं तत्प्रमाणविषय इति न बाध इति वाच्यम् । रूपादिहीनस्य चैतन्यस्य चाक्षुषत्वायोगात् । साध्ये चाद्यविशेषणवैयर्थ्यम् । ज्ञानस्यैव तन्निवृत्तित्वेन स्वनिवर्त्यपदेनैव स्वप्रागभावव्यावर्तनात् । अभावव्यतिरिक्तेत्येतावतैव पूर्तौ स्वप्राक्पदवैयर्थ्याच्च । जडावरकाज्ञानाभावाद् द्वितीयविशेषणमप्यसङ्गतम् । स्वोत्पादकादृष्टव्यावृत्तेरावरणपदेनैव सिद्ध्या स्वविषयेत्यंशवैयर्थ्यं च । वृत्तिश्चिदुपरागार्थेति मतेऽज्ञानस्य ज्ञाननिवर्त्यत्वाभावेन तृतीयमप्यसङ्गतम् । आवरणाभिभवार्था वृत्तिरिति मतान्तरेऽपि वृत्तिप्रतिबिम्बितचैतन्यघटयोराध्यासिकसंबन्धाभावेन तस्य तदविषयतयाऽज्ञाननिवर्तकत्वायोगात् । अज्ञानस्य चिन्मात्राश्रयत्वेन वृत्तेस्तत्प्रतिबिम्बितचैतन्यस्य वा तदनाधारतया चतुर्थमप्ययुक्तम् । इतरविशेषणव्यावर्त्यव्यावर्तनस्य स्वविषयावरणपूर्वकमित्यनेनैव सिद्धेरितरवैयर्थ्यं च । प्रमाप्रागभावप्रमोत्पत्तिप्रतिबन्धकादृष्टादेरज्ञानातिरिक्तस्यावरणत्वाभावात् । तथात्वे वा तेनैव स्वप्रकाशब्रह्मावरणसंभवाद्धेतोरप्रयोजकत्वम् । न च





तमोव्युदासाय तृतीयम् । तस्य प्रमामात्रविषयावरणत्वाभावात् । तस्मान्न प्रतिज्ञा युक्तेति । अत्राह नव्यः । विवादगोचरापन्नमित्यनेन जन्यसविकल्पकाजन्यचाक्षुषघटप्रमाणज्ञानमन्धकारनिवृत्त्यव्यवहितोत्तरकालीनचाक्षुषज्ञानं वा विवक्षितम् । परमते जन्यज्ञानमात्रस्य सविकल्पकजन्यत्वात्सविकल्पकस्य जन्यज्ञानजन्यत्वाच्च पक्षाप्रसिद्धिवारणाय जन्यसविकल्पकाजन्येत्युभयोपादानम् । अनेन धारावाहिकद्वितीयादिबुद्धिव्यावृत्तिः । अस्मन्मते तु धारावाहिकद्वितीयादिबुद्धिरेव नास्ति । अन्तःकरणपरिणामरूपज्ञानस्य द्रव्यतया घटादिवदेकस्यैव ज्ञानस्य तावत्समयस्थित्युपपत्तेर्न तस्य पक्षतापत्त्या बाधः । पराभिमतेश्वरज्ञानादिव्यावृत्तये चाक्षुषप्रमाणज्ञानेति । साध्ये च स्वशब्दः समभिव्याहृतपरः । स्वप्रागभावपदेन स्वसमानाधिकरणः प्रागभावः कथ्यते । स्वविषयावरणेति स्वजननायोग्यम् । स्वनिवर्त्येति स्वजन्यध्वंसप्रतियोगि । स्वदेशगतेति स्वाश्रये वर्तमानम् । एवं च पक्षीभूतज्ञानस्य घटपटादिसंयोगजनकत्वसंभवात्तत्प्रागभावस्तन्निवर्त्य इति संयोगादिप्रागभावात्मत्वस्वजनकादृष्टेच्छाप्रागभावपूर्वकत्वेनार्थान्तरव्यावृत्तये प्रातिलोम्येनैतानि विशेषणानि । अज्ञानं चैवंभूतमिति न बाधः । स्वप्रागभावान्यत्वं चाभावान्यत्वादन्यदेवेति नाखण्डाभावे वैयर्थ्यम् । अथवा प्रमाणज्ञानप्रागभाव एव स्वप्रागभावः । स्वविषये संशयादिजनकतायोग्यमेव स्वविषयावरणं स्वसत्ताक्षणनियतध्वंसप्रतियोगि स्वनिवर्त्यम् । ततश्च प्रागभावोऽपि परमते विशेषादर्शनतया संशयादिजनक इति स्वप्रागभावस्वजनकादृष्टान्धकारादिव्यावृत्तये स्वप्रागभावेत्यादिविशेषणम् । परमते मनःसंयोगपूर्वकत्वेनार्थान्तरनिवृत्तये स्वनिवर्त्येति ।

अथवा पराभिमतप्रागभावान्यत्वज्ञानसमानविषयकत्वज्ञाननिवर्त्यत्वज्ञानसमानाश्रयत्वविशिष्टाज्ञानसिद्ध्यर्थं तानि विशेषणानीति न कस्यापि वैयर्थ्यम् । एतेनापि तेन विनोद्देश्यासिद्धेः । अज्ञानाश्रयघटावच्छिन्नचैतन्यमेवान्तःकरणावच्छिन्नमिति तन्निष्ठज्ञानस्याप्यज्ञानसमानाश्रयत्वमबाधितमेव । घटादिचाक्षुषज्ञानस्यापि तदवच्छिन्नचैतन्यविषयत्वादज्ञानस्य ज्ञानसमानविषयकत्वं चाबाधितम् । अनुभवबलादरूपस्याप्यहङ्कारस्य प्रत्यक्षत्वाभ्युपगमादरूपस्याप्यात्मनश्चाक्षुषप्रत्यक्षत्वाङ्गीकारे बाधकाभावात् ।

वस्तुतोऽस्मदभिमतात्मनः पराभिमतविलक्षणत्वात्सत्तातुल्यतैवेति घटः सन्नित्यादिप्रत्यक्षस्य सर्वानुभवसिद्धत्वाच्चाक्षुषत्वमविरुद्धम् । न चान्तःकरणवृत्त्यादौ विषयस्याध्यासिकसंबन्धाभावाद्घटादेर्विषयत्वानुपपत्तिरिति वाच्यम् । घटाद्यधिष्ठानचैतन्यस्यान्तःकरणवृत्त्यवच्छिन्नत्वेनान्तःकरणावच्छिन्नसाक्ष्यभेदात्तदाध्यासिकसंबन्धस्यैव साक्षिसंबन्धत्वात् । तस्मान्नात्रानुमाने काऽप्यनुपपत्तिः । घटध्वंसाजनकघटापरोक्षप्रमाणज्ञानं घटं न जानामीत्यनुभवविषयनिवर्तकं घटापरोक्षप्रमाणज्ञानत्वाद्घटध्वंसजनकप्रत्यक्षवत् । विषयनिवर्तकतयाऽर्थान्तरवारणाय पक्षे ध्वंसाजनकेति विशेषणम् । आत्मनश्चानिवर्त्यत्वात्तन्निवर्त्यं भावरूपाज्ञानमेव । पटादिप्रत्यक्षे परोक्षज्ञाने घटभ्रमे च व्यभिचारवारणाय क्रमेण हेतुविशेषणानि । अनुद्दिष्टघटादिध्वंसे ईश्वरस्य प्रतियोगिप्रत्यक्षसंभवादतीन्द्रियस्यैन्द्रियकस्याप्यज्ञानदशायां घटादेरस्मदादितो ध्वंसाभावादन्वयव्यतिरेकाभ्यां प्रतियोगिप्रत्यक्षं ध्वंसे कारणमिति न साध्यवैकल्यम् । नापि प्रागभावनिवर्तकतयाऽर्थान्तरता । तस्य सत्त्वेऽपि ज्ञानस्य तन्निवर्त्यतया तदनिवर्तकत्वात् । निवर्तकयोग्यतासाध्येति न धारावाहिकप्रत्यक्षे बाधो व्यभिचारो वेति वा भावरूपाज्ञान-





सिद्धिः । मूलाज्ञाने तु सर्गाद्यकालीनं कार्यं जडोपादानकं कार्यत्वात्सम्मतवत् । तच्च लाघवादेवमित्यणुव्यतिरिक्त-जडोपादानसिद्धावनादित्वे सति जडोपादानत्वं भावत्वं वा ज्ञाननिवर्त्यवृत्तिजडवृत्तित्वाद्घटत्वादिवदिति जीवत्वादे-रनाविद्यकत्वे ज्ञानान्निवृत्त्यनुपपत्तेर्न तदादायार्थान्तरत्वमित्यनुमानमिति । तत्तुच्छम् । मन्मते जन्यज्ञानमात्रस्य बुद्धिमदीश्वरजन्यत्वेऽपि तज्ज्ञानजन्यत्वाभावात् । तज्जन्यत्वेऽपि वा निर्विकल्पकानङ्गीकारेण सविकल्पकस्य जन्यज्ञानजन्यत्वाभावेन पक्षाप्रसिद्धेरभावेन जन्यसविकल्पकाजन्येत्युभयोपादानस्यायुक्तत्वात् । मन्मते विशेषण-ज्ञानस्य विशिष्टज्ञानाजनकत्वाद्धारावाहिकद्वितीयादिबुद्धौ पूर्वपूर्वज्ञानानामजनकत्वेन तस्या अपि जन्यसविकल्प-काजन्यत्वेन पक्षत्वापत्तौ मन्मतेन बाधतादवस्थ्यात् । धारावाहिकबुद्धावपि साक्ष्युपनीततत्तत्क्षणभानसंभवेन तत्तत्क्षणविशिष्टाज्ञाननिवर्तकत्वेन तस्याः पक्षत्वेऽपि बाधाप्रसक्त्या तद्व्यावृत्तये विशेषणोपादानानौचित्याच्च धारावाहिकबुध्यभावपक्षस्त्वनुपपन्नः । ज्ञानमेव पुनः पुनर्ज्ञायत इत्यनुभवेन तत्सिद्धेः । तदपलापे चोभय-सम्प्रतिपन्नसकृज्ज्ञान इव धारावाहिकस्थलेऽप्याशुविनाशाभ्युपगमापत्त्या तावत्कालस्थितेरकल्पनीयत्वात् । साध्ये च व्यधिकरणघटपटसंयोगादिसमानाधिकरणेच्छादिप्रागभावव्यावृत्तये विशेषणोपादानं प्रागभावानभ्युप-गन्तुरयुक्तमेव । न च परमतेनार्थान्तरादिव्यावृत्त्यर्थं तदिति वाच्यम् । तथा सति तन्मतेनैवाप्रकाशितार्थ-प्रकाशत्वहेतोर्विशिष्टसाध्याभावेऽपि प्रागभावादिपूर्वकत्वेनाप्युपपत्त्याऽप्रयोजकत्वात् । वस्तुतस्तदभावेना-प्रयोजकत्वपरिहारेऽर्थान्तरस्यापि तत एवाभावाद्विशेषणवैयर्थ्यमेव । विशिष्टसाध्योपादानेऽपि पटज्ञाना-नन्तरभाविचाक्षुषघटज्ञाने पटज्ञानस्य घटज्ञानसमानाधिकरणप्रागभावव्यतिरिक्ततया घटज्ञानजननायोग्यतयोत्तर-घटज्ञानजन्यध्वंसप्रतियोगितया घटज्ञानाश्रयगततया तत्पूर्वकत्वेनार्थान्तरतादवस्थ्यात् । अन्धकारकालीन-त्वगिन्द्रियजन्यघटज्ञानोत्तरभाविनोऽन्धकारनिवृत्त्यव्यवहितोत्तरभाविचाक्षुषज्ञानस्योक्ततादृशघटज्ञानपूर्वकत्वेनोपपत्त्या अर्थान्तरतैव ।

द्वितीयपक्षेऽपि संशयविशेषदर्शनप्रागभावयोः प्रमाणज्ञानप्रागभावान्यतया तद्विषये संशयादिजननयोग्यतया प्रमाणज्ञानसत्ताक्षणनियतध्वंसप्रतियोगितया स्वाश्रयगततया च तत्पूर्वकत्वेनार्थान्तरतैव । त्वन्मतेऽपि विशेषणभेदेन विशिष्टभेदस्यावश्यकत्वाद्घटावच्छिन्नचैतन्यान्तःकरणावच्छिन्नचैतन्ययोर्भेदस्यैव वक्तव्यत्वात् । अभेदेऽपि वा घटावच्छिन्नस्याज्ञानकल्पितत्वेनान्योन्याश्रयेणाज्ञानानाश्रयत्वादज्ञानाश्रयचिन्मात्रस्य वृत्त्यादिरूपज्ञानानाश्रयत्वात् स्वाश्रयगतत्वमज्ञाने बाधितमेव । न च तथाऽप्यज्ञानाश्रयचिन्मात्रस्य ज्ञानाश्रयान्तःकरणावच्छिन्नाभेदाज्ज्ञान-समानाश्रयत्वमज्ञानस्योपपन्नमेवेति वाच्यम् । अवच्छिन्नगतमिथ्यात्वस्य संसारादेरप्यवच्छेद्यगतत्वापत्त्या तयोरपि भेदस्यावश्यकत्वात् । अनुभवबलादरूपस्याप्यहङ्कारस्य प्रत्यक्षत्वाभ्युपगमेऽपि सन्घट इत्यादिघटादिसत्तानुभव-स्यात्मविषयकत्वाभावेऽपि विश्वसत्ताया उपपादितत्वादुपपादयिष्यमाणत्वाच्च घटादिमात्रविषयकत्वेनोपपत्त्या द्रव्यचाक्षुषतायां रूपवत्त्वस्य प्रयोजकताया विनैव बाधकं त्यागायोगाद्घटादिचाक्षुषज्ञानस्य तदवच्छिन्नचैतन्य-विषयकत्वानुपपत्त्याऽज्ञानस्य ज्ञानसमानविषयकत्वमपि बाधितमेव । अन्तःकरणवृत्त्यादौ विषयताप्रयोजका-ध्यासिकसंबन्धाभावात्तद्वति च वृत्तिप्रतिबिम्बितविषयाधिष्ठानचैतन्येऽज्ञाननिवर्तकत्वाभावाद्बाध एव । न च





घटाद्यधिष्ठानचैतन्यस्यान्तःकरणवृत्त्यवच्छिन्नत्वेनान्तःकरणावच्छिन्नसाक्ष्यभेदात्तदाध्यासिकसंबन्धस्यैव तत्संबन्धत्वमिति वाच्यम् । अधिष्ठानचैतन्यस्यावच्छिन्नाभेदसंभवस्योक्तत्वात् । अभेदेऽवच्छिन्नवदवच्छेद्यस्यापि मिथ्यात्वेनाध्यासाधिष्ठानत्वासंभवाच्च । तथात्वे वाध्यासाधिष्ठानत्वेन ब्रह्मणः पारमार्थिकत्वसाधनानुपपत्तेः । यच्चोद्देश्यसिद्ध्यर्थतया विशेषणसार्थक्यमुक्तम् । तन्न । यत्राविशेषितसाध्यं प्रति हेतोरप्रयोजकता यथा विमतं भिन्नाभिन्नं समानाधिकृत्वादित्यादौ । यद्विशेषणं विनाऽर्थान्तरादि वा । यथेश्वरानुमानेऽदृष्टप्रागभावव्याप्यप्रागभावाप्रतियोगीति । तत्रैवोद्देश्यसिद्ध्यर्थत्वं वाच्यम् । न चात्रार्थान्तरादिनिवारकत्वम् । तदसंभवस्योक्तत्वात् । न च तद्विषयावरणसमयवर्तित्वे सति तन्निवर्तकत्वरूपस्याप्रकाशितार्थप्रकाशकत्वहेतोर्विशिष्टसाध्येन विनाऽनुपपत्तिरेव । अज्ञानातिरिक्तस्य ज्ञाननिवर्त्यस्य विषयावरणस्याभावात् । प्रागभावस्याप्रसिद्धत्वादन्यस्य चासंभवादिति वाच्यम् । प्रागभावस्य व्युत्पादितत्वात् । तस्य चावरणत्वाभावे स्वविषयावरणपूर्वकमित्येतावतैवोपपत्तौ शेषवैयर्थ्यस्य वज्रलेपत्वात् । अन्यथाऽनादित्वभ्रमोपादानत्वादिविशेषणानि प्रक्षिप्योद्देश्यसिद्ध्यर्थतया वैयर्थ्यसमाधानापातात् । तस्मान्नेदमनुमानमुपपन्नं तदेतदाह **असंबद्धमेवेति** । तत्र बाधादेरपरिहार्यत्वादित्याशयः ।

यच्च घटध्वंसाजनकेत्यनुमानं तदपि न । अतीन्द्रियस्यापि दुरितादेः प्रायश्चित्तादिना ध्वंसस्यास्मदादितो जायमानत्वात्तत्रेश्वरज्ञानकल्पकाभावेनानुद्दिष्टघटादिध्वंसे च व्यभिचारेण प्रतियोगिप्रत्यक्षस्य ध्वंसाजनकत्वात् । अर्थान्तरासंभवाद्धटध्वंसाजनकेति पक्षविशेषणवैयर्थ्यम् । परोक्षज्ञानस्याप्यज्ञाननिवर्तकताया उपपादितत्वेन बाधप्रसक्तेरभावेन अपरोक्षविशेषणवैयर्थ्यं च । प्रागभावनिवर्तकत्वेनाप्युपपत्त्या अर्थान्तरता च । तस्य न जानामीत्यनुभवविषयत्वानुपपत्तेः परिहृतत्वात् । न च प्रमाणज्ञानस्य प्रागभावनिवृत्तिरूपतया न निवर्तकत्वम् । अज्ञानेऽपि तुल्यत्वात् । न चाज्ञाननिवृत्तिर्भावनिवृत्तित्वादतिरिक्तैवेति वाच्यम् । धर्मिकल्पनान्यायेन क्लृप्तप्रागभावनिवृत्तावेवातिरिक्तत्वकल्पनौचित्येन भावत्वविशेषणस्याप्रयोजकतयाऽनुपादेयत्वात् । न चानवस्थादि तत्प्रयोजकतया कल्पकम् । अक्लृप्ताज्ञानकल्पनापेक्षया क्लृप्तप्रागभावादिपरम्परासिद्धविषयत्वादिकल्पनोपपत्तेः । त्वदभिमताज्ञानस्यानादित्वेन ज्ञाननिवर्त्यत्वासंभवस्योक्ततया बाधश्च । भ्रमपरोक्षज्ञानयोरज्ञाननिवर्तकत्वेन हेतावपरोक्षप्रमाणपदवैयर्थ्याच्च । अनुभवविरोधस्योभयत्र तुल्यतया परोक्षज्ञानस्येवापरोक्षज्ञानस्याप्यज्ञाननिवर्तकत्वाभावेऽपि हेतोरुपपत्त्याऽप्रयोजकत्वं च । मूलाविद्यानुमाने च प्रकृत्युपादानकत्वेनोपपत्त्याऽर्थान्तरता । न च तत्र प्रमाणाभावः । चतुर्थपादे व्युत्पादयिष्यमाणत्वात् ।

यच्चानुमानं जडोपादानत्वमित्यादि तत्र जीवत्वादिकमादायार्थान्तरता । न च तस्यानाविद्यकत्वे न ज्ञाननिवर्त्यत्वमिति वाच्यम् । सत्यस्यापि ज्ञानेन निवृत्तेरुक्तत्वादप्रयोजकत्वं च । अज्ञानकल्पितत्वस्याद्याप्यसिद्ध्या दृष्टान्ते साध्यवैकल्यं च । जडोपादानत्वादिकं सादिमात्रवृत्ति जडवृत्तित्वाद्धटत्वादिवदित्याभाससाम्यं च । तदेतदाह **अनुमानं त्वसंबद्धमेवेति** । तुशब्दो विशेषार्थः । परोत्प्रेक्षितो अनुमानविशेषोऽप्यसंबद्ध एवेत्यर्थः ।

हेत्वनुपपत्त्या चानुमानस्याभासतामुपपादयति **अनुमानं त्विति** ।

प्रदीपप्रभात्वरूपस्य ज्ञानहेतुत्वरूपस्य वा तस्य दृष्टान्ते सत्त्वेऽपि पक्षेऽभावात् । ज्ञानत्वरूपस्य च तस्य पक्षे सत्त्वेऽपि दृष्टान्तेऽभावात् । असिद्धिसाधनवैकल्यप्राप्तिरित्याह **प्रकाशकत्वस्येति** । एकस्याभावेनेति वदतोऽयमाशयः । स्वविषयावरणनिवर्तकत्वाज्ञानान्धकारान्यतरनिवर्तकत्वादिरूपस्यानुगतत्वेऽपि साध्यावैशिष्ट्या-पादकतया न हेतुशरीरान्तःप्रविष्टप्रकाशकत्वशब्दार्थतया विवक्षा युक्ता । साध्यावैशिष्ट्यानापादकस्य ज्ञान-त्वादेश्च नानुगतत्वम् । एवं व्यवहारहेतुत्वमात्रस्येन्द्रियादौ व्यभिचारित्वेन तदर्थतयाऽविवक्षणीयत्वात् । साक्षाद्व्यवहारहेतुत्वस्य दृष्टान्ते परम्परया तस्य च पक्षेऽसत्त्वेनासिद्ध्यादितादवस्थ्यमिति । प्रकाशशब्दवाच्यत्वं प्रकाशकत्वमतो नोक्तदोष इत्यत आह **शब्देति** । **एकार्थत्वादिति** । उपलक्षणं चैतत् । अज्ञानाविषयकस्य तदभावव्यावर्तकत्वानुपपत्तेश्चेत्यपि द्रष्टव्यम् । आभाससाम्योक्तौ तद्दूषणानां बाधादीनामपि लाभात्किं विशिष्य तदुक्त्येत्यपि तुच्छताज्ञापनायाभाससाम्यमेव तत्त्वप्रदीपिकोक्तानुमानस्याह **तृतीयेति** । अयं घटः स्वप्राग-भावातिरिक्तानादिनिवर्तको घटत्वाद्घटान्तरवदित्यपि प्रयोगस्य सुलभत्वादिति भावः ।

**वा०र०**— नन्वत्र यथार्थज्ञानमात्रपक्षत्व इत्यादिना नृसिंहाश्रमेण शङ्कितप्रकारमेव न्यायामृतीयतदनुमान-दूषणानुवादरूपत्वात् एवेत्युक्तबाधाद्युपपादकतयाह **तथाहि अत्र यथार्थज्ञानमात्रस्येत्यादिना** । न्यायामृते जडावरकेत्याद्युक्तेरनात्मावरकेति वाक्ये जडावरकेति व्यवहृतम् । एवं तत्र तत्रानुवादो व्याख्यानतया युज्यत इति बोध्यम् । अज्ञाननिवर्तकत्वायोगादित्यत्र तद्विषयाज्ञानेति योज्यम् । **परमते जन्यज्ञानमात्रस्येति** । सविकल्पकाजन्यं चाक्षुषप्रमाणज्ञानमित्युक्ते ईश्वरीयसविकल्पकजन्यतया पक्षाप्रसिद्धिः । ईश्वरज्ञानवारणाय जन्यज्ञानाजन्येति विवक्षणेऽपीश्वरज्ञानजन्यनिर्विकल्पकरूपज्ञानजन्यतया पक्षाप्रसिद्धेरित्यतो विशेषणद्वयोपादानमित्यर्थः । एकेनापि तेन विनोद्देश्यासिद्धेरित्यन्तग्रन्थानन्तरं खण्डश उपयुक्तस्यैवानुवाद इति ज्ञेयम् । तत्तुच्छमित्यादिग्रन्थे दूषणव्याजेन कतिपयस्यानुवादो भविष्यति । कण्टकोद्धारकृतैतद्दूषणमपि मध्ये मध्ये अवलोक्यम् । सर्वं चेदं विशेषतो व्याख्येयमस्ति । न्यायामृतानुवादरूपनृसिंहाश्रमोक्त्यनुसारेणाह **प्रदीपप्रभात्वरूपस्येत्यादिना** । **तस्य** प्रकाशकत्वस्य ।

**स०व्र०**— **प्रकाशकत्वस्येति** । अत्र कश्चित् । प्रकाशशब्देन तज्जन्यव्यवहारलक्षणयाऽप्रकाशित-व्यवहारहेतुत्वं हेत्वर्थः । तच्चोभयत्रानुगतमिति नासिद्ध्यादि इत्याह तत्तुच्छम् । साक्षाद्धेतुत्वविवक्षायां ज्ञानस्यैव तथा व्यवहारहेतुत्वेन साधनवैकल्यात् । प्रयोजकत्वविवक्षायां तु चक्षुरादौ व्यभिचारादिति । **तृतीयानुमानं त्विति** । देवदत्तघटः देवदत्तघटाभावातिरिक्तानादेर्निवर्तकः । घटत्वात् । यज्ञदत्तघटवदिति अनुमानेन घटाभावातिरिक्तं किञ्चिदनादिभावरूपं घटनिवर्त्यमपि सिद्ध्येदित्यतिप्रसङ्गपराहतमित्यर्थः ।

**विठ्ठ०**— तथाच प्रयोगः सुप्त्यवस्थाज्ञानाभावसंपादिका सर्वेन्द्रियोपरमरूपावस्थात्वात् । मूर्छामरणवत् । अनुमानगम्या व्याप्तिः । **अनुमानं त्विति** । अप्रकाशितार्थप्रकाशकत्वमित्यर्थः । किमिदं प्रकाशकत्वं ज्ञानसहकारित्वं वा ज्ञानरूपत्वं वा । आद्ये असिद्धिः । द्वितीये साधनवैकल्यं दृष्टान्तस्येति । तदिदमाह **प्रकाशकत्वस्येति** ।

अनुमानान्तरं निराकरोति **अभावेति** । **तृतीयेति** । देवदत्तपटः देवदत्तघटप्रागभावातिरिक्तानादेर्निवर्तकः घटत्वात् यज्ञदत्तघटवदित्यनुमानेन घटाभावातिरिक्तं घटनिवर्त्यं किञ्चिदनादिभावरूपमपि सिद्ध्येदित्यतिप्रसङ्गपराहतमित्यर्थः ।

**चषकः— अनुमानं त्विति** । अत्रैवशब्देन बाधादेः स्पष्टतामाचष्ट इत्यभिधाय बाधादिकं प्रपञ्चितं प्रपञ्चकैः । **प्रकाशकत्वस्येति** । विषयीकारित्वरूपप्रकाशकत्वस्य पक्षवृत्तित्वेऽपि निदर्शनेऽभावाज्ज्ञानहेतुत्वरूपस्य च तस्य निदर्शनवृत्तित्वेऽपि पक्षावृत्तितयाऽसिद्धिसाधनवैकल्यप्रसङ्ग इति भावः । **तृतीयानुमानमिति** । नीलघटः नीलघटप्रागभावातिरिक्तानादिनिवर्तकः नीलघटत्वात्पीतघटवदित्यपि सुसाधत्वादिति भावः ।

**प्रदीपः— तृतीयेति** । घटोऽयमेतद्घटप्रागभावातिरिक्तनिवर्तको घटत्वात् घटान्तरवदित्यर्थः ।

अर्थापत्तिनिरासः—

**४७८ सु०— 'त्वदुक्तमर्थं न जानामी'ति व्यवहारस्तु ज्ञानाभावविषयोऽपि भविष्यति ॥ अध्यासकार्यानुपपत्तिस्तु नास्त्येव, ज्ञानस्यान्तःकरणोपादानतोपपत्तेः । सत्योपादानत्वे सत्यताप्रसङ्गस्त्विष्ट एव । न हि रजतवद् ज्ञानस्यापि बाधोऽस्ति । तथात्वे याथार्थ्यमपि स्यादिति चेन्न स्वरूपसतोऽपि विषयासत्त्वेन अयथार्थत्वोपपत्तेः । न हि स्वरूपसतो विषयसत्तयाऽपि भाव्यमिति नियामकमस्ति, साक्षिचैतन्ये व्यभिचारात् । अर्थस्तु रजतादिरसत्त्वात्कारणमेव नापेक्षते । ज्ञानाद्बन्धनिवृत्तिस्त्वसिद्धैवेत्युक्तम् । अतो नोक्तप्रमाणैर्भावरूपाज्ञानसिद्धिः ।**

**परि०— ज्ञानाभावविषयोऽपीति** । तत्रोक्तानुपपत्तिस्त्वयाऽपि समाधेया । अन्यथा त्वन्मतेऽपि ज्ञानाभावव्यवहारासिद्धिप्रसङ्गादिति भावः । **नास्त्येवेति** । कुत इत्यतस्तत्र किं भ्रान्तेरनुपपत्तिरुच्यते । उत रजतादिरूपार्थस्य वेति हृदि विकल्प्याद्यं निराह **ज्ञानस्येति** । परमतेनाह **साक्षिचैतन्य इति** । द्वितीयं निराह **अर्थस्त्विति** । श्रुतार्थापत्तिं च निराह **ज्ञानादिति** । **उक्तमिति** । 'इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत' इत्यत्रेति भावः । एतदपि सर्वं प्रपञ्चितमविद्यानुमानादिभङ्गेष्विति विस्तरस्तत्रैव ध्येयः ।

**गु०दी०— साक्षिचैतन्ये व्यभिचारात्** इत्यस्य साक्षिचैतन्यविषयरजतसुखादेः परमते मिथ्यात्वात्साक्षिणश्च सत्यत्वाद्व्यभिचार इत्यर्थः ।





**वं०प०—** किञ्च विशुद्धब्रह्मात्मनीत्युक्ताध्यासान्यथाऽनुपपत्तिरूपं भावरूपाज्ञानसाधकं प्रमाणमपाकरोति **अध्यासकार्येति** । अध्यासरूपकार्येत्यर्थः । **ज्ञानस्येति** । रजताध्यासस्येत्यर्थः । तथा च मिथ्याभूतमेव किञ्चिदुपादानमन्वेषणीयमित्युक्तमसदिति भावः । सत्योपादानकत्व इत्यादिनोक्तं दूषयति **सत्योपादानत्व इति** । सत्योपादानकत्व इत्यर्थः । **सत्यताप्रसङ्ग इति** । अध्यासरूपकार्यस्येत्यर्थः । अर्थज्ञानात्मकोभयविधाध्यासाङ्गी-कारात्सत्योपादानकत्वेन सत्यत्वं किं ज्ञानस्यापाद्यते उतार्थस्य रजतस्य । आद्ये इष्टापत्तिरित्याह **न हीति** । एतावन्तं कालं रजतज्ञानमासीत् । भ्रम आसीदित्यनुभवेन ज्ञानस्वरूपस्य सत्यत्वादिति भावः । **तथात्वे** ज्ञानस्वरूपस्यानध्यस्तत्वेन सत्यत्वे । ननु स्वरूपसत्त्वे विषयत्वं नियतमिति चेत्तत्राह **न हीति** । **साक्षीति** । साक्षिचैतन्यस्य सत्यत्वेऽपि तद्विषयस्य दुःखादेर्मिथ्यात्वादिति भावः । द्वितीये त्वापादकभूतं सत्योपादानकत्व-मेवासिद्धमसत्वादित्याह **अर्थस्त्विति** । **कारणमेवेति** । सत्योपादानकत्वं तु दूरापास्तमिति भावः । **इत्युक्तमिति** । ज्ञानजातत्प्रसादादेवमुच्यत इत्यङ्गीकारादिति भावः ।

**आनन्दः—** **तथात्व इति** । सत्यत्व इत्यर्थः । ननु यत्स्वरूपं तत्तद्विषयोऽपि सन्नित्यत आह **न हीति** ।

**कं०रा०—** **ज्ञानाभावेति** । त्वदुक्तमर्थं न जानामीति व्यवहारस्य ज्ञानाभावविषयत्वे बाधकाभावादिति भावः । ननु त्वदुक्तमर्थं न जानामीति व्यवहारस्य ज्ञानाभावविषयकस्य ज्ञानज्ञानाधीनज्ञानाभावज्ञानसाध्यत्वाज्ज्ञानज्ञानं तावदस्तीत्यङ्गीकर्तव्यम् । तच्च ज्ञानावच्छेदकार्थज्ञानं विनाऽनुपपन्नमिति ज्ञानावच्छेदकस्यार्थस्यापि ज्ञानमस्ती-त्येष्टव्यम् । एवं च त्वदुक्तार्थज्ञानाभावस्यैवायोगात्कथं तद्विषयको व्यवहार इति चेत् । भावरूपाज्ञानव्यवहारस्यापि विरोधनिरूपकज्ञानज्ञानाधीनभावरूपाज्ञानप्रतीतिसाध्यत्वाज्ज्ञानज्ञानं तावदस्तीत्यङ्गीकर्तव्यम् । तच्च ज्ञानाव-च्छेदकार्थज्ञानं विनाऽनुपपन्नमिति ज्ञानावच्छेदकार्थस्यापि ज्ञानमस्तीत्यङ्गीकार्यम् । एवं च त्वदुक्तार्थविषयक-भावरूपाज्ञानस्यैवायोगात्तद्विषयकोऽपि व्यवहारः कथमिति साम्यात् । ननु विरोधनिरूपकज्ञानावच्छेदकस्यार्थस्य ज्ञानं साक्षिरूपम् । तच्च न भावरूपाज्ञानं विरुणद्धीति तद्विषयको व्यवहारः संभवतीति चेत् । सममभावविषयव्यवहार-पक्षेऽपि । अवच्छेदकस्यार्थस्य ज्ञानं साक्षिरूपम् । तच्च न वृत्तिज्ञानाभावं विरुणद्धि । अतस्तद्विषयको व्यवहारः संभवतीति सुवचत्वात् । तस्मात्त्वयाऽप्यवच्छेदकस्यार्थस्य सामान्यतो ज्ञाने विशेषे भावरूपाज्ञानं ज्ञायते । अतस्तद्विषयकव्यवहारसंभव इति वाच्यम् । तत्समं ज्ञानाभावव्यवहारपक्षेऽपि । किं च त्वन्मते जडावरकाज्ञानाभावेन त्वदुक्तमर्थं न जानामीति व्यवहारस्य ज्ञानाभावविषयत्वावश्यंभावादुक्तव्यवहारान्यथाऽनुपपत्तिर्भावरूपाज्ञाने प्रमाण-मित्येतदत्यन्तायुक्तम् । न च जडे आवरणरूपातिशयाभावेऽपि विक्षेपरूपातिशयमादाय भावरूपाज्ञानविषयत्वस्य सत्त्वात्त्वदुक्तमर्थं न जानामीति व्यवहारस्य तद्विषयत्वसंभवेन ज्ञानाभावविषयत्वावश्यंभावो नेति वाच्यम् । अपरोक्षतो घटत्वेन ज्ञाते घटेऽयं घटो नेति वाक्याभासप्रयुक्तविक्षेपसद्भावेऽपि घटं न जानामीत्यज्ञानविषयत्वव्यवहाराभावेन विक्षेपमादाय भावरूपाज्ञानविषयत्वस्य वक्तुमशक्यत्वात् । न च जडे न जानामीति व्यवहारस्य तदवच्छिन्न-चैतन्यविषयतया जडावच्छिन्नचैतन्ये चावरणाज्ञानसद्भावाद्भावरूपाज्ञानविषयत्वं संभवतीति वाच्यम् । अवच्छेदक-





जडांशानावरणस्याज्ञानस्य जडावच्छिन्नचैतन्यावरणत्वायोगेन केवलचैतन्यावरणत्वस्यैव स्वीकारापातात् । न चेष्टापत्तिः । शुद्धात्मज्ञानात्प्रागनिवृत्तिप्रसङ्गेन त्वदुक्तार्थज्ञानेन तदज्ञानं निवृत्तमित्यनुभवविरोधात् । अपि च त्वदुक्तार्थज्ञानं मम नास्तीति ज्ञानाभावविषयकव्यवहारात्त्वदुक्तमर्थं न जानामीति व्यवहारस्य मात्रयाऽपि विषयकृतवैलक्षण्यं नानुभूयत इति तस्यापि ज्ञानाभावविषयत्वमेव वक्तुमुचितम् । तस्मात्साधूक्तं त्वदुक्तमर्थं न जानामीति व्यवहारस्य ज्ञानाभावविषयोऽपि भविष्यतीति । तथात्वे बाधाभावेन रजतज्ञानस्य सत्यत्वे साक्षिचैतन्य इति साक्षिचैतन्यस्वरूपस्य सत्यत्वेऽपि तद्विषयस्य सुखदुःखादेः परमते सत्त्वाभावादिति भावः । **ज्ञानादिति** । अज्ञानां ज्ञानदो विष्णुर्ज्ञानिनां मोक्षदश्च स इत्यादिवाक्यबलेन ज्ञानात्प्रसन्नस्य परमेश्वरस्यैव बन्धविध्वंसकत्वाज्ज्ञानाद्बन्धनिवृत्तिरसिद्धैवेत्युक्तम् । अतो न तदन्यथाऽनुपपत्तिरपि बन्धोपादानाज्ञाने प्रमाणमिति भावः ।

**श्रीनिधि०— ज्ञानाभावविषयो भविष्यतीति** । अन्यथा ज्ञानाभावस्य सर्वथा अव्यवहर्तव्यत्वेन स्वतः परतो वा प्रसक्तत्वेन तन्निरासप्रयासानुपपत्तिरिति द्रष्टव्यम् । **साक्षिचैतन्ये व्यभिचारादिति** । मिथ्याभूतसुखादिविषयकस्य साक्षिणः सत्त्वादिति भावः ।

**वा०चं०— त्वदुक्तमिति** । न च सति ज्ञाने कथं तदभावव्यवहार इति वाच्यम् । प्रत्यक्षस्य ज्ञानाभावविषयकत्वप्रतिपादकन्यायेनोक्तोत्तरत्वात् । अज्ञानेऽप्यस्य पर्यनुयोगस्य साम्याच्च । न चाज्ञानस्य साक्षिवेद्यत्वेन प्रमाणाबोध्यत्वान्नानुपपत्तिरित्युक्तमिति वाच्यम् । ज्ञानाभावस्यापि साक्षिवेद्यत्वोपगमेन परिहारसौलभ्यादित्याशयात् । अर्थज्ञानात्मकमध्यासं वदतो ज्ञानानुपपत्तिरभिमतार्थानुपपत्तिर्वा । नाद्य इत्याह **ज्ञानस्येति** । पराशयमुद्धाट्य निषेधति **न हीति** । अर्थोऽप्यधिष्ठानभूतात्मशुक्त्यादिर्न तवाप्यनुपपद्यमानतया अभिमतः । रजतादिस्तु कार्यमेव नेति द्वितीयं निराह **अर्थस्त्विति** । असतोऽपि प्रतीतिविषयत्वस्योपपादितत्वादिति भावः । न पूर्वार्थापत्तिवत्किञ्चेत्युक्तायां ज्ञानाद्बन्धनिवृत्तिश्रवणान्यथाऽनुपपत्तावन्यथोपपत्तिर्दोषः किन्त्वाक्षेपकस्याप्रमितत्वमेव दूरेऽन्यथोपपत्तिविचार इत्याशयेनाह **ज्ञानादिति** । **उक्तमिति** । 'बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत' इत्येतद्भाष्यव्याख्यावसर उक्तमित्यर्थः । ननु प्रत्यक्षव्यवहारयोर्निर्विषयकत्वासंभवात्तद्विषयेऽवश्यं वक्तव्ये विषयत्वेन त्वदुक्तमेवाज्ञानं मयोच्यत इत्याशङ्कां परिहरन्नुपसंहरति **अत इति** । यद्वोपक्रमानुसारेणोपसंहारेऽपि भावरूपेत्युक्तमिति ध्येयम् ।

**विठ्ठ०— ज्ञानाभावविषयोऽपीति** । तत्रोक्तानुपपत्तिस्तु त्वयापि समाधेया अन्यथा त्वन्मते ज्ञानाभावव्यवहारो न सिद्ध्येदिति भावः । कुतो नास्तीत्यतः ज्ञानार्थरूपाध्यासे भावरूपाज्ञानरूपोपादानं विना किं भ्रमरूपज्ञानस्यानुपपत्तिरुच्यते किंवा रजतरूपार्थस्येति विकल्पं मनसि निधायाद्यं दूषयति **ज्ञानस्येति** । **साक्षीति** । परमते साक्षिचैतन्यस्य सत्त्वेऽपि तद्विषयरजतस्यायथार्थत्वादिति भावः । द्वितीयं निराह **अर्थस्त्विति** । श्रुतार्थापत्तिमप्यपाकरोति **ज्ञानादिति** । **इत्युक्तम्** 'इत्युक्तेर्बन्धमिथ्यात्वमि'त्यत्र ।





विपक्षे (द्वैतिपक्षे) स्वभावाज्ञानवादस्य निर्दोषत्वात् बाधकाभावः—

**४७९ सु०—** किञ्च न वयं भावरूपाज्ञानस्य परिपन्थिनः; किं नाम परपक्षे तन्न संभवतीति ब्रूमः । नन्वङ्गीकृतं चेदज्ञानं तर्हि भवतोऽप्युक्तानुपपत्त्या शास्त्रवैयर्थ्यमापन्नमित्यत आह **स्वभावेति** ।

## अनु०— स्वभावाज्ञानवादस्य निर्दोषत्वान्न तद्भवेत् ।

**स्वश्चासौ भावश्चेति स्वभावो** जीवस्तदाश्रितं तदावरणं **चाज्ञानमिति वादः स्वभावाज्ञानवादः । तस्य, निर्दोषत्वात्** जडब्रह्माज्ञानवादोक्तदोषाभावात् **न तत्** शास्त्र-वैयर्थ्यमस्मन्मते **भवेत्** ।

**परि०—** उत्तरवाक्यमवतारयितुमाह **किञ्चेति** । न परिपन्थिन इत्युक्त्या प्रागुक्तप्रत्यक्षा-दिकमस्माकमपि साधकमेवेत्यपि सूचितम् । **स्वश्चासौ भावश्चेति** । स्व इति प्रत्यगर्थः । **भाव इति** । तज्ज्ञानरूप इत्यर्थः । भुक् शुद्धिचिन्तयोरिति कविकल्पद्रुमोक्त्या चिन्तार्थस्य भवतेर्णप्रत्यये रूपत्वात् । तदित्यनुवादः । शास्त्रवैयर्थ्यमिति व्याख्या ।

**वं०प०—** उत्तरवाक्यमवतर्तुमाह **किञ्चेति** । **उक्तानुपपत्त्येति** । आव्रियमाणाभावाद्युक्तानुपपत्त्येत्यर्थः ।

**आनन्दः—** ननु भावरूपाज्ञानस्य भवद्भिः स्वीकारात्तद्दूषणेऽपसिद्धान्त इत्यत आह **किञ्चेति** । **उक्तानुपपत्त्येति** । आश्रयाद्यनुपपत्तिरूपोक्तयुक्त्येत्यर्थः । **ननु स्वभावाज्ञानवादस्येति** मूले ज्ञानस्य जीवादि-स्वरूपत्वमुच्यत इति प्रतिभाति । तदयुक्तम् । तथा सति तस्य निवृत्तिः न स्यात् । अपसिद्धान्तापाताच्च । तच्छब्दपरामृष्टव्याप्रतीतेश्चेत्यतो व्याचष्टे **स्वश्चासाविति** ।

**श्रीनिधि०— किञ्च न वयमिति** । स्वपक्षसाधनमपि परपक्षदूषणमिति भावेन किञ्चेत्युक्तम् । **स्वश्चासौ भावश्चेति स्वभावो जीव इति** । जीवाख्यः पदार्थ इत्यर्थः । स्वतन्त्रो भावः परमात्मेत्यत्रापि भावशब्दः पदार्थवाची ।

**वा०चं०—** ननु स्वभावाज्ञानवादस्येत्यादिना स्वपक्षेऽनुपपत्तिपरिहारोऽसङ्गतः । आश्रयाद्यनुपपत्त्या तत्साधकप्रमाणानुपपत्त्याऽज्ञानस्वरूपस्यैव निपुणतरं निरस्ततया तदङ्गीकारप्रसक्तेरेवाभावादित्यतोऽतोऽधि-कारिविषयेत्यादिना परं प्रति वक्ष्यमाणस्याज्ञानाभावे विषयाद्यभावाच्छास्त्रवैयर्थ्यस्याज्ञानानभ्युपगमे सिद्धान्तेऽपि प्रसक्त्याऽज्ञानस्यावश्यमङ्गीकार्यत्वात्तदनुपपत्तिश्च परपक्ष एव न स्वपक्ष इत्याशयेन स्वपक्षे तदनुपपत्तिपरिहाराय





प्रवृत्तस्योत्तरवाक्यस्य नासङ्गतिरित्याशयेनाह **किञ्चेति** । निर्विशेष इत्यादिनोक्तमाश्रयाद्यनुपपत्तिशास्त्रवैयर्थ्यरूपं बाधकं स्वपक्षे नास्ति चेत्यर्थः । ननु भावरूपमज्ञानं निषेधतस्तव कथम्, बाधकाप्रसक्तिः इत्यत उक्तं **न वयमिति** । तर्हि कथं निषेधनमित्याशङ्कते **किं नामेति** । एवं मूलाभिमतं प्रसञ्जकमुक्त्वा साक्षान्मूलव्यावर्त्यं कथयन्मूलमवतारयति **नन्विति** । नन्वज्ञानानभ्युपगमेऽपि वक्ष्यमाणरीत्या शास्त्रवैयर्थ्यप्राप्तेः कथमङ्गीकृतं चेदित्युक्तमित्यत आश्रयाद्यनुपपत्तिप्रयुक्ताज्ञानासंभवनिमित्तशास्त्रवैयर्थ्यं तदङ्गीकारपक्ष एवेत्याशयेनोक्तम् **उक्तानुपपत्त्येति** । यद्वा अज्ञानानभ्युपगमे शास्त्रवैयर्थ्यप्राप्तावपि न तदङ्गीकारे तत्प्राप्तिरित्यत उक्तम् **उक्तानुपपत्त्येति** । भवतोऽप्युक्तदोषापत्तिरित्येव वक्तव्ये **न तद्वदेदिति** मूलानुसारेण शास्त्रवैयर्थ्यमिति फलकथनमिति द्रष्टव्यम् । यद्यपि ज्ञानाभावाङ्गीकारेणापि कथञ्चिद्विषयादि व्युत्पादयितुं शक्यम् । तथाऽपि स्पष्टागमेन संसाराद्यनुपपत्त्या लिङ्गेन च सिद्धे भावरूपाज्ञाने आश्रयाद्यनुपपत्तेरवश्यं परिहरणीयत्वादयं प्रयत्न इति द्रष्टव्यम् । जीवाश्रितं जीवं प्रत्यावरणमिति पक्षाभ्युपगमे पक्षान्तरोक्तदोषोऽनङ्गीकारपराहत इत्याशयेन मूलं पक्षविशेषपरिग्रहपरतया व्याचष्टे **स्वश्चासाविति** । नन्वात्मनि स्वशब्दो नपुंसक एव । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इत्यमरकोशे तस्य नपुंसकत्वाभिधानात् । कथं तर्हि स्वे स्वा इत्यादि । तत्र स्वशब्दस्यात्मीयार्थत्वात् । अत एव तत्रात्मीया इत्यर्थ इत्येवाभियुक्तानां व्याख्यानम् । तत्कथं स्वश्चासौ भावश्चेति पुल्लिङ्गप्रयोग इति चेन्न । आत्मन्यपि स्वशब्दस्य पुंस्त्वात् । कथमन्यथा स्वे स्वा इत्यादिपुल्लिङ्गप्रयोगः । न चोक्तरीत्या तस्य सावकाशत्वम् । तथा सति विभाषा जसीति प्रकरणे स्वमात्मीये इत्येव वक्तव्यतया गुरुनिर्देशं कुर्वतः सूत्रकारस्याचातुर्यप्रसङ्गात् । तथा निर्देशं कुर्वतः सूत्रकारस्यात्मन्यपि स्वशब्दस्य पुंस्त्वाभिप्रायसिद्धेः । न चैवमुदाहृतामरसिंहोक्तिविरोधः । तत्राप्यात्मनीत्यस्य स्वो ज्ञाताविति पूर्वान्वयित्वेन स्वमित्यस्य च त्रिष्वित्युत्तरान्वयित्वेन योजनासंभवेनात्मनि स्वशब्दस्य नपुंसकत्वे तस्यानुपष्टम्भकत्वात् । 'द्यौः स्वर्गनभसोः स्वो ज्ञात्यात्मनोः स्वं निजे घने' इति हेमचन्द्रेण 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धन' इति मेदिनीकारेण चात्मनि स्वशब्दस्य स्पष्टमेव पुंस्त्वोक्तेश्च । ततश्चात्मार्थकस्यापि स्वशब्दस्य पुंस्त्वाद्युक्तं तथा विग्रहप्रदर्शनमिति ध्येयम् ।

(स्वमज्ञातिधनाख्यायाम् । ज्ञातिधनान्यवाचिनः स्वशब्दस्य प्राप्ता संज्ञा जसि वा स्यात् । स्वे स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन इत्यमरः । अत्रात्मनीति पूर्वान्वयि । स्वमित्युत्तरान्वयि । स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धन इति मेदिनी । ज्ञातिधनवाचिनस्तु स्वाः । ज्ञातयोऽर्था वा । आत्मात्मीयज्ञातिधनवाची स्वशब्दः तत्र ज्ञानिधनयोः पर्युदासादात्मीयौ परिशिष्टौ इत्याशयेन व्याचष्टे । आत्मीया इत्यर्थ आत्मन इति वेति । विभाषा जसीति प्रकरणे स्वमात्मीय इत्येव वक्तव्ये गुरुनिर्देशं कुर्वतः सूत्रकारस्यैवात्मवाचिस्वशब्दस्य पुंस्त्वे प्रमाणत्वादिति ज्ञेयम् । ज्ञातिधनवाचिनस्त्विति । ताच्छील्यणिनिना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामताऽस्त्येवेति ध्वनयति । एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम् ।)

यद्यप्यत्र स्वभावाज्ञानवाद इत्येव पक्षपरिग्रहायालं पक्षविशेषपरिग्रहेणैव पक्षान्तरप्राप्तदूषणाप्रसरसूचनसंभवात्परिगृहीतपक्षदोषपरिहारार्थकयोजनायां तत्सार्थक्यवत्पक्षपरिग्रहमात्रयोजनायां तत्सार्थक्यादर्शनादिति भाति ।





तथाऽप्येकस्य दूषणस्य पक्षद्वयेऽपि संभवात्पक्षान्तरानभ्युपगमेऽप्यभ्युपगतपक्षे तद्दूषणप्रसरशङ्कानिरासार्थत्वात् । जीवपक्षेऽपि जडपक्षोक्तान्योन्याश्रयातिदेशेन तन्निरासप्रतिज्ञार्थत्वाद्वा तन्मूलस्य न वैयर्थ्यमित्याशयोऽपि तस्य जडब्रह्माज्ञानवादोक्तदोषाभावादित्यपि द्रष्टव्यः । एवमुत्तरत्रापीति ध्येयम् । यद्यपि स्वो ज्ञातावात्मनि स्वं त्रिष्वित्यभिधाने आत्मपर्यायस्वशब्दस्य नपुंसकत्वमुक्तम् । तथाऽप्यात्मशब्दपर्यायस्वशब्दस्य 'स्वातन्त्र्यात्स्व इति प्रोक्त आत्माऽयं चातत्त्वत' इत्यभिधानतुल्ये परमोपनिषद्वाक्ये परमात्मनि पुल्लिङ्गप्रयोगादात्मपर्यायः पुल्लिङ्गोऽप्यस्ति, स्व इत्यभिधानं तु प्रयोगाद्यज्ञानमूलमित्याशयेन स्व इत्युक्तम् । अनेनैवाशयेन नित्योपाध्या स्वरूपयेति वाक्यव्याख्यावसरेऽपि स्व आत्मेत्युक्तमिति द्रष्टव्यम् ।

**वा०र०— अज्ञानस्यावश्यमङ्गीकार्यत्वादिति** । अनेन भावरूपाज्ञानवादित्वान्न तत्परिपन्थिन इति मूलोपपादनं च कृतं भवति । **अज्ञानमङ्गीकार्यमिति** । सिद्धं कृत्वेत्यर्थः । **नास्ति चेत्यर्थ इति** । किञ्चेति प्रतिज्ञारूपनिपातसमुदायस्यार्थ इत्यर्थः । **प्रसञ्जकमिति** । अज्ञानाङ्गीकाररूपं प्रसञ्जकमित्यर्थः । तदङ्गीकारासिद्धौ तदाश्रयणेन भवतोऽप्युक्तदोषः स्यादित्येवंरूपाया भाष्यव्यावर्त्यशङ्काया अनुत्थानादिति भावः । **वक्ष्यमाणरीत्येति** । ततश्चाज्ञानाङ्गीकारनिमित्तेन शास्त्रवैयर्थ्योद्भावनायोगः । परं प्रति प्रकारान्तरेण शास्त्रवैयर्थ्यस्य वक्ष्यमाणत्वात् तन्न्यायेन तेन सिद्धान्तिनं प्रति तद्वैयर्थ्यशङ्कायाः कर्तुं शक्यत्वादित्यर्थः । **तदङ्गीकारपक्ष एवेति** । नात्र प्रकारान्तरेण शास्त्रवैयर्थ्यापादनं शङ्कितुरभिप्रेतम् । अपितु आश्रयाद्यनुपपत्त्याज्ञानासंभवप्रतिपादनपुरःसरं तदभावेन शास्त्रवैयर्थ्ये मायावादिनं प्रत्युक्ते सति परोऽपि सिद्धान्तिनं प्रति भवताऽप्यज्ञानमङ्गीकृतमस्ति । तत्र च मां प्रति तदनुपपत्ति-व्युत्पादनप्रकारस्य भवन्तं प्रत्यप्यविशिष्टत्वाद्भवतोऽप्यज्ञानाङ्गीकारायोगेऽज्ञानाधीनविषयाद्यभावेन शास्त्रवैयर्थ्यं स्यादिति शङ्कितुरभिप्रेतम् । सा च शङ्काऽज्ञानाङ्गीकारप्रयुक्तैवेत्यत उक्तानुपपत्तिप्रवृत्तिसंभवार्थमङ्गीकृतं चेदिति सिद्धान्तिनोऽज्ञानाङ्गीकारो मूलीकृत इत्यर्थः । न भावरूपेत्याद्युक्त्यनन्तरमज्ञानस्यायोगेन तदभावे शास्त्रवैयर्थ्यमिति प्रतिपादनं मूलेऽभिप्रेतम् । तत्र शङ्का भवताऽप्यज्ञानाङ्गीकाराच्छास्त्रवैयर्थ्यापत्तिः । न चाज्ञानाभावे तद्वैयर्थ्यप्राप्तावपि तदङ्गीकारे कुतस्तत्प्राप्तिरिति वाच्यम् । अङ्गीकारेऽपि मां प्रत्युद्भाविताश्रयाद्यनुपपत्त्या तदङ्गीकारायोगस्यैव प्रसङ्गेनाज्ञानाभाव एव पर्यवसानादिति प्रकारान्तरेणोक्तानुपपत्त्येत्येतद्योजयतीति । **यद्वेति** । **इत्येव वक्तव्य इति** । शास्त्रवैयर्थ्यपर्यन्तगमनं कुतः कृतमित्याशयः । **इति मूलेति** । तत्रत्यतच्छब्देन शास्त्रवैयर्थ्यपरामर्शादिति भावः । **ज्ञानाभावाङ्गीकारेणापीति** । तद्रूपाज्ञानस्यैवाज्ञातविषयसंपादकत्वाज्ज्ञाने उत्पन्ने तदभावाभावरूपप्रयोजनस्या-प्युपपत्तिरित्येवं भावरूपमज्ञानं विनैव ज्ञानाभावेनापि विषयादिव्युत्पादयितुं शक्यमित्यर्थः । तथाच भावरूपाज्ञानसाधकबाधकभावाभावव्युत्पादनानर्थक्यमिति भावः । **स्पष्टेति** । तम आसीत्; मायां तु प्रकृति-मित्यादिरूपेति योज्यम् । **संसारेति** । अनाद्यविद्याया एव संसारमूलत्वादिति भावः । अनुपपत्त्याख्यलिङ्गेनेति सामानाधिकरण्यम् । **सिद्ध इति** । अतस्तदनङ्गीकारायोगाद् ज्ञानाभावेनान्यथासिद्धिव्युत्पादनं न कार्यमिति भावः । आश्रयाद्यनुपपत्तिस्तु परिहरणीयैव । न तु तद्भयादज्ञानं भावरूपं त्याज्यमित्याह **अवश्यमिति** । **जीवं प्रत्यावरण-मिति** । जीवस्य स्वपरग्रहणप्रतिबन्धकमित्यर्थः । **पक्षविशेषेति** । स्वभावेत्यनेन तदप्रतीतिरिति भावः ।





स्वश्चासावितीत्यनन्तरं नन्वात्मनि स्वशब्दम् इत्यादिग्रन्थः पर्णान्तरे शोधितोऽस्ति स ग्रन्थः यद्यपि स्वोज्ञाता-वित्येतद्ग्रन्थस्थले ज्ञेयः । एकवाक्यताप्रकारं तु तद्व्याख्यावसरे प्रदर्शयिष्यामः । **इत्येव पक्षेति** । स्वभावाज्ञानवादे न तद्भवेदित्येतावतैव स्वाभिमतपक्षपरिग्रहसिद्धेः निर्दोषत्वादित्यधिकम् । जीवाश्रितमज्ञानमिति स्वीकृते न शास्त्र-वैयर्थ्यापत्तिरित्येवं पक्षपरिग्रहकाले परिगृहीते तत्पक्षे प्राप्तदोषपरिहारस्य पश्चात्कर्तव्यस्यासङ्गतत्वात् । स्वभावेति भाष्यस्य च दोषपरिहारार्थकत्वेन योजनां परित्यज्य पक्षपरिग्रहमात्रपरतयेह प्रथमतो योजनाकरणादित्यर्थः । परिगृहीतपक्षातिरिक्तपक्षेषु प्राप्तो दोष एतत्पक्षे नास्तीति प्रतिपादनार्थं पक्षपरिग्रहकाल एव निर्दोषत्वादित्युक्तमिति न तस्य वैयर्थ्यमित्याशङ्कां निराह **पक्षविशेषपरिग्रहेणैवेति** । **पक्षदोषपरिहारेति** । यद्वा स्वयमेव भवतीत्यादि योजनायामित्यर्थः । **तत्सार्थक्यवदिति** । इत्येवालमित्यत्रैवकारेण त्वार्थतयोक्तनिर्दोषत्वादित्यस्य बुद्धिस्थतया तदित्यनेन परामर्शोपपत्तिः । एवमुत्तरत्रापि । **तद्दूषणेति** । अनङ्गीकृतपक्षान्तरसाधारणदूषणेत्यर्थः । एवमेकस्य दोषोऽपरस्यापि संभवतीति संभवमाश्रित्य निर्दोषत्वादित्येतत्सार्थकमिति निरूपितम् । इदानीं वस्तुतः प्राग्जीवं प्रतिबध्नातीत्येतत्पक्षनिरासाय जडपक्षोक्तान्योन्याश्रयस्यातिदेशकरणादनभ्युपेतपक्षीयदोषस्याभ्युपगमपक्षेऽपि प्रसरावश्यंभावात्तन्निरासाय निर्दोषत्वादिति वाच्यमेवेत्याह **जीवपक्षेऽपीति** । अतिदेशेन परं प्रत्यतिदेशकरणा-दित्यर्थः । **तन्निरासेति** । स्वपक्ष इति योज्यम् । मूले निर्दोषत्वादित्यनूद्य जडजीवेति व्याख्यातम् । तत्कथम् । पक्षपरिग्रहमात्रेणैव पक्षान्तरोक्तदोषाणामप्रकाशस्वरूपत्वेनावरणकृत्याद्यभावरूपाणामभावलाभे सति तदुद्धारस्य अकर्तव्यत्वात् । न च जीवपक्षोक्तदोषस्याप्युद्धारार्थं तदिति वाच्यम् । पक्षपरिग्रहकाले तदनवकाशादिति न शङ्कनीयम् । जीवपक्ष एव ये दोषा अतिदिष्टास्तत्परिहारस्याप्यावश्यकतया तत्सूचनाय निर्दोषत्वस्य पक्षपरिग्रहकालेऽप्यवश्यं वक्तव्यत्वात् । न च तर्ह्युत्तरयोजनावैयर्थ्यम् । अत्र तत्परिहारप्रतिज्ञामात्रकरणादुत्तरत्र च तदुपपादनादिति समुदायार्थः । उत्तरत्रापीति ध्येयमित्यनन्तरं यद्यपि स्वोज्ञातावात्मनीत्यादिरिति द्रष्टव्यमित्यतः पांक्तः पाठो दृश्यते । नन्वात्मनि स्वशब्दो नपुंसक एवेत्यादिरिति ध्येयमित्यन्तोऽपिपाठः स्वश्चासावितीत्यनन्तरं शोधितो दृश्यते । तद्ग्रन्थद्वयमाकाङ्क्षाक्रमेणैकप्रमेयतया योज्यमित्याज्ञप्तोऽपि शिष्यः स्वस्य बुध्यनारोहान्न तथा कृतवान् । नन्वात्मनीत्यादिशोधपत्रग्रन्थं च सङ्गतिबुध्या स्वश्चासावितीत्यनन्तरमेव शोधतया निक्षिप्तवान् । अतो गुरुपादाभिप्रायानुसारेण ग्रन्थद्वयमप्याकाङ्क्षाक्रमेणैकीकृत्यैक एव पाठः यद्यपीति पांक्तस्थल एवास्माभिर्निरपेक्षतया दर्शितोऽस्ति । स तत्र विद्वद्भिर्ग्रन्थमर्यादावेदितृभिस्तत्र निक्षेप्य इति प्रार्थ्यते । तथाहि निष्कृष्टः तत्पाठप्रकारः । यद्यप्यात्मशब्दपर्यायः स्वशब्दो नपुंसक एव । स्वोज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धन इत्यमरकोशे स्वशब्दस्य तथात्वाभिधानात् । कथं तर्हि स्वे स्वा इत्यादि । तत्र स्वशब्दस्यात्मीयार्थत्वात् । अत एवात्मीया इत्यर्थ इत्येवाभियुक्तानां व्याख्यानम् । तथा च स्वश्चासौ भावश्चेति पुल्लिङ्गप्रयोगायोग इत्याभाति । तथापि स्वे स्वा इत्यादिपुल्लिङ्गप्रयोगादेरात्मन्यपि स्वशब्दस्य पुल्लिङ्गत्वमेव । न चोक्तरीत्या तस्य सावकाशत्वम् । तथा सति विभाषा जसीति प्रकरणे स्वमात्मीय इत्येव वक्तव्यतया गुरुनिर्देशं कुर्वतः सूत्रकारस्याचातुर्यप्रसङ्गात् । तथा निर्देशं कुर्वतः सूत्रकारस्यात्मन्यपि स्वशब्दस्य पुंस्त्वाभिप्रायसिद्धेः । न चैवमुदाहृतामरसिंहोक्तिविरोधः । आत्मशब्दपर्यायस्वशब्दस्य स्वातन्त्र्यात्स्व इति प्रोक्त आत्मायं चाततत्त्वत इत्यभिधानतुल्ये परमोपनिषद्वाक्ये परमात्मनि पुल्लिङ्गप्रयोगे-





णात्मशब्दपर्यायस्य तस्य पुल्लिङ्गतास्थित्या स्वोज्ञातावित्यभिधानस्य प्रयोगाज्ञानमूलकतया तद्विरोधस्याकिञ्चित्करत्वात् । वस्तुतस्तु तत्राप्यात्मनीत्यस्य स्वोज्ञातावित्ति पूर्वान्वयित्वेन स्वमित्यस्य च त्रिष्वित्युत्तरान्वयित्वेन योजनासंभवेन तस्यात्मनि नपुंसकताभिधायकत्वाप्रास्त्या तद्विरोधाभावात् । द्यौः स्वर्गनभसोः स्वोज्ञात्यात्मनोः स्वं निजे धन इति हेमचन्द्रेण स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धन इति मेदिनीकारेण चात्मनि स्वशब्दस्य पुंस्त्वोक्तेश्च । तस्माद्युक्तं स्व इति पुलिङ्गेन विग्रहप्रदर्शनम् । अनेनैवाशयेन नित्योपाध्या स्वरूपयेति वाक्यव्याख्यावसरेऽपि स्वआत्मेत्युक्तमिति द्रष्टव्यमिति । तत्र **स्वोज्ञातावित्ति** । ज्ञातौ वाच्ये स्वः स्वशब्दः पुल्लिङ्गो भवति । आत्मनि वाच्ये स्वं स्वशब्दः नपुंसकः । आत्मीये वाच्ये स्वशब्दः लिङ्गत्रयोपेतः । धने वाच्ये स्वशब्दः अस्त्रियां स्त्रीलिङ्गरहितः । पुंनपुंसकलिङ्गसहित इत्यर्थः । **स्वे स्वा इत्यादीति** । स्वमज्ञातिधनाख्यायामित्यनेन ज्ञातिधनान्यवाचिस्वशब्दस्य जसि सर्वनामसंज्ञाया वैकल्पिकत्वविधानेन स्वे स्वा इत्येवं प्रयोगद्वयस्य साधुतावर्णनात् ज्ञातिधनान्यात्मरूपार्थवाचिनोऽपि स्वशब्दस्य नपुंसकत्वे स्वे स्वा इति पुल्लिङ्गप्रयोगप्रदर्शनायोग इत्यर्थः । न तत्र स्वशब्दो ज्ञातिधनान्यात्मवाची । येनात्मनि तद्बलेन पुल्लिङ्गत्वं सिध्येत् । अपि तु उक्तान्यात्मीयवाची । तथा च स्वे स्वा इत्येतत्प्रयोगेणात्मीये वाच्ये स्वशब्दस्य पुल्लिङ्गतासिद्धावपि नात्मनि वाच्ये तत्सिद्धिरित्याह **तत्र स्वशब्दस्येति** । ननु ज्ञातिधनात्मात्मीयरूपाश्चत्वारो हि स्वशब्दार्थाः । तेषु ज्ञातिधनयोः पर्युदासे आत्मीयस्येवात्मनोऽपि प्रसक्तिरस्त्येवेति कथमात्मीयमात्रार्थकत्वेनान्यथासिद्धिरित्यतोऽभियुक्तव्याख्यानमेवाविशेषनिरासेनात्मीयमात्रग्रहणे हेतुरित्याह **अत एवेति** । **विभाषा जसीति प्रकरण इति** । स्वमज्ञातीत्यत्रानुवृत्तिविषयं सूचयितुं विभाषेति प्रकरणोदाहरणम् । ज्ञातिधनान्येत्युक्तावात्मनः प्रसङ्गेऽपि तत्परित्यागेनात्मीयमात्रग्रहणे स्वमात्मीय इत्येव प्रयोगेण विवक्षितार्थलाभे सति आत्मसाधारण्येन तथा अज्ञातीत्यादिगुरुप्रयोगेण च कृत्याभावेन सूत्रकारस्याचातुर्यं स्यात् । करोति च सूत्रकारस्तथाप्रयोगं तेन जानीमो ज्ञातिधनान्ययोरात्मात्मीययोरुभयोरपि स्वशब्दे जसि सर्वनामसंज्ञाविकल्पोऽभिप्रेतः सूत्रकारस्येति । तथा चात्मनि स्वशब्दस्य सिद्धं पुंस्त्वम् । अत एवात्मीया आत्मान इति वेति अभियुक्तव्याख्यानमिति समुदायार्थः । **ज्ञातावित्ति पूर्वेति** । अत एव मेदिनीकारवचने ज्ञातावात्मनीत्युक्तमिति भावः । **नित्योपाध्येति** । अनाशिनोऽप्रमेयस्येत्येतद्गीतावाक्यव्याख्यानावसरे भाष्ये प्रतिपत्तौ विमोक्षस्य नित्योपाध्या स्वरूपयेति प्रमाणमुदाहृतम् । तट्टीकायां स्व आत्मेति पुल्लिङ्गप्रयोगः कृतस्तत्रापि पुल्लिङ्गसमर्थनोपायो ग्रन्थकारस्यायमेवाभिप्रेत इत्यर्थः । उपलक्षणमेतत् । स्वभावोऽध्यात्ममित्यष्टमसंबन्धिटीकादावपि जीवानां स्व.................इत्युक्तस्याप्ययमभिप्राय इत्यपि ज्ञेयम् । मूलं व्याचष्ट इत्यनन्तरं यद्वोक्तेत्यवतारान्तरमुक्त्वा तथा स्वयमेवेतीति प्रतीकोपादानं कृतम् । तेन मूलं व्याचष्ट इत्येतद्द्वयस्य बहुक्रमत्वादेकेनैव प्रतीकोपादानेन पूर्तिरिति सूचितम् ।

**विट्ठ०**— ननु भवत्पक्षे भावरूपाज्ञानमङ्गीक्रियते न वा ? नेति पक्षे अज्ञानाभावेन शास्त्रस्य विषयादिशून्यता स्यात् । अङ्गीकारे तन्निराकरणानुपपत्तिरित्यत आह **किञ्च न वयमिति** । स्वपक्षसाधनेनापि तद्विरुद्धप्रमेयप्रतिक्षेपस्य लाभेन परपक्षदूषणमपि सेत्स्यतीत्याशयेन किञ्चेत्युक्तम् । **स्वश्चासौ भावश्चेति** । भावा जीवाः समुद्दिष्टा इत्युक्तेः भुक्





शुद्धिचिन्तयोरित्युक्तेर्भावशब्दो ज्ञानरूप इत्यर्थकः स्वपदात्प्रत्यगर्थकः। तथाच प्रत्यक्षज्ञानरूपो जीव इति लभ्यत इति भावः।

**प्रदीपः**— ननु मायाऽविद्ययोः स्वाश्रयपरव्यामोहनरूपत्वेन भिन्नत्वात्कथमज्ञानस्य मायात्वेनोपसंहारः इत्यत आह **अज्ञानमिति**। व्यापारभेदमात्रमेतन्न वस्तुभेद इति प्रतिपादितमित्यर्थः।

**४८० सु०— तथा स्वयमेव भवत्यस्तीति स्वभावो नाज्ञानकल्पित इति यावत्। तदज्ञानवादस्योक्तेतरेतराश्रयदोषविकलत्वात् न तद्भवेत्।**

**तथा स्वः स्वतन्त्रो भावः परमात्मा, स्वस्य भावो धर्मः पारतन्त्र्यादिर्वा स्वभावस्तद्विषयमज्ञानं जीवस्येति वादः स्वभावाज्ञानवादः तस्य स्वप्रकाशे स्वविषयाज्ञानासंभवदोषविधुरत्वान्न तद्भवेत्।**

**तथा स्वभावभूतमेव अज्ञानं न मिथ्येति वादस्य अनवस्थादिदोषरहितत्वान्न तद्भवेत्।**

**तथा स्वभावेन स्वतन्त्रेण परमेश्वरेण अज्ञानं जीवस्येति वादस्य स्वप्रकाशस्वरूपाभिन्नधर्मविषयमपि अज्ञानं जीवे न युक्तमिति दोषहीनत्वान्न तद्भवेत्।**

**वं०प०**— **अस्तीति**। स्वभाव इत्यनन्तरं जीव इति शेषः। स्वयमेवास्तीत्यस्य तात्पर्यं **नाज्ञानकल्पित इति**। **तद्विषयकमज्ञानमिति**। परमाच्छादकस्वगुणाच्छादकमायासंज्ञामित्यर्थः।

**आनन्दः**— नन्वज्ञानस्य जीवाश्रितत्वे जीवसिद्धावज्ञानसिद्धिः तत्सिद्धौ तत्सिद्धिरित्यन्योन्याश्रय इत्यत्राह **तथा स्वयमेवेति**। तथापि जीवस्य प्रकाशिकत्वात्कथं प्रकाशमाने अज्ञानमित्यत्राह **तथेति**। तथापि स्वप्रकाशजीवस्वरूपाभिन्नपारतन्त्र्यादौ कथमज्ञानमित्यत आह **तथेति**।

**वा०चं०**— माऽस्तु पक्षान्तरोक्ताऽनुपपत्तिः जीवाश्रितत्वतदावरणत्वपक्षोक्तानुपपत्तिस्तु स्यादेवेत्यतः तत्पक्षोक्तदोषपरिहारसमर्पकतयाऽपि मूलं व्याचष्टे। यद्वोक्तप्रतिज्ञायां हेतुसमर्पकतयाऽपि मूलं व्याचष्टे **तथा स्वयमेवेति**। अज्ञानकल्पितत्वाभावलाभायाह **अस्तीतीति**। जीवं प्रत्यावरणमिति पक्षेऽतिदेशेन जीवाश्रितत्वपक्षे च भेदोऽपि भ्रमजो यदीत्युत्तरत्र स्पष्टम्। अत्राप्युक्तन्यायेतरेतराश्रय उक्तप्राय इत्याशयेनोक्तम् **उक्तेति**। विषयविशेषपक्षयोः परिग्रहेण पक्षान्तरोक्तदोषोऽनङ्गीकारपराहत इत्याशयेन विषयविशेषपक्षपरिग्रहपरतया मूलं व्याचष्टे **तथा स्व इति**। अत्राभिधानमुदाहृतवाक्यमेव। ब्रह्म प्रति ब्रह्मस्वरूपमावृतमिति पक्षे पूर्वोक्तः स्वप्रकाशे स्वविषयाज्ञानासंभवरूपो दोषो जीवं प्रति ब्रह्म स्वधर्माश्चावृता इति पक्षे न प्रसरतीत्यर्थः। अज्ञानमिथ्यात्व-





पक्षोक्तदोषपरिहारसमर्पकतयाऽपि मूलं व्याचष्टे **तथा स्वभावेति**। अत्र चानवस्थादीत्यतः पूर्वमुक्तेत्यध्याहार्यम्। तथा पाठे तु नानुपपत्तिरिति ज्ञेयम्। विषयविशेषपरिग्रहेणं पक्षान्तरप्राप्तदूषणाभावेऽपि तत्र प्राप्तदूषणापरिहार एवेत्यतस्तत्परिहारसमर्पकतयाऽपि मूलं व्याचष्टे **तथा स्वभावेनेति**।

**वा०र०— जीवं प्रत्यावरणमिति पक्षेऽतिदेशेनेति**। इतरेतराश्रये उक्तप्राय इति वक्ष्यमाणेनान्वयः। वक्ष्यति चैतेन जीवं प्रतिबध्नातीत्यादि। एवं स्पष्टमित्यस्योक्तप्राय इत्यत्रोक्त इत्येव बुध्या विविक्तेन संबन्धः। उत्तरत्रेत्यस्य प्रकृत्यधिकरण इत्यर्थः। **उक्तेतीति**। उक्तेतरेतरेति मूल इतरेतराश्रयत्वस्योक्तत्वोक्तेस्त्रिधोपपत्ति-रित्युक्तमनेन स्वभावेन स्वतन्त्रेणेति मूले स्वतन्त्रेणेत्यतःपरं भावेनेति सिद्धत्वान्नोक्तम्। स्वः स्वतन्त्रो भाव इति प्रागभिधानात्।

**विठ्ठ०— तदज्ञानवादस्येति**। स्वतस्सिद्धजीवाज्ञानवादस्येत्यर्थः। **उक्तेतरेतराश्रय इति**। अज्ञानसिद्धौ तदावृतजीवसिद्धिः। तत्सिद्धावेव तदावरकत्वेन वाश्रितत्वे नाज्ञानसिद्धिरिति। अत एव जीवं प्रतिबध्नात्यविद्येति द्वितीयो निरस्त इत्युक्तान्योन्याश्रयदोषविकलत्वादित्यर्थः।

**४८१ सु०— एतदुक्तं भवति। नास्मन्मतेऽज्ञानाङ्गीकारे दोषोऽस्ति; येन शास्त्रस्य विषयप्रयोजनशून्यता स्यात्। जीवाश्रितं जीवावरणं चाज्ञानमित्यङ्गीकारात्। तस्य च स्वत एव ब्रह्मणो भिन्नत्वात्, ज्ञानस्वभावत्वाच्च। तस्य स्वप्रकाशस्यापि परमेश्वरेच्छया परमेश्वरे स्वधर्मेषु चाज्ञानं संभवत्येव ॥ यद्यपि धर्माः स्वप्रकाशचैतन्यान्न भिद्यन्ते तथाऽपि सविशेषत्वाङ्गीकारादज्ञानविषयतोपपत्तिः ॥ अज्ञानमपि सत्यमेव नाज्ञानकल्पितम्। तथाविधस्यापि निवृत्तिं वक्ष्यामः। यद्यपि जीवचैतन्यं ब्रह्म स्वधर्मप्रकाशात्मकं तथाऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहिताविद्यावशान्न तथा संसारे प्रकाशयतीति।**

**परि०—** ननु जीवाज्ञानपक्षेऽप्यावरणकृत्याभावः। अज्ञानस्य स्वाभाविकत्वे सत्यत्वे च निवृत्त्यनुपपत्तिः। जीवधर्माणां स्वप्रकाशचैतन्याभेदेनाज्ञानविषयतानुपपत्तिरित्यतः स्वकृतयोजनापञ्चक-स्याप्युपयोगं दर्शयन्नभिप्रायमाह **एतदुक्तं भवतीति**। ज्ञानस्वभावत्वाच्चेत्यनेनावरणकृत्यमस्तीति सूचितम्। **वक्ष्याम इति**। 'यथा दृष्ट्या प्रसन्नरसन्नि'त्यत्रेति भावः।

**गु०दी०— ज्ञानस्वभावत्वात्** इत्यनेन आवरणस्यावश्यकतामभिप्रैति। **न तथा संसारे प्रकाशयति** इत्यत्र यथा दाहकत्वशक्तिमानग्निर्मणिमन्त्रादिना प्रतिबद्धो न दहति। एनं मा दहेति प्रयोगे एकमेव न दहति, अपरांश्च





दहति, तथा ईश्वरशक्त्युपबृंहिताविद्यया बहिष्ठयाऽपि प्रतिबद्धः साक्षी नेश्वरं पश्यति । स्वात्मनि च किञ्चित्पश्यति किञ्चिच्च न पश्यतीति सर्वसंप्रतिपन्नदृष्टान्तोऽप्यनुसन्धेयः ।

**वं०प०**— ननु जीवाश्रितं जीवावरणं चाज्ञानमित्यङ्गीकारे ब्रह्मण्येव तदङ्गीकृतं स्यात्तयोरभेदात् । तथा च पूर्वोक्तदोष इत्यत आह **तस्य चेति** । प्राप्तप्रकाशप्रतिबन्धरूपावरणकृत्यभावाज्जीवावरकमज्ञानमङ्गीकार्यमित्याह **ज्ञानस्वभावत्वाच्चेति** । **परमेश्वरेणेति** । अघटितघटकसामर्थ्योपेतेनेत्यर्थः । नन्वज्ञानस्य सत्यत्वे निवृत्तिर्न स्याद्ब्रह्मवदिति चेत्तत्राह **तथाविधस्यापीति** । निवर्तकभावाभावाभ्यामज्ञानब्रह्मणोर्निवृत्त्यनिवृत्ती युज्येते इति वक्ष्याम इत्यर्थः । **ब्रह्मस्वधर्मप्रकाशात्मकमिति** । प्रकाशो ज्ञानम् । तथा च ब्रह्मविषयको यः प्रकाशस्तथा स्वरूपभूतज्ञानानन्दादिधर्मविषयकश्च यः प्रकाशस्तदात्मकमित्यर्थः । तथा च तदुभयविषयकाज्ञानं जीवे न युक्तमतस्तूभयविषयः प्रकाशः संसारे स्यादिति भावः ।

**आनन्दः**— एवमपि कथं परोक्तसाश्रयत्वसविषयत्वानुपपत्तिपरिहार इत्यत्राह **एतदुक्तमिति** । ननु जीवस्य परमात्माभिन्नत्वात्कथं तद्विषयेऽज्ञानमित्यत्राह **तस्य चेति** । औपाधिकभेदनिरासाय **स्वत इति** । तथापि ज्ञानप्रसक्तेरेवाभावात्तत्प्रतिषेधकत्वेन स्वीकरणमयुक्तमित्यत उक्तं **ज्ञानस्वभावत्वादिति** ।

**श्रीनिधि०**— ननु जीवब्रह्मविभागस्याज्ञानकल्पितत्वे अन्योन्याश्रयता स्यादेवेत्यत आह **तस्य च स्वत एवेति** । जडपक्षोक्तदोषो नास्ति इत्याह **ज्ञानस्वभावत्वाच्चेति** । **वक्ष्यामः** । यथा दृष्ट्या प्रसन्नस्सन्नित्या-दिनेति भावः ।

**वा०चं०**— नन्वज्ञानस्य जीवाश्रितत्वाभ्युपगमे ब्रह्मजडाज्ञानवादोक्तदोषानापत्युक्तिरयुक्ता । जीवस्य ब्रह्मात्मकत्वपक्षेऽपि ब्रह्मणश्चेत् क्व सार्वज्ञमित्युक्तदूषणस्यापरिहारात् । ब्रह्मान्यत्वपक्षेऽपि जीवस्य तद्भेदस्य च कल्पितत्वे यो दोषो भेदोऽपि भ्रमजो यदीत्यादिना समानन्यायतया प्राप्त इतरेतराश्रयत्वरूपस्तस्य स्वयमेवास्तीत्यज्ञानकल्पितत्वाभावोक्त्या निरासेऽप्यन्यगा चेत्स्वतोऽन्यतेति दोषापरिहार एव । जडपक्षोक्तस्य न चावरणमज्ञानमसत्य इति दोषस्य जीवस्याकल्पितत्वोक्त्या निरासेऽप्यप्रकाशस्वरूपत्वादित्युक्तदोषानिरास एव । विषयविशेषकथनेन पक्षान्तरोक्तदूषणाप्राप्तावपि स्वप्रकाशस्वरूपाभिन्नधर्मविषयकाज्ञानानुपपत्तिरूपतत्पक्षप्राप्त-दूषणापरिहार एव । निमित्तविशेषाकथनात् । स्वतन्त्रस्यापि परमेश्वरस्य स्वप्रकाशे स्वधर्मविषयकाज्ञानसंपादकत्व-वत्स्वविषयाज्ञानसंपादकत्वप्रसङ्गस्य निमित्तविशेषेणैव समाधेयत्वात् । अन्यथा पारमेश्वरशक्त्यैव सर्वत्र निर्वाहापत्त्या निमित्तनैमित्तिकभावस्य कुत्राप्यनाश्रयणीयतापातात् । निमित्तविशेषाभिप्रायकल्पने च परमेश्वरशक्त्युक्तेरनुपयोगः । अज्ञानसत्यत्वाभ्युपगमेन तत्कल्पितत्वपक्षोक्तानवस्थादिपरिहारेऽपि तत्सत्यत्वेऽपि सत्यस्यानिवृत्त्या शास्त्रवैय-र्थ्यापत्तेरपरिहाराच्च । तस्मान्नेदं मूलमुक्तदोषपरिहारक्षममित्यत आह **एतदुक्तं भवतीति** । ब्रह्माश्रितत्वपक्षं परित्यज्य जीवाश्रितत्वपक्षकक्षीकरणेन जीवोऽपरः पदार्थ इत्यर्थसूचकभावपदेन च लब्धं परिहारमाह **तस्य चेति** । अस्मन्मत

इति पूर्वोक्तं सर्वत्रान्वेति। एवं चान्यगा चेत्स्वतोऽन्यतेत्युक्तोऽपसिद्धान्तो नास्मन्मत इति भावः। **ज्ञानस्वभावत्वाच्चेति**। इदं च जीवस्य प्रमाणसिद्धत्वात्स्वभावपदेनैव ज्ञानस्वभावासूचनाद्वा भाष्याभिमतमिति मन्तव्यम्। अनेन जडपक्षोक्तस्याप्रकाशस्वरूपत्वादिति दोषस्यात्राप्रसर इत्युक्तं भवति। स्वस्य विषयत्वासंभवेऽपि स्वधर्माणां विषयत्वं संभवतीत्येतदर्थसूचकस्वभावपदान्तर्गतधर्मार्थकभावपदप्रयोगसूचितं निमित्तविशेषमाह **तथाऽपीति**। अज्ञानस्य सत्यत्वे सत्यस्यानिवृत्त्या शास्त्रवैयर्थ्यमेवेत्युक्तानुपपत्तेः परिहारो यथा दृष्ट्या प्रसन्न इत्यादिवक्ष्यमाणरीत्या सुलभ एवेत्याह **तथाविधस्यापीति**। यदि स्वरूपाभिन्नधर्मविषयकाज्ञानोपपत्तये निमित्ततया विशेष आश्रितस्तर्हि स्वभावपदार्थतया स्वतन्त्रपारमेश्वरशक्तिव्युत्पादनं व्यर्थमित्यतो विशेषबलादस्तु स्वरूपप्रकाशेऽपि धर्माप्रकाशस्तथाऽपि जीवचैतन्यस्यैव स्वरूपं प्रतीव ब्रह्म पारतन्त्र्यादिस्वधर्मान्प्रत्यपि प्रकाशात्मकत्वात्प्रकाशे सत्यज्ञानस्यैवायोगादप्रकाशानुपपत्तिरिति शङ्कायाः पारमेश्वराचिन्त्यशक्त्यभ्युपगमेनैव निरस्यतया तदुक्तिरित्याशयेनाह **यद्यपीति**। अत्र यद्यपीति स्थलद्वये वैचित्र्यं नेदं दूषणद्वयसमाधानमितरवत्परं प्रत्युद्भावितदूषणस्य स्वपक्षे समाधानरूपमपि तु स्वपक्षप्राप्तदूषणसमाधानमिति सूचयितुम्। यद्यपि चात्र यद्यपि जीवचैतन्यमित्यादिको ग्रन्थः समानविषयकत्वादज्ञानविषयतोपपत्तिरित्यस्यानन्तरं निवेशयितुमुचितः, अज्ञानमपीत्यादिस्तु प्रकारान्तरेण शास्त्रवैयर्थ्यसमाधानार्थोऽन्ते निवेशनीयः। तथाऽपि वक्ष्यमाणरीत्याऽनाद्यज्ञानस्य सत्यस्येश्वरप्रसादान्निवृत्तावचिन्त्यशक्तेरुपयोगाद्वा ब्रह्मजीवधर्मप्रकाशे पारमार्थिके सति मिथ्याभूतज्ञाननिमित्ताप्रकाशोपपत्तावपि नाज्ञानसत्यत्वे तदुपपत्तिः। पारमार्थिकापारमार्थिकयोरविरोधवत्पारमार्थिकयोरविरोधासंभवादित्यज्ञानसत्यताङ्गीकारे प्राप्तानुपपत्तेरप्यनेन परिहारात्तदनन्तरं यद्यपीत्यादिग्रन्थो निवेशित इति द्रष्टव्यम्।

वा०र०— अत्र च परमेश्वरेणेत्यस्य परमेश्वरशक्त्येत्यर्थो व्याख्येयः। **पारमेश्वरशक्त्यैवेति**। तर्हि स्वभावपदार्थतया स्वतन्त्रपारमेश्वरशक्तिव्युत्पादनमिति च वक्ष्यमाणत्वात्तत्र स्थले स्वपदार्थः स्वतन्त्रेति। विशेष्य कीर्तनं पारमेश्वरशक्तिपदेनेति स्पष्टमिति ज्ञेयम्। स्वतन्त्रपारमेश्वरेत्यस्याभिप्रायं कथयिष्यामः। मूले जीवावरणमित्यस्य जीवस्य स्वपरप्रकाशप्रतिबन्धकमित्यर्थः। **ब्रह्माश्रितत्वपक्षं परित्यज्येति**। नन्वज्ञानस्य जीवाश्रितत्वपक्षेऽपि जीवस्य ब्रह्मात्मकत्वपक्षे ब्रह्मणश्चेत् सार्वज्ञ्यमित्युक्तदूषणस्य ब्रह्मान्यत्वपक्षेऽपि जीवस्य तद्भेदस्य च कल्पितत्वे प्राप्तान्योन्याश्रयत्वस्य स्वयमेवास्तीत्यज्ञानकल्पितत्वाभावोक्त्या निरासेऽप्यन्यगा चेत्स्वतोऽन्यतेत्युक्तदूषणस्यापरिहारात्कथमुक्तदोषाभाव इत्यतो ब्रह्माश्रितत्वपक्षं परित्यज्येत्यादि योज्यम्। भाष्यानुक्तं कथमुच्यत इत्यतो मुखतोऽनुक्तत्वेऽपि तदभिप्रेतत्वात्तदुक्तिर्युज्यत इत्याह **इदं चेति**। इदं च भाष्याभिमतं कथमित्यतस्तदुपपादनं जीवस्येत्यादि। **स्वतन्त्रपरमेश्वरेति**। स्वतन्त्रपरमेश्वरशब्दात्कर्मधारये निष्पन्नादिदमर्थेऽण्युत्तरपद एवादिवृद्धावुक्तप्रयोगः साधुः। अथवा स्वभावपदस्य परमेश्वरशक्तिपरतयापि व्याख्यानस्य मूलटीकाकारसंमततायाः प्रागुपपादितत्वात्तदनुसारेण स्वभावपदेन शक्तिरूपार्थे प्राप्ते स्वातन्त्र्यं परमेश्वरसंबन्धित्वेन शक्तौ कार्यकरत्वोपयोगीत्याश्रयणापेक्षया साक्षाच्छक्तावेव स्वातन्त्र्याश्रयणं वरमित्याशयेन धर्मधर्मिणोरभेदेन स्वातन्त्र्यस्य शक्तिगतताया अपि निरपवादतया स्वतन्त्रा चासौ परमेश्वरसंबन्धिनी शक्तिश्चेति फलितं भवतीति सूचयितुं

तथानुवादः । अत एव सर्वे सर्वगुणात्मानः सर्वकर्तार एव त्विति भक्तिपादीयानुभाष्ये गुणानामपि सर्वकर्तृत्वादिक-मुक्तमिति ज्ञेयम् । **व्यर्थम्** अनुपयोगादिति शेषः । अनुपयोग इति पूर्वत्रोक्तेः । **यद्यपीति स्थलद्वय इति** । यद्यपि धर्माः स्वप्रकाशा इति स्थले यद्यपि चैतन्यमित्येतत्स्थले चेत्यर्थः । वैचित्र्यमित्यत्रापि यद्यपि तथापीत्यस्य पूरणं कार्यम् । धर्मा इत्यादिस्थलद्वये यद्यपि तथापीत्यादिशङ्कामुखेन यद्वैचित्र्यं तदिति संबन्धः । जीवाश्रितं जीवा-वरणमित्यादाविव यद्यपीत्यादेस्त्यागेन स्वप्रकाशचैतन्याभिन्नधर्माणां सविशेषत्वाङ्गीकारादज्ञानविषयत्वोपपत्ति-रित्यादिरूपेण वक्तव्यत्वे सति यद्यपीत्यादिरूपेण यद्वैचित्र्यं कृतं तन्नेदं दूषणद्वयेति योजना । तदित्यस्येति सूचयितुमित्युत्तरेण संबन्धः । **इतरवत्** इतरदूषणवत् । **समानविषयकत्वादिति** । अनन्तरं निवेशनीयत्वे हेतुकथनमिदम् । उपयोगाद्वेत्यस्य तदनन्तरं यद्यपीत्यादिग्रन्थ इत्युत्तरेण संबन्धः । अज्ञानसत्यताङ्गीकारे सत्यस्य निवृत्त्यनुपपत्तिरिति दूषणपरिहाररूपप्रयोजनमभिधायोत्तरत्रैतद्ग्रन्थनिवेशस्य प्रयोजनान्तरमाह **ब्रह्मजीवधर्मेति** । ब्रह्म च जीवधर्माश्चेति विग्रहः । **पारमार्थिकापारमार्थिकयोरिति** । ब्रह्मजीवधर्मप्रकाशाप्रकाशयोरिति शेषः । **पारमार्थिकयोरिति** । अज्ञानस्य सत्यतायां ब्रह्मादिप्रकाशस्यैव तदप्रकाशस्यापि सत्याज्ञाननिमित्तकस्य पारमा-र्थिकतयोभयोर्विरोधावश्यंभावादिति भावः ।

**विट्ठ०**— ननु भवत्पक्षेऽपि नाज्ञानं संभवति अतः शास्त्रवैयर्थ्यं संमतस्याश्रयावरणादिसापेक्षत्वेन जीवादेरेव तथात्वे प्रागुक्तदूषणकलापग्रस्तत्वादित्युक्तयोजनापञ्चकस्याप्युपयोगं दर्शयन्नभिप्रायमाह **एतदुक्तं भवतीति** । जीवस्य जडविलक्षणतया आवरणकल्पनं संभवतीत्याशयेनोक्तं **ज्ञानस्वभावत्वाच्चेति** । **वक्ष्याम इति** । यथा दृष्ट्या प्रसन्नः सन्नित्यादौ स्वप्रकाशस्यापि परमेश्वरेच्छयेत्युक्तं विवृणोति **यद्यपीति** ।

अविद्यायाः दुर्घटत्वाङ्गीकारे शून्यवादापत्तिः—

**४८२ सु०**— स्यादेतत् । अस्ति तावदविद्या । सा च दुर्घटघटनास्वभावा । यथोक्तम् 'दुर्घटत्वमविद्याया भूषणं न तु दूषणम् । कथञ्चिद्घटमानत्वेऽविद्यात्वं दुर्घटं भवेत् ॥' इति । तथा चानुपपत्तिः कथं तत्स्वरूपापलापाय प्रभवतीति ॥ अत्र वक्तव्यम् । किमविद्या दुर्घटसुघटघटनास्वभावा वा, उत दुर्घटैकस्वभावा वा । नाद्यः सुघटांशेऽविद्यात्वाभाव-प्रसङ्गात् । द्वितीये दोषमाह **अविद्येति** ।

**अनु०**— अविद्यादुर्घटत्वं चेत्स्यादात्माऽपि हि तादृशः ॥

**अविद्याया दुर्घटत्वं चेत्** 'स्वभाव' इति शेषः । **हि**शब्दस्तस्मादित्यर्थे । **तादृशः** अविद्यासदृशः । मिथ्येति यावत् ।





**यादु०**— **दुर्घटत्वमिति** । विचारासहिष्णुत्वमित्यर्थः । भूषणं तत्स्वरूपाविरोधि दूषणं तत्स्वरूपोपमर्दकम् । **अविद्यात्वं दुर्घटमिति** । तदुक्तम् । 'अविद्याया अविद्यात्वमिदमेव हि लक्षणं यद्विचारासहिष्णुत्वमि'ति ।

**वं०प०**— **दुर्घटसुघटघटनेति** । उभयघटनास्वभावेत्यर्थः । **दुर्घटैकेति** । स्वयं दुर्घटैकस्वभावा दुर्घटैकघटनास्वभावा चेत्यर्थः । **सुघटांश इति** । सुघटस्याविद्योपपाद्यत्वाभावेन तदंशेऽविद्याया अविद्यात्वं सुघटोपपादकस्वभावत्वरूपाविद्यात्वं न स्यादित्यर्थः ।

**आनन्दः**— **सुघटांश इति** । ब्रह्मस्वरूपसुघटांश इत्यर्थः । तथाच तत्राप्यविद्यात्वं स्यादित्यर्थः । कथमिति दुर्घटघटने कथं समर्थेत्यर्थः । उक्तानुपपत्तितौल्यादिति भावः । नन्वज्ञाननिरासस्योपक्रान्तत्वाहारे तस्यैवोपसंहरणं युक्तम् ।

**वा०चं०**— ननु भावरूपाज्ञानस्वरूपोपादाने यदि न विप्रतिपत्तिरपि तु मत्पक्षे तदनुपपत्तिकथन एव तात्पर्यं तर्हि तवेव ममापि तत्परिहारोपायोऽस्तीत्याशङ्कते **स्यादेतदिति** । यद्वा भावरूपाज्ञानमङ्गीकृत्य पारमेश्वराचिन्त्याद्भुतशक्तिमाश्रित्याविद्यानुपपत्तिपरिहारापेक्षयाऽविद्याचिन्त्याद्भुतशक्त्यैव तत्परिहारे लाघवमिति गूढाभिसन्धिः शङ्कते **स्यादेतदिति** । अत एव पूर्वपक्षिसिद्धान्तिनौ स्वाशयं नन्वित्यादिनोद्घाटयिष्यत इति द्रष्टव्यम् । दुर्घटा विचारासहा या घटनोपपत्तिः सा स्वभावो यस्याः सा तथा । दुर्घटत्वमनुपपद्यमानत्वम् । विचारासहिष्णुत्वमिति यावत् । भूषणं स्वरूपसंपादकम् । दूषणं स्वरूपहानिकरम् । कथञ्चित्केनापि प्रकारेणं । घटमानत्वे विचारसहिष्णुत्वे । अविद्यात्वं विचारासहिष्णुत्वम् । तदुक्तम् । 'नन्वविद्या स्वयंज्योतिरात्मानं ढौकते कथम् । कूटस्थमद्वितीयं च सहस्रांशुं यथा तमः ।' इत्याशङ्क्य 'सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी । सहते न विचारं सा तमो यद्वद्दिवाकरम् । अविद्याया अविद्यात्वमिदमेवात्र लक्षणम् । यद्विचारासहिष्णुत्वमन्यथा वस्तु सा भवेत् ।' इत्यादि । **तथा चेति** । स्वरूपोपपादिकायास्तदपलापकत्वानुपपत्तेरित्याशयः । उदाहृतसंमतिवशात् दुर्घटैकस्वभावत्वस्य पराभिप्रेततालाभेऽप्युपक्रमे सामान्योक्तेर्दुर्घटत्वस्य भूषणत्वांशे सिद्धान्तसंमतिरस्तीत्याशयेनाप्युदाहरणोपपत्तेः । शङ्कितार संमतिश्लोकोक्तसर्वाङ्गीकारस्य निश्चेतुमशक्यत्वेन भाष्योक्तदूषणस्य चोभयस्य भावत्वपक्षेऽनुपपत्त्या परोक्तसामान्यं विकल्प्योभयस्वभावत्वपक्षं तदुदाहृतसंमत्युक्तयुक्त्यैव निरस्य द्वितीयपक्षनिराकरणपरतया भाष्यं योजयितुमाह **अत्रेति** । तथा चेत्युक्ताभिप्रायव्यञ्जनाय भाष्यपदमनूद्य विग्रहं प्रदर्शयन्नेव शेषं पूरयति **अविद्याया इति** । प्रसङ्गोपपादकानुक्त्या न्यूनतां परिहरति **हीति** । प्राधान्यप्रकृतदुर्घटत्वस्य न तच्छब्दपरामर्शविषयता किन्तु योग्यतयोपसर्जनीभूताया अप्यविद्याया एवेत्याह **तादृश इति** । सादृश्यस्यानेकधा संभवाद्विवक्षितमाह **मिथ्येति** ।

**वा०र०**— स्वभावाज्ञानवादस्येत्येतदवताररूप किञ्च न वयं भावरूपेत्यादि मूलोक्तभाष्यतात्पर्योपरि शङ्कापरतयोत्तरग्रन्थमवतारयति **ननु भावरूपेति** । **ममापि तत्परिहारोपाय इति** । यथा तवाज्ञानं प्रकाशात्मकजीवचैतन्ये विद्यमानेऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहितत्वाद् ब्रह्मादिप्रकाशप्रतिबन्धकं युक्तमिति ब्रह्मादि-





विषयकमज्ञानमित्यत्र प्राप्तानुपपत्तिपरिहारोपायोऽस्ति तथा ममाप्याश्रयाविषयप्रमाणादिभिर्विचारासहस्याप्यज्ञानस्य तादृशविचारानुपपत्तिरूपं यद्दूषणं तत् भूषणमेवेति तत्स्वाभिमताज्ञानस्वरूपापलापहेतुर्नेत्येवं तदनुपपत्ति-परिहारोपायोऽस्तीत्यर्थः । **इति गूढाभिसन्धिरिति** । एतच्च नन्वीश्वरशक्तिरपि कथमित्येतदुत्तरमूलटीकोपपादनावसरे विवरिष्यते **स्वाशयमिति** । एतदपि तत्रैव स्पष्टीभविष्यति इति । दुर्घटघटनेत्यत्र दुर्घटस्य घटनेत्यर्थो न परसंमतेः । दुर्घटत्वमित्यादिसंमत्या विरोधात् । दुर्घटैकस्वभावेत्याद्युत्तरग्रन्थाप्रवृत्तिप्रसङ्गाच्च । किन्तूक्तोभयानुसारेणाविद्याया एव विचारासहत्वरूपदुर्घटत्वप्रतिपादनमुखेन शङ्केति दर्शयन् कर्मधारयमाश्रित्य व्याचष्टे **दुर्घटा विचारासहेति** । संमतिश्लोकं व्याचष्टे **दुर्घटत्वमित्यादिना** । तदुक्तमितीत्यत्रेति शेषः । उपपाद्यमेतत् । किमविद्यादुर्घटेत्यादिविकल्पो न युज्यते । परेण दुर्घटैकस्वभावत्वप्रापकसंमत्युदाहरणेन तत्पक्षस्यैव पराभिप्रेततया प्राप्तेः । न चोपक्रमे दुर्घट-घटनेति सामान्योक्तेर्विकल्पप्रापकत्वमिति वाच्यम् । सामान्योक्तावपि संमत्युदाहरणानन्तरं विशेषविषयत्वासिद्धौ विकल्पोत्थानायोगात् । अस्तु वा तदुत्थानं तथापि विकल्पद्वयनिरासकतया भाष्ययोजनां विहाय दुर्घटैकस्वभा-वत्वरूपद्वितीयपक्षमात्रनिरासपरतया तद्योजनायां निमित्ताभाव इत्येताः शङ्का निराकुर्वन् विकल्पोत्थानादिक-मुपपादयति **उदाहृतसंमतीत्यादिना** । **सामान्योक्तेरिति** । परोक्तसामान्यं विकल्प्येत्युत्तरेण संबन्धः । तथा च पराभिप्रेतत्वमनादृत्य सामान्योक्तिं पुरस्कृत्य विकल्पोत्थानमित्युक्तं भवति । संमत्युदाहरणमन्यथासिद्धमिति न तद्विशेषपर्यवसाननिर्णायकमित्याह **दुर्घटत्वस्येति** । तर्हि भाष्यं विकल्पद्वयनिरासपरतया कुतो न योजित-मित्याशङ्कापरिहारो **भाष्योक्तेति** । अनुपपत्त्येत्यस्योभयस्वभावत्वपक्षमित्यादिना संबन्धः । **तथा चेत्युक्तेति** । तथा चानुपपत्तिः कथमिति प्रागुक्तस्याविद्यादुर्घटत्वं चेदिति भाष्यस्थशङ्काभिप्रायस्य व्यञ्जनायेत्यर्थः । **प्रसङ्गोपपादकेति** । अविद्यादुर्घटत्वाङ्गीकारमात्रस्यात्ममिथ्यात्वाङ्गीकारप्रयोजकत्वाप्रतीतेरिति भावः । अनेन साधिष्ठानेत्यादिकमापाद्यमुक्त्वा तथात्व इत्येतत्प्रसङ्गोपपादकतया मूलेऽभिहितं हिशब्दार्थ इति सूचितं भवति । **अविद्याया एवेति** । बुद्ध्या विवेचिताया इति योज्यम् ।

**स०व्र०— अविद्यात्वं दुर्घटं भवेदिति** । दुर्घटघटनास्वभावत्वमविद्यात्वमित्यभिप्रेतत्वादित्यर्थः ।

**विठ्ठ०— अविद्यात्वमिति** । दुर्घटघटनास्वभावत्वमेवाविद्यात्वमित्युक्तत्वादिति भावः । **अविद्या-त्वाभावप्रसङ्गादिति** । कथञ्चिद्घटमानत्व इत्युक्तेरिति भावः ।

**४८३ सु०— अयमर्थः । यद्यविद्या दुर्घटैकस्वभावा स्यात्तदा साधिष्ठाना ससाक्षिका च न स्यात् । तथात्वे सुघटत्वप्रसङ्गेनाविद्यात्वाभावप्रसङ्गात् । ततश्चात्माभावेन शून्यवादा-पत्तिरिति ।**

**वं०प०— ससाक्षिका** द्रष्टृपुरुषसहिता । **सुघटत्वप्रसङ्गेनेति** । साधिष्ठानत्वससाक्षिकत्वाभ्यामुपपाद्य-त्वेन सुघटत्वप्रसङ्गेन दुर्घटैकस्वभावत्वरूपाविद्यात्वाभावप्रसङ्गादित्यर्थः । हिशब्दस्तस्मादित्यर्थ इत्युक्तमध्याहारेण







तदर्थमाह **ततश्चात्माभावेति** । तस्मादित्यर्थकहिशब्दार्थानुवादस्ततश्चेत्यनेन कृतः । आत्मनो मिथ्यात्वादित्यर्थः । अविद्याधिष्ठानत्वेन तत्साक्षित्वेन चात्मसिद्धिर्विवाच्या । अविद्यायाश्च साधिष्ठानत्वे ससाक्षिकत्वे वाऽविद्यात्वानुपपत्तौ सत्यामात्मासिद्धिप्रसङ्गेन तदभाव एव प्राप्त इति भावः ।

**वा०चं०**— नन्वप्रयोजकतेष्टापादनता च तर्कस्येत्यतो मध्ये आपाद्यमध्याहृत्य तदप्रयोजकतापरिहाराय हिशब्दसूचितयुक्तिं संयोज्य द्वितीयदूषणनिरासाय तर्कफलं वक्तुमाह **अयमर्थ इति** ।

**विठ्ठ०**— नन्वविद्याया दुर्घटत्वे आत्मनो मिथ्यात्वं कुत इत्यतस्तदुपपादयितुमाह **अयमर्थ इति** । **ससाक्षिका** द्रष्टृसहिता । **ततश्चेति** । अविद्याया अधिष्ठादिशून्यत्वादहमज्ञो न जानामीति अधिष्ठानत्वेनाज्ञानद्रष्टृत्वेन च प्रतीयमानात्माभावेनेत्यर्थः ।

**४८४ सु०— नन्वीश्वरशक्तिरपि कथम् । यावत्प्रमाणसिद्धं तावतः सुघटस्य दुर्घटस्य वा घटनायां पटुरिति ब्रूमः । न चैवं त्वया वक्तुं शक्यत इत्युक्तम् । सर्वस्यापि सुघटस्यापह्नवोऽनेनातिप्रसङ्गेनोपलक्षितो बोद्धव्यः ।**

**बिन्दुः— सर्वस्यापि सुघटस्यापह्नव इति** । भोजनादेः तृप्त्यादिहेतुत्वं न स्यात् । तस्याश्च अनशनादेस्तृप्त्यादिहेतुत्वमित्यर्थः ।

**परि०— इत्युक्तमिति** । सुघटांशेऽविद्यात्वाभावप्रसङ्गादिति ग्रन्थेनोक्तमित्यर्थः । **सर्वस्यापि सुघटस्येति** । अविद्यायाः दुर्घटैकस्वभावत्वे तन्मयस्यापि तथात्वापत्त्या घटस्य पृथुबुध्नोदराकारता पटस्यातानवितानात्मकता ज्ञानेच्छादेः सविषयकतेत्यादि न स्यादित्येवं द्रष्टव्यमित्यर्थः ।

**यादु०**— नन्वीश्वरशक्तिरपि किं दुर्घटसुघटघटनास्वभावा किंवा दुर्घटैकस्वभावा । आद्ये गवीव शशेऽपि विषाणं जीवे ईश्वरेऽपि प्रकाशाप्रकाशौ च कुतो न घटयेत् । द्वितीये सुघटस्य तदविषयत्वेनेश्वरशक्तेरसर्वविषयकत्वप्रसङ्गः । ईश्वरे युगपदणुत्वमहत्वघटकत्ववत्सुखज्ञानाज्ञानादिसर्वविरुद्धधर्मघटकता च स्यादित्यभिप्रेत्याक्षिपति **नन्वीश्वरशक्तिरपीति** । **यावत्प्रमाणसिद्धमिति** । तथा च न पूर्वोक्तातिप्रसङ्ग इति भावः । **न चैवं त्वयेति** । प्रमाणसिद्धोपपादकत्वस्य सुघटोपपादकत्वस्य चाविद्यायामनङ्गीकारादिति भावः । **अनेनातिप्रसङ्गेनेति** । 'स्यादात्माऽपि हि तादृश' इत्यनेनेत्यर्थः ।

**वं०प०— कथमिति** । ईश्वराचिन्त्यशक्तिरपि दुर्घटसुघटोभयघटनास्वभावा चेत्तर्हि सुघटस्यांशस्या चिन्त्यशक्त्युपपाद्यत्वाभावेन तस्याः सर्वविषयकत्वभङ्गः । दुर्घटोपपादकत्वैकस्वभावा चेत् शशविषाणमपि





घटयेदित्यर्थः । **सुघटस्येति** । न च सुघटस्याचिन्त्यशक्त्युपपाद्यत्वायोग इति वाच्यम् । प्रमाणप्रमितत्वादिति भावः । **न चैवं त्वयेति** । अविद्याया दुर्घटघटनैकस्वभावत्वाङ्गीकारादिति भावः । **सर्वस्यापीति** । घटस्यापि मृदभावे उत्पत्तिः स्यात् । अविद्याया अकारणकार्योत्पत्तिरूपदुर्घटघटकत्वादिति भावः ।

**कं०रा०— न चैवमिति** । एवं यावत्प्रमाणसिद्धं तावत्सुघटस्य दुर्घटस्य वा घटनायामविद्या पटुरिति त्वया न च वक्तुं शक्यते । सुघटांशेऽविद्यात्वाभावप्रसङ्गादित्युक्तमित्यर्थः ।

**श्रीनिधि०— त्वया वक्तुं शक्यत इत्युक्तमिति** । सुघटस्य घटनायां पटुत्वे तस्या दुर्घटैकस्वभावत्वेन तदंशे अविद्यात्वाभावप्रसङ्ग इत्युक्तमित्यर्थः । **सर्वस्यापीति** । विषयादेरित्यर्थः ।

**वा०चं०—** ईश्वरशक्तेरघटितघटनास्वभावत्वस्य त्वयाऽप्यभ्युपगमात्तत्राप्यतिप्रसङ्गसाम्यमित्याशयेन प्रतिबन्दीं गृह्णाति **नन्विति** । सिद्धान्ती स्वाशयं तावदाविष्करोति **यावदिति** । तर्हि शशविषाणादिकमपि स्यादित्याशङ्कानिरासायैतत् । फलोपधानाभिप्रायेण चेदम् । अतो न शक्तोऽपि ह्यन्यथाकर्तुमित्यादिना विरोध इति ज्ञेयम् । इदानीं प्रतिबन्दीं मोचयति **न चैवमिति** । **उक्तमिति** । तथात्वे सुघटत्वप्रसङ्गेनेत्यादिनेति शेषः । स्यादविद्यात्वमात्मन इत्यतिप्रसङ्गसङ्गहायाह **सर्वस्यापीति** ।

**वा०र०— अघटितघटनास्वभावत्वस्येति** । अघटितानि यानि कार्याणि तेषां या घटना तत्संपादकत्वं तत्स्वभावत्वस्येत्यर्थः । त्वयाऽपीत्यस्याज्ञानदुर्घटत्वं मत्पक्षे उपपादयतापीत्यर्थः । **तत्रापीति** । परमेश्वरशक्तेरघटितघटनास्वभावत्वमङ्गीकृत्य तयाऽघटितकार्याङ्गीकारेऽपीत्यर्थः । **अतिप्रसङ्गेति** । तर्हि तथाविधशक्त्याऽघटितं शशविषाणादिकमपि संपाद्येतेत्यतिप्रसङ्गप्राप्तेरविद्याङ्गीकारेश्वरशक्त्यङ्गीकारपक्षयोः साम्यमित्यर्थः । ततश्च तदङ्गीकारोऽप्यनुपपन्न इत्याशयः । अनेन शक्तिरपीत्यपिपदार्थः । कथं पदार्थश्चोक्तो भवति । नन्वेवं टीकोक्तरीत्या मूलाशयो न वर्णयितुं शक्यते । तथा हि । अविद्याया आश्रयविषयाद्यभावेनानुपपत्तिप्रतिपादने सिद्धान्तिना कृते सति पूर्वपक्षी आश्रयाद्यभावप्रयुक्तानुपपत्तिरविद्याया विचारासहत्वरूपदुर्घटत्वस्वभावकतया तत्स्वभावसंपादिकैव न तु तदपलापिकेति तदनुपपत्तिव्युत्पादनं व्यर्थमिति स्यादेतदित्यादिना शङ्कितवान् । तदनन्तरमत्र वक्तव्यमित्यादिना अभिप्रेतानभिप्रेतपक्षद्वयं विकल्प्याद्यं बहिरेव प्रदूष्य दुर्घटैकस्वभावत्वरूपपूर्वपक्ष्यभिप्रेतद्वितीयपक्षदूषणपरतया अविद्यादुर्घटत्वं चेदित्येतद्भाष्यं योजयित्वा तर्ह्यात्मापि मिथ्या स्यादित्यादिरूपेणाविद्याया दुर्घटस्वभावत्वाङ्गीकारे तत्स्वरूपस्याधिष्ठानसाक्षिसापेक्षताभावेनाधिष्ठानत्वादिना आत्मनोऽनङ्गीकर्तव्यत्वप्रसङ्गादिति दूषणं तदाशयतया वर्णितवान् । तदुपरि हि नन्वीश्वरेति शङ्काग्रन्थः प्रवृत्तः । तत्र च यद्यविद्याया दुर्घटस्वभावत्वे आत्मापि मास्त्वित्यतिप्रसङ्ग आयातीति विचारासहत्वस्वभावत्वं तस्या अङ्गीकर्तुं नोचितमित्युच्यते तर्हि परमेश्वरशक्तिरपि दुर्घटस्वभावाङ्गीकर्तुमनुचितेत्यहमपि वदामि । तत्स्वभावत्वे तस्या अप्याश्रयत्वेन परमेश्वरानपेक्षतया परमेश्वरानङ्गीकारप्रसङ्गात् । तथा चातिप्रसङ्गसाम्यादविद्यावदीश्वरशक्तिरपि दुर्घटस्वभावा नाङ्गीकार्या । यदि च





साङ्गीक्रियते भवता तर्हि तथाविधाविद्यापि मयाऽङ्गीकर्तुमुचितेति भावः प्रतीयते । स्वयमघटमानत्वे प्रकृते सति अघटितकार्यघटकत्वे प्रतिबन्धानवकाशात् । न च **यावत्प्रमाणसिद्धमिति** मूले कार्यपुरस्कारेणैव परिहारात्तदनुसारेण शङ्कावाक्याशयवर्णनमिति वाच्यम् । पूर्वग्रन्थाननुसारितया तद्वाक्यस्याप्युक्तार्थत्वस्य विचार्यतयैतदर्थोपष्टम्भ-कत्वानुपपत्तेः । अत एव सिद्धान्ती स्वाशयमिति टीकास्थावतारोऽपि दुर्घटः । यदपि **न चैवं त्वयेति** मूलम् । तदप्यसङ्गतमेवाभाति । न ह्यविद्यायां प्रागघटितकार्यसंपादकत्वप्रसक्तिरस्ति । येन परेण तस्मिन्नुक्ते सुघट-त्वापत्तिर्वक्तव्यतया प्रसज्येत । प्रत्युताविद्यास्वरूप एव साधिष्ठानत्वाद्यङ्गीकारे सुघटत्वापत्तिरुक्ता । सर्वस्यापि सुघटस्येति तदुत्तरवाक्यमपि पूर्वग्रन्थेऽविद्यादुर्घटत्वप्रकृततामावेदयति । तत्कथमेतत् टीकाकारीयाशयवर्णनं नन्वित्यादिग्रन्थस्य । किञ्च स्यादेतदित्येतदवतारावसरेऽविद्याद्भुतशक्त्यैव तत्परिहारे लाघवमिति गूढाभिसन्धे-रुक्ततया तस्य चोक्तप्रतिबन्धाशयविरोधः । तत्र साम्यपरिहाराय लाघवोपन्यासात् । अपि च गूढाभिसन्धिरपि यावत्प्रमाणमित्यादिमूलाननुगुण एव । अंविद्याङ्गीकारे प्राप्तानुपपत्तिपरिहारोऽविद्याद्भुतशक्त्यैव तर्ह्यस्त्वित्येतच्छङ्काया अपरिहारात् । अत एव पूर्वपक्षिसिद्धान्तिनौ स्वाशयमिति पूर्वटीकापि दुर्घटा यदि तु कश्चिद्ब्रूयात् । प्रक्रमानुसारेणेश्वरशक्तिदुर्घटत्वाक्षेप एवायमिति । तन्न । यावत्प्रमाणेत्युत्तरवाक्यविरोधात् । न चैवं त्वयेति तदुत्तरवाक्यस्यासङ्गततापत्तेश्च । किञ्चाविद्यावत् दुर्घटत्वं परमेश्वरशक्तौ सिद्धान्तिना नाङ्गीकृतम् । विषयाश्रय-प्रमाणाद्यनुपपत्तेरस्वीकारात् । प्रत्युत तदुपपत्त्या तद्दुर्घटत्वस्याभावेन प्रतिबन्धानवकाश एव । तस्मादयुक्तमेतदिति चेदत्र ब्रूमः । यत्तावदुक्तं स्यादेतदित्यादिशङ्काग्रन्थेऽविद्याया एव विचारासहत्वमाशङ्कितम् । अत्र वक्तव्यमित्यादि सिद्धान्तग्रन्थे च तद्विचारासहत्वरूपदुर्घटत्वाङ्गीकारेऽधिष्ठानत्वादिना आत्मापेक्षा न स्यादित्येवमपि प्रसङ्ग उक्त इति । तत्तथैवेति वदामः । न चैवं सति नन्वीश्वरेति ग्रन्थेऽपि ईश्वरशक्तेर्विचारासहत्वमेवाक्षेप्यमित्यघटितघटकत्वाक्षेपो न युज्यत इत्युक्तमिति वाच्यम् । आश्रयादिनिरासावसरे आव्रियमाणतया ब्रह्मस्वरूपतद्धर्मयोरङ्गीकारायोगः तयोः प्रकाशमानतया आवृतत्वे तद्विरोधापत्त्या सिद्धप्रकाशनाशादिरूपावरणकृत्याभावेन तद्विषये आवरणानुपपत्ते-रित्येवमावरणभूताज्ञानकार्यानुपपत्तिः प्रागभिहिता । तत्र दुर्घटत्वं भूषणं मन्यमानेनाश्रयाद्यनुपपत्तेरिव प्रकाशमाने आवृत्तिरूपदुर्घटकार्यघटकत्वानुपपत्तेरपि भूषणत्वस्योक्ततया आश्रयादिसर्वांशेषु दुर्घटत्वे भूषणत्वेन परेणोक्ते तर्ह्यात्मापि न स्यादित्यतिप्रसङ्गाभिधानानन्तरं सिद्धान्तिनाऽघटितघटकतयाङ्गीकृतपरमेश्वरशक्तेरपि कथं दुर्घटकार्य-संपादकत्वपर्यवसायिकार्यतो दुर्घटत्वमङ्गीकर्तुं शक्यम् । तथात्वे तच्छक्त्या शशविषाणादिकमप्यापद्येतेति परेण कार्यांशे दुर्घटत्वस्यैवाविद्यायामिवेशशक्तावप्यतिप्रसङ्गपराहतत्वमित्याक्षिप्यत इति प्रागुक्तस्यैवाक्षेपलाभात् । तथा च प्रकृत एवाघटितघटकत्वांशे आक्षेपत्वप्राप्त्या नासङ्गतिशङ्का । सर्वप्रकारदुर्घटत्वविषये ईशशक्तिप्रतिबन्धनाभ्युप-गमादेव परमेश्वरानपेक्षत्वादिप्रयुक्तातिप्रसङ्गस्यानाशङ्कनीयतयैतद्भावत्वासिद्धेश्च । सति चैवं यावत्प्रमाणसिद्ध-मित्याद्युत्तरमूलवाक्योक्तपरिहारोऽपि सङ्गततरः । ईशशक्तावघटितघटकत्व एवातिप्रसङ्गस्याशङ्कितत्वे सति तत्परिहारस्यैव युक्तत्वात् । अत एव सिद्धान्ती स्वाशयमिति टीकावतारोऽपि सुघट एव । परेण दुर्घटत्वशरीरान्तर्गतकार्यतो दुर्घटत्वविवक्षयेशशक्तिप्रतिबन्दीं ग्रहीष्यामीति गूढाभिसन्धिनाऽविद्यादुर्घटत्वं दूषणं नेति सामान्यतः प्रथमत आशङ्कितम् । तत्रातिप्रसङ्गे सिद्धान्त्यभिहिते सति यदीश्वरशक्तेरघटितघटकत्वं





भवताऽङ्गीक्रियते तदप्ययुक्तमिति कार्यतो दुर्घटत्वांशे प्रतिबन्दी गृहीता। तत्र सिद्धान्तिना प्रतिबन्दीं मोचयिष्यामीति भावेन तावत्स्वाभिप्रायाविष्करणं यावत्प्रमाणेत्यनेन कृतम्। तथा च कथमेतट्टीकागतावतारस्य दुर्घटत्वम्। एवं कार्यतो विचारासहत्वरूपदुर्घटत्वे प्रतिबन्द्युपादानादेव तन्मोचनाय न चैवं त्वयेत्यादिमूलं चोपपन्नमेव। यावत्प्रमाणेत्यस्मदुक्तरीत्या अविद्याया दुर्घटसुघटघटकत्वाभ्युपगमे सुघटांशेऽविद्यात्वाभावापातादिति दूषणस्य प्रागुक्ततयोक्तत्वोक्तिस्वारस्यस्यातिसुलभत्वात्। सर्वस्यापि सुघटस्येत्युत्तरमूलमप्येवं सति सङ्गतमेव। एतावत्पर-मवशिष्यते। स्यादेतदित्येतदवतारटीकायां भावरूपाज्ञानमङ्गीकृत्य पारमेश्वराचिन्त्याद्भुतशक्तिमाश्रित्याविद्या-नुपपत्तिपरिहारापेक्षया अविद्याऽचिन्त्याद्भुतशक्त्यैव तत्परिहारे लाघवमिति गूढाभिसन्धिः शङ्कत इत्युक्तत्वेनेह चेश्वरशक्तेरघटितघटनास्वभावत्वस्येत्यादिना साम्याशयेन प्रतिबन्दीं गृह्णातीत्युक्ततया तयोर्विरोधः। पूर्वग्रन्थे साम्यपरिहारायैव लाघववर्णनादिति। तदपि ग्रन्थाशयविदां सुपरिहार्यमेव। पूर्वोत्तरग्रन्थयोरेकप्रमेयकतया भावरूपा-ज्ञानेत्यतः प्रागीश्वरशक्तेरघटितघटनेत्यादिकं साम्यमित्यन्तं प्रवर्त्य न चैवं सति भवतोऽप्यनिर्णय इत्याशङ्कायां पूर्वपक्षिणो भावरूपेत्यादिलाघवोपन्यासस्य प्रवृत्तेः प्राग्वर्णनं तावत्सिद्धम्। तथा अत्रापि पूर्वानुसारेण गुडजिह्विकात्वेन साम्याभिधानेऽपि वस्तुतस्तु न साम्यमपि। येन निर्णयः। किन्तु अविद्याद्भुतशक्त्यङ्गीकारे लाघवमस्तीति भाव इत्यस्य ज्ञातुं शक्यतया विशिष्टप्रमेयप्रतिपादनमस्त्येव। तथा चैकप्रमेयपरत्वात्पूर्वोत्तरग्रन्थयोर्न विरोध इति एवंरूपगूढाभिसन्धिस्तु **यावत्प्रमाणेति** मूले न दूरीकृत एवेति तन्मूलमनुगुणमेव। प्रमाणसिद्धसुघटदुर्घट-घटकत्वाङ्गीकारे ईशशक्तिस्थलेऽतिप्रसङ्गानवकाशेनाविद्याद्भुतशक्तौ चातिप्रसङ्गसत्त्वेन तयोः साम्यस्यैवाप्रसक्त्या निर्णयाभावशङ्कानुत्थानेन तत्परिहाराय लाघवोपन्यासस्य सुतरामनुत्थानात्। न ह्यतिप्रसङ्गपराहताविद्याद्भुत-शक्तेरघटितघटकतालाघवमात्रेणाङ्गीकारार्हा। प्रकारान्तरेण साम्य एव लाघवस्य वर्णनौचित्यात्। तथा चेश्वर-शक्त्युपबृंहिताविद्यासंसारे ब्रह्मादिप्रकाशप्रतिबन्धिकेति यथा मयोच्यते। एवमविद्याशक्त्यैव ब्रह्माद्यप्रकाश इति त्वया वक्तुं न शक्यते। त्वत्पक्षेऽतिप्रसङ्गसत्त्वाद् यावत्प्रमाणेति मदुक्तप्रकारस्य च त्वयाङ्गीकारायोगः। तथा सति सुघटांशेऽविद्यात्वाभावापातादित्युक्तवदित्येवं वैषम्यप्रतिपादनमात्रेण पराभिसन्धिखण्डनलाभाभिप्रायेण यावत्प्रमाणेत्यादि मूलस्य प्रवृत्तत्वात्। अत एव पूर्वपक्षसिद्धान्तिनौ स्वाशयमिति पूर्वटीकाऽप्युक्ताभिप्रायैवेति न दोषः। सर्वथा दुर्घटत्वप्रतिबन्धनाङ्गीकारादेव परमेश्वरशक्तेराश्रयाद्यंशे दुर्घटत्वस्य सिद्धान्तेऽनङ्गीकारादित्यादि दोषप्रसङ्गश्चाकार्यतो दुर्घटत्वपर्यवसाय्यघटितघटनास्वभावत्वातिरिक्ताश्रयाद्यंशे दुर्घटत्वाक्षेपपरत्वेन नन्वित्येतद्योजना तु यावत्प्रमाणेत्यादिपरिहाराननुगुणैवेति स्पष्टम्। यत्त्वन्यथाख्यातौ नन्वित्यादिशङ्कापरिहारयोः प्रवर्तनं तत्त्वं पूर्वोत्तरविरोधस्य शब्दसाम्यमात्रेण व्यवहारायोगस्य चास्मदुक्तरीत्या वाक्यार्थपरामर्शे स्फुटत्वादित्यास्तां विस्तरः॥ नन्वीश्वरेति मूलस्य टीकायाश्चार्थवर्णनम्। अकारि विबुधप्रीत्यै गुरुसेवाधिया मया॥

**एतदिति**। यावत्प्रमाणसिद्धमिति विशेषणमित्यर्थः। भगवतो निरर्गलैश्वर्यं नाम कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यम्। तस्य शक्तोऽपि ह्यन्यथाकर्तुं खं छिद्र..........मित्येतत्प्रमाणादिसिद्धतया प्रमाणासिद्धदुर्घटकार्य-घटकत्वस्यापि भगवति सत्त्वाद्यावत्प्रमाणसिद्धमिति कार्यावच्छेदकोक्त्ययोग इत्यतो भगवतस्तथा सामर्थ्यस्य प्रमाणप्रमितस्य सत्त्वेऽपि तथेच्छाभावेनान्यथाकरणम्। भावस्य सिद्धतया यावत्प्रमाणसिद्धं तावत एव दुर्घटस्य





घटनायाः फलोपहिततया तदभिप्रायेण यावत्प्रमाणसिद्धमित्युक्तमिति न दोष इत्याह **फलोपधानेति** । अत्र श्रुत्याभासात्तमपि न हीशत्वपरिपन्थि यदित्यत एव चोपमेत्यधिकरणीयानुव्याख्यानव्याख्यानरूपोऽयमर्थः । यत्किचिद्विरुद्धमिव प्रतीयमानमपीश्वरे तदितरत्र वा प्रमाणसिद्धमीश्वरैश्वर्यविरोधि च न भवति यथाणुत्वमहत्व-यौगपद्यादि । यथा वार्जुनादीनामशेषानुसन्धानाभावस्तत्सर्वमीश्वरैश्वर्यबलेन घटत इत्यङ्गीकार्यम् । न तु निराव र्यम् । यत्पुनरप्रमितं तदीश्वरैश्वर्याविरुद्धमपि न कल्पनीयम् । शशविषाणादिकल्पनापत्तेः । यच्च प्रमितमपीश्वरैश्वर्यविरोधि तन्न कल्पनीयमेव । कल्पकविघातकत्वात् । किन्तु तस्य प्रमाणस्य यथायोगमाभासत्वं वर्णनीयं यथा प्रकृतमिति मूलग्रन्थानुसारेण प्रमाणसिद्धत्वेऽप्यैश्वर्यविरोध्यैक्यं परित्यज्य तदविरोधिन एव ग्रहणमिति ज्ञातव्यम् । **स्यादविद्यात्वमिति** । अयं चोपाधिखण्डनोक्तत्वान्मुखत उपात्तः । तदुपपादनं च तट्टीकोक्तरीत्यात्मन एवावरणत्वे सर्वदा तत्त्वापत्तिरित्यादिकं द्रष्टव्यम् । आदिपदेनाविद्यावशादात्मस्वरूपप्रकाशोऽपि न स्यादित्यादेः परिग्रहः ।

**स०व्र०**— नन्वीश्वरशक्तिरपि किं दुर्घटसुघटघटनास्वभावा किं वा दुर्घटैकस्वभावा । आद्ये गवीव शशेऽपि विषाणं जीवस्वरूप इवेश्वरस्वरूपेऽपि प्रकाशाप्रकाशौ च कुतो न घटयेत् । द्वितीये सुघटस्य तदविषयत्वेनेश्वर-शक्तेरसर्वविषयकत्वप्रसङ्गः । ईश्वरे युगपदणुत्वमहत्वघटकत्ववत्सुखदुःखज्ञानाज्ञानादिसर्वविरुद्धधर्मघटकता च स्यादित्यभिप्रेत्याक्षिपति **नन्वीश्वरशक्तिरपि कथमिति** । **यावत्प्रमाणसिद्धमिति** । तथा च न पूर्वोक्तातिप्रसङ्ग इति भावः । **न चैवं त्वयेति** । प्रमाणसिद्धोपपादकत्वस्य सुघटोपपादकत्वस्य चाविद्यायामनङ्गीकारादिति भावः । **अनेनातिप्रसङ्गेनेति** । स्यादात्मापि हि तादृश इत्यनेनेत्यर्थः ।

**विट्ठ०**— **नन्वीश्वरेति** । किं दुर्घटसुघटघटनास्वभाव उत दुर्घटैकघटनास्वभावो वा पक्षद्वयेऽप्युक्तदूषणं सममिति शङ्कितुरभिप्रायः । दुर्घटसुघटघटनास्वभाव एवेश्वरः तत्र च यावत्प्रमितं तावत एव दुर्घटस्यापि घटकत्वमीश्वरस्य नाविद्यावदप्रामाणिकं दुर्घटस्वभावमङ्गीकुर्म इति परिहरति **यावदिति** । **उक्तमिति** । सुघटांशे विद्यात्वाभावप्रसङ्गादित्युक्तमित्यर्थः । किञ्चाविद्याया दुर्घटत्वे तदुपादानघटपटादेः पृथुबुध्नोदराकारता तथार्थ-क्रियाकारितेत्यपि न स्यात् । तथा सति सुघटतापत्तेरित्याह **सर्वस्यापि सुघटस्येति** । **अनेनेति** । स्यादात्मापीत्यनेनेत्यर्थः ।

**मायामतस्य शुभैः हेयत्वम्**—

**४८५ सु०— 'निर्विशेष' इत्यादिनोक्तमुपसंहरति अत इति ।**

**अनु०— अतोऽधिकारिविषयफलयोगादिवर्जितम् ।**
**अनन्तदोषदुष्टं च हेयं मायामतं शुभैः ॥**





**आनन्दः**— नन्वधिकार्याधिराहित्यस्यानुपक्रान्तत्वादित्यत आह **निर्विशेषेति**। न चाज्ञाननिरासफलभूताधिकार्यादिराहित्योपसंहारान्नोपक्रमानुगुण्यमिति भावः।

**वा०चं०**— उत्तरत्रापि तन्मतानुपपत्तेर्वक्ष्यमाणत्वेन तन्मतनिरासोपसंहारत्वानुपपत्तेराह **निर्विशेष इत्यादिनेति**।

**वा०र०**— **उत्तरत्रापीति**। जीवब्रह्मैक्यनिराकरणावसर इत्यर्थः।

**४८६ सु०— परमतेऽविद्यानुपपत्तेरित्यर्थः। योगो विषयप्रयोजनयोः परस्परं शास्त्रेण च संबन्धः। आदिग्रहणेन स्वपक्षसाधकं प्रमाणं गृह्यते। अनन्तदोषा उक्ता वक्ष्यमाणाश्च। सति खल्वज्ञाने अज्ञो विप्रतिपन्नः सन्दिग्धो वा शास्त्रेऽधिकारी स्यात्। अज्ञातश्च विषयो भवेत्। अज्ञाननिवृत्तिश्च फलम्। न च विषयाद्यभावे संबन्धः संभवी। अधिकार्यादिवर्जितत्वादनादरणीयं दुष्टत्वाद्धेयं च।**

**वं०प०**— **विप्रतिपन्नो** विपरीतज्ञानी। **संभवीति**। संबन्धिनामेवाभावादिति भावः। यथोक्तम्। तदभावादेव संबन्धोऽपीति। योगः शशनृशङ्गयोरिति च।

**आनन्दः**— नन्वज्ञानाभावेऽपि विषयाद्यभावः। कुत इत्यत आह **सति खल्विति**।

**कं०रा०**— **विप्रतिपन्न इति**। विपरीतज्ञानवानित्यर्थः। **अज्ञानमिति**। निर्विशेषे स्वयं भाते किमज्ञानावृतं भवेदित्युपक्रमेऽज्ञानशब्दं प्रयुज्यानन्तदोषदुष्टं च हेयं मायामतं शुभैरित्युपसंहारे मायाशब्दप्रयोगः एकस्यैवाज्ञानस्याच्छादनप्राधान्येनाज्ञानमिति संज्ञा, विक्षेपप्राधान्येन मायेति संज्ञा, न त्वज्ञानमाययोः स्वरूपभेद इति परमतस्याविष्करणार्थ इत्यर्थः।

**वा०चं०**— उक्तोपसंहारत्वं मूलारूढं कर्तुमाह **परमत इति**। स्वभावाज्ञानवादस्येत्युक्तसूचनायेदं विशेषणम्। अयं चाविद्यानुपपत्तिलक्षणो हेतुरनुबन्धचतुष्टयाभाव एव न तु स्वपक्षसाधकाभावादौ। तदुक्तिश्चात्र प्रसङ्गात्तन्मतस्यातिक्षुद्रताख्यापनायेत्यवधेयम्। योगशब्दस्योपायसंबन्धमात्रपरतायाः प्रकृतानुपयोगाद्विवक्षितमर्थमाह **योग इति**। अत्रानुबन्धचतुष्टयस्यापि स्वशब्देनोपात्तत्वेन तत्परत्वासंभवादनन्तेत्यादिना तत्पक्षे बाधकस्योक्ततया साधकाभावस्याप्यवश्यवक्तव्यत्वात्साधकपरतयाऽऽदिशब्दं व्याचष्टे **आदीति**। दोषाणामानन्त्यानुपपत्त्या बहुत्वार्थकतयाऽनन्तशब्दं व्याचष्टे **अनन्तेति**। बहुत्वेऽतिशयद्योतनायामुख्यप्रयोग इत्याशयेनोक्तम् **उक्ता इत्यादि**। उदासीनत्वस्यापि संभवेनोपादेयताप्रयोजकाधिकार्याद्यभावस्य हेयताहेतुत्वा-





संभवाच्चशब्दं हेयं चेत्यनेन संयोज्य तत्समुच्चितं साध्यमध्याहृत्य वर्जितं दृष्टमिति श्रुतहेतोर्यथायोग्यं हेतुहेतुमद्भावं दर्शयति **अधिकार्यादीति**।

**वा॰र॰—** मूले **फलयोगादी**त्यादिपदेन स्वपक्षसाधक-परामर्शेऽज्ञानासंभवस्य तत्र हेतुता तथा अनन्तदोषदुष्टत्वेऽपि सा वाच्या । न चासावस्तीत्यत आह **अयं चेति** । यदि स्वपक्षसाधकाभावादौ न तद्धेतुतानर्थज्ञाननिरासोपसंहारे तदुक्तिरसंमतेत्यत उक्तं **प्रसङ्गादित्यादि** । **उपायसंबन्धेति** । उपायः संबन्धमात्रं चेत्येतदुभयान्यतरमात्रपरताया इत्यर्थः । यद्यपि संबन्धार्थता प्रकृतोपयोगिन्येव । तथापि यत्किञ्चित्संबन्धार्थताया अनुपयोग इत्यभिप्रायेणोक्तं **संबन्धमात्रेति** । अनुबन्धचतुष्टये तस्यानुबध्यते संबध्यत इत्यनुबन्धः । विषयादि-स्तच्चतुष्टयस्येत्यर्थः । स्वशब्देनाधिकारीत्यादिरूपाधिकार्यादिशब्देनेत्यर्थः । **बहुत्वार्थकतयाऽनन्तशब्दमिति** । उक्ता वक्ष्यमाणा इत्युक्त्या बहुत्व एव पर्यवसानस्य मूले सूचनादिति भावः । तर्ह्युक्ता इत्येव वा वक्ष्यमाणा इत्येव वा वक्तव्ये उभयोपादानं व्यर्थमित्यतस्तत्प्रयोजनमाह **बहुत्व इति** । अयमर्थः । यद्यनन्तत्वं न मुख्यं तर्ह्यवाचकप्रयोगे प्रयोजनाभावः बहव इत्येव वक्तव्यत्वापातादित्यतो बहुत्वेऽप्यतिशयस्य त्रिचतुरादिव्यावृत्तस्य सङ्ख्याविशेषस्य विवक्षया बहव इत्यनुक्त्वा अनन्तेत्यमुख्यप्रयोग इति । अज्ञो विप्रतिपन्न इति मूले ज्ञानावश्य-कत्वप्रतिपादनादज्ञो यो विप्रतिपन्नः अज्ञो यः सन्दिग्ध इति योज्यम् । **हेयताहेतुत्वेति** । हेयतामात्रहेतुत्वेत्यर्थः । साध्यमिति अनारम्भणीयत्वरूपसाध्यमित्यर्थः । अध्याहृत्येत्यनन्तरं तत्साध्यद्वयेनेति शेषः । हेयं चेत्यत्रत्य-चशब्देनोपेक्षणीयत्वरूपानारम्भणीयत्वसमुच्चयस्वीकारेऽपि न यथाक्रमं संबन्ध इत्याह **यथायोग्यमिति** । अज्ञानासंभवस्य शास्त्रीयविषयाद्यभावोपपादकत्वेन प्रकृतत्वात्तेन मायावादिशास्त्रानारम्भणीयत्वप्रतिपादनं कथम् । हेयत्वसमुच्चयश्च कथमित्यादि विचार्यम्।

**विठ्ठ॰—** **उक्ता वक्ष्यमाणाश्चेति** । न प्रत्यक्षविरोधत इत्यनेन प्रत्यक्षविरोध उक्तः । एवमनन्तजात-विद्याजातविद्याविरोध उक्तो वक्ष्यते च स्पष्टं च अनन्तशब्दसागरः अनन्ता युक्तयश्चैवेत्यादि वक्ष्यति।

**४८७ सु॰— 'अज्ञानमि'त्युपक्रम्य 'माये'त्युपसंहारोऽज्ञानस्यैवावस्थाभेदेन संज्ञाद्वयं न तु वस्तुभेद इति परमताविष्करणार्थः ।। उपपादितं चैतत्परेणैवेति ।**

**यादु॰—** **अवस्थाभेदेनेति** । प्राधान्येन विक्षेपाच्छादनयोर्भेदेन वा इच्छाधीनत्वतदधीनत्वयोर्भेदेन वा संज्ञाद्वयमित्यर्थः । उक्तं हि विवरणे । एकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन मायाच्छादनप्राधान्येन अविद्येति व्यवहारभेदः इच्छाधीनत्वतद्वैपरीत्येन व्यवहारभेद इति । **उपपादितं चैतदिति** । अत्र केचिदाहुः । अतो-ऽविद्यायामपीति वक्तव्यमित्यादिना पूर्वपक्षयित्वाऽनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययावभासलक्षण-स्याविशेषान्न लक्षणभेदात्तयोर्भेदः । तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतौ सम्यग्ज्ञाननिवर्त्याविद्यायां मायाशब्दप्रयोगात् । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय





तस्मै विद्यात्मने नमः' इत्यादिस्मृतौ मायाविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानाच्च न तयोर्भेद इत्यादिना महता प्रबन्धेनोपपादितमित्यर्थः। तथा च नास्माभिरेतदुपपादनीयमिति भावः।

**वं०प०— संज्ञाद्वयमिति** । स्वाश्रयव्यामोहकत्वतद्व्यामोहकत्वरूपावस्थाभेदेन मायाऽविद्येति संज्ञाद्वयमित्यर्थः।

**आनन्दः—** तथाप्युपक्रमे ज्ञानस्योपक्रान्तत्वादुपसंहारे मायाशब्दप्रयोगे प्रक्रमाननुगुण्यमित्यत आह **अज्ञानमिति**।

**कं०रा०— उपपादितमिति** । एकस्यैवाज्ञानस्य संज्ञाद्वयं न वस्तुभेद इत्येतत्परेणैव 'लक्षणभेदाल्लोकव्यवहारसामर्थ्याद्वा तयोर्भेदः कल्प्यते ? न तावल्लक्षणभेदः । अनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययावभासलक्षणस्याविशेषादित्यादिना तस्माल्लक्षणैक्याद्वृद्धव्यवहारेण चैकत्वावगमादेकस्मिन्नपि विक्षेपप्राधान्येन माया आच्छादनप्राधान्येनाविद्येति व्यवहारभेदः इच्छाधीनत्वे तद्वैपरीत्येन वा व्यवहारभेद इत्यन्तेन ग्रन्थेन विवरणेन उपपादितमिति नास्माभिरुपपादनीयमिति भावः ।

**श्रीनिधि०—** चशब्दसूचितं योग्यं साध्यान्तरमध्याहरति **अवस्थाभेदेनेति** । स्वाश्रयातिरिक्तसकलपुरुषव्यामोहकत्वतत्तत्पुरुषव्यामोहकत्वरूपावस्थाभेदेन मायाविद्यासंज्ञा इत्यर्थः । **अनारम्भणीयमिति** । अनन्तदोषदुष्टमित्यस्यान्यार्थत्वान्न तत्समुच्चय इति ज्ञेयम् ।

**वा०चं०— अवस्थाभेदेनेति** । आवरणविक्षेपत्वरूपेण स्वातन्त्र्यकर्त्रिच्छाधीनत्वरूपेण वेत्यर्थः । ननु स्वाश्रयव्यामोहकत्वतद्वैपरीत्यरूपलक्षणभेदाल्लोके मायानिर्मितहस्त्यश्वादौ मायाशब्दप्रयोगवदविद्याशब्दप्रयोगाभावात्कथं न वस्तुभेद इत्यत आह **उपपादितं चेति** । अनिर्वचनीयत्वे सति तत्त्वावभासप्रतिबन्धविपर्ययावभासहेतुत्वस्य तल्लक्षणत्वात्तस्य चोभयत्राविशेषात्तयोरभेद एव । न च सत्यभूतमन्त्रौषधादेरेव मायाशब्दार्थतया नेदं तत्र लक्षणमिति वाच्यम् । तत्र मायाशब्दाप्रयोगात् । द्रष्टारो हि दृष्टमिन्द्रजालमेव मायां वदन्ति न त्वदृष्टं मन्त्रादिकम् । मन्त्रान्वयव्यतिरेकौ तु काचादिवन्निमित्तकारणत्वेनाप्युपपन्नौ । अनिर्वचनीयेन्द्रजालादेः सत्यमन्त्राद्युपादानकत्वानुपपत्तेश्चानाद्यनिर्वचनीयमेव किञ्चित्तदुपादानं कल्पनीयम् । तस्य च मायाशब्दवाच्यत्वमुपादानोपादेययोरभेदादेवोपपन्नमिति न तत्र लक्षणानुपपत्तिः । स्वाश्रयव्यामोहकत्वतदभावाभ्यां भेदस्त्वसिद्धः । ईश्वरस्याप्यवतारेषु मायया व्यामोहदर्शनात् । नाप्यविद्यायाः स्वाश्रयव्यामोहनियमः । जलमध्येऽधोमुखत्वेन वृक्षेष्वध्यस्तेष्वपि तदूर्ध्वमुखतायां द्रष्टुरव्यामोहात् । अथात्र तीरस्थवृक्षदर्शनजन्यविवेकवशादव्यामोहोऽविद्यास्वभावस्तु व्यामोहक एवेति चेत् । तर्ह्यैन्द्रजालिकस्यापि प्रतीकारज्ञानादव्यामोहो माया तु स्वाभाव्यान्मोहिकैव । ऐन्द्रजालद्रष्टॄणां व्यामोहदर्शनात् । सति तु प्रतीकारज्ञाने तेऽपि न मुह्यन्त्येवेत्यज्ञानाश्रयत्वं न व्यामोहप्रयोजकम् ।





न च माया कर्तुरिच्छामनुसरति । मन्त्रौषधादिनिमित्तकारण एव कर्तुः स्वातन्त्र्यात् । तादृशं चेच्छानुसारित्वमविद्याया अपि दृष्टम् । नेत्रस्याङ्गुल्यवष्टम्भेन द्विचन्द्रभ्रमोत्पत्तेः । अविद्यास्वरूपे कर्ता न व्याक्रियत इति चेत् । सममितरत्रापि । प्रसिद्धिरपि शास्त्रीया तावदस्त्येव । भूयश्चान्ते विश्वमायानिवृत्तिरिति सम्यग्ज्ञाननिवृत्ताविद्यायां मायाशब्दप्रयोगात् । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः ।' इति स्मृतौ मायाविद्ययोः सामानाधिकरण्येनैकत्वसिद्धेश्चेत्यादिना विवरणकारेणैतदुपपादितमित्यर्थः । परमताविष्करणं चाविद्यानिरासेन मायानिरासोऽपि सिद्ध इति सूचनायेति द्रष्टव्यम् ।

**वा०र०—** **आवरणेति** । स्वरूपप्रकाशप्रतिबन्ध आवरणम् । अतदाकारप्रतिभासो विक्षेप इति कार्यद्वयमज्ञानमाययोः क्रमेणेति तद्भेदात्तयोर्भेद इत्यर्थः । **स्वातन्त्र्येति** । अज्ञानं स्वतन्त्रं पुरुषानधीनं माया तु स्वाश्रयपुरुषाधीनेति स्वातन्त्र्यादिना वाऽज्ञानमाययोः संज्ञाभेद इत्यर्थः ।

**स०व्र०—** ननु मायाविद्ययोः स्वाश्रयव्यामोहनाव्यामोहनरूपत्वेन भिन्नत्वात् कथमज्ञानस्य मायात्वेनोपसंहार इत्यत आह **अज्ञानमिति** । **अवस्थाभेदेनेति** । प्राधान्येन विक्षेपाच्छादनभेदेन वा इच्छाधीनत्वतदधीनत्वभेदेन वा । संज्ञाद्वयमित्यर्थः । तदुक्तं विवरणे । एकस्मिन्नपि वस्तुनि विक्षेपप्राधान्येन माया आच्छादनप्राधान्येनाविद्येति व्यवहारभेद इच्छाधीनत्वतद्वैपरीत्येन वा व्यवहारभेद इति । नन्वविद्यामाययोर्भेद एव किं न स्यादित्यत आह **उपपादितं चैतदिति** । अत्र केचिदाहुरतो अविद्यामयमिति वक्तव्यमित्यादिना पूर्वपक्षयित्वा अनिर्वचनीयतया तत्त्वावभासप्रतिबन्धविपर्ययाभासलक्षणस्याविशेषात् न लक्षणभेदात्तयोर्भेदः । 'तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यादिश्रुतौ सम्यग्ज्ञाननिवर्त्याविद्यायां मायाशब्दप्रयोगात् । 'तरत्यविद्यां विततां हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै विद्यात्मने नमः' इत्यादिस्मृतौ मायाविद्ययोः सामानाधिकरण्येन तत्त्वज्ञानेन तर्तव्यत्वाभिधानाच्च न तयोर्भेद इत्यादि महता प्रबन्धेनोपपादितमित्यर्थः ।

**॥ तदुक्तविषयस्य (जीवब्रह्मैक्यस्य) मीमांसाऽविषयत्वात् तदुपपत्त्यर्थकस्य बन्धमिथ्यात्ववर्णनस्य असङ्गतत्वोपपादनम् ॥**

**४८८ सु०— जीवब्रह्मणोरेकत्वं शारीरकमीमांसाविषयो न भवतीत्यतस्तदुपपत्त्यर्थं बन्धमिथ्यात्ववर्णनमसङ्गतमित्युक्तम् । तत् 'सत्यत्वात्तेने'त्यादिना प्रपञ्चयति ।**

**परि०—** **असङ्गतमित्युक्तमिति** । बन्धमिथ्यात्वं नैवमुक्तिरपेक्षत इत्यत्रोक्तमित्यर्थः ।





**आनन्दः**— ननूत्तरकारिकायामैक्यदूषणमयुक्तं विषयसिध्यर्थतयोपन्यस्तबन्धमिथ्यात्वस्यैतावतैव निरस्तत्वेनास्य प्रकृतानुपयोगादित्यतस्तदुपयोगमाह **जीवब्रह्मणोरिति** । **तदिति** । असङ्गतत्वमित्यर्थः । ऐक्यस्य विषयत्वखण्डनेन तस्य प्रपञ्चनमिति भावः ।

**वा०चं०**— ननु वेदस्य जीवब्रह्मैक्यविषयकत्वनिरासकोत्तरग्रन्थो न प्रकृतसङ्गत इत्यतो बन्धमिथ्यात्ववर्णनस्यानुपयुक्तत्वादिप्रतिपादकपूर्वग्रन्थसङ्गत्यभावेऽपि यत्सिद्धवत्कृत्य मिथ्यात्ववर्णनासङ्गति-निरूपणं तस्मिन् जीवब्रह्मणोरेकत्वस्य मीमांसाविषयत्वाभावे उपपादकाकाङ्क्षायां तत्प्रतिपादकत्वान्नासङ्गति-रित्याशयेन प्रकृतप्रमेयं दर्शयन्नेव तत्सङ्गतिं दर्शयति **जीवब्रह्मणोरिति** । उक्तं बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत इत्यत्रेत्यर्थः । **इत्यादिना अतो यथार्थबन्धस्येत्येतत्पर्यन्तेन** ।

**वा०र०**— **यत्सिद्धवत्कृत्येति** । यदिति द्वितीयान्तम् । सामान्ये नपुंसकम् । तेन मीमांसाविषयत्वा-भावस्य पुल्लिङ्गत्वेऽपि न दोषः । निरूपणमित्यनन्तरं प्राक् कृतमिति शेषः । तत्प्रतिपादकत्वादित्यत्र तच्छब्देन बुद्ध्या विविक्तोपपादकपरामर्शः । आदिपदसङ्कोचविषयमवधिं दर्शयति **अतो यथार्थेति** ।

**प्रदीपः**— ननु बन्धमिथ्यात्ववर्णनासङ्गतिप्रतिपादनप्रयोजनवद्विषयस्यापि निरस्तत्वादनवशेषात् सत्यत्वादित्याद्यानर्थक्यमित्याशङ्क्याह **जीवब्रह्मणोरिति** । उपनिषदाम् अद्वैतप्रतिपादकत्वान्न सर्वस्य भेदालम्बनतेति ।

**४८९ सु०— तथा हि । जीवब्रह्मणोरेकत्वं शारीरकमीमांसाशास्त्रविषयं प्रतिपद्यमानेन वेदस्यापि तद्विषयत्वं प्रतिपत्तव्यम् । तदितिकर्तव्यतारूपत्वान्मीमांसाशास्त्रस्य । करणेति-कर्तव्यतयोरेकविषयतानियमात् । न च वेदो जीवब्रह्मणोरेकत्वं वक्ति । सर्वस्यापि मन्त्रब्राह्मणोपनिषद्रूपस्य वेदस्य भेदावलम्बनत्वावभासनात् ।**

**बिन्दुः**— **करणेतिकर्तव्यतयोरिति** । प्रयाजादेराग्नेयादिफलफलकत्ववन्मीमांसावेदप्रतिपाद्य-प्रतिपादकत्वादित्यर्थः ।

**परि०**— **मन्त्रब्राह्मणेति** । देवताकाण्डकर्मकाण्डब्रह्मकाण्डरूपस्येत्यर्थः ।

**गु०दी०**— **मन्त्रब्राह्मणोपनिषद्रूपस्य** इत्यत्र मन्त्रपदेन ऋगादिसंहितावाक्यानि गृह्यन्ते ।

**आनन्दः**— **तथा हीति** । उपनिषत्स्वित्यर्थः ।





**कं०रा०— मन्त्रब्राह्मणेति** । यानि वाक्यानि प्रयोगकालेऽनुष्ठानोपयुक्ताभिधानप्रयोजकानि तानि मन्त्रशब्देनोच्यन्ते। मन्त्रभागादन्यो वेदभागो ब्राह्मणशब्देनोच्यते। तदुक्तं पूर्वतन्त्रे तच्चोदकेषु मन्त्राख्या शेषे ब्राह्मण-शब्द इति सूत्रद्वयेन। तदर्थस्तु। तस्यानुष्ठेयार्थस्य चोदकेषु प्रकाशकेषु मन्त्राख्या मन्त्रशब्दो, मन्त्रभागादवशिष्टवेदभागे ब्राह्मणशब्द इति । यद्यप्यदृष्टार्थमन्त्रे इदमव्याप्तम् । तथाऽप्यभियुक्तानां यत्र मन्त्रप्रसिद्धिः स मन्त्र इति मन्त्रलक्षणं ज्ञातव्यम्।

**वा०चं०— ननु** जीवब्रह्मैक्यस्य शारीरकमीमांसाविषयत्वाभावे हेत्वादेरनुक्त्या सत्यत्त्वात्तेनेत्यस्य नोक्तप्रपञ्चकत्वमित्यत आह **तथा हीति** । उत्तरवाक्ये हिशब्देन जीवब्रह्मैक्यस्य शारीरकमीमांसाऽविषयत्वे वेदाविषयत्वस्य हेतुत्वोक्त्यभिप्रायावगमान्नानुपपत्तिरित्याशयेन वेदाविषयत्वस्य वेदादिविषयस्य तत्र हेतुत्वं वदन्न मीमांसाविषयत्वाभावे वेदादिविषयत्वस्य हेतुत्वं युक्तमप्रयोजकत्वात्स्वरूपासिद्धत्वाच्चेत्याशङ्कां परिहरति **जीवेति** । हेतुशरीरे तदुपकर्तव्येतिविशेषणस्य विवक्षितत्वादैक्यविरुद्धभेदविषयकतायाः स्पष्टप्रतिभासत्वाच्च न दोषद्वयमपीति भावः।

**वा०र०— नोक्तप्रपञ्चकत्वमिति** । प्रतिज्ञायां हेतुर्जीवब्रह्मैक्यस्येत्यादिः । अनुक्तिश्च योग्यतया सत्यत्वात्तेनेत्यत्रेति स्फुटत्वान्नोक्तम् । मीमांसाविषयत्वाभावे वेदाविषयत्वस्य हेतुत्ववचनायोगः । तद्धेतुतायाः सत्यत्वात्तेनेत्युत्तरवाक्येऽप्रतीतेरित्याशङ्कां परिहरन् जीवेत्यादिवाक्यं वेदाविषयत्वहेतौ प्राप्तदोषपरिहारकतया योजयति **उत्तरवाक्य इति** । सत्यत्वादित्युत्तरभाष्य इत्यर्थः । **अवगमादिति** । हि यस्मादित्यादेस्तन्मूले उक्तेरिति भावः । **नानुपपत्तिः** । वेदाविषयत्वादेर्हेतुहेतुमद्भावस्यैवाप्रसक्तत्वादित्यनुपपत्तिर्नेत्यर्थः । तत्र मीमांसाविषयत्वाभावे तदितिकर्तव्यतारूपत्वादित्येतद्व्यावर्त्यशङ्काप्रदर्शनमप्रयोजकत्वादिति । सर्वस्यापि भेदावलम्बनत्वावभासा-दित्येतद्व्यावर्त्यशङ्काप्रदर्शनमसिद्धत्वाच्चेतीति ज्ञेयम् । ऐक्यं न शारीरकमीमांसाविषयः वेदाविषयत्वादिति प्रयोगोऽत्र विवक्षितः । जीवब्रह्मणोरित्यादिग्रन्थेनोक्तहेतौ प्राप्तदूषणद्वयपरिहारप्रकारं स्पष्टयति **हेतुशरीर इति** । **विशेषणस्येति** । वेदविशेषणस्येत्यर्थः ।

**स०व्र०—** बन्धमिथ्यात्ववर्णनासङ्गतिप्रतिपादनेन प्रयोजनवद्विषयस्यापि निरस्तत्वात् अनवशेषात् सत्यत्वादित्याद्यानर्थक्यमाशङ्क्याह **जीवब्रह्मणोरिति**।

॥ तत्त्वमस्यादिश्रुतीनां ऐक्यार्थे प्रामाण्याभावः ॥

**४९० सु०— ननु कथं वेदो न जीवब्रह्मणोरेकत्वपरः । मन्त्रब्राह्मणयोरतत्त्वावेदकयोः अविद्वद्विषययोः द्वैतालम्बनत्वेऽप्युपनिषदामद्वैतनिष्ठत्वात् । तत्र हि 'तत्त्वमसी'त्यादिवाक्यं साक्षाज्जीवस्य ब्रह्मतां प्रतिपादयति । 'सदेव सोम्ये'त्यादीनि वाक्यानि तत्पदार्थस्वरूप-**





**निरूपणपराणि तत्रैव समन्वितानि। 'अथ यो वेदेदं जिघ्राणी'त्यादीनि त्वंपदार्थपराण्यपि तत्रैव समन्वयं प्रतिपद्यन्ते। सृष्ट्यादिकथनं च ब्रह्मणो निष्प्रपञ्चताप्रतिपादनायानुवादतयोपयुज्यते। प्राणाद्युपासनानि चान्तःकरणस्य पराग्वृत्तिनिरोधद्वारेण अद्वैतप्रतिपत्तावेवोपयुक्तानि ॥ तदेवं वेदान्तानां जीवब्रह्मणोरेकत्वं विषय इति तदुपकरणभूता मीमांसाऽपि तद्विषयैवेति युक्तम् ॥ अत्रोच्यते ॥**

**बिन्दुः— अथ यो वेदेदं जिघ्राणीति**। छान्दोग्ये अष्टमप्रपाठके स तत्र पर्येति जक्षन् क्रीडन् रममाण इत्यादिवाक्यानन्तरम् अथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभि-व्याहराणीति स आत्माभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रमथ यो वेदेदं मन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान्पश्यन् रमते य एते ब्रह्मलोके इत्यादौ त्वंपदार्थस्य जीवस्य प्रतिपादितत्वादित्यर्थः। **प्राणाद्युपासनानीति**। तत्रैव सप्तमप्रपाठके नारदसनत्कुमारयोः संवादे नामैवैतन्नामोपास्वेति स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथा कामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति नाम्नो वाव भूयोस्तीति तन्मते भगवन् ब्रवीब्रीहीत्यादिना प्राणो वा आशाया भूयान् इत्यन्तेन योपासना विहिता सा चित्तस्य बाह्यविषयेषु या वृत्तिस्तन्निरोधेन यथा कथञ्चित्प्रत्यगात्मनि प्रावण्यार्थं शाखा चन्द्रमसाद्युपदेशतुल्ये-त्यर्थः। अथवा पृथक्साध्यद्वये हेतुद्वयमिति। प्रथमकल्पे उपपाद्योपपादकभावेन हेतुद्वयं व्याख्यातम्। इदानीं विशिष्टैक्यं न संभवति प्रत्यक्षविरोधात्। विरुद्धांशत्यागश्च न संभवति यावद्वस्तुभावित्वेन सत्यत्वादिति व्याख्येयमित्यलम्।

**परि०— तत्रैव** जीवस्य ब्रह्मतायामेवेत्यर्थः।

**वं०प०— तत्रैव** जीवब्रह्मैक्यप्रतिपादन एव। उत्तरत्रापि तत्रैवेत्यस्यायमेवार्थः।

**आनन्दः—** तर्हि प्राणाद्युपासनापरवाक्यानां का गतिरित्यत आह **प्राणादीति**। **पराग्वृत्तिः** बहिःपदार्थ-विषयिणी वृत्तिः। तेन दुःखादेः सत्यत्वादित्येतत्प्रत्यक्षविरोधोपपादकेन व्याख्याय प्रकारान्तरेण व्याख्याति। अथ वेदः मुख्यया वृत्त्या ब्रह्मैक्यपरो न प्रत्यक्षविरोधात्। वेदः भागत्यागलक्षणयाप्यैक्यपरो न दुःखादेः सत्त्वादित्येवं पृथक् साध्यद्वये हेतुद्वयमित्यर्थः।

**कं०रा०— परागिति**। जडवृत्तिनिरोधद्वारेणेत्यर्थः।





**श्रीनिधि०**— **अतत्त्वावेदकयोः** मिथ्याभूतार्थबोधकयोः । **अविद्वद्विषययोः** अविद्वदधिकारिकयोः । **तत्पदार्थस्वरूपनिरूपणपराणीति** । लक्षणया सृष्ट्याद्युपलक्षितचैतन्यमात्रबोधकानीत्यर्थः । **तत्रैव** जीवब्रह्मैक्य एव । **समन्वितानि** उपयुक्तानि । एवमुत्तरत्रापि । **निष्प्रपञ्चताप्रतिपादनायेति** । नेह नानेत्यादिनेति शेषः । **प्राणाद्युपासनानि** प्राणाद्युपासनावाक्यानि । **अद्वैतप्रतिपत्ताविति** । स्थूलारुन्धतीन्यायेनेति भावः ।

**वा०चं०**— नन्वेवं मन्त्रब्राह्मणयोः कर्मपरतया वेदान्तेष्वपि केषाञ्चिद्वाक्यानां विशिष्टजीवब्रह्मस्वरूपप्रतिपादकतया केषाञ्चित्सृष्ट्यादिप्रतिपादकतया परेषामुपासनापरतया सर्वेषामपि भेदपरत्वेन स्वरूपासिद्धिशङ्काप्रसरात् । न ब्रह्मतां वदेद्वेदो जीवस्य हीत्येतावता पूर्तेः सत्यत्वात्तेनेत्यादिर्हेतूपपादकांशो व्यर्थ इत्यतस्तद्व्यावर्त्यां शङ्कां दर्शयति **नन्विति** । मन्त्रेत्यादिना तयोः शारीरकमीमांसोपकर्तव्यत्वाभावं दर्शयति । येषां चोपकर्तव्यत्वं तेषां साक्षात्परम्परया वैक्यविषयत्वमाह **उपनिषदामिति** । तत्पदार्थस्वरूपपराणीति स्वरूपग्रहणेन विशिष्टपरत्वाभावमभिप्रैति **सृष्ट्यादीति** । निष्प्रपञ्चताप्रतिपादनं चैक्यवाक्योपयोगीति स्पष्टमेवेति ज्ञेयम् ।

**वा०र०**— सत्यत्वात्तेनेत्यादिभाष्यं हि वेदाविषयत्वहेतोरसिद्धिशङ्कापरिहाराय प्रवृत्तम् । न च तत्र तच्छङ्काप्रसक्तिरित्याशङ्कापरिहाराय नन्वित्युत्तरमूले तच्छङ्काप्रदर्शनं सार्थकमित्याशयं व्यञ्जयन्नसिद्धिशङ्काया अप्रसरं तावदुपपादयति **ननु मन्त्रेति** । **कर्मपरतयेति** । वेदाविषयत्वमसिद्धम् । मन्त्रब्राह्मणविषयत्वसंभवादिति न वक्तुं युक्तम् । तयोः कर्मपरतया ब्रह्मविषयकत्वस्यैवाभावेन तदैक्यविषयकत्वस्य सुतरामनुपपत्त्या तदुभयमाश्रित्य स्वरूपासिद्धिशङ्काया अप्रसरादित्युत्तरेणान्वयः । वेदान्तेष्वपीत्यनेन तेषां ब्रह्मविषयकतया तदभेदविषयकत्वशङ्का मन्त्रब्राह्मणपक्ष इव नासंभावनया निराकर्तुं योग्येति सूचितम् । **केषाञ्चिदिति** । सदेवेत्यादीनामथ यो वेदेत्यादीनां चेत्यर्थः । जीवब्रह्मेत्येतद्ब्रह्मजीवेति व्याख्येयम् । यथायोग्यं वा मूलोक्तवाक्यसंबन्धः । द्वितीयकेषाञ्चिदित्यस्य तदैक्षत बहु स्यामित्यादीनामित्यर्थः । **परेषामिति** । अन्येषामित्यर्थः । प्राणं ब्रह्मेत्युपासीतेत्यादिरूपाणां केषाञ्चिद्वाक्यानामिति यावत् । वेदान्तेष्वपि सर्वेषामपि भेदपरत्वेनेति प्रतिज्ञा । तदुपपादनं केषाञ्चिदित्यादितृतीयान्तत्रयम् । **इत्यादिरिति** । प्रत्यक्षेण विरोधत इत्यस्यादिपदेन ग्रहणम् । **मन्त्रेत्यादिनेति** । मीमांसा हि तत्त्वावेदिका विद्वद्विषया च । तथा च तादृशमीमांसोपकर्तव्यत्वं तयोर्न संभवतीति प्रतिपादनायातत्त्वेत्यादिविशेषणद्वयोपादानमित्यर्थः । **येषां चेति** । अत्र केषाञ्चिदित्यादिना प्रागुपदर्शितसदेवेत्यादि ब्रह्मादिस्वरूपादिपराणां वेदान्तवाक्यानामित्यस्य प्रकृततया वेदान्तेष्वपीत्युक्तिबलादेव येषां वेदान्तवाक्यानामित्यर्थस्यैव प्राप्त्योपनिषदां यच्छब्देन निर्देशस्याप्रसक्तेर्न स्त्रीलिङ्गप्रयोगापत्तिरिति ज्ञेयम् । **साक्षादिति** । तत्त्वमसीत्यादीनामपि वेदान्तवाक्यत्वरूपेण प्राप्त्यभिप्रायेण साक्षादित्युक्तम् ।

**स०व्र०**— उपनिषदामद्वैतप्रतिपादकत्वात् न सर्वस्य भेदालम्बनतेति शङ्कते **ननु कथमिति** । उपनिषदामद्वैतप्रतिपादकत्वमुपपादयति **तत्र हीति** । उपक्रमादिभिस्तत्रैव तात्पर्यावधारणात्, तत्प्रकरण-





पठितानामपि तदपेक्षितार्थबोधकत्वात्, अद्वैत एव तात्पर्यमित्यर्थः । सति अद्वैतप्रतिपादके महावाक्ये तदन्वयित्वेनान्येषामद्वैतनिष्ठत्वं स्यात् तदेव नास्तीति परिहरति **अत्रोच्यत इति** ।

**विठ्ठ०— पराग्वृत्तिनिरोधेति** । विषयेषु वृत्तिनिरोधेत्यर्थम्, बुद्धिशुद्धिद्वारेणेति यावत् ।

**प्रदीपः**— ननु कथमित्युपनिषदामद्वैतप्रतिपादकत्वमुपपादयति **तत्र हीति** । उपक्रमादिभिः तत्रैव तात्पर्यावधारणात् तत्प्रकरणपठितानामपि तदपेक्षितार्थबोधकत्वादद्वैत एव तात्पर्यमित्यर्थः । सत्यं द्वैतप्रतिपादक-महावाक्ये तदन्वयित्वेनान्येषामद्वैतनिष्ठत्वं न स्यात्तदेव नास्तीति परिहरति **अत्रोच्यत इति** ।

प्रत्यक्षविरोधः—

**४९१ सु०— आस्तां तावदियं समन्वयप्रक्रिया । 'तत्त्वमसी'त्यादिवेद एव तावदेकता-विषयो न भवति । तथा हि । 'तत्त्वमसी'त्यत्र त्वंपदार्थस्य जीवस्य तत्पदार्थब्रह्मता मुख्यया वृत्त्या वा प्रतिपादनीया विरोधिभागत्यागेन स्वरूपमात्रलक्षणया वा । नोभयथाऽपि संभवतीत्याह सत्यत्वादिति ।**

## अनु०— सत्यत्वात्तेन दुःखादेः प्रत्यक्षेण विरोधतः ॥
## न ब्रह्मतां वदेद्वेदो जीवस्य हि कथञ्चन ॥

**वेदः** तत्त्वमसीत्यादिः । **कथञ्चन** उक्तप्रकारद्वयेनापि । **जीवस्य** त्वंपदार्थस्य तत्पदार्थ-**ब्रह्मतां न वदेद् हि** यस्मात् 'तस्मान्मीमांसाऽपि तद्विषया न भवती'ति शेषः । कुतः । **प्रत्यक्षेण विरोधतः** । कथम् । **तेन** प्रत्यक्षेण **दुःखादेः सत्यत्वात्** सत्यत्वावधारणात् ।

**वं०प०— उक्तप्रकारद्वयेनेति** । मुख्यवृत्त्या लक्षणया चेत्यर्थः ।

**कं०रा०— स्वरूपमात्रलक्षणया वेति** । यद्यपि पूर्वतन्त्रे रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोतीत्यत्रेतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात्तदा तु रथघोषाभ्यामिति द्विवचनं स्यात् । समाहाराश्रयणे तु द्वे अपि पदे समाहारलक्षणार्थे स्याताम् । ततो वरं पूर्वपदमात्रे लक्षणावृत्तत्वमङ्गीकृत्य षष्ठीसमासाश्रयणमिति पदद्वय-लक्षणाश्रयणस्य जघन्यत्वोक्तेस्तत्त्वंपदयोर्लक्षणाश्रयणेन तत्त्वमसीत्यादेर्मायावाद्युक्तं शोधितचैतन्यैक्यपरत्वं न संभवति । किं त्वेकपदामुख्यवृत्त्याश्रयणेन त्वं तन्नियम्योऽसीत्याद्यर्थपरत्वमेव न्याय्यम् । उक्तं चैतदेवाभिप्रेत्याचार्य-





चरणैर्विष्णुतत्त्वविनिर्णये न च जीवब्रह्मणोरभेदे कश्चिदागम इति । तथाऽपि तत्त्वमसीत्यादेः पूर्वतन्त्रन्यायविरुद्धमपि पदद्वयलक्षणैक्यपरत्वं मायावादिनाऽङ्गीकृतमिति तथाऽनूदितम् । न च वाच्यमुपक्रमादिना निर्विशेषे तात्पर्यस्य निश्चितत्वात्तत्त्वमसीत्यादौ पदद्वयलक्षणापरत्वकल्पनं युक्तमिति । सदेवेत्याद्युपक्रमस्थसदादिशब्दैः सत्त्वादि-विशिष्टस्यैव प्रतीतेरुपक्रमादिना सविशेष एव तात्पर्यस्य निश्चितत्वात् । न चोपक्रमस्यापि निर्विशेषे तात्पर्यग्राहकमुपक्रमाद्यन्तरमस्ति । न च वाच्यं विनिगमकाभावात्पदद्वयलक्षणेति । असिपदान्वयार्थं तत्पद एव लक्षणायाः कल्प्यत्वात् । तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति तानि ह वा एतानि त्रीण्यक्षराणि सत्ति यमिति तद्यत्सदमृतं अथ यत्ति तन्मर्त्यं अथ यद्यं तेनोभे यच्छतीति छन्दोगश्रुत्युक्तस्य मुक्तामुक्तनियामकत्वस्यैव । 'गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम् । वेदोऽयमाश्रयत्यर्थं को नु तं प्रतिकूलयेदि'ति न्यायेन सत्यशब्दार्थत्वेन ग्राह्यतया तत्सत्यमिति वाक्येन 'सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इत्यादिवाक्येन च विरोधात् । तत्त्वमसीत्यस्य जीवब्रह्मैक्यपरत्वासंभवाच्च । 'पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्तेनामृतत्वमेति, जुष्टं यदा पश्यत्यन्यमीशमि'त्यादौ भेदज्ञानेनैव फलश्रवणाच्च । अन्तर्यामिब्राह्मणविरोधाच्च । अत्र ह्येकविंशतिकृत्वो-ऽन्तर्यामित्वमभ्यस्तम् ।

**श्रीनिधि०— आस्तां तावदिति** । प्रमिते सति खलु धर्मिणि तत्र वाक्योपयोगचिन्तेति भावः । **विरोधिभागत्यागेनेति** । विरोधिभागः सर्वज्ञाल्पज्ञतादिः ।

**वा०चं०—** नन्वेवं वेदान्तानामद्वैते पर्यवसानं वदन्तं प्रति सत्यत्वादीत्यादि न सङ्गतम् । सर्वत्र प्रत्यक्षविरोधादेरयोगादित्यतो महावाक्यस्यैक्यपरत्वे निरस्तेऽन्येषां तत्परत्वाभावः स्वतः सिद्ध इत्यभिप्रेत्य भाष्यकारेण महावाक्य एव प्रत्यक्षविरोधादेरभिधानान्नानुपपत्तिरित्याशयेनाह **आस्तामिति** । प्रक्रियेति तन्निराससौलभ्यं सूचयति । कथञ्चनेत्येतदनुसारेण संभावितं कल्पद्वयं दर्शयति **तथा हीति** । मन्त्रादेरैक्यपरत्वस्य परेणाप्यनङ्गीकारात्सदेवेत्यादिजीवेश्वरस्वरूपसृष्ट्यादिप्राणाद्युपासनादिवाक्यानां चेश्वरानुवादेन जीवैक्यबोधकतद्योह-मित्यादेश्च प्रत्यक्षविरोधादिनैक्यपरत्वाभावोपपादनासंभवादाह **वेद इति** । जीवानुवादेन ब्रह्मैक्यविधायक-वाक्यान्तरमादिपदसङ्ग्राह्यम् । कथञ्चनेत्यादिकस्य केनापि हेतुनेत्यर्थासंभवात्प्रकारद्वयनिराकरणं मूलारूढं कर्तुमाह **कथञ्चनेति** । प्रकृतप्रपञ्चकतासिद्धये हिशब्दबललब्धं साध्यमध्याहरति **मीमांसाऽपीति** । कथं प्रत्यक्षविरोध इत्यतः प्रत्यक्षेण दुःखादेः सत्यतावगमात्सत्यभूतविरुद्धधर्मविषयकं प्रत्यक्षं कथं न भेदविषयकमिति तद्विरोध इत्याशयेन प्रत्यक्षविरोधोपपादकतया तेन सत्यत्वादित्येतद्व्याचष्टे **तेनेति** । मुख्यवृत्त्या विशिष्टाभेदपरत्वे विशिष्टभेद-विषयकप्रत्यक्षविरोधः । लक्षणया स्वरूपाभेदपरत्वे च न प्रत्यक्षविरोधः । स्वरूपमात्रभेदस्य प्रत्यक्षेणाविषयीकरणात् । किन्तु तत्र विरोधिभागत्यागांशे दुःखादेर्विरोधिनः सत्यतायाः प्रत्यक्षेण विषयीकरणेन मिथ्यात्वरूपत्यागासंभवात् । एवं च प्रत्यक्षेण विरोधत इति नोभयत्रैकप्रकारं विशिष्टाभेदपरत्वे दुःखादेः प्रत्यक्षेण विषयीकरणादित्येतावता पूर्तेः सत्यत्वादिति नावश्यक्यं विरोधिभागत्यागांशे चावश्यकम् ।





**वा०र०—** नन्वेवं वेदान्तानामित्यत्र सर्वेषामिति पूरणीयम् । अन्यथा कतिपयवेदान्तवाक्यानामपि तत्त्वमसीत्येतत्तुल्यतया प्रत्यक्षविरोधाक्रान्तत्वेन शङ्कानुदयप्रसङ्गादिति ज्ञेयम् । सदेवेत्यादि जीवेति पाठः । वाक्यानामीश्वरेति पाठः । सदेवेत्यादीनि च तानि जीवेश्वरस्वरूपसृष्ट्यादिप्राणाद्युपासनादिवाक्यानि च तथोक्तानि तेषामिति योज्यम् । उपासनादेर्वाक्यानि तथोक्तानीत्यस्य तत्पराणीत्यर्थः । **उपपादनासंभवादिति** । जीवस्वरूपादिपराणामैक्यप्रतिपादकत्वस्यैवाभावेनाप्रसक्तप्रतिषेधापत्तेरीश्वरानुवादेन जीवैक्यबोधकवाक्यस्यैक्यप्रतिपादकत्वेऽपि सर्वेषां स्वात्मैव प्रत्यक्षो नत्वीश्वर इति धर्मिप्रत्यक्षाभावेन तद्धर्मिकजीवप्रतियोगिकभेदप्रत्यक्षस्यैवानुदयेन तद्विरोधस्याप्रसरात्तेन विरोधेन तद्वाक्यस्यैक्यपरत्वं नेत्युपपादनायोग इति भावः । **वाक्यान्तरमिति** । अनेनैव त्वं तदसीति योजनया जीवानुवादेन ब्रह्मैक्यविधायकं तत्त्वमसीति वाक्यमिति सूचितम् । अर्थासंभवादिति हेतुनिराकरणस्य प्रकृतेऽभावादिति भावः । **प्रपञ्चतेति** । प्रपञ्चयतीति पूर्वमूलोक्तेति योज्यम् । प्रत्यक्षेण दुःखादेः सत्यत्वादित्यन्तमूलोक्तयोजनायां प्रत्यक्षविरोधादिव्युत्पादनप्रकारं सूचयंस्तस्य प्रकारस्यैकप्रकारत्वाभावेन पक्षद्वयसाधारण्यायोग इत्यस्वरसं च दर्शयन् तर्हि तथा योजनायां प्रत्यक्षविरोधाद्युद्भावनायोग इत्यतोऽत्र कथञ्चिदेव पक्षद्वयसाधारण्येन दूषणाभिधानमिति तद्गतिं च कथयन्न च वेत्युत्तरपक्षस्वारस्यं वदन्नेव तत्पक्षं विवरणपूर्वकं समुत्थापयति **मुख्यवृत्त्येत्यादिना** । अभेदपरत्वे । तत्पक्ष इति योज्यम् । एवमुत्तरत्रापि । **त्यागांशे चेति** । दुःखादेः (सत्यत्वात्तेनेत्यादेश्च लक्षणापक्षदूषणत्वे मुख्य एवोपयोग इत्येवंरूपमुख्योपयोगेन यत्तत्तत्स्वारस्यं प्रत्यक्षविरोधदुःखादि) विरोधिन इत्युक्तरीत्येति भावः ।

**स०व्र०—** ननु कथं नास्ति तत्त्वमसीत्यादीनां विद्यमानत्वादित्याशङ्क्य तेषां अद्वैतविषयत्वाभावं प्रतिज्ञातमुपपादयति **तथा हीति** । पूर्वं तत्त्वमस्यादिवाक्यस्य मुख्यया वृत्त्या विरोधिभागत्यागेन स्वरूपलक्षणया वा ऐक्यपरत्वाभावे प्रत्यक्षविरोधं नियामकत्वेनोक्त्वा तदुपपादकत्वेन सत्यत्वात्तेन दुःखादेरित्येतदुपतिष्ठत इति योजितम् ।

**चषकः—** **विरोधिभागपरित्यागेनेति** । सर्वज्ञत्वाज्ञत्वादिरूपभेदकधर्माविवक्षयेत्यर्थः ।

**प्रदीपः—** ननु कथं नास्ति तत्त्वमसीत्यादीनां विद्यमानत्वादित्याशङ्क्य तेषां अद्वैतविषयत्वाभावं प्रतिज्ञातं उपपादयति **तथा हीति** । अथवेति नात्र मुख्यवृत्तिः संभवति । विरुद्धधर्माधारयोरैक्यस्य प्रत्यक्षविरुद्धत्वान्न विरुद्धभागस्त्यागः सत्यत्वादित्यर्थः ।

**४९२ सु०— अथवा पृथक् साध्यद्वये हेतुद्वयम् । इदमुक्तं भवति । न तावत् 'तत्त्वमसी'-त्यादिवाक्यं त्वंपदमुख्यार्थस्य तत्पदमुख्यार्थैक्यप्रतिपादकमिति युक्तम्; प्रत्यक्षविरोधात् । दुःखादिविशिष्टो हि त्वंपदमुख्यार्थः । तस्य निर्दुःखत्वाद्युपेततत्पदमुख्यार्थैक्यप्रतिपादने कथं न प्रत्यक्षविरोधः ॥ स्ववचनविरोधस्य चोपलक्षणं चैतत् ।**





**परि०**— पूर्वं प्रत्यक्षविरोध इत्येतदुपपादकत्वेन सत्यत्वादितिपादो व्याख्यातः । अधुना मुख्यवृत्त्या ब्रह्मतां न वदेदित्यत्र प्रत्यक्षविरोध इत्ययं हेतुः । लक्षणया विरुद्धभागत्यागेन ब्रह्मतां न वदेदित्यत्र सत्यत्वात्तेन दुःखादेः इत्ययं हेतुरित्याह **अथवा पृथक्साध्येति** । तद्व्यनक्ति **इदमित्यादिना । स्ववचनविरोधस्येति** । अपसिद्धान्तस्येत्यर्थः ।

**गु०दी०**— **स्ववचनविरोधस्य** इत्यस्य ''तत्त्वमसी''ति वाक्यस्थतत्त्वंपदयोः मूकोऽहमितिवत्परस्पर-विरोध इत्यर्थः ।

**यादु०**— पूर्वं 'सत्यत्वात्तेन दुःखादेः' इत्येतत्प्रत्यक्षविरोधोपपादकतया व्याख्यातमिदानीं मुख्यया वृत्त्या तत्त्वमस्यादिवेदस्यैक्यपरत्वाभावरूपे प्रथमसाध्ये प्रत्यक्षविरोधस्य हेतुत्वं जहदजहल्लक्षणया तत्परत्वाभावरूपे तु द्वितीयसाध्ये सत्यत्वात्तेनदुःखादेरित्यस्य हेतुत्वमित्युक्तसाध्यद्वये पृथक् हेतुद्वयमित्याह **अथवा पृथगिति** । तदेव दर्शयति **इदमुक्तं भवतीति । स्ववचनविरोधस्य चेति** । भिन्नोऽचिन्त्य इत्यादिस्ववचनविरोधस्येत्यर्थः । यद्वा भेदप्रतिपादकशकुनिसूत्रादिदृष्टान्ताभिधानरूपस्ववचनविरोधस्येत्यर्थः । अथवा तत्त्वंपदयोरदुःखदुःख्यादिपरतया माता वन्ध्येतिवत्स्ववचनविरोध इत्यर्थः ।

**आनन्दः**— ननु वेदस्य मुख्यया वृत्त्या जीवब्रह्मैक्यपरत्वाभावे प्रत्यक्षविरोधस्य हेतुत्वसंभवेऽपि लक्षणया तत्परत्वाभावेन दुःखादिसत्त्वस्य हेतुत्वम् । तस्य सत्यत्वेऽपि अविवक्षाया अनित्यत्वेन वा लक्षणया तत्परत्वोपपत्तौ दोषाभावादित्यत आह **इदमुक्तं भवतीति । एतदिति** । विरोध इत्येतदित्यर्थः । तदित्यनेन सार्वज्ञादिविशिष्टमनूद्य त्वमित्युक्त्वा सार्वज्ञादिविशिष्टाभेदे प्रोच्यमाने स्ववचनविरोध इत्यर्थः । सार्वज्ञादिविशिष्टवचन एव भेदस्य सिद्धत्वादिति भावः ।

**कं०रा०**— **साध्यद्वये हेतुद्वयमिति** । तत्त्वमसीत्यादिवाक्यं त्वंपदमुख्यार्थस्य तत्पदमुख्यार्थैक्यप्रतिपादकं नेत्यत्र साध्ये प्रत्यक्षविरोधो हेतुस्तदेव वाक्यं मिथ्याभूतविरोध्याकारत्यागेन चिन्मात्रलक्षणयैक्यबोधकं नेत्यत्र दुःखादेः सत्यत्वाद्दुःखादेर्विरोध्याकारस्य प्रत्यक्षेण सत्यत्वावगमादिति हेतुरिति । पृथक् साध्यद्वये हेतुद्वयमित्यर्थः । **कथं नेति** । दुःखादिविशिष्टस्य निर्दुःखत्वाद्युपेतचैतन्यात्प्रत्यक्षेण भेदस्यैव ग्रहणादिति भावः ।

**श्रीनिधि०**— **पृथक्साध्यद्वय इति** । तत्त्वंपदमुख्यार्थयोरैक्याभावे प्रत्यक्षेण विरोधत इति हेतुः । विरोध्याकारपरित्यागेन तत्त्वंपदलक्ष्यार्थयोरैक्ये तेन सत्यत्वावगमादिति हेतुरिति भावः । तदेव दर्शयति **इदमुक्तं भवतीत्यादिना** । स्ववचनविरोधस्योपलक्षणं चैतदिति । दुःखादिविशिष्टस्य दुःखादिरहितेन ऐक्यमित्युक्ते दुःखादिमान् दुःखादिरहितः दुःखादिमान् इति वाक्यं स्यात् । एवं च स्ववचनविरोध इत्यर्थः । केचित्तु स्ववचन-विरोधः तत्पदार्थे दुःखाद्यभावप्रतिपादकश्रुतिरूपस्ववचनविरोध इत्याहुः ।





**वा०चं०—** एवं च कथञ्चित्प्रत्यक्षविरोधस्य सत्यत्वात्तेनेत्यस्य चोभयत्राप्युपयोग इत्याशयेन प्रत्यक्षविरोधत इत्यादि व्याख्याय मुख्योपयोगेन तत्तास्वारस्यानुरोधेन विशिष्टाभेदपरत्वाभावे प्रत्यक्षविरोधत इत्यस्य विरोधिभागत्यागेन स्वरूपमात्राभेदपरत्वाभावे सत्यत्वात्तेनेत्यस्य हेतुसमर्पकत्वमित्याशयेन पक्षान्तरमाह **अथवेति** । ननु विशिष्टाभेदपरत्वे कथं प्रत्यक्षविरोधः । दुःखादिविशिष्टस्य तदभावविशिष्टाभेदबोधने वन्ध्या पुत्रवतीत्यादाविव स्पष्टस्ववचनविरोधस्य कथमनुक्तिः । स्वरूपाभेदपरत्वे च सत्यत्वात्तेनेत्यस्य नोपयोगः । विरोधिभागत्यागस्याविवक्षादिनाऽपि संभवात्तदंशेऽपि नोपयोग इत्यतो विशिष्टाभेदपक्षे प्रत्यक्षविरोधमुपपादयंस्तत्पक्षे स्ववचनविरोधस्य स्पष्टतया मुखतोऽनुक्तिः । सत्यत्वात्तेनेत्यस्य च मिथ्यात्वरूपविरोधिभागत्यागांश उपयोगः । अविवक्षानित्यत्वपक्षयोः स्पष्टदूषणतया स्थलान्तरे भाष्यकारेण निरस्ततया परानभ्युपेततया चात्रानिरास इत्याशयेन भाष्यतात्पर्यमाह **इदमुक्तं भवतीति** ।

**वा०र०—** **इत्यादि व्याख्याय** इत्यादि भाष्यं दुःखादेः सत्यत्वादित्यन्तेन मूलेन व्याख्यायेत्यर्थः । **मुख्योपयोगेनेति** । प्रत्यक्षविरोधस्य लक्षणया स्वरूपमात्राभेदपरत्वेन मुख्य उपयोगः । किन्तु विरोधिभागत्यागांश इति पूर्वपक्षे । अत्र विशिष्टाभेदपरत्वपक्ष एव प्रत्यक्षविरोधाभिधानमित्यङ्गीकारात्तस्य च तत्रोपयोगान्मुख्य एवोपयोगः । तथा सत्यत्वयोः स्वारस्यं तदनुरोधेनेति योज्यम् । अभेदपरत्वाभाव इत्येतद्भावे चेति चशब्दान्तर्भावेन योज्यम् । अनुक्तिरुपयोग इत्यनयोरित्याशयेनेत्यनेन संबन्धः । **इत्याशयेनेति** । इत्याशयसत्त्वात्कथमनुक्तिरित्यादि-शङ्कानिरासोपपत्तिरिति मनसि कृत्वेत्यर्थः ।

**स०व्र०—** अधुना तत्त्वमस्यादिवाक्यस्य मुख्यवृत्त्या ऐक्यपरत्वाभावरूपसाध्ये प्रत्यक्षेण विरोधात् इत्यस्य हेतुत्वप्रतिपादकत्वम् स्वरूपमात्रलक्षणयैक्यपरत्वाभावरूपसाध्ये तु सत्यत्वात्तेन दुःखादिरित्यस्य हेतुसमर्पकत्वमिति पृथक्साध्यद्वये हेतुद्वयमित्याह **अथवेति** ।

**वि०ठ०—** **पृथक्साध्यद्वयेति** । तत्पदमुख्यार्थस्य त्वंपदमुख्यार्थैक्यप्रतिपादकत्वाभावे साध्ये प्रत्यक्षेण विरोध इत्ययं हेतुः भागत्यागलक्षणयैक्यप्रतिपादकत्वाभावे साध्ये सत्यत्वात्तेन दुःखादेरित्ययं हेतुरित्यर्थः । हेतुत्वं प्रदर्शयितुमाह **इदमुक्तमिति** । स्ववचनविरोधस्येति अपसिद्धान्तस्येत्यर्थः । विशिष्टस्य मिथ्यात्वेन तदैक्यानङ्गीकारादिति भावः ।

**४९३ सु०— नापि जहदजहल्लक्षणया । विरोध्याकारपरित्यागो हि विवक्षाभावमात्रेणोत तस्यानित्यत्वेन अथवा मिथ्यात्वेन ॥ नाद्यः तन्मात्रेण विरोधानिवृत्तेः । न हि पृथिवीत्वाद्य-विवक्षामात्रेण क्षितिजलादेरभेदो वक्तुं शक्यते । विरोध्याकारस्याविवक्षायामप्यनपायात् ॥ न द्वितीयः 'असी'ति वर्तमाननिर्देशायोगात् । तथा सति 'तत्त्वं भविष्यसी'ति स्यात् ॥ न तृतीयः प्रत्यक्षेण दुःखादेर्विरोध्याकारस्य सत्यत्वावगमादिति ।**

**बिन्दुः— नापि जहदजहल्लक्षणयेति।** द्विविधा लक्षणेति सर्वतान्त्रिकसंमता तत्र यस्य पदस्य शक्योऽर्थः वाक्यार्थान्वयप्रतियोगी न भवति सा जहत्स्वार्था वृत्तिः । यथा गङ्गायां घोष इत्यत्र तीर............रकैफ गङ्गापदादुपस्थितिर्भवतीति नैयायिकादयः । भाट्टादयस्तु तत्रापि तीरं भासमानं गङ्गासंबन्धित्वेनैवेति सर्वापि वृत्तिरजहत्स्वार्थैकशब्दः कदापि जहात्येव । तथात्वे शब्दार्थसंबन्धस्य अनित्यत्वापत्त्या वेदाप्रामाण्यापत्तिरित्याहुः । अजहल्लक्षणया यत्र लाक्षणिकपदस्य मुख्यार्थोऽपि वाक्यार्थान्वयी भवति। यथा काकेभ्यो दधि रक्ष्यतामित्यादि। तत्रापि ये युगपद्वृत्तिद्वयविरोधं मन्यन्ते ते शक्याशक्योपसङ्ग्राहकेण दध्युपघातकत्वेनैव काकस्यापि बिडालादिसाधारणो बोध इति विदन्ति । ये तु तात्पर्यानुरोधाद्वृत्तिद्वयेनापि युगपद्बोध इत्यभ्युपगच्छन्ति तेषां काकत्वादिप्रकारिकैवोपस्थितिरिति हृदयम्। मायावादिनस्तु सोऽयं देवदत्त इति वाक्ये तत्त्वमस्यादिवाक्ये च पदद्वयेऽपि विशिष्टाकारत्यागात् विशेष्यमात्रविषयकज्ञानाज्जहदजहल्लक्षणेति तृतीयं प्रकारमाहुस्तदनुवादोऽयमित्यदोषः। परत्वनिर्दोषत्व-...............श्रुतवेदान्तानां हि आबाल्याज्जायमानाभेदप्रतीतिः पूर्वभावित्वाद्दुर्बलवेदान्तश्रवणाज्जायमाना अभेदप्रतीतिः परत्वात्प्रबलतया पूर्वभाविन्या भेदश्रुतेर्वा प्रबला इति वाचस्पतिमिश्रः अधिकरणन्यायेन स्वग्रन्थे प्रतिपादयति स्म। तथाहि षष्ठे जैमिनिसूत्रम्। पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति। ज्योतिष्टोमे बहिष्पवमानस्तोत्रार्थं सर्पतामृत्विजामपच्छेदे प्रायश्चित्तमाम्नातम् । यदि प्रतिहर्तापच्छिन्द्यात्सर्ववेदसं दद्यात्। यद्युद्गातापच्छिन्द्याददक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत तत्र तद्दद्यात्पूर्वस्मिन्दास्यन् स्यादिति। तत्र युगपदुभयापच्छेदे परस्परविरुद्धस्य प्रायश्चित्तस्य युगपदनुष्ठातुमशक्यत्वात् विकल्प इति पूर्वाधिकरणे स्थितम् । अत्र तु क्रमेणापच्छेदे किं पूर्वोत्पन्ननिमित्तं प्रायश्चित्तं कर्तव्यमुतोत्तरोत्पन्ननिमित्तमिति संशयः। तत्र पूर्वनिमित्तमसञ्जातविरोधमवगच्यते तद्विरुद्धमशक्यमवगन्तुमुत्तरम्। अतः पूर्वबलीयस्त्वमिति पूर्वपक्षः। सिद्धान्तस्तु नात्र पूर्वेणोत्तरज्ञानस्यापत्तिः शक्यते निरोद्धुं प्रत्यक्षेणेव। वाक्येन तु तदपगम-स्तूत्पद्यते एव तच्चोपजायमानं स्वविरोधिपूर्वज्ञानं बाधमानमेवोत्पद्यते तेनोत्पन्नमपि पूर्वं प्रायश्चित्तज्ञानं मिथ्या भवति बाधितस्य उत्तरस्य तु न किञ्चिद्बाधकमस्ति, न हि पूर्वविज्ञानमुत्तरबाधेनोत्पद्यते । तस्यामवस्थायां विरोधस्यानुपसंजातत्वात्। तस्मात् पूर्वदौर्बल्यमिति। तद्वदिहापि ...........दप्रत्यक्षस्य ........तदेतत्सर्वं यजमानः प्रस्तर इति वाक्येऽपि समानम्। तत्राप्येतद्वाक्यं ..............यजमानस्य प्रथमगृहीतबर्हिर्मुष्टिविशेषरूपस्य प्रस्तरस्य च प्रत्यक्षेण भेदे ............... वाक्येन बाध्येतेत्यर्थः । अपच्छेदन्यायस्तु विषम एव। न हि तत्र सर्वथा पूर्वस्य बाधः। किन्तु .................व्युत्क्रमेणापच्छेदे च वाक्यद्वयस्यापि प्रामाण्योपपत्तेः । न ह्येवं प्रत्यक्षप्रामाण्यस्यावकाशः संभवति । न ह्यद्यापि





भेदमिथ्यात्वं सिद्धमस्ति येन शुक्तिप्रत्यक्षेणारोपितस्य रजतप्रत्यक्षस्येवात्यन्तबाधो युक्त एवेति वक्तुमवसरो लभ्येतेति भावः ।

**परि०**— पक्षद्वयं बहिरेव निरस्य तृतीयपक्षदोषं मूलारूढतया दर्शयति **न तृतीय इत्यादिना ।**

**गु०दी०**— **विरोध्याकारस्य सत्यत्वावगमात्** इत्यत्र तत्त्वंपदोक्तैक्यान्यथानुपपत्त्यैव विरोध्याकारपरित्याग इति या शङ्का साऽप्यस्य वाक्यस्य तत्त्वंपदोक्तजीवब्रह्मैक्यप्रतिपादकत्वे सिद्धे तदन्यथानुपपत्त्या विरोध्याकारपरित्यागः । श्रौततत्त्वंपदप्रमितयोर्विरोध्याकारयोस्तूर्ष्णीं परित्यागायोगात् तत्त्यागे चायोग्यताख्यदोषाभावात् श्रौततत्त्वंपदयोः ऐक्यप्रतिपादकत्वमित्यन्योन्याश्रयदोषग्रस्तत्वादुपेक्षणीया । किञ्च तत्त्वंपदमुख्यार्थयोरैक्यस्य प्रत्यक्षादिविरुद्धत्वेनायोगे सिंहो देवदत्त इत्यादाविव गौण्या लक्षणया वा अर्थान्तरमेव वक्तव्यम् । न तु श्रौतनित्यपदार्थयोरर्धजरतीयन्यायेन एकांशत्यागं अपरांशात्यागं चाङ्गीकृत्य तस्यैवार्थस्य घटनाय प्रेक्षावता प्रयतितव्यम् । तथासति मुखमेव कमलमित्युक्ते अप्राप्तमुखकमलैक्यसंपादनाय स्वमुखस्थनासिकादेरपि छेदप्रसङ्गात् । सोऽयं देवदत्त इत्यत्रापि योऽतीतदेशकालसंबद्धोऽभूत्स एवैतद्देशकालसंबद्ध इति विशेषणद्वयमपि ऐक्याविरोध्येव । नापि तयोरेकस्यापि त्यागः उभयांशत्यागस्तु दूरापास्त एव । तथासति प्रत्यभिज्ञया क्वापि स्थैर्यासिद्धेः । तर्हि कथमिदानीं तद्देशाकालसंबन्धो नास्तीति चेत्सत्यम् । तदानीन्तनदेशकालादीनामनित्यत्वेन नाशादेवेदानीं तदभावो न त्वैक्यघटकतयेति सर्वैरपि वक्तव्यत्वात् । कथमन्यथा य एव कुण्डली स एव दण्डीत्यत्रोभयोस्सहैव सद्भावः । अतः परप्रक्रियायाः न क्वापि मूलं पश्याम इति च दूषणमनुसन्धेयम् ।

**यादु०**— द्वितीयं हेतुं सङ्गमयितुं विकल्पेन पृच्छति **विरोध्याकारपरित्यागो हीत्यादिना ।**

**वं०प०**— **भविष्यसीति ।** विरोध्याकारस्यानित्यत्वेन यदा विनाशस्तदा तत्त्वं भविष्यसीत्यर्थः ।

**कं०रा०**— **नापीति ।** तत्त्वमसीत्यादिवाक्यं भागत्यागलक्षणया त्वंपदलक्षितस्य तत्पदलक्षितेनैक्यप्रतिपादकमिति न युक्तमित्यन्वयः । तत्पदलक्षणा हि मुख्यार्थैकदेशं विरोधिदुःखाद्याकारं जहाति तदेकदेशभूतविशेष्यं तु न जहाति, त्वंपदलक्षणा हि मुख्यार्थैकदेशं विरोधिदुःखाद्याकारं जहाति तदेकदेशभूतविशेष्यं तु न जहातीति जहदजहल्लक्षणेत्युच्यते । **वर्तमानेति ।** इदानीं विरोध्याकारस्य सत्त्वेनैक्याभावात् त्वं तदसीति वर्तमाननिर्देशस्यायोगादित्यर्थः । **तथा सतीति ।** विरोध्याकारस्यानित्यत्वे सति तन्निवृत्त्यनन्तरं जीवब्रह्मैक्यस्य भविष्यत्वात्तत्त्वं भविष्यसीति निर्देशः स्यादित्यर्थः । प्रत्यक्षेणेति तेनेत्यस्य व्याख्यानम् ।

**श्रीनिधि०**— **जहदजहल्लक्षणयेति ।** एकदेशं विरोधिनं जहत्या विशेष्य भागं वा जहत्येत्यर्थः ।

**स०व्र०**— **न द्वितीया इति ।** विरोध्याकारस्यानित्यत्वेऽपि इदानीमविनाशित्वात् भाविब्रह्मज्ञानविनाश्यत्वाच्चेत्यर्थः ।





**विठ्ठ०— विवक्षाभावमात्रेणेति** । वस्तुतो विरोध्याकारस्य सत्त्वेऽपि तदविवक्षितत्वेत्यर्थः । **अनित्यत्वेनेति** । मुक्तौ नाशानन्तरमैक्योक्तिरिति भावः ।

**चषकः— जहदजहल्लक्षणयेति** । विशेषणीभूतसर्वज्ञत्वाज्ञत्वादिपरित्यागाज्जहतीति विशेष्यभूतचैतन्यांशस्यापरित्यागादजहतीति चेयं लक्षणा व्यपदिश्यते ।

**प्रदीपः— न द्वितीय इति** । विरोध्याकारस्यानित्यत्वेऽपि इदानीमपि नष्टत्वाद्भाविब्रह्मज्ञानविनाश्यत्वाच्चेत्यर्थः ।

॥ श्रुतिविरोधः ॥

यजमानप्रस्तरत्ववत् जीवब्रह्मत्वस्यापि श्रुत्यर्थत्वाभावः—

**४९४ सु०— ननु कथमेतत्प्रत्यक्षविरोधेन श्रुतेः प्रतीतार्थात्प्रच्यावनम्, क्वाप्येवमदर्शनात्; प्रत्युत परत्वान्निर्दोषत्वाच्च बलवत्या श्रुत्या विरुद्धं पूर्वं दोषशङ्काकलङ्कितमहं दुःखीत्यादिप्रत्यक्षमेवाप्रमाणं भवितुं युक्तमित्यत आह यजमानेति ।**

## अनु०— यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेत् ॥
## ब्रह्मत्वमपि जीवस्य

**श्रुतेः 'यजमानः प्रस्तर' इत्यस्याः । तथा, ब्रह्मत्वमपि जीवस्य 'तत्त्वमस्या'दिश्रुतेरर्थो न भवेदित्यर्थः ।**

**परि०— परत्वादिति** । पश्चात्तनत्वादित्यर्थः । प्रत्यक्षप्रवृत्त्यनन्तरमेव जीवब्रह्माद्वैतादिवाक्यस्य प्रवृत्तेरिति भावः । **यजमानःप्रस्तर इत्यस्या इति** । प्रस्तरो दर्भमुष्टिः । तत्र यजमानप्रस्तरयोर्न तादात्म्यं श्रुत्यर्थः । किन्तु यजमानवत् प्रस्तर इति यजमानकार्यं प्रस्तरः करोतीति पूर्वतन्त्रे प्रथमाध्याये चतुर्थपादे 'तत्सिद्धिजातिसारूप्यप्रशंसाभूमलिङ्गसमवायादि'ति सूत्रेऽभिहितं ध्येयम् ।

**गु०दी०— प्रत्युत** परत्वात् इत्यत्र प्रत्येतृप्रतिपत्तेः परत्वेऽपि श्रुतेरनादित्वान्न परत्वमिति दूषणमूह्यम् ।

**यादु०— प्रस्तरः** दर्भमुष्टिः ।





**वं०प०— परत्वादिति** । अपच्छेदन्यायेन परेण पूर्वबाध इत्यर्थः । प्रत्यक्षसिद्धस्य जीवस्य श्रुत्याऽभेदप्रतिपादनात् श्रुतेः परत्वं बोद्धव्यम् ।

**आनन्दः— परत्वाच्चेति** । पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवदिति न्यायेन परत्वस्य यथा प्राबल्यहेतुत्वं तथाऽस्मत्कृतन्यायामृतप्रकाशे द्रष्टव्यम् ।

**कं०रा०— प्रत्यक्षमेवेति** । परत्वनिर्दोषत्वाभ्यां प्रबलेन नायं सर्प इत्याप्तवाक्येन विरुद्धस्य दोषशङ्काकलङ्कितस्य पूर्वस्यायं सर्प इति प्रत्यक्षस्याप्रामाण्यदर्शनादिति भावः ।

**श्रीनिधि०— परत्वादिति** । प्रतिपत्तुः प्रतिपत्त्यपेक्षया परत्वम् । वाक्यस्वरूपग्राहकत्वादिना प्रत्यक्षस्य प्रथमं प्राप्तत्वादिति भावः ।

**वा०चं०—** ननूत्तरवाक्यं न सङ्गतमित्यतोऽत्र वाक्ये जीवब्रह्मत्वयजमानप्रस्तरत्वयोर्विशिष्योपादानेन तत्र दृष्टान्तादिसमर्पकतया सङ्गत्यसंभवेऽपि वक्ष्यमाणरीत्या प्रतीतार्थत्वाभावमात्रस्यैव साध्यतया विक्षणीयत्वात्तत्र दृष्टान्तसमर्पकतया प्रत्यक्षाप्रामाण्यसाधकश्रुतिविरोधोपपादकश्रुतिबलवत्त्वोपपादकत्वेन पराभिमतयोः परत्वनिर्दोषत्वयोर्व्यभिचारस्थलप्रदर्शकतया च सङ्गतिः संभवत्येवेति भावेन तन्निवर्त्यां शङ्कां दर्शयति **नन्विति** । अत्र प्रकृतत्वाच्छ्रुतिशब्देन तत्त्वमस्यादिग्रहणे ब्रह्मत्वमपि जीवस्येत्यंशेन यजमानप्रस्तरत्वस्य तदर्थतयाऽप्रसक्ततया यजमानप्रस्तरत्वमित्यंशेऽप्रसक्तप्रतिषेधापत्तिः । योग्यतया यजमानः प्रस्तर इत्यस्याग्रहणे ब्रह्मत्वमपि जीवस्येत्यंशे तदापत्तिरित्यतो नार्थः श्रुतेर्भवेदित्यस्यावृत्त्या श्रुतिशब्दस्य च योग्यतया दृष्टान्तदार्ष्टान्तिकयोरन्यतरार्थपरत्वान्नानुपपत्तिरित्याशयेनाह **श्रुतेरिति** । ननु पूर्ववाक्यात्प्रतीयमाने मीमांसा न ब्रह्मजीवैक्यविषया वेदस्य तदविषयकत्वादिति प्रयोगेऽप्रयोजकता वैयधिकरण्यं च जीवब्रह्मैक्यं न मीमांसाविषयो वेदाविषयत्वादिति प्रयोगविवक्षायामप्यप्रयोजकतैव । उत्तरवाक्ये च जीवब्रह्मत्वं न तत्त्वमसिवाक्यविषयः प्रत्यक्षविरोधाद्यजमानप्रस्तरत्ववदित्यत्र प्रकृतसाध्यस्य दृष्टान्तांशेऽप्रसक्तप्रतिषेधानुपपत्तिः । श्रुतिशब्दस्योभयपरोक्तव्याख्यानानुपपत्तिश्च । तदर्थं दृष्टान्तश्रुतेरेवोपादाने प्रकृतसाध्यस्य दृष्टान्तेऽप्रसक्तप्रतिषेध एव । तदर्थं च श्रुत्यर्थो नेत्येव साध्यकरणे परस्य पक्षे यत्किञ्चिच्छ्रुत्यर्थत्वाभावस्य सिद्धत्वात्सिद्धसाधनता ।

**वा०र०— न सङ्गतमिति** । जीवब्रह्मत्वस्य वेदार्थत्वाभावप्रतिपादकपूर्वग्रन्थेनेति शेषः । **अत्र वाक्य इति** । यजमानेति वाक्य इत्यर्थः । **तत्रेति** । यथा यजमानः प्रस्तर इति वाक्यं यजमानप्रस्तरत्वपरं न भवति तथा तत्त्वमस्यादिवाक्यं जीवब्रह्मत्वपरं न भवतीत्युक्ते दृष्टान्तदार्ष्टान्तिकानुगतसाध्याभावाद् दृष्टान्ताद्यनुपपत्तेरित्याशयः । समर्पकतयेत्यस्य सङ्गतिरित्युत्तरेण संबन्धः । उपपादकत्वे न पराभिमतयोरिति पाठः । प्रत्यक्षाप्रामाण्यसाधको यः श्रुतिविरोधस्तदुपपादकं यच्छ्रुतिबलवत्वं तदुपपादकत्वेनेत्यर्थः । **इत्यस्या इति** । श्रुतेरिति शेषः । **तदापत्तिः** । अप्रसक्तप्रतिषेधापत्तिः । **अन्यथेति** । भिन्नभिन्नार्थेत्यर्थः । **श्रुतिशब्दस्येति** । नार्थः श्रुतेरिति श्रुतस्यावृत्तस्य वा

तस्येत्यर्थः । **उभयपरेति** । तत्त्वमसीत्यादि यजमानः प्रस्तर इति चेत्युभयेत्यर्थः । तदर्थमिति दृष्टान्तांशेऽप्रसक्त-प्रतिषेधत्ववारणायेत्यर्थः । अत्र वाक्ये दार्ष्टान्तिकेऽप्रसक्तप्रतिषेध एवेति पाठः । दृष्टान्त इति तु लेखकागतम् । यजमानः प्रस्तर इति श्रुत्यर्थत्वस्य दृष्टान्ते प्रसक्ततयाऽप्रसक्तप्रतिषेधत्वाभावेऽपि दार्ष्टान्तिके तदप्रसक्तेरुक्तदोष एवेति भावः । उपलक्षणं चेदमुभयपरोक्तव्याख्यानानुपपत्तेः । यद्यपि चार्थान्तरतादोषत्वेन वाच्या । तथाप्यप्रसक्त - प्रतिषेधपदेन तस्या अप्यर्थतो लाभाददोष इति ज्ञेयम् । **तदर्थं चेति** । उक्तदोषद्वयनिराकरणार्थमित्यर्थः ।

**स०व्र०— ननु कथमित्यादि** प्रत्यक्षस्य श्रुतिबाधकत्वं नोपलब्धमिति चोद्यम् । उपलब्धमित्युत्तरम् ।

**विठ्ठ०— परत्वादिति** । पूर्वप्रवृत्तप्रमाणबाधकत्वेन पश्चात्प्राप्तत्वादित्यर्थः । प्रस्तरो दर्भमुष्टिस्तत्र न यजमानप्रस्तरयोरभेदोऽर्थः । किन्तु यजमानवत्प्रस्तरः यजमानकार्यं करोतीत्यर्थः ।

**४९९ सु०— अत्रेमौ प्रयोगौ । जीवब्रह्मणोरेकत्वं न मीमांसाशास्त्रस्य विषयस्तदुपकर्तव्य-वेदाविषयत्वात्, यद्यदुपकर्तव्यप्रमाणस्याविषयः न तत्तदितिकर्तव्यताविषयः, यथा संप्रति-पन्नम् । तथा तत्त्वमस्यादिवाक्यं न प्रतीतार्थं प्रत्यक्षविरुद्धत्वात्, 'यजमानः प्रस्तर' इति वाक्यवदिति । अनेनैव परत्वनिर्दोषत्वयोः 'यजमानः प्रस्तर' इति वाक्ये व्यभिचारश्च सूचितो भवति ।**

**परि०—** नन्वनेन परत्वान्निर्दोषत्वाच्चेति परोक्तहेत्वोः को दोष उक्तः स्यादित्यत आह **अत्रेति** । सत्यत्वादित्यादिसार्धश्लोके इमौ प्रयोगावभिहितावित्यर्थः । अप्रयोजकतानिरासाय तदुपकर्तव्येति हेतु-विशेषणम् । **यथा संप्रतिपन्नमिति** । चैत्यवन्दनादिकं न कर्मकाण्डविषय इति तदितिकर्तव्यताभूत-कर्मतन्त्रस्य न विषय इत्यर्थः । हेत्वसिद्धिनिरासाय द्वितीयप्रयोगमाह **तथेति । व्यभिचारश्चेति** । न केवलं प्रतिपक्ष इति चार्थः ।

**वं०प०—** नन्वनेन परत्वान्निर्दोषत्वादिति परोक्तहेत्वोः को दोष उक्तः स्यादित्यत आह **अत्रेति** । सत्यत्वादिति सार्धश्लोकेऽप्रयोजकतापरिहाराय तदुपकर्तव्येति हेतुविशेषणम् । **यथा संप्रतिपन्नम्** चैत्यवन्दनादिकं न कर्मकाण्डविषय इति तदितिकर्तव्यताभूतकर्मतन्त्रस्य न विषय इत्यर्थः ।

**आनन्दः—** ननु सत्यत्वादित्यत्र हेतूक्त्या यजमानेत्यत्र दृष्टान्तोक्त्या चात्रानुमानप्रयोगोऽभिमतः । तत्र मीमांसाशास्त्रं नैक्यविषयं वेदाविषयत्वादिति वा जीवब्रह्मणोरेकत्वं न वेदविषयः प्रत्यक्षविरोधादिति वा प्रयोगो-ऽभिप्रेतः । नाद्यः अप्रयोजकत्वात् । न द्वितीयः आश्रयासिद्धेरित्यत आह **अत्रेमाविति** । न चाश्रयासिद्धिः





तददूषणत्वस्याचार्यैरत्रोक्तत्वात्। अत एव वन्ध्यासुता न वक्तेति अनुमानं प्रयुक्तं तथापि परत्वादिना प्रबलश्रुतेः कथं दुर्बलविरोधेन स्वार्थप्रच्यावनमित्यत आह **अनेनैवेति**। यजमानः प्रस्तर इत्यनेनैवेत्यर्थः। **वृत्तीति**। अमुख्यवृत्त्या प्रवर्तत्वेन गृहीतवृत्तित्वमेव दोष इत्यर्थः।

**कं०रा०— न प्रतीतार्थमिति**। प्रतीतार्थपरं नेत्यर्थः। **प्रत्यक्षेति**। प्रमाणत्वे सति प्रतीतार्थे प्रत्यक्षविरुद्धत्वादित्यर्थः। तेन प्रतीतार्थे प्रत्यक्षविरुद्धमपि भ्रान्तवाक्यं तत्परं दृष्टमिति तत्र व्यभिचार इति दूषणमलग्नं बोद्धव्यम्। यद्वा। न प्रतीतार्थं प्रतीतार्थे न प्रमाणमिति साध्यार्थः। एवं च भ्रान्तवाक्ये साध्यस्यापि सत्त्वान्न व्यभिचार इति ध्येयम्। **व्यभिचार इति**। प्रस्तरवाक्ये परत्वनिर्दोषत्वयोः सत्त्वेऽपि बलवत्त्वस्याभावादिति भावः।

**श्रीनिधि०— अत्र** यजमानप्रस्तर इति वाक्ये। एवं च हेत्वभावान्न व्यभिचार इति भावः।

**वा०चं०—** पूर्ववाक्यानुसारेण तत्त्वमसीत्यादिवेदस्य पक्षतायां जीवब्रह्मैक्यत्वविषयकत्वाभावरूपसाध्यस्य दृष्टान्तश्रुतावप्रसक्तनिषेध एवेत्यतो वाक्यद्वयाभिमतप्रयोगप्रकारं दर्शयति **अत्रेमाविति**। अत्र हेतौ वेदग्रहणं प्रकृताभिप्रायेण वा पक्षे हेतूपपादनाय वा करणवाचकवेदपदोपादानादुपकर्तव्यत्वालाभसूचनाय वा सामान्यव्याप्तेर्विवक्षणान्नानुपपत्तिरित्याशयेनाह **यदिति**। न केवलं यजमानप्रस्तरादिवाक्यस्य स्वपरपक्षसाधकानुमानदृष्टान्तव्यभिचारस्थलसमर्पकतयैवात्रोपादानमपि तु प्रतिबन्दीमुखत्वेनापि।

**वा०र०— पूर्ववाक्यानुसारेणेति**। तत्त्वमसीत्यादिर्वेदः न जीवब्रह्मैक्यविषयकः प्रत्यक्षविरुद्धार्थकत्वात् यजमानः प्रस्तर इति वेदवदिति प्रयोगोऽत्राभिमतः। अत्रापि पूर्ववाक्येत्यतःपूर्वं प्राचीनसमस्तदोषपरिहारार्थमित्यर्थकं तदर्थं चेति पूरणीयम्। **करणवाचकेति**। वेदरूपप्रमाणस्य शब्दरूपानुप्रमाणत्वादिति भावः। **सूचनाय वेति** द्रष्टव्यमिति पाठः। मूलकोशानुसारात्। सामान्यव्याप्तेश्चेत्यस्य सामान्यव्याप्तेस्त्वित्यर्थः। तुशब्देन विशेषव्याप्त्यभावेऽपीति सूचयति। सामान्यव्याप्तेरेवेत्यवधारणार्थो वा तुशब्दः अत्रत्यचशब्दानुसारेण पूर्ववाक्यैकवाक्यतामाश्रित्य इति द्रष्टव्यमिति पूर्ववाक्यगतं केचिन्नाशितवन्तस्तथा न कर्तव्यम्। चशब्दस्य विशेषव्याप्त्यभावेऽपीत्यर्थप्रतिपादनाय तुशब्दार्थकत्वात्।

**विठ्ठ०— तदुपकर्तव्येति**। हेतौ विशेषणमप्रयोजकताशङ्कानिरासाय।

**४९६ सु०— नन्वत्र निर्दोषत्वमेव नास्ति अगृहीतवृत्तित्वस्यैव दोषस्य विद्यमानत्वात्; अमुख्यवृत्त्या हीदं प्रवृत्तमिति चेत्। तर्हि 'तत्त्वमस्या'दिवाक्यमप्येवमित्यसिद्धिः। कुतोऽत्रामुख्यवृत्तिरिति चेत् समं 'यजमाना'दिवाक्ये। प्रत्यक्षविरोधादिति वदतस्समस्समाधिः।**

**परि०— असिद्धिरिति**। निर्दोषत्वहेतोरिति योज्यम्।

**वं०प०—** हेतोरेवाभावान्न व्यभिचार इत्याशङ्कते **नन्विति** । **अगृहीतवृत्तित्वस्यैवेति** । अज्ञायमानामुख्यवृत्तित्वस्यैवेत्यर्थः । तदुपपादयति **अमुख्यवृत्त्या हीदमिति** । अतो यजमानः प्रस्तर इति वाक्ये प्राबल्यसाधकस्य निर्दोषत्वहेतोर्न व्यभिचार इति भावः । **एवमिति** । तत्त्वमसीति वाक्येऽप्यगृहीतामुख्यवृत्तित्वस्यैव दोषस्य सत्त्वेन निर्दोषत्वहेतोः स्वरूपासिद्धिरित्यर्थः । **अत्र** तत्त्वमसीति वाक्ये । **सममिति** । तत्राप्यमुख्यवृत्तिः कुत इत्यर्थः । ननु यजमानप्रस्तरयोरभेदरूपमुख्यार्थस्य प्रत्यक्षविरुद्धत्वेन यजमानादिवाक्येऽमुख्यवृत्तिराश्रीयत इत्याशङ्क्याह **प्रत्यक्षविरोधादितीति** । **सम इति** । तत्त्वमसीति वाक्येऽपि विशिष्टाभेदरूपमुख्यार्थस्य प्रत्यक्षविरुद्धत्वादेवामुख्यवृत्तिराश्रीयत इत्यर्थः ।

**कं०रा०—** यजमानः प्रस्तर इति वाक्ये यजमानपदस्य तत्कार्यकरत्वगुणयोगात्प्रस्तरे गौणी वृत्तिः । सा च न गृहीतेत्यगृहीतवृत्तित्वस्यैव दोषस्य सत्त्वेन निर्दोषत्वहेतोरेव तत्रावृत्तेर्न व्यभिचार इति शङ्कते **नन्विति** । **तत्त्वमस्यादीति** । तत्त्वमस्यादिवाक्येऽपि तच्छब्दस्य जीवे ब्रह्मगुणसदृशगुणयोगाद्गौणी खलु वृत्तिः । सा च न गृहीतेत्यगृहीतवृत्तित्वस्यैव दोषत्वान्निर्दोषत्वहेतोस्तत्रासिद्धिरित्यर्थः ।

**श्रीनिधि०— अमुख्यया** गौण्या । यजमानकार्यकारित्वलक्षणगुणयोगात् । **एवमिति** । तत्पदार्थसादृश्यलक्षणगुणयोगेन गौण्या वृत्त्या तत्त्वमसीति वाक्यप्रवृत्तेः अगृहीतवृत्तित्वलक्षणदोषस्य सत्त्वान्निर्दोषत्वमसिद्धमित्यर्थः ।

**वा०चं०—** एवं चाव्यभिचाराय तत्र निर्दोषत्वानभ्युपगमे पक्षेऽप्यसिद्धिरिति सूचितमित्याशयेन दृष्टान्ते हेत्वभावमाशङ्क्य प्रतिबन्द्या समाधत्ते **नन्विति** ।

**स०व्र०— अगृहीतवृत्तित्वस्यैवेति** । अगृहीतामुख्यवृत्तित्वस्यैवेत्यर्थः । अमुख्यवृत्त्या प्रवृत्तत्वात् अमुख्यवृत्त्यग्रहणमेव दोष इत्यर्थः । प्रस्तरादिवाक्यसादृश्यं तत्त्वमस्यादिवाक्यस्योपपादयति **तर्हीत्यादि** ।

**विठ्ठ०—** हेतोरेवागमनान्न व्यभिचार इति शङ्कते **नन्वत्रेति** । ननु सामानाधिकरण्यस्याभेदार्थकत्वेन अभेदरूपमुख्यार्थस्य गृहीतत्वात्कथमगृहीतवृत्तित्वमित्यतः लक्षणावृत्त्यान्यार्थकत्वादस्य वाक्यस्येत्याह **अमुख्येति** ।

**प्रदीपः—** ननु कथमित्यादिप्रत्यक्षस्य श्रुतिबाधकत्वं नोपलब्धमिति चोद्यमुपलब्धमित्युत्तरं **अगृहीतवृत्तित्वस्यैवेति** । अगृहीतमुख्यवृत्तित्वस्येत्यर्थः । अमुख्यया वृत्त्या प्रवृत्तत्वान्मुख्यवृत्त्यग्रहणमेव दोष इत्यर्थः । तर्हीत्यादि प्रस्तरादिवाक्यसादृश्यं तत्त्वमस्यादिवाक्यस्योपपादयति शास्त्रीयत्वादिस्वरूपमात्रस्य प्रत्यक्षत्वेऽपि यजमानत्वाकारस्य कर्मानुष्ठाननिबन्धनत्वाच्छास्त्रीयत्वमित्यर्थः ।





**४९७ सु०— स्यादेतत् । न 'यजमानः प्रस्तर' इत्यादिवाक्यस्य प्रत्यक्षविरोधमात्रेण प्रतीतार्थपरित्यागः । तथात्वे परमेश्वरावतारनिर्दोषतावाक्यस्यापि प्रत्यक्षविरोधेनार्थ-परित्यागप्रसङ्गात् । किं नामोपजीव्यप्रत्यक्षविरोधात् ॥ उपजीव्योपजीवकयोरुपजीव्यं बलवदिति हि न्यायः ।**

**ननु यजमानस्वरूपं न प्रत्यक्षविषयः, शास्त्रीयत्वात्तद्भावस्य; तत्कथमुपजीव्य-प्रत्यक्षविरुद्धा श्रुतिरिति चेत्; तर्हि प्रत्यक्षविरोधोऽपि कथम् । प्रत्यक्षाकारस्य प्रस्तराभेदप्रतिपादने निदर्शितेयमिति चेत्समं ममापीत्यत आह प्रत्यक्षस्येति ।**

**अनु०— प्रत्यक्षस्याविशेषतः ॥**

**सत्यं, 'यजमानः प्रस्तर' इति श्रुतिरुपजीव्यप्रत्यक्षविरोधात्प्रतीतार्थे न प्रमाणमिति । तथाऽपि नोक्तदोषः । अद्वैतश्रुतिबाधकतयाऽस्माभिरुपन्यस्तस्यापि प्रत्यक्षस्य यजमानग्राहि-प्रत्यक्षादविशेषात्; अस्याप्युपजीव्यत्वात् । प्रत्यक्षावगतं हि जीवं 'त्वमि'त्यनूद्य तस्य 'तदसी'ति ब्रह्मता विधातव्या । तदनेनोपजीव्यप्रत्यक्षविरोध एवास्माभिर्हेतूकृत इति सूचितं भवति ।**

**बिन्दुः— शास्त्रीयत्वात्तद्भावस्येति** । यागजन्यफलभोक्तृत्वस्य यजमानपदार्थत्वात् । यागस्य धात्वर्थत्वात् तज्जन्यफलभोक्तृत्वस्य शब्दशक्तिलभ्यत्वात् । कर्त्रभिप्राये क्रियाफले आत्मनेपद-विधानादिति भावः । उपलक्षणमेतत् । .................. अनादिसंस्कृतस्य प्रथमगृहीतदर्भमुष्टि-विशेषरूपस्य प्रस्तरव्यक्तिविशेषस्य प्रत्यक्षत्वेऽपि प्रस्तरत्वस्य शास्त्रीयत्वमेवोपरि द्रष्टव्यम् । **प्रत्यक्षाकारस्येति** । यजमानत्वाद्याश्रयस्य व्यक्तिविशेषणेत्यर्थः । यथा ...............मर्थ इति । एकमेवाद्वितीयमित्यादिश्रुतावद्वितीयादिशब्दानां स्वातन्त्र्यमर्थः । निरूढलक्षणया अनेकैः स्वतन्त्र-..................अस्मिन् ग्रामे अयमेवैकः पुरुषः अयमद्वितीयोऽस्तीति बहुलं प्रयुज्यमानत्वात् । सायं गोष्ठे गाव एकीभवन्तीत्यादिवत् स्थानैक्याभिप्रायेणापि परेऽव्यये सर्व एकीभवन्तीति प्रयोगः, अस्मिन्विषये सर्वे ब्राह्मणाः एकीभवन्तीति मत्यैक्याभिप्रायो वा अयं प्रयोगः समुदायतात्पर्यार्थः ।

**परि०—** चतुर्थपादमवतारयितुं शङ्कते **स्यादेतदित्यादिना** । सिद्धान्ती चोदयति **ननु यजमानेति** । **तद्भावस्येति** । यजमानभावस्येत्यर्थः । दीक्षारूपसंस्कारोपेतत्वरूपं यजमानत्वम् ।





तच्च दीक्षावबोधकशास्त्रगम्यमिति भावः । पूर्वपक्ष्येव पृच्छति **तर्हीति** । सिद्धान्ती समाधानमाह **प्रत्यक्षाकारस्येति । निदर्शितेति ।** 'यजमानप्रस्तरत्वं यथा नार्थः श्रुतेर्भवेदि'त्यनेन दृष्टान्तितेत्यर्थः । **ममापीति** । उपजीव्यविरोधादेव प्रस्तरश्रुतेः प्रतीतार्थत्याग इतिवादिन इत्यर्थः । आकारग्राहिण एव प्रत्यक्षस्योपजीव्यत्वात् । ऐक्यवाक्ये तु नोपजीव्यप्रत्यक्षविरोध इति भावः । प्रस्तरवाक्यवैषम्ये वाचस्पत्याद्युक्तमन्यदपि प्रत्यक्षस्य बाध्यत्वे बाधकोक्तिप्रस्तावे न्यायामृते निरस्तं बोध्यम् ।

**गु०दी०— प्रत्यक्षाकारस्य** इत्यत्र प्रत्यक्षविषयः प्रस्तरविलक्षणः करचरणाद्याकारो यस्य यजमानस्य तस्य प्रस्तराभेदप्रदर्शन इयं श्रुतिः **निदर्शिता** आपातार्थदर्शिभिर्निदर्शिता । तस्याश्च प्रत्यक्षविरुद्धत्वादपहार इति भावः । **समं ममापि** इत्यस्य तर्हि वाक्यार्थभूतं तमेवाकारमुपादाय तत्रापि ममाप्युपजीव्यविरोधः ऐक्यवाक्ये तु **नैवम्** इति भावः परस्य ।

**यादु०— शास्त्रीयत्वात्तद्भावस्येति** । स्वरूपमात्रस्य प्रत्यक्षत्वेऽपि यजमानत्वाकारस्य कर्मानुष्ठान-निबन्धनस्य दीक्षादिविध्यधीनत्वेन शास्त्रीयत्वादित्यर्थः ।

**वं०प०— प्रतीतार्थपरित्याग इति** । येन समः समाधिः स्यादिति भावः । **प्रत्यक्षविरोधेनेति** । रामकृष्णादिदोषग्राहिप्रत्यक्षविरोधेनेत्यर्थः । **प्रसङ्गादिति** । भवन्मत इति शेषः । **इति हि न्याय इति** । प्रकृते तु तत्त्वमसीति वाक्ये नोपजीव्यप्रत्यक्षविरोध इत्याशयः । यजमानः प्रस्तर इति श्रुतेर्नोपजीव्यप्रत्यक्षविरुद्धेति सिद्धान्ती शङ्कते **नन्विति** । **शास्त्रीयत्वादिति** । दीक्षाविशेषनिबन्धनस्य यजमानत्वस्य शास्त्रीयत्वेनातीन्द्रियत्वादित्यर्थः । श्रुतिर्यजमानः प्रस्तर इति श्रुतिः । तथा च किं नामोपजीव्यप्रत्यक्षविरोधादित्युक्तमसदिति भावः । पूर्वपक्ष्युत्तरमाह **तर्हीति** । यजमानः प्रस्तर इति श्रुतेरुपजीव्यप्रत्यक्षविरोधाभावे प्रत्यक्षेण विरोधतो 'यजमानः प्रस्तरत्वं यथा नार्थः श्रुतेर्भवेदि'ति यजमानः प्रस्तर इति श्रुतेः प्रत्यक्षविरोधोऽपि भवद्भिः कथमुक्त इत्यर्थः । याजमान्यस्य शास्त्रीयत्वेन तत्र प्रत्यक्षाप्रवृत्तेरिति भावः । सिद्धान्ती पुनराशङ्कते **प्रत्यक्षाकारस्येति** । प्रत्यक्षसिद्धकरचरणाद्याकारस्यैवोप-जीव्यत्वमङ्गीकृत्य तस्यैव प्रस्तराभेदबोधने उपजीव्यविरोधो मयाऽप्युच्यत इत्यर्थः । तत्त्वमस्यादिवाक्ये तु नैवमिति नोपजीव्यप्रत्यक्षविरोध इति भावः । **उक्तदोष इति** । प्रकृते उपजीव्यप्रत्यक्षविरोधो नास्तीत्युक्तप्रायो दोष इत्यर्थः । **हेतूकृतेति** । तत्त्वमस्यादिवाक्यं न प्रतीतार्थमुपजीव्यप्रत्यक्षविरुद्धत्वादित्यनुमाने हेतुः कृत इत्यर्थः ।

**आनन्दः**— अप्रयोजकत्वं शङ्कते **स्यादेतदिति** । **प्रत्यक्षविरोधादिति** । येन प्रत्यक्षेण यजमानः सिद्धः तेन प्रस्तरभिन्नत्वेन सिद्ध इति । तदभेदे बोध्यमाने तद्विरोध इत्यर्थः । प्रत्यक्षाकारस्य यजमानसंबन्धिहस्तपादाद्या-कारस्य निदर्शितेति । प्रत्यक्षविरुद्धत्वेनेति शेषः । तर्ह्यत्रापि असार्वज्ञादिविशिष्टाकारबोधनेऽपि प्रत्यक्षविरोधेन चिन्मात्रैक्यबोधेनेति साम्यमित्याह **सममिति** ।





**कं०रा०— उपजीव्येति** । यजमानमुद्दिश्य प्रस्तरैक्ये बोध्यमाने यजमानग्राहकप्रत्यक्षस्य धर्मिग्राहकत्वेनोपजीव्यतया तेन च यजमानस्य प्रस्तराद्भेदस्यैव ग्रहणेनोपजीव्यप्रत्यक्षविरोधाद्यजमानःप्रस्तर इति वाक्यस्य प्रतीतार्थपरित्याग उपजीव्योपजीवकयोरुपजीव्यं च बलवदिति न्यायादित्यर्थः । **शास्त्रीयत्वादिति** । तद्भावस्य देवतोद्देश्यकद्रव्यत्यागात्मकयजनकर्तृत्वरूपयजमानत्वस्य शास्त्रसमधिगम्यत्वादित्यर्थः । **श्रुतिरिति** । यजमानः प्रस्तर इति श्रुतिरित्यर्थः । **प्रत्यक्षेति** । केवलप्रत्यक्षविरोधोऽपि कथमित्यर्थः । **प्रत्यक्षाकारस्येति** । यजमानत्वाकारस्याप्रत्यक्षत्वेऽपि यजमानस्य प्रत्यक्षसिद्धो योऽयमाकारस्तस्य प्रस्तराभेदप्रतिपादने क्रियमाणे प्रत्यक्षविरोधोदाहरणत्वेनोक्ता यजमानः प्रस्तर इतीयं श्रुतिरतः प्रत्यक्षविरोधोऽपि कथमिति कथन्ताया अनवकाश इति शङ्काभिप्रायः । **सममिति** । यजमानः प्रस्तर इति वाक्यस्योपजीव्यप्रत्यक्षविरोधादेव प्रतीतार्थत्याग इति वदतो ममापि यजमानसंबन्धिप्रत्यक्षाकारस्य प्रस्तराभेदप्रतिपादने उपजीव्यप्रत्यक्षविरोध इति समम् । एवञ्च यजमानः प्रस्तर इति वाक्य इव तत्त्वमसीत्यत्रोपजीव्यप्रत्यक्षविरोधाभावान्न प्रतीतार्थत्यागो घटत इति यतः शङ्का प्राप्ता । अतः प्रकृतेऽपि विरोधिप्रत्यक्षस्योपजीव्यत्वमाहेत्यर्थः ।

**श्रीनिधि०— उपजीव्योपजीवकयोरुपजीव्यं बलवदिति हि न्याय इति** । दुःखित्वादिप्रत्यक्षं च नोपजीव्यमिति भावः । तर्हि यजमानप्रस्तर इति श्रुतेरपि प्रत्यक्षं नोपजीव्यम् । तथा च तद्विरोधेनार्थान्तरवर्णनं मीमांसायामसङ्गतं स्यादिति सिद्धान्ती शङ्कते **ननु यजमानस्वरूपमिति** । **शास्त्रीयत्वादिति** । यागजन्यापूर्वाधारत्वादियजमानत्वमिति भावः । पूर्वपक्षी शङ्कते **तर्हीति** । सिद्धान्ती उत्तरमाह **प्रत्यक्षाकारस्येति** । प्रस्तरविलक्षणत्वेन दृश्यमानकरचरणाद्याकारस्येत्यर्थः । **इयम्** । प्रत्यक्षविरोधः । अथवा निदर्शिता इयं श्रुतिः । तस्य चार्थस्य प्रत्यक्षविरुद्धत्वेन श्रुतेः तदर्थत्वापहार इति भावः । पूर्वपक्ष्याः **सममिति** । तथा च करचरणादिप्रत्यक्षस्य उपजीव्यत्वात् तद्विरोधमात्रेण मीमांसायां श्रुतेरर्थान्तरवर्णनं सङ्गतम् । दुःखादिप्रत्यक्षं तु न कथञ्चिदपि उपजीव्यमिति भावः । **हेतूकृत इतीति** । प्रत्यक्षेण विरोध इत्यत्रेति भावः । **सूचितमिति** । प्रत्यक्षस्याविशेषत इत्यनेनेति शेषः । इति भावः ।

**वा०चं०—** ननु यजमानप्रस्तरभेदग्राहिप्रत्यक्षेण जीवेशभेदग्राहिप्रत्यक्षस्योपजीव्यत्वेन अविशेषप्रतिपादनमसङ्गतम् । प्रत्यक्षविरोधमात्रस्यैव प्रतीतार्थपरित्यागप्रयोजकत्वाभ्युपगमे सिद्धान्तिनं प्रत्यनिष्टाभावेन दृष्टान्तदार्ष्टान्तिकयोरुपजीव्यत्वेन विशेषस्य परेण शङ्कितुमशक्यत्वात्प्रत्यक्षविरोधमात्रस्याप्रयोजकत्वे नियामकाभावेनोपजीव्यप्रत्यक्षविरोधस्याप्यप्रयोजकत्वमिति वक्तुं शक्यत्वाच्च यजमानप्रस्तरवाक्यं प्रति प्रत्यक्षे उपजीव्यत्वस्य प्रतिषेध्यसमर्पकत्वरूपस्यातिप्रसञ्जकतया शङ्कितुमशक्यत्वाद्धर्मिग्राहकत्वरूपस्य तस्य तत्रासंभवाच्चेत्यतः प्रत्यक्षविरोधमात्रस्य प्रतीतार्थपरित्यागप्रयोजकत्वाभ्युपगमे सिद्धान्तिनं प्रत्यनिष्टप्रसङ्गादुपजीव्यतद्विरोधप्रयोजकतायाश्च न्यायबलसिद्धत्वात्सिद्धान्त्यभिमतप्रत्यक्षविरोधन्यायेनैवोपजीव्यत्वस्यापि सूपपादत्वादुपजीव्यत्वेन प्रसक्तविशेषनिरासाय प्रवृत्तं भाष्यं सङ्गततरमित्याशयेनावतारयति **स्यादेतदिति** । **नन्विति** । न च

यजमानप्रस्तरभेदग्राहिप्रत्यक्षविरोधं वदतः सिद्धान्तिनो यजमानस्वरूपं न प्रत्यक्षविषय इति शङ्का निर्दलेति वाच्यम् । उपजीव्यत्वस्य प्रकारान्तरेणासंभवात् । धर्मिग्राहकत्वेनैव तद्वाच्यमित्युपजीव्यत्वोक्तौ साक्षाद्यजमान-स्वरूपग्राहकत्वलाभवद्यजमानप्रस्तरभेदग्राहकत्वोक्तौ न तल्लाभः । भेदनिरूपकतया धर्मिस्वरूपविषयीकरणस्य स्मृतप्रतियोगिविषयीकरणवत्स्मरणमात्रेणोपपत्तेरिति मन्यमानस्येव यजमानप्रस्तरवाक्यं प्रति प्रत्यक्षस्योपजीव्यत्वं परमुखेनैव द्रढीकर्तुं प्रवृत्तस्य सिद्धान्तिनोऽपि युक्तैव शङ्का । अत एव तर्हीति परिहारवाक्यस्य भेदप्रत्यक्षे प्रतियोगिन इव स्मरणमात्रेण धर्मिणोऽविषयत्वं सिद्धान्तिना त्वया न वक्तुं शक्यम् । अतिप्रसङ्गादपसिद्धान्ताच्च । धर्मिप्रत्यक्षस्य भेदप्रत्यक्षतन्त्रतायाः सिद्धान्तत्वात् । एवञ्च धर्मिणोऽप्रत्यक्षत्वे तद्भेदस्याप्यप्रत्यक्षत्वात्तद्विरोधोक्तिरनुपपन्नेत्याशयो वर्णनीय इति ध्येयम् । **कथमिति** । तथा च न तद्विरोधेन प्रतीतार्थपरित्यागे यजमानप्रस्तरवाक्यनिदर्शनं युक्तमिति भावः । यद्वा यजमानप्रस्तरभेदग्राहत्वमात्रेण प्रत्यक्षविरोधसंभवेऽपि नोपजीव्यप्रत्यक्षविरोधसंभवः । धर्मिग्राहकत्वेनैवोपजीव्यत्वस्य वक्तव्यत्वात् । यजमानत्वविशिष्टस्यैव धर्मित्वात् । यजमानत्वस्य च दीक्षाव्रत-ग्रहणजन्यसंस्कारविशेषरूपस्यातीन्द्रियत्वेन प्रत्यक्षाविषयत्वेन प्रत्यक्षस्योपजीव्यत्वासंभव इति शङ्काशयः । तर्हि भेदप्रत्यक्षे धर्मिभाननियमाद्यजमानरूपधर्म्यग्रहणे तद्भेदप्रत्यक्षस्याप्यनुपपत्तिरेवेति तर्हीत्युत्तरवाक्याशयः । प्रत्यक्षाकारस्य धर्मित्वाभ्युपगमेन प्रत्यक्षविरोधोपपादने च तादृशाकारविशिष्टधर्मिग्राहकत्वेनैवोपजीव्यत्वमपीति तद्विरोधोऽपि सूपपाद एवेति तदुत्तरवाक्याशयः । एवं च परमुखेनैव धर्मिस्वरूपविशेषविवेचनायेमे शङ्कासमाधाने इति द्रष्टव्यम् । प्रत्यक्षस्याविशेषत इति सामान्यवाक्ये उपजीव्यत्वस्य प्राबल्याप्रयोजकत्वात्प्रत्यक्षयोरविशेष इत्यभिप्रायस्योपजीव्यविरोधेनेत्युत्तरवाक्यविरुद्धत्वात् । उपजीव्यत्वस्य प्राबल्यप्रयोजकत्वात्प्रत्यक्षयोरविशेष इत्यभिप्रायस्योपजीव्यविरोधेनेत्युत्तरवाक्यविरुद्धत्वात् । उपजीव्यत्वस्य यजमानभेदग्राहिप्रत्यक्षेऽप्यभावात्प्रत्यक्ष-योरविशेष इत्यभिप्रायस्य च वक्ष्यमाणोपजीव्यसार्वज्ञादिवाक्यप्रायपाठविरोधात्पूर्वपक्षिणा दृढमुपपादितत्वाच्च तथाभिप्रायवर्णनानौचित्यात् प्रकृतप्रत्यक्षस्याप्युपजीव्यत्वाभ्युपगमेनैवाविशेषमुपपादयति **सत्यमित्यादिना** । नन्वेतावताऽपि प्रत्यक्षविरुद्धत्वस्य हेतोः परमेश्वरनिर्दोषतावाक्ये व्यभिचारः कथं परिहृत इत्यत आह **तदनेनेति** ।

वा०र०— **प्रतिपादनमसङ्गतमिति** । प्रतिपादनपरं प्रत्यक्षस्याविशेषत इति भाष्यमसङ्गतमित्यर्थः । **अनिष्टप्रसङ्गादिति** । परमेश्वरावतारेत्यादिमूलोक्तानिष्टसत्त्वादित्यर्थः । अनिष्टाभावेनेति शङ्कापरिहारोऽयम् । अनिष्टसत्त्वादिति पाठस्तु स्वरस एव । **वदतः सिद्धान्तिन इति** । अनेन ननु यजमानेति वाक्यं सिद्धान्ती शङ्कत इत्यवतारणीयमिति सूचितम् । **निर्दलेति** । यजमानस्वरूपस्य प्रत्यक्षाविषयत्वे यजमानप्रस्तरभेदग्राहकत्व-स्यैवानुपपत्तिः । तदविषयकत्वेऽपि तद्भेदग्राहकत्वोपपादकप्रकाररूपदलाभावादित्यर्थः । अत एव भेदनिरूपक-तयेत्यादिनोत्तरत्र दलकथनम् । धर्मिप्रत्यक्षस्य भेदप्रत्यक्षं प्रति प्रयोजकतायाः सिद्धान्तिनाऽङ्गीकारात्कथं साक्षाद्यजमानस्वरूपग्राहकत्वालाभ इत्यतः सिद्धान्तिनापि भेदग्रहणोपयोगितया धर्मिविषयीकरणमात्रमभ्युपगम्यते





तस्य च स्मरणमात्रेणाप्युपपत्त्या धर्मिस्वरूपग्राहकत्वाप्राप्तिरित्याह **भेदनिरूपकतयेति** । इति मन्यमानस्येवेत्यनेन तथा मन्यमानस्य तु शङ्का युक्तैव । सिद्धान्त्यपि तथा मत्वैव शङ्कां करोति । न च प्रयोजनाभाव इत्यत उक्तं **यजमानेत्यादि प्रवृत्तस्येत्यन्तम्** । प्रयोजनस्य सत्त्वादन्यमतावलम्बनं युक्तम् । तथा च प्रत्यक्षविरोधोक्त्यैव भेदग्राहिप्रत्यक्षस्य धर्मिग्राहकत्वप्राप्तावपि तदनभ्युपगमेनोपजीव्यत्वाभाव इति शङ्का प्रवृत्तेत्यङ्गीकारे तर्हि प्रत्यक्षेत्युत्तरग्रन्थानुपपत्तिः । उक्तशङ्कोपमर्दस्य तत्राप्रतीतेरित्यत आह **अत एव तर्हीतीति** । अन्यमतावलम्बनेनोक्तशङ्काप्रवृत्तिसिद्धेरेव तद्दूषणावसरे अन्यमतावलम्बनानुपपत्त्यादिप्रतिपादनादिकं सङ्गतमिति तदभिप्रायकतयोत्तरवाक्यं योजनीयमित्यर्थः । ननु स्वरीत्या शङ्काया अयोगादेवान्यमतावलम्बने उक्ते सति नापसिद्धान्त उद्भावयितुं शक्य इत्यपरितोषादाह **यद्वेति** । **यजमानरूपेति** । संस्कारविशेषरूपयजमानत्वविशिष्टं यत्तद्रूपो यो धर्मीति योज्यम् । प्रत्यक्षाकाररूपधर्मिग्राहकत्वेनैवेति वक्तव्ये रूपपदस्थाने विशिष्टपदमाकाराकारिणोरभेदाभिप्रायेण मूले आकारस्येत्येवोक्तमिति मूलाभिप्रायं व्यञ्जयितुम् । वस्तुतस्त्वाकाररूपधर्मीत्येव विवक्षितमित्यदोषः । **तदुत्तरेति** । प्रत्यक्षाकारस्येत्युत्तरेत्यर्थः । विरुद्धत्वादित्यस्य तथाऽभिप्रायवर्णनानौचित्यादित्युत्तरेण संबन्धः । उक्तोपजीव्यत्वस्य प्राबल्याप्रयोजकत्वात्प्रत्यक्षयोरविशेषत इति व्याख्यानं न संभवतीत्यनेन सूचितम् । एवमुत्तरत्रापि । **निर्दोषतेति** । अवतारस्याप्युपलक्षणमिदम् ।

**स०व्र०— शास्त्रीयत्वादिति** । स्वरूपमात्रस्य प्रत्यक्षत्वेऽपि यजमानत्वाकारस्य कर्मानुष्ठाननिबन्धनस्य दीक्षादिविध्यधीनत्वेन शास्त्रीयत्वमित्यर्थः ।

**विठ्ठ०—** सिद्धान्ती यजमानप्रस्तरवाक्यस्योपजीव्यप्रत्यक्षविरोधमाशङ्कते **ननु यजमानेति** । **शास्त्रीयत्वादिति** । स्वरूपमात्रस्य प्रत्यक्षत्वेऽपि यजमानभावस्य कर्मानुष्ठाननिबन्धनदीक्षोपेतत्वरूपयजमानत्वस्य शास्त्रगम्यत्वादिति भावः । यजमानत्वस्य अप्रत्यक्षत्वे मास्तु उपजीवप्रत्यक्षविरोधः केवलप्रत्यक्षविरोधोऽपि कथमिति गूढाभिसन्धिः पूर्वपक्षी परिहरति **तर्हीति** । तत्परिहारमाशङ्कते सिद्धान्ती **प्रत्यक्षाकारस्येति** । प्रत्यक्षप्रतीतयजमानस्वरूपमात्रस्य प्रस्तराभेदप्रतिपादनविषये हीयं श्रुतिर्निदर्शिता भाष्यकारेण । प्रस्तराभेदश्च प्रत्यक्षविरुद्धः, अतः अस्य श्रुतेर्भवति प्रत्यक्षविरोध इति भावः । पूर्वपक्षी स्वाशयमाविष्करोति **सममिति** । प्रत्यक्षावगतस्वरूपमात्रमुपजीव्य प्रवृत्तायां श्रुतौ प्रस्तराभेदप्रतिपादनेनोपजीव्यप्रत्यक्षविरोध इति वक्तुं शक्यत्वादिति भावः ।

**चषकः— शास्त्रीयत्वात्तद्भावस्येति** । दीक्षाविशेषरूपसंस्कारोपेतत्वात्मकयाजमान्यस्य दीक्षादिविधिमात्रज्ञेयत्वादित्यर्थः ।

उपजीव्यश्रुतिविरोधः—

**४९८ सु०—** एवं जीवमनूद्य तस्य ब्रह्मत्वं प्रतिपादयन्तीनां 'तत्त्वमसी'त्यादि-श्रुतीनामुपजीव्यप्रत्यक्षविरोधादतत्परत्वमुक्तम् । अधुना याः ब्रह्मानुवादेन तस्य जीवैक्यं विदधति तासां 'तद्योऽहं सोऽसौ योऽसौ सोऽहमि'त्यादीनामुपजीव्यश्रुतिविरोधा-दतत्परत्वमाह **सार्वज्ञ्यादीति** ।

**अनु०—** सार्वज्ञ्यादिगुणं जीवाद्भिन्नं ज्ञापयति श्रुतिः ।
ईशं तामुपजीव्यैव वर्तते ह्यैक्यवादिनी ॥
उपजीव्यविरोधेन नास्यास्तन्मानता भवेत् ॥

**गु०दी०—** **उपजीव्यश्रुतिविरोधादतत्परत्वमाहेति** अभ्युपगमवादोऽयम् । वस्तुतस्तु "योऽसौ सोऽहम्" इत्यत्रापि दुःखित्वासर्वज्ञत्वादिविरुद्धधर्मैः भगवतोऽत्यन्तभिन्नतया तैस्तैर्जीवैः प्रत्यक्षतोऽनुभूयमान-स्वस्वरूपमहमित्यनूद्य अस्मीत्यैक्यविधाने उपजीव्यप्रत्यक्षविरोधस्यात्रापि सुवचत्वात् । अतः उपजीव्यप्रत्यक्ष-विरोधमुक्त्वा उपजीव्यश्रुतिविरोधं चाहेति टीकाकृतो हृदयम् । अत्रायं विवेकः, अस्ति तावद्यजमानप्रस्तरवाक्ये नाहं प्रस्तरः नापि प्रस्तरोऽहं किन्तु आवां सर्वदा भिन्नाविति यजमानस्य त्रिविधभेदानामपि प्रत्यक्षतः प्रतीतिः । अत एव स्वार्थप्रच्यावनम् । तत्त्वमसीति वाक्ये तु नाहं सर्वज्ञः नाप्यसर्वज्ञोऽहमसौ किं त्वावां भिन्नाविति निर्दुःखत्वानिर्दुःखत्व-सर्वज्ञत्वासर्वज्ञत्वाद्यनन्तविरुद्धधर्मोपोद्बलितं त्रेधा भेदप्रत्यक्षं जीवस्याप्यस्ति । "तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप" इत्यादिना स्वस्वरूपं जीवस्वरूपं च निर्दिशतः ईश्वरस्यापि नाहमसर्वज्ञः नापि सर्वज्ञस्त्वं अत आवां भिन्नाविति पूर्ववदनन्तविरुद्धधर्मोपोद्बलितं त्रेधापि वाक्यप्रयोगमूलीभूतं भेदप्रत्यक्षमस्ति । भेदादेर्मिथ्यात्वादिना दौर्बल्यं कथयन् मायावादी दीक्षितः स्वयमेव प्रस्तरः स्यात् । परमते भेदस्य सर्वत्र मिथ्यात्वात् । पराभिधित्सितैक्य-स्यावश्यापेक्षितधर्मिप्रतियोगिभूतजीवब्रह्मस्वरूपग्राहकतया सर्वस्यापि भेदप्रत्यक्षस्योपजीव्यत्वं च । अभ्रान्त-सर्वज्ञेश्वरप्रत्यक्षस्योक्तषड्विधभेदगोचरत्वादतिप्राबल्यं च । जैवमानसप्रत्यक्षस्य कदाचित्क्वचित् व्यभिचारसंभवेऽपि साक्षिप्रत्यक्षस्य स्वविषयसुखदुःखादौ कदाऽप्यभ्रमदर्शनेन तद्गृहीतदुःखाज्ञत्वादिव्यावर्तकधर्मस्य तदुपोद्बलितभेदस्या चातथात्वशङ्कानर्हत्वेन प्राबल्यमेव । एवं चास्मदीयभेदप्रत्यक्षाणां प्रस्तरयजमानभेदप्रत्यक्षादपि महदन्तरमस्ति । आचार्यैस्तु ईषत्साम्यमादाय वा अस्मत्प्रत्यक्षस्य आ समन्ताद्विशेषत इति योजनया वा 'प्रत्यक्षस्याविशेषत' इत्युक्तम् । अपौरुषेयत्वात् श्रुतेः प्राबल्यमिति तु प्रत्यक्षविरोधभिया यथाश्रुततत्त्वंपदमुख्यार्थयोरैक्यं त्यजता परेणैव त्यक्तम् । यजमानप्रस्तरवाक्ये बाधितं च । अतः प्रत्यक्षस्यैव प्रबलत्वे यजमानः प्रस्तर इति वाक्य इव मुख्यैक्यं परित्यज्य सादृश्यस्थानमत्याद्यैक्यमेव तत्त्वमसीति वाक्येऽपि योजय । प्रबलप्रत्यक्षसिद्धविरुद्धधर्मत्यागे न कदाप्याशां





कुरु । अतस्तवैक्यशशशिशुकोऽपि प्रबलप्रत्यक्षहर्यक्षेणैव भक्षितः । किन्तु प्रबलप्रत्यक्षसिद्धविरुद्धधर्मावनुपमृद्य सादृश्याद्यैक्यं वदतां प्रौढशिरोमणीनां चरणानुसरणशीलो भव । एवं चापौरुषेयतया आप्तवाक्यतया वा प्रमाणीभूतशब्दस्यैव प्राबल्ये तेनैव विरोधिप्रत्यक्षमप्रमाणीकृत्य बाधितमेव मुख्यार्थं तत्त्वंपदयोर्योजय । प्रस्तरमेव यजमानं कुरु । घोषापेक्षी गङ्गाप्रवाहमेव प्रविश । लक्षणा तु न क्काप्याश्रयणीया । प्रत्यक्षस्यैव प्रबलत्वे च सन् घट इत्यादिप्रत्यक्षविरुद्धत्वदभिलषितमिथ्यात्वमुक्तषड्विधप्रबलभेदप्रत्यक्षविरुद्धं जीवात्मपरमात्मनोरैक्यं च यजमान-प्रस्तरैक्यवत् घोषाधारतीरप्रवाहैक्यवच्च परित्यज्य तत्त्ववादी भव । तदुक्तं युक्तिमल्लिकायाम् । ''त्यज वा लक्षणावृत्तिं भज वा तत्त्वविन्मतम् । व्रज वाऽन्यत्र वाणीमुत्सृज वा बुधसंसदि'' इति । तस्माद्विविधवाक्येष्वपि षड्विधभेदप्रत्यक्षविरोधस्यापरिहरणीयत्वान्मृतमारणायैवोत्तरग्रन्थारम्भो न पूर्वदौर्बल्यादिति ।

**आनन्दः**— ननूत्तरकारिकायां उपजीव्यश्रुतिविरोधदानमयुक्तम् । जीवस्य प्रत्यक्षमात्रसिद्धत्वेन श्रुत्य-सिद्धत्वेन तस्य उपजीव्यत्वाभावादित्यत आह **एवमिति** । विषयभेदाददोष इति भावः । **ब्रह्मानुवादेनेति** । तद्यः प्रसिद्धः परमात्मा सोऽहं योऽसौ सोऽसौ अहमिति ब्रह्मानुवादेनेत्यर्थः ।

**कं०रा०**— **तद्योऽहमिति** । अस्यांशस्य जीवानुवादेन तस्य ब्रह्मत्वविधायकत्वेऽपि योऽसौ सोऽह-मित्यंशस्य योऽसौ परमात्मा सोऽहमिति ब्रह्मानुवादेन जीवाभेदविधायकतया तत्त्वेनोदाहरणमिति द्रष्टव्यम् ।

**वा०चं०**— ननु तत्त्वमसीति वाक्ये जीवस्योद्देश्यत्वेन तत्र सार्वज्ञ्यादिवाक्यस्योपजीव्यत्वायोगात् तद्विरोधप्रतिपादकमुत्तरवाक्यमसङ्गतमित्याशङ्क्य पूर्वोत्तरवाक्ययोरन्यान्यवाक्यविषयकत्वान्नानुपपत्तिरित्याशयेनाह **एवमिति** ।

**वा०र०**— **उद्देश्यत्वेनेति** । त्वमित्यनेन जीवमुद्दिश्य तदसीत्यनेन ब्रह्मैक्यविधायकत्वादिति भावः । **अन्यान्यवाक्येति** । भिन्नभिन्नवाक्येत्यर्थः ।

**४९९ सु०— ताम्** इति श्रवणात् 'या' इत्यध्याहार्यम् । **सार्वज्ञ्यादिगुणं** तत एव **जीवाद्भिन्नमिति** विरोधस्फुरणार्थम् । **एवशब्देनेशस्य प्रमाणान्तरागोचरत्वमाह । हिशब्दो** यस्मादित्यर्थे । **अस्याः** 'तद्योऽहमि'त्याद्यायाः श्रुतेः । **तत्** तस्मात्, तस्मिन्नर्थ इति वा ।

**आनन्दः**— नन्वेवशब्दस्य भिन्नक्रमेण तामेवेति श्रुतेरेवोपजीव्यत्वमुक्तम् । तदयुक्तम् । ईश्वरस्यानुमानादि-विषयत्वस्यापि सत्त्वादित्यत आह **एवेति** ।

**कं०रा०**— तन्मानता भवेदित्यत्र तच्छब्दस्यावृत्तिमभिप्रेत्य व्याचष्टे **तत् तस्मादिति** ।





**श्रीनिधि०— विरोधस्फुरणार्थमिति** । अन्यथा सार्वज्ञादिगुणमित्यनेनैव भेदज्ञानसंभवात् भिन्नमिति व्यर्थं स्यादिति भावः ।

**वा०चं०—** एकवाक्यतालाभायाह **तामितीति** । भिन्नादिपदाश्रवणात्कथं जीवाद्भिन्नमित्याद्युक्ति-रित्यतोऽसार्वज्ञादिकं स्वस्मिन्साक्षात्कुर्वाणस्य सार्वज्ञादिबोधकवाक्यात्स्वविलक्षणवस्तुन एव प्रतीतिरित्याशयेन तदुक्तिरित्याह **तत एवेति** । उपजीव्यत्वोपपादकवाक्ये जीवाद्भिन्नमित्यंशस्योपजीव्यत्वोपपादकत्वाभावा-द्वैयर्थ्यमित्यत उपजीव्यविरोधेनेत्युत्तरवाक्योक्तविरोधांशे उपयोगान्न वैयर्थ्यमित्याह **विरोधेति** । ईशस्य प्रमाणा-न्तरगोचरत्वेऽस्योपजीव्यत्वासंभवादेवशब्दसूचितमाह **एवेति** । प्रसिद्ध्यर्थत्वासंभवादाह **हिशब्द इति** । ऐक्य-वादिनीति सामान्यशब्दस्य विशेषपरत्वं तत्र श्रुतेरित्यस्यानुवृत्तिश्चेत्याशयेनास्या इत्यस्य परामृष्टव्यं दर्शयति **अस्या इति** । अपौरुषेयविरोधादाह **तत्तस्मिन्निति** । यद्वा ऐक्यरूपार्थविशेषे उपजीव्यविरोधेन सर्वथा प्रामाण्या-भावोक्तिरनुपपन्ना । अर्थान्तरे प्रामाण्योपपत्तेरित्यत आह **तत् तस्मिन्निति** ।

**वा०र०— एकवाक्यतेति** । पूर्वोत्तरार्धयोरिति शेषः । अहं दुःखीत्याद्यनुभवसद्भावप्रतिपादकास्ति च तद्विपर्ययेणानुभव इति तत्त्वनिर्णयोक्तानुभवभेदसाधकमभिप्रेत्येदमित्याह **असार्वज्ञादिकं स्वस्मिन्निति** । **अस्येति** । सार्वज्ञ्यादिबोधक यः सर्वज्ञ इत्यादिवाक्यस्येत्यर्थः । **प्रसिद्धीति** । हिशब्दस्येति शेषः । तच्छब्दस्य तस्मादि-त्यर्थकतानुसारेणेदं मूलम् । ततस्मिन्नित्यर्थकत्वे तु हिशब्दो हेताविति पूरणीयम् । **अपौरुषेयत्वेति** । तस्मादस्या-मानता नेत्यर्थाङ्गीकार इति शेषः । आहेत्यस्य हिशब्दस्य हेत्वर्थकतामाश्रित्य यतोऽत इत्यस्य लाभे सत्यतः-प्रतीतार्थे मानता नेत्यर्थमभिप्रेत्याहेत्यर्थः ।

**५०० सु०— तदयमर्थः । ईश्वरमनूद्य तस्य जीवाभेदं प्रतिपादयन्त्या श्रुत्या सर्वथा तावदीश्वरसिद्धिरपेक्षिता; अप्रतीतस्यानुवादायोगात् । न चेश्वरसिद्धिः श्रुतिं विना संभवति । ततो 'यः सर्वज्ञ' इत्यादिश्रुतिरेवास्या उपजीव्येति वाच्यम् । सा चासर्वज्ञाज्जीवादीश्वरस्य भेदमेव प्रतिपादयतीति तद्विरुद्धा 'तद्योऽहमि'त्याद्या श्रुतिर्नाद्वैतवादिनीति ।**

**आनन्दः—** नन्वीश्वरज्ञाने श्रुत्या अभेदस्य बोधयितुं शक्यत्वान्न तद्ब्रहादिश्रुतेरुपजीव्यत्वमत्राह **तदयमर्थ इति** ।

**वा०चं०—** ननु न सार्वज्ञादिवाक्यस्य तद्योऽहमित्याद्युपजीव्यत्वम् । ईश्वरसिद्धेरेवानपेक्षणात् । अपेक्षणे वा प्रमाणान्तरेण तत्संभवात्कथं च तद्विरोध इत्यतोऽभिप्रायमाह **तदयमर्थ इति** ।

**विठ्ठ०—** ननु सार्वज्ञादिप्रतिपादकश्रुतेः कुतः उपजीव्यत्वं येनोपजीव्यविरोधेनैक्यश्रुतेः ईश्वरसिद्ध्यर्थत्व इति । न तत्सिद्धेरनपेक्षत्वात् । अपेक्षितत्वे वासतः संभवादित्यत आह **अयमर्थ इति** ।





**५०१ सु०— एतेन जीवब्रह्मस्वरूपानुवादेन तदैक्यमात्रपराणां 'परेऽव्यये सर्व एकीभवन्ती'त्यादिवाक्यानामुपजीव्यप्रत्यक्षागमविरोधोऽप्युक्तो वेदितव्यः ।**

**आनन्दः**— नन्वेवमपि। जीवब्रह्मणी अनूद्येते ऐक्याभिधाने। नायमस्ति श्रुतिविरोध इत्यत्राह **एतेनेति**।

**श्रीनिधि०— ऐक्यमात्रपराणामिति** । आपातत ऐक्ये मुख्यतात्पर्यवत्तया प्रतीयमानानामित्यर्थः । **उपजीव्यप्रत्यक्षागमविरोध इति** । जीवानुवादेन ऐक्यविधाने उपजीव्यप्रत्यक्षविरोधः ब्रह्मानुवादेन तद्विधाने उपजीव्यागमविरोध इति द्रष्टव्यम्।

**वा०चं०**— एवं सत्यत्वात्तेनेति सार्वज्ञादिगुणमिति वाक्यद्वये तत्तद्वाक्ये विरोधप्रदर्शनपरतया व्याख्यायोभयमेकविषयतया व्याख्याति **एतेनेति** ।

**वा०र०— वाक्यद्वय इति** । तत्त्वमस्यादिवाक्ये तद्योऽहमिति वाक्ये चेत्यर्थः । **एकविषयतयेति** । एकस्मिन्नेव वाक्ये विरोधप्रदर्शनपरतयेत्यर्थः ।

**५०२ सु०— ननु 'सर्पोऽयमि'त्युपजीव्यप्रत्यक्षविरुद्धमपि 'नायं सर्पः, किन्तु रज्जुरेवे'त्युपजीवकमाप्तवचनं प्रमाणं दृश्यत इति चेत्। तत्किमुपजीव्योपजीवकन्यायो व्यभिचरितत्वादकिञ्चित्कर इति वक्तुमुद्यमः, आहोस्वित्सापवाद इति ॥ नाद्यः दहनानुष्णताऽनुमानस्य यजमानः प्रस्तर इति वाक्यस्य चाप्रामाण्ये कारणान्तरस्य वक्तव्यतापातात्। द्वितीयेऽपवादो वक्तव्यः । तत्त्वविषयेणोपजीवकेनाप्युपजीव्यं बाध्यत इति चेत्। तत्त्वविषयता किमेवमेव निश्चिता उत न्यायान्तरेण ॥ नाद्यः विनिगमने कारणाभावेनानिर्णयात्। द्वितीये तदेव वाच्यम्; किमनेन। निरसिष्यते चैतदिति।**

**परि०— आहोस्वित्सापवाद इति** । उपजीव्योपजीवकन्यायः सापवादोऽकिञ्चित्कर इत्यर्थः। ऐक्यवाक्यस्थले च स न्यायः सापवाद इति भावः। **उपजीवकेनेति**। ऐक्यवाक्यं हि नायं सर्प इत्याप्तवाक्यवत्तत्त्वविषयम्। जीवेश्वरग्राहिप्रत्यक्षश्रुती चोपजीव्ये अपि न तत्त्वविषये इति भावः। **एवमेवेति**। निर्बीजमेवेत्यर्थः। **न्यायान्तरेणेति**। मानान्तराप्राप्तार्थकत्वरूपापूर्वतादितात्पर्यलिङ्गरूपन्यायान्तरेणेत्यर्थः। **तदेवेति**। न्यायान्तरमेव प्राबल्यप्रयोजकतया वाच्यम्। किमनेन तत्त्वविषयकत्वकथनेनेत्यर्थः। भङ्ग्यन्तरेण तदेवोच्यत इत्यत आह **निरसिष्यते चैतदिति**। पृथगुपदेशादित्यादौ।





**वं०प०— इति चेदिति** । एवं तत्त्वमस्यादिवाक्येऽपि स्यादिति भावः । **सापवादः** सोत्सर्गः । प्रायिक इत्यर्थः । **कारणान्तरस्येति** । उपजीव्यविरोधेन हि तत्राप्रामाण्यमुच्यते । उपजीव्योपजीवकन्यायस्याकिञ्चित्करत्वे तत्राप्रामाण्ये कारणान्तरं वाच्यं स्यादित्यर्थः । तथा च कालात्ययापदिष्टमात्रोच्छेदः स्यादिति हृदयम् । **तत्त्वविषयतेति** । उपजीवकस्य तत्त्वविषयकतेत्यर्थः । **एवमेवेति** । प्रमाणं विनैवेत्यर्थः । **विनिगमनेति** । तथात्वे उपजीव्यस्याप्येवमेव तत्त्वविषयकत्वापत्त्या वैपरीत्यस्यापि संभवेनोपजीव्यं बाध्यत इति । तव निर्णयायोगादित्यर्थः । **तदेव वाच्यमिति** । उपजीवकस्य तत्त्वविषयकतानिश्चायकं न्यायान्तरमेव वाच्यमित्यर्थः । तथा च न्यायान्तरेण निश्चिततत्त्वविषयताकं यद्वाक्यं तेनानिश्चिततत्त्वविषयताकं वाक्यं बाध्यत इत्येव वक्तव्यम् । तत्त्वविषयकेणोपजीवकेनोपजीव्यं बाध्यत इत्येवमुपजीव्योपजीवकभावकथनेन किमित्यर्थः । व्यर्थत्वान्नायं न्यायो वाच्य इति भावः । नन्वद्वैतश्रुतेस्तत्त्वविषयकत्वनिश्चायकं यन्न्यायान्तरं तेनैव भेदश्रुतेस्तर्हि विरोधः कथ्यत इति चेत्तत्राह **निरसिष्यते चैतदिति** । यद्वा परीक्षितमप्युपजीवकमपरीक्षितमुपजीव्यं बाधते । सर्पोऽयमिति प्रत्यक्षं चापरीक्षितमत उपजीवकेनैव बाध्यत इति युक्तम् । प्रकृते तु नैवम् । उपजीव्यस्य प्रत्यक्षस्य परीक्षितत्वेन शोधितत्वादिति ज्ञानपादे वक्ष्यत इत्यर्थः ।

**आनन्दः**— स्पष्टं भेदश्रुतिविरोधं चाह **किन्त्विति** ।

**कं०रा०— प्रमाणमिति** । तथा चोपजीव्यप्रत्यक्षविरुद्धमपि तत्त्वमसिवाक्यं नायं सर्पः किन्तु रज्जुरेवेत्याप्तवाक्यवत्प्रमाणं भविष्यतीति भावः । **विनिगमनेति** । उपजीव्यं प्रत्यक्षं तत्त्वविषयं न भवत्युपजीवकं तत्त्वमस्यादिवाक्यं तु तत्त्वविषयमिति विनिगमने कारणाभावेनोपजीवकस्य तत्त्वविषयताया अनिर्णयादित्यर्थः । **तदेवेति** । तत्त्वविषयतानिश्चयार्थमपेक्षितं न्यायान्तरमेव प्राबल्यप्रयोजकत्वेन वाच्यम् । अनेन तत्त्वविषयकेणोपजीवकेनाप्युपजीव्यं बाध्यत इति न्यायेन किमित्यर्थः । ननूपक्रमादिरूपं न्यायान्तरमेवोपजीवकस्यापि तत्त्वमसिवाक्यस्य प्राबल्यप्रयोजकत्वेनाचक्ष्महे इत्यत आह **निरसिष्यत इति** ।

**श्रीनिधि०— न्यायान्तरेणेति** । उपक्रमादि न्यायान्तरेणेत्यर्थः । **तदेव वाच्यमिति** । न्यायान्तरेणागमस्य तत्त्वविषयकत्वं प्रत्यक्षस्य तत्त्वाविषयकत्वम् । तथा च प्रत्यक्षागमयोर्बाध्यबाधकभाव इत्येव प्रतिपाद्यताम् । **अनेन** उपजीवकं प्रमाणं उपजीव्यमप्रमाणमित्यनेन । किमभिलषितं सिद्ध्येन्न किमपीत्यर्थः । **एतद्** उपक्रमादिना ऐक्यागमस्य तत्त्वविषयकत्वम् ।

**वा०चं०**— अत्र मूलोक्तस्योपजीव्येनोपजीवकं बाध्यत इति न्यायस्य सापवादकतयाऽनियतत्वेऽपि प्रकृतेऽपवादाभावाद्युक्तं तदुदाहरणमित्याशयेन क्वचिदपवादेऽपि प्रकृते तदभावप्रदर्शनाय तदनुकूलां प्रसक्तिं दर्शयति **नन्विति** । उभयथाऽपि प्रश्नाभिप्रायसंभवाद्विकल्पयति **तत्किमिति** । यदि मिथ्यैव विमतो भेद इत्यनुमानेन विमुक्तश्च विमुच्यत इत्याद्यागमेन च भेदादेर्मिथ्यात्वसिद्धावभेदागमादीनां तत्त्वविषयकतासिद्धिरित्यभिमतं





तर्ह्युक्तं साधकमुदाहृत्य तेनाभेदागमादीनां तत्त्वविषयकतानिश्चयाद्भेदप्रत्यक्षादीनामतत्त्वविषयकाणां तैर्बाध इत्येव वक्तव्येऽस्मदुक्तन्यायवैपरीत्येन बाध्यबाधकाभावे उदाहरणप्रदर्शने न किमपि प्रयोजनम् । तत्त्वविषयकत्वस्यैव बाधकताप्रयोजकतयोपजीवकत्वस्याकिञ्चित्करत्वादित्याह **द्वितीय इति** । अथ तदेवोच्यते । विपरीतबाध्य-बाधकभावोदाहरणप्रदर्शनं तु तदपि तिष्ठतीत्येतावतैवेत्यभिमतं तर्हि तन्निरासोऽपि मिथ्यैव विमतो भेद इत्यादिपृथगधिकरणीयभाष्येणैव सेत्स्यतीत्याशयेनाह **निरसिष्यते चैतदिति** ।

**वा०र०— अनियतत्वेऽपीति** । सर्वत्रोपजीव्यस्योपजीवकाद्बलवत्वाभावेऽपीत्यर्थः । **प्रकृत इति** । तावता यत्रापवादस्तत्र तन्न्यायाप्रवृत्तिरिति प्राप्तेः प्रकृते चापवादाभावेनौत्सर्गिकोक्तन्यायप्रवृत्त्युपपत्तेरित्यर्थः । एवमेवेति पक्षानुत्थानमाशङ्क्याह **उभयथापीति** । **इत्यभिमतमिति** । अनेन न्यायान्तरं प्रदर्शितं भवति । **अस्मदुक्तेति** । अस्मदुक्तो यो न्यायस्तस्य वैपरीत्येनोपजीवकमपि बलवत्वादुपजीव्यस्यापि बाधकं भवति । यथा अयं सर्पः नायं सर्प इत्यादावित्युदाहरणप्रदर्शनेनेत्यर्थः । निरसिष्यते चैतदित्यस्य दूषणान्तरपरता प्रतीयत इत्यतस्तद्व्यावर्त्यशङ्कामाह **अथ तथैवेति** । तर्हि विपरीतबाध्यबाधकभावोदाहरणप्रदर्शनवैयर्थ्यमित्यत आह **विपरीतेति** । इत्येतावतैवोदा-हरणमिति संबन्धः ।

**वि०ट्ठ०— आहोस्वित्सापवाद इति** । तथाच रज्जुसर्प इवैक्यस्याप्यपवादस्थलत्वान्न प्रत्यक्षविरोध इत्याहोस्विदित्यभिप्रायः । **तत्त्वविषयेणेति** । नायं सर्प इत्याप्तवाक्यवदैक्यवाक्यं तत्त्वविषयं जीवेश्वरभेदग्राहि-प्रत्यक्षश्रुती त्वतत्त्वावेदिके इत्यर्थः । **तदेव वाच्यमिति** । प्राबल्यप्रयोजकतया ऐक्यस्य मानान्तराप्राप्ततारूपा अपूर्वतादिन्यायान्तरमेव वाच्यं किं तत्त्वविषयताकथनेनेत्यर्थः । तर्हि तदेव वक्ष्यामीत्यत आह **निरसिष्यत इति** । पृथगधिकरणादावित्यर्थः ।

**ऐक्यवाक्यस्य सावकाशता—**

**५०३ सु०— किञ्च सर्वा अप्यद्वैतश्रुतयो 'द्वा सुपर्णे'त्यादिभेदश्रुतिविरुद्धत्वान्न प्रतीतार्थे प्रामाण्यं भजन्ते । नन्वधिकबलविरोधेन हीनबलमप्रमाणं भवति । भेदश्रुतीनां च कथमद्वैत-श्रुतिभ्योऽधिकबलत्वं येन तद्बाधकतोच्यत इत्यत आह स्वातन्त्र्ये चेति ।**

**अनु०— स्वातन्त्र्ये च विशिष्टत्वे स्थानमत्यैक्ययोरपि ।**
**सादृश्ये चैक्यवाक् सम्यक् सावकाशा यथेष्टतः ॥**
**अवकाशोज्झिता भेदश्रुतिर्नातिबला कथम् ।**





**वा०चं०—** ननु निरवकाशत्वेन भेदश्रुतेः सावकाशाभेदश्रुत्यपेक्षया प्राबल्यमित्यर्थोपपादकोत्तरवाक्यस्य पूर्वप्रकृतोपजीव्यत्वोपपादकत्वाभावादसङ्गतिरित्यतो जीवेश्वरतदुभयधर्मिकाभेदप्रतिपादकतया पराभिमतश्रुतीनां भेदकावेदनमुखेन भेदावेदकोपजीव्यप्रत्यक्षादिविरोधरूपासाधारणदूषणमुक्त्वाऽधुना अद्वैतश्रुतिमात्रस्य साक्षादपि भेदप्रतिपादकश्रुतिबाधं मनसि निधाय तदुपयुक्तप्राबल्यव्युत्पादनार्थत्वेन दूषणान्तरपरत्वान्नोत्तरग्रन्थस्य पूर्वासङ्गतिर्दोष इत्याशयेनाह **किञ्चेति**। अत्र सावकाशताप्रयोजकरार्वनिमित्तोपादानात्सर्वा अप्यद्वैतश्रुतय इत्यर्थोऽवगम्यते। पूर्वं सार्वज्ञादिगुणं तत एव जीवाद्भिन्नमित्युक्त्वाऽत्र भेदश्रुतिरित्येव वचनात् 'द्वा सुपर्णे'त्यादिश्रुतिविशेषोऽत्राभिमत इति गम्यत इति द्रष्टव्यम्।

**वा०र०—** **असङ्गतिरित्यतो** जीवेश्वरतदुभयधर्मिकाभेदप्रतिपादकतया पराभिप्रेतश्रुतीनां भेदकावेदनमुखेन भेदावेदकोपजीव्यप्रत्यक्षादिविरोधरूपासाधारणदूषणमुक्त्वाऽधुनेति पाठः। तत्र **भेदकेति**। सार्वज्ञादिरूपेत्यर्थः। **बाधं मनसीत्यादि**। अनेन भाष्ये उपजीव्यत्वमात्रोक्तेः फलं दर्शितम्। यः सर्वज्ञ इति प्रागुदाहृतश्रुतिपरित्यागेन द्वा सुपर्णेत्येतत्पर्यन्तगमने निमित्तमाह **पूर्वमिति**। सार्वज्ञ्यादिगुणं जीवाद्भिन्नमित्येव भाष्ये उक्तावपि भाष्याभिप्रेतार्थत्वविवक्षयोक्तत्वोक्तिः। **भेदश्रुतिरित्येवेति**। भेदश्रुतिर्नास्तीति भेदश्रुतित्वेनैव व्यवहाराद्भेदकावेदनमुखेन भेदावेदकश्रुत्युपादानं भाष्यकारानभिमतमिति पूर्वश्रुतित्याग इति भावः।

**५०४ सु०— स्वातन्त्र्य** **इत्यादिका निमित्तसप्तमी। स्थानमत्यैक्ययोरिति द्वन्द्वात्परमैक्यपदं प्रत्येकमभिसंबध्यते। सम्यगिति स्वातन्त्र्यादिनिमित्तमैक्यव्यवहारसद्भावमभिप्रैति। तेन 'स्वतन्त्रामुख्यप्रयोगे प्रयोजनं वाच्यम्। न ह्यस्मदायत्ते शब्दप्रयोगेऽकस्मादमुख्यं प्रयुञ्महे' इति निरस्तम्। व्यवहारास्तु टीकाकृतोक्ता द्रष्टव्याः।**

**परि०—** **स्वतन्त्रामुख्यप्रयोग इति**। मुख्यप्रयोगे स्वतन्त्रस्यामुख्यप्रयोगे प्रयोजनं वाच्यमित्यर्थः। अकस्मादित्यस्य निष्कारणमित्यर्थः। निष्कारणममुख्यं न हि प्रयुञ्जीमहीति न्यायस्यार्थः। सम्यगित्यनेन सूचितव्यवहारसद्भावः कथमित्यत आह **व्यवहाराश्चेति**। **टीकाकृतेति**। न्यायरत्नावलीकृतेत्यर्थः। वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामोऽयमेवेति स्वातन्त्र्ये अभेदव्यवहारः। विद्याविशिष्टं ब्राह्मणमधिकृत्यायमेव ब्राह्मणोऽस्मिन् ग्राम इति वैशिष्ट्ये। सायं गोष्ठ एकीभूता गाव इति स्थानैक्ये। पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये। अग्निर्माणवक इति सादृश्ये चाभेदव्यवहार इति उक्ता द्रष्टव्या इत्यर्थः।

**गु०दी०—** **व्यवहारास्तु** इत्यत्र अस्मिन् ग्रामे अयमेक एवेति स्वातन्त्र्यैक्यस्योदाहरणम्। विशिष्टत्वे उत्तमत्वे वसिष्ठ एव मुनिरित्यादिकम्। ''प्रविष्टत्वाच्छरीरेषु जीव एवेति दुर्धियः। मन्यन्ते परमात्मानं न तन्मतमनुव्रजेत्''





इति वाक्योक्तन्यायेनैकस्मिन्नेव देहे जीवपरमयोर्विशिष्टत्वे मिश्रत्वे अन्तःप्रविष्टनीरे क्षीरे क्षीरमेवेदमिति, दूरस्थचूतपनसयोः एक एवायं चूत इत्यादिकं, स्थानैक्ये गोष्ठे गाव एकीभवन्तीत्यादिकं, मत्यैक्ये एकीभूतास्तु कुरव इत्यादिकं, सादृश्यैक्ये सिंहो देवदत्त इत्यादिकं, टीकोक्तं द्रष्टव्यम्।

**यादु०— निमित्तसप्तमीति**। यद्यपि चर्मणि द्वीपिनं हन्तीत्यादाविव 'निमित्तात्कर्मयोगेऽपि' इत्यनेन विहितेयं सप्तमीति न वक्तुं शक्यं कर्मयोगाभावात् स्वातन्त्र्यादेरनुद्देश्यत्वाच्च। तथाऽपि निमित्तमात्रविवक्षायामपि सप्तम्या वैयाकरणैरङ्गीकृतत्वादिदं व्याख्यानम्। कथमन्यथा 'क्ङिति चे'ति सूत्रं कित्ङिन्निमित्ते गुणवृद्धी न स्त इति तैर्व्याख्यातमिति द्रष्टव्यम्। **व्यवहारास्त्विति**। स्वातन्त्र्यादिनिमित्तका व्यवहारास्तु वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वयमेवेति स्वातन्त्र्येऽभेदप्रयोगो दृष्टः। विद्याविशिष्टं ब्राह्मणमधिकृत्यास्मिन्ग्रामे ब्राह्मणः सर्वोऽप्ययमेवेति वैशिष्ट्ये। गोष्ठे एकीभूता गाव इति स्थानैक्ये। पूर्वं परस्परं विरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये। अग्निर्माणवक इति च सादृश्य इति सन्न्यायरत्नावल्यां टीकाकृतोक्ता द्रष्टव्या इत्यर्थः।

**वं०प०— स्वतन्त्रेति**। कुत्रापि केनाप्यकृतेऽमुख्यप्रयोग इत्यर्थः।

**आनन्दः—** स्वातन्त्र्य इत्यादावधिकरणे सप्तमीति भ्रान्तिं निवारयति **स्वातन्त्र्य इति**। ननु सम्यगित्येतदनर्थकमित्यत्राह **सम्यगितीति**। **तेनेति**। स्वातन्त्र्यादिनिमित्तकैक्यव्यवहारसद्भावप्रतिपादनेनेत्यर्थः। तथाच निरूढलक्षणत्वान्न प्रयोजनगवेषणा युक्तेति भावः।

**कं०रा०— स्वतन्त्रेति**। स्वाधीनामुख्यप्रयोग इत्यर्थः। अकस्मात् निमित्तं विना प्रयोजनं विनेति यावत्। **प्रयुञ्जीमहीति**। प्रपूर्वाद्युजेर्विधिलिङि प्रोपाभ्यां युजेरयज्ञपात्रेष्वित्यात्मनेपदं रुधादिभ्यः श्नमिति श्नमि श्नसोरल्लोप इत्याकारलोपो लिङःसीयुडिति सीयुडागमे लिङःसलोपोनन्त्यस्येति सकारलोपे लोपोव्योर्वलीति यकारलोपे च रूपमेतत्। प्रयुञ्ज्महे इति पाठे लटि रूपमिति द्रष्टव्यम्। **व्यवहारास्त्विति**। वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वयमेवेति स्वातन्त्र्येणाभेदप्रयोगो द्रष्टव्यः। विद्यादिविशिष्टब्राह्मणमधिकृत्यास्मिन्ग्रामे ब्राह्मणाः सर्वेऽप्ययमेवेति वैशिष्ट्ये च गोष्ठ एकीभूता गावा इति स्थानैक्ये च पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये चाग्निर्माणवक इति सादृश्ये चेति सन्न्यायरत्नावलीकृतोक्ताः स्वातन्त्र्यादिनिमित्तकैक्यव्यवहारा द्रष्टव्या इत्यर्थः।

**श्रीनिधि०— व्यवहारसद्भावमिति**। रूढलक्षणेत्युक्तं भवति। **तेनेति**। व्यवहारसद्भावेनेत्यर्थः। **अकस्मादिति**। प्रयोजनं विनेत्यर्थः। **निरस्तमिति**। सार्वजनीनव्यवहारस्य सत्त्वान्न स्वतन्त्रप्रयोगत्वम्। येन प्रयोजनं वाच्यमिति भावः। **टीकाकृतोक्ता इति**। पद्मनाभतीर्थभट्टारकैस्सन्न्यायरत्नावल्यामुक्ता इत्यर्थः।

**वा०चं०—** स्वातन्त्र्यादीनां सावकाशत्वाधिकरणत्वाभावाच्छब्दप्रवृत्तौ निमित्ताभिधानस्यावश्यकतया तदनुपपत्तेश्चाह **स्वातन्त्र्य इत्यादिकेति**। स्थानं मत्यैक्यं चेति भ्रान्तिं निरसितुमाह **स्थानेति**।





अत्रामुख्यार्थपरत्वरूपसावकाशत्वे किं नाम सम्यक्त्वमित्यतोऽरूढगौण्याद्यपेक्षया रूढत्वमेव प्रकृतगौण्यादेर्मुख्यत्वमित्याशयेनाह **सम्यगितीति** । यथा वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वयमेवेति स्वातन्त्र्ये, यथा विद्यादिविशिष्टं पुरुषमधिकृत्यास्मिन्ग्रामे ब्राह्मणाः सर्वेऽयमेवेति वैशिष्ट्ये, यथा गोष्ठे गाव एकीभूता इति स्थानैक्ये, पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्येऽग्निर्माणवक इति सादृश्ये चाभेदव्यवहारो दृष्ट इति टीकोक्तरीत्या व्यवहारा द्रष्टव्या इत्याह **व्यवहारास्त्विति** ।

**वा०र०— अधिकरणत्वाभावादिति** । ततश्चाधिकरणसप्तम्ययोग इति भावः । इतःपरं शब्दप्रवृत्तिनिमित्ताभिधानस्यावश्यकतया तदनुक्त्यनुपपत्तेश्चेति पाठः । शब्दप्रवृत्तीत्युक्त्या निमित्तपदं मूलस्थं शब्दप्रवृत्तिनिमित्तपरमिति दर्शितम् । चर्मणि द्वीपिनं हन्तीत्यत्र चर्मफलतया निमित्तमिति भेदः । द्वन्द्वात्परमैक्यपदमिति जातिविभागवाक्यस्थकार्यसमा इत्यत्र द्वन्द्वान्त इत्येतद्विचारो गुरुपादकृतप्रमाणलक्षणटीकायामस्ति तदनुसारेण लेख्यः । मूले **सम्यगिति** स्वातन्त्र्यादिनिमित्तैक्येति पाठः । स्वातन्त्र्यादिनिमित्तमस्येति विवक्षणेऽपि व्यवहारसद्भावं प्रति तस्य निमित्तत्वप्राप्त्या व्यवहारं प्रति निमित्तत्वानुक्तिप्रसङ्गात् निमित्तमिति पाठास्वारस्यम् । मूलकोशेऽपि निमित्तैक्येत्येव पाठसत्त्वाच्चेति ज्ञेयम् । **टीकोक्तरीत्येति** । सन्न्यायरत्नावलीरीत्येत्यर्थः ।

**स०व्र०— स्वातन्त्र्य इत्यादिका निमित्तसप्तमीति** । चर्मणि द्वीपिनं हन्तीत्यादाविवात्रापि ऐक्यागतिप्रस्तुतैक्यरूपकर्मसद्भावान्निमित्तसप्तमीत्वोपपत्तिरिति ध्येयम् । **टीकाकृतोक्ता द्रष्टव्या इति** । यथा वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामस्त्वयमेवेति स्वातन्त्र्येऽभेदप्रयोगो दृष्टः । यथा विद्यादिविशिष्टब्राह्मणमधिकृत्यास्मिन्ग्रामे ब्राह्मणः सर्वोऽप्ययमेवेति वैशिष्ट्ये च । यथा गोष्ठे गाव एकीभूता इति स्थानैक्ये च । पूर्वं परस्परविभिन्नमतायो ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये च । यथाऽग्निर्माणक इति सादृश्ये चाभेदव्यवहार इत्यर्थः ।

**विट्ठ०— तेनेति** । लोके बहुलव्यवहारोपलम्भाद्रूढिगर्भत्वेनेत्यर्थः । **स्वतन्त्रामुख्येति** । मुख्यप्रयोगे स्वतन्त्रस्य समर्थस्यामुख्यप्रयोगे प्रयोजनं वाच्यं कुतः शब्दप्रयोगे मदधीने सत्यकस्मान्निष्कारणममुख्यं न हि प्रयुञ्ज्महे ।

**चषकः— निमित्तसप्तमीति** । यद्यपि 'चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हत' इत्यादाविव फलसंयोगे द्योत्ये निमित्तात्कर्मयोग इति लक्षणा लक्षिता प्रकृते फलसंयोगराहित्येन दुरुपपादा तथापि फलिताभिप्रायिकेयमुक्तिः । व्यक्तमेतच्छब्दकौस्तुभे । ननु क्ङितीति सप्तमीनिर्देशात्तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपतिष्ठेत । तत्र निःशब्दस्य नैरन्तर्यपरत्वाद्दिशेश्चोच्चारणक्रियत्वादव्यवहितोच्चरितस्य निषेधः स्यान्न तु छिन्नं भिन्नमित्यादेरपीति चेत् । भवेदेवं यदि क्ङितीत्येतन्निषेध्यया क्रियया संबध्येत । इह तु गुणवृद्धिभ्यां संबध्यते । यस्य च भावेनेति सप्तमी क्रियान्तराश्रयणादौत्सर्गिकसत्ताक्षेपस्ततश्च क्ङिति सति प्रात्ययेये गुणवृद्धी इति संबन्धे कृते सिद्धसाध्यसमभिव्याहारन्यायेनोपलक्षणीभूतसत्ताश्रयस्य निमित्तत्वमुत्सर्गतः फलति ।





न त्विह विशिष्य निमित्तताया सप्तमीविधानमस्ति । न चात्र निर्दिष्टपरिभाषा संभवति । विद्ध्यङ्गभूतानां परिभाषाणां साक्षाद्विधेयनिषेध्यक्रियान्वयिन्येव प्रवृत्तेः । इदं तु क्रियान्वयिनो विशेषणं न तु क्रियाया अतोऽत्र न परिभाषाप्रवृत्तिरिति । **व्यवहारास्त्विति** । स्वातन्त्र्यादिनिमित्तका इत्यादिः । वशीकृतग्रामं पुरुषमधिकृत्यायं ग्रामोऽयमेवेति स्वातन्त्र्ये, विद्याविशिष्टं ब्राह्मणमधिकृत्यायमेव सर्वो ब्राह्मण इति वैशिष्ट्ये, सायं गोष्ठे गाव एकीभवन्तीति स्थानैक्ये, पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मतैक्ये, अग्निर्माणवक इति सादृश्ये चाभेदव्यवहाराः सन्न्यायरत्नावलीकृदुक्तदिशा द्रष्टव्या इत्यर्थः ।

**५०५ सु०— काऽद्वैतश्रुतिः स्वातन्त्र्यादिषु किन्निमित्तमुपादाय प्रवृत्तेत्यपेक्षायामुक्तम् यथेष्टत इति । यथासंभवमित्यर्थः । एतच्च स्पष्टीकरिष्यत्याचार्यः । वृत्तिचिन्तां च तत्रैव करिष्यामः ।**

**बिन्दुः— वृत्तिचिन्तामिति** । शक्तिलक्षणादिवृत्तिविचारमित्यर्थः ।

**परि०— एतच्चेति** । यथासंभवमित्येतत् । 'पृथगुपदेशादित्यधिकरणे तद्गुणसारत्वादि'ति गुणसूत्रव्याख्यावसरे 'तथापि तु चिदानन्दपूर्वास्तत्सदृशा गुणाः' इत्यादिना तत्त्वमसीत्यादिवाक्यं सादृश्यनिमित्तकम् । 'सर्वं खल्विदं ब्रह्मे'त्यादिकं स्वातन्त्र्यवैशिष्ट्यनिमित्तकं 'परेऽव्यय' इत्यादिकं तु स्थानैक्यादिनिमित्तकमित्यादिरूपेण स्पष्टीकरिष्यतीत्यर्थः । **वृत्तिचिन्तामिति** । सादृश्यस्थले गौणी । स्थानैक्यस्थले लक्षणा । मत्यैक्यस्थले लक्षितलक्षणेत्येवंरूपवृत्तिचिन्तामित्यर्थः ।

**यादु०—** ननु स्वातन्त्र्येत्यादिका निमित्तसप्तमीति कुतो विषयसप्तम्येव किं न स्यादित्यत आह **एतच्च स्पष्टीकरिष्यतीति** । 'सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिदा । आहुरीशेन जीवस्ये'ति पृथगधिकरणीयानुव्याख्याने पञ्चमीप्रयोगेन स्वातन्त्र्यादीनां निमित्तत्वं स्पष्टीकरिष्यतीत्यर्थः । तथा च तत्रैव 'स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यत' इत्यनेन स्थानैक्यमत्यैक्ययोर्मुक्तविषयत्वकथनेनापि स्पष्टीकरणं ज्ञातव्यम् । ननु स्वातन्त्र्यादिनिमित्तका वृत्तिः किं शक्तिरुत लक्षणोत गौणीति जिज्ञासायामाह **वृत्तिचिन्तां चेति** । तत्त्वमसीत्यादिव्यपदेशः सादृश्याद्गौणः । नान्योऽतोऽस्ति द्रष्टेत्यादिनिर्देशस्तु प्राधान्यस्वातन्त्र्याभ्यां लाक्षणिकः । द्रष्टृपदेन तत्रारोपितं वैशिष्ट्यं स्वातन्त्र्यं चोपलक्ष्यते । तथा च द्रष्टा विशिष्टः स्वतन्त्रश्चान्यो नास्तीत्यर्थः संपद्यते । यद्वा तत्त्वमसीत्यादिनिर्देशोऽपि प्राधान्यस्वातन्त्र्याभ्यां लाक्षणिकः । अत्र हि तच्छब्देन तदीयप्राधान्यस्वातन्त्र्ये लक्ष्येते पुनस्ताभ्यां तद्विषयता लक्ष्यते । ततश्च तत्प्रधानकस्तत्तन्त्रश्चेति वाक्यार्थो भवतीति । परेऽव्यये सर्व एकीभवन्तीत्यादिव्यपदेशस्तु स्थानैक्येन लाक्षणिकः । अत्रैव व्यपदेशो मत्यैक्यस्य निमित्तत्वेन लक्षितलक्षणेत्येवंरूपां वृत्तिचिन्तां पृथगधिकरण एव करिष्याम इत्यर्थः ।

**आनन्दः**— टीकाकाराः सन्न्यायरत्नावल्यादिकृतः। यथेष्टतः तदिच्छात इति प्रतीयते। श्रुतेरचेतनत्वेनेच्छानुसारेण सावकाशत्वस्य वक्तुमशक्यत्वात् इत्यतस्तद्व्याचष्टे **यथासंभवमित्यर्थ इति**। **एतच्चेति**। ज्योतिरधिकरणादाविति शेषः।

**कं०रा०**— स्वातन्त्र्य इत्यादिका निमित्तसप्तमी कुतो विषयसप्तमी किं न स्यादित्यत आह **एतच्चेति**। अद्वैतश्रुतेर्यथासंभवं स्वातन्त्र्यादिनिमित्तत्वं च। "अतोऽभेदवदेवैताः श्रुतयः प्रवदन्ति हि। पौराणानि च वाक्यानि सादृश्याभेदसंश्रयात्। सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिधाम्। आहुरीशेन जीवस्य न स्वरूपाभिदां क्वचित्। स्थानैक्यमैकमत्यं च मुक्तस्य तु विशिष्यत" इत्यत्राचार्याः स्पष्टीकरिष्यन्तीत्यर्थः। **वृत्तीति**। तत्त्वमसीत्यादिव्यपदेशः सादृश्याद्गौणो नान्योऽतोऽस्ति दृष्टेत्यादिव्यपदेशो वैशिष्ट्यस्वातन्त्र्ययोर्लाक्षणिकः। यत्र त्वस्य सर्वमात्मैवाभूत् 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणोऽभेदमसन्तं कः करिष्यती'-त्यादिमुक्तैक्यव्यपदेशस्तु स्थानैक्येन निमित्तेन यदा प्रवृत्तस्तदा लाक्षणिकः। ऐकमत्यनिमित्तेन प्रवृत्तत्वे तु तस्य लक्षितलक्षणाविषयान्मत्यैक्यं ततश्च मतिमतामैक्यं लक्ष्यत इति। एवंप्रकारेण वृत्तिचिन्तां तत्रैव करिष्याम इत्यर्थः।

**श्रीनिधि०**— **स्पष्टीकरिष्यत्याचार्य इति**। 'तथापि तु चिदानन्दपूर्वास्तत्सदृशा गुणाः' इत्यादिनेति भावः। **वृत्तिचिन्तामिति**। वृत्तिर्मुख्या वा अमुख्या वेति चिन्तामित्यर्थः। सावकाशा चाद्वैतश्रुतिः विनापि साक्षादद्वैतं स्वातन्त्र्यादिनिमित्तेनामुख्यार्थतयापि घटमानत्वादिति।

**वा०चं०**— यत्किञ्चिदद्वैतश्रुतेः स्वातन्त्र्यादिनिमित्तेषु स्वेच्छया यत्किञ्चिदुपादानेन प्रवृत्तिर्न तु नियम इति भ्रान्तिं निवारयति **यथासंभवमित्यर्थ इति**। इष्टं संभवः। कथं संभव इत्यतस्तत्त्वमसीत्यत्र सादृश्यं नान्योऽतोऽस्तीत्यत्र स्वातन्त्र्यप्राधान्ये। यद्वा तत्त्वमसीत्यत्रापि स्वातन्त्र्यप्राधान्ये। यत्र त्वस्येत्यादिकमुक्त्वा भेदवचने स्थानैक्यमत्यैक्ये निमित्तानीतीममर्थं 'सादृश्याच्च प्रधानत्वात्स्वातन्त्र्यादपि चाभिदाम्। आहुरीशेन जीवस्ये'त्युक्त्वा 'स्थानैक्यमैकमत्यं तु मुक्तस्य तु विशिष्यत' इति वदन्नाचार्यः स्फुटीकरिष्यतीत्याह **एतच्चेति**। ननु सादृश्यादिनिमित्तकत्वे का वृत्तिरित्यतः सादृश्यनिमित्तकत्वे गौणी प्राधान्यस्वातन्त्र्यनिमित्तकत्वे लक्षणा स्थानैक्ये लक्षणा मत्यैक्ये लक्षितलक्षणेति वृत्तिचिन्तामुदाहृतवाक्यव्याख्यावसरे करिष्याम इत्याह **वृत्तिचिन्तामिति**।

**वा०र०**— **इति भ्रान्तिमिति**। यथेष्टपदार्थतया तथार्थप्राप्तेरिति भावः। **निवारयति**। यथेष्टपदार्थकथनेनेति पूरणीयम्। इच्छार्थकेष्धातोर्भावे क्तान्तेष्टशब्दस्य प्रतीतार्थत्यागेन प्रकृतानुगुणतया संभवार्थत्वस्वीकार इत्याशयो मूलकारस्येति भावेनाह **इष्टं संभव इति**। **यत्र त्वस्येत्यादीति**। आदिपदेन संपूर्णवाक्यस्येव पूर्वमूलोदाहृतपरेऽव्यये सर्व एकीभवन्तीत्यस्यापि सङ्ग्रहः। अत्र स्थानैक्ये लक्षणेत्यादेरुपपत्तिप्रकारः परेऽव्यय इत्येतत्संबन्धि-तत्त्वनिर्णयटीकाव्याख्यानप्रपञ्चेऽस्माभिर्निरूपितोऽत्राप्यवधेयः। अत्रापि ......................अधिकरणे तन्निरूपणं भविष्यति।

**स०व्र०— एतच्चेति** । पृथगधिकरण इति शेषः । भगवत्स्वातन्त्र्यं तद्वैशिष्ट्यालम्बनत्वेन सावकाशम् । सर्वं खल्विदं ब्रह्मेत्यादिजीवजडाभ्यामभेदवचनं ब्रह्मणः । परेऽव्यये सर्व एकीभवन्तीति । परमं ब्रह्म वेद ब्रह्मैव भवतीति मुक्तेरभेदवचनं भगवत्स्थानमत्यैक्यसादृश्यैक्यालम्बनत्वेन सावकाशमिति स्पष्टीकरिष्यत्याचार्यः । नन्वेवं सादृश्यैक्यादिनाऽभेदवचनस्य सावकाशत्वे कया वृत्त्या सादृश्यैक्याद्यभिधायकत्वं तत्राह **वृत्तिचिन्तामिति** ।

**वि०ठ०—** यथा वशीकृतग्रामं पुरुषमधिकृत्य अयं ग्रामस्त्वयमेवेति स्वातन्त्रे अभेदप्रयोगो दृष्टः । यथा विद्याविशिष्टं ब्राह्मणमधिकृत्यास्मिन्ग्रामे ब्राह्मणा सर्वेऽप्ययमेवेति वैशिष्ट्ये च । यथा गोष्ठे एकीभूता गाव इति स्थानैक्ये च यथा पूर्वं परस्परविरुद्धा ब्राह्मणा इदानीमेकीभूता इति मत्यैक्ये च । यथाग्निर्माणवक इति सादृश्ये च तथैव भगवत्स्वातन्त्र्यभगवद्वैशिष्ट्यावलंबनत्वेनेत्यादि **स्पष्टीकरिष्यतीति** । तद्गुणसारित्वादिति सूत्रव्याख्यानावसरे तत्त्वमसीत्यत्र सादृश्यं सर्वं खल्वित्यत्र स्वातन्त्र्यं वैशिष्ट्यं च । परेऽव्यय इत्यत्र स्थानैक्यं मत्यैक्यं चेत्यादि स्पष्टीकरिष्यतीत्यर्थः । **वृत्तिचिन्तामिति** । सादृश्यस्थले गौणी स्थानैक्ये लक्षणा मत्यैक्ये लक्षितलक्षणेत्येवंरूपमित्यर्थः ।

**चषकः— एतच्चेति** । सादृश्याच्च प्रधानत्वादित्यादिकपृथगुपदेशादितिनयीयतद्गुणसारत्वादिति गुणसूत्रव्याख्यारूपप्रतीकव्याख्यावसरे पञ्चमीनिर्देशेन विषयसप्तम्यनाश्रयणेन निमित्तसप्तम्याश्रयणबीजं स्फुटीकरिष्यतीत्यर्थः । **वृत्तिचिन्तामिति** । सादृश्यस्थले गौणी, स्थानैक्यस्थले लक्षणा, मत्यैक्यस्थले लक्षितलक्षणेत्येवंरूपां वृत्तिचिन्तामित्यर्थः ।

**प्रदीपः—** तत्त्वमस्यादिवाक्येषु का वृत्तिः संभवतीत्यत आह **वृत्तिचिन्तामिति** ।

॥ भेदश्रुतेः अतिबलिष्ठत्वम् ॥

निरवकाशत्वात्—

**५०६ सु०— एतदुक्तं भवति । सावकाशनिरवकाशयोर्निरवकाशं बलवत् । सावकाशा चाद्वैतश्रुतिः, विनाऽपि साक्षादद्वैतं स्वातन्त्र्यादिना निमित्तेनामुख्यार्थतयाऽपि घटमानत्वात् । भेदश्रुतिस्तु निरवकाशा; जीवेशभेदमन्तरेणार्थान्तराप्रतीतेः । अतो निरवकाशतया बलवत्या भेदश्रुत्या सावकाशतया दुर्बलाया अद्वैतश्रुतेर्बाधो युक्त इति ।**

**परि०—** तावता नन्वधिकबलेत्यादिना कृतचोद्यस्य स्वातन्त्र्ये चेत्यादिना किमुत्तरं जातमित्यत आह **एतदुक्तं भवतीति** ।





**यादु०— साक्षादद्वैतमिति** । मुख्यार्थतया प्रतीयमानमद्वैतमित्यर्थः । न चात्र सावकाशत्वं पुनरर्थान्तरवाचित्वमिति तत्त्वप्रकाशिकया विरोधः शङ्कनीयः । तत्र व्याख्यातृव्यापारमनपेक्ष्याभिधया वाऽभिधातुल्यया वा रूढलक्षणाद्यमुख्यवृत्त्या वाऽर्थान्तरप्रतिपादकत्वं सावकाशत्वमित्यभिप्रेतत्वात्प्रकृते च रूढलक्षणादेरेवोक्तत्वात् ।

**आनन्दः**— नन्वधिकबलत्वाभावात्कथं श्रुतिविरोध ऐक्यागमस्येत्युक्ते ऐक्यश्रुतेः सावकाशत्वमुक्तं तदयुक्तम् । अधिकबलत्वानुपपादनात् । किञ्च श्रुतिद्वयस्य सावकाशत्वात्कथं बाध्यबाधकभाव इति तत्राह **एतदुक्तं भवतीति** ।

**वा०चं०**— ननु भेदाभेदश्रुत्योरास्तां निरवकाशत्वसावकाशत्वे तथाऽपि कुतः प्राबल्यदौर्बल्ये मूलभूतन्यायानुपन्यासात्सावकाशेत्यस्य स्वातन्त्र्यादिनिमित्तेनेत्यनेन साक्षात्संबन्धानुपपत्तिश्च । कथं च भेदश्रुतेर्निरवकाशत्वमित्यत आह **एतदुक्तं भवतीति** । यद्यप्यत्रामुख्यवृत्त्या सावकाशत्वोक्तेः स्थलान्तरटीकया विरोध इवाभाति । तत्र सावकाशत्वं पुनः स्वयमर्थान्तरवाचित्वं न पुनर्लक्षणादिना कल्पनीयार्थान्तरत्व-मित्युक्तत्वात् । तथाऽपि प्रकृतगौण्यादे रूढगौण्यादित्वेन शक्तितुल्यतया न विरोधः । अत एव भेदश्रुतेरपि लक्षणादिना अर्थान्तरसंभवेऽपि तस्य रूढिपूर्वकत्वाभावाद्भेदश्रुतेरर्थान्तराप्रतीतेरित्यपि युक्तमित्यपि द्रष्टव्यम्।

**वा०र०— स्थलान्तरीयटीकयेति** । समन्वयसूत्रीयटीकयेत्यर्थः । तत्र स्वभावप्रबलेन दुर्बलबाधने तत्प्रामाण्यायार्थान्तरकल्पनम् । सावकाशत्वं पुनः स्वयमर्थान्तरवाचित्वमिति भेदादित्येवोक्तावपि न पुनर्लक्षणादिना कल्पनीयार्थान्तरपरत्वमित्यधिकार्थोऽभिप्रेतत्वादुक्त इत्यदोषः । अत्रत्यटीकानुसारेण तत्रत्यटीकाकारान्तरोक्तिः निराकार्यास्ति । **अर्थान्तरसंभवेऽपीति** । संमतैव तथा चार्थान्तराप्रतीतेरित्ययुक्तमिति प्राप्तमिति भावः । **रूढिपूर्वकत्वेति** । तत्पूर्वकलक्षणादिनार्थान्तरं प्रतीति संमतैव । भेदश्रुतेस्तथाविधार्थान्तरप्रतीतेरभावाशयेनैव तदप्रतीतिवचनमतो न दोष इत्यर्थः ।

**विठ्ठ०**— नन्वेतावतापि कथं भेदश्रुतीनां ऐक्यश्रुतिभ्योऽधिकबलत्वलाभ इत्यत आह **एतदिति** । **अत इति** । न्यायस्यार्थः।

**चषकः— साक्षादद्वैतम्** मुख्यार्थतया प्रतीयमानमद्वैतम्।

मिथ्याभेदस्य निराकृतत्वात् श्रुतेः मिथ्याभेदपरत्वाभावात्—

**५०७ सु०— ननु भेदश्रुतिरपि सावकाशा मिथ्याभेदपरत्वादिति चेत् । कोऽयं मिथ्याभेदो नाम । किमसन् उतानिर्वचनीयः । नाद्यः अनङ्गीकारात् । द्वितीये दोषमाह अज्ञानेति ।**

## अनु०— अज्ञानासंभवादेव मिथ्याभेदो निराकृतः ॥

**अज्ञानातिरिक्तमनिर्वचनीयमज्ञानकार्यमिति हि परसम्मतम् । न चाज्ञानं तन्मते संभवतीत्युक्तम् । ततो मिथ्याभेदासंभवान्न तदर्थत्वं भेदश्रुतेरिति ।**

**वा०चं०—** मिथ्यात्वस्यासत्त्वरूपत्वेऽज्ञानासंभवेनेत्यस्य मिथ्याभेदनिरासे हेतुत्वानुपपत्तेस्तं पक्षमुपर्येव निरस्य पक्षान्तरदूषणपरतया मूलं संयोजयितुं विकल्पयति **कोऽयमिति** । नन्वस्मिन्पक्षेऽप्यप्रयोजकतया हेतुहेतुमद्भावासंभव एवेत्यत आह **अज्ञानेति** ।

**वा०र०— मिथ्याभेदेति** । असत्त्वरूपमिथ्यात्वोपेतभेदेत्यर्थः । **अनुपपत्तेः** । अज्ञानकल्पितत्वाङ्गीकाराप्रास्याऽज्ञानासंभवस्याबाधकत्वादित्यर्थः ।

**विठ्ठ०— इत्युक्तमिति** । पैरीरिति शेषः ।

**५०८ सु०— ननु 'भेदश्रुतिरनुवादिनी'त्युक्तम् । यथा नानुवादिनी तथा वक्ष्यते ॥ किञ्च प्रमितस्यानुवादो भ्रान्तिसिद्धस्य वा ॥ नाद्यः अनभ्युपगमात् । अभ्युपगमे वा तत्प्रमाणप्रतिरोधोऽद्वैतश्रुतेः ॥ न द्वितीयः । अज्ञानासंभवेन निरस्तत्वात् ॥ एतेन 'अपूर्वताविरहाद् दुर्बला भेदश्रुतिरि'ति निरस्तम् ।**

**परि०— अनुवादिनीत्युक्तमिति** । अद्वैतवादिभिरिति योज्यम् । **वक्ष्यत इति** । पृथगुपदेशादित्यत्र द्वितीये । 'न च मानान्तरोपेयं ब्रह्म तद्भवति क्वचिदि'त्यादिना वक्ष्यत इत्यर्थः । एतेन अनुवादिनी नेति वक्ष्यत इति कथनेन किञ्चेति विकल्पपूर्वं दूषणकथनेन चेत्यर्थः ।





**यादु०— तथा च वक्ष्यत इति** । 'न च मानान्तरोपेयं ब्रह्म तद्भवति क्वचिदि'त्यत्रेति शेषः । ननु भेदश्रुतिरनुवादिनीत्युक्तशङ्कापरिहारायापि मूलं व्याचष्टे **किञ्चेति** । **एतेनेति** । भेदस्य प्रमाणान्तराप्राप्तत्वकथनेनेत्यर्थः ।

**वं०प०— तत्प्रमाणेति** । येन प्रमाणेन प्रमितस्तत्प्रमाणेत्यर्थः । **निरस्तत्वादिति** । अज्ञानस्यैवासंभवेन तत्कार्यभ्रान्तेरेव त्वन्मतेऽसंभवादित्यर्थः । **एतेनेति** । भेदस्य प्रमाणान्तराप्राप्तत्वेनैवेत्यर्थः ।

**आनन्दः— एतेनेति** । अपूर्वत्वाविरहो हि किं प्रमाणसिद्धभेदानुवादित्वेन वा भ्रान्तिसिद्धतदनुवादित्वेन वा । नाद्यः । अनभ्युपगमात् । न द्वितीयः । अज्ञानासंभवेन तदसंभवादित्युक्तदोषेणेत्यर्थः ।

**कं०रा०— अनभ्युपगमादिति** । भेदश्रुतिः प्रमितस्य भेदस्यानुवादिनीति त्वदभ्युपगमाभावादित्यर्थः । **अभ्युपगमे वेति** । भेदश्रुतेः प्रमितभेदानुवादत्वस्याभ्युपगमे वा यत्प्रमाणप्रमितिभेदानुवादत्वं भेदश्रुतेस्तत्प्रमाणविरोधस्याद्वैतश्रुतेरित्यर्थः । **एतेनेति** । भेदश्रुतेः प्रमितानुवादत्वस्य भ्रान्तिसिद्धानुवादत्वस्य च निरासेनाप्राप्तप्रापकतारूपापूर्वताविरहाद्भेदश्रुतिर्दुर्बलेत्येतन्निरस्तमित्यर्थः ।

**श्रीनिधि०— अनुवादिनीत्युक्तमिति** । परेण स्वग्रन्थे इति शेषः । **एतेनेति** । अनुवादित्वं नास्तीति वक्ष्यमाणत्वेनेत्यर्थः । अथवा प्रमितस्यानुवाद इति त्वया अनभ्युपगमेनेत्यर्थः । **अपूर्वतेति** । मानान्तराप्राप्ततेत्यर्थः ।

**वा०चं०—** प्रकारान्तरेण सावकाशत्वं शङ्कते **नन्विति** । **वक्ष्यत इति** । 'न च मानान्तरोपेयं ब्रह्मा तद्भवति क्वचिदि'ति वक्ष्यत इत्यर्थः । 'येन मानेन चोपेयं भेदस्तेनावगम्यत' इत्यनुव्याख्यानम् 'अज्ञानसंभवादेवे'त्येतदनुव्याख्यानं च मनसि निधाय व्यवस्थितदूषणेनानुवादत्वपक्षे संभावितकल्पद्वयं निराह **किञ्चेति** । **एतेनेति** । अनुवादासंभवव्युत्पादनाय प्रमाणान्तराद्यसिद्धिव्युत्पादनेनेत्यर्थः ।

**विठ्ठ०— वक्ष्यते** पृथगधिकरणे । **एतेन** निरवकाशत्वकथनेन ।

**चषकः— तथा वक्ष्यत इति** । पृथगुपदेशादितिनये 'न च मानान्तरोपेयं ब्रह्म तद्भवति क्वचिदि'त्यादिना अभिधास्यत इत्यर्थः ।





॥ परकृतापव्याख्याप्रत्याख्यानस्य असङ्गतत्वम् इति शङ्कायाः परिहारार्थं सूत्रार्थोपन्यासः उपसंहारश्च ॥

**५०९ सु०—** परकृतापव्याख्याप्रत्याख्यानमुपसंहरन् 'परदोषं पश्यसि त्वमात्मदोषं न पश्यसी'त्याभाणकविषयता भवतामापन्ना; यतः सूत्रव्याख्यानमुपक्रम्य परापव्याख्यान-निराकरणेऽप्यसङ्गतिर्नालोचितेत्याशङ्कां परिहर्तुं सूत्रार्थमनुवदति **अत इति**।

**अनु०—** **अतो यथार्थबन्धस्य विना विष्णुप्रसादतः।**
**अनिवृत्तेस्तदर्थं हि जिज्ञासाऽत्र विधीयते ॥**

**अस्मदुक्तः सूत्रार्थो न तावच्छिष्याणां चेतसि स्थिरो भवति यावत्परकृताप-व्याख्यामापातरमणीयां पश्यन्ति । अतस्तदपाकरणमपि सूत्रार्थस्थिरीकरणार्थतया सङ्गततरमिति भावः ।**

**परि०—** **परकृतेति** । आद्यसूत्रोक्तविषयादिनाऽर्थात्सिद्धं बन्धमिथ्यात्वमिति जिज्ञासासूत्रा-भिमतं बन्धमिथ्यात्वमिति यत्परकृतमपव्याख्यानं तस्य 'इत्युक्तेर्बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत' इत्यादिना यत्प्रत्याख्यानं कृतं तदुपसंहरन्सूत्रार्थमनुवदतीत्यर्थः । सूत्रार्थानुवादे किं फलमित्यतः शङ्कापरिहारः फलमिति भावेनोक्तम् **परदोषमित्यादि** । परस्याध्यासभाष्यकारिणः सूत्रार्थानुपयुक्त-मध्यासभाष्यकरणमसङ्गतमिति दोषो 'बन्धमिथ्यात्वं नैव मुक्तिरपेक्षत'इत्यादिनोक्तः । स च दोषो भवतामपि प्राप्तः, सूत्रार्थानुपयुक्तस्यैव परमतनिरासस्य कृतत्वात् । एवं च 'परदोषं पश्यसी'ति गाथाविषयता प्राप्तेत्यर्थः । मूलेऽत इत्यस्य प्रत्यक्षादिसाधकभावाद्बाधकाभावाच्चेति स्पष्टत्वात्तात्पर्य-मेवाह **अस्मदिति** ।

**वं०प०—** **असङ्गतिर्नालोचितेति** । तन्निराकरणस्य सूत्रार्थत्वाभावादिति भावः ।

**आनन्दः—** नन्वतो यथार्थेत्यत्र सूत्रार्थकथनमयुक्तम् । तत्प्रसादादेव मुच्यत इत्यनेन तस्योक्तत्वेन पौनरुक्त्यादित्यत आह **परकृतेति** । तथाचानुवादित्वाभावान्न वैयर्थ्यमिति भावः । ननु सूत्राक्षरार्थकथनरूपत्वाभावा-दपव्याख्यानिराकरणं मध्येऽसङ्गतमित्यत आह **अस्मदुक्त इति** ।

**श्रीनिधि०—** आभाणकं गाथा ।





**वा०चं०**— ननु सूत्रार्थप्रतिपादकोत्तरवाक्यं व्यर्थम् । सूत्रार्थस्य जिज्ञास्योऽयं विधीयते जिज्ञासोत्थ-ज्ञानजात्तत्प्रसादादेव मुच्यत इत्यादिनोक्तत्वात् । न चानुवादो वैयर्थ्यादित्यत आह **परेति** ।

**विठ्ठ०**— **परकृतेति** ।जिज्ञासासूत्रविषयादिकथनेनार्थाद्बन्धमिथ्यात्वमपि प्राप्तमिति तस्यापि सूत्राभि-प्रेतत्वरूपापव्याख्यानमित्यर्थः । **असङ्गतिर्नालोकितेति** । तथा च सूत्रार्थं वक्तुमुपक्रम्य बन्धमिथ्यात्ववर्णनमसङ्गत-मित्युक्तो योऽसङ्गतिलक्षणो दोषः स भवतामपि प्राप्त इति भावः । अत्रात इत्यस्य अतो बाधकाभावादिति सन्न्यायरत्नावल्यनुसारेणार्थस्य स्पष्टत्वात्पूर्वशङ्कापरिहारार्थमभिप्रायमाह **अस्मदिति** ।

॥ बन्धसत्यत्वस्य 'अतः'शब्दवर्णकान्तरत्वम् ॥

**५१० सु०— अथवा 'अज्ञानां ज्ञानदो विष्णुरि'त्यादिबन्धमिथ्यात्वनिराकरणं तत्सत्यत्व-समर्थनं च सूत्रगतातःशब्दस्यैव वर्णकान्तरमित्यतो नासङ्गतमिति दर्शयन् सूत्रेऽप्यस्यार्थ-स्योपयोगं दर्शयति अतो यथेति ।**

**अत्रेयमाशङ्का । 'अतो ब्रह्मजिज्ञासे'ति खलु सूत्रखण्डेन मोक्षस्य भगवत्प्रसादैक-साध्यत्वान्मुमुक्षुणा तदर्था ब्रह्मजिज्ञासा कर्तव्येत्युक्तम् । एतदयुक्तम् । मोक्षो बन्ध-निवृत्तिमात्रम्, न पुनरभ्युदयावाप्तिः, स्वर्गादिवदनित्यतापातात् । बन्धश्च मिथ्याभूत एव; 'तरति शोकमात्मविदि'ति ज्ञाननिवर्त्यत्वश्रवणस्याप्यन्यथाऽनुपपत्तेः । न खलु सत्यं ज्ञानेन निवर्तते; सत्यशृङ्खलाबन्धस्य तथात्वादर्शनात् । न च मिथ्याभूतस्य निवृत्तौ कस्यचित्प्रसादोऽपेक्षणीयः, रजतादिनिवृत्तौ तथाऽनुपलम्भात्; किं नाम यदज्ञानकल्पितोऽयं बन्धस्तज्ज्ञानमेव । ततो न भगवत्प्रसादार्था जिज्ञासा मुमुक्षुणा कर्तव्येति ॥ सेयमाशङ्का अतःशब्देनापेक्षितार्थसाधकहेतुसूचकेन निराकृतेति ॥**

**तदर्थं विष्णुप्रसादार्थम् । अत्र सूत्रे ।**

**बिन्दुः**— **अत्रेयमाशङ्केति** । वक्ष्यमाणातःशब्दशक्तिज्ञाननिवर्तनीयेत्यर्थः ।

**परि०**— **वर्णकान्तरमिति** । 'जिज्ञासोत्थज्ञानजात्तत्प्रसादादेव मुच्यत' इत्युक्तव्याख्याना-पेक्षया बन्धसत्यत्वार्थपरत्वरूपव्याख्यानान्तरमित्यर्थः । ननु कथं बन्धसत्यत्वरूपातःशब्दार्थस्योपयोग इत्यत आह **अत्रेयमाशङ्केत्यादिना** । अत्रेत्यस्य प्रागुक्तसूत्रार्थ इत्यर्थः । तमेव व्यनक्ति अतो





**ब्रह्मेत्यादिना । भगवत्प्रसादेति** । जिज्ञासोत्थज्ञानजन्यप्रसादसाध्यत्वोक्तावपि इह तन्मात्रोपयोगादेकदेशानुवादः । एकेति कर्मण एव व्यावृत्तिः । **तदर्थेति** । ज्ञानजन्यप्रसादार्थेति ध्येयम् । नन्वत इति सर्वनाम्नः प्रकृतपरामर्शित्वादप्रकृतबन्धसत्यत्वपरामर्शित्वं कथमित्यत उक्तम् **अपेक्षितेति** । यावता विना जिज्ञासाविधानं न भवति यावता च भवति तावतस्सर्वस्य सङ्क्षेपेणाभिधायकतया हि सूत्रेऽतः शब्दः प्रयुक्तः । अन्यथाऽत इत्यस्य व्यर्थताऽऽपत्तेः । अत इत्युक्तेऽप्यपेक्षितहेत्वन्तराणां तेनालाभेन जिज्ञासाविधानस्य कुण्ठितत्वात् । न च बन्धसत्यत्वं विना ज्ञानद्वारा जिज्ञासाजन्यप्रसादफलकत्वं युक्तम् । तच्च प्राक्साधितम् । अतो बन्धनिवृत्तिरूपमोक्षहेतुप्रसादफलकत्वान्यथाऽनुपपत्त्या लब्धं बन्धसत्यत्वमत इति सौत्रातःपदेन परामृश्यत इति नाप्रकृतपरत्वदोष इति भावः । एतेन वक्ष्यमाणसिद्धार्थव्युत्पत्त्याद्यार्थकत्वमपि समाहितं ध्येयम् । मूले विधीयत इति विधानं नामेष्टोपायत्वज्ञापनमेवेत्युक्तं सन्न्यायरत्नावल्याम् ।

**यादु०**— पूर्वयोजनायां यथार्थेति बन्धविशेषणं न स्वरसमतो योजनान्तरमाह **अथवेति** ।

**वं०प०**— **वर्णकान्तरमिति** । व्याख्यानान्तरमित्यर्थः । उपयोगप्रकारमेव दर्शयति **अत्रेयमाशङ्केत्यादिना । अपेक्षितार्थेति** । बन्धमिथ्यात्वनिराकरणतत्सत्यत्वसमर्थनरूपापेक्षितार्थेत्यर्थः ।

**आनन्दः**— तथापि सूत्रार्थवचनं प्रतिज्ञाय सूत्राक्षरार्थस्थिरीकरणोपयुक्तमपव्याख्याप्रत्याख्यानमपि अयुक्तमित्यत आह **अथवेति** । तर्हि बन्धमिथ्यात्वनिरासतत्सत्यत्वयोः कथं सूत्राक्षरार्थत्वमत्राह **सूत्रेऽपीति** । ननु सत्यामनुपपत्तौ वर्णकान्तरमतःशब्दस्य वक्तव्यं तत्रानुपपत्तिरेव कथमित्यतस्तामाह **अत्रेयमिति** । कथमेतच्छङ्कानिरासोऽतःशब्देनेत्यत आह **अपेक्षितेति** ।

**कं०रा०**— **वर्णकान्तरं** व्याख्यानान्तरम् । **अस्येति** । बन्धमिथ्यात्वाभावतत्सत्यत्वरूपार्थस्येत्यर्थः । **अपेक्षितेति** । शास्त्रस्यारम्भणीयत्वसिद्ध्यर्थमपेक्षितोऽर्थो भगवज्जिज्ञासायाः कर्तव्यत्वं तत्र साधकं बन्धनिवृत्तिलक्षणमोक्षस्य जिज्ञासोत्थज्ञानजन्यभगवत्प्रसादैकसाध्यत्वं तत्र हेतु बन्धमिथ्यात्वाभावः तत्सत्यत्वं च बन्धस्य मिथ्यात्वेऽध्यस्तस्याधिष्ठानतत्त्वज्ञाननिवर्त्यतया तन्निवृत्तिलक्षणमोक्षस्य भगवत्प्रसादसाध्यत्वायोगात् तादृशहेतुसूचकेनेत्यर्थः । यद्वा । जिज्ञासाकर्तव्यतासिध्यर्थमपेक्षितावर्थौ विषयप्रयोजने तयोः साधको हेतुस्तत्सूचकेनेत्यर्थः । ततश्चातःशब्दस्यैवं योजना । बन्धस्य मिथ्यात्वात्तन्निवृत्तेरीश्वरप्रसादैकसाध्यतया तदर्था तज्जिज्ञासा कर्तव्येति ।





**श्रीनिधि०**— **वर्णकान्तरं** व्याख्यानम् । **अत्रेयमाशङ्केति** । अस्मिन् पक्षे अतःशब्दव्याख्यानान्तरस्य बन्धमिथ्यात्वमित्यादेः पूर्वग्रन्थस्याशङ्केत्यर्थः । **विवक्षितार्थसाधकहेतुसूचकेनेति** । विवक्षितार्थः बन्धनिवृत्यर्थं जिज्ञासाकरणम् । तत्साधकहेतुर्बन्धसत्यत्वं मिथ्यात्वाभावश्च ।

**वा०चं०**— अस्मिन्पक्षेऽत उक्त एव सूत्रार्थ इत्येव वक्तव्यमधिकं व्यर्थमित्यत आह **अथवेति** । यद्वैतावतो ग्रन्थस्योक्तसूत्रार्थदृढीकरणार्थतया सङ्गतत्वमिति प्रतिपादयितुमेतद्वाक्यमिति व्याख्यातम् । अधुना सूत्रार्थगतातःशब्दार्थकथनपर एवायं सर्वोऽपि ग्रन्थ इत्याशयेनातःशब्दार्थान्तरकथनस्य प्रकृतोपयोगप्रदर्शनपरतयैतद्वाक्यं व्याख्याति **अथवेति** । ननु नार्थान्तरमतःशब्दस्य वक्तव्यम् । उक्तेर्थेऽनुपपत्त्यभावादित्यतोऽर्थान्तरकथनेन निवर्त्यमितद्ग्रन्थसूचितामुक्तार्थेऽनुपपत्तिं दर्शयति **अत्रेयमाशङ्केति** ।

**विट्ठ०**— ननु बन्धमिथ्यात्वनिराकरणादेरतःशब्दाभिप्रेततया प्रकृतजिज्ञासाविधायकसूत्रोपयोगः कथमनेन भाष्येण प्राप्त इत्यत उपयोगं दर्शयितुमाह **अत्रेयमिति** । **हेतुसूचकेनेति** । बन्धमिथ्यात्वसाधकाभावाद्बाधकसद्भावाच्च प्रत्युत सत्यत्वसाधकसद्भावात् बाधकाभावाच्चेत्यादिहेतुसूचकेनेत्यर्थः । यावद्युक्तिकथनमन्तरेण जिज्ञासाविधानं न घटते तावतो युक्तिजातस्य सङ्ग्राहकत्वादतःशब्दस्येति भावः ।

**चषकः**— **वर्णकान्तरम्** व्याख्यानान्तरम् ।

॥ प्रकारान्तरेण विषयतत्संबन्धाभावशङ्कायाः निरसनम् ॥

**५११ सु०— ननूक्तमत्र 'सत्यश्चेद्बन्धो न निवृत्तिमर्हती'ति तत्राह यथेति ।**

## अनु०— यथा दृष्ट्या प्रसन्नः सन्राजा बन्धापनोदकृत् ॥
## एवं दृष्टः स भगवान्कुर्याद् बन्धविभेदनम् ॥

**दृष्ट्या** प्रेमातिशययुक्तया । **सन्** उत्तमः कृपालुत्वादिगुणवान् । **स** तथाविधगुणः ।

ननु विषमोऽयमुपन्यासः सादिरयं निगडादिबन्धो राज्ञा निवर्त्यताम् । अनादिरयं कथं निवर्त्यत इति । तत्रोक्तं **भगवानिति** । अघटितघटकानन्तैश्वर्यादिगुणवानित्यर्थ इति ।

**परि०**— **कृपालुत्वेति** । ननु तृतीयस्य द्वितीयपादे 'स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाभ्य आलुजि'ति सूत्रे कृपू सामर्थ्यं इत्यत आलुच्प्रत्ययस्याविधानात्कथं कृपालुशब्दप्रयोगः । न चात्र सूत्रे



शकारेत्संज्ञकलुश्प्रत्ययस्य विधानेनापि तस्य सिद्धत्वेन 'तिङ् शित्सार्वधातुकमि'ति सार्वधातुकसंज्ञायां 'कर्तरि शबि'ति शपि सति गुणेऽयादेशे च 'अतो दीर्घो यञी'ति दीर्घे च सति ण्यन्तानां स्पृहीत्यादीनां स्पृहयालुरित्यादिरूपसिद्धावपि आलुच्ग्रहणं शयालुरित्यादिरूपसिद्ध्यर्थमिति मञ्जर्यामुक्तत्वात्कृपि धातोरपि आलुचि कृते 'संज्ञापूर्वको विधिरनित्य इति 'पुगन्तलघूपधस्य चे'ति प्राप्तगुणाभावे च सति कृपालुशब्दनिष्पत्तिरिति वाच्यम् । तथात्वे 'कृपो रो ल' इत्युक्तलत्वाभावस्य दयावत्त्वरूपार्थलाभस्य चानुपपत्तेः । मैवम् । 'कर्कर्यालुर्गलन्तिके'त्यमरोक्तेरालुशब्दस्य कलशवाचितया कृपाकलशार्थत्वेन कृपालुशब्दनिर्वाहात् । तथैव गीताभाष्यटीकोक्तेः । यद्वा कृपां लाति आदत्त इति कृपापदोपपदात् ला आदान इति धातोर्डुप्रत्यये कृपालुरिति निष्पत्तिः । 'विप्रसंभ्यो ड्वसंज्ञायामि'त्यत्र 'मितद्र्वादिभ्य उपसंख्यानमि'त्युक्तेः । 'षिद्भिदादिभ्योऽङि'त्यत्र 'क्रपेः संप्रसारणं चे'ति भिदादिगुणसूत्रेण क्रपकृपाया-मिति धातुरूपस्य कृपेर्लाक्षणिकत्वेन कृपो रोल इत्यत्राग्रहणमित्यष्टमे वृत्तावुक्तत्वेन लत्वाभावोऽर्थानु-गमश्च । 'स्याद्दयालुः कारुणिकः कृपालुः सूरतस्समा' इत्यमरव्याख्याने बन्दिघटीये दुर्घटवृत्त्यादौ च कृपां लातीत्यत्र साधुत्वोक्तेः । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणे'ति स्मृतिं हृदि कृत्वाऽऽह **अघटितघटकानन्तैश्वर्यादीति** । इति द्वितीय-मतःशब्दव्याख्यानम् ।

**आनन्दः**— कोपयुक्तया दृष्ट्या प्रसादाभावादाह **प्रेमातिशयेति** । एवं चात्र संसारबन्धः हरिप्रसाद-विनिवर्त्यः । बन्धत्वान्निगडबन्धवदित्यनुमानमुक्तं भवति । अत्र सादित्वमुपाधिं शङ्कते **नन्विति** ।

**कं०रा०**— उत्तमत्वमेव विवृणोति **कृपालुत्वादीति** । एवं दृष्टः स भगवानित्यत्र स इति पदं व्याचष्टे **स तथाविधगुण इति** ।

**श्रीनिधि०— दृष्ट्या** राजविषयिण्येति भावः ।

**वा०चं०**— दृष्टिमात्रस्य प्रसादसाधनत्वमलौकिकमित्यत आह **दृष्ट्येति** । असतोऽत्र दृष्टान्तत्वा-प्रसक्तेः सत्वोक्तिर्व्यर्थेत्यतः सत्पदार्थकथनपूर्वकं प्रकृतोपयोगितयाऽभिप्रेतार्थमाह **सन्निति** । तादृशगुणविशिष्ट-त्वस्यैवात्र हेतुत्वमित्याशयेन तस्य पक्षधर्मतां सूचयितुं स इति तत्पदं तदर्थतया व्याख्याति **स इति** । एवं च भगवान्स्वभक्तेषु प्रसीदति प्रेक्षावत्पुरुषत्वाद्राजादिवत् । भगवान्स्वभक्तबन्धमोचकस्तेषु प्रसन्नत्वात्तद्वदेवेति प्रयोगोऽत्र सूचितो भवति ।

**वा०चं०**— 'सच्छब्द उत्तमं ब्रूयादि'ति मानं मनसि निधाय **सन् उत्तम** इत्युक्तम् ।





॥ कार्यतावादः ॥

**५१२ सु०— एवं मीमांसाप्रयोजनसमर्थनार्थत्वेन 'अतः'शब्दं द्वेधा व्याख्याय विषयसमर्थनपरतयाऽपि व्याख्याति कार्यता चेत्यादिना ।**

**परि०— एवं मीमांसाप्रयोजनेत्यादि** । ब्रह्मजिज्ञासेत्यत्र जीवान्यविषयसमर्पकब्रह्मशब्दादिनैव जीवान्यब्रह्मसिद्धौ तज्ज्ञानतत्प्रसादद्वारा मोक्षरूपफलसिद्धावपि तेषां मोक्षप्रसादज्ञानानां प्रत्येकं कर्मजन्यत्वशङ्क्या जिज्ञासारूपमीमांसाप्रयोजनत्वाप्राप्तावन्यजन्यत्वशङ्काया 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति न्यायसूत्रदिशा प्रसादनैरपेक्ष्यशङ्कायाः, तथा मिथ्याभूतबन्धनिवृत्तिरूपमोक्षस्य ज्ञानादेव संभवेन प्रसादानपेक्षणात् प्रसादद्वारा मोक्षफलकत्वमयुक्तमिति शङ्कायाश्च निरासेन ज्ञानप्रसादद्वारा मोक्षरूपप्रयोजनसमर्थनार्थत्वेन जिज्ञासयैव ज्ञानं, ज्ञानादेव च प्रसादः, प्रसादादेव मोक्ष इत्येतदर्थकतया; तथा बन्धसत्यत्वार्थकतया च; द्वेधा 'ज्ञानी प्रियतमोऽतो मे' इत्यादिना 'इत्युक्तेर्बन्धमिथ्यात्वम्' इत्यादिना च व्याख्यायेत्यर्थः । **विषयेति** । विषयसमर्थने हेतुभूता या शब्दस्य सिद्धार्थप्रमापकत्वरूपा युक्तिः तत्परतयेत्यर्थः । विषयसमर्थनं हि द्वेधा भवति । स्वप्रकाशप्रत्यगर्थाभिन्नत्वाद्ब्रह्मणो न विषयत्वमिति प्रमेये आरोपितान्यथाकारशङ्कानिरासेन, तथा ब्रह्मप्रमाणे आरोपितान्यथाकारशङ्कानिरासेन चेति । द्वितीयमपि त्रेधा शब्दस्यैवार्थसंस्पर्शशून्यत्वान्न प्रामाण्यं कुतस्तद्विशेषवेदस्येति शङ्कानिरासेन, वाक्यार्थबोधोपायाभावान्न वेदस्य प्रामाण्यमिति शङ्कानिरासेन, प्रामाण्येऽपि न सिद्धार्थे प्रामाण्यमिति कुतस्तेन विषयसिद्धिरिति शङ्कानिरासेन चेति । एवं चतुर्षु विषयसमर्थनप्रकारेष्वाद्यः 'ओतत्ववाची ह्योङ्कार' इत्यादिना ॐकारब्रह्मशब्दयोर्जीवभेदकगुणपूर्तिवाचकत्वव्याख्यानपरेण दर्शितः । द्वितीयस्तु 'प्रत्यक्षवच्च प्रामाण्यं स्वत एवागमस्य हि' इत्यत्र अतःशब्दस्य वेदादिशब्दप्रामाण्यार्थपरत्वव्याख्यानेन । तृतीयस्तु 'शक्तिश्चैवान्विते स्वार्थे' इत्यत्र शब्दस्यान्वितार्थशक्तत्वादित्येवंरूपार्थपरत्वव्याख्यानान्तरेण प्रदर्शयिष्यते । चतुर्थस्तु वेदादेः सिद्धार्थे ब्रह्मणि प्रामाण्यादित्येवंरूपार्थपरत्वव्याख्यानरूपेण 'कार्यता चे'त्यादिना प्रदर्शयिष्यत इति विषयसमर्थनपरतयेत्युक्तम् ।

**यादु०—** जैमिनीया इत्यनेन पूर्वत्रेवोत्तरत्रापि न स्वयूथ्यानां बादरायणीयानां मतं निराक्रियते किन्तु वियूथ्यानां प्राभाकराणां मतमिति दर्शयति ।

**वं०प०— द्वेधेति** । अतः भगवत्प्रसादसाध्यमोक्षलक्षणप्रयोजनस्य सत्त्वात्; अतो बन्धस्य सत्यत्वादिति द्वेधा व्याख्यायेत्यर्थः ।





**आनन्दः**— तथाच हेतोः साध्यव्याप्यत्वस्यानिर्णीतत्वात् साध्यव्याप्याव्यापकत्वेन उपाधेः साध्याव्यापकत्वमिति भावः। **द्वेधेति**। बन्धनिरासार्थकत्वेन तत्सत्यत्वेन चेति द्वेधेत्यर्थः।

**कं०रा०**— **मीमांसेति**। मीमांसाप्रयोजनार्थत्वेन तत्समर्थनार्थत्वेन चेत्यर्थः।

**श्रीनिधि०**— **द्वेधा व्याख्यायेति**। प्रयोजनाभावान्न जिज्ञासा कार्येत्याशङ्कायां अधिकारिविशेषणतयोपात्तमोक्षरूपप्रयोजनस्य सत्त्वादिदिति तत्सूचकत्वेन एकं व्याख्यानम्। जिज्ञासा न भगवत्प्रसादद्वारा मोक्षहेतुः। किन्तु यदज्ञानकल्पितो बन्धः तज्ज्ञानेनैव निवर्तत इत्याशङ्कानिरासकबन्धसत्यत्वादिहेतुसूचकत्वेनापरं व्याख्यानं द्रष्टव्यम्।

**वा०चं०**— एतावताऽतःशब्दस्येक एवार्थः प्रतिपादित इति भ्रान्तिं निरस्यन्नेवोत्तरग्रन्थस्याप्युत्सूत्रार्थप्रतिपादकत्वभ्रान्तिं पूर्ववत्प्रयोजनसमर्थनपरतः शब्दार्थकथनरूपत्वमिति भ्रान्तिमपि निराकर्तुं पूर्वोत्तरप्रकरणयोरसङ्कीर्णतां दर्शयति **एवमिति**।

**वा०र०**— **एतावतेति**। 'ज्ञानी प्रियतम इत्यारभ्य कुर्याद्बन्धविमोचनमि'त्यन्तग्रन्थकलापेनेत्यर्थः। **भ्रान्तिं निरस्यन्निति**। अतो यथार्थेत्येतद्भाष्यावतारमूले वर्णकान्तरमित्यर्थान्तरत्वोक्त्या मोक्षस्य भगवत्प्रसादैकसाध्यत्वादिति प्रागुक्तार्थापेक्षया यथार्थबन्धस्य विष्णुप्रसादं विना निवृत्त्यभावादित्यर्थस्य भिन्नस्यैवोक्तत्वमिति लाभे सत्येक एवार्थ उक्त इति प्रतीत्यनुदयात्तन्निरासाय द्वेधेति न वाच्यमित्यत उक्तं **भ्रान्तिमिति**। **उत्तरग्रन्थस्यापीति**। अत्र न केवलं पूर्वग्रन्थे भ्रान्तिः। किन्तूत्तरग्रन्थेऽपि भ्रान्तिरिति भ्रान्तिमात्रसमुच्चयेऽपि शब्द इति विवक्षितत्वात्पूर्वत्रोत्तरत्र च भ्रान्तिविषयभेदेऽपि न क्षतिः। पृथिवी द्विविधा। नित्याऽनित्या च। परमाणुरूपा नित्या कार्यरूपा अनित्या। सापि शरीरेन्द्रियविषयरूपेत्यादाववान्तरविभागवत्त्वमात्रे समुच्चयदर्शनात्। यद्वैक एवार्थ इति पूर्वत्र जिज्ञासोत्थज्ञानजातत्प्रसादादेव मुच्यत' इत्यनेनातःशब्दार्थ उक्तः। तदुत्तरानुव्याख्यानं तूत्सूत्रार्थकथनरूपमिति भ्रान्तिरिति विवक्षितत्वाद्विशिष्टसमुच्चय एव विवक्षित इति ज्ञेयम्। भ्रान्तिमिति द्वितीयस्य निराकर्तुमित्युत्तरेण संबन्धः। **पूर्ववदिति**। पूर्वत्र यथा प्रयोजनसमर्थनपरातःशब्दार्थकथनरूपत्वं तथेत्यर्थः। तत्रातःशब्दं व्याख्यातीत्यनेनोत्सूत्रार्थप्रतिपादनत्वभ्रान्तिपरिहारः। विषयसमर्थनेत्यनेन प्रयोजनसमर्थनेत्युक्तभ्रान्तिपरिहारः। उभयत्रापि वक्ष्यमाणरीत्या मूलार्थगवेषणायां तथाप्रतीतिरित्याशयेन भ्रान्तिमित्युक्तमिति ज्ञेयम्।

**स०व्र०**— कार्यता चेत्याद्युत्तरग्रन्थसन्दर्भस्योक्तानुवादपूर्वकं तात्पर्यमाह **एवं मीमांसेति**।

**चषकः**— इयता ग्रन्थसन्दर्भेणातःशब्दस्यैकमेवार्थं प्रत्यपीपददिति विपर्यासमुत्तरग्रन्थस्यापि प्रयोजनसमर्थनतात्पर्यकताविपर्यासं च पराचिकीर्षति **एवमित्यादि**।

**प्रदीपः**— कार्यता चेत्युत्तरग्रन्थसन्दर्भस्योक्तानुवादपूर्वकं तात्पर्यमाह **एवं मीमांसेति**।





कार्ये एव सर्ववेदपर्यवसानात् ब्रह्मणि अनुग्राह्यप्रमाणाभावशङ्का—

**५१३ सु०— अत्र जैमिनीया मन्यन्ते। विध्यर्थवादमन्त्रात्मकः समस्तोऽप्याम्नायः कार्यनिष्ठ एव न वस्तुतत्त्वनिष्ठः । स च 'अथातो धर्मजिज्ञासे'त्यादिना मीमांसितः । तत्कथं ब्रह्ममीमांसारम्भसंभवः ।**

**बिन्दुः— जैमिनीया इति**। प्राभाकरा इत्यर्थः। भाट्टानां मते भावनाया एव वाक्यार्थत्वात्। यथाहुः। अभिधां भावनामाहुरन्यामेव लिङादयः। अर्थात्मकभावना त्वन्या सर्वाख्यातेषु गोचर इति। स्फुटीकरिष्यते चैतन्निरसिष्यते च प्रघट्टकव्याख्यानान्तरम्।

**परि०— जैमिनीयाः** जैमिनीयत्वमात्मनो मन्यमाना इत्यर्थः।

**यादु०— विध्यर्थवादेति**। तथा तथाऽभियुक्तप्रसिद्धिरेव विध्यादीनां लक्षणमिति द्रष्टव्यम्।

**आनन्दः—** सत्यां विषयानुपपत्तौ तत्समर्थनपरत्वेन तद्व्याख्यानं युक्तं तत्रानुपपत्तिरेव केत्यत आह **अत्र जैमिनीया इति** । किमत्र वस्तुतत्त्वनिष्ठो वा वेदभागो विचार्यः, अनेकार्थनिष्ठो वा । नाद्य इत्याह **विध्यर्थेति** । ननु नामधेयस्य कुतो न पृथगुक्तिरिति वाच्यम् । तस्य विधिवाक्य एवान्तर्भावादिति भावः । न द्वितीय इत्याह **समस्त इति**।

**श्रीनिधि०—** वस्तुतत्त्वसिद्धम्। **वस्तु** कार्यनिष्ठता। कार्यपरता।

**वा०चं०—** कार्यता चेत्युत्तरग्रन्थव्यावर्त्यमनुग्राह्यप्रमाणाभावेन विषयाक्षेपपूर्वपक्षं दर्शयितुं गुरुमतमुपन्यस्यति **अत्रेति** । एतावता ग्रन्थकलापेनेव नोत्तरेणैतत्सूत्रवृत्तिकाररूपस्यैकदेशिमतनिराकरणमपि तु मीमांसान्तरवृत्तिकारमतनिराकरणमिति सूचनाय जैमिनीया इत्युक्तम् । एवं चैतावत्पर्यन्तं निरसनीयतया प्रसक्तैर्मायावादिभिरपीष्टसाधनताया एव विध्यर्थत्वस्य कार्यतायास्तदतिरिक्तत्वाभावस्य चाभ्युपगमेन न तान्प्रति तत्साधनमुपपन्नमिति शङ्कावकाशो न इति ध्येयम् । विधेः कार्यपरत्वस्यावश्याभ्युपेयत्वान्मन्त्रार्थवादयोश्च तच्छेषत्वनियमात्तदतिरिक्ताम्नायस्य चाभावाद्युक्तं समस्ताम्नायस्य कार्यनिष्ठत्वमिति दर्शयितुं विध्यर्थवादमन्त्रात्मक इति विशेषणम् । लिङादिचतुष्टयान्यतमप्रत्ययोपेतं वाक्यं विधिः । स्तुत्यादिरर्थवादः । मन्त्र इत्यभियुक्तप्रयोगविषयो मन्त्रः । ननु माऽस्तु वस्तुतत्त्वनिष्ठ आम्नायः । कार्यनिष्ठस्यैव तस्यानुग्राह्यप्रमाणत्वात्कथं ब्रह्मजिज्ञासाक्षेप इत्यत आह **स चेति**।





**वा०र०—** मूले समर्थनपरतयेत्यनन्तरमतःशब्दमिति वर्तते । विषयसमर्थनपरतया व्याख्यानोपयोगे तद्व्यावर्त्यतया विषयाक्षेपस्यैव प्रदर्शनीयजैमिनीयमतोपन्यासासङ्गतिरित्यतस्तं सङ्गमयति **कार्यता चेत्युत्तरेति** । **अनुग्राह्यप्रमाणाभावेनेत्यादि** । अनेन तत्कथं ब्रह्मजिज्ञासेति मूलस्यानुग्राह्यप्रमाणाभावाद्ब्रह्मजिज्ञासा न संभवतीति व्याख्या सूचिता । यद्यप्येतदधिकरणीयपूर्वपक्षप्रदर्शनावसरे ईश्वरः प्रमित इति पक्षे प्रमाणं निराकुर्वता आगमस्तु कार्यनिष्ठो न निष्पन्नस्वरूपमीश्वरं शक्नोत्यवगमयितुम् । न चान्यत्प्रमाणमस्ति । यन्मीमांसया अनुग्राह्येत्यादिना अनुग्राह्यप्रमाणाभावेन विषयाक्षेपपूर्वपक्षो दर्शितः । सर्ववेदव्याख्येयोङ्कारार्थत्वेन सर्ववेदार्थत्वमित्यादिरूपेणैव निराकृतश्च । ततश्चात्र पुनस्तत्पूर्वपक्षतन्निराकरणयोरसङ्गतिरित्याभाति । तथापि तत्पूर्वपक्षस्यात्र प्रपञ्चेन प्रवर्तनात् कार्यनिष्ठत्वरूपबाधकस्य स्फुटीकरणं भवति । प्रपञ्चेन तन्निराकरणस्यापि प्रवर्तनेन बाधकपरिहारस्यापि स्पष्टनं भवतीत्येवं तद्द्वयस्य शिष्यबुध्युपारोहसिद्धिर्भवत्यन्यथा तु प्रतिज्ञामात्रत्वमेव पूर्वपक्षे सिद्धान्ते च स्यादिति नासङ्गतिः । अत एव जिज्ञास्योऽयं विधीयत इत्येतदनुभाष्यमूले वक्ष्यति चैतद्विस्तरेण कार्यता चेत्यादिनेत्युक्तम् । टीकाकृतापि तद्वाक्यावतारावसरे वक्ष्यमाणन्यायेनापीत्युक्तमिति ज्ञातव्यम् । भाट्टप्राभाकरमतद्वयसाधारणमेतत् दूषणमिति दर्शयितुं जैमिनीया इत्युक्तमिति टीकान्तरोक्तमसत् । कार्यस्य वाक्यार्थतायाः प्राभाकरोक्ताया भाट्टैर्निराकृतत्वेन मूलोक्तमतस्योभयमतत्वाभावादित्याशयेन गुरुमतमित्युक्त्या जैमिनीयशब्दः प्राभाकररूपविशेष-परोऽत्र विवक्षित इत्युक्तं भवति । तर्हि प्राभाकरा इत्येव वक्तव्यत्वापातः । अन्यथा तु सामान्यशब्दस्य विशेषे लक्षणाप्रसङ्ग इत्यतः प्रयोजनसद्भावाल्लक्षणाश्रयणं न दोषायेत्याह **एतावतेति** । कलापेनेवेति व्यतिरेकदृष्टान्तः । **एतत्सूत्रवृत्तीति** । ब्रह्ममीमांसाव्याख्यातृरूपेत्यर्थः । तद्व्याख्यानस्य स्वाभिमतत्वाभावात्तन्निराकरणं युक्तमित्या-शयेनैकदेशीत्युक्तम् । **मीमांसान्तरेति** । धर्ममीमांसेत्यर्थः । **एवं चेति** । जैमिनीया इत्युक्त्योक्तार्थसूचने सतीत्यर्थः । विध्यर्थत्वस्येत्यस्याभ्युपगमेनेत्युत्तरेण संबन्धः । अत्र टीकावाक्ये शङ्कानवकाश इति नञ्युक्तपाठः । मूलकोशे शङ्का निरस्ता भवतीति पाठोऽभूत्तत्स्थाने शङ्कानवकाश इति पाठस्य निर्मितत्वेन नञ आवश्यकत्वात् साधनमनुपपन्न-मित्येवं वा नञ्युक्तपाठः । शङ्कावकाशो नेति पूर्वनकारस्य संबन्धः । केचित्तु अभ्युपगम इति निमित्तसप्तमी । तथा च स्वातन्त्र्ये च विशिष्टत्व इत्यादाविव अभ्युपगमेनेति तृतीयार्थलाभान्न तान्प्रति तत्साधनमुपपन्नमिति शङ्कावकाशो नेति द्वितीयनकारसंबन्धाद्विवक्षितार्थलाभ इत्याहुः । विध्यर्थवादमन्त्रात्मकवेदस्य कार्यनिष्ठत्वं नैकप्रकारेण किन्तु प्रकारभेदेनेति दर्शयति **विधेः कार्येति** । अवश्येत्यनेन कार्यवाचकलिङादिप्रत्ययोपेतत्वादिति हेतुः सूचितः । **तच्छेषत्वेति** । विधिशेषत्वेत्यर्थः । नामधेयस्यातिरिक्तस्य सत्त्वात्त्रैविध्यायोग इत्यत आह **तदतिरिक्ताम्नायस्य चेति** । नामधेयस्यापि विधिवाक्यादावेवान्तर्भावादिति भावः । अभियुक्तप्रयुक्त एव विध्यादिभेद इत्यन्यथाख्यात्यादिस्थं व्युत्पादनमयुक्तम् । मन्त्रेऽभियुक्तप्रयोगोपजीवने एकदेशिमतेऽर्थवादांशे तदुपजीवनेऽपि च संपूर्णार्थवादे विधौ च तदुपजीवनाभावादित्याशयेन विध्यादिलक्षणानि स्वयमाह **लिङादिचतुष्टयेत्यादिना** । लिङ्लेट्लोट्तव्यप्रत्ययरूपचतुष्टयेत्यर्थः । अननुगमपरिहाराय **अन्यतमेति** । **स्तुत्यादिरिति** । आदिना निन्दादेः परिग्रहः । लक्षणटीकाभाष्यटीकयोरपि स्तुत्यादिरूपत्वमेवार्थवादलक्षणमुक्तमिति न दोषः । तत्कथमित्येतन्मूलार्थस्तु





ब्रह्ममीमांसाया अनुग्राह्यप्रमाणाभाव इत्यादिरुक्तरीत्योक्तप्रायत्वान्नोक्तः। **ननु मास्त्विति**। आम्नायो वस्तुतत्त्वनिष्ठो मास्तु मा भवत्वित्यर्थः। तर्हि तस्य कार्यमात्रनिष्ठतया अनुग्राह्यप्रमाणाभाव इत्यत आह **कार्यनिष्ठस्यैवेति**। **तस्य** आम्नायस्य। वस्तुतत्त्वनिष्ठत्वाभावेऽपि कार्यनिष्ठस्यैव तस्येति योज्यम्।

**चषकः**— गुरुमतं दर्शयति **विध्यर्थवादेति**। लिङ्लोट्तव्यप्रत्ययपञ्चमलकारान्यतमघटितं वाक्यं विधिः। स्तुत्यादिरर्थवाद उत्तमामन्त्राणास्यन्तान्तत्वरूपादिमान् मन्त्र इत्यभियुक्तप्रसिद्धिगोचरो वा मन्त्र इत्यर्थः।

**प्रदीपः**— मतद्वयसाधारणमेतद्दूषणमिति दर्शयितुं **जैमिनीया** इत्युक्तम्। अभियुक्तप्रसिद्ध्यैव सिद्ध्यादिभेदो बोद्धव्यः। प्रक्रिया तु प्रागस्माभिर्व्युत्पादितैव।

**५१४ सु०— कार्यनिष्ठतैव कथमिति चेत्। इत्थम्। अनेकपदात्मकवाक्यश्रवणादनेकार्थप्रतीतावपि वाक्यस्य तावदेकत्र तात्पर्यं कल्प्यम्। अन्यथैकवाक्यताऽसंभवात्। यत्परः शब्दः स शब्दार्थ इति च शाब्दाः। वाक्यतात्पर्यविषयश्च स एव; यत्प्रतिपादनेन वाक्यपर्यवसानं, यत्प्रतिपादनाय च पदार्थान्तरोपादानम्। तथाभूतश्च कार्यात्मैव। न हि 'गौरश्वः पुरुषो हस्ती'ति वा 'देवदत्तः पचती'ति वा पर्यवसितमनुभूयते; किन्तु 'देवदत्त! गामानये'त्यादिकार्यनिष्ठमेव। अतः कार्यमेव सर्वत्र वाक्यार्थः॥ तत्र लिङादिप्रत्ययः साक्षात्कार्यताऽभिधायी; पदान्तराणि तु तत्प्रतीतये तदन्वितस्वार्थानभिदधति तत्पराण्येव। एवं कार्यान्तरविधुराणि वाक्यान्तराण्यपि तदेकवाक्यतामापद्यन्ते। अनेनैव न्यायेनाम्नायोऽप्यशेषः कार्यताबोधे पर्यवसितः।**

**बिन्दुः**— **वाक्यपर्यवसानमिति**। आकाङ्क्षानिवृत्तिरित्यर्थः। **लिङादिप्रत्यय इति**। उक्तरीत्यान्वयव्यतिरेकाभ्यां लिङाद्युपेतस्यैव वाक्यस्य पर्यवसितत्वेन तृप्तिकाम ओदनं पचेति वाक्ये स्वर्गकामो यजेतेति च वैदिकवाक्ये प्रत्ययार्थीभूतो नियोगापरनामा कार्यरूपोऽवगम्यते। स च लोके धात्वर्थ एव, कृत्युद्देश्यत्वे सति कृतिसाध्यत्वरूपकार्यत्वेनावगम्यते। वेदे तु कामी कानुपायान् कार्यत्वेन नावगच्छतीति न्यायात् धात्वर्थस्य यागस्य चिरविनष्टत्वेन स्वर्गाव्यवहितपूर्ववर्तित्वस्याप्यभावेनाप्युपायं कार्यत्वेन नावगच्छतीति न्यायात् धात्वर्थस्य यागानुपायत्वात् अपूर्वस्य च तदुपायत्वात् तदेव कार्यत्वेनावगम्यते। एवं प्रत्ययार्थीभूते नियोगे कार्यत्वेनावगते नियोज्याकाङ्क्षायां स्वःकामो नियोज्यत्वेनान्वेति। तथाच स्वर्गकामस्य ममेदं कार्यमिति बोधः। उक्तं च, नियोज्यः स तु कार्यं यः स्वकीयत्वेन बुध्यते इति। ततो राजाज्ञादिरूपनियोगस्य सविषयत्वावधारणात्। विषयाकाङ्क्षालोके।





यां धात्वर्थ एव यागादिर्विषयत्वेनान्वीयमानः कार्यस्वरूपनिर्वाहाय तत्साधनत्वमपि लभते । तदुक्तम् । कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्ये सङ्घटिताकारे करणत्वेन संमत इति । अत एव चाहुः लोके लिङः लाक्षणिकीति । तदेवं प्रत्ययार्थीभूतकार्यनिर्वाहकत्वेनैव सर्वपदानामन्वय इति तन्मत-स्थितेरिति भावः ।

**परि०— कार्यनिष्ठ एवेति** । स्वर्गादिजनकपरमापूर्वशब्दितकार्यपर एवेत्यर्थः । यद्यप्येषा शङ्का ॐपदप्रयोगात्प्रागेव निरस्ता तथापि तस्यैव प्रपञ्चनमित्यदोषः । तथा चोक्तं पूर्वत्र । 'स एव भर्गशब्दार्थ' इत्यादेरभिप्रायान्तरोक्तिप्रस्तावे ग्रन्थकारैरेव 'वक्ष्यते चैतद्विस्तरेण कार्यता चेत्यादिने'ति । **कथमितीति** । अनेकपदात्मकवाक्यप्रयोगे सत्यनेकपदार्थानामेवान्योन्यसंसृष्टानां प्रतीत्या प्राधान्येन कार्यप्रतीतेर-भावादिति भावः । शक्यार्थानामनेकत्वेऽपि तात्पर्यविषयः कार्यरूपार्थ एवेति भावेनाह **इत्थमित्यादिना** । **शाब्दाः** शब्दमर्यादाऽभिज्ञाः । कार्यवादिनोऽर्थाध्याहारवादित्वात् पदार्थान्तरेत्युक्तम् **न तु पदान्तरेति** । गवादिरूपपदार्थान्तरेत्यर्थः । **कार्यात्मैवेति** । कृतिसाध्यवस्तुरूप एवेत्यर्थः । कुत इत्यत आह **न हीति** । अस्त्वेवं लोके, वेदे तु कथमित्यत आह **अतः कार्यमेव सर्वत्रेति** । लोके वेदे चेत्यर्थः । लोके धात्वर्थरूपकार्यमेव वाक्यार्थः । वेदे तु यागादिधात्वर्थजन्यापूर्वरूपकार्यमित्येतावान् भेद इति भावः । यत्प्रतिपादनेन वाक्यार्थपर्यवसानमित्येतल्लौकिकवाक्ये उपपाद्य यत्प्रतिपादनायेत्युक्तमुपपादयितुं विवेकमाह **तत्रेति** । पर्यवसानान्यथाऽनुपपत्त्या कार्यस्य वाक्यार्थत्वे सतीत्यर्थः । लौकिकवाक्यार्थ इति वाऽर्थः । **लिङादीति** । लोट्तव्यलेट्प्रत्यया आदिपदार्थः । **कार्यतेति** । लोके हि लिङादिप्रत्ययस्य कार्यत्वमभिधेयमित्यङ्गीकृत्य कार्यतेत्युक्तम् । पदान्तराणीत्युपलक्षणम् । धातुरूपप्रकृतिरपि लिङादिना कार्यत्वप्रतीतये तदाधारतया तदन्वितमानयनमभिदधाना तत्परैवेत्यपि ध्येयम् । यद्वा कार्यताभि-धायीत्यस्य धात्वर्थनिष्ठकार्यताभिधायी धात्वर्थरूपकार्याभिधायीति यावत् । **तत्प्रतीतये तदन्वितेति** । गवानयनं कार्यमित्येवंरूपेण तदन्वितस्वार्थानभिदधानानीत्यर्थः । **कार्यतेति** । कृतिसाध्यत्वादिरूप-कार्यताऽऽधारभूतापूर्वे पर्यवसित इत्यर्थः ।

**यादु०— अन्यथेति** । अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभाग इति वचनादिति भावः । **पर्यवसानमिति** । आकाङ्क्षापूर्तिरित्यर्थः । ननु गौरश्व इत्यादौ क्रियावाचिपदाभावादेवापर्यवसानमित्यत आह **देवदत्त इति** । एवं दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिप्रधानवाक्यानां कार्यपरतामभिधायेदानीं सन्निपत्त्योपकारकाङ्गवाक्यानां व्रीहीनवहन्तीत्यादीनां फलोपकारकाङ्गवाक्यानां इडो यजतीत्यादीनामपि कार्यपरतां दर्शयति **एवं कार्यान्तर-विधुराणीति** । उक्तानि द्विविधान्यप्यङ्गवाक्यानि प्रधानसन्निधानात्कार्यान्तरविधुराणि आनर्थक्यापत्तेर्ग्राहक-





गृहीतत्वात्प्रधानकार्यपराणीत्यर्थः । नन्वेवमप्यर्थवादमन्त्रोपनिषदां कथं कार्यपरतेत्यत आह **अनेनैव न्यायेनेति** । अशेषोऽप्याम्नाय इति संबन्धः । ततश्चार्थवादानां नियुज्यमानपुरुषप्रोत्साहनहेतुत्वेन मन्त्राणां त्वनुष्ठेयार्थस्मारकत्वेनोपनिषदां च कर्तृभूतात्मस्वरूपप्रतिपादकतया कार्यताबोधे पर्यवसानमित्यर्थः । यद्वा समस्ताम्नायस्य कार्यनिष्ठतैव कथमिति चेदिति शङ्कया अनेनैव न्यायेनेत्यादिनोत्तरं वक्तुं लौकिकवाक्ये तावत्कार्यताबोधकपर्यवसानं दर्शयति **अनेकपदात्मकवाक्येत्यादिना । सर्वत्रेति** । लौकिकवाक्य इत्यर्थः । **वाक्यान्तराणीति** । अवान्तरलौकिकवाक्यानीत्यर्थः । अत्र यथास्थित एव संबन्ध इति स्वारस्यं ज्ञातव्यम् ।

**वं०प०— यत्पर इति** । यत्रार्थे तात्पर्योपेत इत्यर्थः । गौरश्वः पुरुषो हस्तीति वेत्यत्र वाशब्द उपमायाम् । वा विकल्पोपमानयोरिति वचनात् । तथाच गौरश्वः पुरुषो हस्तीति वाक्यं यथा क्रियावाचकपदाभावान्न पर्यवसितं तथा देवदत्तः पचतीति वाक्यमपि न पर्यवसितम् । क्रियावाचकपदसद्भावेऽपि कार्यतावाचकपदाभावादिति भावः । **लिङादिप्रत्यय इति** । आदिपदेन लोट्तव्यप्रत्ययपञ्चमलकाराणां ग्रहणम् । **अभिदधति** सन्तीति शेषः ।

**आनन्दः**— ननु कार्यनिष्ठत्वं हि कार्यवाचकत्वं एवं च सर्वेषामपि पदानां कार्यवाचकत्वे पर्यायत्वेन सह प्रयोगो न स्यादित्याशङ्क्य न ह्यत्र कार्यनिष्ठत्वं तद्वाचकमभिप्रेतं अपि तु कार्यतात्पर्यकत्वं तथाच न कश्चिद्दोष इत्याह **अनेकेति** । **अन्यथेति** । एकत्र तात्पर्योऽकल्पन इत्यर्थः । तथापि पदार्थभेदात्कथं एकवाक्यत्वमित्यत आह **यत्पर इति** । तथापि सिद्ध एव तात्पर्यं किं न स्यादत्राह **वाक्येति** । कार्यपरत्व एव वाक्यपर्यवसानमित्येतद्व्यतिरेकान्वयाभ्यां व्युत्पादयति **न हीति** । लिङादीत्यादिशब्देन लोट्तव्यपञ्चमलकारपरिग्रहः । वाक्यपर्यवसानान्यथानुपपत्त्या कार्यपरत्वमङ्गीकार्यमित्युक्तम् ।

**कं०रा०— तथाभूत इति** । वाक्यपर्यवसानहेतुभूतप्रतिपादनवान्पदान्तरोपादानफलभूतप्रतिपादनवांश्च कार्यात्मैवेत्यर्थः । **वाक्येति** । वाक्यतात्पर्यविषय इत्यर्थः ।

**श्रीनिधि०**— वाक्यतात्पर्यविषयस्यैव वाक्यार्थत्वं तात्पर्यविषयत्वं चान्यस्य न संभवति । किन्तु कार्यस्यैवेत्यतः तस्यै शब्दार्थत्वमित्युपपादयति **इत्थमित्यादिना** । **यत्परः** यत्तात्पर्यविषयकः । **शाब्दाः** । शब्दस्वरूपतदर्थाभिज्ञाः । **वाक्यपर्यवसानम्** वाक्यस्य निराकाङ्क्षत्वम् । **वाक्यान्तराणि** अवान्तरवाक्यानि ।

**वा०चं०**— ननु स्वस्वार्थप्रतिपादकानेकपदात्मकवाक्यस्यैकार्थनिष्ठत्वमेव दुर्लभम् । कुतस्तद्विशेषकार्यनिष्ठत्वम् । एकार्थनिष्ठत्वेऽपि वा सिद्धार्थनिष्ठत्वेनाप्युपपत्तेः कुतः कार्यनिष्ठत्वमित्याशयेन शङ्कते **कार्येति** । **अन्यथेति** । 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादि'त्युक्तेरिति भावः । उपोद्घलकान्तरं चाह **यत्पर इति** । यद्वाऽस्त्वेकार्थतात्पर्यम् । एकार्थनिष्ठत्वरूपवाक्यार्थत्वे किमायातमित्यत आह **यत्पर इति** । शब्दार्थो वाक्यार्थः । एवं आद्यां शङ्कां निरस्य द्वितीयां निरस्यति **वाक्येति** । पर्यवसानम् आकाङ्क्षानिवृत्तिः । तर्हि पदान्तरवैयर्थ्यमित्यत

आह **यत्प्रतिपादनायेति** । पूर्वपदप्रसञ्जिताकाङ्क्षापूरकत्वं हि साकाङ्क्षत्वमिति भावः । एतादृशत्वं न सिद्धस्येति दर्शयितुं साकाङ्क्षत्वेन व्यावर्त्यमुभयमतसाधारणं स्वमतमात्रसिद्धं चोदाहरणमाह **न हीति** । यद्वा सिद्धान्ते इष्टसाधनादिसिद्धविशेषबोधनेन वाक्यपर्यवसानेऽपि न तत्सिद्धमात्रबोधनेनेति द्वितीयोदाहरणस्याप्युभयसिद्धत्वमेव । उभयोदाहरणं त्वेकत्र पूर्वपदप्रसञ्जिताकाङ्क्षापूरकत्वाभावेनापरत्र तत्सद्भावेऽपि श्रोत्रनाकाङ्क्षिताभिधायकत्वेन वाक्यापर्यवसानमिति भेदेनेति द्रष्टव्यम् । **सर्वत्रेति** । लोके वेदे चेत्यर्थः । ननु कार्यस्यापदार्थत्वे तत्र लक्षणाया अप्यनुपपत्तेः पदार्थस्यैव वाक्यार्थत्वान्न कार्यस्य वाक्यार्थत्वमित्यत आह **तत्रेति** । यद्वा कार्यस्यैव वाक्यार्थत्वे पदात्मकत्वाद्वाक्यस्य तत्रत्यपदानां पर्यायत्वापत्तिरित्यत आह **तत्रेति** । तर्हि पदान्तराणां कार्यपरत्वं न स्यादित्यत आह **पदान्तराणीति** । तत्र प्रकृतिर्नियोगप्रतिपत्त्यनुबन्धित्वपरतया विषयत्वेन, नियोगनिर्वर्तकतया करणत्वेन च धात्वर्थमभिधत्ते तदन्यानि च तद्विशेषणनामधेयनियोज्याभिधायकानि तत्रैव व्यापृतानीत्यर्थः । नन्वस्त्वेवं विधेः कार्यपरत्वं न त्वङ्गमन्त्रार्थवादादिवाक्यानामित्यतोऽङ्गवाक्यानां प्रधानसन्निधौ श्रुतानामनुवादाशङ्काकलङ्किततया कार्यान्तरशून्यानामानर्थक्यापत्त्या ग्राहकगृहीतानां प्रधानकार्यान्वितस्वार्थप्रतिपादकत्वेन मन्त्राणां च कार्याङ्ग-भूतार्थस्मारकत्वेनार्थवादानां च कार्यनियुज्यमानपुरुषरुच्युत्पादनेन कार्यपरत्वमप्रत्यूहमित्याह **एवमिति** । नन्वेवमपि न वेदान्तानां कार्यपरत्वसिद्धिरित्यतस्तेषामपि मन्त्रार्थवादादिन्यायेन कर्मकर्तृस्वरूपप्रतिपादकत्वेन तद्देवताप्रतिपादकत्वेन वा कार्यपरत्वमेवेत्याह **अनेनैवेति** । यद्वा स्वर्गकामो यजेतेत्यादिकर्मविध्येकवाक्यतया कर्मकाण्डस्य कार्यपरत्ववदात्मा ज्ञातव्य इति प्रतिपत्तिविध्येकवाक्यतया वेदान्तानामपि कार्यपरत्वमेवेत्याह **अनेनैवेति** ।

**वा०र०— स्वस्वार्थेति** । अनेकपदात्मकवाक्यस्यानेकार्थकत्वेनैकार्थप्रतिपादकत्वरूपमेकार्थनिष्ठत्वं न संभवति । तत्प्रतिपादकताया अर्थैकत्वनिबन्धनत्वादिति भावः । **इत्युक्तेरिति** । इति जैमिनिना भावार्थपादे उक्तेरित्यर्थः । एकार्थत्वं चैकप्रयोजनकत्वं 'देवस्य त्वा सवितु..' '...मग्नये त्वा जुष्टं निर्वपामी'त्युदाहरणे देवस्य त्वेत्यादि पूर्वदलस्य अग्नये जुष्टमित्यादेश्चैकनिर्वापप्रकाशकत्वात् । अधिकमन्तराधिकरणशेषवाक्यार्थचन्द्रिकायां निरूपयिष्यते । तदनुसारेण ज्ञेयम् । ततश्चैकत्र तात्पर्यस्यैकवाक्यताप्रयोजकत्वप्राप्तिरिति पदसमुदायात्मकवाक्यस्यैकवाक्यत्वार्थमेकार्थतात्पर्यमङ्गीकार्यमित्याशयः । **उपोद्घलकान्तरमिति** । तत्तत्पदप्रतीतार्थेभ्योऽन्यस्तात्पर्यविषयीभूतएकोऽर्थो ऽङ्गीकार्य इत्यत्र जैमिनिसूत्रोक्तमेकवाक्यत्वरूपं नियामकमुक्तम् । इदानीं तु तात्पर्यविषयीभूतार्थस्यैव तत्तद्वाक्यार्थत्वं न प्रतीतार्थानामित्येतत्प्रतिपादकं वैयाकरणवाक्यमेवोक्तार्थे नियामकमाहेत्यर्थः । एतद्वैयाकरणवचनस्य वाक्यतात्पर्यविषयीभूत एव वाक्यस्याप्यर्थः । न तु पदार्थसंसर्गमात्रम् । एवं च युक्तं तात्पर्यविषयीभूतैकार्थस्य वाक्यार्थत्वमित्येतत्परतया योजना स्वरसेति मन्वान उपोद्घलकान्तरत्वमस्वीकृत्यापि योजयति **यद्वाऽस्त्विति** । एकवाक्यत्वान्यथानुपपत्त्या पदसमूहात्मकवाक्यस्यैकत्र तात्पर्यमुक्तम् । तत्कथम् । तावता तात्पर्यविषयीभूतार्थस्यैकत्वसिद्धावपि न वाक्यार्थस्यैकतासिद्धिः । तस्य ततो भिन्नत्वात् । एकवाक्यताया अपि वाक्यार्थैक्यप्रयुक्तत्वात् । तथा च कार्यमेव सर्वत्र वाक्यार्थ इत्युत्तरग्रन्थायोग इत्याशयः । अत्र टीकायामेकार्थनिष्ठत्वरूपैक-

वाक्यार्थकत्वे किमायातमिति पाठः। वाक्यार्थरूपैकार्थनिष्ठत्व इति योज्यम्। **यत्पर इतीति**। तथा च तात्पर्यविषयस्यैव वाक्यार्थत्वादेकत्र तात्पर्यसिद्धौ वाक्यार्थरूपैकार्थनिष्ठत्वसिद्धिः संभवत्येवेति भावः। शब्दपदं पदपरत्वभ्रान्तिवारणाय व्याचष्टे **शब्दार्थो वाक्यार्थ इति**। **आद्यां शङ्कामिति**। स्वस्वार्थप्रतिपादकेत्युक्तशङ्कामित्यर्थः। समाप्तिः पर्यवसानमित्याभातीत्यतो व्याचष्टे **पर्यवसानमित्यादि**। देवदत्तः पचतीत्युक्ते ततः किमित्याकाङ्क्षावत् यत्प्रतिपादनानन्तरं पुनराकाङ्क्षा नोत्पद्यत इत्यर्थः। **पदान्तरेति**। मूलेऽपिपदान्तरोपादानमित्येव पाठ इत्याशयेन पदान्तरेत्येव व्यवहृतम्। पाठान्तरेऽप्युक्त एवार्थ इति ज्ञेयम्। एतादृशत्वम्। यत्प्रतिपादनेनेत्युक्तरूपत्वम्। **स्वमात्रेति**। देवदत्तः पचतीत्यादिसिद्धार्थबोधकस्थलेऽपि देवदत्तकर्तृकपाकमात्रज्ञानेच्छुं प्रति तद्वाक्यप्रवृत्तिसंभवेन निराकाङ्क्षत्वस्य परमते सत्त्वादिति भावः। अत एवाह **यद्वा सिद्धान्त इति**। न तदित्यत्र तदित्यस्य वाक्यपर्यवसानमित्यर्थः। तर्हि द्वितीयोदाहरणं व्यर्थमित्यत आह **उभयेति**। साकाङ्क्षत्वस्य द्वैविध्यात्तदभावद्वयविवक्षयोदाहरणद्वयकीर्तनमिति भावः। पूरकत्वाभावेनेत्यस्य वाक्यपर्यवसानमित्युत्तरेण संबन्धः। **ननु कार्यस्येति**। अत्र कार्यस्य न वाक्यार्थत्वमिति प्रतिज्ञायां पदार्थस्यैव वाक्यार्थत्वादित्यनेन तस्यापदार्थत्वादिति हेतुमभिप्रैति। अस्त्वपदार्थत्वं तथाऽपि लक्षणया वाक्यार्थत्वोपपत्तिः स्यादित्यत उक्तं कार्यस्यापदार्थस्य इत्यादीत्येवं योजनाभिप्रायेण कार्यस्येति द्विरुपात्तमिति द्रष्टव्यम्। यत्किञ्चित्पदार्थतायाः कार्ये स्वीकारादुक्ताशङ्काऽयोग इत्यतः प्रकारान्तरेणावतारयति **यद्वेति**। अत्र च मतान्तरे पदार्थसंसर्गरूपवाक्यार्थस्यापदार्थत्वेऽप्यपूर्वस्यैव सङ्गतिग्रहणमनपेक्ष्य वाक्यप्रतिपाद्यत्वेन वाक्यार्थत्वमितिवत् कार्यस्यापूर्वस्यैव वाक्यार्थत्वमित्येषोऽभिप्रायो न कार्यतावादिनः। तात्पर्यविषय एव वाक्यार्थ इत्युक्तेऽपि यष्टीः। प्रवेशयेत्यादिस्थल इव वा तात्पर्यविषयीभूतं कार्यं न तु पदार्थ इत्यभिप्रायो न भवति। अपि तु वाक्यगतपदविशेषवाच्यमेव कार्यं स्वप्रधानतया तद्वाक्ये प्रतिपाद्यं इतरे पदार्थास्तु तच्छेषतया तद्वाक्यगतपदैः प्रतिपाद्याः न तु कार्यसमकक्ष्यतयेत्येवंरूपमेव कार्यस्य वाक्यार्थत्वं तात्पर्यविषयत्वं चेत्यभिमतम्। एतेन घटानयनसंसर्गादिरूपवाक्यार्थस्य घटमानयेत्यादिवाक्यगतपदार्थत्वाभावेऽपि वाक्यार्थत्ववत् प्रकृतेऽपि कार्यस्य पदार्थत्वमनावश्यकमिति शङ्का निरस्ता भवति। अत एव 'वाक्यार्थोऽपि हि वाक्यार्थशब्देनैवाऽदितो भवेदि'ति सिद्धान्ते येनकेनचिच्छब्देन वाच्यत्वमात्रमुपपाद्यते। तथा चापदार्थत्वादित्यादिना तद्वाक्यगतपदविशेषप्रतिपाद्यत्वाभावादित्याशङ्क्य तत्रेत्यादिना तत्परिहाराय तद्वाक्यगतपदविशेषेणैव वाच्यत्वमस्तीति व्युत्पादनादिकमुपपन्नमिति ज्ञेयम्। एवं पूर्वत्रोत्तरत्र च वाक्यार्थत्वसंभवप्रतिपादनं पदार्थस्यैव प्राधान्याभिप्रायेणैवेत्यदोषः। एवमन्यथैकवाक्यत्वासंभवात् यत्परःशब्दः स शब्दार्थ इति शब्दा इति पूर्वमूलोक्तसाधकद्वयस्याप्येकार्थकत्वतात्पर्यविषयस्य वाक्यार्थत्वलक्षणसामान्यरूपेणैव प्रकृतोपयोगो न तु विशेषरूपेणेत्याशयो मूलटीकयोः। एवं चानेकार्थप्रतीतावपि वाक्यस्य तावदेकत्रेति पूर्वमूलेऽप्येकत्रेत्यस्य प्रतीतार्थेषु मध्ये एकत्रार्थ इति यथाश्रुतमेव व्याख्यानमिति सिद्धमिति ज्ञेयम्। **कार्यताभिधायीति** मूलम्। अत्र भावप्रधाननिर्देशः कार्यतेति भाष्यानुसारेण। एवं तत्रतत्र। **कार्यान्तरेति**। क्रियया विशेषेणापि कार्यं तद्भावः कार्यतेति चोत्तरानुसारेण कार्याभिधायीत्येव विवक्षितम्। अत एव लिङाद्यर्थस्त्विष्टसाधनत्वमेवेति कर्मनिर्णयवाक्यव्याख्यावसरे न वयं सिद्धमात्रं कार्यं ब्रूमः। किन्त्विष्टसाधनत्वं सिद्धविशेषकार्यत्वं तदेव धात्वर्थनिष्ठं लिङाद्यर्थः। धात्वर्थश्च तद्विशिष्टः कार्यमित्युच्यते इत्युक्तम्।





तत्र तत्त्वनिर्णये च कार्यपुरस्कारेणैव ग्रन्थप्रवृत्तिः । कार्यशरीरमेवाभिदधातीति तत्त्वनिर्णयटीकायामुक्तत्वात् तथाच प्रमाणान्तराप्राप्तत्वादपूर्वमिति शब्दितं नियोज्यं स्वसंपादनार्थे प्रयोजकी(?) भवतीत्यतो नियोगशब्दितं च कार्यमित्युच्यते । तदभिधायीत्यर्थः । **तर्हीति** । लिङादिप्रत्ययमात्रस्य साक्षात्कार्याभिधायकत्वे प्रकृत्यादिपदान्तराणां कार्याभिधायकत्वाभावात्सर्ववाक्यस्य कार्यपरता न स्यादित्यर्थः । अत्र च पदत्वं वाचकत्वमात्रं विवक्षितमिति प्रकृत्यादिमात्रस्य सुप्तिङन्तत्वाभावेऽपि पदत्वेन व्यवहारो युक्तः शक्तिश्चैवेत्युत्तरानुभाष्यगतशब्दानामितिवदिहापि शब्दानामित्येव विवक्षितत्वादिति ज्ञेयम् । **पदार्थान्तराणीति** मूले प्रकृत्यादिपदानां विवेकेनार्थप्रतीतेस्तदर्थानां कार्यान्वयप्रकारस्य तदन्वितस्वार्थानित्युक्तस्य चाप्रतीतेस्तदन्वयप्रकारप्रदर्शनपूर्वकं तत्तदभिधेयमाह **तत्र प्रकृतिरिति** । तद्विषयमित्येव तत्त्वनिर्णयटीकायामुक्तत्वेऽपि तत्र तत्करणं चेत्यपि विवक्षितमिति सूचयन् स्वयं विषयत्वकारणत्वयोः प्रकृत्यर्थगतयोर्विवरणं कृतम् । **नियोगप्रतिपत्तीति** । घटस्य ज्ञानमिति घटानुबन्धितयैव ज्ञानं प्रतीयते न तु ज्ञानमित्येव । ततो ज्ञानं प्रति घटो ज्ञानप्रतिपत्त्यनुबन्धितया विषय इत्युच्यते । इदमेव च साक्षाद्विषयत्वम् । इन्द्रियादिकं तु प्रतिज्ञानरूपव्यापारद्वारेति व्यापारानुबन्धितया विषय इत्युच्यते । तथेहापि लिङाद्यर्थनियोगस्य विषयमन्तरेण प्रतिपत्तुमशक्यतया केवलनियोगप्रतिपत्तेरभावादमुकपदार्थे नियोग इत्येव प्रतिपत्तव्यत्वात् कुत्र नियोग इति विषयाकाङ्क्षायां यागादौ नियोग इति नियोगप्रतिपत्त्यनुबन्धित्ववशात् यजेत दद्यात् जुहुयादित्यादिषु यागदानहोमादिलक्षणधात्वर्थस्यैव विषयत्वेन संबन्धादिति भावः । **नियोगनिवर्तकतयेति** । यागविषयकनियोगस्य साध्यतया प्रतीयमानस्यापि साक्षात्कृत्या साध्यत्वेन स्वस्य कृतिसाध्यतानिर्वाहाय विषयतयाऽन्वितस्य यागादेर्धात्वर्थस्यैव नियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्वेनापि संबन्धादिति भावः । आदिगतविषयकरणभावानामिति न्यायमकरन्दव्याख्यावसरे प्रतीत्यनुबन्धितयाऽधिगतो विषयभावः । सिध्यनुबन्धितया करणभावो येषां ते तथेति तट्टीकायां व्याख्यानात् । स्वप्रतीत्युपाधित्वेन स्वविषयस्य स्वनिवर्तकत्वेन करणस्येति कल्पतरूक्तेश्च । प्रतीतिवेलायां यजेत दद्याज्जुहुयादित्यादिषु यागदानहोमलक्षणधात्वर्थविषयकः निष्पत्तिवेलायां तत्करणकः इति नायकरत्ने यागादिभावार्थगोचर इति न्यायरत्नमालावाक्यव्याख्यानाच्च । प्रतीत्युपाधौ विषयत्वसिध्युपाधौ करणत्वमिति तयोर्भेद इति न्यायमकरन्दटीकायामेवान्यत्रोक्तेश्च । ननु यथा आग्नेयादीनां षण्णां यागानामित्यादि प्राचीनमूलव्याख्यानटीकायामपि प्रतिपत्त्यनुबन्धित्वादेरेवमेव विवरणं द्रष्टव्यम् । प्रतीत्यनुबन्धित्वं च "कृतितत्साध्यमध्यस्थो यागादिर्विषयो मतः । कार्ये संघट्टिताकारे करणत्वेन संमत" इति शालिकानाथीयवचने यागादिधात्वर्थस्य प्रयत्नरूपकृतितत्साध्यमध्यस्थत्वकथनं च वास्तवाभिप्रायेण न तु विषयत्वोपयोगितया कार्येऽसंघट्टिताकार इत्यनेन कृतिसाध्यत्वरूपकार्यत्वोपेतनियोगस्य साक्षात्कृतिसाध्यत्वानुपपत्त्या कृत्या कार्याकारस्याघटितत्वे सति तद्घटनाय प्रतिपत्त्यनुबन्धितया विषयीभूतस्यापि कृतितत्साध्यमध्यस्थत्वाद्यागादिधात्वर्थस्य नियोगं प्रति करणत्वेन संमतत्वमित्येवं कारणत्वोपयोगित्वेनैवोभयमध्यस्थत्ववचनस्य स्वीकार्यत्वात् । आग्नेयादीनामित्येतत्प्राचीनमूलटीकायां यागविषयनियोगश्च साध्यतया प्रतीयमानः साक्षात्कृत्यसाध्यत्वात्स्वस्य कृतिसाध्यत्वनिर्वाहाय विषयतयान्वितयागस्यैव नियोगनिष्पत्त्यनुबन्धित्वरूपकरणत्वमाक्षिपतीत्युक्तिरपि कृतितत्साध्यमध्यस्थवचनस्य करणत्वोपयोगाभिप्रायमेवाविष्करोति । गुरुराजीयतत्त्वनिर्णयटीकाव्याख्यानमप्युक्ता-





भिप्रायं यदा तु कृतिः प्रयत्नत्वात्साध्यो नियोगः तयोर्मध्यस्थो यागदानहोमादिर्धात्वर्थो विषयो मतः षिञो बन्धनकर्मणो विषयशब्दव्युत्पत्तेः कृतिनियोगौ घटयतो धात्वर्थस्य युज्यते विषयत्वम् । तथा कार्येऽसंघट्टिताकारे स एव विषयस्तस्मिन्नेव करणत्वेन संमत इति श्लोकयोजना तदाकृतितत्साध्यमध्यस्थत्वं विषयत्वोपयोग्येव । अत एव न्यायमकरन्दव्याख्याने नियोगस्यापि न साक्षात्कृतिसाध्यतया कार्यत्वं तथा सति कृतिनियोगयोर्मध्ये अघट्टितसंघट्टकविषयानुप्रवेशानुपपत्तेरित्यभिधाय स्वोक्तार्थे कृतितत्साध्येति शालिकानाथवाक्यं प्रमाणीकृतम् । स्वप्रतीत्युपाधित्वेन विषयस्येति समन्वयाधिकरणीयकल्पतरुव्याख्यानरूपपरिमले लिङा अपूर्वं कार्यत्वेनाभिधेयम् । कार्यत्वं च कृतिसाध्यत्वं न चापूर्वस्य साक्षात्कृतिसाध्यत्वं संभवति अतो यद्द्वारा तस्य कृतिसाध्यत्वं घटनीयं स धात्वर्थो यागदानहोमादिः अनुबन्धो अवच्छेदको विषय इति च प्राभाकरैर्व्यवह्रियत इत्याद्युक्तेश्च । तथा कार्येऽसंघट्टिताकार इत्यस्य कृत्या साक्षादघटनायामित्यर्थकस्य विषयत्वोपपादकत्वम् । करणाभावात् कार्यघटनायामित्यर्थकस्य तु तस्य करणत्वोपपादकत्वमिति चाभिप्रेतम् । एतद्योजनापक्षे तु प्रतिपत्त्यनुबन्धित्वं लिङाद्यर्थनियोगस्य कृतिसाध्यत्वेन या प्रतीतिस्तदुपयोगित्वम् । निष्पत्त्यनुबन्धित्वं तु तदुपयोगित्वरूपं पूर्ववदेवेत्यादि ज्ञातव्यम् । **तद्विशेषणेति** । प्रकृत्यर्थविशेषणेत्यर्थः । प्रकृत्यर्थविशेषणं कारकं तद्विशेषणं नामधेयमित्यादि तत्त्वनिर्णयटीकानुसारात्कारकं च ग्राह्यम् । **विधेरिति** । लिङादिप्रत्ययस्येत्यर्थः । अत्र विधेरित्यनेन प्रधाननियोगाभिधायकदर्शादिवाक्यस्थलिङादेरिवारादुपकारकाङ्गवाक्यगतलिङादेरप्यङ्गकार्याभिधायकताया वक्ष्यमाणरीत्या सत्त्वेन तद्वाक्यगतलिङादेरपि सङ्ग्रहस्याभिप्रेतत्वात्प्रधानवाक्यगतलिङादेः कार्यपरत्वमस्त्विति आरादुपकारकवाक्यगतलिङादेश्च कार्यपरत्वमस्त्वित्येवं प्रधानाप्रधानकार्यपरत्वमुभयविधलिङादेरस्त्विति शङ्कावाक्यार्थः । उत्तरवाक्यगताङ्गपदस्य सन्निपात्यङ्गपरत्वेन तद्वाक्यानामेव प्रधानकार्यान्वितस्वार्थप्रतिपादकत्वस्योपपादयिष्यमाणत्वेन तत्रोभयविधाङ्गवाक्यग्रहणाभावात् । अत एव तत्त्वनिर्णयटीकायां तत्र लिङादिप्रत्यय इत्यादिना प्रधानवाक्यसमिदाद्यारादुपकारकाङ्गवाक्यगतलिङाद्योः प्रधानाङ्गकार्यसाधारण्येन कार्यपरत्वमभिधायावशिष्टसन्निपातिवाक्यानामेव सन्निपत्त्योपकारकाङ्गवाक्यानि यद्यपि कार्यान्तरशून्यानीत्यादिना । आरादुपकारकाङ्गव्यावृत्तिस्पष्टीकरणपूर्वकं प्रधानकार्यान्वितस्वार्थप्रतिपादकत्वमुक्तम् । तदनुसारि चेदं टीकावाक्यमतोऽत्रोत्तरत्रोपपादयिष्यमाणकार्यपरत्वकसन्निपातिवाक्यातिरिक्तमारादुपकारकाङ्गवाक्यमपि दर्शादिवाक्यवत् लिङादिप्रत्ययः साक्षात्कार्येत्यादिमूलटीकयोरभिप्रेतमिति ज्ञेयम् । एवं नत्वङ्गेत्यत्र सन्निपात्यङ्गेत्येव व्याख्येयम् । कार्यपरवाक्यैकवाक्यताया अङ्गादिषु त्रिष्वेकरूपत्वाभावाद्विवेकेन तामाह **अङ्गवाक्यानामिति** । सन्निपत्योपकारकेत्यादितत्त्वनिर्णयटीकोक्त्यनुसारेण व्रीहीनवहन्तीत्यादिरूपसन्निपात्यङ्गवाक्यानामित्येवार्थः । तद्वाक्यस्थलिङादिप्रत्ययस्यैव स्वप्रकृतिभूतहन्त्याद्यर्थविषयकनियोगान्तराप्रतिपादकतया कार्यान्तरविधुरत्वहेतोस्तत्रैव श्लिष्टत्वात् । समिधो यजतीत्याद्यारादुपकारकाङ्गवाक्यानामप्यङ्गवाक्यपदेन ग्रहणे तत्रत्यलिङादेः प्रकृतिभूतयज्यर्थविषयकप्रधाननियोगातिरिक्तनियोगप्रतिपादकत्वेन कार्यान्तरवत्वात्तद्विधुरत्वहेतोस्तत्रासिद्धत्वप्रसङ्गात् । उक्तं च प्रमाणपारायणे तृतीयपरिच्छेदे । प्रकृतिस्तद्विषयं इत्युक्त्वा पदान्तराणि च विषयविशेषणं नामधेयं नियोज्यं चाभिदधति नियोगार्थप्रतीतौ व्याप्रियन्ते । सन्निपत्त्योपकारकाङ्गवाक्यानि च यद्यपि नियोगान्तरशून्यानि तथापि प्रधान-





नियोगान्वितस्वार्थाभिधायकतया तन्नियोगप्रतिपत्तावेव पदान्तरवद्वर्तन्त इत्यादि । एतच्चानुपदमेवोपपादयिष्यामः । सन्निपातिवाक्यस्थलिङादेः स्वप्रकृत्यर्थविषयकनियोगाप्रतिपादकत्वमेव कुत इत्यत उक्तम् **अनुवादेति** । दर्शादिप्रधाननियोगस्यावहन्तीत्यत्रत्यलेटाऽनुवाद एवं तत्रतत्रेत्यनुवादेत्यर्थः । अनुवादशङ्काप्रापकमुक्तं **प्रधान-सन्निधाविति** । दर्शादिसन्निधावित्यर्थः । पूर्वत्राङ्गेति इह च प्रधानेत्यनुवादेनेदं सूचितम् । सन्निधेरुभयत्र तुल्यतया दर्शादिवाक्यगतलिङादेः हन्त्यादिवाक्यगतलिङाद्युक्तावहननादिविषयकनियोगानुवादकत्वमित्येवं वैपरीत्यमपि किं न स्यादिति न शङ्कनीयम् । दर्शादिपदसङ्गृहीताग्नेयादेः स्वर्गकामो यजेतेत्यधिकारविधिना फलसंबन्धबोधनेन तेषां फलवत्वात्प्रधानत्वप्राप्तेरवघातादेश्च तादृग्रूपत्वेन फलवत्सन्निधावफलं तदङ्गमिति न्यायेनाङ्गत्वप्राप्तेरङ्गप्रधान-भावस्यैव नियामकतया वैपरीत्यशङ्कानवकाशादिति । तथा च प्रधानकार्यानुवादत्वशङ्कानिमित्तेन न तैः कार्यान्तरं प्रतिपाद्यते । किन्तु तैर्हन्त्यादिप्रकृत्यर्थ एवावघातादिर्योग्यविशेषणविशिष्ट उपस्थाप्यते इत्यपि निर्णयटीकाव्याख्याने गुरुपादोक्तमत्र ग्राह्यम् । कार्यान्तरं च वक्ष्यमाणरीत्याऽङ्गकार्यं तच्छून्यानां तत एवाङ्गकार्यान्वितस्वार्थप्रतिपादक-त्वासंभवावतारेति योज्यम् । यद्युभयविधकार्याभिधायकत्वाभावस्तर्हि कथं कार्यपरत्वम् । तदभावे च सर्वत्र कार्यमेवार्थ इति च कथमित्यतः स्वतः कार्याभिधायकत्वाभावेऽपि प्रधानकार्यान्वितस्वार्थप्रतिपादकतया कार्यपरत्वमिति वक्तुम् । भवेदेवं यदि तेषां तदन्वितस्वार्थपरत्वप्रापकं स्यात्तदेव किमित्यतस्तत्प्रापणप्रकारप्रदर्शन-मानर्थक्यापत्त्येत्यादि । अयमर्थः । यद्यपि प्रधाननियोगो दर्शादिवाक्यगतलिङादिनैवोक्तः । अवहन्तीत्यादिवाक्यगत-विधिप्रत्ययेन कार्यान्तरप्रतिपादनाभावश्च । तथापि तेन प्रधानकार्यमेवानूद्यत इति यद्युच्यते तर्हि तदनुवादस्याधिक-विधानार्थत्वाद्यभावेनानर्थक्यं स्यादित्याशङ्कानिरासाय ग्राहकग्रहणाख्यप्रमाणं प्रवृत्तम् । प्रयोजनप्रयोजनिभावे-नान्विताभिधानं हि ग्राहकग्रहणं नाम । प्रयोजनं प्रधाननियोगः । प्रयोजनिनश्च प्रकरणपठितसकलपदार्थाः तदन्वित-तया प्रधाननियोगस्याभिधानम् । अवघाताद्यन्वितः प्रधाननियोग इति तदर्थः । तदिदं ग्राहकं ग्रहणम् । ग्राहकेण दर्शादिनियोगेन ग्रहणमन्विताभिधानमवघातादेरवघातान्वितो नियोग इत्येवं ग्राहकग्रहणमिति शास्त्रदीपिकायां शङ्करभट्टैर्व्याख्यातम् । प्रमेये न विशेषः । तथाच प्रधानापूर्वाभिधायको लिङादिशब्दोऽवहननादिभिः सर्वैः प्रकरणपठितैरर्थैरन्वितम् । स्वार्थमभिधत्ते इति ग्राहकग्रहणप्रमाणेनाववहननादयो ग्राहकभूतप्रधाननियोगनिष्ठा-न्वयप्रतियोगितया गृहीता इत्यर्थः । अन्वयस्योभयसंबन्धित्वमात्रविवक्षायां ग्राहकेण सहान्विततया प्रधानवाक्यगत-लिङादिभिर्गृहीता इति वार्थः । उभयथापि ग्राहकेणान्विततया गृहीतार्थकवाक्यानामित्यर्थ इति । ग्राहकग्रहणफलमाह **प्रधानेति** । उक्तं तावद्दर्शादिवाक्यं प्रधानमवघातादिवाक्यम् **अङ्गवाक्यमिति** । तथा च प्रधानवाक्यस्थलिङादिप्रत्ययैः वाक्यान्तरगतलिङादिप्रकृत्यर्थभूतावहननाद्यन्विते प्रधाननियोगरूपस्वार्थे प्रतिपादिते सति तद्रूपग्राहकग्रहण-प्रमाणेनावहननादिवाक्यगतलिङादिभिः प्रधानापूर्वानुवादः । हन्त्यादिपदैस्तु प्रधानकार्यान्वितस्वार्थप्रतिपादनमित्ये-षोऽर्थो लभ्यत इति शेषपूरणेन व्याख्येयम् । नन्वेतावताऽवहननादिवाक्योक्तसन्निपात्यङ्गानां ग्राहकग्रहणाख्यप्रमाण-प्रमापितं यत् ग्राहकभूतप्रधाननियोगरूपः अयं चासावर्थश्चेति इदमर्थो इदं प्रयोजनं यस्येति नियोगे अर्थतः स्वभावो नियोगैदमर्थ्यनियोगप्रयोजनकत्वमिति यावत् । नियोगैदमर्थ्यं तद्रूपः प्रधानकार्यान्वय इत्युक्तं भवति । सचायमारा-दुपकारकेष्वपि समान एव । तत्रत्यलिङादीनामपि प्रधानसन्निधौ श्रुतत्वेनानुवादशङ्काकलङ्किततया तद्वाक्यानां

कार्यान्तरशून्यत्वप्राप्त्याऽङ्गकार्यान्वितस्वार्थप्रतिपादकत्वानुपपत्तेः प्रयाजादीनां ग्राहकग्रहणप्रमाणेन प्रधाननियोगैद- मर्थ्यसिध्या तद्रूपस्य प्रधानकार्यान्वयस्य प्राप्तेः । तथाच तंद्वाक्यानामपि प्रधानकार्यान्वितस्वार्थप्रतिपादकत्वमेव प्राप्तमिति कुतोऽत्र मूले तत्त्वनिर्णयटीकादावपि सन्निपत्त्योपकारकाङ्गवाक्यानामेव कार्यान्तरशून्यत्वोक्तिः । तेनैव चारादुपकारकाङ्गवाक्यानामङ्गकार्यरूपकार्यान्तरवत्वसूचनं च । तदुभयानुसारेणैतट्टीकायामपि सन्निपातिवाक्यानां प्रधाननियोगानुवादकत्वेन कार्यान्तरशून्यादिकमुक्तमारादुपकारकाणां तु तदनुवादकत्वाभावेन कार्यान्तरवत्त्वेनाङ्ग- कार्यान्वितस्वार्थप्रतिपादकत्वं सूचितमिति चेत् । अत्र तत्त्वनिर्णयटीकाव्याख्याने गुरुचरणैरुक्तरीत्या शङ्कामुत्थाप्य शृणु तर्हि प्राभाकरसिद्धान्तरहस्यमिति प्रतिज्ञाय सन्निपातिवाक्येष्वित्यादिना दिगित्यन्तेन समाधानमुक्तम् । तदनुसारेण समाधिरुच्यते । तथाहि । ग्राहकेण सन्निपातिनामवघातादीनामारादुपकारकाणां प्रयाजादीनां च ग्रहणाविशेषेण प्राप्तं यद्ग्राहकैदमर्थ्यं तदवहननाद्युभयविधाङ्गानां नियोगं प्रति विषयत्वेन करणत्वेन वा न संभवति । प्रधाननियोगापरपर्यायग्राहकस्य स्ववाक्यप्रतिपन्नेन यजिरूपेण विषयेण करणेन चावरुद्धतया विषयाद्यन्तरा- नाकाङ्क्षत्वात् । अतस्तद्ग्राहकैदमर्थ्यं करणोपकारद्वारा निर्वाह्यमित्येवं ग्राहकग्रहणप्रसूतार्थापत्तिरूपमुपादाननामक- चतुर्थप्रमाणं प्रवृत्तम् । तेन तदुभयाङ्गानां करणैदमर्थ्यं बोध्यते । एवं ग्राहकग्रहणप्रसूतार्थापत्त्या करणैदमर्थ्ये उभयत्राप्यविशिष्टेऽप्यस्ति विशेषः । यत्करणैदमर्थ्यं नोभयत्रैकरूपम् । सन्निपातिनामवघातादीनां क्रत्वर्थव्रीह्यादि- द्रव्यवैतुष्यसंपादकतया साक्षात्परम्परया वा प्रधानापूर्वकरणविषयभूतयज्यर्थनिवर्तकत्वेन विषयानुप्रवेशसंभवात् करणैदमर्थ्यं सन्निपातिवाक्यस्थलिङादेर्न प्राक्प्रतिपन्नप्रधाननियोगानुवादकत्वपरित्यागमाक्षिपति । किन्तु करणैद- मर्थ्याद् व्रीहीनित्यादि द्वितीयादिश्रुत्यादिभिर्व्रीह्यादिद्वारैदमर्थ्यमेव प्राप्नोति । आरादुपकारकसमिदादीनामुक्तरूपौपा- दानिकप्रमाणसिद्धं ग्राहकैदमर्थ्यनिर्वाहकं करणैदमर्थ्यं तु साक्षात्परम्परया वा अदृष्टद्वारा न संभवतीति तेषां पूर्ववत् विषयानुप्रवेशायोगात्कथञ्चिददृष्टद्वारा तन्निर्वाह्यमिति प्रकरणप्रमाणेनादृष्टरूपद्वारैदमर्थ्ये सिद्धे समिदादिवाक्यस्थ- लिङादेः प्रधानसन्निधिप्राप्तं यत्प्रधाननियोगानुवादकत्वं प्राक्प्रतिपन्नं तत्परित्यज्य प्रधाननियोगाभिधायकलिङादि- प्रकृत्यर्थकरणकतत्प्रकृत्यर्थविषयकनियोगान्तराभिधायकत्वमेव तद्वाक्यस्थलिङादीनामाश्रयणीयम् । तथा च प्रधाननियोगकरणस्य तन्नियोगे जननीये यद् द्वारमदृष्टं तदुपकारकत्वरूपं द्वारैदमर्थ्यं प्रयाजादीनां प्राप्तमिति न प्रधाननियोगान्वितस्वार्थपरत्वं प्रयाजादिवाक्यस्थलिङादीनां किं त्वङ्गकार्यस्य तद्वाक्यगतलिङादिभिरभिधानात् कार्यान्तरवत्वोपपत्तेस्तत्कार्यान्वितस्वार्थपरत्वमेव । सन्निपातिवाक्यानां तूक्तरीत्या प्रधाननियोगानुवादेन तदन्वित- स्वार्थप्रतिपादकत्वसंभवान्न कार्यान्तरवत्वमिति कार्यान्तरशून्यानीति सन्निपातिष्वेव विशेषणं युक्तमिति । तथा च तत्त्वनिर्णयटीकाव्याख्यानोक्तरीत्या समिदादिवाक्यानां अङ्गकार्यरूपकार्यान्तरवत्वेन तदन्वितस्वार्थप्रतिपादकत्वेनापि प्रधाननियोगरूपकार्यान्वितस्वार्थप्रतिपादकता । अवहननादिवाक्यानां तु प्रधाननियोगकरणोपकारकत्वेन विषयानु- प्रवेशात् कार्यान्तरवत्वाभावेन प्रधाननियोगमेवानूद्य तदन्वितस्वार्थाभिधायकत्वमेव तेषां प्राप्तमिति सांन्निपात्यङ्गेष्वेव कार्यान्तरशून्यत्वसत्त्वात्तेषामेवान्यत्र कार्यान्तरशून्यत्वेन ग्रहणसंभवादिहाप्यङ्गवाक्यानामित्यत्र ग्रहणमुचितमिति सूरयो विदांकुर्वन्तु । एतेनान्यथाख्यातावुभयविधाङ्गवाक्यानां कार्यान्तरशून्यत्वमिति यत्प्रतिपादितं तदप्यपाकृतं भवति । निराकृतं च तद्वाक्यार्थविनोदे । प्रकृतमनुसरामः । कार्यान्तरविधुराणीत्यवच्छेदकसङ्गृहीतत्वं यथा





सन्निपत्योपकारकाङ्गवाक्यानाम्; तथा मन्त्रादीनामपीत्याशयेनाङ्गमन्त्रार्थवादादि इत्युक्तं शङ्कावसरे । तदनुसारेणाङ्गवाक्यानां कार्यपरतामुपपाद्य मन्त्रादेरपि कार्यपरत्वं व्युत्पादयति **मन्त्राणां चेत्यादिना** । निन्दादिरूपार्थवादानां तु तत्तन्निवृत्त्यादिप्रयोजनकत्वं चोपलक्षणया ज्ञेयम् । अत एवार्थवादादीत्यादिपदेन प्रयोजनान्तरार्थकवाक्यसङ्ग्रहः कृत इति ज्ञेयम् । अत एव मन्त्रार्थवादयोरनेनैवेत्युत्तरवाक्यविषयत्ववर्णनमप्यन्यथाख्यातिस्थमयुक्तम् । कार्यान्तरशून्यानीत्यवच्छेदकसङ्गृहीतत्वस्याविशेषे सति मन्त्रा अपीत्यादि तत्त्वनिर्णयटीकायामिव पृथग्वचनाभावे च सति पूर्ववाक्ये अङ्गेत्यपि विशेषवचनाभावे च सति तेनैव त्रितयसङ्ग्रहसंभवादनेनेत्युत्तरवाक्यस्य वाक्यान्तरविषयताया एव न्याय्यत्वात् । उक्ताभिप्रायं मनसि निधायैवानेनैवेत्युत्तरवाक्यमवतारयति **नन्वेवमपीति** । उक्तरीत्या कृत्स्नस्य कर्मकाण्डस्य कार्यपरत्वप्राप्तावपीत्यर्थः । **सिद्धिरिति** । ततश्च न समस्तवेदस्य कार्यपरतासिद्धिरिति शेषः । **मन्त्रार्थवादादिन्यायेनेति** । अनेन ब्रह्मकाण्डमपि स्वर्गकामो यजेतेत्यादिकर्मविधिशेषभूतमेवेत्येवं कर्मकाण्डयोरेकवाक्यता सूचिता । अत एव भिन्नवाक्यत्वमाश्रित्य यद्वेत्यादिना योजनान्तरं करिष्यति । कर्मकर्त्रित्यनेन कर्माङ्गभूतेति सूचितम् । एवं तद्देवतेत्यत्र कर्माङ्गभूतदेवतेत्यर्थः । महाफल इत्येतदवतारमूले कर्माङ्गभूतदेवतेति वक्ष्यति च । एवं समस्तोऽप्याम्नाय इत्यस्य कर्मकाण्डवद्ब्रह्मकाण्डमपि कर्मविधिशेषत्वेनैव कार्यपरमिति योजयित्वा अतश्च वेदान्तानामात्मा ज्ञातव्य इत्यपुनरावृत्तये समाम्नातेन विधिनैकवाक्यतामाश्रित्य कार्यपरत्वमेव वर्णनीयमिति प्रमाणपारायणवाक्यं मनसि कृत्वा प्रतिपत्तिविधिशेषत्वेन तत्कार्यपरमिति योजयति **यद्वा स्वर्गेति** । **प्रतिपत्तिविधिः** । ज्ञानविधिः । समस्तस्येतीत्यन्तेति पाठः । वक्ष्यति चेष्टे व्युत्पत्तिरित्यादि ।

**स०व्र०**— मतद्वयसाधारणमेतद् दूषणमिति दर्शयितुं जैमिनीया इत्युक्तम् । कार्यनिष्ठत्वं सर्ववेदस्य विवृणोति **इत्थमिति** । विभागे साकाङ्क्षाणां पदानामर्थभेदे सत्यपि प्रयोजकैक्ये एकवाक्यत्वम् । तस्मादेकत्रैव तात्पर्यं वाच्यम् । अनेकत्र तात्पर्ये वाक्यभेदप्रसङ्गात् । अनेकेषां प्रतीतावपि यत्र शब्दस्य तात्पर्यं स एव शब्दार्थः । न प्रतीतमात्रम् । तत्रापि कुत्र तात्पर्यमित्याकाङ्क्षायां यत्परत्वे आकाङ्क्षा निवर्तते तदर्थत्वमितरपदार्थानां तत्रैव तात्पर्यम् । तादृशं च कार्यमेव नान्यत् । अन्वयव्यतिरेकाभ्यां तस्य वाक्यपर्यवसानहेतुत्वात् । तस्मात् स एव सर्ववेदार्थ इति । **न हि गौरश्व इति** । इदं च दृष्टान्तत्वेनोपात्तम् । अत एव पूर्वो वा शब्द उपमार्थः । द्वितीयस्त्वप्यर्थ इत्यवधेयः । ननु शब्दार्थस्यैव वाक्यार्थत्वात् अपदार्थत्वे च लक्षणानर्हत्वात् इत्याशङ्क्य लिङादिपदवाच्यत्वं कार्यस्य तदन्वयित्वेनेतरपदार्थानामाह **तत्रेति** । **पदान्तराणि त्विति** । कार्यप्रतीत्युपयोगीनि विषयनियोजनव्यावृत्तिप्रत्यायकानि । **एवमिति** । कर्तृशरीरनिर्वर्तकसामवायिकाङ्गप्रतिपादकानि व्रीहीनवहन्तीत्यादीनि । फलोपकारिआरादुपकारकाङ्गवाक्यानि प्रधानसन्निधावनुवादशङ्काकलङ्कितत्वात् कार्यान्तरविधुराणि आनर्थक्यापत्तेः ग्राहकगृहीतत्वात् कार्यपराणि । अर्थवादानामपि कार्ये नियोज्यमानपुरुषप्रयत्नोत्पादहेतुत्वेनोपयोगः । मन्त्राणामप्यनुष्ठेयार्थोपस्थापकत्वेन कार्योपयोगितेत्यर्थः । कर्मकाण्डस्य क्रियापरत्वेऽप्युपनिषदां सिद्धब्रह्मपरत्वमेवेत्याशङ्क्याह **अनेनैवेति** । एतच्चोपरिष्टाद्विवृतं भविष्यति ।





**विठ्ठ०— कार्यनिष्ठतैव कथमिति**। अनेकपदात्मकवाक्यश्रवणेनान्योन्यमन्वितानेकपदार्थानामेव प्रतीत्या कार्यतायाः प्रधानतया अप्रतीतेः कथं समस्ताम्नायस्यैकवाक्यतासिद्धये एकत्र तात्पर्यस्यावश्यकत्वेन प्रधानस्येव तात्पर्यविषयत्वसंभवात्कार्यस्यैव प्रधानत्वात्तन्निष्ठता युज्यत इत्याशयेनाह **इत्थमित्यादिना**। तात्पर्यविषयनिष्ठतैव सर्वपदानामित्यत्र शब्दमर्यादाभिज्ञानां संमतिमाह **यत्पर इति**। पर्यवसान इत्यस्याकाङ्क्षापूर्तिरित्यर्थः। कार्यरूपार्थस्यैव वाक्यपर्यवसानहेतुत्वमित्येतदुपपादयति **न हीत्यादिना**। **आद्यो** वाशब्द उपमार्थः द्वितीयस्त्वप्यर्थः। तथाच देवदत्तः पचतीति वाक्यं क्रियापदसहितमपि गौरश्च इत्यादिवाक्यवच्छ्रोतृप्रवृत्त्यजनकत्वात्पर्यवसितं न ह्यनुभूयत इत्यर्थः। **सर्वत्रेति**। लोके वेदे चेत्यर्थः। इयांस्तु विशेषः। लोके कार्यं धात्वर्थरूपं वेदे त्वपूर्वमिति कार्यप्रतिपादनेन वाक्यपर्यवसानमित्येतदुपपाद्य कार्यप्रतिपादनपराणि पदान्तराणीत्येतदुपपादयितुमाह **तत्रेति**। लिङादिरहित-वाक्यानां तर्हि कार्यनिष्ठत्वं न स्यादित्यत आह **एवमिति**। साक्षात्कार्यान्वितपदान्तराणीवेत्यर्थः। नन्वर्थवाद-मन्त्राद्यात्मकस्य कथं कार्यपरतेत्यत आह **अनेनैवेति**। अर्थवादानां नियोज्यपुरुषप्रोत्साहहेतुत्वेन मन्त्राणां त्वनुष्ठेयस्मारकत्वेनोद्देश्यदेवतापरत्वेन चोपनिषदां च कर्तृस्वरूपप्रतिपादकतया च विध्यतिरिक्तस्समस्तोऽप्याम्नाय एकवाक्यन्यायेन कार्यपरो ध्येय इति भावः।

**चषकः— कार्यनिष्ठता**। बहुव्रीहिप्रकृतिकस्तल्। कार्यतात्पर्यकता। अन्यथा एकार्थतात्पर्यकत्वानुपगमे। यत्परः यत्तात्पर्यकः। उदाहरणद्वयं क्रियावाचकसमभिव्याहारतद्राहित्यनिबन्धनं पर्यवसितमाकाङ्क्षानिवृत्तिमत्। **तत्रेति**। दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यादिप्रधानवाक्यघटक इत्यर्थः। **पदान्तराणि** स्वर्गकामादिपदानि। **कार्यान्तरविधुराणि** अङ्गमन्त्रार्थवादवाक्यानि।

**प्रदीपः—** कार्यनिष्ठत्वं सर्ववेदस्य विवृणोति **इत्थमिति**। विभागे साकाङ्क्षाणां पदानामर्थभेदेऽपि प्रयोजनैक्य एव वाक्यत्वं तस्मादेकत्रैव तात्पर्यं वाच्यमनेकत्र तात्पर्ये वाक्यभेदप्रसङ्गात्। अनेकेषां प्रतीतावपि यत्र शब्दस्य तात्पर्यं स एव शब्दार्थः। न प्रतीतिमात्रं तत्रापि कुत्र तात्पर्यमित्याकाङ्क्षायां यत्परत्वे आकाङ्क्षा निवर्तते यदर्थत्वमितरपदानां तत्रैव तात्पर्यं तादृशं कार्यमेव नान्यत् अन्वयव्यतिरेकाभ्यां वाक्यपर्यवसानहेतुत्वावगमादेव सर्ववेदार्थः। ननु शब्दार्थस्यैव वाक्यार्थत्वादपदार्थत्वेऽपि लक्षणानर्हत्वादित्याशङ्क्य लिङादिशब्दवाच्यत्वं कार्यस्य तदन्वयित्वेनेतरपदानामनेकत्रेति अन्वितानपेक्षे कार्यस्योभयरूपत्वं पदार्थस्यैव वाक्यार्थत्वात् पदान्तराणि त्विति कार्यप्रतीत्युपयोगीति निर्विषयनियोज्यव्यावृत्त्यप्रत्ययकानि प्रकरणपरत्वं च द्रष्टव्यम्। एवमिति क्रतुशरीर-निर्वापकधामवाहिकाङ्गप्रतिपादकानि व्रीहीनवहन्तीत्यादीनि फलोपकारकारादुपकारकाण्यन्यवाक्यानि प्रधानसन्निधा-वनुवादाशङ्काकुण्ठितत्वात्कार्यान्तरविधुराणि, आनर्थक्यापत्तेः। ग्राहकगृहीतत्वात्कार्यपराणि। अर्थवादानामपि कार्ये नियुज्यमानपुरुषप्रोत्साहनहेतुत्वेनोपयोगो मन्त्राणामप्यनुष्ठेयार्थस्मारकत्वेन कार्योपयोगितेत्यर्थः। वर्मकाण्डस्य क्रियापरत्वेऽपि उपनिषदां सिद्धब्रह्मपरत्वमेवेत्याशङ्क्याह **अनेनैवेति**। एतच्चोपरिष्टाद्विवृतं भविष्यति।





**५१५ सु०— किञ्च प्रत्याय्यप्रत्यायकभावसंबन्धग्रहणलक्षणव्युत्पत्त्यपेक्षो हि शब्दोऽर्थमवबोधयतीत्यविवादम् । अन्वयव्यतिरेकाभ्यां तथाऽवगमात् । व्युत्पत्तिश्च वृद्धव्यवहारदर्शनादेव । वृद्धव्यवहारश्च कार्यप्रतिपत्तिनिबन्धन इति कार्यप्रतिपादकतैव युक्ता ।**

**परि०**— एवं पर्यवसानानुपपत्तिं वेदस्य कार्यपरत्वे प्रमाणमुक्त्वा लोकसिद्धकार्यव्युत्पत्तिं च प्रमाणं 'इष्टे व्युत्पत्तिरिष्यत' इति वक्ष्यमाणव्यावर्त्यं व्युत्पत्तिप्रकारोपपादनपूर्वमाह **किञ्चेति** । **अविवादमिति** । विवादाभावोऽविवादम् । 'अर्थाभावे यदव्ययमि'त्यव्ययीभावे 'अव्ययीभावश्चे'ति नपुंसकता ।

**यादु०**— एवं कार्यता च न काचिदित्यादिग्रन्थनिवर्त्यपूर्वपक्षं दर्शयित्वाऽधुनेष्टे व्युत्पत्तिरिष्यत इति ग्रन्थनिवर्त्यं पूर्वपक्षं दर्शयिष्यति **किञ्चेति** । वृद्धशब्दो व्युत्पन्नपरः । स्वाधीनेति विष्टिगृहीतप्रवृत्तिवारणाय । एतदर्थमेवाग्रे स्वतन्त्रपदमपि ।

**वं०प०— प्रत्याय्येत्यादि** । वाच्यवाचकभावसंबन्धेत्यर्थः । **विशिष्टार्थेति** । इतरविलक्षणजलाहरणविषयामित्यर्थः ।

**आनन्दः**— इदानीं व्युत्पत्तिलक्षणसहकारिलाभाच्च कार्यपरत्वमेवेत्याह **किञ्चेति** ।

**श्रीनिधि०**— व्युत्पत्तिग्रहणानुरोधेनापि कार्यपरत्वं शब्दस्येत्याह **किञ्चेति** । प्रत्याय्यप्रत्यायकभावसंबन्धः ज्ञाप्यज्ञापकभावसंबन्धः ।

**वा०चं०**— एवं 'कार्यता चे'त्यारभ्य 'आकाङ्क्षासन्निधिर्योग्यता यतः । तस्मिन्नेव समस्तस्ये'त्यन्तग्रन्थनिरस्यं परोक्तं स्वपक्षे साधकं परपक्षे बाधकमुपन्यस्य कार्यपदादिवाच्यकार्यस्य वाक्यस्थेन केनचित्पदेन लक्षणया बोधनेऽपि वाक्यस्य कार्यपरत्वसंभवाल्लिङादीनां कार्याद्यभिधायकत्वं न कल्प्यमिति शङ्कां शक्तिग्राहकप्रमाणबलात्सिद्धार्थस्य न कल्पनेति परिहर्तुम् 'इष्टे व्युत्पत्तिरिष्यत' इति ग्रन्थनिरस्यं परोक्तसाधकादिकं दर्शयति **किं चेति** । **वृद्धो** व्युत्पन्नः । **व्यवहारो** वाक्योच्चारणप्रवृत्त्यादिरूपतच्चेष्टा । **बालः** अव्युत्पन्नः ।

**वा०र०— परोक्तमिति** । कार्यवादिनोक्तमित्यर्थः । **स्वपक्षे** कार्यवादिपक्षे । **परपक्षे** सिद्धार्थपरत्ववादिपक्षे । अत्र परपक्षे च बाधकमिति चशब्दयुक्तः पाठः । कार्यबोध एव पर्यवसानाख्यस्वपक्षसाधकस्यैव सिद्धार्थपरत्ववादिपक्षे बाधकत्वात् । चशब्दाभावे वा तदर्थान्तर्भावेनार्थो बोध्यः । कार्यपदादीत्यादिपदेनापूर्वनियोगपदसङ्ग्रहः । **केनचित्पदेनेति** । सिद्धार्थबोधकेन येनकेनचित्पदेनेत्यर्थः । लिङादीनामेव कार्याभिधायकत्वमित्यस्याक्षेपोऽयम् । त एव कार्यावगतिं कुर्वन्तीत्युत्तरमूलानुसारात् । लिङादीनामित्यत्रादिपदेन लेडादीनां त्रयाणामिव





पदान्तराणामपि ग्रहणम् । तथा च लिङादीनां चतुर्णां कार्याभिधायकत्वं पदान्तराणां तु कार्यान्विताभिधायकत्व-मादिपदोक्तं न कल्प्यमिति योजना । शक्तिग्राहकप्रमाणं व्यवहाररूपं सिद्धार्थस्येत्यादेः केवलसिद्धार्थस्य किञ्चित्पदवाच्यत्वेन कल्पना न कार्येत्यर्थः । साधकादिकमित्यादिपदेन बाधकपरिग्रहः । स्वपक्षसाधकं परपक्षे च बाधकमित्यर्थः । व्यवहारस्य कार्यप्रतिपत्तिमात्रनिबन्धनत्वस्याप्युभयरूपत्वात् । अन्योक्तशब्दतद्व्यापारादिरूप-साधकान्तरनिरासोऽप्यादिपदार्थः । वयोधिकत्वस्य प्रकृतानुपयोगाद्व्याचष्टे **वृद्धो व्युत्पन्न इति** । प्रत्याय्यप्रत्यायक-भावलक्षणसंबन्धज्ञानवानित्यर्थः । स च वृद्धः प्रयोजकः, प्रयोज्यश्च विवक्षितः इति तदनुसारेणोभयानुगुणव्यवहारं दर्शयति **तद्व्यवहार इति** । प्रयोजकवृद्धस्य वाक्योच्चारणव्यवहारः । प्रयोज्यस्य तु प्रवृत्त्यादिकमिति विवेकः । आदिपदेन जलार्थं प्रवृत्त्युत्तरकालीनजलानयनपरिग्रहः । मूले **विशिष्टार्थविषयामिति** । जलाहरणविषयामित्यर्थः । अन्य इत्यस्य प्रयोज्यादन्यः पार्श्वस्थ इत्यर्थः । बालपदेनाधीतकाव्यव्याकरणादिरपि तत्रतत्र विवक्ष्यते । न चात्र तद्ग्रहणं युक्तमित्यतः स्तनपानादिकर्ता व्युत्पित्समान इति पदमहिम्नाऽव्युत्पन्नत्वेन प्राप्तश्च यः स एवात्र विवक्षित इत्याह **बालोऽव्युत्पन्न इति** ।

**स०व्र०**— स्यादेषा प्रक्रिया यदि लिङादीनां कार्याभिधायिता प्रमिता स्यात् । न चैतदस्तीत्याशङ्क्य लिङादिवाच्यत्वं कार्यस्योपपादयति **किञ्चेति** ।

**वि०ठ०**— व्युत्पत्त्यन्यथानुपपत्त्या च कार्यपरत्वं शब्दानामङ्गीकार्यमित्याह **किञ्चेति** । वाच्यवाचकयोरेव ज्ञाप्यज्ञापकभावापन्नत्वाभिप्रायेण प्रत्याय्येत्याद्युक्तम् । **वृद्धः** व्युत्पन्नः ।

**प्रदीपः**— स्यादेषा प्रक्रिया । यदि लिङादीनां कार्याभिधायिता प्रमिता स्यान्न चैवमित्याशङ्क्य लिङादि-वाच्यत्वं कार्यस्योपपादयति **किञ्चेति** ।

**५१६ सु०— तथा हि । 'जलं चैत्र आहरस्वे'ति प्रयोजकवृद्धवाक्यश्रवणात्प्रयोज्यवृद्धस्य विशिष्टार्थविषयां प्रवृत्तिं दृष्ट्वा व्युत्पत्स्यमानोऽन्यो बाल एवमाकलयति, 'स्वाधीनाऽस्य प्रवृत्तिः सा मद्वद्बुद्धिपूर्विके'ति ॥ पुनस्तस्यायं विमर्शो जायते, 'या चास्य प्रवृत्तिहेतुभूता बुद्धिः सा यद्विषया सती मम प्रवृत्तिहेतुस्तद्विषयैवे'ति । तदेवमनुमानद्वयमेतत् । वृद्धस्य स्वतन्त्रा प्रवृत्तिर्धर्मिणी । बुद्धिपूर्विकेति साध्यो धर्मः । स्वतन्त्रप्रवृत्तित्वात्, मदीयस्वतन्त्रप्रवृत्तिवत् ॥ तथा वृद्धस्य प्रवृत्तिहेतुभूता बुद्धिर्धर्मिणी । यद्विषयैव बुद्धिर्मम प्रवृत्तिहेतुभूता तद्विषयैवेति साध्यो धर्मः । प्रवृत्तिहेतुभूतबुद्धित्वात्, मदीयप्रवृत्तिहेतुभूतबुद्धिवदिति ।**





**परि०— विशिष्टार्थेति**। इतरव्यावृत्तजलरूपार्थविषयामित्यर्थः। **धर्मिणीति**। साध्यं प्रति धर्मिभूतेत्यर्थः।

**यादु०— प्रवृत्तिहेतुभूतेति**। एतच्च विशेषणं पक्षे उपेक्षाबुद्धेरपि पक्षत्वे तत्र बाधासिद्धिवारणाय हेतौ च तत्र व्यभिचारवारणायेति ज्ञातव्यम्।

**वं०प०— अन्यो बाल इति**। पार्श्वस्थस्तृतीय इत्यर्थः। **स्वाधीनेति**। स्वेच्छाधीनेत्यर्थः। स्वतन्त्रेत्यस्य अयमेवार्थः। विष्टिगृहीतप्रवृत्तिवारणायेदमुक्तमिति मन्तव्यम्।

**श्रीनिधि०— विशिष्टार्थविषयाम्** जलाहरणादिविषयाम्। कार्यबोधपूर्विकेत्यनुमाने हेतुं बुद्धिपूर्वप्रवृत्तित्वं साधयति। वृद्धस्य स्वतन्त्राप्रवृत्तिरिति। **धर्मिणी**। पक्षः। विष्टिगृहीतादिप्रवृत्तौ व्यभिचारवारणाय स्वतन्त्रविशेषणम्। तत्रैव बाधवारणाय पक्षे स्वतन्त्रेति विशेषणम्। तद्वस्तु शब्देन बोध्यते। वस्तुबोधः शब्देन जायत इत्यर्थः। तत्रास्य प्रवृत्तिः कार्यबोधपूर्विका बुद्धिपूर्वप्रवृत्तित्वान्मदीयप्रवृत्तिवदित्यनुमाने मदीयप्रवृत्तिवदिति दृष्टान्तं वक्ष्यति। तत्र स्वप्रवृत्तेः कार्यबोधपूर्वकत्वेऽपि चैत्रप्रवृत्तेरन्यबोधपूर्वकत्वे न दृष्टान्तदार्ष्टान्तिकभाव इत्यत उभयप्रवृत्तिहेतुभूत-ज्ञानस्याप्येकविषयत्वं साधयति **तथा वृद्धस्येत्यादि**। अस्तु प्रवृत्तेः कार्यबोधपूर्वकत्वम्।

**कं०रा०— मद्वत्** ममेव धर्मिणीति पक्ष इत्यर्थः। **स्वतन्त्रेति**। एतच्चास्वतन्त्रदारुयोषादिप्रवृत्तौ व्यभिचारवारणाय।

**वा०चं०—** वक्ष्यमाणानुमाने पक्षहेतुसिद्ध्यर्थमाह **जलमिति**। नन्विमौ विमर्शौ न प्रत्यक्षागमाविति स्पष्टमेव, नाप्यनुमानं तादृशलिङ्गाभावादित्यत आह **तदेवमिति**। उन्मत्तप्रवृत्त्यंशे बाधवारणाय **स्वतन्त्रेति**। हेतौ च तत्रैव व्यभिचारवारणाय तत्। **यदिति**। प्रवृत्तिहेतुभूतमद्बुद्धिसमानविषयेत्यर्थः।

**वा०र०— वक्ष्यमाणानुमानपक्षेति**। चैत्रस्य प्रवृत्तिः कार्यबोधपूर्विका बुद्धिपूर्वकप्रवृत्तित्वादित्यनु-मानीयपक्षहेत्वोः सिध्यर्थमित्यर्थः। अन्यथा आश्रयासिध्यादिप्रसङ्गादिति भावः। **प्रवृत्तिं दृष्ट्वेति** मूलेन पक्षसिद्धिप्रतिपादनम्। स्वाधीनस्येत्यादिना बुद्धिपूर्वकप्रवृत्तित्वप्रतिपादनं शिष्टेन बुद्धेः कार्यविषयत्वपरिशेष-कथनमिति विवेकः। **इमौ विमर्शाविति**। प्रवृत्तेर्बुद्धिपूर्वकत्वम्। बुद्धेश्च स्वबुद्धिसमानविषयत्वमित्येतदुभयोपपादनाय प्रदर्शितान्विमर्शानित्यर्थः। न प्रत्यक्षागमौ। तद्रूपप्रमाणेन भवतः। **नापीति**। अनुमानरूपं प्रमाणमपि न भवत इत्यर्थः। **लिङ्गाभावात्**। लिङ्गस्याप्रतीतेरित्यर्थः। **तदेवमितीति**। तस्मादेवमनुमानद्वयं लब्धमिति मूलार्थः। पक्षगतस्वतन्त्रपदकृत्यमाह **उन्मत्तेति**। **स्वन्तत्रेतीति**। तत्प्रवृत्तेरुन्मादनिमित्तकत्वेन पराधीनप्रवृत्तित्वाभावादिति भावः। उपलक्षणं चेदम्। अबलवदनिलसलिलौ ह्यनुह्यमानपुरुषप्रवृत्तौ व्यभिचारेत्यपि न्यायमकरन्दटिप्पण्योक्तरीत्या ज्ञेयम् (?)। अत्र प्रयोजकवृद्धप्रवृत्तिं दृष्ट्वा अनुमानप्रवृत्तेः सिद्धत्वादनेकपुरुषप्रवृत्तीनां पक्षत्वाप्राप्तेः कथमंशे बाध इति

न शङ्क्यम्। एतत्पुरुषप्रवृत्तित्वेन पक्षतायामपि तस्यैव पुरुषस्योन्मादादिदशापन्नत्वे तत्प्रवृत्तिमादायांशे बाध इत्यत्र तात्पर्यात्। **तत्रैवेति**। उन्मत्तप्रवृत्तावेवेत्यर्थः। नत्वंशपदमप्यत्र योज्यम्।

**स०व्र०— स्वाधीनाऽस्य प्रवृत्तिरिति**। विष्टिगृहीतप्रवृत्तिवारणाय **स्वाधीनेति**। एतदर्थमेवाग्रे स्वतन्त्रपदमपि। **प्रवृत्तिहेतुबुद्धित्वादिति**। अत्रोपेक्षाज्ञाने व्यभिचारवारणाय प्रवृत्तिहेतुभूतेति विशेषणम्।

**विठ्ठ०— या चास्येति**। अस्य प्रयोज्य वृद्धस्य या प्रवृत्तिहेतुभूता बुद्धिस्सा मम बुद्धिर्यद्विषया सती प्रवृत्तिहेतुः तद्विषयैवेति योजना। **धर्मिणी**त्यस्य पक्ष इत्यर्थः। प्रवृत्तित्वादित्येवोक्ते विष्टिगृहीत-प्रवृत्तौ स्वबुद्धिपूर्वकत्वाभावात् व्यभिचारः। अतः स्वतन्त्रेत्युक्तम्। द्वितीयहेतावुपेक्षाज्ञाने व्यभिचारवारणाय **प्रवृत्तिहेतुभूतेति**।

**५१७ सु०— पुनश्च तस्यायं विमर्शः प्रवर्तते। यद्विषया सा बुद्धिः प्रवृत्तिहेतुभूता तद्वस्त्वनेन शब्देन बोध्यते, तद्भावे भावात्; मम तु मानान्तरेण तद्बोध; इत्यावयोर्विशेषः। तेन यद् बुद्ध्वा प्रवृत्तिर्मम तदनेन शब्देन बोध्यत इति शब्दस्य प्रवृत्तिहेतुभूतार्थ-बोधकतामवधारयति ॥ पुनश्च कोऽसौ प्रवृत्तिहेतुभूतोऽर्थः शब्दाभिधेय इति निर्धारयितुं स्वात्मनि प्रतिपन्नं प्रवृत्तिहेतुभूतार्थमनुसन्धत्ते। तत्र न तावदहं क्रियामात्रं फलमात्रं वा क्रियाफलसंबन्धमात्रं वा बुद्ध्वा प्रवृत्तः; किन्तु कार्यतामेव। 'ममेदं कार्यमि'ति प्रतीत्य हि सर्वत्र प्रवृत्तोऽस्मि।**

**परि०— अनेन शब्देनेति**। चैत्र जलमाहरस्वेति शब्देनेत्यर्थः। **मानान्तरेणेति**। प्राग्भवीयानुभवजन्यसंस्कारादिरूपेणेत्यर्थः। **क्रियामात्रमिति**। भोजनादिक्रियामात्रं तृप्त्यादिरूपफलमात्रं तयोर्जन्यजनकभावरूपसंबन्धमात्रं वेत्यर्थः।

**यादु०— क्रियामात्रमित्यादि**। चन्द्रमण्डलहरणादिरूपक्रियातत्फलतत्साधनताज्ञानेऽपि प्रवृत्त्यभावेन व्यभिचारादिति भावः।

**वं०प०— तद्भावभावित्वादिति**। शब्दसद्भावे सति वस्तुबोधस्य जायमानत्वादित्यर्थः। **मानान्तरेणेति**। स्तनपानादिप्रवृत्तिहेतुभूतवस्तुबोधः प्रमाणान्तरेण शब्दव्यतिरिक्तेन जात इत्यर्थः। स्तनपानादिप्रवृत्तौ शब्दाभावादिति भावः।





**श्रीनिधि०**— शब्दस्य कार्यपरत्वे किमायातमित्यत आह **पुनश्चेति** । **तस्य** प्रयोज्यवृद्धस्य । **तद्भावे** शब्दभावे । भावात्प्रवृत्तिहेतुभूतबुद्धेरिति शेषः । **तत्** प्रवृत्तिहेतुभूतज्ञानविषयीभूतम् । एतावता शब्दस्य कथं कार्यपरत्वमित्यतः परिशेषयितुमुपक्रमते **तेनेत्यादिना** । **क्रियामात्रं** भोजनादिक्रियामात्रम् । **फलमात्रं** क्षुन्निवृत्त्यादिफलमात्रम् । **संबन्धमात्रम्** तयोस्साध्यसाधनभावसंबन्धमात्रम् । विमर्शरहितस्यापि यदा प्रवृत्तिः कार्यबोधपूर्विका तदा किं वक्तव्यं विमर्शवतः प्रवृत्तिः ।

**वा०चं०**— स्वबुद्धौ शब्दजन्यत्वाभावेन स्वबुद्धिदृष्टान्तेन शब्दजन्यत्वानुमानासंभवात्प्रकारान्तरेण तत्प्रकारं दर्शयति **पुनश्चेति** । दृष्टान्ते वक्ष्यमाणसाध्यसिद्ध्यर्थमनुसन्धानप्रकारं दर्शयति **पुनश्चेति** । **तत्र न तावदिति** । क्रियाफलबोधयोर्वर्तमानापदेशादौ क्रियाफलसाध्यसाधनभावरूपसंबन्धस्य च भूतादौ प्रवृत्तिव्यभिचारादिति भावः ।

**वा०र०**— **दृष्टान्त इति** । मदीयप्रवृत्तिरूपदृष्टान्ते कार्यबोधपूर्वकत्वरूपसाध्येत्यर्थः । तथैव भावार्थफलबोधयोरपि प्रवर्तकभावः पराकरणीय इत्यादि न्यायमकरन्दानुसारेणाह **क्रियाफलबोधयोरित्यादि** । यद्यपि क्रियापक्ष एव वर्तमानेति दूषणं न्यायमकरन्दटीकायां दूषणान्तरतया योजितम् । भावार्थपक्षे दूषणान्तरमाहेत्यवतारकरणात् । तथापि चित्सुखेन 'देवदत्त ओदनं पचति' 'निधिमानेष भूभाग' इत्यादौ क्रियाज्ञाने फलज्ञाने च सत्यपि प्रवृत्त्यदर्शनान्न क्रियाज्ञानं फलज्ञानं वा प्रवर्तकमित्याहेति वर्तमानेति वाक्यस्यावतारकरणात्क्रियाफलबोधपक्षद्वयेऽप्येतद्दूषणयोजनमुचितम् । देशादावित्यस्य प्रवृत्तिव्यभिचारादित्युत्तरेण संबन्धः । **भूतादाविति** । तृप्तिसाधने भोजने अतीते आदिपदोक्ते वर्तमाने वा प्रवृत्तेरभावादिष्टसाधनताया अपि व्यभिचारादित्यर्थः । न चातीतवर्तमानयोः प्रवृत्त्यभावेऽप्यागामिनि फलसाधने प्रवृत्तिः संभवतीति वाच्यम् । सामुद्रलक्षणविदा राज्यसाधने कथितेऽपि प्रवृत्त्यदर्शनादिति भावः ।

**स०व्र०**— **तत्र न तावदहमिति** । कृत्यसाध्यादौ विशकलितक्रियादिज्ञानेऽपि प्रवृत्त्यभावेन व्यभिचारादिति भावः ।

**वि०ठ०**— **मानान्तरेणेति** । जन्मान्तरीयसंस्कारेण प्रवृत्तिहेतुभूतवस्तुबोधो जायत इति भावः । **न तावदिति** । स्तन्यपानभोजनादिक्रियामात्रं तज्जन्यतृप्त्यादिफलमात्रं वा तयोर्जन्यजनकभावरूपसंबन्धमात्रं वा दृष्ट्वा प्रवृत्तः विशकलितक्रियादिज्ञानेऽपि कृत्यसाध्यतया प्रवृत्त्यभावेन व्यभिचरितत्वादिति भावः।





**५१८ सु०— आस्तां तावदन्या क्रिया अन्ततः स्तनपानादिकमपि यावन्मया कार्यतया नावधारितं न तावत्तत्राहं प्रवृत्त इति स्वप्रवृत्तेः कार्यताबोधपूर्वकत्वं निश्चित्य प्रवर्तमानं चैत्रं दृष्ट्वा अनुमिनोति चैत्रोऽपि कार्यबोधात्प्रवर्तत इति ॥ चैत्रस्य प्रवृत्तिर्धर्मिणी, कार्यबोधपूर्विकेति साध्यो धर्मः, बुद्धिपूर्वप्रवृत्तित्वात्, मदीयप्रवृत्तिवदिति ॥ लिङादयश्च प्रवृत्तिहेतुभूतार्थाभिधायकाः कार्यमेवाभिदधतीति वाक्यस्य तावत्सामान्यतः कार्यपरता-मवधार्य लिङाद्यावापे कार्यतावगतिदर्शनात् तदुद्धारे चादर्शनात्त एव कार्यतावगतिं कुर्वन्ति । पदान्तराणि च तदन्वितांस्तांस्तानर्थान् । इत्यावापोद्धाराभ्यामवगच्छति ।**

**परि०— निश्चित्येति** । अनुमिनोतीतिक्रिययाऽस्यान्वयः ।

**श्रीनिधि०**— कार्यबोधपूर्विकेति भावेनाह **आस्तां तावदन्या क्रियेति** । **आवापे** प्रक्षेपे । **उद्धारे** त्यागे ।

**विठ्ठ०**— तथा च प्रयोज्य वृद्धप्रवृत्तेः कार्यबोधाधीनत्वात्प्रयोजकवृद्धवाक्यं कार्यतापरमिति सामा-न्यतो निश्चित्य तद्वाक्यगतलिङादिशब्देषूक्तवाक्ये विशेषनिर्धारणाय प्रवृत्तो निश्चिनोतीत्याह **लिङादयश्चेति** । **लिङाद्यावाप** इत्यत्रादिपदेन लोट्तव्यप्रत्यययोर्ग्रहणम् ।

**५१९ सु०— एतेन शब्दस्तद्व्यापारो वा प्रवर्तक इति निरस्तम् । बालेन स्वप्रवृत्तौ तयोः कारणतया अनवधृतत्वात् । तथाविधस्यैव परप्रवृत्तावधारणात् ॥ किञ्च शब्दस्यैव प्रवर्तकत्वे सर्वेऽपि तच्छ्राविणः प्रवर्तेरन् ॥ याऽपीयं शङ्खादिशब्दश्रवणानन्तरं प्रवृत्तिः साऽपि पुरुषाभिप्रायानुमानादेव; न साक्षात् ।**

**बिन्दुः— शब्दस्तद्व्यापारो वेति** । ज्ञातः शब्दः शब्दज्ञानं वेत्यर्थः । **याऽपीति** । शङ्खादिशब्दश्रवणानन्तरमेव प्रवृत्तिदर्शनादिति भावः ।

**परि०**— भट्टमतं निराह **एतेन शब्द इति** । व्यापारो भावना । **पुरुषाभिप्रायेति** । आगन्तव्य-मित्येवं कार्यताभिप्रायानुमानादेवेत्यर्थः ।

**यादु०— शब्दस्तद्व्यापारो वेति** । अत्र शब्दपदेन लिङादय एव विवक्षिताः । तेषामेव प्रवर्तकत्वस्य संभावितत्वात् । व्यापारपदेन चाभिधैव विवक्षितेत्याहुः । वस्तुतस्तु विधिनिषेधात्मकः शब्द एव पुरुषस्य प्रवृत्तिं





निवृत्तिं च भावयन् शब्दभावनेत्युच्यते। लिङ्गादियुक्तेषु वाक्येषु द्वे भावने अवगम्येते शब्दात्मिकार्थात्मिका चेति। यथाश्रुतवाक्यानुसारी कश्चित्पक्षः लिङ्गादिभिर्नञ्समभिव्याहृतलिङादिभिश्च बोधितः। प्रवर्तनानिवर्तनात्मकः शब्दस्य व्यापारः शब्दभावना। लोके हि प्रेषणाध्येषणादिभिः प्रवर्तकस्य पुरुषस्य व्यापारो गामानयेत्यादिवाक्येषु प्रवृत्तिनिवृत्तिहेतुत्वेनावगतः। अपौरुषेयवेदे तु वक्तृपुरुषव्यापारासंभवाच्छब्दस्यैव स व्यापार इत्यन्यः पक्ष इत्यभिप्रेत्य शब्दस्तद्व्यापारो वेत्युक्तम्। **किञ्चेति**। तथा चाव्युत्पन्नानामपि बोधः स्यादिति भावः। उक्तं चैतन्मीमांसकैः। 'तत्र शब्दः स्वरूपेण वायुवच्चेत्प्रवर्तकः। प्रमाणत्वं विहन्येत नियमाच्च प्रवर्तयेदि'ति। ननु विमतः शब्दः प्रवृत्तिजनकस्तदभिप्रायकशब्दत्वाच्छङ्खादिशब्दवदित्यनुमानाल्लिङादिरूपे शब्दे प्रवृत्तिजनकत्वसिद्धेः कथमेतदित्यत आह **याऽपीति**। तथा च साध्यवैकल्यमिति भावः।

**वं०प०**— एतेनेत्युक्तमेव विशदयति **बालेनेति**। **तयोः** शब्दतद्व्यापारयोः। **तथाविधस्यैवेति**। बालेन स्वप्रवृत्तौ कारणतयाऽवधृतस्यैवेत्यर्थः। ननु शब्दस्य प्रवर्तकत्वं दृष्टम्। युद्धे शङ्खादिशब्दश्रवणसमनन्तरं प्रवृत्तिदर्शनादित्यतस्तत्रापि न साक्षाच्छब्द एव प्रवर्तकः किं नामानुमानविधयैवेत्याह **याऽपीयमिति**। अयं युद्धकर्तव्यत्वाभिप्रायवान्। तत्सूचकशब्दकर्तृत्वादित्यनुमानादेवेत्यर्थः।

**आनन्दः— तद्व्यापार इति**। शब्दव्यापारोऽभिधेत्यर्थः। एतेनेत्यस्यार्थमाह **बालेनेति**। **तथाविधस्येति**। वृद्धव्यवहारेण शक्तिग्रहस्येत्यर्थः। ननु तर्हि शङ्खादिशब्दश्राविणां कथं प्रवृत्तिस्तत्र कार्यताज्ञानाभावादित्यत आह **याऽपीति**।

**कं०रा०— शब्दस्तद्व्यापारो वेति**। लिङादिप्रत्ययरूपशब्दस्तन्निष्ठः शाब्दभावनाख्यव्यापारो वेत्यर्थः। एतच्छब्दपरामृष्टं हेतुमाह **बालेनेति**। ननु स्वप्रवृत्तौ शब्दतद्व्यापारयोः कारणत्वानवधारणेऽपि परप्रवृत्तौ तयोः कारणत्वेन कल्पनं किं न स्यादित्यत आह **तथाविधस्येति**। दृष्टानुसारिणी हि कल्पनेति न्यायेन स्वप्रवृत्तौ कारणतया दृष्टस्यैव परप्रवृत्तौ कारणत्वावधारणान्न तयोः परप्रवृत्तिकारणत्वकल्पनमिति भावः।

**श्रीनिधि०— शब्दस्तद्व्यापारो वेति**। **ज्ञातः** शब्दः। शब्दज्ञानं वेति अर्थः। **पुरुषाभिप्राया-दनुमानादेवेति**। गमनादिकार्यताविषयकाभिप्रायानुमानादेवेत्यर्थः।

**वा०चं०**— अन्यथासिद्धत्वान्न प्रवृत्तेर्बुद्धिपूर्वकत्वानुमानमुपपद्यत इत्याशङ्कां निरस्यति **एतेनेति**। शब्दो लिङादिस्तद्व्यापारोऽतिरिक्त एव कश्चिद्वा वर्णमात्रसाधारणोऽभिधारूपो वा लिङादिमात्रसाधारणः प्रवर्तनारूपो वा सर्वोऽप्यनभिधेयाभिधेयरूपेण द्विविध इति भावः। **बालेनेति**। उपलक्षणं चैतत्। शब्दस्यानभिधेयरूपतद्व्यापारस्य च प्रवर्तकत्वे सङ्गतिग्रहणापेक्षा च न स्यात्। अप्रामाणिकश्च तादृशो व्यापारः। अभिधेयव्यापारस्य परिस्पन्दरूपस्यामूर्ते विभौ विभुगुणे वा शब्दे संभवात्। प्रयत्नरूपस्य च तस्याचेतने





शब्देऽनुपपत्तेरतिरिक्तस्य शब्दभावनारूपाभिधादेरप्रामाणिकत्वादित्यपि द्रष्टव्यम् । ननु ध्वन्यात्मकशब्दस्यापि प्रवर्तकत्वं दृष्टं किमु तदा वर्णात्मकशब्दस्य तदित्याशङ्कायामाह **याऽपीति** । अन्यथा पुरुषाभिप्रायानभिज्ञानामपि तच्छ्रवणानन्तरं प्रवृत्त्यापत्तेरिति भावः ।

**वा०र०— अन्यथासिद्धत्वादिति** । स्वतन्त्रप्रवृत्तेः बुद्धिर्विनापिशब्दादिना संभवेन बुद्धिपूर्वकत्वाक्षेपकत्वानुपपत्तेरित्यर्थः । शङ्कां भट्टरीत्या प्राप्ताम् । शब्दः प्रवर्तक इति वदतो भट्टस्य शब्दपदं न शब्दमात्रपरतयाऽभिमतम् । तथा सति शब्दमात्रस्य विधित्वप्रसङ्गात् । न च तदङ्गीकर्तुं शक्यम् । प्रवर्तकस्यैव विधित्वाभ्युपगमात् । नापि नोदनारूपशब्दविशेषपरतया तदभिमतम् । विधिना त्वेकवाक्यत्वादित्यादिविरोधापातात् । मन्त्रार्थवादाद्युपेतं महावाक्यं हि चोदना । सैव विधिः । न चोक्तरूपविधिनैकवाक्यतया अर्थवादमन्त्राणां संभवति इत्यतः शब्दपदमनूद्य तस्य भट्टाभिमतमर्थमाह **शब्दो लिङादिरिति** । न च लिङादिरित्यादिपदस्य असङ्कुचितार्थत्वे उक्तातिप्रसङ्गतादवस्थ्यमेवेति वाच्यम् । प्रवृत्त्युद्देश्यकशब्दत्वस्य सङ्ग्राह्यतावच्छेदकधर्मस्य सत्त्वेन तदवच्छिन्नशब्दस्यैव प्राप्त्या सङ्कोचसंभवेनातिप्रसङ्गपरिहारोपपत्तेरित्याशयात् । लिङादिशब्दस्यैव प्रवर्तकत्वेन विधित्वाभ्युपगमं चोदनालक्षणोऽर्थो धर्म इति सूत्रीयवाक्यस्य धर्मे प्रामाण्यप्रतिज्ञाविरोधः । लिङादिशब्दस्य वाक्यैकदेशभूतपदैकदेशत्वादि त्वरुच्या तद्व्यापारो वेति मूले पक्षान्तरोक्तिः । तत्पक्षे तु वक्ष्यमाणरीत्या चोदनातोऽन्य एव व्यापारो विधिरिति न दोष इति भावः । तत्र न ज्ञायते कः शब्दव्यापार इत्यतो भट्टाभिमतं व्यापारं मतभेदेन दर्शयति **तद्व्यापार इति** । अत्र टीकायां वर्णमात्रेत्यादिप्रवर्तनारूपो वेत्यन्तेन पक्षद्वयमुक्त्वा इति रिक्त एव कश्चिदिति तृतीयपक्षो वक्तव्यतया यद्यपि प्राप्नोति । प्रतियोगिज्ञानाधीनत्वादभावज्ञानस्य । तथापि वक्ष्यमाणरीत्योक्तविकल्पद्वयान्तर्गततयाऽष्टादशसु व्यापारेषु मध्ये शक्तिप्रमुखव्यापारचतुष्टयस्यैव लाभात्तचतुष्टयरूपप्रतियोगिकोट्यपेक्षया अभावकोटेश्चतुर्दशसङ्ख्याकतया बहुत्वेन प्राधान्यमङ्गीकृत्य तृतीयपक्षस्य प्रथमत्वेनाभिधानमिति न दोषः । प्रतियोगिनिरूपणांशे व्युत्पादनाधिक्यवत् अतिरिक्तपक्षांशे उपपादनानपेक्षणात्सूचीकटाहन्यायेन व्यत्यास इति वा । **वर्णमात्रेति** । वर्णमारभ्य प्रकृतिप्रत्ययादिपूर्वशब्दसाधारणो चशब्दः समुच्चयमभिधत्ते । पङ्कजपदं पङ्कजनिकर्तारमभिधत्ते लिङर्थमभिधत्त इत्यादिप्रतीतिसिद्धा वर्णमात्रस्याभिधा अर्थप्रतीतिजननसामर्थ्यरूपा । अर्थप्रवृत्तिजननसामर्थ्यरूपा तु वक्ष्यमाणा प्रवर्तनेति विवेकः । व्यापारोऽभिधारूप इत्युक्त्यैवाभिधापदोक्ता शक्तिरूपाभिधा प्रवर्तना तु शक्त्यतिरिक्ताभिधेति सूचितम् । शक्तेरप्रवर्तकत्वात् तद्व्यवच्छेदस्यावश्यकत्वम् । तथाहि अर्थमभिधत्त इत्यस्याभिधया शक्त्या प्रतिपादयतीत्यर्थकत्वात् शब्दकर्तृको व्यापारस्तावत्सिद्धः । लिङाजन्यत्वे सति तज्जन्यकृतिजनकश्चात्र व्यापारो विवक्षितः । शब्दस्य कर्तृत्वं च शक्त्यतिरिक्तव्यापाराश्रयत्वम् । स चोक्तविधो व्यापारः व्यापारभिन्नस्य परनिष्ठव्यापारजनकतायाः स्वनिष्ठव्यापारपूर्वकत्वमिति नियमात्सिद्धो भवति । एतन्नियमकृताविचार एतेन शब्दस्तद्व्यापार इत्येतत्तत्त्वनिर्णयटीकास्थवाक्यव्याख्यावसरे टीकायां कृतोऽस्ति । किञ्चिदधिकं शब्दमणिटीकासु न्यायरत्नमालादौ च तत्तत्प्रसङ्गे स्फुटम् । इयमभिधैव शब्दाश्रितव्यापारत्वाच्छब्दभावनेति वदन्ति । इयमभिधा लिङादिशब्दगताख्यातत्वांशेनोच्यते । आख्यातत्वं च सर्वाख्यातसाधारणम् । लिङादिशब्दगतलिङाद्यंशेन तु प्रवर्तनारूपो व्यापार उच्यते इति विवेकः ।





**लिङादीति** । सा च लिङादियुक्तवाक्येष्वेव । न तु लडादियुक्तवाक्ये इत्याशयः । एतदभिधाप्रवर्तनाशब्दवाच्यत्व-व्युत्पादनमनुपदमेव भविष्यति । ततश्च शब्दे शक्त्याख्य एको व्यापारः । स एवाभिधानमित्युच्यते । स एव विधि-रित्यपि केचित् । द्वितीयस्तु शक्त्यतिरिक्तोऽभिधाख्यः शक्त्याख्यव्यापारेण प्रवर्तनारूपेणाभिधेयः शब्दस्याभिधायां कर्तृत्वनिर्वाहको व्यापारः । सा च विधायिका भावना । तृतीयस्त्वर्थाभिधाख्यः शक्त्यतिरिक्ताभिधाख्यद्वितीय-व्यापारेण विधीयमानः सन् स्वाभिधारूपोऽपि प्रवृत्तिफलत्वरूपप्रवर्तनारूपेणाभिधीयते । सा हि प्रवर्तनाविधया । विधिश्च प्रवर्तनारूपा शब्दभावनैव । ततश्च विधेयभूतप्रवर्तनारूपार्थाभिधाविधायिकायाः कर्तृत्वनिर्वाहक-शक्त्यतिरिक्ताभिधायाः शक्त्याख्याभिधया प्रवर्तनारूपेणाभिधानमिति प्राप्नोति । शक्तिरूपाभिधायास्तूत्पत्त्यपूर्व-वदभिधान्तरानपेक्षतया नानवस्थादोषः । स्वाध्यायाध्ययनविधिवत्स्वपरनिर्वाहकत्वान्नानवस्थेति भावनावादे । स चैक एव व्यापारो अभिसन्धाननिमित्तयाऽभिधया प्रतिपद्यमानः यदा जानाति धातुना विषयप्रकाशनफला-वच्छिन्नतयाऽभिधीयते । तदा विषयीभूतः शब्द एव तत्फलभाक्कर्म भवति शब्दं जानातीति यदा तु स एव व्यापारो अर्थप्रतिपत्तिफलावच्छिन्नतयाऽभिदधाति धातुनाऽभिधीयते तदा प्रतिपत्तिरूपफलभागर्थः कर्म भवति । अर्थमभि-दधाति **शब्द इति** । यदा तु प्रवृत्त्युत्पत्तिफलावच्छिन्नतया भावयति धातुनाऽभिधीयते तदा भवनफलभाक् प्रवृत्तिः कर्म भवति । शब्देन प्रवृत्तिं भावयतीति । यदा तु प्रवृत्तिरूपपुरुषफलावच्छिन्नतया प्रवर्तयति धातुनाऽभिधीयते तदा प्रवृत्तिफलभाक् पुरुषः कर्म भवति । **पुरुषं प्रवर्तयतीति** । तदेवं शब्दार्थप्रवृत्तिपुरुषरूपार्थचतुष्टयकर्मकतया अर्थाभिधाख्यस्तृतीयो व्यापारो ज्ञानाभिधाशब्दभावना प्रवर्तनेति नामचतुष्टयं लभते । यथैक एव पुरुषो नियोज्योऽधिकारी कर्तेति व्यपदेशं ......................इत्याद्युपाधिना लभते । चतुर्थो व्यापारस्तूक्ततृतीयशब्द-भावनाविषया लिङादिप्रवर्तनारूपा शब्दभावना । सा शब्दभावनैकादशभेदभिन्नार्थभावनाविषया । अध्ययनवाक्य एव कर्तव्यत्वेन विहितानां भावनानामंशत्रयवत्वव्युत्पादनत्वे उक्तशब्दभावनायामर्थप्रतिपत्तिर्भाव्या । संबन्धग्रहणं करणम् । उच्चारणमुपकरणम् । ततो विधायकभावनायाः विधेया तृतीया भावनाभाव्योंशः लिङ्शब्दश्रवणं करणम् । लिङ्शब्दश्रवणेऽयं मां प्रवर्तयतीति ज्ञानोत्पादात् अर्थवादजातमुपकरणम् । ततः प्रसिद्धाध्ययनविधिविधेयाया भावनायाः पुरुषप्रवृत्त्याद्यर्थजातं भाव्योंशः । अधीतः स्वाध्यायः करणविचार उपकरणम् । ततः सर्वलिङादि-विषयप्रवर्तनायाः अंशार्थभावना कर्म । प्रेरणाज्ञानं करणम् । प्राशस्त्यज्ञानमुपकरणम् । अर्थभावनायाः फलं कर्म । यागः करणम् । प्रयाजाद्युपकरणम् । धात्वर्थभावनाया धात्वर्थः कर्म । संकल्पाख्यधात्वर्थः करणम् । व्रीह्यादिद्रव्यशुद्धिरूपकरणम् । अवशिष्टभावनानां भूतत्वादिकं कर्म । कश्चिद्धात्वर्थः । **करणमित्याद्यूह्यमिति** । ततः लिङादियुक्तवाक्येषु अनेके विधयः तद्विषयभूता अनेकाश्च भावनाः शब्दशक्त्यैव प्रतीयन्ते । तदुक्तम् । "अष्टादश प्रतीयन्ते व्यापारलिङ्शिक्तितः । वस्तुभूताश्च चत्वारः पूर्वं वाच्यस्तथा परे । चतस्रो भावनाः पूर्वविशेषांशसमर्पिताः । सामान्यांशै"तथान्यास्तु चतुर्दश समीरिताः । एकादशभिराकारैः कालौपाधिनिबन्धनैः । लिङादिप्रत्ययस्तादृक् क्रियाणामभिधायकः । एकादशभिराकारैः लङ्प्रत्ययसमर्पिताः । व्यापारास्तु प्रतीयन्त भूतत्वादिविशेषिताः । वि या-वाचकमाख्यातं लिङतो न विशिष्यते । त्रीनत्र पुरुषान्विद्यात्कालतस्तु विशिष्यते" इति । उक्तं च भावनानां बहुत्वं वार्तिके । "बहुष्वेकाभिधानेषु सर्वेष्वेकार्थकारिषु । यत्प्रयोक्ताभिसन्धत्ते शब्दस्तत्रावतिष्ठत" इति । अतो भावना-

द्वयस्यैव सर्वशास्त्राकारसंमतत्वेऽप्याधिक्यमावश्यकम् ततश्च लिङादिमात्रासाधारणप्रवर्तनारूप इत्यन्तेन शक्त्याख्याभिधारूपप्रथमव्यापारातिरिक्तं शब्दस्याभिधायां कर्तृत्वनिर्वाहको विधायकभावनारूपो द्वितीयव्यापारः अर्थाभिधाख्यो विधेयभावनारूपस्तृतीयो व्यापारः, तथा तृतीयव्यापारविषयको लिङादिप्रवर्तनारूपश्चतुर्थव्यापारश्चेत्येवं त्रयो व्यापाराः सङ्गृहीताः। अनभिधेयो व्यापार एव विधिरिति केषाञ्चित्पक्षस्तदनुसारेणाद्यव्यापारो अभिधारूप इति कथितः। द्वितीयादीनां प्रवर्तनात्वं तु मतान्तरप्राप्तम्। तथा हि तन्मतम्। लिङादिशब्दानां पुरुषप्रवृत्तिलक्षणकार्योन्नेयव्यापारत्वात् पुरुषप्रवृत्तेश्च स्वच्छस्वतन्त्रप्रवृत्तितया मत्प्रवृत्तिवद् ज्ञानपूर्वकत्वात् अनुमितज्ञानस्य च मत्प्रवृत्तिहेतुज्ञानवत् सविषयकत्वाद् ज्ञानविषयं पर्यालोचयतः शब्दव्यापार एव प्रवर्तनाख्य इति मन्यन्त इति। संवादयन्ति च ''अभिधां भावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना त्वन्या सर्वाख्यातेषु गम्यत'' इति भावार्थपादवार्तिकम्। अभिदधातीत्यभिधाशब्दस्तस्य भावना प्रवर्तनाख्यो व्यापारः ततश्च प्रकृत्यर्थानुरक्ता प्रवर्तनाविधिरिति। अन्यत्राप्युक्तम्। 'प्रवर्तेहमिति ज्ञानं येन शब्देन जन्यत' इति। अभिधा भावनामिति वार्तिकस्य शब्दतद्व्यापारोभयप्रापकत्वं चास्ति। तथाहि। द्रव्यमेव विशिष्टशक्त्युपेतमिति वार्तिकोक्तरीत्याऽभिदधातीत्यभिधाशब्दः स एव भावना। शब्दस्य द्रव्यत्वेऽपि कञ्चिदवस्थाविशेषं प्राप्तस्य व्यापारत्वमप्युचितम्। एतदभिप्रेत्यैव विवरणेऽपि शब्द एव वा पुरुषप्रवृत्तिलक्षणार्थभावनारूपभाव्यनिष्ठः स्वज्ञानकरणकः स्तुतिनिन्दार्थवादादिज्ञानेतिकर्तव्यताकः शब्दभावनेति कथ्यत इति प्रकारेणोक्तम्। **शब्दस्य भावनेति**। तस्य भावनासामर्थ्यापरनामाऽतिशयः शब्दगुणः कश्चित्। लिङादेः खलु लोहमणेरिव स्वभावजोऽतिशयः सर्वस्वसंवेद्य इत्यादि चोक्तम्। एवमभिधीयत इत्यभिधा सैव भावना परसमवेतापि प्रवृत्तिहेतुः। अथवा अभिधीयत इत्यभिधाऽर्थभावनापरामृष्टकालभेदात्पुरुषप्रवृत्तिं भावयतीति भावना। यद्वा अभिधा वाचकत्वशक्तिः सैव भावनेत्यादिकं वेदार्थचन्द्रोक्तरीत्या ज्ञेयमिति। वार्तिकेऽर्थात्मत्वमर्थविषयत्वम्। उक्तं चान्यत्र। ''लिङोऽभिधा सैव च शब्दभावना भाव्या च तस्याः पुरुषप्रवृत्तिः। संबन्धबोधः करणं तदीयं प्ररोचना चाङ्गतयोऽपयुज्यत'' इति। प्रकृतमनुसरामः। अत्र टीकायामभिधारूप इत्यनेन शब्दनिष्ठः शक्तिरूपो व्यापार एव विवक्षितः। शक्त्यतिरिक्ताभिधाख्यव्यापारादीनां त्रयाणां तु प्रवर्तनाशब्देन सङ्ग्रहः। यद्यपि द्वितीयतृतीयव्यापारयोरप्यभिधात्वादभिधापदेनैव ग्रहणमुचितम्। तथापि प्रवर्तनारूपेण तयोरभिधानात्प्रवर्तनात्वमप्यस्तीति भावेन प्रवर्तनापदेन ग्रहणम्। उक्तव्यापारचतुष्टयातिरिक्तावशिष्टचतुर्दशव्यापाराभिप्रायेणोक्तमतिरिक्त एव कश्चिदिति। अतिरिक्तपक्षोऽन्ते निवेश्य इति प्रागेवोक्तम्। प्रवर्तनारूपो वेत्यनन्तरं स चाभिधेयेत्यादिपाठः। उक्तविधानेकव्यापारेषु कश्चिदनभिधेयोऽपि व्यापारोऽस्ति स च शक्त्याख्य इत्येवात्राभिमतम्। शक्तेरेवानभिधेयत्वात्। न तु सर्वेऽपि व्यापारा अभिधेया अनभिधेयाश्चेति द्वैविध्यम्। शक्त्यतिरिक्ताभिधादिव्यापाराणामुक्तरीत्या वाच्यत्वस्य सिद्धत्वेनानभिधेयत्वायोगात्। तथा च शब्दनिष्ठः शक्तिरूपोऽनभिधेयो व्यापारः। तदितरे च सप्तदश व्यापारा अभिधेया इति द्विविधो इति टीकार्थः। स चेति स्थाने सर्वोऽपीति पाठेऽप्येकः प्रथमोऽनभिधेयः। इतरे चाभिधया इति समुदाये वाक्यपरिसमाप्तिरिति बोध्यम्। न्यायमकरन्दे केचन तद्व्यापारमनभिधेयं प्रवृत्तिहेतुमाचक्षते। अपरे पुनरभिधेयमित्येवं सङ्कोचेनैव पक्षाणां कीर्तनात्तदनुसारेण टीकाकृताऽपि किञ्चित्सङ्कोचः कृत इति ज्ञेयम्। **बालेनेतीति**। एतेनेत्यनेन सूचितं शब्दतद्व्यापारयोः प्रवर्तकत्वाभावमेव प्रकटयितुं प्रदत्तं मूलमेतत्। अयं मूलार्थः। सर्वत्र हि





दृष्टानुसारिण्येव कल्पना संभवति । नान्यथापि । अतिप्रसङ्गापाताच्च । तथाच मानान्तरनिबन्धेन व्यवहारे स्वात्मनि समधिगतप्रवर्तकाभावमेव शाब्दे व्यवहारेऽपि चेतनप्रवृत्तिहेतुतया बालः कल्पयितुमलम् । न च बालेन मानान्तर-निबन्धने स्वव्यवहारे शब्दस्य तद्व्यापारस्यानभिधेयस्याभिधेयस्य वा हेतुभावः समधिगतोऽस्ति । तत्कथमन्य-प्रवृत्तावपि लिङादिशब्दं वा तदनभिधेयं व्यापारं लिङाद्यभिधेयमभिधाव्यापारं वा प्रवर्तकतया कल्पयेत् इति । एवं शब्दस्यानभिधेयाभिधेयभेदभिन्नव्यापारद्वयस्य च प्रवर्तकत्वं साधारणदूषणेन निराकृत्य शब्दांशे विशेषतोऽपि दूषणं वक्तुं किञ्च शब्दस्येवेति मूलं प्रवृत्तमिति सिद्धवत्कृत्य मूलोक्तं साधारणमसाधारणं च दूषणं शब्दाऽनभिधेय-व्यापारांशासाधारणदूषणस्याभिधेयव्यापारांशासाधारणदूषणस्य चोपलक्षणमित्याह **उपलक्षणं चैतदिति** । शब्दस्यानभिधेयेत्यादेरेवं योजना । शब्दस्य प्रवर्तकत्वे सङ्गतिग्रहणापेक्षा च न स्यादित्येकं वाक्यम् । न केवलं तच्छ्राविणां बालानामपि प्रवृत्तिरापद्यत इति चशब्दार्थः । तद्दूषणाभिधाने मूलभूता पूर्वत्रारुचिस्तु न शब्दमात्रस्य प्रवर्तकत्वाभ्युपगमेऽपि ज्योतिष्टोमेन यजेतेत्यादि लिङादिश्राविणां बालानां प्रवृत्तिरापद्यते । सङ्गतिग्रहणसव्यपेक्षस्यैव शब्दस्य प्रवर्तकत्वाभ्युपगमेन सङ्गतिग्रहणाभावादेव बालानां प्रवृत्त्यभावसंभवादित्येवंरूपा । संबन्धग्रहणापेक्षायाश्च दत्त एव जलाञ्जलिरिति मकरन्देऽप्युक्ता रुचिरेव मूलतया ज्ञेया । **सङ्गतिग्रहणेति** । अन्वयव्यतिरेकाभ्यामर्थबोधजनने सङ्गतिग्रहणापेक्षासिध्या तत्र तदपेक्षायामपि शब्दस्यार्थबोधजनकत्वमनङ्गीकृत्य भेर्यादिशब्दवत्स्वरूपेण प्रवर्तकत्व-मात्रमित्यङ्गीकारे सङ्गत्यपेक्षा न संभवतीति बालानां प्रवृत्त्यापत्तिरपरिहार्यैवेत्याशयः । उपलक्षणं चैतत् । स्वरूपेण प्रवर्तकत्वाभ्युपगमे शब्दस्य कारकत्वापत्त्या ज्ञापकत्वाभावेन प्रामाण्यं न स्यादित्यपि द्रष्टव्यम् । अनभिधेयरूप-तद्व्यापारस्य प्रवर्तकत्वे सङ्गतिग्रहणापेक्षा च न स्यादित्यपरं वाक्यम् । शब्देन व्यापारस्याभिधानपक्षे सङ्गतिग्रहणा-पेक्षा प्राप्तावपि तदनभिधायकत्वपक्षे तदनपेक्षाप्राप्त्याऽनभिधेयव्यापारपक्षेऽपि सङ्गतिग्रहणापेक्षा न स्यादित्यर्थः । अङ्गीकृत्य च पराभिप्रेतं बालेन स्वप्रवृत्तौ तस्य हेतुत्वानवधानेऽप्यादित्यादिकं दूषणमुक्तम् । वस्तुतस्तु पराभिप्रेतोऽनभिधेयो व्यापार एवासिद्धः प्रमाणाभावादतस्तस्य प्रवर्तकत्वकल्पनमनुचितमित्याशयेन न चाभिधा-व्यापारो नाम प्रामाणिक इति मकरन्देऽप्युपलक्षणयाऽभिप्रेतमनभिधेयव्यापारांशेऽसाधारणप्रामाणिकत्वमाह **अप्रामाणिकश्चेति** । न त्विदं वाक्यमभिधेयव्यापारस्याप्रामाणिकत्वकथनपरमकरन्दानुसारेणाभिधेयव्यापारस्य अप्रामाणिकत्वकथनपरम् । तदप्रामाणिकत्वस्याभिधेयव्यापारस्येत्यादिनोत्तरवाक्ये प्रतिपादनात् । तादृशोऽनभिधेय एव प्रवर्तकत्वेनेष्ट इत्यर्थः । पूर्वोपपादितरीत्या शब्दनिष्ठशक्तेरेवानभिधेयव्यापारतया प्राप्तत्वेन तस्याश्च नित्यतया च शब्दजन्यत्वाभावेन तज्जन्यत्वे सतीति विशेषणस्य तत्राभावाद्व्यापारोऽप्रामाणिकः । व्यापारलक्षणरूपप्रमाणेन । नियामकेनेति यावत् । **विरुद्धः** । तल्लक्षणशून्य इत्यत्र तात्पर्यम् । यद्वा शक्तेः प्रवर्तकत्वानङ्गीकारेण प्रवर्तकत्व-विशिष्टोऽभिधाख्यव्यापारः प्रमाणरहित इत्यत्र तात्पर्यमिति न कश्चिद्दोषः । सङ्गतिग्रहणापेक्षाऽनुपपत्तिशून्यत्वा-दभिधेयव्यापार एव अभिधाप्रवर्तनारूपः लिङादिव्यापारपदेन विवक्षितस्तर्ह्यस्त्वित्यत उक्तानुपपत्त्यभावेऽपि तद्व्यापारस्य प्रकारान्तरेण दुष्टत्वान्न तदङ्गीकारोऽपि युक्त इत्याशयेन लिङादिशब्देनाभिधेयव्यापारस्य प्रवर्तकत्वं विशेषतो दूषयति **अभिधेयव्यापारस्येति** । अभिधेयो व्यापारो नाम परिस्पन्दो वा प्रत्ययो वा अन्यो वा कश्चिदिति विकल्पं मनसि कृत्वा आद्यस्य दूषणं **परिस्पन्दरूपस्येति** । परिस्पन्दरूपस्याभिधेयव्यापारस्य शब्देऽसंभवादिति

संबन्धः । असंभवे हेतुकथनम् **अमूर्त इति** । वाय्वादेर्मूर्तद्रव्यस्यैव पदार्थस्य परिस्पन्ददर्शनाच्छब्दस्य चासर्वगतद्रव्यपरिमाणरूपमूर्तिरहिततया परिस्पन्दायोगादित्यर्थः । अमूर्तत्वे हेत्वभिधानं **विभाविति** । सर्वगतद्रव्य इत्यर्थः । भट्टैः सर्वगतवर्णा एव शब्द इत्यङ्गीकारेण तस्य विभुत्वादित्याशयः । शब्दस्य द्रव्यत्वं च साक्षात्संबन्धेन्द्रियग्राह्यत्वेन हेतुना आत्मवत्सिद्धम् । प्राभाकररीत्याऽमूर्तत्वमुपपादितं **विभुगुण इति** । ततश्च गुणत्वादेव न शब्दस्यासर्वगतपरिमाणवत्वमिति भावः । उपलक्षणमेतत् । आत्मानमुपदिशेदित्यादिस्थलीया-भिधेयव्यापारे स्पन्दरूपत्वाभावादव्याप्तिः । ग्रामं गच्छतीत्यादौ स्पन्दस्य सत्त्वेनाभिधेयव्यापारापत्त्याऽति-व्याप्तिश्चेत्यपि वेदार्थचन्द्रिकोक्तरीत्या ज्ञेयम् । एतेन विभोरप्यात्मनो ज्ञानरूपव्यापारदर्शनाद्गुणस्याप्यरुणादेः द्रव्यावच्छेदव्यापारदर्शनेन शब्दस्योभयरूपत्वेऽपि व्यापारः संभवतीति निरस्तम् । उक्तरीत्या स्पन्दयत्नयोरसंभवेन ज्ञानसंस्कारादिरूपव्यापारान्तरस्य चात्मसंबन्धित्वेन शब्दव्यापारताया उपपादने आयास इत्यत्र तात्पर्यात् । द्वितीयस्य दूषणं **प्रयत्नरूपस्य चेति** । तस्य चेतनासाधारणगुणत्वादिति भावः । उपलक्षणमेतत् । तस्य सर्वाख्यातसाधारणत्वेन लिङसाधारणव्यापारत्वानुपपत्तिश्चेत्यपि ज्ञेयम् । तृतीयं दूषयति **अतिरिक्तस्येति** । शब्दभावनारूपाभिधेत्यनेन प्रागुक्तो द्वितीयो व्यापार उक्तः । आदिपदेन प्रवर्तनादिरूपव्यापाराणां ग्रहणम् । ननूक्तव्यापाराणां कथं प्रामाणिकत्वाभावः । गोशब्दस्य गोबुद्धिजननानुकूलव्यापाराभावे ततोऽश्वप्रतीतिरपि स्यात् । ततश्च नियतार्थप्रसवान्यथानुपपत्तिरेव प्रमाणं भविष्यतीति चेन्न । तथा सति व्यापारस्यान्यलभ्यत्वेन लिङादिशब्दानभिधेयत्वं स्यात् । अनन्यलभ्यस्यैव शब्दार्थतायाः अनन्यलभ्यः शब्दार्थ इति त्रैविध्यवृद्धवचन-सिद्धत्वात् । किञ्च स्वव्यापारं ब्रुवन्तो लिङादयः किं व्यापारान्तरेण तं ब्रुवन्ति उत तेनैव व्यापारेणाहोस्विद्व्यापारमन्तरेणैव । नाद्यः । तथा सति तदपि व्यापारान्तरं व्यापारान्तरेणाभिधातव्यमित्येवं परम्परया अनवस्था स्यात् । न द्वितीयः । विषयविषयिभूतकर्तृकर्मणोरैक्यानुपपत्तेः । नो खल्वङ्गुल्यैवाङ्गुली स्पृश्यते । उक्तं च । ''अङ्गुल्यग्रं स्वमात्मानं नात्मना स्प्रष्टुमर्हती''ति । न तृतीयः । तथा सति व्यापारस्येवार्थ-स्यापि व्यापारमन्तरेणैवाभिधानोपपत्तिरङ्गीकर्तुं शक्येति व्यापारकल्पनैव व्यर्था स्यात् । एतेनैतदपि परास्तम् । शब्दस्य ज्ञानजनकत्वावस्थायां तदजनकत्वावस्थायां च यदि कश्चिदतिशयो न स्यात्तदा सदैव ज्ञानजननमापद्यते न वा कदाचिदपीत्यवश्यमतिशय उक्तावस्थयोरङ्गीकार्यः । स एव च व्यापार इति कथं तदुभय इति । तथा सति अज्ञातस्य ज्ञानाजनकत्वाद् ज्ञातस्यैव च तथात्वात् ज्ञातत्वलक्षण एवातिशयो ज्ञानजनकत्वावस्थाभावी उभयवादिसंप्रतिपन्नः स्वीक्रियतां किमदृष्टव्यापारान्तरकल्पनया । अत एवोक्तं ज्ञाताच्छब्दादसन्निकृष्टेऽर्थे बुद्धिः शाब्दमिति । एतेनैव शक्त्यतिरिक्ताभिधासाधकत्वेन व्यापाराभिन्नस्य परनिष्ठव्यापारजनकतायाः स्वनिष्ठव्यापार-पूर्वकत्वमिति नियमोक्तिरपि प्राग्दर्शिता निरस्ता । नियमे स्वनिष्ठत्वस्य गौरवेणाप्रयोजकतया व्यर्थविशेषणत्वात् । अनुमितिकारणव्याप्तिस्मृतौ व्यभिचाराच्च । वेदार्थचन्द्रादौ सिद्धान्तितानां शिष्टव्यापाराणां दूषणं समानन्यायतया अप्रामाणिकत्वेनैव ज्ञातव्यमित्याशयः । शशधरादौ तु व्यापारविषये वादिमतानेकत्वेऽपि तत्तद्रीत्या सङ्ग्रहस्यापि सत्त्वादभिधा वा भावना वेत्यादिना सङ्कोचेन विकल्पः कृतस्तद्रीत्यापि व्यापारान्तराणां दूषणं ज्ञातव्यम् । मकरन्दाद्यनुसारेण **किञ्चेत्यादि** मूलम् ।





**स०व्र०— तद्व्यापार इति**। अभिधानरूपः शब्दव्यापार इत्यर्थः। पदार्थोपस्थितिरिति यावत्।

**विट्ठ०— एवं** कार्यताया एव प्रवर्तकत्वमभिधाय पराभिमतं प्रवर्तकं निराह **एतेनेति**। तद्व्यापारोऽभिधारूपः। बालेन शब्दतद्व्यापारयोः कारणतयानवधारणेऽपि तयोः प्रवृत्तौ कारणतायास्सत्त्वात् तज्ज्ञानेन व्युत्पत्त्युपपत्तिः स्यादित्यत आह **तथाविधस्यैवेति**। वृद्धप्रवृत्तिं दृष्ट्वा प्रवर्तकं निश्चित्य तदनेन शब्देन बोध्यत इति व्युत्पत्तिः। न हि वृद्धप्रवृत्तौ यस्यकस्यचित्प्रवर्तकत्वं निश्चिनोति। किन्तु उक्तरीत्या बुद्धिपूर्वप्रवृत्तित्वलिङ्गेन स्वप्रवृत्तौ यत्कारणतया निश्चितं तथाविधस्यैव परप्रवृत्तावधारयति। तथाच बालेन स्वप्रवृत्तौ शब्दतद्व्यापारयोः कारणतयानवधृतत्वान्नात्र व्युत्पत्त्युपपत्तिरिति भावः। **सर्वेऽपीति**। अव्युत्पन्ना अपरप्रेष्या अपीत्यर्थः। ननु शङ्खभेर्यादिशब्दस्यापि प्रवर्तकतोपलम्भात्कथं कार्यताबोधस्यैव प्रवर्तकत्वमित्यत आह **याऽपीयं शङ्खादीति**। **पुरुषाभिप्रायेति**। आगन्तव्यमित्येवं कार्यताभिप्रायानुमानादेवेत्यर्थः।

**चषकः— स्वाधीना** स्वेच्छाधीना। विष्टिगृहीतप्रवृत्तिव्युदसनायैतदुपादानम्। उपरिष्टात्स्वतन्त्रपदमपि तत्फलकमेव। प्रवृत्तिहेतुत्वस्य पक्षतावच्छेदककोटिनिवेशनमुपेक्षाबुद्धौ बाधासिद्धिविधूननाय। हेतुतावच्छेदकशरीरे तत्रानैकान्त्यमपहस्तयितुम्। **क्रियामात्रं** चन्द्रमण्डलाहरणादिसाधारणव्यापारत्वावच्छिन्नं फलमात्रम्। संयोगविभागादिरूपम्। **संबन्धमात्रम्** जन्यजनकभावादिरूपम्। विधान्तरेणैव प्रवृत्त्युपपत्त्या न तस्याः बुद्धिपूर्वकतानुमानं सङ्गच्छत इत्याशङ्कां प्रतिविधत्ते **एतेनेति**। **शब्दस्तद्व्यापारो वेति**। लिङादिवर्णसामान्यसाधारणोऽभिधारूपो लिङादिमात्रासाधारणप्रवर्तनारूपो वेत्यर्थः। **सर्वेऽपीति**। अव्युत्पन्ना अपीत्यर्थः। शङ्खादिशब्दं निदर्शनीकृत्य तदभिप्रायशब्दत्वेन लिङादिशब्दे प्रवृत्तिजनकत्वसाधनं साध्यवैकल्यान्न सङ्गच्छत इत्याह **याऽपीति**।

**५२० सु०— रागद्वेषयोर्यद्यपि प्रवर्तकत्वमस्ति, यथाऽऽह 'प्रवर्तनालक्षणा दोषा' इति; तथाऽपि सत्तयैव न तु ज्ञाततया। ज्ञानं त्वबुभुत्सितग्राह्यतयाऽवर्जनीयसन्निधिः। अतो न वाक्ये बोध्यतया तौ कल्प्येते। किन्तु कार्यमेवेति तदेव वेदार्थः।**

**बिन्दुः—** ननु कार्यतावद्रागद्वेषादेरपि प्रवर्तकत्वमस्त्येव तत्कुतः कार्यस्यैव लिङर्थत्वं नानयोरित्यत आह **रागद्वेषयोरिति**। सा च वाक्यार्थपर्यवसानोपयोगिनी कार्यतेति। अयमभिसन्धिः। शब्दप्रामाण्यमङ्गीकुर्वाणैर्हि परप्रतिपत्तिरेव शब्दस्यासाधारणं प्रयोजनं वाच्यम्। वक्तारं प्रति वाक्यार्थप्रतिपत्तेः सिद्धत्वेन शब्दप्रयोगस्य व्यर्थत्वात्। तदसिद्धौ तु शब्दोत्पत्तेरेवानुदयात्। अत एव 'अग्नये जुष्टं निर्वपामि' 'बर्हिर्देवसदनं दामी'त्याद्यनुष्ठेयार्थप्रकाशकमन्त्राणामनुसन्धानमदृष्टार्थमेवेति पूर्वतन्त्रे स्थितम्। परप्रतिपत्त्यर्थमपि प्रयुज्यमानः शब्दो यदि परस्याजिज्ञासितमर्थमभिधत्ते तदा स प्रेक्षावता-





मुपेक्षणीयो भवतीति सर्वलोकसिद्धम् । तस्मादबाधितजिज्ञासितार्थबोधक एवशब्दः प्रेक्षावदुपादेयतया प्रामाण्यं लभत इति वक्तव्यम् । जिज्ञासा च आकाङ्क्षापरनामिका ज्ञानविषयकेच्छा । सा हि पुरुषस्य पुरुषार्थरूपे सुखादौ वा तत्साधने स्रक्चन्दनादौ च भवन्ती अतथाभूतेऽर्थे चानुत्पद्यमाना स्वविषयीभूत-ज्ञानस्य पुरुषार्थतत्साधनान्यतरत्वं कल्पयतीतीष्टतत्साधनान्यतरबोधेनैव पुरुषाकाङ्क्षायाः शान्तत्वा-त्तावन्मात्रेणैव वाक्यस्य नैराकाङ्क्ष्यलक्षणं पर्यवसानमुपपन्नमिति क्वोपयुज्येते प्रवृत्तिनिवृत्ती, येन तज्जनकीभूतज्ञानविषयत्वेन कार्यत्वं शब्दतात्पर्यविषयीभवेत् । तथाच प्रवृत्त्याद्यजनकमपि पुत्रस्ते जात इति वाक्यं परमानन्दसाधनीभूतं पुत्रज्ञानमुत्पादयत्तावन्मात्रेणैव निराकाङ्क्षं पर्यवसितं चोच्यत इति वेदेऽपि स्वतनुभवनादेः कर्तारं परमपुरुषार्थस्य मोक्षस्यापि हेतुभूतं परमात्मनस्वरूपमावेदयत्सत्यज्ञानादिवाक्यं कथं न प्रमाणपदवीमासादयेत् । परमैकान्तानां तु निरुपाधिकानुकूलप्रत्ययवेद्यो जन्येच्छाजन्यजन्येच्छा-विषयत्वात्परमात्मैव सुखस्थानाभिषिक्त इति तद्बोध एवानन्दानुभव इति सुतरामेव ब्रह्मस्वरूपबोधनेनैव पर्यवसानम् । तथाहि शृङ्गारादिरसनिमग्नचित्तानामालङ्कारिकाणां तत्तद्रसोद्दीपनविभावादिकम् ।

**परि०**— **यथाहेति** । नैयायिक इति योज्यम् । **दोषाः** रागद्वेषमोहाः । **ज्ञानं त्विति** । रागादेरिति योज्यम् ।

**वं०प०**— तथाऽपि न कार्यस्य प्रवर्तकत्वमित्याशङ्क्ते **रागद्वेषयोरिति** । **प्रवर्तना लक्षणा इति** । प्रवर्तकत्वस्वरूपा इत्यर्थः । यथाहुः । प्रवर्तनालक्षणाः स्युर्दोषा रागादयश्च त इति । **न तु ज्ञाततयेति** । कस्य ज्ञानं प्रवर्तकमिति प्रवर्तकज्ञानविषय एवेदानीं विचार्यत इत्यर्थः । **सन्निधिरिति** । रागद्वेषयोर्ज्ञातैकसत्त्वादिति भावः ।

**आनन्दः**— तर्हि तज्ज्ञानं कथं भवतीत्यत आह **ज्ञानं त्विति** ।

**श्रीनिधि०**— **प्रवर्तनालक्षणा इति** । प्रवर्तना प्रवृत्तिः लक्षणं चिह्नं येषां ते प्रवर्तना लक्षणाः । **तौ** रागद्वेषौ ।

**वा०चं०**— ज्ञानान्वयव्यतिरेकात्सत्तयैवेति कथमवधारणमित्यतो रागादौ सति ज्ञानव्यतिरेकेण कार्यव्यतिरेकादर्शनादित्याह **ज्ञानं त्विति** ।

**वा०र०**— रागद्वेषयोः प्रवर्तकत्वमित्येतत्तार्किकसंमतं चेति वक्तुं तत्रार्थे गौतमसूत्रं संवादयति **यथाऽऽह प्रवर्तनेति** मूलम् । प्रवर्तना प्रवृत्तिहेतुत्वमित्येव भाष्ये उक्तेऽपि वार्तिककृता का पुनरियं प्रवर्तनाय याऽवशः प्रवर्तते । अयं ज्ञानात्तावत्प्रवर्तते तं प्रवर्तमानं रागादयः प्रवर्तयन्तीति । सेयं प्रवृत्तिहेतुत्वात्प्रवर्तनेत्युच्यते । यथा





कारणाहारणेतीत्यादिकमुक्तम्। वाचस्पतौ तु वागादीनां प्रवर्तनावत्त्वं लक्षितं भवति। सा पुनरियं प्रवर्तना प्रवर्तकानां दोषाणां व्यापार इत्यादिकमुक्तम्। तथा च पुरुषं स्वतः प्रवर्तमानं रागादयः पुण्ये पापे च प्रवर्तयन्तीत्युक्ता रागादिनिष्ठव्यापाररूपा प्रवर्तना लक्षणं येषां ते दोषा इति सूत्रार्थः। वार्तिककारेणेत्यादिदृष्टान्तोपादानेनेदं सूचितम्। प्रपूर्वक वृतु वर्तन इति धातोः प्रयोजकणिचि धातोः ऋकारस्य लघूपधगुणभूतेऽकारे रपरत्वे च प्रवर्तीति सिद्धे सनाद्यन्तत्वेन धातुत्वात्तस्मात् प्रवर्तयन्त्यनेनेति करणे ण्यन्तेभ्यः ण्यास श्रन्थ इत्येताभ्यां च युच्प्रत्ययो भवतीत्यर्थकण्यासश्रन्थो युजिति सूत्रेण युजि योरनादेशे णेरनिटीति णेर्लोपे प्रवर्तनेति स्त्रियां रूपम्। कारणेत्यादौ ण्यन्ताद्युचिसाधुत्वदर्शनादिति। एतेनैव प्रवर्तयन्तीति प्रवर्तनाः प्रवर्तका दोषा इति व्याख्यानमपि निरस्तम्। दोषाणां प्रवर्तनात्वायोगात्। दोषैः क्रियमाणव्यापारस्यैव स्त्रीलिङ्गप्रवर्तनापदेनोक्तेः। प्रवर्तका इत्येतावतैव पूर्त्या लक्षणपदस्यानन्वयाच्च प्रवर्तनालक्षणा इत्यापत्तेश्चेति ज्ञेयम्। यद्यपि भाष्ये वार्तिके च रागादय इति रागद्वेषमोहानां त्रयाणां प्रवर्तकत्वं सूत्रार्थतया वर्णितम्। तथा चात्र मूले त्रयाणामपि ग्रहणं कर्तव्यम्। तत्कथं रागद्वेषयोरिति द्वयोरेव ग्रहणम्। संमतिसूत्राननुगुणत्वादिति भाति। तथापि यत्र मिथ्याज्ञानं तत्र रागद्वेषावितीति भाष्ये उक्तेः रागद्वेषौ हि मोहप्रभवौ पुरुषं प्रवर्तमानं प्रवर्तयतः तयोर्धर्मः प्रवर्तनेत्यादेर्वाचस्पतावुक्तेस्तदनुसारेण द्वयोर्ग्रहणम्। उक्तं च तात्पर्यपरिशुद्धौ। प्रवर्तयतः उक्तरूपप्रयत्नयोगिनं कुरुत इत्यर्थः। आनन्तर्यादनयोरभिधानम्। मोहोऽपि प्रवर्तयतीति द्रष्टव्यमिति। तथा च मोहकार्यत्वेन साक्षात्प्रवर्तकत्वेन च रागद्वेषौ पुरस्कृत्य रागद्वेषावित्येव मूले उक्तम्। सूत्राद्यनुसारेण मोहोऽपि उपलक्षणया ग्राह्यो वेति न दोषः। अधिकं प्रमेयपदार्थभूतदोषलक्षणसूत्रीयवात्स्यायन-भाष्यतद्वार्तिकादौ ज्ञेयम्। **ज्ञानेति**। रागद्वेषज्ञानान्वयव्यतिरेकानुविधायित्वात्प्रवृत्तेरित्यर्थः। **कथमवधारणमिति**। सत्तयेति कथं सत्तयैवेत्यवधारणं च कथमित्यर्थः। **ज्ञानव्यतिरेकेण** रागादिज्ञानव्यतिरेकेण। व्यतिरेकादर्शना-दित्यनन्तरं युक्तमवधारणमिति शेषः।

**स०व्र०— न तु ज्ञाततयेति**। तत्र न तयोः प्रवर्तकज्ञानविषयत्वं येन ताभ्यामन्यथासिद्धिः स्यादिति भावः। ननु रागादीनां न सत्तामात्रेण प्रवर्तकत्वं ज्ञानान्वयव्यतिरेकानुविधानादित्यत आह **ज्ञानं त्विति**। ज्ञानं स्वसामग्र्यां सत्यां अबुभुत्सितं गृह्यत इति ज्ञानसंबन्धोऽन्यथासिद्ध इत्यर्थः।

**विठ०**— ननु रागद्वेषयोरपि प्रवर्तकत्वदर्शनात्कथं कार्यताया एव प्रवर्तकत्वमित्याशङ्क्य निराकरोति **रागेति**। नैयायिकसंमतिमत्राह **यथाहेति**। दोषाः रागद्वेषमोहाः रागद्वेषयोः स्वरूपतः प्रवर्तकत्वेन ज्ञानद्वारा प्रवर्तकत्वाभावान्न तयोर्वाक्यबोध्यत्वमिति भावः।

**प्रदीपः**— रागादीनां सत्तामात्रेण प्रवर्तकत्वं ज्ञानान्वयव्यतिरेकानुविधानदर्शनादित्याशङ्क्याह **ज्ञानं त्विति**। ज्ञानं स्वसामग्र्यां सत्यामबुभुत्सितं गृह्यत इति ज्ञानसंबन्धोऽन्यथासिद्ध इत्यर्थः।

**५२१ सु०— अपि च यद्यपि बोधकत्वेनैव प्रामाण्यम् । तथाऽपि वाक्यप्रयोगस्य परार्थत्वात् परप्रवृत्तिनिवृत्त्यौपयिक एवार्थो वाक्यबोध्यो अङ्गीकार्यः । कार्यमेव तथाविधमित्युक्तमिति तत्रैव सर्ववेदपर्यवसानादनुग्राह्यप्रमाणाभावान्न ब्रह्ममीमांसारंभः संभवतीति ।**

**परि०**— 'इष्टमाकाङ्क्षत' इति वक्ष्यमाणव्यावर्त्यं प्रवृत्त्याद्यर्थत्वान्यथानुपपत्त्या च कार्यनिष्ठत्वमुपेयमित्येतदाह **अपि चेति** ।

**यादु०**— इष्टमाकाङ्क्षत इत्यादिग्रन्थनिवर्त्यपूर्वपक्षं दर्शयति **अपि चेति** ।

**वं०प०**— ननु प्रवृत्तिनिवृत्त्युपयुक्तार्थबोधजनकत्वेनैव चेत्प्रमाणानां प्रामाण्यं तर्हि उदासीनतृणादिज्ञानजनकप्रत्यक्षप्रामाण्यं न स्यादिति चेत् । सत्यम् । यथावस्थितार्थबोधजनकत्वेनैव प्रत्यक्षादिप्रामाण्यं न प्रवृत्त्याद्युपयुक्तार्थबोधकत्वेनैवेति । तथाऽपि शब्दे नैवमित्याह **यद्यपीत्यादिना** ।

**आनन्दः**— तथापि यथाभूतार्थबोधकत्वेनैव प्रामाण्योपपत्तेर्न कार्यपरत्वमित्यत आह **अपि चेति** ।

**श्रीनिधि०**— एवमपि अनुग्राह्यप्रमाणाभावादित्ययुक्तम् । सिद्धार्थपरवाक्यस्य सद्भावात् । न च तदप्रमाणम् । बोधजनकत्वात् । अपवादकाभावेऽवबोधजनकस्यैव प्रमाणत्वादित्याशङ्क्य वाक्यबोध्यत्वं कार्यस्यैव न सिद्धस्य । येन तद्बोधकस्यानुग्राह्यप्रमाणस्य लाभ इत्याशयेनाह **अपि च यद्यपि इत्यादिना** ।

**वा०चं०**— 'अथेष्टमाकाङ्क्षत' इत्यादिनिरस्यं साधकान्तरं दर्शयति **अपि चेति** । प्रवर्तकान्तरनिरासेन कार्यस्य प्रवर्तकत्वमुक्तं स्मारयति **उक्तमिति** ।

**वा०र०**— ममेदं कार्यमिति प्रतीत्य हीत्यादिना कार्यमेव प्रवर्तकमिति प्राक्प्रतिपादितमित्यभिप्रायेणोक्तं **स्मारयतीति** ।

**विठ्ठ०**— किञ्च वाक्यमात्रस्य कार्यपरत्वाभावे प्रयोजकतोपयुक्तप्रामाण्यासंभवेन तदन्यथानुपपत्त्यापि कार्यपरत्वं लभ्यत इत्याह **अपि चेति** ।

**चषकः**— इष्टमाकाङ्क्षत इत्यादिप्रतीकनिवर्तनीयशङ्कांशं दर्शयति **अपि चेति** ।

# श्रीमन्न्यायसुधा-परिमळ-प्रशंसनम्

प्रतिवाक्यं प्रतिपदमनेकाकूतगर्भिता ।
प्रतिभाति सुधाऽथापि ग्रन्थाल्पत्वाय नोच्यते ॥

ये तु न्यायसुधापानकामुका रसिका बुधाः ।
आघ्रायेमं परिमळं सेवन्तां ते सुधामिमाम् ॥

— श्रीराघवेन्द्रतीर्थाः

**श्रीकरोऽयं ग्रन्थः । तत्र वयमेव साक्षिणः ॥**

— श्रीवादिराजतीर्थाः

यदुतापसलभ्यमनन्तभवैः तदुतोपरतत्त्वमिहैकपदात् ।
जयतीर्थकृतौ प्रवणो न पुनर्भवभाग् भवतीति मतिर्हि मम ॥

— श्रीविष्णुतीर्थाः

**सुधा वा पठनीया । वसुधा वा पालनीया ॥**

धीर श्रीराघवेन्द्र त्वदतुलरसनारङ्गनृत्यत्स्वयंभू-
योषाधम्मिल्लभारश्लथकुसुमततीस्त्वद्गिरस्सङ्गिरामः ।
याभिस्सम्मिश्रिताभिर्निरवधिवसुधा विश्रुता सा सुधाऽपि
क्षोणीगीर्वाणगम्यं परिमलमतुलं साम्प्रतं संप्रपेदे ।

— श्रीवादीन्द्रतीर्थाः

Printed At : Sudha Mudrana, Bangalore - 4 ✆ : 667 6942